# आश्वलायन गृह्य सूत्रम्

उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः १ त्रयः पाकयज्ञाः २ हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणिहुताः ३ अथाप्यृच उदाहरन्ति यः समिधा य आहुती यो वेदेनेति ४ समिधमेवापि श्रद्दधान आदधन्मन्येत यज इदमिति नमस्तस्मै य आहुत्या यो वेदेनेति विद्ययैवाप्यस्ति प्रीतिस्तदेतत्पश्यन्नृषिरुवाच अगोरुधाय गविषेद्युक्षाय दस्म्यं वचः । घृतात्स्वादीयो मधुनश्च वोचतेति वच एव म इदं घृताच्च मधुनश्च स्वादीयोऽस्ति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि । ते ते भवन्तूक्षण ऋषभासो वशा उतेति एत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति य इमं स्वाध्यायमधीयत इति यो नमसा स्वध्वर इति नमस्कारेण वै खल्वपि न वै देवा नमस्कारमति यज्ञो वै नम इति हि ब्राह्मणं भवति ५ १

अथ सायंप्रातःसिद्धस्य हविष्यस्य जुहुयात् १ अग्निहोत्रदेवताभ्यः सोमाय वनस्पतयेऽग्नीषोमाभ्यामिन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरय इन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे २ स्वाहेत्यथ बलिहरणम् ३ एताभ्यश्चैव देवताभ्योऽद्भ्य ओषधिवनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्यः ४ इन्द्रायेन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो वरुणाय वरुणपुरुषेभ्यः सोमाय सोमपुरुषेभ्य इति प्रतिदिशम् ५ ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये ६ विश्वेभ्यो देवेभ्यः ७ सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य इति दिवा ८ नक्तञ्चारिभ्य इति नक्तम् ९ रक्षोभ्य इत्युत्तरतः १० स्वधा पितृभ्य इति प्राचीनावीती शेषं दक्षिणा निनयेत् ११ २

अथ खलु यत्र क्व च होष्यन्त्स्यादिषुमात्रावरं सर्वतः स्थण्डिलमुपलिप्योल्लिख्य षड्लेखा उदगायतां पश्चात्प्रागायते नानान्तयोस्तिस्रो मध्ये तदभ्युक्ष्याग्निं प्रतिष्ठाप्यान्वाधाय परिसमूह्य परिस्तीर्य पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्युदकसंस्थन्तूष्णीं पर्युक्षणम् १ पवित्राभ्यामाज्यस्योत्पवनम् २ अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ नानान्तयोर्गृहीत्वाङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण

वसोः सूर्यस्य रश्मिभिरिति प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् ३ कृता-कृतमाज्यहोमेषु परिस्तरणम् ४ तथाज्यभागौ पाकयज्ञेषु ५ ब्रह्मा च धन्वन्तरियज्ञशूलगववर्जम् ६ अमुष्मै स्वाहेति जुहुयात् ७ अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेशे ८ एकबर्हिराद्याज्यस्विष्टकृतः स्युस्तुल्यकालाः ९ तदेषाभियज्ञगाथा गीयते । पाकयज्ञान्समासाद्यैकाज्यानेकबर्हिषः । एकस्विष्टकृतः कुर्यान्नानापि सति दैवते १० इति ३

उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः १ सार्वकालमेके विवाहम् २ तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात् ३ अग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च व्याहृतिभिर्वा ४ समुच्चयमेके ५ नैके काञ्चन ६ त्वमर्यमा भवसि यत्कनीनामिति विवाहे चतुर्थीम् ७ ४

कुलमग्रे परीक्षेत ये मातृतः पितृश्चेति यथोक्तं पुरस्तात् १ बुद्धिमते कन्यां प्रयच्छेत् २ बुद्धिरूपशीललक्षणसम्पन्नामरोगामुपयच्छेत ३ दुर्विज्ञेयानि लक्षणानीति ४ अष्टौ पिण्डान्कृत्वा ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रति-ष्ठितं यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति ५ क्षेत्राच्चेदुभयतःसस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्याद्गोष्ठात्पशुमती वेदिपुरीषाद्ब्रह्मवर्चस्विन्यविदासिनो ह्रदात्सर्वसम्पन्ना देवनात्कितवी चतुष्पथाद्द्विप्रव्राजिनीरिणादधन्या श्मशानात् पतिघ्नी ६ ५

अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः । तस्यां जातो द्वादशावरान्द्वादश परान्पुनात्युभयतः । ऋत्विजे वितते कर्मणि दद्यादलंकृत्य स दैवो दशावरान्दश परान्पुनात्युभयतः । सह धर्मं चरत इति प्राजापत्योऽष्टावरानष्ट परान्पुनात्युभयतः । गोमिथुनं दत्त्वोपयच्छेत स आर्षः सप्तावरान्सप्त परान्पुनात्युभयतः । मिथः समयं कृत्वोपयच्छेत स गान्धर्वः । धनेनोपतोष्योपयच्छेत स आसुरः । सुप्तानां प्रमत्तानां वापहरेत् स पैशाचः । हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत् स राक्षसः १ ६

अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात् १ यत्तु समानं तद्वक्ष्यामः २ पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं समन्वारब्धायां हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया गृभ्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयाद्यदि कामयीत पुमांस एव मे पुत्रा जायेरन्निति ३ अङ्गुलीरेव स्त्रीकामः ४ रोमान्ते हस्तं साङ्गुष्ठमुभयकामः ५ प्रदक्षिणमग्निमुदकुम्भञ्च त्रिः परिणयञ्जपति । अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेह विवहावहै प्रजां प्रजनयावहै सम्प्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतमिति ६ परिणीय परिणीयाश्मानमारोहयतीममश्मानमारोहाश्मेव त्वं स्थिरा भव । सहस्व पृतनायतोऽभितिष्ठ प्रतन्यत इति ७ वध्वञ्जला उपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति ८ त्रिर्जामदग्न्यानाम् ९ प्रत्यभिघार्य हविः १० अवत्तञ्च ११ एषोऽवदानधर्मः १२ अर्यमणं नु देवं कन्या अग्निमयक्षत स इमां देवो अर्यमा प्रेतो मुञ्चातु नामुतः स्वाहा । वरुणं नु देवं कन्या अग्निमयक्षत स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः स्वाहा । पूषणं नु देवं कन्या अग्निमयक्षत स इमां देवः पूषा प्रेतो मुञ्चातुनामुतः स्वाहेत्यविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् १३ अपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थम् १४ ओप्योप्य हैके लाजान्परिणयन्ति तथोत्तमे आहुती न सन्निपततः १५ अथास्यै शिखे विमुञ्चति यदि कृते भवतः १६ ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः । प्र त्वा मुञ्चामि वरुणस्य पाशादिति १७ उत्तरामुत्तरया १८ अथैनामपराजितायान्दिशि सप्तपदान्यभ्युत्क्रामयतीष एकपद्यूर्जे द्विपदी रायस्पोषाय त्रिपदी मायोभव्याय चतुष्पदी प्रजाभ्यः पञ्चपद्यृतुभ्यः षट्पदी सखा सप्तपदी भव सा मामनुव्रता भव पुत्रान्विन्दावहै बहूंस्ते सन्तु जरदष्टय इति १९ उभयोः सन्निधाय शिरसी उदकुम्भेनावसिच्य २० ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रिं वसेत् २१ ध्रुवमरुन्धतीं सप्तऋषीनिति दृष्ट्वा वाचं विसृजेत जीवपत्नीं प्रजां विन्देयेति २२ ७

प्रयाण उपपद्यमाने पूषा त्वेतो नयतु हस्तगृह्येति यानमारोहयेत् १ अश्मन्वतीरीयते संरभध्वमित्यर्द्धर्चेन नावमारोहयेत् २ उत्तरेणोक्त्रमयेत् ३ जीवं रुदन्तीति रुदत्याम् ४ विवाहाग्निमग्रतोऽजस्त्रन्नयन्ति ५ कल्याणेषु देशवृक्षचतुष्पथेषु माविदन्परिपन्थिन इति जपेत् ६ वासेवासे सुमङ्गलीरियं

वधूरितीक्षकानीक्षेत ७ इह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशयेत् ८ विवाहाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायाम् आ नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा समञ्जन्तु विश्वेदेवा इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये ९ अक्षारालवणाशिनौ ब्रह्मचारिणावलंकुर्वाणावधःशायिनौ स्याताम् १० अत ऊर्द्ध्वं त्रिरात्रं द्वादशरात्रम् ११ संवत्सरं वैक ऋषिर्जायत इति १२ चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यात् १३ अन्नं ब्राह्मणेभ्यः १४ अथ स्वस्त्ययनं वाचयीत १५ ८

पाणिग्रहणादि गृह्यं परिचरेत्स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा १ नित्यानुगृहीतं स्यात् २ यदि तूपशाम्येत्पत्न्युपवसेदित्येके ३ तस्याग्निहोत्रेण ४ प्रादुष्करणहोमकालौ व्याख्यातौ ५ हौम्यं च मांसवर्जम् ६ कामं तु व्रीहियवतिलैः ७ अग्नये स्वाहेति सायं जुहुयात् सूर्याय स्वाहेति प्रातस्तूष्णीं द्वितीये उभयत्र ८ ९

अथ पार्वणस्थालीपाकः १ तस्य दर्शपूर्णमासाभ्यामुपवासः २ इध्माबर्हिषोश्च सन्नहनम् ३ देवताश्चोपांशुयाजेन्द्रमहेन्द्रवर्जम् ४ काम्या इतराः ५ तस्यै तस्यै देवतायै चतुरश्चतुरो मुष्टीन्निर्वपति पवित्रे अन्तर्द्धायामुष्मै त्वा जुष्टं निर्वपामीति ६ अथैनान्प्रोक्षति यथानिरुप्तममुष्मै त्वा जुष्टं प्रोक्षामीति ७ अवहतांस्त्रिष्फलीकृतान्नाना श्रपयेत् ८ समोप्य वा ९ यदि नाना श्रपयेद्विभज्य तण्डुलानभिमृशेदिदममुष्मा इदममुष्मा इति १० यद्यु वै समोप्य व्युद्धारं जुहुयात् ११ शृतानि हवींष्यभिघार्योदगुद्वास्य बर्हिष्यासाद्येध्ममभिघार्यायन्त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्द्धस्व चेद्ध वर्द्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहेति १२ तूष्णीमाघारावाघार्याज्यभागौ जुहुयादग्नये स्वाहा सोमाय स्वाहेति १३ उत्तरमाग्नेयं दक्षिणं सौम्यम् १४ विज्ञायते चक्षुषी वा एते यज्ञस्य यदाज्यभागौ १५ तस्मात्पुरुषस्य हि प्रत्यङ्मुखस्यासीनस्य दक्षिणमक्ष्युत्तरं भवत्युत्तरं दक्षिणम् १६ मध्ये हवींषि प्रत्यक्तरं वा प्राक्संस्थान्युदक्संस्थानि वोत्तरपुरस्तात्सौविष्टकृतम् १७ मध्यात्पूर्वार्द्धाच्च हविषोऽवद्यति १८ मध्यात्पूर्वार्द्धात् पश्चार्द्धादिति पञ्चावत्तिनाम् १९ उत्तरार्द्धात् सौविष्टकृतम् २० नात्र हवींषि प्रत्यभिघारयति स्विष्टकृतं

द्विरभिघारयति २१ यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्नि-ष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्द्धयित्रे सर्वान्नः कामान्त्समर्द्धय स्वाहेति २२ बर्हिषि पूर्णपात्रं निनयेत् २३ एषोऽवभृथः २४ पाकयज्ञानामेतत्तन्त्रम् २५ हविरुच्छिष्टं दक्षिणा २६ १०

अथ पशुकल्पः १ उत्तरतोऽग्नेः शामित्रस्यायतनं कृत्वा पाययित्वा पशुमा-प्लाव्य पुरस्तात् प्रत्यङ्मुखमवस्थाप्याग्निं दूतमिति द्वाभ्यां हुत्वा सपलाश-यार्द्रशाखया पश्चादुपस्पृशेदमुष्मै त्वा जुष्टमुपाकरोमीति २ व्रीहियवम-तीभिरद्भिः पुरस्तात्प्रोक्षत्यमुष्मै त्वा जुष्टं प्रोक्षामीति ३ तासां पायथि-त्वा दक्षिणमनु बाहुं शेषं निनयेत् ४ आवृतैव पर्यग्नि कृत्वोदञ्चं नयन्ति ५ तस्य पुरस्तादुल्मुकं हरन्ति ६ शामित्र एष भवति ७ वपाश्रपणीभ्यां कर्ता पशुमन्वारभते ८ कर्तारं यजमानः ९ पश्चाच्छमित्रस्य प्राक्शिरसं प्रत्यक्शिरसं वोदक्पादं संज्ञप्य पुरा नाभेस्तृणमन्तर्द्धाय वपामुत्खिद्य वपामवदाय वपा-श्रपणीभ्यां परिगृह्याद्भिरभिषिच्य शामित्रे प्रताप्याग्रेणैनमग्निं हुत्वा दक्षिणत आसीनः श्रपयित्वा परीत्य जुहुयात् १० एतस्मिन्नेवाग्नौ स्थालीपाकं श्रप-यन्ति ११ एकादश पशोरवदानानि सर्वाङ्गेभ्योऽवदाय शामित्रे श्रपयित्वा हृदयं शूले प्रताप्य स्थालीपाकस्याग्रतो जुहुयात् १२ अवदानैर्वा सह १३ एकैकस्यावदानस्य द्विर्द्विरवद्यति १४ आवृतैव हृदयशूलेन चरन्ति १५ ११

चैत्ययज्ञे प्राक् स्विष्टकृतश्चैत्याय बलिं हरेत् १ यद्यु वै विदेशस्थं पलाश-दूतेन यत्र वेत्थ वनस्पत इत्येतयर्चा द्वौ पिण्डौ कृत्वा वीवधेऽभ्याधाय दू-ताय प्रयच्छेदिमन्तस्मै बलिं हरेति चैनं ब्रूयादयं तुभ्यमिति यो दूताय २ प्रतिभयं चेदन्तरा शस्त्रमपि किञ्चित् ३ नाव्या चेन्नद्यन्तरा प्लवरूपमपि किञ्चिदनेन तरितव्यमिति ४ धन्वन्तरियज्ञे ब्रह्माणमग्निं चान्तरा पुरोहिता-याग्रे बलिं हरेत् ५ १२

उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनञ्च १ यदि नाधीयात्तृतीये गर्भ-मासे तिष्येणोपोषितायाः सरूपवत्साया गोर्दधनि द्वौ द्वौ माषौ यवञ्च दधि प्रसृतेन प्राशयेत् २ किं पिबसि किं पिबसीति पृष्ट्वा पुंसवनं पुंसवनमिति त्रिः

प्रतिजानीयात् ३ एवं त्रीन्प्रसृतान् ४ अथास्यै मण्डलागारच्छायायां दक्षिणस्यां नासिकायामजीतामोषधीं नस्तःकरोति ५ प्रजावज्जीवपुत्राभ्यां हैके आ ते गर्भो योनिमेतु पुमान्बाण इवेषुधिम् । आ वीरो जायतां पुत्रस्ते दशमास्यः । अग्निरेतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदादिति ६ प्राजापत्यस्य स्थालीपाकस्य हुत्वा हृदयदेशमस्या आलभेत यत्ते सुसीमे हृदये हितमन्तः प्रजापतौ । मन्येऽहं मां तद्विद्वांसं माहं पौत्रमघन्नियामिति ७ १३

चतुर्थे गर्भमासे सोमन्तोन्नयनम् १ आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् २ अथाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायां धाता ददातु दाशुष इति द्वाभ्यां राकामहमिति द्वाभ्यां नेजमेष इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च ३ अथास्यै युग्मेन शलाटुग्लप्सेन त्र्येण्या च शलल्या त्रिभिश्च कुशपिञ्जूलैरूर्ध्वं सीमन्तं व्यूहति भूर्भुवः स्वरोमिति त्रिः ४ चतुर्वा ५ वीणागाथिनौ संशास्ति सोमं राजानं संगायेतामिति ६ सोमो नो राजाऽवतु मानुषीः प्रजा निविष्टचक्रासाविति यां नदीमुपवसिता भवन्ति ७ ब्राह्मण्यश्च वृद्धा जीवपत्यो जीवप्रजा यद्यदुपदिशेयुस्तत्तत्कुर्युः ८ वृषभो दक्षिणा ९ १४

कुमारं जातं पुरान्यैरालम्भात्सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत्प्र ते ददामि मधुनो घृतस्य वेदं सवित्रा प्रसूतं मघोनाम् । आयुष्मान्गुप्तो देवताभिः शतं जीव शरदो लोके अस्मिन्निति १ कर्णयोरुपनिधाय मेधाजननं जपति । मेधान्ते देवः सविता मेधां देवी सरस्वती । मेधान्ते अश्विनौ देवावाधत्तां पुष्करस्रजौ । इति २ अंसावभिमृशति अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामासि स जीव शरदः शतमिति । इन्द्र श्रेष्ठानि द्रविणानि धेह्यस्मे प्रयन्धि मघवन्नृजीषिन्निति च ३ नाम चास्मै दद्युः ४ घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरम् ५ चतुरक्षरं वा ६ द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामः ७ युग्मानि त्वेव पुंसाम् ८ अयुजानि स्त्रीणाम् ९ अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनात् १० प्रवासादेत्य पुत्रस्य शिरः परिगृह्य जपति अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा

वै पुत्रनामासि स जीव शरदः शतमिति मूर्द्धनि त्रिरवघ्राय ११ ग्रावृतैव कुमार्यै १२ १५

षष्ठे मास्यन्नप्राशनम् १ ग्राजमन्नाद्यकामः २ तैत्तिरं ब्रह्मवर्चसकामः ३ घृतौदनं तेजस्कामः ४ दधिमधुघृतमिश्रमन्नं प्राशयेदन्नपतेऽन्नस्य नो देह्यन-मीवस्य शुष्मिणः । प्र प्रदातारन्तारिष ऊर्जन्नो धेहि द्विपदे चतुष्पद इति ५ ग्रावृतैव कुमार्यै ६ १६

तृतीये वर्षे चौलं यथाकुलधर्मं वा १ उत्तरतोऽग्नेर्व्रीहियवमाषतिलानां पृ-थक्पूर्णशरावाणि निदधाति २ पश्चात्कारयिष्यमाणो मातुरुपस्थ ग्रानडुहं गोमयं नवे शरावे शमीपर्णानि चोपनिहितानि भवन्ति ३ मातुः पिता द-क्षिणत एकविंशतिकुशपिञ्जूलान्यादाय ४ ब्रह्मा वैतानि धारयेत् ५ प-श्चात्कारयिष्यमाणस्यावस्थाय शीतोष्णा ग्रपः समानीयोष्णेन वा य उदके-नेहीति ६ तासां गृहीत्वा नवनीतं दधिद्रप्सान्वा प्रदक्षिणं शिरस्त्रिरुन्दति ग्रदितिः केशान्वपत्वाप उन्दन्तु वर्चस इति ७ दक्षिणे केशपक्षे त्रीणि त्री-णि कुशपिञ्जूलान्यभ्यात्माग्राणि निदधाति ग्रोषधे त्रायस्वैनमिति ८ स्व-धिते मैनं हिंसीरिति निष्पोड्य लौहेन क्षुरेण ९ प्रछिनत्ति येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्या-युष्माञ्जरदष्टिर्यथासदिति १० प्रच्छिद्यप्रच्छिद्य प्रागग्राञ्छमीपर्णैः सह मात्रे प्रयच्छति तानानडुहे गोमये निदधाति ११ येन धाता बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत् । तेन त ग्रायुषे वपामि सुश्लोक्याय स्वस्तय इति द्वितीयम् । येन भूयश्चरात्र्यां ज्योक्च पश्याति सूर्यम् । तेन त ग्रायुषे वपामि सुश्लोक्याय स्वस्तय इति तृतीयम् १२ सर्वैर्मन्त्रैश्चतुर्थम् १३ एवमुत्तरतस्त्रिः १४ क्षुरते-जो निमृजेद्यत्क्षुरेण मर्चयता सुपेशसा वप्ता वपसि केशान् । शुन्धि शिरो मास्यायुः प्रमोषीरिति १५ नापितं शिष्याच्छीतोष्णाभिरद्भिरवर्थं कुर्वाणो-ऽक्षरावन्कुशलीकुर्विति १६ यथाकुलधर्मं केशवेशान् कारयेत् १७ ग्रावृतैव कुमार्य्यै १८ १७

एतेन गोदानम् १ षोडशे वर्षे २ केशशब्दे तु श्मश्रुशब्दान्कारयेत् ३ श्मश्रूणीहोन्दति ४ शुन्धि शिरो मुखं मास्यायुः प्रमोषीरिति ५ केशश्म-

श्रुलोमनखान्युदक्संस्थानि कुर्विति संप्रेष्यति ६ आप्लुत्य वाग्यतः स्थित्वाऽहःशेषमाचार्यसकाशे वाचं विसृजेत वरं ददामीति ७ गोमिथुनं दक्षिणा ८ संवत्सरमादिशेत् ९ १८

अष्टमे वर्षे ब्राह्मणमुपनयेत् १ गर्भाष्टमे वा २ एकादशे क्षत्रियम् ३ द्वादशे वैश्यम् ४ आ षोडशाद्ब्राह्मणस्यानतीतः कालः ५ आ द्वाविंशात् क्षत्रियस्या चतुर्विंशाद्वैश्यस्यात ऊर्ध्वं पतितसावित्रीका भवन्ति ६ नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुः ७ अलङ्कृतं कुमारं कुशलीकृतशिरसमहतेन वाससा संवीतमैणेयेन वाजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यम् ८ यदि वासांसि वसीरन्रक्तानि वसीरन्काषायं ब्राह्मणो माञ्जिष्टं क्षत्रियो हारिद्रं वैश्यः ९ तेषां मेखलाः १० मौञ्जी ब्राह्मणस्य धनुर्ज्या क्षत्रियस्यावी वैश्यस्य ११ तेषां दण्डाः १२ पालाशो ब्राह्मणस्यौडुम्बरः क्षत्रियस्य बैल्वो वैश्यस्य । केशसंमितो ब्राह्मणस्य ललाटसंमितः क्षत्रियस्य प्राणसंमितो वैश्यस्य १३ १९

सर्वे वा सर्वेषाम् १ समन्वारब्धे हुत्वोत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते २ पुरस्तात्प्रत्यङ्मुख इतरः ३ अपामञ्जली पूरयित्वा तत्सवितुर्वृणीमह इति पूर्णेनास्य पूर्णमवक्षारयत्यासिच्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पुष्णो हस्ताभ्यां हस्तं गृह्णाम्यसाविति तस्य पाणिना पाणिं साङ्गुष्ठं गृह्णीयात् ४ सविता ते हस्तमग्रभीदसाविति द्वितीयम् । अग्निराचार्यस्तवासाविति तृतीयम् ५ आदित्यमीक्षयेत् देव सवितरेष ते ब्रह्मचारी तं गोपाय स मामृतेत्याचार्यः ६ कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वाकमुपनयते काय त्वा परिददामीति ७ युवा सुवासाः परिवीत आगादित्यर्द्धर्चेनैनं प्रदक्षिणमावर्तयेत् ८ तस्याध्यंसौ पाणी कृत्वा हृदयदेशमालभेतोत्तरेण ९ अग्निं परिसमूह्य ब्रह्मचारी तूष्णीं समिधमादध्यात् तूष्णीं वै प्राजापत्यं प्राजापत्यो ब्रह्मचारी भवतीति विज्ञायते १० २०

मन्त्रेण हैके अग्नये समिधमाहार्षं बृहते जातवेदसे तया त्वमग्ने वर्द्धस्व समिधा ब्रह्मणा वयं स्वाहेति १ स समिधमाधायाग्निमुपस्पृश्य मुखं निमार्ष्टि त्रिस्तेजसा मा समनज्मीति २ तेजसा ह्येवात्मानं समनक्तीति विज्ञायते ३

मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु । यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासं इत्युपस्थाय जान्वाच्योपसंगृह्य ब्रूयादधीहि भोः सावित्रीं भो३ अनुब्रू३हीति ४ तस्य वाससा पाणिभ्यां च पाणी संगृह्य सावित्रीमन्वाह पच्छोऽर्द्धर्चशः सर्वाम् ५ यथाशक्ति वाचयीत ६ हृदयदेशेऽस्योद्ध्वाङ्गुलिं पाणिमुपदधाति मम व्रते हृदयन्ते दधामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यमिति ७
२१

मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत् १ ब्रह्मचार्यस्यपोऽशान कर्म कुरु दिवा मास्वाप्सीराचार्याधीनो वेदमधीष्वेति २ द्वादश वर्षाणि वेदब्रह्मचर्यम् ३ ग्रहणान्तं वा ४ सायं प्रातर्भिक्षेत ५ सायं प्रातः समिधमादध्यात् ६ अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वा ७ भवान् भिक्षां ददात्वित्यनुप्रवचनीयमिति वा ८ तदाचार्याय वेदयीत तिष्ठेदहःशेषम् ९ अस्तमिते ब्रह्मौदनमनुप्रवचनीयं श्रपयित्वाचार्याय वेदयीत १० आचार्यः समन्वारब्धे जुहुयात्सदसस्पतिमद्भुतमिति ११ सावित्र्या द्वितीयम् १२ यद्यत्किञ्चात ऊर्ध्वमनूक्तं स्यात् १३ ऋषिभ्यस्तृतीयम् १४ सौविष्टकृतं चतुर्थम् १५ ब्राह्मणान्भोजयित्वा वेदसमाप्तिं वाचयीत १६ अत ऊर्ध्वमक्षारलवणाशी ब्रह्मचार्यधःशायी त्रिरात्रं द्वादशरात्रं संवत्सरं वा १७ चरितव्रताय मेधाजननं करोति १८ अनिन्दितायान्दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशापचारे प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं वाचयति सुश्रवः सुश्रवा असि यथा त्वं सुश्रवः सुश्रवा अस्येवं मां सुश्रवः सौश्रवसं कुरु । यथा त्वं देवानां यज्ञस्य निधिपोऽस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति १९ एतेन वापनादिपरिदानान्तं व्रतादेशनं व्याख्यातम् २० इत्यनुपेतपूर्वस्य २१ अथोपेतपूर्वस्य २२ कृताकृतं केशवपनं मेधाजननं च २३ अनिरुक्तं परिदानम् २४ कालश्च २५ तत्सवितुर्वृणीमह इति सावित्रीं २६ २२

ऋत्विजो वृणीतेऽन्यूनानतिरिक्ताङ्गान्ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् १ यून ऋत्विजो वृणीत इत्येके २ ब्रह्माणमेव प्रथमं वृणीतेऽथ होतारम-

थाध्वर्युमथोद्गातारम् ३ सर्वान्वा येऽहीनैकाहैर्याजयन्ति ४ सदस्यं सप्तदशं कौषीतकिनः समामनन्ति स कर्मणामुपद्रष्टा भवतीति तदुक्तमृग्भ्यां यमृत्विजो बहुधा कल्पयन्त इति ५ होतारमेव प्रथमं वृणीते ६ अग्निर्मे होता स मे होता होतारं त्वामु वृण इति होतारं ७ चन्द्रमा मे ब्रह्मा स मे ब्रह्मा ब्रह्माणं त्वामु वृण इति ब्रह्माणं ८ आदित्यो मेऽध्वर्युरित्यध्वर्युम् । पर्जन्यो म उद्गातेत्युद्गातारम् । आपो मे होत्राशंसिन इति होत्रकान् । रश्मयो मे चमसाध्वर्यव इति चमसाध्वर्यून् । आकाशो मे सदस्य इति सदस्यम् । स वृतो जपेन्महन्मेऽवोचो भर्गो मेऽवोचो भगो मेऽवोचो यशो मेऽवोचः स्तोमं मेऽवोचः क्लृप्तिं मेऽवोचस्तृप्तिं मेऽवोचो भुक्तिं मेऽवोचः सर्वं मेऽवोच इति ९ जपित्वाग्निष्टे होता स ते होता होताहं ते मानुष इति होता प्रतिजानीते १० चन्द्रमास्ते ब्रह्मा स ते ब्रह्मा ११ एवमितरे यथादेशं तन्मामवतु तन्मा विशतु तेन भुक्षिषीयेति च याजयिष्यन् १२ न्यस्तमार्त्विज्यमकार्यम् १३ अहीनस्य नीचदक्षिणस्य १४ व्याधितस्यातुरस्य १५ यक्ष्मगृहीतस्य १६ अनुदेश्यभिशस्तस्य १७ क्षिप्तयोनेरिति चैतेषाम् १८ सोमप्रवाकं परिपृच्छेत्को यज्ञः क ऋत्विजः का दक्षिणा इति १९ कल्याणैः सह सम्प्रयोगः २० न मांसमश्नीयुर्न स्त्रियमुपेयुरा क्रतोरपवर्गात् २१ एतेनाग्ने ब्रह्मणा वावृधस्वेति दक्षिणाग्नावाज्याहुतिं हुत्वा यथार्थं प्रव्रजेत् २२ एवमनाहिताग्निर्गृह्य इमामग्ने शरणिं मीमृषो न इत्येतयर्चा २३ २३

ऋत्विजो वृत्वा मधुपर्कमाहरेत् १ स्नातकायोपस्थिताय २ राज्ञे च ३ आचार्यश्वशुरपितृव्यमातुलानाञ्च ४ दधनि मध्वानीय ५ सर्पिर्वा मध्वलाभे ६ विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते ७ अहं वर्ष्म सजातानां विद्युतामिव सूर्यः । इदन्तमधितिष्ठामि यो मा कश्चाभिदासतीत्युदगग्रे विष्टर उपविशेदाक्रम्य वा ८ पादौ प्रक्षालापयीत दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् ९ सव्यं शूद्राय १० प्रक्षालितपादोऽर्घ्यमञ्जलिना प्रतिगृह्य ११ अथाचमनीयेनान्वाचामति अमृतोपस्तरणमसीति १२ मधुपर्कमाह्रियमाणमीक्षेत मित्रस्य त्वा चक्षुषा प्रतीक्ष इति १३ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति तदञ्जलिना प्रतिगृह्य सव्ये पाणौ कृत्वा मधुवाता ऋतायत इति तृचेनावेक्ष्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोड्य वसवस्त्वा गायत्रेण च्छन्दसा

भक्षयन्त्विति पुरस्तान्निमार्ष्टि १४ रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा भक्षयन्त्विति दक्षिणत आदित्यास्त्वा जागतेन च्छन्दसा भक्षयन्त्विति पश्चाद्विश्वे त्वा देवा आनुष्टुभेन च्छन्दसा भक्षयन्त्वित्युत्तरतो भूतेभ्यस्त्वेति मध्यात्त्रिरुद्गृह्य १५ विराजो दोहोऽसीति प्रथमं प्राश्नीयाद्विराजो दोहमशीयेति द्वितीयं मयि दोहः पद्यायै विराज इति तृतीयम् १६ न सर्वम् १७ न तृप्तिङ्गच्छेत् १८ ब्राह्मणायोदङ्ङुच्छिष्टं प्रयच्छेदलाभेऽप्सु १९ सर्वं वा २० अथाचमनीयेनान्वाचामत्यमृतापिधानमसीति २१ सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति द्वितीयम् २२ आचान्तोदकाय गां वेदयन्ते २३ हतो मे पाप्मा पाप्मा मे हत इति जपित्वोंकुरुतेति कारयिष्यन् २४ माता रुद्राणां दुहिता वसूनामिति जपित्वोमुत्सृजतेत्युत्स्रक्ष्यन् २५ नामांसो मधुपर्को भवति भवति २६ २४

इति प्रथमोऽध्यायः

श्रावण्यां पौर्णमास्यां श्रवणाकर्म १ अक्षतसक्तूनां नवङ्कलशं पूरयित्वा दर्वीञ्च बलिहरणीं नवे शिक्ये निदधाति २ अक्षतधानाः कृत्वा सर्पिषाऽर्द्धा अनक्ति ३ अस्तमिते स्थालीपाकं श्रपयित्वैककपालञ्च पुरोडाशं अग्ने नय सुपथा राये अस्मानिति चतसृभिः प्रत्यृचं हुत्वा पाणिनैककपालमच्युताय भौमाय स्वाहेति ४ अविप्लुतः स्यादाविःपृष्ठो वा ५ मा नो अग्नेऽवसृजो अघायेत्येनमाशयेनाभिजुहोति ६ शन्नो भवन्तु वाजिनो हवेष्वित्यक्ता धाना अञ्जलिना ७ अमात्येभ्य इतरा दद्यात् ८ कलशात्सक्तूनान्दर्वीं पूरयित्वा प्रागुपनिष्क्रम्य शुचौ देशेऽपोऽवनिनीय सर्पदेवजनेभ्यः स्वाहेति हुत्वा नमस्करोति ये सर्पाः पार्थिवा य आन्तरिक्ष्या ये दिव्या ये दिश्यास्तेभ्य इमं बलिमाहार्षं तेभ्य इमं बलिमुपाकरोमीति ९ प्रदक्षिणं परीत्य पश्चाद्बलेरुपविश्य सर्पोऽसि सर्पतां सर्पाणामधिपतिरस्यन्नेन मनुष्यांस्त्रायसेऽपूपेन सर्पान्यज्ञेन देवांस्त्वयि मा सन्तं त्वयि सन्तः सर्पा मा हिंसिषुर्ध्रुवान्ते परिददामीति १० ध्रुवामुन्ते ध्रुवामुन्त इत्यमात्याननुपूर्वम् ११ ध्रुव मां ते परिददामीत्यात्मानमन्ततः १२ नैनमन्तरा व्यवेयुरा परिदानात् १३ सर्पदेवजनेभ्यः स्वाहेति सायं प्रातर्बलिं हरेदा प्रत्यवरोहणात् १४ प्रसङ्ख्याय हैके तावतो बलींस्तदहरेवोपहरन्ति १५ १

आश्वयुज्यामाश्वयुजीकर्म १ निवेशनमलंकृत्य स्नाताः शुचिवाससः पशुप-

तये स्थालीपाकं निरुप्य जुहुयुः पशुपतये शिवाय शङ्कराय पृषातकाय स्वाहेति २ पृषातकमञ्जलिना जुहुयादूनं मे पूर्यतां पूर्णं मे मोपसदत्पृषातकाय स्वाहेति ३ सजूर्ऋृतुभिः सजूर्विधाभिः सजूरिन्द्राग्निभ्यां स्वाहा सजूर्ऋृतुभिः सजूर्विधाभिः सजूर्विश्वेभ्यो देवेभ्यः स्वाहा । सजूर्ऋृतुभिः सजूर्विधाभिः सजूर्द्यावापृथिवीभ्यां स्वाहेत्याहिताग्नेराग्रयणस्थालीपाकः ४ ग्रनाहिताग्नेरपि शालाग्नौ ५ २

मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्याम् १ पौर्णमास्यां वा २ निवेशनं पुनर्नवीकृत्य लेपनस्तरणोपस्तरणैरस्तमिते पायसस्य जुहुयुरपश्वेतपदा जहि पूर्वेण चापरेण च । सप्त च वारुणीरिमाः सर्वाश्च राजबान्धवीः स्वाहा न वै श्वेतस्याभ्यागारेऽहिर्जघान किञ्चन । श्वेताय वैदार्वाय नमः स्वाहेति ३ नात्र सौविष्टकृत् ४ ग्रभयन्नः प्राजापत्येभ्यो भूयादित्यग्निमीक्षमाणो जपति शिवो नः सुमना भवेति हेमन्तं मनसा ध्यायात् ५ पश्चादग्नेः स्वस्तरः स्वास्तीर्णस्तस्मिन्नुपविश्य स्योना पृथिवि भवेति जपित्वा संविशेत्सामात्यः प्राक्शिरा उदङ्मुखः ६ यथावकाशमितरे ७ ज्यायान्ज्यायान्वानन्तरः ८ मन्त्र-विदो मन्त्रान्जपेयुः ९ संहाय ग्रतो देवा ग्रवन्तु न इति त्रिः १० एतां दक्षिणामुखाः प्रत्यङ्मुखा उदङ्मुखाश्चतुर्थम् ११ संहाय सौर्याणि स्वस्त्ययनानि च जपित्वान्नं संस्कृत्य ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयीत १२ ३

हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः १ एकस्यां वा २ पूर्वेद्युः पितृभ्यो दद्यात् ३ ग्रोदनं कृसरं पायसम् ४ चतुःशरावस्य वापूपान् ५ उदीरतामवर उत्परास इत्यष्टाभिर्हुत्वा यावतीभिर्वा कामयीत ६ ग्रथ श्वोभूतेऽष्टकाः पशुना स्थालीपाकेन च ७ ग्रप्यनडुहो यवसमाहरेत् ८ ग्रग्निना वा कक्षमुपोषेत् ९ एष मेऽष्टकेति १० न त्वेवानष्टकः स्यात् ११ तां हैके वैश्वदेवीं ब्रुवत ग्राग्नेयीमेके सौर्यामेके प्राजापत्यामेके रात्रिदेवतामेके नक्षत्रदेवतामेक ऋृतुदेवतामेके पितृदेवतामेके पशुदेवतामेके १२ पशुकल्पेन पशुं संज्ञप्य प्रोक्षणोपाकरणवर्जं वपामुत्खिद्य जुहुयाद्वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके मेदसः कुल्या उपैनान्स्त्रवन्तु सत्या एता ग्राशिषः सन्तु सर्वाः स्वाहेति १३ ग्रथावदानानां स्थालीपाकस्य च ग्रग्ने नय सुपथा राये ग्रस्मानिति द्वे । ग्रीष्मो हेमन्त ऋृतवः शिवा नो वर्षाः शिवा

अभया शरन्नः । संवत्सरोऽधिपतिः प्राणदो नोऽहोरात्रे कृणुतां दीर्घमायुः स्वाहा । शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयन्नो अस्तु । शिवा दिशः प्रदिश उद्दिशो न आपो विद्युतः परिपान्तु सर्वतः स्वाहा । आपो मरीचीः प्रवहन्तु नो धियो धाता समुद्रो वहन्तु पापं भूतं भविष्यदभयं विश्वमस्तु मे ब्रह्माधिगुप्तः स्वाराक्षराणि स्वाहा । विश्व आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतः सदन्तु । ऊर्जं प्रजाममृतं पिन्वमानः प्रजापतिर्मयि परमेष्ठी दधातु स्वाहा । प्रजापते न त्वदेतान्यन्यः १४ सौविष्टकृत्यष्टमी १५ ब्राह्मणान्भोजयेदित्युक्तम् १६ ४

अपरेद्युरन्वष्टक्यम् १ तस्यैव मांसस्य प्रकल्प्य दक्षिणाप्रवणेऽग्निमुपसमाधाय परिश्रित्योत्तरतः परिश्रितस्य द्वारं कृत्वा समूलं बर्हिस्त्रिरपसलैरविधून्वन्परिस्तीर्य हवींष्यासादयेदोदनं कृसरं पायसं दधिमन्थान्मधुमन्थांश्च २ पिण्डपितृयज्ञकल्पेन ३ हुत्वा मधुमन्थवर्जं पितृभ्यो दद्यात् ४ स्त्रीभ्यश्च सुरा चाचाममित्यधिकम् ५ कर्षूष्वेके द्वयोः षट्सु वा ६ पूर्वासु पितृभ्यो दद्यात् ७ अपरासु स्त्रीभ्यः ८ एतेन माघ्यावर्षं प्रोष्ठपद्या अपरपक्षे ९ मासि मासि चैवं पितृभ्योऽयुक्षु प्रतिष्ठापयेत् १० नवावरान्भोजयेत् ११ अयुजो वा १२ युग्मान् वृद्धिपूर्तेषु १३ अयुग्मानितरेषु १४ प्रदक्षिणमुपचारो यवैस्तिलार्थः १५ ५

रथमारोक्ष्यन्नाना पाणिभ्यां चक्रे अभिमृशेत् अहन्ते पूर्वं पादावालभेद्बृहद्रथन्तरे ते चक्रे १ वामदेव्यमक्ष इत्यक्षाधिष्ठाने २ दक्षिणपूर्वाभ्यामारोहेत् वायोष्ट्वा वीर्येणारोहामीन्द्रस्यौजसाधिपत्येनेति ३ रश्मीन्संमृशेदरश्मिकान्वा दण्डेन ब्रह्मणो वस्तेजसा संगृह्णामि सत्येन वस्संगृह्णामीति ४ अभिप्रवर्त्तमानेषु जपेत् सहस्रसनिं वाजमभिवर्त्तस्व रथ देव प्रवह वनस्पते वीड्वङ्गो हि भूया इति ५ एतयान्यान्यपि वानस्पत्यानि ६ स्थिरौ गावौ भवतां वीडुरक्ष इति रथाङ्गमभिमृशेत् ७ सुत्रामाणं पृथिवीं द्यामनेहसमिति नावम् ८ नवरथेन यशस्विनं वृक्षं ह्रदं वाविदासिनं प्रदक्षिणं कृत्वा फलवतीः शाखा आहरेत् ९ अन्यद्वा कौटुम्बम् १० संसदमुपयायात् ११ अस्माकमुत्तमं कृधीत्यादित्यमीक्षमाणो जपित्वावरोहेत् १२ ऋषभं मा समानानामित्यभिक्रामन् १३ वयमद्येन्द्रस्य प्रेष्ठा इत्यस्तं यात्यादित्ये १४ तद्वो दिवो दुहितरो विभातीरिति

व्युष्टायाम् १५ ६

अथातो वास्तुपरीक्षा १ अनूषरमविवदिष्णु भूम २ ओषधिवनस्पतिवत् ३ यस्मिन्कुशवीरिणं प्रभूतम् ४ कण्टकिक्षीरिणस्तु समूलान्परिखायोद्वासये-दपामार्गः शाकस्तिल्वकः परिव्याध इति चैतानि ५ यत्र सर्वत आपो मध्यं समेत्य प्रदक्षिणं शयनीयं परीत्य प्राच्यः स्यन्देरन्नप्रवदत्यस्तत्सर्वं समृद्धम् ६ समवस्रवे भक्तशरणं कारयेत् ७ बह्वन्नं ह भवति ८ दक्षिणाप्रवणे सभां मापयेत्साऽद्यूता ह भवति ९ युवानस्तस्यां कितवाः कलहिनः प्रमायुका भवन्ति १० यत्र सर्वत आपः प्रस्यन्देरन् सा स्वस्त्ययन्यद्यूता च ११ ७

अथैतैर्वास्तु परीक्षेत १ जानुमात्रङ्गर्तं खात्वा तैरेव पांसुभिः प्रतिपूरयेत् २ अधिके प्रशस्तं समे वार्त्तं न्यूने गर्हितम् ३ अस्तमितेऽपां सुपूर्णं परिवासयेत् ४ सोदके प्रशस्तमार्द्रे वार्त्तं शुष्के गर्हितं श्वेतं मधुरास्वादम् ५ सिकतोत्तरं ब्राह्मणस्य ६ लोहितं क्षत्रियस्य ७ पीतं वैश्यस्य ८ तत्सहस्रसीतं कृत्वा यथादिक्समचतुरस्रं मापयेत् ९ आयतं चतुरस्रं वा १० तच्छ-मीशाखयोडुम्बरशाखया वा शन्तातीयेन त्रिः परिव्रजन्प्रोक्षति ११ अवि-च्छिन्नया चोदकधारयापो हि ष्ठा मयोभुव इति तृचेन १२ वंशान्तरेषु शरणानि कारयेत् १३ गर्तेष्ववकां शीपालमित्यवधापयेन्नास्याग्निर्दाहुको भवतीति विज्ञायते १४ मध्यमस्थूणाया गर्तेऽवधाय प्रागग्रोदग्रान्कुशानास्तीर्य व्रीहिय-वमतीरप आसेचयेदच्युताय भौमाय स्वाहेति १५ अथैनामुच्छ्रियमा-णामनुमन्त्रयेतेहैव तिष्ठ निमिता तिल्विलास्तामिरावतीं मध्ये पोषस्य तिष्ठन्तीम् । आ त्वा प्रापन्नघायव आ त्वा कुमारस्तरुण आ वत्सो जायतां सह । आ त्वा परिश्रितः कुम्भ आ दध्नः कलशैरयन्निति १६ ८

वंशमाधोयमानम् १ ऋतेन स्थूणामधिरोह वंश द्राघीय आयुः प्रतरन्दधान इति २ सदूर्वासु चतसृषु शिलासु मणिकं प्रतिष्ठापयेत् पृथिव्या अधि सम्भ-वेति ३ अरङ्गरो वावदीति त्रेधा बद्धो वरत्रया । इरामु ह प्रशंसत्यनि-रामपबाधतामिति वा ४ अथास्मिन्नप आसेचयेत् ऐतु राजा वरुणो रेवतीभिरस्मिन् स्थाने तिष्ठतु मोदमानः । इरां वहन्तो घृतमुक्षमाणा मित्रेण साकं सह संविशन्त्विति ५ अथैनच्छमयति ६ व्रीहियवमतीभिरद्भि-

र्हिरण्यमवधाय शन्तातीयेन त्रिः प्रदक्षिणं परिव्रजन्प्रोक्षति ७ अविच्छिन्नया चोदकधारया आपो हि ष्ठा मयोभुव इति तृचेन ८ मध्येऽगारस्य स्थालीपाकं श्रपयित्वा वास्तोष्पते प्रतिजानीह्यस्मानिति चतसृभिः प्रत्यृचं हुत्वान्नं संस्कृत्य ब्राह्मणान्भोजयित्वा शिवं वास्तु शिवं वास्त्विति वाचयीत ९ ९

उक्तं गृहप्रपदनम् १ बीजवतो गृहान् प्रपद्येत २ क्षेत्रं प्रकर्षयेदुत्तरैः प्रोष्ठपदैः फाल्गुनीभी रोहिण्या वा ३ क्षेत्रस्यानुवातं क्षेत्रस्य पतिना वयमिति प्रत्यृचं जुहुयाज्जपेद्वा ४ गाः प्रतिष्ठमाना अनुमन्त्रयेत मयोभूर्वातो अभिवातूस्रा इति द्वाभ्याम् ५ आयतीः यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च । ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्यः । उप मैतु मयोभुव ऊर्जं चौजश्च बिभ्रतीः । दुहाना अक्षितं पयो मयि गोष्ठे निविशध्वम् । यथा भवाम्युत्तमो या देवेषु तन्वामैरयन्तेति च सूक्तशेषम् ६ आगावीयमेके ७ गणानासामुपतिष्ठेता-गुरुगवीनां भूताः स्थ प्रशस्ताः स्थ शोभनाः प्रियाः प्रियो वो भूयासं शं मयि जानीध्वं शं मयि जानीध्वं ८ १०

इति द्वितीयोऽध्यायः

अथातः पञ्चयज्ञाः १ देवयज्ञो भूतयज्ञः पितृयज्ञो ब्रह्मयज्ञो मनुष्ययज्ञ इति २ तद्यदग्नौ जुहोति स देवयज्ञो यद्बलिङ्करोति स भूतयज्ञो यत्पितृभ्यो ददाति स पितृयज्ञो यत्स्वाध्यायमधीयते स ब्रह्मयज्ञो यन्मनुष्येभ्यो ददाति स मनुष्ययज्ञ इति ३ तानेतान्यज्ञानहरहः कुर्वीत ४ १

अथ स्वाध्यायविधिः १ प्राग्वोदग्वा ग्रामान्निष्क्रम्याप आप्लुत्य शुचौ देशे यज्ञोपवीत्याचम्याक्लिन्नवासा दर्भाणां महदुपस्तीर्य प्राक्कूलानान्तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी सन्धाय पवित्रवन्तौ विज्ञायतेऽपां वा एष ओषधीनां रसो यद्दर्भाः सरसमेव तद्ब्रह्म करोति द्यावापृथिव्योः सन्धिमीक्षमाणः संमील्य वा यथा वा युक्तमात्मानं मन्येत तथा युक्तोऽधी-यीत स्वाध्यायम् २ ॐपूर्वा व्याहृतीः ३ सावित्रीमन्वाह पच्छोऽर्द्धर्चशः सर्वामिति तृतीयम् ४ २

अथ स्वाध्यायमधीयीत ऋचो यजूंषि सामान्यथर्वाङ्गिरसो ब्राह्मणानि क-

ल्पान्गाथा नाराशंसीरितिहासपराणानीति १ यदृचोऽधीते पयस्राहुतिभिरेव तद्देवतास्तर्पयति यद्यजूंषि घृताहुतिभिर्यत्सामानि मध्वाहुतिभिर्यद-थर्वाङ्गिरसः सोमाहुतिभिर्यद्ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहास-पुराणानीत्यमृताहुतिभिः २ यदृचोऽधीते पयसः कुल्यास्य पितॄन्त्स्वधा उपक्ष-रन्ति यद्यजूंषि घृतस्य कुल्या यत्सामानि मध्वः कुल्या यदथर्वाङ्गिरसः सोमस्य कुल्या यद्ब्राह्मणानि कल्पान्गाथा नाराशंसीरितिहासपुरा-णानीत्यमृतस्य कुल्याः ३ स यावन्मन्येत तावदधीत्यैतया परिदधाति नमो ब्रह्मणे नमो-ऽस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमीति ४ ३

देवतास्तर्पयति प्रजापतिर्ब्रह्मा वेदा देवा ऋषयः सर्वाणि च्छन्दांस्योङ्कारो व-षट्कारो व्याहृतयः सावित्री यज्ञा द्यावापृथिवी अन्तरिक्षमहोरात्राणि सांख्याः सिद्धाः समुद्रा नद्यो गिरयः क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसो नागा वयांसि गावः साध्या विप्रा यक्षा रक्षांसि भूतान्येवमन्तानि १ अथ ऋषयः शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजो वसिष्ठः प्रगाथाः पावमान्यः क्षुद्रसूक्ता महासूक्ता इति २ प्राचीनावीती ३ सुमन्तुजैमिनि-वैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्या जानन्ति बाहविगार्ग्य-गौतमशाकल्यबाभ्रव्यमाण्डव्यमाण्डूकेया गर्गी वाचक्नवी वडवा प्रातिथे-यी सुलभा मैत्रेयी कहोलं कौषीतकं महाकौषीतकं पैङ्ग्यं महापैङ्ग्यं सुयज्ञं शाङ्खायनमैतरेयं महैतरेयं शाकलं बाष्कलं सुजातवक्त्रमौदवाहिं महौदवाहिं सौजामिं शौनकमाश्वलायनं ये चान्य आचार्यास्ते सर्वे तृप्यन्त्विति ४ प्रति-पुरुषं पितॄंस्तर्पयित्वा गृहानेत्य यद्ददाति सा दक्षिणा ५ अथापि विज्ञायते स यदि तिष्ठन् व्रजन्नासीनः शयानो वा यं यं क्रतुमधीते तेन तेन हास्य क्रतुने-ष्टम्भवतीति ६ विज्ञायते तस्य द्वावनध्यायौ यदात्माशुचिर्यद्देशः ७ ४

अथातोऽध्यायोपाकरणम् १ ओषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य २ प-ञ्चम्यां हस्तेन वा ३ आज्यभागौ हुत्वाज्याहुतीर्जुहुयात्सावित्र्यै ब्रह्मणे श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतयेऽनुमतये छन्दोभ्य ऋषिभ्यश्चेति ४ अथ दधिसक्तून्जुहोति ५ अग्निमीळे पुरोहितमित्येका ६ कुषुम्भकस्तदब्रवीदाव-दंस्त्वं शकुने भद्रमावद गृणाना जमदग्निना धामन्ते विश्वम्भुवनमधिश्रितं गन्ता

नो यज्ञं यज्ञियाः सुशमियो नः स्वो अरणः प्रचक्ष्व विचक्ष्वाग्ने याहि मरुत्सखा यत्ते राजञ्छतं हविरिति द्व्यृचाः ७ समानीव आकूतिरित्येका ८ तच्छंयो-रावृणीमह इत्येका ९ अध्येष्यमाणोऽध्याप्यैरन्वारब्ध एताभ्यो देवताभ्यो हुत्वा सौविष्टकृतं हुत्वा दधिसक्तून्प्राश्य ततो मार्जनम् १० अपरेणाग्निं प्राक्कूलेषु दर्भेषूपविश्योदपात्रे दर्भान्कृत्वा ब्रह्माञ्जलिकृतो जपेत् ११ ॐपूर्वा व्याहृतीः सावित्रीं च त्रिरभ्यस्य वेदादिमारभेत् १२ तथोत्सर्गे १३ षण्मासानधीयीत १४ समावृत्तो ब्रह्मचारिकल्पेन १५ यथान्यायमितरे १६ जायोपेयोत्येके १७ प्राजापत्यं तत् १८ वार्षिकमित्येतदाचक्षते १९ मध्यमाष्टकायामेताभ्यो देवताभ्योऽन्नेन हुत्वाऽपोऽभ्यवयन्ति २० एता एव तद्देवतास्तर्पयन्ति २१ आचार्यानृषीन्पितॄंश्च २२ एतदुत्सर्जनम् २३ ५

अथ काम्यानां स्थाने काम्याः १ चरवः २ तानेव कामानाप्नोति ३ अथ व्याधितस्यातुरस्य यक्ष्मगृहीतस्य वा षडाहुतिश्चरुः ४ मुञ्चामि त्वा हविषा जीवनायकमित्येतेन ५ स्वप्नममनोज्ञं दृष्ट्वाद्या नो देव सवितरिति द्वाभ्यां यच्च गोषु दुःस्वप्न्यमिति पञ्चभिरादित्यमुपतिष्ठेत ६ यो मे राजन्युज्यो वा सखा वेति वा ७ क्षुत्वा जृम्भित्वाऽमनोज्ञं दृष्ट्वा पापकं गन्धमाघ्रायाक्षि-स्पन्दने कर्णध्वनने च सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्क-र्णाभ्यां मयि दक्षक्रतू इति जपेत् ८ अगमनीयां गत्वायाज्यं याजयित्वा-भोज्यं भुक्त्वाप्रतिग्राह्यं प्रतिगृह्य चैत्यं यूपं चोपहत्य पुनर्मामैत्विन्द्रियं पुन-रायुः पुनर्भगः । पुनर्द्रविणमैतु मां पुनर्ब्राह्मणमैतु मां स्वाहा । इमे ये धिष्ण्या-सो अग्नयो यथास्थानमिह कल्पताम् । वैश्वानरो वावृधानोऽन्तर्यच्छतु मे मनो हृद्यन्तरममृतस्य केतुः स्वाहेत्याज्याहुती जुहुयात् ९ समिधौ वा १० जपेद्वा ११ ६

अव्याधितश्चेत्स्वपन्तमादित्योऽभ्यस्तमियाद्वाग्यतोऽनुपविशन्रात्रिशेषम्भूत्वा येन सूर्यज्योतिषा बाधसे तम इति पञ्चभिरादित्यमुपतिष्ठेत १ अभ्युदियाच्चे-दकर्मश्रान्तमनभिरूपेण कर्मणा वाग्यत इति समानमुत्तरापराभि-श्चतसृभि-रुपस्थानम् २ यज्ञोपवीती नित्योदकः सन्ध्यामुपासीत वाग्यतः ३ साय-मुत्तरापराभिमुखोऽन्वष्टमदेशं सावित्रीं जपेदर्धास्तमिते मण्डल आनक्ष-त्रदर्शनात् ४ एवं प्रातः ५ प्राङ्मुखस्तिष्ठन्नामण्डलदर्शनात् ६ कपोतश्चे-

दगारमुपहन्यादनुपतेद्वा देवाः कपोत इति प्रत्यृचं जुहुयाज्जपेद्वा ७ वयमु त्वा पथस्पत इत्यर्थचर्याञ्चरिष्यन् ८ सम्पूषन्विदुषेति नष्टमधिजिगमिषन्मूळ्हो वा ९ सम्पूषन्नध्वन इति महान्तमध्वानमेष्यन्प्रतिभयं वा १० ७

अथैतान्युपकल्पयीत समावर्त्यमाने मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाचार्याय च १ यद्युभयोर्न विन्देताचार्यायैव २ समिधं त्वाहरेदपराजितायान्दिशि यज्ञियस्य वृक्षस्य ३ आर्द्रामन्नाद्यकामः पुष्टिकामस्तेजस्कामो वा ब्रह्मवर्चसकाम उपवाताम् ४ उभयीमुभयकामः ५ उपरि समिधं कृत्वा गामन्नञ्च ब्राह्मणेभ्यः प्रदाय गौदानिकं कर्म कुर्वीत ६ आत्मनि मन्त्रान्त्संनमयेत् ७ एकक्लीतकेन ८ शीतोष्णाभिरद्भिः स्नात्वा युवं वस्त्राणि पीवसा वसाथे इत्यहते वाससी आच्छाद्याश्मनस्तेजोऽसि चक्षुर्मे पाहीति चक्षुषी आञ्जयीत ९ अश्म-नस्तेजोऽसि श्रोत्रं मे पाहि इति कुण्डले आबध्नीत १० अनुलेपनेन पाणी प्रलिप्य मुखमग्रे ब्राह्मणोऽनुलिम्पेद्बाहू राजन्य उदरं वैश्य उपस्थं स्त्र्यूरू सरणजीविनः ११ अनार्त्तास्यनार्तोऽहं भूयासमिति स्रजमपि बध्नीत न मालो-त्ताम् १२ मालेति चेद्ब्रूयुः स्रगित्यभिधापयीत १३ देवानां प्रतिष्ठे स्थः सर्वतो मा पातमित्युपानहावास्थाय दिवश्छद्मासीति च्छत्रभादत्ते १४ वेणुरसि वानस्पत्योऽसि सर्वतो मा पाहीति वैणवं दण्डम् १५ आयुष्यमिति सूक्तेन मणिं कण्ठे प्रतिमुच्योष्णीषं कृत्वा तिष्ठन्त्समिधमादध्यात् १६ ८

स्मृतन्निन्दा च विद्या च श्रद्धा प्रज्ञा च पञ्चमी । इष्टन्दत्तमधीतञ्च कृतं सत्यं श्रुतं व्रतम् । यदग्ने सेन्द्रस्य सप्रजापतिकस्य सऋषिकस्य सऋषिराजन्यस्य सपितृकस्य सपितृराजन्यस्य समनुष्यस्य समनुष्यराजन्यस्य साकाशस्य सातीकाशस्य सानुकाशस्य सप्रतीकाशस्य सदेवमनुष्यस्य सगन्धर्वाप्सर-स्कस्य सहारण्यैश्च पशुभिर्ग्राम्यैश्च यन्म आत्मन आत्मनि व्रतन्तन्मे सर्वव्र-तमिदमहमग्ने सर्वव्रतो भवामि स्वाहेति १ ममाग्ने वर्च इति प्रत्यृचं समि-धोऽभ्यादध्यात् २ यत्रैनं पूजयिष्यन्तो भवन्ति तत्रैतां रात्रीं वसेत् ३ वि-द्यान्ते गुरुमर्थेन निमन्त्र्यं कृत्वानुज्ञातस्य वा स्नानम् ४ तस्यैतानि व्रतानि भवन्ति ५ न नक्तं स्नायात् । न नग्नः स्नायात् । न नग्नः शयीत । न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनात् । वर्षति न धावेत् ६ न वृक्षमारोहेत् ।

न कूपमवरोहेत् । न बाहुभ्यां नदीन्तरेत् । न संशयमभ्यापद्येत ७ महद्वै भूतं स्नातको भवतीति विज्ञायते ८ ९

गुरवे प्रस्त्रद्यमाणो नाम प्रब्रुवीत १ इदं वत्स्यामो भो३ इति २ उच्चैरूर्ध्वं नाम्नः ३ प्राणापानयोरुपांशु ४ आ मन्द्रैरिन्द्र हरिभिरिति च ५ अतो वृद्धो जपति प्राणापानयोरुरुव्यचास्तया प्रपद्ये देवाय सवित्रे परिददामीत्यृचं च ६ समाप्यों प्राक् स्वस्तीति जपित्वा महित्रीणामित्यनुमन्त्र्य ७ एवमतिसृष्टस्य न कुतश्चिद्भयं भवतीति विज्ञायते ८ वयसाममनोज्ञा वाचः श्रुत्वा कनिक्रदज्जनुषं प्रबुवाण इति सूक्ते जपेद्देवीं वाचमजनयन्त देवा इति च ९ स्तुहि श्रुतङ्गर्तसदं युवानमिति मृगस्य १० यस्या दिशो बिभीयाद्यस्माद्वा तान्दिशमुल्मुकमुभयतः प्रदीप्तं प्रत्यस्येन्मन्थं वा प्रसव्यमालोड्याभयं मित्रावरुणा मह्यमस्त्वर्चिषा शत्रून्दहन्तं प्रतीत्य मा ज्ञातारं मा प्रतिष्ठां विन्दन्तु मिथो भिन्दाना उभयन्तु मृत्युमिति संसृष्टं धनमुभयं समाकृतमिति मन्थं न्यञ्चङ्करोति ११ १०

सर्वतो भयादनाज्ञातादष्टावाज्याहुतीर्जुहुयात्पृथिवी वृता साग्निना वृता तया वृतया वत्र्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । अन्तरिक्षं वृतं तद्वायुना वृतन्तेन वृतेन वर्त्रेण यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । द्यौर्वृता सादित्येन वृता तया वृतया वत्र्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । दिशो वृतास्ताश्चन्द्रमसा वृतास्ताभिर्वृताभिर्वत्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । आपो वृतास्ता वरुणेन वृतास्ताभिर्वृताभिर्वत्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । प्रजा वृतास्ताः प्राणेन वृतास्ताभिर्वृताभिर्वत्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । वेदा वृतास्ते छन्दोभिर्वृतास्तैर्वृतैर्वर्त्रैर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । सर्वं वृतं तद्ब्रह्मणा वृतन्तेन वृतेन वर्त्रेण यस्माद्भयाद्बिभेमि तद्वारये स्वाहा इति १ अथापराजितायां दिश्यवस्थाय स्वस्त्यात्रेयं जपति यत इन्द्र भयामह इति च सूक्तशेषम् २ ११

संग्रामे समुपोळ्हे राजानं सन्नाहयेत् १ आ त्वाहार्षमन्तरेधीति पश्चाद्रथस्यावस्थाय २ जीमूतस्येव भवति प्रतीकमिति कवचं प्रयच्छेत् ३ उत्तरया धनुः ४ उत्तरां वाचयेत् ५ स्वयञ्चतुर्थीं जपेत् ६ पञ्चम्येषुधिं प्रयच्छेत् ७

अभिप्रवर्तमाने षष्ठीम् ८ सप्तम्याश्वान् ९ अष्टमीमिषूनवेक्षमाणं वाचयति १० अहिरिव भोगैः पर्यैति बाहुमिति तलं नह्यमानम् ११ अथैनं सारयमाणमुपारुह्याभीवर्तं वाचयति प्र यो वां मित्रावरुणेति च द्वे १२ अथैनमन्वीक्षेताप्रतिरथशाससौपर्णैः १३ प्रधारयन्तु मधुनो घृतस्येत्येतत् सौपर्णम् १४ सर्वा दिशोऽनुपरीर्यायात् १५ आदित्यमौशनसं वावस्थाय प्रयोधयेत् १६ उपश्वासय पृथिवीमुत द्यामिति तृचेन दुन्दुभिमभिमृशेत् १७ अवसृष्टा परापतेतीषून्विसर्जयेत् १८ यत्र बाणाः सम्पतन्तीति यध्यमानेषु जपेत् १९ संशिष्याद्वा संशिष्याद्वा २० १२

इति तृतीयोऽध्यायः

आहिताग्निश्चेदुपतपेत्प्राच्यामुदीच्यामपराजितायां वा दिश्युदवस्येत् १ ग्रामकामा अग्नय इत्युदाहरन्ति २ आशंसन्त एनं ग्राममाजिगमिषन्तोऽगदङ्कुर्युरिति ह विज्ञायते ३ अगदः सोमेन पशुनेष्टयेष्ट्वावस्येत् ४ अनिष्ट्वा वा ५ संस्थिते भूमिभागं खानयेद्दक्षिणपूर्वस्यान्दिशि दक्षिणापरस्यां वा ६ दक्षिणाप्रवणं प्राग्दक्षिणाप्रवणं वा प्रत्यग्दक्षिणाप्रवणमित्येके ७ यावानुद्बाहुकः पुरुषस्तावदायामम् ८ व्याममात्रन्तिर्यक् ९ वितस्त्यवाक १० अभित आकाशं श्मशानम् ११ बहुलौषधिकम् १२ कण्टकिक्षीरिणस्त्विवति यथोक्तं पुरस्तात् १३ यत्र सर्वत आपः प्रस्यन्देरन्नेतदादहनस्य लक्षणं श्मशानस्य १४ केशश्मश्रुलोमनखानीत्युक्तं पुरस्तात् १५ द्विगुल्फं बर्हिराज्यञ्च १६ दधन्यत्र सर्पिरानयन्त्येतत्पित्र्यं पृषदाज्यम् १७ १

अथैतान्दिशमग्नीन्नयन्ति यज्ञपात्राणि च १ अन्वञ्चं प्रेतमयुजोऽमिथुनाः प्रवयसः २ पीठचक्रेण गोयुक्तेनेत्येके ३ अनुस्तरणीम् ४ गाम् ५ अजां वैकवर्णाम् ६ कृष्णामेके ७ सव्ये बाहौ बद्ध्वानुसङ्कालयन्ति ८ अन्वञ्चोऽमात्या अधोनिवीताः प्रवृत्तशिखा ज्येष्ठप्रथमाः कनिष्ठजघन्याः ९ प्राप्यैवं भूमिभागङ्कर्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन्प्रोक्षत्यपेत वीत वि च सर्पतात इति १० दक्षिणपूर्व उद्धतान्त आहवनीयं निदधाति ११ उत्तरपश्चिमे गार्हपत्यम् १२ दक्षिणपश्चिमे दक्षिणम् १३ अथैनमन्तर्वेदीध्मचितिं चिनोति यो जानाति १४ तस्मिन्बर्हिरास्तीर्य कृष्णाजिनञ्चोत्तरलोम तस्मिन्प्रेतं संवेशयन्त्युत्तरेण गार्हपत्यं हृत्वाहवनीयमभिमुखशिरसम् १५

उत्तरत्तः तन्नीम् १६ धनुश्च क्षत्रियाय १७ तामुथापयेद्देवरः पतिस्था- नीयोऽन्तेवासी जरद्दासो वोदीर्ष्वनार्यभिजीवलोकमिति १८ कर्ता वृषले जपेत् १९ धनुर्हस्तादाददानो मृतस्येति धनुः २० उक्तं वृषले २१ अधिज्यं कृत्वा सञ्चितिमचित्वा संशीर्यानु प्रहरेत् २२ २

अथैतानि पात्राणि योजयेत् १ दक्षिणे हस्ते जुहूम् २ सव्य उपभृतं ३ द- क्षिणे पार्श्वे स्फ्यम् । सव्येग्निहोत्रहवणीम् ४ उरसि ध्रुवाम् । शिरसि कपालानि । दत्सु ग्राव्णः ५ नासिकयोः स्रुवौ ६ भित्वा चैकम् ७ कर्णयोः प्राशित्रहरणे ८ भित्वा चैकम् ९ उदरे पात्रीम् १० समवत्तधानञ्च चमसम् ११ उपस्थे शम्याम् १२ अरणी ऊर्वोः । उलूखलमुसले जङ्घयोः १३ पादयोः शूर्पे १४ छित्वा चैकम् १५ आसेचनवन्ति पृषदाज्यस्य पूरयन्ति १६ अमा पुत्रो दृषदुपले कुर्वीत १७ लौहायसञ्च कौलालम् १८ अनुस्तरण्यावपामुत्खिद्य शिरोमुखं प्रच्छादयेदग्नेर्वर्मपरिगोभिर्व्ययस्वेति १९ वृक्का उद्धृत्य पाण्योरादध्यादतिद्रवसारमेयौ श्वानाविति दक्षिणे दक्षिणं सव्ये सव्यम् २० हृदये हृदयं २१ पिण्ड्यौ चैके २२ वृक्कापचार इत्येके २३ सर्वां यथाङ्गं विनिक्षिप्य चर्मणा प्रच्छाद्येममग्ने चमसं मा वि जिह्वर इति प्रणीताप्रणयनमनुमन्त्रयते २४ सव्यं जान्वाच्य दक्षिणाग्नावाज्याहुतीर्जुहुया- दग्नये स्वाहा कामाय स्वाहा लोकाय स्वाहानुमतये स्वाहेति २५ पञ्चमीमुरसि प्रेतस्यास्माद्वै त्वमजायथा अयन्त्वदधिजायतामसौ स्वर्गाय लोकाय स्वाहेति २६ ३

प्रेष्यति युगपदग्नीन्प्रज्वालयतेति १ आहवनीयश्चेत्पूर्वं प्राप्नुयात्स्वर्गलोक एनं प्रापदिति विद्याद्रात्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः २ गार्हपत्यश्चेत् पूर्वं प्राप्नुयादन्तरिक्षलोक एनं प्रापदिति विद्याद्रात्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः ३ दक्षिणाग्निश्चेत्पूर्वं प्राप्नुयान्मनुष्यलोक एनं प्रापदिति विद्याद्रा- त्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः ४ युगपत्प्राप्तौ परामृद्धिं वदन्ति ५ तन्दह्यमानमनुमन्त्रयते प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति समानम् ६ स एवंविदा दह्यमानः सहैव धूमेन स्वर्गं लोकमेतीति ह विज्ञायते ७ उत्तरपुरस्तादा- हवनीयस्य जानुमात्रङ्गर्तं खात्वावकां शीपालमित्यवधापयेत्ततो ह वा एष निष्क्रम्य सहैव धूमेन स्वर्गं लोकमेतीति ह विज्ञायते ८ इमे जीवा वि

मृतैराववृत्रन्निति सव्यावृतो व्रजन्त्यनवेक्षमाणाः ९ यत्रोदकमवहद्भवति तत्प्राप्य सकृदुन्मज्ज्यैकाञ्जलिमुत्सृज्य तस्य गोत्रं नाम च गृहीत्वोत्तीर्यान्यानि वासांसि परिधाय सकृदेनान्यापीड्योदग्दशानि विसृज्यासत आ-नक्षत्रदर्शनात् १० आदित्यस्य वा दृश्यमाने प्रविशेयुः ११ कनिष्ठप्रथमा ज्येष्ठजघन्याः १२ प्राप्यागारमश्मानमग्निङ्गोमयमक्षतांस्तिलानप उपस्पृश-न्ति १३ नैतस्यां रात्र्यामन्नम्पचेरन् १४ क्रीतोत्पन्नेन वा वर्तेरन् १५ त्रि-रात्रमक्षारलवणाशिनः स्युः १६ द्वादशरात्रं वा महागुरुषु दानाध्ययने व-र्जयेरन् १७ दशाहं सपिण्डेषु १८ गुरौ चासपिण्डे १९ अप्रत्तासु च स्त्रीषु २० त्रिरात्रमितरेष्वाचार्येषु २१ ज्ञातौ चासपिण्डे २२ प्रत्तासु च स्त्रीषु २३ अदन्तजाते २४ अपरिजाते च २५ एकाहं सब्रह्मचारिणि २६ समानग्रामीये च श्रोत्रिये २७ ४

सञ्चयनमूर्ध्वं दशम्याः कृष्णपक्षस्यायुजास्वेकनक्षत्रे १ अलक्षणे कुम्भे पु-मांसमलक्षणायां स्त्रियमयुजोऽमिथुनाः प्रवयसः २ क्षीरोदकेन शमीशा-खया त्रिःप्रसव्यमायतनं परिव्रजन्प्रोक्षति शीतिके शीतिकावतीति ३ अ-ङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्थ्यसंह्रादयन्तोऽवदध्युः पादौ पूर्वं शिर उत्तरम् ४ सुसञ्चितं सञ्चित्य पवनेन सम्पूय यत्र सर्वत आपो नाभिस्यन्देरन्नन्या वर्षाभ्यस्तत्र गर्तेऽवदध्युरुपसर्प मातरं भूमिमेतामिति ५ उत्तरया पांसूनव-किरेत् ६ अवकीर्योत्तराम् ७ उत्ते स्तभ्नामीति कपालेनापिधायाथानवेक्षं प्रत्याव्रज्याप उपस्पृश्य श्रद्धमस्मै दद्युः ८ ५

गुरुणाभिमृता अन्यतोवापक्षीयमाणा अमावास्यायां शान्तिकर्म कुर्वीरन् १ पुरोदयादग्निं सहभस्मानं सहायतनं दक्षिणा हरेयुः क्रव्यादमग्निं प्रहिणोमि दूरमित्यर्द्धर्चेन २ तं चतुष्पथे न्युप्य यत्र वा त्रिः प्रसव्यं परियन्ति सव्यैः पाणिभिः सव्यानूरूनाघ्नानाः ३ अथानवेक्षं प्रत्याव्रज्याप उपस्पृश्य केश-श्मश्रुलोमनखानि वापयित्वोपकल्पयीरन्नवान्मणिकान्कुम्भानाचमनीयांश्च शमीसुमनोमालिनः शमीमयमिध्मं शमीमय्यावरणी परिधींश्चानडुहङ्गोमयञ्चर्म च नवनीतमश्मानं च यावत्योयुवतयस्तावन्ति कुशपिञ्जूलानि ४ अग्निवे-लायामग्निं जनयेदिहैवायमितरो जातवेदा इत्यर्धर्चेन ५ तन्दीपयमाना आसत आ शान्तरात्रादायुष्मतां कथाः कीर्तयन्तो माङ्गल्यानीतिहासपुराणानी-

त्याख्यापयमानाः ६ उपरतेषु शब्देषु सम्प्रविष्टेषु वा गृहन्निवेशनं वा दक्षिणद्वारपक्षात्प्रक्रम्याविच्छिन्नामुदकधारां हरेत्तन्तुन्तन्वन्रजसोभानुमन्विहीत्युत्तरस्मात् ७ अथाग्निमुपसमाधाय पश्चादस्यानडुहञ्चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नमात्यानारोहयेदारोहतायुर्जरसं वृणाना इति ८ इमं जीवेभ्यः परिधिं दधामीति परिधिं परिदध्यात् ९ अन्तर्मृत्युन्दधतां पर्वतेनेत्यश्मानमित्युत्तरतोऽग्नेः कृत्वा परं मृत्यो अनु परेहि पन्थामिति चतसृभिः प्रत्यृचं हुत्वा यथाहान्यनुपूर्वं भवन्तीत्यमात्यानीक्षेत १० युवतयः पृथक्पाणिभ्यां दर्भतरुणकैर्नवनीतेनाङ्गुष्ठोपकनिष्ठिकाभ्यामक्षिणी आज्य पराच्यो विसृजेयुः ११ इमा नारीरविधवाः सुपत्नीरित्यञ्जाना ईक्षेत १२ अश्मन्वतीरीयते संरभध्वमित्यश्मानङ्कर्ता प्रथमोऽभिमृशेत् १३ अथापराजितायान्दिश्यवस्थायाग्निनानडुहेन गोमयेन चाविच्छिन्नया चोदकधारयापो हि ष्ठा मयोभुव इति तृचेन परीमे गामनेषतेति परिक्रामत्सु जपेत् १४ पिङ्गलोऽनड्वान्परिणेयः स्यादित्युदाहरन्ति १५ अथोपविशन्ति यत्राभिरंस्यमाना भवत्यहतेन वाससा प्रच्छाद्य १६ आसतेऽस्वपन्त ओदयात् १७ उदित आदित्ये सौर्याणि स्वस्त्ययनानि च जपित्वान्नं संस्कृत्याप नः शोशुचदघमिति प्रत्यृचं हुत्वा ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयीत गौः कंसोऽहतं वासश्च दक्षिणा १८
६

अथातः पार्वणे श्राद्धे काम्य आभ्युदयिक एकोद्दिष्टे वा १ ब्राह्मणान्श्रुतशीलवृत्तसम्पन्नानेकेन वो काले ज्ञापितान्स्नातान्कृतपच्छौचानाचान्तानुदङ्मुखान् पितृवदुपवेश्यैकैकमेकैकम्य द्वौद्वौ त्रींस्त्रीन्वा वृद्धौ फलभूयस्त्वं न त्वेवैकं सर्वेषाम् २ काममनाद्ये ३ पिण्डैर्व्याख्यातम् ४ अपः प्रदाय ५ दर्भान्द्विगुणभुग्नानासनं प्रदाय ६ अपः प्रदाय ७ तैजसाश्ममयमृण्मयेषु त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वप आसिच्य शन्नो देवीरभिष्टय इत्यनुमन्त्रितासु तिलानावपति तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः स्वधया पितृनिमाँल्लोकान्प्रीणयाहि नः स्वधा नम इति ८ प्रसव्येन ९ इतरपाण्यङ्गुष्ठान्तरेणोपवीतित्वाद्दक्षिणेन वा सव्योपगृहीतेन पितरिदं ते अर्घ्यं पितामहेदं ते अर्घ्यं प्रपितामहेदं ते अर्घ्यमिति १० अप्पूर्वम् ११ ताः प्रतिग्राहयिष्यन्सकृत्सकृत्स्वधा अर्घ्या इति १२ प्रसृष्टा अनुमन्त्रयेत या दिव्या आपः पृथिवी सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः ।

हिरण्यवर्णा यज्ञियास्ता न आपः शंस्योना भवन्त्विति संस्रवान्समवनीय-ताभिरद्भिः पुत्रकामो मुखमनक्ति १३

नोद्धरेत्प्रथमं पात्रं पितृणामर्घ्यपातितम्
आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत्

उद्धरेद्यदि चेत्पात्रं विवृतं वा यदा भवेत्
तदासुरं भवेच्छ्राद्धं क्रुद्धैः पितृगणैर्गतैः इति १४ ७

एतस्मिन्काले गन्धमाल्यधूपदीपाच्छादनानां प्रदानम् १ उद्धृत्य घृताक्तमन्नमनुज्ञापयत्यग्नौ करिष्ये करवै करवाणीति वा २ प्रत्यभ्यनुज्ञा क्रियतां कुरुष्व कुर्विति ३ अथाग्नौ जुहोति यथोक्तं पुरस्तात् ४ अभ्यनुज्ञायां पाणिष्वेव वा ५ अग्निमुखा वै देवाः पाणिमुखाः पितर इति हि ब्राह्मणम् ६ यदि पाणिष्वाचान्तेष्वन्यदन्नमनुदिशति ७ अन्नमन्ने ८ सृष्टं दत्तमृध्नुकमिति ९ तृप्तान्ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमीमदन्तेति च १० सम्पन्नमिति पृष्ट्वा यद्यदन्नमुपयुक्तं तत्तत्स्थालीपाकेन सह पिण्डार्थमुद्धृत्य शेषं निवेदयेत् ११ अभिमतेऽनुमते वा भुक्तवत्स्वनाचान्तेषु पिण्डान्निदध्यात् १२ आचान्तेष्वेके १३ प्रकीर्यान्नमुपवीयों स्वधोच्यतामिति विसृजेत् १४ अस्तु स्वधेति वा १५ ८

अथ शूलगवः १ शरदि वसन्ते वार्द्रया २ श्रेष्ठं स्वस्य यूथस्य ३ अकुष्ठिपृषत् ४ कल्माषमित्येके ५ कामं कृष्णमालोहवांश्चेत् ६ व्रीहियवमतीभिरद्भिरभिषिच्य ७ शिरस्त आभसत्तः ८ रुद्राय महादेवाय जुष्टो वर्धस्वेति ९ तं वर्धयेत्सम्पन्नदन्तमृषभं वा १० यज्ञियायां दिशि ११ असन्दर्शने ग्रामात् १२ ऊर्द्ध्वमर्धरात्रात् । उदित इत्येके १३ वैद्यं चरित्रवन्तं ब्रह्माणमुपवेश्य सपलाशामार्द्रशाखां यूपं निखाय व्रतत्यौ कुशरज्जू वा रशने अन्यतरया यूपं परिवीयान्यतरयार्धशिरसि पशुं बध्वा यूपे रशनायां वा नियुनक्ति यस्मै नमस्तस्मै त्वा जुष्टं नियुनज्मीति १४ प्रोक्षणादि समानं पशुना विशेषान्वक्ष्यामः १५ पात्र्या पलाशेन वा वपां जुहुयादिति ह विज्ञायते १६ हराय मृडाय शर्वाय शिवाय भवाय महादेवायोग्राय भीमाय पशुपतये रुद्राय शङ्करायेशानाय स्वाहेति १७ षड्भिर्वोत्तरैः १८ रुद्राय

स्वाहेति वा १९ चतसृषुचतसृषु कुशसूनासु चतसृषु दिक्षु बलिं हरेद्यास्ते रुद्र पूर्वस्यां दिशि सेनास्ताभ्य एनं नमस्ते अस्तु मा मा हिंसीरित्येवं प्रतिदिशं त्वादेशनम् २० चतुर्भिः सूक्तैश्चतस्रो दिश उपतिष्ठेत कद्रुद्रायेमा रुद्रायाते पितरिमा रुद्राय स्थिरधन्वन इति २१ सर्वरुद्रयज्ञेषु दिशामुपस्थानम् २२ तुषान् फलीकरणांश्च पुच्छञ्चर्मशिरः पादानित्यग्नावनुप्रहरेत् २३ भोगं चर्मणा कुर्वीतेति शांवत्यः २४ उत्तरतोऽग्नेर्दर्भवीतासु कुशसूनासु वा शोणितं निनयेच्छ्वासिनीर्घोषिणीर्विचिन्वतीः समश्नुतीः सर्पा एतद्वोऽत्र तद्धरध्वमिति २५ अथोदङ्ङावृत्य श्वासिनीर्घोषिणीर्विचिन्वतीः समश्नुतीः सर्पा एतद्वोऽत्र तद्धरध्वमिति सर्पेभ्यो यत्तत्रासृगूवध्यं वावस्रुतं भवति तद्धरन्ति सर्पाः २६ सर्वाणि ह वा अस्य नामधेयानि २७ सर्वाः सेनाः २८ सर्वाण्युच्छ्रयणानि २९ इत्येवंविद्यजमानं प्रीणाति ३० नास्य ब्रुवाणं च न हिनस्तीति विज्ञायते ३१ नास्य प्राश्नीयात् ३२ नास्य ग्राममाहरेयुरभिमारुको हैष देवः प्रजा भवतीति ३३ अमात्यानन्ततः प्रतिषेधयेत् ३४ नियोगात्तु प्राश्नीयात्स्वस्त्ययन इति ३५ स शूलगवो धन्यो लोक्यः पुण्यः पुत्र्यः पशव्य आयुष्यो यशस्यः ३६ इष्ट्वान्यमुत्सृजेत् ३७ नानुत्सृष्टः स्यात् ३८ न हापशुर्भवतीति विज्ञायते ३९ शन्तातीयं जपन्गृहानियात् ४० पशूनामुपताप एतमेव देवं मध्ये गोष्ठस्य यजेत् ४१ स्थालीपाकं सर्वहुतम् ४२ बर्हिराज्यञ्चानुप्रहृत्य धूमतो गा आनयेत् ४३ शन्तातीयं जपन्पशूनां मध्यमियान्मध्यमियात् ४४ नमः शौनकाय नमः शौनकाय ४५ ९

इति चतुर्थोऽध्यायः

आश्वलायनगृह्यसूत्रं समाप्तम्

# खादिर गृह्य सूत्रम्
## द्राह्यायणगृह्यसूत्रम्

अथातो गृह्या कर्माणि १ उदगयनपूर्वपक्षपुण्याहेषु प्रागावर्तनादह्नः कालोऽनादेशे २ अपवर्गे यथोत्साहं ब्राह्मणानाशयेत् ३ यज्ञोपवीतम् ४ सौत्रम् ५ कौशं वा ६ ग्रीवायां प्रतिमुच्य दक्षिणं बाहुमुद्धृत्य यज्ञोपवीती भवति ७ सव्यं प्राचीनावीती ८ त्रिराचम्यापो द्विः परिमृजीत ९ पादावभ्युक्ष्य शिरोऽभ्युक्षेत् १० इन्द्रियाण्यद्भिस्संस्पृशेत् ११ अन्ततः प्रत्युपस्पृश्य शुचिर्भवति १२ आसनस्थानसंवेशनान्युदगग्रेषु दर्भेषु १३ प्राङ् मुखस्य प्रतीयात् १४ पश्चादग्नेर्यत्र होमस्स्यात् १५ सहशिरसं स्नानशब्दे १६ दक्षिणेन पाणिना कृत्यमनादेशे १७ मन्त्रान्तमव्यक्तं परस्यादिग्रहणेन विद्यात् १८ स्वाहान्ता मन्त्रा होमेष १९ पाकयज्ञ इत्याख्या यः कश्चैकाग्नौ २० तत्रर्त्विग्ब्रह्मा सायंप्रातर्होमवर्जम् २१ स्वयं हौत्रम् २२ दक्षिणतोऽग्नेरुदङ्मुखस्तूष्णीमास्ते ब्रह्माऽऽहोमात्प्रागग्रेषु २३ कामं त्वधियज्ञं व्याहरेत् २४ अयज्ञियां वा व्याहृत्य महाव्याहृतीर्जपेत् २५ इदं विष्णुरिति वा २६ हौत्रब्रह्मत्वे स्वयं कुर्वन् ब्रह्मासनमुपविश्य छत्रमुत्तरासङ्गं कमण्डलुं वा तत्र कृत्वाऽथान्यत्कुर्यात् २७ अव्यावृत्तिं यज्ञाङ्गैरव्यवायं चेच्छेत् २८

इति प्रथमः खण्डः १

पूर्वे भागे वेश्मनो गोमयेनोपलिप्य तस्य मध्यदेशे लक्षणं कुर्यात् १ दक्षिणतः प्राचीं लेखामुल्लिख्य २ तदारम्भादुदीचीं तदवसानात्प्राचीं तिस्रो मध्ये प्राचीः ३ तदभ्युक्ष्य ४ अग्निमुपसमाधाय ५ इमं स्तोममिति परिसमूह्य तृचेन ६ पश्चादग्नेर्भूमौ न्यञ्चौ पाणी कृत्वेदं भूमेरिति ७ वस्वन्तं रात्रौ ८ पश्चाद्दर्भानास्तीर्य दक्षिणतः प्राचीं प्रकर्षेदुत्तरतश्च ९ अप्रकृष्य वा १० पूर्वोपक्रमं प्रदक्षिणमग्निं स्तृणुयान्मूलान्यग्रैश्छादयंस्त्रिवृतं पञ्चवृतं वा ११ उपविश्य दर्भाग्रे प्रादेशमात्रे प्रच्छिनत्ति न नखेन पवित्रे स्थो वैष्णव्याविति १२ अद्भिरुन्मृज्य विष्णोर्मनसा पूते स्थ इति १३ उदगग्रे अङ्गुष्ठाभ्यामनामिकाभ्यां च सङ्गृह्य त्रिराज्यमुत्पुनाति देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिरिति १४ अभ्युक्ष्यैते अग्नावनुप्रहरेत् १५ आज्यमधि-

श्रित्योत्तरतः कुर्यात् १६ दक्षिणजान्वक्तो दक्षिणेनाग्निमदितेऽनुमन्यस्वेत्युद- काञ्जलिं प्रसिञ्चेत् १७ अनुमतेऽनुमन्यस्वेति पश्चात् सरस्वत्यनुमन्यस्वेत्युत्तरतः १८ देव सवितः प्रसुवेति प्रदक्षिणमग्निं पर्युक्षेदभिपरिहरन् हव्यम् १९ सकृ- त्त्रिर्वा २० समिधमाधाय २१ प्रपदं जपित्वोपताम्य कल्याणं ध्यायन् वैरू- पाक्षमारभ्योच्छ्वसेत् २२ प्रतिकामं काम्येषु २३ सर्वत्रैतद्धोमेषु कुर्यात् २४

इति द्वितीयः खण्डः

ब्रह्मचारी वेदमधीत्योपन्याहृत्य गुरवेऽनुज्ञातो दारान् कुर्वीत १ आप्लवनं च २ तयोराप्लवनं पूर्वम् ३ मन्त्राभिवादात्तु पाणिग्रहणस्य पूर्वं व्याख्यातम् ४ ब्राह्मणस्सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं गत्वोदङ् मुखस्तिष्ठेत् ५ स्नातामहतेनाच्छाद्य या अकृन्तन्नित्यानीयमानायां पाणिग्राहो जपेत् सोमोऽददिति ६ पाणिग्राहस्य दक्षिणत उपवेशयेत् ७ अन्वारब्धायां स्रुवेणोपघातं महाव्याहृतिभिराज्यं जुहुयात् ८ समस्ताभिश्चतुर्थीम् ९ एवं चौलोपनयनगोदानेषु १० अग्निरेतु प्रथम इति षड्भिश्च पाणिग्रहणे ११ नाज्यभागौ न स्विष्टकृदाज्याहुतिष्वनादेशे १२ सर्वत्रोपरिष्टान्महाव्याहृतिभिः १३ प्राजापत्यया च १४ प्रायश्चित्तं जुहुयात् १५ हुत्वोपोत्तिष्ठतः १६ अनुपृष्ठं गत्वा दक्षिणतोऽवस्थाय वध्वञ्जलिं गृह्णीयात् १७ पूर्वा माता शमीपलाशमिश्राँल्लाँजाञ्छूर्पे कृत्वा १८ पश्चादग्नेर्दृषत्पुत्रमाक्रमयेद्वधूं दक्षिणेन प्रपदेनेममश्मानमिति १९ सकृद्गृहीतमञ्जलिं लाजानां वध्व- ञ्जलावावपेद् भ्राता २० सुहृद्वा कश्चित् २१ तं साऽग्नौ जुहुयादविच्छिद्याञ्जलिं इयं नारीति २२ अर्यमणं पूषणमित्युत्तरयोः २३ हुते तेनैव गत्वा प्रदक्षिणमग्निं परिणयेत् कन्यला पितृभ्य इति २४ अवस्थानप्रभृत्येवं त्रिः २५ शूर्पेण शिष्टानग्नावोप्य प्रागुदीचीमुत्क्रमयेत् एकमिष इति २६ ईक्षकावेक्षणरथा- रोहणदुर्गानुमन्त्रणान्यभिरूपाभिः २७ अपरेणाग्निमौदको गत्वा पाणिग्राहं मूर्धन्यवसिञ्चेत् २८ बधूं च २९ समञ्जन्त्वित्यवसिक्तः ३० दक्षिणं पाणिं साङ्गुष्ठं गृह्णीयात् गृभ्णामि त इति षड्भिः ३१

इति तृतीयः खण्डः

प्रागुदीचीमुद्वहेत् १ ब्राह्मणकुलेऽग्निमुपसमाधाय पश्चादग्नेर्लोहितं चर्मानडु-

हमुत्तरलोम प्राग्ग्रीवमास्तीर्य वाग्यतामुपवेशयेत् २ प्रोक्ते नक्षत्रेऽन्वारब्धायां स्रुवेणोपघातं जुहुयात् षड्भिर्लेखाप्रभृतिभिस्सम्पातानवनयन् मूर्धनि वध्वाः ३ प्रदक्षिणमग्निं परिक्रम्य ध्रुवं दर्शयति ध्रुवाद्यौरिति ४ अभिवाद्य गुरून् गोत्रेण विसृजेद्वाचम् ५ गौर्दक्षिणा ६ अत्रार्घ्यम् ७ आगतेष्वित्येके ८ त्रिरात्रं क्षारलवणे दुग्धमिति वर्जयन्तौ सह शयीयातां ब्रह्मचारिणौ ९ हविष्य-मन्नं परिजप्यान्नपाशेनेत्यसाविति वध्वा नाम ब्रूयात् १० भुक्त्वोच्छिष्टं वध्वै दद्यात् ११ ऊर्ध्वं त्रिरात्राच्चतसृभिराज्यं जुहुयात् अग्ने प्रायश्चित्तिरिति समस्त-पञ्चमीं सम्पातानवनयन्नुदपात्रे १२ तेनैनां सकेशनखामाप्लावयेत् १३ ततो यथार्थं स्यात् १४ ऋतुकाले दक्षिणेन पाणिनोपस्थमालभेद्विष्णुर्योनिं कल्प-यत्विति समाप्तायाम् १५ सम्भवेद्गर्भं धेहीति १६

इति चतुर्थः खण्डः

यस्मिन्नग्नौ पाणिं गृह्णीयात्स गृह्यः १ यस्मिन्वाऽन्त्यां समिधमादध्यात् २ निर्मन्थ्यो वा पुण्यस्सोऽनर्धुकः ३ अम्बरीषाद्वाऽऽनयेत् ४ वहुयाजिनो वाऽगाराच्छूद्रवर्जम् ५ सायमाहुत्युपक्रमं परिचरणम् ६ प्रागस्तमयोद-याभ्यां प्रादुष्कृत्य ७ अस्तमिते होमः ८ उदिते चानुदिते वा ९ हवि-ष्यस्यान्नस्याकृतं चेत् प्रक्षाल्य जुहुयात्पाणिना १० दधि चेत्पयो वा कंसेन ११ चरुस्थाल्या वा १२ अग्नये स्वाहेति मध्ये १३ तूष्णीं प्रागुदीचीमुत्त-राम् १४ सूर्यायेति प्रातः पूर्वाम् १५ नात्र परिसमूहनादीनि पर्युक्षणवर्जम् १६ पत्नी जुहुयादित्येके १७ गृहाः पत्नी गृह्योऽग्निरेष इति १८ सिद्धे सायंप्रातर्भूतमित्युक्त ओमित्युच्चैर्ब्रूयात् १९ माक्षा नमस्त इत्युपांशु २० हविष्यस्यान्नस्य जुहुयात् प्राजापत्यं सौविष्टकृतं च २१ बलीन्नयेत् २२ बहिरन्तर्वा चतुर्निधाय २३ मणिकदेशे २४ मध्ये २५ द्वारि २६ श-य्यामनु २७ वर्चं वा २८ अथ सस्तूपम् २९ एकैकमुभयतः परिषिञ्चेत् ३० शेषमद्भिस्सार्धं दक्षिणा निनयेत् ३१ फलीकरणानामपामाचामस्येति विश्राणिते ३२ पृथिवी वायुः प्रजापतिर्विश्वेदेवा आप ओषधिवनस्पतय आकाशः कामो मन्युर्वा रक्षोगणाः पितरो रुद्र इति वलिदैवतानि ३३ तू-ष्णीं तु कुर्यात् ३४ सर्वस्य त्वन्नस्यैतत्कुर्यात् ३५ असकृच्चेदेकस्मिन् का-ले सिद्धे सकृदेव कुर्यात् ३६ बहुधा चेद्यद्गृहपतेः ३७ सर्वस्य त्वन्नस्या-

ग्नौ कृत्वाग्रं ब्राह्मणाय दत्वा स्वयं कुर्यात् ३८ व्रीहिप्रभृत्या यवेभ्यो यवेभ्यो वाव्रीहिभ्यः स्वयं हरेत् स्वयं हरेत् ३९

इति पञ्चमः खण्डः

इति प्रथमः पटलः

पौर्णमासोपक्रमौ दर्शपूर्णमासौ १ दार्शं चेत्पूर्वमुपपद्येत पौर्णमासेनेष्ट्वाऽथ तत्कुर्यात् २ अकुर्वन् पौर्णमासीमाकाङ्क्षेदित्येके ३ अपराह्णे स्नात्वौपवसथिकं दम्पती भुञ्जीयाताम् ४ मानतन्तव्य उवाच श्रेयसीं प्रजां विन्दते काम्यो भवत्यक्षोधुकी क्षोधुको य औपवसथिकं भुङ्क्ते ५ तस्माद्यत्कामयेत तद्भुञ्जीत ६ नाव्रत्यमाचरेत् ७ प्रातराहुतिं हुत्वा ८ हविनिर्निर्वपेदमुष्मै त्वा जुष्टं निर्वपामीति देवताश्रयं सकृद्यजुर्वा द्विस्तूष्णीम् ९ त्रिर्देवेभ्यः प्रक्षालयेत् १० द्विर्मनुष्येभ्यः ११ सकृत्पितृभ्यः १२ मेक्षणेन प्रदक्षिणमुदायुवं श्रपयेत् १३ शृतमभिघार्योदगुद्वास्य प्रत्यभिघारयेत् १४ सर्वाण्येवं हवींषि १५ बर्हिष्यासाद्य १६ आज्यभागौ जुहुयाच्चतुर्गृहीतमाज्यं गृहीत्वा पञ्चावत्तं भृगूणां जामदग्न्यानामग्नये स्वाहेत्युत्तरतस्सोमायेति दक्षिणतः १७ विपरीतमितरे १८ आज्यमुपस्तीर्य हविषोऽवद्येन्मेक्षणेन मध्यात्पुरस्तादिति १९ पश्चाच्च पञ्चावत्ती २० अभिघार्य प्रत्यनक्त्यवदानस्थानानि २१ न स्विष्टकृतः २२ अमुष्मै स्वाहेति जुहुयाद्यद्देवत्यं स्यात् २३ स्विष्टकृतस्सकृदुपस्तीर्य द्विर्भृगूणां सकृद्धविषो द्विरभिघार्याग्नये स्विष्टकृते स्वाहेति प्रागुदीच्यां जुहुयात् २४ समिधमाधाय २५ दर्भानाज्ये हविषि वा त्रिरवधायाग्रमध्यमूलान्यक्तं रिहाणा वियन्तु वय इत्यभ्युक्ष्याग्नावनुमहरेद् यः पशूनामधिपती रुद्रस्तन्तिचरो वृषा पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहेति २६ तद्यज्ञवास्तु २७ सर्वत्र कुर्यात् २८ हविरुच्छिष्टमुदगुद्वास्य ब्रह्मणे दद्यात् २९ पूर्णपात्रं दक्षिणा ३० यथोत्साहं वा ३१

इति प्रथमः खण्डः

आग्नेयस्थालीपाकोऽनाहिताग्नेर्दर्शपूर्णमासयोः १ अग्नीषोमीयः पौर्णमास्यामाहिताग्नेः २ ऐन्द्रो माहेन्द्रो वैन्द्राग्नो वाऽमावास्यायाम् ३ यथा वानाहिताग्नेः ४ सर्वमहः प्रातराहुतेस्स्थानम् ५ रात्रिस्सायमाहुतेः ६ सर्वो-

ऽपरपक्षः पौर्णमासस्य ७ पूर्वपक्षो दार्शस्य ८ अभोजनेन संतनुयादित्येके ९ अविद्यमाने हव्ये यज्ञियानां फलानि जुहुयात् १० पलाशानि वा ११ अपो वा १२ हुतं हि १३ प्रायश्चित्तमहुतस्य १४ आज्यं जुहुयाद्धविषो-ऽनादेशे १५ देवता मन्त्रानादेशे १६ प्रथमगर्भे तृतीये मासि पुंसवनम् १७ स्नातामहतेनाच्छाद्य हुत्वा पतिः पृष्ठतस्तिष्ठेत् १८ दक्षिणमंसमन्ववमृश्यान-न्तर्हितं नाभिदेशमभिमृशेत्पुमांसाविति १९ अथापरं न्यग्रोधशुङ्गामुभयतः-फलामस्रामामक्रिमिपरिसृप्तां त्रिस्सप्तैर्यवैः परिक्रीयोत्थापयेन्माषैर्वा सर्वत्रौ-षधयस्सुमनसो भूत्वाऽस्यां वीर्यं समाधत्तेयं कर्म करिष्यतीति २० आहृत्य वैहायसीं कुर्यात् २१ कुमारी ब्रह्मचारी व्रतवती वा ब्राह्मणी पेषयेदप्रत्या-हरन्ती २२ स्नातां संवेश्य दक्षिणे नासिकास्त्रोतस्यासिञ्चेत् पुमानग्निरिति २३ अथास्याश्चतुर्थे मासि षष्ठे वा सीमन्तोन्नयनम् २४ स्नातामहतेनाच्छाद्य हुत्वा पतिः पृष्ठतस्तिष्ठन्ननुपूर्वया फलवृक्षशाखया सकृत्सीमन्तमुन्नयेत् त्रिश्वेतया च शलल्याऽयमूर्जावतो वृक्ष इति २५ कृसरः स्थालीपाकः २६ उत्तरघृतमवे-क्षन्तीं पृच्छेत किं पश्यसीति २७ प्रजामिति वाचयेत् २८ प्रतिष्ठिते वस्तौ सोष्यन्तीहोमः २९ या तिरश्चीति द्वाभ्याम् ३० असाविति नाम दध्यात् ३१ तद्गुह्यम् ३२ प्राङ्नाभिकृन्तनात् स्तनदानाच्च व्रीहियवौ पेषयेच्छुङ्गावृता ३३ अङ्गुष्ठेनानामिकया चादाय कुमारं प्राशयेदियमाज्ञेति ३४ सर्पिश्च मेधां त इति ३५

इति द्वितीयः खण्डः

जननाज्ज्यौत्स्ने तृतीये तृतीयायां प्रातः स्नाप्य कुमारमस्तमिते शान्तासु दिक्षु पिता चन्द्रमसमुपतिष्ठेत् प्राञ्जलिः १ शुचिनाऽऽच्छाद्य माता प्रयच्छेदुद-क्छिरसम् २ अनुपृष्ठं गत्वोत्तरतस्तिष्ठेत् ३ यत्ते सुसीम इति तिसृभिरुप-स्थायोदञ्चं मात्रे प्रदाय यदद इत्यपामञ्जलिमवसिञ्चेत् ४ द्विस्तूष्णीम् ५ जननादूर्ध्वं दशरात्राच्छतरात्रात्संवत्सराद्वा नाम कुर्यात् ६ स्नाप्य कुमारं करिष्यत उपविष्टस्य शुचिनाऽऽच्छाद्य माता प्रयच्छेदुदक्छिरसम् ७ अ-नुपृष्ठं गत्योत्तरत उपविशेत् ८ हुत्वा कोसीति तस्य मुख्यान् प्राणानभिमृ-शेत् ९ असाविति नाम कुर्यात्तदेव मन्त्रान्ते १० मात्रे ११ प्रथममाख्याय १२ विप्रोष्यङ्गादङ्गादिति पुत्रस्य मूर्धानं परिगृह्णीयात् १३ पशूनां त्वेत्यभि-जिघ्रेत्

१४ तूष्णीं स्त्रियाः १५ तृतीये वर्षे चौलम् १६ तत्र नापित उ-ष्णोदकमादर्शः क्षुरो वौदुम्बरः पिञ्जूल्य इति दक्षिणतः १७ आनडुहो गो-मयः कृसरस्स्थालीपाको वृथापक्व इत्युत्तरतः १८ माता च कुमारमादाय १९ हुत्वाऽयमागादिति नापितं प्रेक्षेत्सवितारं ध्यायन् २० उष्णेनेत्युष्णोदकं प्रेक्षेद्वायुं ध्यायन् २१ आप इत्युन्देत् २२ विष्णोरित्यादर्शं प्रेक्षेदौदुम्बरं वा २३ ओषध इति दर्भपिञ्जूलीस्सप्तोर्ध्वाग्रा अभिनिधाय २४ स्वधित इत्यादर्शेन क्षुरेणौदुम्बरेण वा २५ येन पूषेति दक्षिणतस्त्रिः प्राञ्चं प्रोहेत् २६ सकृदायसेन प्रच्छिद्यानडुहे गोमये केशान् कुर्यात् २७ उन्दनप्रभृन्येवं प-श्चादुत्तरतश्च २८ त्र्यायुषमिति पुत्रस्य मूर्धानं परिगृह्य जपेत् २९ उदङ्ङु-त्सृप्य कुशली कारयेद्यथागोत्रकुलकल्पम् ३० अरण्ये केशान्निखनेयुः ३१ स्तम्बे निदधत्येके ३२ गौर्दक्षिणा ३३

इति तृतीयः खण्डः

अष्टमे वर्षे ब्राह्मणमुपनयेत् १ तस्या षोडशादनतीतः कालः २ एकादशे क्षत्रियम् ३ तस्या द्वाविंशात् ४ द्वादशे वैश्यम् ५ तस्या चतुर्विंशात् ६ कुशलीकृतमलंकृतमहतेनाच्छाद्य हुत्वाऽग्ने व्रतपत इति ७ उत्तरतोऽग्नेः प्रत्यङ्मुखमवस्थाप्याञ्जलिं कारयेत् ८ स्वयं चोपरि कुर्यात् ९ दक्षिणत-स्तिष्ठन्मन्त्रवान् ब्राह्मण आचार्यायोदकाञ्जलिं पूरयेत् १० आगन्त्रेति जपेत् प्रेक्षमाणे ११ को नामासीत्युक्तो देवताश्रयं नक्षत्राश्रयं वाऽभिवादनीयं नाम ब्रूयादसावस्मीति १२ उत्सृज्यापो देवस्य त इति दक्षिणोत्तराभ्यां हस्ता-भ्यामञ्जलिं गृह्णीयादाचार्यः १३ सूर्यस्येति प्रदक्षिणमावर्तयेत् १४ दक्षि-णमंसमन्ववमृश्यानन्तर्हितां नाभिमालभेत्प्राणानामिति १५ अथैनं परिद-द्यादन्तकप्रभृतिभिः १६ दक्षिणमंसं प्रजापतये त्वेति १७ सव्येन सव्यं देवाय त्वेति १८ ब्रह्मचार्यसीति १९ संप्रेष्योपविश्य दक्षिणजान्वक्तमञ्जलिकृतं प्रदक्षिणं मुञ्जमेखलामावध्नन्वाचयेदियं दुरुक्तादिति २० अधीहि भो इत्युपसीदेत् २१ तस्मा अन्वाह सावित्रीं पच्छोऽर्धर्चशस्सर्वामिति सावित्रीं वाचयेत् २२ महाव्याहृतीश्चैकैकशः २३ ओंकारं च २४ प्रयच्छत्यस्मै वार्क्षं दण्डम् २५ सुश्रवस्सुश्रवसं मेति २६ समिधमादध्यादग्नये समिधमिति २७ भैक्षं चरेत् २८ मातरमग्रे २९ अथान्यास्सुहृदः ३० आचार्याय भैक्षं

निवेदयेत् ३१ तिष्ठेदाऽस्तमयात्तूष्णीं ३२ त्रिरात्रं क्षारलवणदुग्धमिति वर्जयेत् ३३

इति चतुर्थः खण्डः

गोदाने चौलवत्कल्पः १ सलोमं वापयेत् २ गोऽश्वाविमिथुनानि दक्षिणाः पृथग्वर्णानाम् ३ सर्वेषां वा गौः ४ अजः केशप्रतिग्रहाय ५ उक्तमुपनयनम् ६ नाचरिष्यन्तं संवत्सरम् ७ अनियुक्तं त्वहतम् ८ तथालङ्कारः ९ अधस्संवेशी १० अमधुमांसाशी स्यात् ११ मैथुनक्षुरकृत्यस्नानावलेखनदन्तधावनपादधावनानि वर्जयेत् १२ नास्य कामे रेतस्स्कन्देत् १३ न गोयुक्तमारोहेत् १४ न ग्राम उपानहौ १५ मेखलाधारणभैक्षचर्यदण्डसमिदाधानोपस्पर्शनप्रातरभिवादा नित्यम् १६ गोदानव्रातिकादित्यव्रतौपनिषदज्येष्ठसामिकास्संवत्सराः १७ नादित्यव्रतमेकेषाम् १८ ये चरन्त्येकवाससो भवन्ति १९ आदित्यं च नान्तर्दधते २० नाचापोऽभ्युपयन्ति २१ शक्वरीणां द्वादश नव षट्त्रय इति विकल्पाः २२ कृष्णवस्त्रः २३ कृष्णभक्षः २४ आचार्याधीनः २५ तिष्ठेद्दिवा २६ आसीत नक्तम् २७ संवत्सरमेकेषां पूर्वैः श्रुताश्चेत् २८ उपोषिताय परिणद्धाक्षायानुगापयेत् २९ यथा मा न प्रधक्ष्यतीति तं प्रातरभिवीक्षयन्ति यान्यप्रधक्ष्यन्ति मन्यन्तेऽपोऽग्निं वत्समादित्यम् ३० अपोऽभिव्यख्यमित्यपो ज्योतिरभिव्यख्यमित्यग्निं पशूनभिव्यख्यमिति वत्सं सुरभिव्यख्यमित्यादित्यं विसृजेद्वाचम् ३१ गौर्दक्षिणा ३२ कंसो वासो रुक्मश्च ३३ अनुप्रवचनीयेष्वृचं साम सदसस्पतिमिति चाज्यं जुहुयात् ३४ चित्ययूपोपस्पर्शनकर्णक्रोशाक्षिवेपनेषु सूर्याभ्युदितस्सूर्याभिनिर्मुक्त इन्द्रियैश्च पापस्पर्शैः पुनर्मामित्येताभ्यामाहुतिं जुहुयात् ३५ आज्यलिप्ते वा समिधौ ३६ जपेद्वा लघुषु जपेद्वा लघुषु ३७

इति पञ्चमः खण्डः

इति द्वितीयः पटलः

आप्लवने पुरस्तादाचार्यकुलस्य परिवृत आस्ते १ उदङ्मुख आचार्यः प्रागग्रेषु २ एवं ब्रह्मवर्चसकामः ३ गोष्ठे पशुकामः ४ सभायां यशस्कामः ५ सर्वौषधेनापः फाणयेत् ६ सुरभिभिश्च ७ ताभिश्शीतोष्णाभिराचार्योऽभिषिञ्चेत् ८ स्वयं वा मन्त्राभिवादात् ९ उभावित्येके तेनेममित्याचार्यो

ब्रूयात् १० ये अप्स्वित्यपामञ्जलिमवसिञ्चेत् ११ यदपामिति च १२ तू-
ष्णीं च १३ यो रोचन इति गृह्यात्मानमभिषिञ्चेत् १४ येन स्त्रियमिति च १५
तूष्णीं च १६ उद्यन्नित्यादित्यमुपतिष्ठेत् १७ समस्येद्वा १८ विहर-
न्ननुसंहरेच्चक्षुरसीति १९ उदुत्तममिति मेखलामवमुञ्चेत् २० प्राश्यवापये-
च्छिखावर्जं केशश्मश्रुलोमनखानि २१ अलंकृतोऽहतवाससा श्रीरिति स्रजं
प्रतिमुञ्चेत् २२ नेत्र्यौ स्थ इत्युपानहौ २३ वैणवं दण्डमादध्यात् गन्धर्वो-
ऽसीति २४ उपेत्याचार्यं परिषदं प्रेक्षेद्यक्षमिवेति २५ उपबिष्यौष्ठापिधा-
नेति मुख्यान् प्राणानिभिमृशेत् २६ गोयुक्तं रथमालभेत् वनस्पत इति २७
आस्थाता त इत्यारोहेत् २८ प्राचीं प्रयायोदीचीं वा प्रदक्षिणमावर्तयेत् २९
प्रत्यागतायार्घ्यमित्येके ३० वृद्धशीली स्यादत ऊर्ध्वम् ३१ नाजातलो-
म्न्योपहासमिच्छेत् ३२ नायुग्वा ३३ न रजस्वलया ३४ न समानर्ष्या ३५
अपरया द्वारा प्रपन्नद्भिःपक्वपर्युषितानि नाश्नीयात् ३६ अन्यत्र शाक-
मांसयवपिष्टविकारेभ्यः ३७ पायसाच्च ३८ फलप्रचयनोदपानावेक्षणव-
र्षतिधावनोपानत्स्वयंहरणानि न कुर्यात् ३९ नागन्धां स्रजं धारयेन्न चेद्धि-
रण्यस्रक् ४० भद्रमिति न वृथा व्याहरेत् ४१ पुष्टिकामो गाः प्रकालये-
तेमा म इति ४२ प्रत्यागता इमा मधुमतीरिति ४३ पुष्टिकाम एव प्रथम-
जातस्य वत्सस्य प्राङ्मातुः प्रलेहनाल्ललाटमुल्लिह्य निगिरेत् गवामिति ४४
संप्रजातासु गोष्ठे निशायां विलयनं जुहुयात् संग्रहेणेति ४५ अथापरं व-
त्समिथुनवोः कर्णे लक्षणं कुर्यात् भुवनमिति ४६ पुंसोऽग्रे ४७ लोहिते-
नेत्यनुमन्त्रयेत ४८ तन्तीं प्रसारितामियं तन्तीति ४९

इति प्रथमः खण्डः

श्रावण्यां पौर्णमास्यां गृह्यादग्निमतिप्रणीय प्रतिदिशमुपलिम्पेदधिके प्रक्रमे १
सकृद्गृहीतान् सक्तून् दर्व्यां कृत्वा पूर्वोपलिप्ते निनीयापो यः प्राच्यामिति व-
लिं निर्वपेत् २ निनयेदपां शेषम् ३ अप उपस्पृश्यौवं प्रतिदिशं यथालि-
ङ्गम् ४ दक्षिणपश्चिमे अन्तरेणाग्निं च संचरः ५ शूर्पेण शिष्टानग्नावोप्या-
तिप्रणीतादनतिप्रणीतस्यार्धं गत्वा न्यञ्चौ पाणी कृत्वा नमः पृथिव्या इति जपेत्
६ तत उत्थाय सोमो राजेति दर्भस्तम्बमुपस्थाय ७ अक्षतानादाय
प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य जुहुयादञ्जलिना हये राक इति चतसृभिः ८

प्राङुत्क्रम्य जपेद्वसुवन एधीति त्रिस्त्रिः प्रतिदिशमवान्तरदेशेषु च ९ ऊर्ध्वं प्रेक्षन् देवजनेभ्यः १० तिर्यङ्ङितरजनेभ्यः ११ अवाङ्प्रेक्षन् प्रत्येत्यान- वेक्षन्नक्षतान् प्राश्नीयात् १२ श्वोभूतेऽक्षतसक्तून् कृत्वा नवे पात्रे निधाया- स्तमिते बलीन् हरेदाऽऽग्रहायण्याः १३ प्रौष्ठपदीं हस्तेनाध्यायानुपाकुर्युः १४ श्रावणीमित्येके १५ हुत्वोपनयनवत् १६ सावित्रीमनुवाचयेत् १७ सोमं राजानं पर्वादींश्च १८ धाना दधि च प्राश्नीयुरभिरूपाभ्याम् १९ श्वोभूते प्राधीयीरञ्शिष्येभ्यः २० अनुवाक्याः कुर्युर्ऋगादिभिः प्रस्तावैश्च २१ अनुगानं रहस्यानाम् २२ विद्युत्स्तनयित्नुवर्जम् २३ अर्धपञ्चमान्मासानधीत्य पौ- षीमुत्सर्गः २४ तत ऊर्ध्वमभ्रानध्यायः २५ विद्युत्स्तनयित्नुपृषितेषु च २६ त्रिसन्निपाते त्रिसन्ध्यम् २७ अष्टकाममावास्यां चातुर्मासीरुदगयने च पक्षिणीं रात्रीम् २८ सब्रह्मचारिणि च प्रेते २९ उल्कापाते भूमिचले ज्योतिषोश्चोपसर्ग एतेष्वाकालिकं विद्यात् ३० कार्ष्वं तु कठकौथुमाः ३१

इति द्वितीयः खण्डः

आश्वयुजीं रुद्राय पायसः १ मा नस्तोक इति जुहुयात् २ पयस्यवनयेदा- ज्यं तत्पृषातकम् ३ तेनाभ्यागता गा उक्षेदा नो मित्रावरुणेति ४ वत्सांश्च मातृभिस्सह वासयेत् तां रात्रिम् ५ नवयज्ञे पायस ऐन्द्राग्नः ६ शतायु- धायेति चतसृभिराज्यं जुहुयादुपरिष्टात् ७ अग्निः प्राश्नात्विति च ८ त- स्य शेषं प्राश्नीयुर्यावन्त उपेताः ९ उपस्तीर्यापो द्विर्नवस्यावद्येत् १० त्रि- र्भृगूणाम् ११ अपां चोपरिष्टात् १२ भद्रान्न इत्यसंखाद्य प्रगिरेत्त्रिस्त्रिः १३ एतमु त्यमिति वा यवानाम् १४ अमोसीति मुख्यान् प्राणानभिमृशेत् १५ आग्रहायणकर्म श्रावणेन व्याख्यातम् १६ नमः पृथिव्या इति न जपेत् १७ प्रदोषे पायसस्य जुहुयात् प्रथमेति १८ न्यञ्चौ पाणी कृत्वा प्रतिक्षत्र इति जपेत् १९ पश्चादग्नेः स्वस्तरमुदगग्रैस्तृणैरुदक्प्रवणमास्तीर्य तस्मिन्नास्तरणे गृहप- तिरास्ते २० अनुपूर्वमितरे २१ अनन्तरा भार्या पुत्राश्च २२ न्यञ्चौ पाणी कृत्वा स्योनेति गृहपतिर्जपेत् २३ समाप्तायां दक्षिणैः पार्श्वैस्संविशेयुस्त्रिस्त्रिरभ्या- त्ममावृत्य २४ स्वस्त्ययनानि कुर्युः २५ ततो यथार्थं स्यात् २६ ऊर्ध्वमाग्र- हायण्यास्तिस्रस्तामिस्राष्टम्योऽष्टका इत्याचक्षते २७ तासु स्थालीपाकाः २८ अष्टौ चापूपाः प्रथमायाम् २९ तानपरिवर्तयन् कपाले श्रपयेत् ३० उत्तमायां

शाकमन्वाहार्ये ३१ अष्टकायै स्वाहेति जुहुयात् ३२

इति तृतीयः खण्डः

मध्यमायां गौः १ तां पुरस्तादग्नेः प्रत्यङ्मुखीमवस्थाप्य जुहुयाद्यत्पशव इति २ हुत्वा चानुमन्त्रयेतानु त्वेति ३ यवमतीभिरद्भिः प्रोक्षेदष्टकायै त्वा जुष्टं प्रोक्षामीति ४ प्रोक्ष्योल्मुकेन परिहृत्य प्रोक्षणीः पाययेत् ५ उदङ्ङुत्सृप्य प्रत्यक्छिरसमुदक्पदीं संज्ञपयेत् ६ संज्ञप्तायां जुहुयाद्यत्पशुरिति ७ तस्याः पत्नी स्रोतांसि प्रक्षालयेत् ८ पवित्रे अन्तर्धायोत्कृत्य वपामुद्धारयेत् ९ यज्ञियस्य वृक्षस्य विशाखाशाखाभ्यां परिगृह्याग्नौ श्रपयेत् १० प्रसृतायां विशसेत् ११ उक्तमुपस्तरणाभिघारणं यथा स्विष्टकृतः १२ अष्टकायै स्वाहेति जुहुयात् १३ सर्वाङ्गेभ्योऽवदानान्युद्धारयेत् १४ न सव्यात्सक्थ्नः १५ न क्लोम्नः १६ सव्यं सक्थि निधाय १७ पृथङ्क्षणाभ्यामवदानानि स्थालीपाकं च श्रपयित्वा १८ कंसे रसं प्रस्राव्य १९ प्लक्षशाखास्ववदानानि कृत्वा २० एकैकस्मात् कंसेऽवद्येत् २१ स्थालीपाकाच्च २२ चतुर्गृहीतमष्टगृहीतं वात्र जुहुयादग्नाविति २३ कंसात्पराभिर्द्वाभ्यांद्वाभ्यामेकैकामाहुतिम् २४ सौविष्टकृतमष्टम्या २५ वह वपामिति पित्र्ये वपाहोमः २६ जातवेद इति दैवत्ये २७ तदादेशमनाज्ञाते २८ यथाऽष्टकाया इति २९ पशुरेव पशोर्दक्षिणा ३० स्थालीपाकस्य पूर्णपात्रम् ३१

इति चतुर्थः खण्डः

नवमीं दशमीं वान्वष्टक्यम् १ दक्षिणपूर्वभागे परिवार्य तत्रोत्तरार्धे मथित्वाऽग्निं प्रणयेत् २ सकृद्गृहीतान् व्रीहीन् सकृत् फलीकृतान् प्रसव्यमुदायुवं श्रपयेत् ३ अमुष्माच्च सक्थ्नो मांसमिति ४ दक्षिणोद्वास्य न प्रत्यभिघारयेत् ५ पश्चादग्नेर्दक्षिणतस्तिस्रः कर्षूः खन्याच्चतुरङ्गुलमधस्तिर्यक् ६ तासां पुरस्तादग्निं प्रणयेत् ७ स्तृणुयात् ८ कर्षूश्च ९ पश्चादग्नेः स्वस्तरं दक्षिणाग्रैस्तृणैर्दक्षिणाप्रवणमास्तीर्य वृसीमुपरिनिदध्यात् १० तस्मिन्नेकैकमाहरेत् ११ कंसे सम-वदाय मेक्षणेनोपघातं जुहुयात् स्वाहा सोमाय पितृमते स्वाहाऽग्नये कव्यवाहनायेति १२ सव्येनोल्मुकं दक्षिणतः कर्षूषु निदध्यादपहता इति १३ पूर्वस्यां कर्ष्वां पितुः १४ मध्यमायां पितामहस्योत्तमायां प्रपितामहस्य १५

उदपात्राण्यपसलवि कर्षूषु निनयेदेकैकस्य नामोक्त्वासाववनेनिक्ष्व ये चात्र त्वानुयांश्च त्वमनु तस्मै ते स्वधेति १६ तथैव पिण्डान्निधाय जपेदत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति १७ उक्त्वोदङ्ङावर्तेत सव्यं बाहुमुप-संहृत्य प्रसव्यमावृत्य १८ उपताम्य कल्याणं ध्यायन्नभिपर्यावर्तमानो जपेत् अमी मदन्त पितरो यथाभागमावृषायिषतेति १९ तिस्रो दर्भपिञ्जूलीरञ्जने निघृष्य कर्षूषु निदध्याद्यथापिण्डम् २० तैलं सुरभि च २१ पिण्डप्रभृति यथार्थमूहेत् २२ अथ निह्नवनम् २३ पूर्वस्यां कर्ष्वां दक्षिणोत्तानौ पाणी कृत्वा नमो वः पितरो जीवाय नमो वः पितरश्शूषायेति २४ सव्योत्तानौ मध्यमायां नमो वः पितरो घोराय नमो वः पितरो रसायेति २५ दक्षिणोत्तानौ पश्चिमायां नमो वः पितरः स्वधायै नमो वः पितरो मन्यव इति २६ अञ्जलिं कृत्वा नमो व इति २७ सूत्रतन्तून् कर्षूषु निदध्याद्यथापिण्डमेतद्व इति २८ ऊर्जं वहन्तीरिति कर्षूरनुमन्त्रयेत २९ मध्यमं पिण्डं पुत्रकामां प्राशयेदाधत्तेति ३० अभून्नो दूत इत्युल्मुकमग्नौ प्रक्षिपेत् ३१ द्वंद्वं पात्राण्यतिहरेयुः ३२ एष एव पिण्डपितृयज्ञकल्पः ३३ गृह्येऽग्नौ हविः श्रपयेत् ३४ तत एवातिप्रणयेत् ३५ एका कर्षूः ३६ न स्वस्तरः ३७ इन्द्राण्या स्थालीपाकस्यैकाष्टकेति जुहुयात् ३८

इति पञ्चमः खण्डः

इति तृतीय पटलः

काम्येषु षड्भक्तानि त्रीणि वा नाश्नीयात् १ नित्यप्रयुक्तानामादितः २ उपरिष्टात्सान्निपातिके ३ एवं यजनीयप्रयोगेषु ४ अर्धमासव्रती ५ अश-क्तौ पेयमेकं कालम् ६ अरण्ये प्रपदं जपेदासीनः प्रागग्रेषु ७ एवं ब्रह्म-वर्चसकामः ८ यथोक्तं पशुकामः ९ सहस्रबाहुरिति पशुस्वस्त्ययनकामो व्रीहियवौ जुहुयात् १० येनेच्छेत्सहकारं कौतोमतेनास्य महावृक्षफलानि परिजप्य दद्यात् ११ अर्धमासव्रती पौर्णमास्यां रात्रौ नाभिमात्रं प्रगाह्यावि-दासिनि ह्रदेऽक्षततण्डुलानास्येन जुहुयादुदके वृक्ष इवेति पञ्चभिः पार्थिवं कर्म १२ प्रथमयादित्यमुपतिष्ठेद्भोगकामोऽर्थपतौ प्रेक्षमाणे १३ द्वितीययाऽक्ष-ततण्डुलानादित्ये परिविष्यमाणे बृहत्पत्रस्वस्त्ययनकामः १४ तृतीयया च-न्द्रमसि तिलतण्डुलान् क्षुद्रपशुस्वस्त्ययनकामः १५ चतुर्थ्यादित्यमुपस्थाय

गुरुमर्थमभ्युत्तिष्ठेत् १६ पञ्चम्याऽऽदित्यमुपस्थाय गृहानेयात् १७ अन्नकाममारं नित्यं जपेत् भूरिति १८ यजनीये जुहुयान्मूर्ध्नोऽधि म इति षड्भिर्वामदेव्यग्भिर्महाव्याहृतिभिः प्राजापत्यया च १९ अलक्ष्मीनिर्णोदः २० अक्षेमे पथ्यपेहीति जपेत् २१ यशोऽहमित्यात्यिमुपतिष्ठेद् यशस्कामः पूर्वाह्न-मध्यन्दिना पराह्णेषु २२ प्रातरह्नस्येति यथार्थमूहेत् २३ आदित्यनावमिति सन्ध्योपस्थानं स्वस्त्ययनम् २४ उद्यन्तं त्वेति पूर्वां प्रतितिष्ठन्तं त्वेति पश्चिमाम् २५

इति प्रथमः खण्डः

अर्धमासव्रती तामिस्त्रादौ ब्राह्मणानाशयेत् व्रीहिकंसौदनम् १ तस्य कणा-नपरासु सन्ध्यासु प्रत्यग्ग्रामात् स्थण्डिलमुपलिप्य भलायेति जुहुयाद्भल्ला-येति च २ एवमेवापरस्मिंस्तामिस्त्रादौ ३ ब्रह्मवर्यमासमाप्तेः ४ आचि-तशतं भवति ५ गौरे भूमिभागे ब्राह्मणो लोहिते क्षत्रियः कृष्णे वैश्योऽव-सानं जोषयेत् समं लोमशमनिरिणमशुष्कम् ६ यत्रोदकं प्रत्यगुदीचीं प्रव-र्तेत ७ अक्षीरिणः कण्डकिनः कटुकाश्चात्रौषधयो न स्युः ८ दर्भसंमितं ब्रह्मवर्चस्यम् ९ बृहत्तृणैर्बल्यम् १० मृदुतृणैः पशव्यम् ११ यत्र वा स्वयं कृताः श्वभ्रास्सर्वतोऽभिमुखाः स्युः १२ प्राग्द्वारं धन्यं यशस्यं चोदग्द्वारं पुत्र्यं पशव्यं च दक्षिणापश्चिमद्वारे सर्वे कामा अनुद्वारं गेहद्वारम् १३ असंलोकी स्यात् १४ पयसो हविः १५ कृष्णा च गौः १६ अजो वा श्वेतः पायस एव वा १७ मध्ये वेश्मनो वसां पायसं चाज्येन मिश्रमष्टगृहीतं जुहुयाद्वास्तोष्पत इति १८ याश्च पराः १९ सप्तालक्ष्मीनिर्णोदे ताभिश्च २० हुत्वा दिशां बलीन् नयेत् २१ अवान्तरदिशां चोर्ध्वावाचिभ्यां च २२ एवं संवत्सरे संवत्सरे नवयज्ञयोर्वा २३ वशंगमावित्येताभ्यामाहुती जुहुयाद्यमिच्छेद्वशमायान्तं तस्य नाम गृहीत्वाऽसाविति वशी हास्य भवति २४

इति द्वितीयः खण्डः

अर्धमासव्रती पौर्णमास्यां रात्रौ शंकुशतं जुहुयादेकाक्षर्ययायसान्वयकामः १ खादिरानायुष्कामोऽथापरम् २ प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य स्थण्डिलं समूह्य पर्वते वाऽऽरण्यैर्गोमयैस्तापयित्वाऽङ्गारानपोह्यास्येन जुहुयात् ३ द्वादश ग्रामा

ज्वलिते ४ त्र्यवरा धूमे ५ कम्बूकान् सायंप्रातर्जुहुयान्नास्य वृत्तिः क्षीयते ६ इदमहमिममिति पराग्यहोमं जुहुयात् ७ पूर्णहोमं यजनीये जुहुयात् ८ इन्द्रामवदादिति सहायकामः ९ अष्टरात्रोपोषितः प्राङ्वोदङ्वा ग्रामाच्च-तुष्पथे समिद्धयाग्निमौदुम्बर इध्मः स्यात् स्रुवचमसौ च जुहुयादन्नं वा इति श्रीर्वा इति १० ग्रामे तृतीयामन्नस्येति ११ आधिपत्यं प्राप्नोति १२ उपतापिनीषु गोष्ठे पायसं जुहुयात् १३ अक्षेमे पथि वस्त्रदशानां ग्रन्थीन्कुर्यात् सहायिनां च स्वस्त्ययनानि १४ क्षुधे स्वाहेत्येताभ्यामाहुतिसहस्रं जुहुयादाचि-तसहस्रकामः १५ वत्समिथुनयोः पुरीषेण पशुकामोऽविमिथुनयोः क्षुद्रप-शुकामः १६ हरितगोमयेन सायम्प्रातर्जुहुयाद् नास्य वृत्तिः क्षीयते १७

इति तृतीयः खण्डः

विषवता दष्टमद्भिरभ्युक्षन् जपेन्मा भैषीरिति १ स्नातकस्सविशन् वैणवं दण्डमुपनिदध्यात्तुरगोपायेति स्वस्त्ययनम् २ हतस्त इति क्रिमिवन्तं देश-मद्भिरभ्युक्षञ्जपेत् ३ पशूनां चेदपराह्णे सीतालोष्टमाहृत्य तस्य प्रातः पांसुभिः प्रतिष्किरञ्जपेत् ४ मधुपर्कं प्रतिगृहीष्यन्निदमहमिमामिति प्रतितिष्ठन् जपेत् ५ अर्हयत्सु वा ६ विष्टरपाद्यार्घ्याचमनीयमधुपर्काणामेकैकं त्रिर्वेदयन्ते ७ गां च ८ उदञ्चं विष्टरमास्तीर्य या ओषधीरित्यध्यासीत ९ पादयोर्द्वितीयया द्वौ चेत् १० अपः पश्येत् यतो देवीरिति ११ सव्यं पाद-मवसिञ्चेत् सव्यमिति १२ दक्षिणं दक्षिणमिति १३ उभौ शेषेण १४ अ-न्नस्य राष्ट्रिरसीत्यर्घ्यं प्रतिगृह्णीयात् १५ यशोऽसीत्याचमनीयम् १६ यश-सो यशोऽसीति मधुपर्कम् १७ त्रिः पिबेद्यशसो महसः श्रिया इति १८ तूष्णीं चतुर्थम् १९ भूहोऽपिपाय ब्राह्मणायोच्छिष्टं दद्यात् २० गां वेदितामनुमन्त्रयेत मुञ्च गामित्यमुष्य चेत्यर्हयितुर्नामब्रूयात् २१ एवमयज्ञे २२ कुरुतेति यज्ञे २३ आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रिय इति षडर्घ्याः २४ प्रतिसंवत्सरानर्हयेत् २५ पुनर्यज्ञविवाहयोश्च पुनर्यज्ञविवाहयोश्च २६

इति चतुर्थः खण्डः

इति चतुर्थः पटलः

समाप्तं खादिरं गृह्यसूत्रम्

# काठकगृह्यसूत्र

उपनयनप्रभृति व्रतचारी स्यात् १ मार्गवासाः २ संहतकेशः ३ भैक्षा-चार्यवृत्तिः ४ सशल्कदण्डः ५ सप्तमुञ्जां मेखलां धारयेत् ६ न मधुमांसे अश्नीयात् ७ क्षारलवणवर्जी ८ आचार्यस्याप्रतिकूलः ९ सर्वकार्यास्वतन्त्रः १० पूर्वोत्थायी जघन्यसंवेशी ११ यदेनमुपेयात्तदस्मै दद्यात् १२ बहूनां येन संयुक्तः १३ नास्य शय्यामाविशेत् १४ न रथमारुहेत् १५ न संवस्त्रयेत १६ सर्वाणि सांस्पर्शकानि स्त्रीभिः सह वर्जयेत् १७ न मुषितां प्रेक्षेत १८ न विहारार्थं जल्पेत् १९ न रुच्यर्थं किञ्चन धारयेत २० न स्नायात् २१ उदकं वाभ्युपेयात् २२ यदि स्नायाद्दण्ड इवाप्सु परिप्लवेत् २३ मुण्डो जटिलः शिखी वा २४ सायं प्रातः सन्ध्यामुपासीत २५ तिष्ठेत्पूर्वाम् २६ आसीतोत्तराम् २७ ओं भूर्भुवः स्वरित्युक्त्वा तत्सवितुरिति सावित्रीमन्वाह २८ प्रागस्तमयान्निष्क्रम्य समिध आहरेद्धरिणीर्ब्रह्मवर्चसकाम इति श्रुतिः २९ सायं प्रातः सन्ध्यानिःसरणं भैक्षचरणमग्नीन्धनम् ३० सायमेवाग्निमिन्धीतेत्येके ३१ भैक्षस्याचरणे दोषः पावकस्यासमिन्धने सप्तरात्रमकृत्वैतदवकीर्णिव्रतं चरेत् ३२ १

विभूरसीत्यनुवाकेनाग्निमुपस्थायैधोऽसीति समिधमादधाति समिदिति द्विती-यामिदमहमिति तृतीयामिदमहमग्नाविति चतुर्थीम् १ तेजोऽसीत्यग्निमनु-मन्त्रयते तेजो मयि धेहीत्यात्मानं शेषेणोपतिष्ठते २ ततः प्रातः प्रागुदयात् ३ द्वादश चतुर्विंशतिं षट्त्रिंशतमष्टाचत्वारिंशतं वा वर्षाणि यो ब्रह्मचर्यं चरति मलक्षुरबलः कृशः सर्वं स विन्दते स्नात्वा यत्किंचिन्मनसेच्छत्येतेनैव धर्मेण साध्वधीते ४ २

छन्दस्यर्थान्बुद्ध्वा स्नास्यन्गां कारयेदाचार्यमर्हयेत् १ श्रोत्रियोऽन्यो वेदाध्यायी २ न तस्य स्नानम् ३ अथास्य स्नानम् ४ व्रजपरिहितं प्रपाद्य जटाश्मश्रु-लोमनखमभिसंहार्यापो हि ष्ठेति तिसृभिः स्नायाद्धिरण्यवर्णा इति च द्वाभ्यां हिरण्यवर्णाः शुचयाः पावका यासु जातः कश्यपो यास्विन्द्रः । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शं स्योना भवन्तु । हिरण्यवर्णा शुचयः

पावका विचक्रमुर्हित्वावद्यमापः शतं पवित्रा वितता ह्यासां ताभिर्मा देवाः सविता पुनात्विति शं न इति च द्वाभ्याम् ५ द्यौस्ते पृष्ठमिति छत्रं धारयेत् ६ इममग्न इति हिरगयम् ७ प्रतिष्ठे स्थो देवते मा मा हिंसिष्टमिति वाराह्या उपानहौ प्रतिमुञ्चते ८ द्विवस्त्रोऽत ऊर्ध्वम् ९ तस्माच्छोभनं वासो भर्तव्यमिति श्रुतिः १० वैगवदगडधारी नित्यं छत्रधार्यपन्थदायी ११ अदत्तहरणं प्रतिषिद्धम् १२ अपरया द्वारा निःसरणम् १३ मलवद्वाससा सह संभाषा १४ रजोवाससा सह शय्या १५ गुरोर्दुरुक्तवचनम् १६ अस्थाने स्मयनं सरणं गायनं नर्तनं तस्य चेक्षणम् १७ ३

अथातोऽष्टाचत्वारिंशत्संमितम् १ तत्र विधिविशेषः २ नियमेष्वाचार्यप्रधानः स्यात् ३ निलयार्थी यूनबद्धं न प्रविशेत् ४ अनिलयः स्यात् ५ अन्यत्र वृक्षाद्वाल्मीकाद्वा ६ निस्तान्तवमित्येके ७ यथोक्तमेकं तु वासः शाणी कुतपं वा ८ परिमितमुरः प्रमाणमुपरिजानु ९ चतुर्थकालपानभक्षः १० असञ्चयवान् ११ अहरहर्वा भैक्षमश्नीयात् १२ अहस्तिष्ठेद्रात्रावासीत १३ उभयं मुनिव्रतः स्यात् १४ स्त्रीशूद्रपतितरभसरजस्वलैर्वा न संभाषेतेति च्यवनो भृगुः १५ द्वादशरात्रं वोभयत्र १६ अमावस्यां पौर्णमासीं च १७ पालाश्यः समिधो नित्याः परिधिवृक्षाणां वा १८ मेधां मह्यमिति पाणिमार्गं दत्त्वा त्रिषवणमहोरात्रमुदकोपस्पर्शनम् १९ नमो हमाय मोहमायेति चानुसवनम् । नमो हमाय मोहमायाग्नये वैश्वानराय तपाय तापसाय तपन्ताय विन्दवे विन्दाय वसुविन्दाय सर्वविन्दाय नमः पाराय सुपाराय पारयन्ताय नम ऊर्म्याय सूर्म्याय नमश्चयवनाय भार्गवायेत्येता एव देवतास्तर्पयन्नुदकेन २० एष संवत्सरं चरित्वा विमलो विपापो भवति २१ सर्वेषां वेदानां चरितब्रह्मचर्यो यदि नान्यत्कुरुते २२ स तु खलु चरितब्रह्मचर्यो दश दश पुरुषान्पुनाति पूर्वापरानात्मानं चैकविंशं पंक्तिं च यावदनुपश्यति यस्यामुपविशति २३ समाप्त एतासामेव देवतानामन्नस्य जुहोति २४ धेनुर्दक्षिणा २५ ४

कृच्छ्रविधिं व्याख्यास्यामः १ देवासो यथाचरन्वसवो रुद्रा आदित्या मरुदङ्गिरसः पुरा २ स्त्रीशूद्रं नाभिभाषेत ३ नक्तमासीत संश्रितः ४ सर्वागयहानि तिष्ठेत् ५ ब्रह्मचारी ६ क्षपाशयः ७ मधुमांसलवणश्राद्धानि वर्जयेदविचारयन् ८ गवाजिनं शाणीचीरं कुतपं मार्गं वा वास उच्यते ९ सर्वाकुश-

लमोत्ताय मरुतोऽप्याचरंस्तथा १० त्र्यहं सायं त्र्यहं प्रातस्त्र्यहं भुञ्जीतायाचितम् । त्र्यहं नैव तु भुञ्जीतैतद्वसुभी रुद्रैरादित्यैश्चरितं व्रतम् ११ एष एवातिकृच्छ्रस्य विधिरेवं विधीयते १२ एतेष्वेव तु कालेष्वेकैकं पिराडं प्राश्नीयात् १३ ५

तप्तकृच्छ्रं व्याख्यास्यामः १ त्र्यहमुष्णाः पिबेदापस्त्र्यहमुष्णं पयः पिबेत् । त्र्यहमुष्णं पिबेत्सर्पिर्वायुभत्तः परं त्र्यहम् २ बृहस्पतेस्तु कूर्चस्य एष एव विधिः स्मृतः ३ यवागूं यावकं शाकं पयः सर्पिः कुशोदकम् । त्र्यहं त्र्यहं तु प्राश्नीयाद्वायुभत्तः परं त्र्यहम् ४ ६

अथ सान्तपनम् १ मरुतां होमो मरुतस्तर्पयेत् २ गोमूत्रं गोमयं त्तीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ३ एतदेव त्रिरभ्यस्तं महासान्तपनं स्मृतम् ४ ७

अथात्र व्रतोपायनम् १ वसवो व्रतपतयो रुद्रा व्रतपतय आदित्या व्रतपतयो मरुदङ्गिरसो व्रतपतय इति व्रतमालभ्य वसूनद्भिस्तर्पयेत्प्रथमस्मिंस्त्रिरात्रे रुद्रान्द्वितीय आदित्यांस्तृतीये मरुदङ्गिरसश्चतुर्थे २ आ मे गृहा इति द्वाभ्यां वसूनां स्थालीपाकस्य जुहोति ३ असङ्ख्यातेति दशभी रुद्राणाम् ४ कदा चन स्तरीरसीति पञ्चभिरादित्यानाम् ५ सान्तपना इति षड्भिर्मरुद्गणानां त्वामग्ने अङ्गिरसो वायुरग्रेगा इति च ६ हव्यवाहमिति स्विष्टकृतम् ७ ८

वर्षासु श्रवणेनाध्यायानुपाकरोति १ स जुहोत्यप्वा नामासि तस्यास्ते जुष्टीयं गमेयमहमिद्धि पितुष्परि मेधामृतस्य जगृभ अहं सूर्य इवाजनि स्वाहा । रन्तिर्नामासि युक्तिर्नामासि योगो नामासीत्युत्तरास्तिस्त्रः । तस्यास्त इति सर्वत्रानुषजति २ युजे स्वाहोद्युजे स्वाहा युक्त्यै स्वाहा योगाय स्वाहेत्यन्तेवासिनां योगमिच्छन् ३ दधिक्राव्ण इति त्रिर्दधि भत्तयित्वा दर्भपाणिः सावित्रीं त्रिरन्वाहादितश्च त्रीननुवाकान्कस्त्वा युनक्तीति च ४ तस्यानध्यायः ५ न विद्योतमाने न स्तनयति ६ आकालिकं देवतुमुलं विद्युद्धन्वोल्का ७ आचारेणान्ये ८ अत्यत्तराः शब्दाः संततवलीकप्रस्रावः ९ अर्धपञ्चमान्मासानधीत्य पञ्चार्धषष्ठान्वोत्सृजत उत्सृजामहेऽध्यायान्प्रतिविश्वसन्तु छन्दांसि

कस्त्वा विमुञ्चतीति च १० तस्यानध्यायोऽमावस्यां पक्षिणीं नाधीते ११ नात ऊर्ध्वमभ्रेषु १२ ९

अथोपनिषदर्हाः १ ब्रह्मचारी सुचरिती मेधावी कर्मकृद्धनदः प्रियो विद्यया वा विद्यामन्विच्छंस्तानि तीर्थानि ब्रह्मणः २ १०

नवं नवावसानं समं समूलं समवस्रावं समवस्रुत्य वा यस्मात्प्रागुदीचीरापो निर्द्रवेयुः प्रत्यगुदीचीर्वा तस्मिन्प्राग्द्वारं दक्षिणद्वारं वा शरणं कारयेत् १ मध्यमायाः कर्ते प्रागग्रोदगग्रान्दर्भानास्तीर्य तेषु स्थूणामवदधाति ध्रुवां सिनोम्यमृतस्य पत्नीं क्षेमे तिष्ठ घृतमुक्षमाणा । तां त्वा स्थूणे सर्ववीराः सुवीरा अरिष्टवीरा इह संविशेम । इहैव स्थूणे अमृतेन रोहाश्ववतो गोमत्यमृतवती सूनृतावती । ऊर्जस्वती पयस्वती चास्मान्स्थूणे पयसाभ्यववृत्स्व । आ त्वा कुमारस्तरुण आ वत्सो जगता सह । आ त्वा परिस्रुतः कुम्भ आ दध्नः कलशैरयमिति २ प्राञ्चं वंशं समारोपयत्यृतेन स्थूणामधिरोह वंशोग्रो विराजन्नपसेध शत्रून् । अथा रयिं सर्ववीरा वयं त इति ३ उत्तरपूर्वं समाधानम् ४ ११

अमीवहा वास्तोष्पत इति चतसृभिर्वास्तोष्पतीयस्य स्थालीपाकस्येष्ट्वाथ वास्त्वाविशेत् अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः । वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवा नः । यत्त्वेमहि प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे । वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व । वास्तोष्पते शग्मया संसदा ते सक्षीमहि रणवया गातुमत्या । पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा न इति १ वंशोद्वीक्षणिकं ब्राह्मणान्भोजयेत् २ १२

इति लौगाक्षिसूत्रे गृह्यपञ्चिकायां प्रथमोऽध्यायः

अथ पाकयज्ञः १ चतुर्विधः पाकयज्ञो भवति हुतोऽहुतः प्रहुतः प्राशितश्चेति २ हुतो हुतानाम् ३ उपहारोऽहुतानाम् ४ पिण्डपितृयज्ञः प्रहुतानाम् ५

मधुपर्को ब्रह्मौदनश्च प्राशितानाम् ६ दर्शपूर्णमासप्रकृतयः पाकयज्ञाः ७ तेष्वावृदुपचारस्तूष्णीम् ८ अनर्थलुप्तम् ९ प्रयाजाभावाच्चोपभृत् १० १३

उदगयने भार्यां विन्देत १ कृत्तिकास्वातिपूर्वैरिति वरयेत् २ लक्षणिना लक्षणानि परीक्षयेत् ३ भागधेयमपि वा पिण्डैः परीक्षयेत् ४ वेद्याः सीताया ह्रदाद्गोष्ठाद्दादेवनादादहनाच्चतुष्पथादिरिणात्संभार्यं नवमम् ५ ऋतमेव परमेष्ठ्यृतं नात्येति किञ्चन । ऋत इयं पृथिवी श्रिता सर्वमिदमियमसौ भूयादिति कन्याया नाम गृहीत्वा सर्वतः कृतलक्षणान्पिडान्पाणावादाय कुमार्या उपनामयेत् ६ एतेषामेकं गृहाणेति ब्रूयात् ७ पूर्वेषां चतुर्णामेकं गृह्णतीमुपयच्छेत् ८ संभार्यमपीत्येके ९ रोहिणीमृगशिरः श्रविष्ठा उत्तराणीत्युपयमे १० यद्वा पुण्योक्तम् ११ १४

अथ ब्रह्मदेयायाः प्रदानविधिं वक्ष्यामः १ शुद्धपक्षस्य पुण्याहे पर्वणि वोदगग्रान्दर्भानास्तीर्य तेषूपविशतः प्राङ्मुखः प्रतिग्रहीता सामात्यः प्रत्यङ्मुखः प्रदाता २ मध्ये प्रागग्रोदगग्रान्दर्भानास्तीर्य तेषूदकं संनिधाय व्रीहियवानोप्य दक्षिणत उदङ्ङासीन ऋत्विगुपयमनं कारयेत् ३ समेतेष्वाह ददानीति प्रतिगृह्णामीति त्रिरावेदयते ४ एतद्वः सत्यमित्युक्त्वा समाना वः सं वो मनांसीत्यृत्विगुभौ समीक्षमाणो जपति ५ १५

अथ शुल्कदेयायाः १ हिरण्यं व्यतिहरतः २ प्रजाभ्यस्त्वेति प्रददाति ३ रायस्पोषाय त्वेति प्रतिगृह्णाति ४ कंसे हिरण्यं समुप्य हिरण्यवर्णा इति चतसृभिः समवमृशन्ते ५ १६

गौदानिकैर्मन्त्रैः कन्यामलंकृत्य चतुष्पादे भद्रपीठे प्राङासीनायाश्चतस्रोऽविधवा माता पिता च गुरुः सप्तमस्तां सहस्रच्छिद्रेण पवित्रेण स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोतीन्द्राय स्वाहेन्द्राण्यै स्वाहा कामाय स्वाहा भगाय स्वाहा ह्रियै स्वाहा श्रियै स्वाहा लक्ष्म्यै स्वाहा पुष्ट्यै स्वाहा विश्वावसवे गन्धर्वराजाय स्वाहेति १ नाडीं तूणवं मृदङ्गं पणवं सर्वाणि च वादित्राणि गन्धोदकेन समुपलिप्य कन्या प्रवादयते शुनं वद दुन्दुभे सुप्रजास्त्वाय गोमुख प्रक्रीडयन्तु कन्याः सुमनस्यमानाः सहेन्द्राण्या कृतमङ्गला इति २ प्रतिसखि प्रक्रीडयत्येकमहर्द्वे वाहोरात्रे ३ १७

यज्ञियस्य वृक्षस्य प्रागायतां शाखां सकृदाच्छिन्नां सूत्रतन्तुना प्रच्छाद्य सावित्रेण कन्यायै प्रयच्छति १ या तेऽलक्ष्मीर्मातृमयी पितृमयी संक्रामणी सहजा वापि काचित् । तां तिष्येण सह देवतया निर्भजामि निर्णुदामि सा द्विषन्तं गच्छतु तिष्यबृहस्पतिभ्यां नमो नम इति २ तस्या उत्सर्गः स्थावरोदके शुचौ वा देवतायतने ३ १८

अथातो हविष्यकल्पं व्याख्यास्यामः १ दशवार्षिकं ब्रह्मचर्यं कुमारीणां द्वादशवार्षिकं वा २ ब्रह्मचर्यान्ते गन्धर्वे देवकुले वा द्वावग्नी प्रज्वाल्य द्वौ पशू उपाकरोत्यर्यम्णे दक्षिणं प्राजापत्यमुत्तरम् ३ असंभवे त्वेकपशुः ४ तण्डुलैर्वा कुर्यात् ५ यथास्थानं पशुर्यथास्थानमवदानानि तथा हविः ६ अग्निं सोमं वरुणं मित्रमिन्द्रं बृहस्पतिं स्कन्दं रुद्रं वात्सीपुत्रं भगं भगनक्षत्राणि कालीं षष्ठीं भद्रकालीं पूषणं त्वष्टारं महिषिकां च गन्धाहुतिभिर्यजेत ७ १९

अथातो हविष्यपुण्याहः १ उदकान्तं गत्वा यथोपपत्ति वा पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः सशिरस्कां स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोतीन्द्राणी वरुणानी गन्धर्वाण्युदकान्यग्निर्जीवपुत्रः प्रजापतिर्महाराजः स्कन्दोऽर्यमा भगः प्रजानक इति २ २०

यामेव द्वितीयां रात्रिं कन्यां विवाहयिष्यन्स्यात्तस्यां रात्र्यामतीते निशाकाले नवां स्थालीमाहृत्य पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः सशिरस्कां स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोत्यग्नये सोमाय मित्राय वरुणायेन्द्रायोदकाय भगायार्यम्णे पूष्णे त्वष्ट्रे राज्ञे प्रजापतय इति १ एता एव देवताः पुंसः कुम्भं वैश्रवणमीशानं च यजेत २ २१

चतस्रोऽष्टौ वाविधवाः शाकपिण्डीभिः स्त्रियोऽन्नेन च ब्राह्मणान्भोजयित्वा वीणागायिभिः सह संगायेयुरपि वा चतुरो नर्तनं कुर्यात् । क्रीडं वः शर्धो मारुतमनर्वाणं रथेशुभं कण्वा अभिप्रगायतेति १ अक्षतसक्तूनामग्निं पुष्टिपतिं प्रजापतिं च यजेत अग्निना रयिमश्नवत्पोषमेव दिवे दिवे यशसं वीरवत्तमम् । प्रजापते न हि त्वदन्य इति च २ सर्वत्रोद्वाहकर्मस्वनादिष्टदेवतेष्वग्निं पुष्टिपतिं प्रजापतिं च यजेत ३ २२

अथ प्रास्थानिकम् १ तस्मिन्यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पश्चाद्भगिनी सिचं गृह्णाति शस्त्रं गृहीत्वा २ पूषा मेति यान्ति यत्रोदकम् ३ शं नो देवीरित्युपस्पृश्य प्राची दिगिति यान्ति यथादिशम् ४ २३

षडर्घ्यार्हा भवन्त्याचार्य ऋत्विग्राजा विवाह्यः प्रियः स्नातक इति १ अथैनमर्हयन्ति २ आदौ च कर्मणः ३ अर्घ्यमुदकं सौषधं दर्भा इति ४ कंसे चमसे वा दध्यासिच्य मधु च वर्षीयसापिधाय विष्टराभ्यां परिगृह्य पाद्यप्रथमैः प्रतिपद्यन्ते ५ मयि दोहोऽसि विराजो दोहः पाद्यायै विराजो दोहमशीयेत्याह्रियमाणमनुमन्त्रयते ६ विष्टरोऽसि मातरि सीदेति विष्टरमास्तीर्य तस्मिन्नुपविशति ७ विष्टर आसीनायैकैकं त्रिः प्राह ८ नैव भो इत्याह न मार्षेति ९ शं नो देवीरित्यपोऽभिमन्त्र्य पाद्याभिः प्रक्षालयते दक्षिणं पादमवनेनिज इदमहमस्मिन्कुले ब्रह्मवर्चसं दधाम्युत्तरं पादमवनेनिज इदमहं मयि तेजो वीर्यमन्नाद्यं प्रजां पशून्ब्रह्मवर्चसं दधामीति १० आपोहिष्ठीयाभिरर्घ्यं परिगृह्य सावित्रेण मधुपर्कं विष्टरोऽस्यन्तरिक्षमधिविश्रयस्वेति विष्टरमवकृष्योरु त्वेत्यवसार्य तच्चक्षुरित्यवेक्ष्य पृथिव्यास्त्वेति विष्टरे निधाय मधु वात ऋतायत इति तिसृभिः प्रदेशिन्या प्रदक्षिणमालोडयति ११ वसवस्त्वाग्निराजानो भक्षयन्तु पितरस्त्वा यमराजानो भक्षयन्तु रुद्रास्त्वा सोमराजानो भक्षयन्त्वादित्यास्त्वा वरुणराजानो भक्षयन्तु विश्वे त्वा देवा बृहस्पतिराजानो भक्षयन्त्विति प्रदक्षिणं प्रतिदिशं प्रतिमन्त्रं पात्रस्यान्तेषु लेपान्निमार्ष्टि १२ यन्मधुनो मधव्यस्य परमस्यान्नाद्यस्य परममन्नाद्यं रूपं तेनाहं मधुनो मधव्यस्य परमस्यान्नाद्यस्य परमोऽन्नादो मधव्यो भूयासं । त्रय्यै विद्यायै यशोऽसि श्रियै यशोऽसि यशसे ब्रह्मणो दीप्तिरसि सत्यश्रीर्यशः श्रीर्मयि श्रीः श्रीः श्रयतामिति मधुपर्कस्य चतुष्प्राश्नात्यङ्गुष्ठद्वितीयाभिः कनिष्ठया प्रथममेवमनुपूर्वं सर्वाभिस्तदवशिष्टं सुहृदे प्रयच्छति १३ आचामत्यमृतोपस्तरणमसीति १४ तस्मा असिपाणिर्गां प्राह १५ तां शास्ति मम चामुष्य च पाप्मानं जहि हतो मे पाप्मा पाप्मानं मे हतों कुरुतेति १६ चतुरो नानागोत्रान्ब्राह्मणान्भोजयेत् १७ एष आद्य उपायः १८ यद्युत्सृजेन्माता रुद्राणामिति जपेत् । माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः । प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट । सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम । अद्धितृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती

ओ३मुत्सृजत तृणान्यत्त्वित्युक्त्वा तामुत्सृष्टां पशुमङ्गं वा १९ नामांसो मधुपर्कः स्यादिति ह विज्ञायते २० अपि वा घृतौदन एव स्यात् २१ २४

इति लौगाक्षिसूत्रे गृह्यपञ्चिकायां द्वितीयोऽध्यायः

अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम् । समर्यमा सं भगो नो निनीयात्सं जास्पत्यं सुयममस्तु देवा इत्युदाहारं प्रहिणोति १ शमीशाखया सपलाशयापिधायाहरेत् २ एतासामेवापामुदकार्थान्कुर्वीत ३ शं न आपो धन्वन्याः शं नः सन्त्वनूप्याः । शं नः समुद्रिया आपः शमु नः सन्तु या इमा इत्यकेवलाभिरद्भिः स्नातां या अकृन्तन्या अवयन्या अतन्वत याश्च देवीरन्ताँ अभितोऽददन्त । तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मतीदं परिधत्स्व वास इत्यहतं वासः परिधाप्याशासानेत्यन्तरतो मौञ्जेन दार्भेण योक्त्रेण वा संनह्यति । आशासाना सौमनसं प्रजां सौभाग्यं रयिम् । अग्नेरनुव्रता भूत्वा संनह्ये सुकृताय कम् ४ प्रेतो मुञ्चामि नामुतः सुबद्धा-ममुतस्करम् । यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति । पूषा त्वेता नयतु हस्तगृह्याश्विनौ त्वा प्रवहतां रथेन । गृहान्गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमावदासि । मा विदन्परिपन्थिनो य आसीदन्ति दम्पती सुगेभिर्दुर्गम-तीतामपद्रान्त्वरातय इति उदानीय ५ उक्तं वाससः कर्म ६ आचारिकाणि ७ तूष्णीं निर्मन्थ्यं भ्राष्ट्रात्सान्तपनं यत्रदीप्यमानं वा बहिरग्निमुपसमाधाय परिसमूह्य पर्युक्ष्य परिस्तीर्याज्यं विलीनोत्पूतं कृत्वाघारादाज्यभागान्तं हुत्वापरेणाग्निमनो रथं वावस्थाप्य योगे योग इति युनक्ति दक्षिणमितर-मुत्तरामितराम् ८ तूष्णीं विमुच्य खे रथस्य खेऽनसः खे युगस्य शतक्रतो अपालामिन्द्रस्त्रिष्पूत्वा करोतु सूर्यवर्चसमिति हिरण्यं निष्टर्क्यं बद्ध्वाध्यधि मूर्धनि दक्षिणस्मिन्युगतर्द्मन्यद्भिरवक्षारयते शं ते हिरण्यमिति । शं ते हिरण्यं शमु सन्त्यापः शं ते मेथी भवतु शं युगस्य तर्द्म । शं त आपः शतपवित्रा भवन्त्वेना पत्या तन्वा संसृजस्वेति ९ दक्षिणतः पुमान्भवति १० अथ जुहो-त्यग्नये जनिविदे स्वाहा सोमाय जनिविदे स्वाहा गन्धर्वाय जनिविदे स्वाहा ११ आयुषः प्राणमिति सन्तनीर्जुहोति १२ जयाभ्यातानान्राष्ट्रभृतश्च १३ तानि यथोक्तम् १४ आधिपत्यानि जुहोति १५ आकूत्या इति त्रिभिस्त्वेत्यन्तैः १६ हिरण्यगर्भ इत्यष्टाभिः प्रत्यृचम् १७ भूः स्वाहेति महाव्याहृतिभिश्चतसृभिः

१८ अग्न आयूंषीत्याग्निपावमानीभिश्च तिसृभिः १९ हुत्वा हुत्वा कन्याया मूर्धनि संपातानवनयेद्या ते पतिघ्नी तनूरपतिघ्नीं ते तां करोमि स्वाहा । या तेऽपुत्रिया तनूः पुत्रियां ते तां करोमि स्वाहा । या तेऽपशव्या तनूः पशव्यां ते तां करोमि स्वाहेति त्रिभिः २० उदगग्नेर्दर्भेषु प्राचीमवस्थाप्य शुचिः पुरस्तात्प्रत्यङ्ङुपयन्ता देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णामीति हस्तं गृह्णाति दक्षिणमुत्तानं साङ्गुष्ठं नीचारिक्तमरिक्तेनैवं सव्यं सव्येन २१ गृभ्णामीति चतस्रो वरं वाचयति गृभ्णामि ते सुप्रजास्त्वाय हस्तौ मया पत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः । तां पूषञ्शिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम् । सोमो ददद्गन्धर्वाय गन्धर्वो दददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् । सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयोऽहं मनुष्यज इति २२ ततो गाथा वाचयति सरस्वति प्रेदमवेत्यनुवाकम् । उभावित्येके २३ यदि पृथक्तन्त्रं प्रदक्षिणमग्निमानीय तत्रैवोपवेश्य संस्थापयेत् २४ एककर्मणि तन्त्र उत्तरेणाग्निं प्रत्येत्य ततो विवाहः २५ य इमे द्यावापृथिवी इत्यादय उद्वाहे होमा जयप्रभृतयश्च नैककर्मणि तन्त्रे स्विष्टकृदाज्यभागौ च २६ पश्चादग्नेर्दर्भेषु सा त्वमसीति वाचयति । सा त्वमस्यमोऽहममोऽहमस्मि सा त्वं ता एहि विवहावहै पुंसे पुत्राय कर्तवे रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति २७ अग्निमभिदक्षिणमानीयेह्यश्मानमिति वरं दक्षिणेन पदाश्मानमास्थापयति । एह्यश्मानमातिष्ठाश्मेव त्वं स्थिरो भव । कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतमिति । आतिष्ठेममिति वधूम् । आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव । प्रमृणीहि दुवस्यवः सहस्व पृतन्यत इति २८ आज्यस्याञ्जलावुपस्तीर्येदं हविरित्यभिमृश्याथास्यै शमीलाजानावपति भ्राता ब्रह्मचारी वा २९ तानविच्छिन्दती जुहोत्यर्यमणं नु देवमिति अर्यमणं नु देवं कन्या अग्निमयक्षत । सोऽस्मान्देवो अर्यमा प्रेतो मुञ्चातु मामुष्य गृहेभ्यः स्वाहा ३० अग्निर्मा जनिमानिति वाचयति । अग्निर्मा जनिमाननया जनिमन्तं करोतु जीवपत्निर्भूयासम् ३१ इयं नारीति सर्वत्रानुषजति । इयं नार्युपब्रूते तोक्मान्यावपन्तिका । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो ममेति ३२ एवं द्विरुत्तरम् ३३ पर्ययणे पर्ययणे लाजहोमो याजमानं चाश्मानं चास्थापयति ३४ गन्धर्वं पतिवेदनमिति गन्धर्वं पतिवेदनं कन्या अग्निमयक्षत ।

सोऽस्मान्देवो गन्धर्वः प्रेतो मुञ्चातु मामुष्य गृहेभ्यः स्वाहा ३५ सोमो मा ज्ञातिमानिति वाचयति । सोमो मा ज्ञातिमाननया ज्ञातिमन्तं करोतु जीव-पत्निर्भूयासम् ३६ त्र्यम्बकं यजामह इति । त्र्यम्बकं यजामहे सुगन्धिं पतिपोषणम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामुष्य गृहेभ्यः स्वाहा ३७ पूषा मा पशुमानिति वाचयति । पूषा मा पशुमाननया पशुमन्तं करोतु जीवपत्निर्भूयासम् ३८ शिष्टान्स्विष्टकृते जुहोति शूर्पेण कर्ता ३९ वरो दक्षिणा ४० तूष्णीं हस्तौ विमुच्य वि ते मुञ्चामीति संनहनम् ४१ उत्तरतोऽग्नेर्दर्भेषु प्राचीं प्रक्रामयत्येकमिषे द्वे ऊर्जे त्रीणि रायस्पोषाय चत्वारि मयोभवाय पञ्च प्रजाभ्यः षड्तुभ्यो दीर्घायुत्वाय सप्तमं सखा सप्तपदा भव सुमृडीका सवस्वति मा ते व्योम संदृशे विष्णुस्त्वान्वेत्वित्यनुषङ्गः ४२ तच्चक्षुरित्यादित्यमुप-स्थापयति ४३ अस्तमितेऽग्निम् ४४ जीवन्तीं ध्रुवं स्वस्त्यात्रेयं दर्शयत्यरुन्धतीं च । एतेषामेकैकं पश्यसीत्याह पश्यामीति प्रत्याह ४५ सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतनेति वीक्षि-ताननुमन्त्रयते ४६ उदुत्तममिति प्रागुदीचीमावसथं यतीमनुमन्त्रयते यतो वा स्यात् । उदुत्तममारोहन्ती व्यस्यन्ती पृतन्यतः । मूर्धानं पत्युरारोह प्रजया च विराड् भव । इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि । सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्वां भव । ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु स्नुषाणां श्वशुराणां च प्रजायाश्च धनस्य च । पतीनां देवराणां च सजातानां विराड्भवेति ४७ २५

पुण्याहे युङ्क्ते । योगे योग इति युनक्ति १ अङ्क्न्यङ्का अभितो रथं ये ध्वान्ता वाताग्रमभि ये संपतन्ति । दूरेहेतिः पतत्रिणी वाजिनीवांस्ते नोऽग्नयः प्रप्रयः पारयन्त्विति चक्रे अनुमन्त्रयते २ खे रथस्य खेऽनसः खे युगस्य च तर्द्मसु खे अक्षस्य खे अवदधामीति युगतर्द्मसु शमीशाखामवदधाति ३ सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आरोह सूर्ये अमृतस्य योनिं स्योनं पत्ये वहतुं कृणुष्वेत्यारोपयते ४ मा विदन्परिपन्थिनः सुमङ्गलीरिति च प्रवाहयते ५ संकाशया विवहतं ब्रह्मणा गृहैरघोरेण चक्षुषा मैत्रेण । पर्याणद्धं विश्वरूपं यदस्याः स्योनं पतिभ्यः सविता कृणोतु तदिति वधूसंगमे ६ ये पथीनामिति चतुष्पथेषु जपतीमे चत्वार इति च ७ ये श्मशानेष्विति श्मशानेषु । ये श्मशानेषु पुण्यजनाः शावास्तेषु शेरते । अत्रैव ते रमन्तां

मा वधूरन्ववेक्षतेति ८ ये वनेष्विति महावनं महावृक्षं दृष्ट्वा ९ इह रडिरिति क्रूरं दृष्ट्वा १० नमो अस्तु सर्पेभ्य इति सर्पान् ११ ये तीर्थानीति तीर्थे ता मन्दसानेति च । ता मन्दसाना मनुषो दुरोण आ धत्तं रयिं सहवीरं वचस्यवे । कृतं तीर्थं सुप्रमाणं शुभस्पती स्थाणुं पथेष्ठामप दुर्मतिं हतम् । अयं नो मह्याः पारं स्वस्ति नेषद्वनस्पतिः । सीरा नः सुतरा भव दीर्घायुत्वाय वर्चसे । अश्मन्वती रीयते संरभध्वमुत्तिष्ठत प्रचरता सखायः । अत्रा जहाम ये आसन्नशेवाः शिवान्वयमुत्तरेमाभि वाजानिति १२ २६

शं न इति नदीं तरति १ य ऋृत इति रथाङ्गेऽवशीर्णे । य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः । संधाता सन्धिं मघवा पुरूवसुर्निष्कर्ताविह्रुतं पुनरिति २ अपराह्णेऽधिवृक्षसूर्ये गृहानुपयायोर्जं बिभ्रतीति गृहान्प्रतिदृश्य जपति । ऊर्जं बिभ्रती वसुवनिः सुमेधा गृहानागां मोदमाना सुवर्चाः । अघोरेण चक्षुषाहं मैत्रेण गृहाणां पश्यन्ती वय उत्तिरामि । गृहाणामायुः प्र वयं तिराम गृहा अस्माकं प्रतिरन्त्वायुः । गृहानहं सुमनसः प्रपद्ये वीरघ्नी वीरपतिः सुशेव । इरां वहतो घृतमुक्षमाणांस्तेष्वहं सुमनाः संविशामि । येषां मध्येऽधिप्रवसन्नेति सौमनसं बहु । गृहानुपह्वयामहे ते नो जानन्तु जानतः । सूनृतावन्तः स्वधावन्त इरावन्तो ह सामदाः । अक्षुध्या अतृष्या गृहा मास्मद्बिभेतन । उपहूता इह गाव उपहूता अजावयः । अथो अन्नस्य कीलाल उपहूतो गृहेषु मे । उपहूता भूरिधनाः सखायः साधुसंमदाः । अरिष्टाः सर्वपुरुषा गृहा नः सन्तु सर्वदेति ३ २७

उलपराजीं स्तृणात्या शयनीयात् १ तया प्रविशति २ अध्याहिताग्निं सोदकं सौषधमावसथं प्रतिपद्यते ३ रोहिण्या मूलेन वा यद्वा पुण्योक्तमपरेणाग्निमानडुहे रोहिते चर्मण्युपविश्यापि वा दर्भेष्वेव जयप्रभृतिभिर्हुत्वाग्निरैतु प्रथम इति च । अग्निरैतु प्रथमो देवतानां सोऽस्याः प्रजां नयतु सर्वमायुः । तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं निरुन्ध्यात्स्वाहा । अग्निरिमां त्रायतां गार्हपत्यः सोऽस्याः प्रजां मुञ्चतु मृत्युपाशात् । अरिक्तोपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियं स्वाहा । मा ते गृहे निशि घोर उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । जीवपुत्रा पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा । मा ते कुमारः स्तनधः प्रमायि मा त्वं विकेश्युर

ऋावधिष्ठाः । स्तनं धयन्तं सविताभिरक्षत्वा वाससः परिधानाद्बृहस्पतिर्विश्वे देवा ऋभिरक्षन्तु नित्यं स्वाहा । ऋग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि यास्यां भृशा तनूस्तामस्या नाशय स्वाहा । वायो प्रायश्चित्ते । सूर्य प्रायश्चित्ते । चन्द्र प्रायश्चित्ते । विष्णो प्रायश्चित्ते । विष्णो प्रायश्चित्ते । चन्द्र प्रायश्चित्ते । सूर्य प्रायश्चित्ते । वायो प्रायश्चित्ते । ऋग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि यास्यां भृशा तनूस्तामस्या नाशय स्वाहा । त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मे ऋस्तु त्र्यायुषमिति ४ ऋाज्यस्यैकदेशे दध्यासिच्य दधिक्राव्ण इति त्रिर्दधि भक्षयित्वा माणवकायोत्सङ्ग इडामग्न इति फलानि प्रददाति ५ २८

तूष्णीमुपचरितं स्थालीपाकं श्रपयित्वा तस्याग्निमिष्ट्वा प्रजापतिं च शेषं प्राश्नीतः । ऋन्नमेव विवननमन्नं संवननं स्मृतम् । ऋन्नं पशूनां प्राणोऽन्नं ज्येष्ठं भिषक् स्मृतम् । ऋन्नमयेन मणिना प्राणसूत्रेण पृश्निना । सिनोमि सत्यग्रन्थिना हृदयं च मनश्च ते । सह वाचा मनो ऋस्तु सह चित्तं सह व्रतम् । चक्रमिवानडुहः पदं मामेवान्वेतु ते मनः । मां चैव पश्य सूर्यं च मा चान्येषु मनः कृथाः । चाक्रवाकं संवननं मम चामुष्याश्च भूयादिति १ २९

संवत्सरं ब्रह्मचर्यं चरतो द्वादश रात्रीः षट् तिस्र एकां वा १ तौ संविशतः २ ऋपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् । इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकाम । ऋपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋृद्ध्यै नाधमानाम् । उप मामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे । प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिः सहसा न इन्द्रः । विश्वैर्देवैर्यज्ञियैः संविदानः पुंसां बहूनां मातरः स्याम । ऋहं गर्भमादधाम्योषधीष्वहं विश्वेषु भुवनेष्वन्तः । ऋहं प्रजा ऋजनयं पृथिव्यामहं जनिभ्यो ऋवरीषु पुत्रानिति स्त्र्यादिव्यत्यासं जपतः ३ एवमेवर्तौ प्रजाकामौ संविशतः ४ करदिति भसदमभिमृशति ५ भसदित्युपरिजननम् ६ बृहदिति जातम् ७ इति गर्भाधानम् ८ ३०

तृतीये गर्भमासे सीमन्तं कारयते १ शुद्धपक्षस्य पुण्याहे पर्वणि वा यथोक्त-मुपसमाधाय जयप्रभृतिभिर्हुत्वा पश्चादग्नेर्दर्भेषु प्राङासीनायाः सर्वान्केशा-

न्संप्रमुच्य प्रसाधयते यं सीमन्तमिति । यं सीमन्तं कङ्कतस्ते चकार यद्वा क्षुरः परिववर्ज वपंस्ते । स्त्रीषु रूपमश्विनौ तं निधत्तं पौंस्येनेमं संसृजतं वीर्येण । इन्द्राणी चक्रे कङ्कतं स सीमन्तं विसर्पतु । पुनः पतिभ्यो जायां दा अग्ने प्रजया सह । पुनः पत्नीमग्निरदादायुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतमिति २ त्रिःश्येतया शलल्या शमीशाखया सपलाशया वा सीमन्तं विचिनोति यास्ते राक इति ३ अथास्याः पृथक्केशपक्षौ संनह्यति नीललोहितेन सूत्रेण नीललोहितं भवति कृत्यासक्तिर्व्यज्यते । एधन्ते अस्या ज्ञातयः पति-र्बन्धेषु बध्यतामिति ४ यो गुरुस्तमर्हयेत् ५ एतदेव कुमारीणां सटोद्धरण-मत्रैवानुलेपनम् ६ ३१

अथ पुंसवनम् १ भूयिष्ठगतेषु गर्भमासेषु त्रीन्स्थालीपाकाञ्श्रपयेदाग्नेयमैन्द्रं वैष्णवं च २ तेषां यथादेवतं जुहोति । अग्निस्तुविश्रवस्तममिन्द्र क्षत्रं प्र तद्विष्णुः । पुमानित्यभिजुहोति । पुमानग्निः पुमानिन्द्रः पुमान्विष्णुरजायत पुमांसं जनयेत्पुत्रं दशमे मासि सूतवे । येन जातेन विभुना जीवेम शरदः शतं पश्येम शरदः शतमिति तं नो मंहस्व शतिनं सहस्रिणं गोसनिमश्वसनिं वीरं स्वाहा ३ ३२

अथ सोष्यन्तीसवनम् १ विजनिष्यमाणाया अद्भिः पाणिं स्रवन्तं शिरस्या-धाया हृदयादभिमृशेद्यथायं वातः पवते यथा समुद्र एजति । एवं ते गर्भ एजतु सह जरायुणावपद्यतामिति २ क्षिप्रमेव प्रजायते ३ ३३

पुत्रे जाते नाम धीयते १ घोषवदाद्यन्तरन्तस्थं चतुरक्षरम् २ यथोपपत्ति वा ३ अग्निमत्रानीय तस्मिन्नाज्यभागान्तं हुत्वा सहिरण्यकांस्ये संपातानवन-येद्धिरण्यगर्भः संवत्सरस्य प्रतिमां काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा प्रजापतये स्वाहा प्रजापते नहि त्वदन्य इति च द्वाभ्याम् ४ अग्नेरायुरसीति हिरण्येन मुखं मेध्यं कृत्वा पाणिना मुखमद्भिः संस्पृश्य प्रक्षाल्य स्तना-वनुमन्त्रयते मधु वात ऋतायत इति तिसृभिः प्रत्यृचमुभा उत्तमया ५ हिरण्येन संपातान्संनिघृष्य मधु चेत्येके तन्मुखे कृत्वा प्रपाययत्यायुर्धय जरां धय सत्यं धय श्रियं धयोर्जं धय रायस्पोषं धय ब्रह्मवर्चसं धय ६ जीव शरदः शतं पश्य शरदः शतमिति मूर्धनि निघ्राप्य स्वस्त्ययनं वाचयति ७ ३४

सर्षपान्फलीकरणमिश्रान्दर्व्या जुहोति शण्डो मर्कोपवीतस्तौण्डुलेयः उलूखलश्चपलो नश्यतामितः स्वाहा । अनालिखन्नवलिखन्किंवदन्त उलूखलश्चपलो नश्यतामितः स्वाहा । हर्यन्दणः कुम्भिः शक्तिर्हन्ता चुपणीमुखश्चपलो नश्यतामितः स्वाहा । केशिनी श्वलोमिनी कवकेशावकाशिन्यपेतो नश्यतामितः स्वाहेति १ एवं सायंप्रातर्दशाहं जुहुयात् २ ३५

दशम्यां तस्मिन्नेवाग्नौ पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः सशिरस्कं स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति कया नश्चित्र इति द्वाभ्यां कया तच्छृणवे प्रजापतये स्वाहा प्रजापतये नहि त्वदन्य इति च द्वाभ्याम् १ अग्नेरायुरसीति तुल्यमा ललाटाभिमर्शनात् २ तदेव नाम धीयते ३ अन्यदित्येके ४ प्राक् स्विष्टकृतः कांस्ये पूतमाज्यमासिच्य हिरण्यं चाबन्धनीयमग्नेरायुरित्यवधाय तस्य जुहोतीन्द्रस्य प्राण इति पञ्चभिः ५ प्राक् संस्थितयजुषो ब्रह्मा घृते हिरण्यमवपद्यते सर्वे च ऋत्विजो यदसर्प इति ६ पावमानेनेत्युद्धृत्य देवा आयुष्मन्त इति यजमानाय प्रयच्छति ७ तत्पिबति निरवधयेद्धिरण्याद्धृतम् ८ प्रक्षाल्येममग्न इति हिरण्यमाबध्नाति ९ तस्य ललाटमभिमृश्याश्विनोः प्राण इति जपति १० अङ्गादङ्गात्संभवसि हृदयादभि जायसे । आत्मा वै पुत्रनामासि जीव शरदः शतं पश्य शरदः शतमिति मूर्धनि निघ्राप्य स्वस्त्ययनं वाचयति ११ एवमत ऊर्ध्वं विप्रोष्यैवं मासि मासि स्थालीपाकस्येष्ट्वा जातकर्मणा वाज्यस्यैवं संवत्सरम् १२ मांसं तु नाश्नीतः १३ समाप्ते संवत्सरेऽजाविभ्यां वाग्निधान्वन्तरी इष्ट्वा सर्पिष्मदन्नं ब्राह्मणान्भोजयेत् १४ ३६

तृतीयेऽर्धमासे दर्शनमादित्यस्य १ पुण्याहे पर्वणि वोदिते त्वादित्ये रथचक्रमात्रं स्थण्डिलमुपलिप्य तस्मिन्यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा तरणिर्दिवो रुक्म उदुत्यं चित्रं देवानामित्याज्यस्य जुहोति २ मित्रो जनान्प्र स मित्रेति स्थालीपाकस्य ३ अभ्यावर्तस्वेति कुमारमभ्युदानयन्ति ४ द्रष्ट्रे नम इत्युपस्थानमादित्यस्यादृश्रन्नस्येति च ५ सर्पिष्मदन्नं ब्राह्मणान्भोजयेत् ६ ३७

एवं चन्द्रदर्शनम् १ मन्नू धाता भूयो जात इति द्वाभ्यामाज्येन चतुर्गृही-

तेनाज्यभागान्ते जुहोति २ स्राप्यायस्व सं ते पयांसीति द्वाभ्यां स्थालीपाकस्य ३ नवो नव इत्युपस्थानम् ४ प्रकाशो दच्चिणा ५ ३८

षष्ठे मासेऽन्नप्राशनं दन्तेषु वा जातेषु १ सर्वाणि हविष्यान्नानि संयूय । स्रायुर्दा देव घृतप्रतीक इति हुत्वान्नपते स्रन्नस्येत्येतयैव कुमारमन्नं प्राशयेत् २ ३९

तृतीयस्य वर्षस्य भूयिष्ठगते चूडाः कारयते १ दच्चिणतः कपूजा वसिष्ठानाम् २ उभयतोऽत्रिकश्यपानाम् ३ मुराडा भृगवः ४ पञ्चचूडा स्रङ्गिरसः ५ वाजिमेके ६ मङ्गलार्थं शिखिनोऽन्ये ७ यथाकुलधर्मं वा ८ शुद्धपच्चस्य पुरायाहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा । स्रायमगात्स-विता च्चुरेणोष्णेन वाय उदकेन एहि । स्रादित्या रुद्रा वसवः सचेतसः सोमस्य राज्ञो वपत प्रचेतस इत्युष्णा स्रपोऽभिमन्त्रयते ९ उष्णाश्च शीताश्च समेत्य सर्वा बृहस्पतिः सविता सत्यधर्मा तदनुमन्यताम् । स्रार्ददानव इत्यभ्युन्देत् । स्रार्द्रदानवः स्थ जीवदानवः स्थोन्दतीरिहैनमवताप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस इति १० दच्चिणे केशान्त स्रोषधे त्रायस्वेति दर्भमन्तर्धाय स्वधित इति च्चुरेणा-भिनिधाय येनावपत्सविता च्चुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमद्यायुष्माञ्जरदष्टिर्यथासदयमसौ । येन धाता बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत् । तेनास्यायुषे वप सुश्लोक्याय स्वस्तये । येन पूषा प्रजापतेरग्नेः सूर्यस्य चायुषेऽवपत् । तेनास्यायुषे वप सुश्लोक्याय स्वस्तये । येन भूयश्च रात्री ज्योक्पश्या च सूर्यम् । तेनास्यायुषे वप सुश्लोक्याय स्वस्तय इति प्रदच्चिणं प्रतिदिशं प्रतिमन्त्रं दर्भच्चुरकर्म ११ यत्च्चुरेण वर्तयता सुपेशसा वप्तर्वपसि केशान् । शुन्धि शिरो मास्यायुः प्रमोषीरिति लौहायसं च्चुरं केशवापाय प्रयच्छति १२ मा ते केशाननुगात्तेज एतत्तथा धाता दधातु ते । तुभ्यमिन्द्रो बृहस्पतिः सविता वर्च स्रादधुरिति प्रपततोऽनुमन्त्रयते १३ सुहृत्परिग्राह्यानुप्यमानान्हरितगोमये समवचिनोति १४ उप्त्वाय राज्ञो वरुणस्य केशान्सोमो धाता सविता विष्णुरग्निः । तेभ्यो निधानं बहुधान्ववि-न्दन्नन्तरा द्यावापृथिवी स्रवस्युरिति प्रागुदीचीं ह्रियमाणाननुमन्त्रयते १५ स्ररिक्ते पर्याश्रेषयत इति श्रुतिः १६ कर्त्रे वरं ददाति १७ पद्मगुणं तिलपेशलं केशवापाय प्रयच्छति १८ सर्पिष्मदन्नं ब्राह्मणान्भोजयेत् १९ ४०

इति लौगाच्चिसूत्रे गृह्यपञ्चिकायां तृतीयोऽध्यायः

सप्तमे वर्षे ब्राह्मणस्योपायनम् १ नवमे राजन्यस्य २ एकादशे वैश्यस्य ३ आ षोडशाद्ब्राह्मणस्यानतिक्रम आ द्वाविंशाद्राजन्यस्या चतुर्विंशाद्वैश्यस्य ४ स्नातोप्तकेशे यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा रेवतीस्त्वा व्यद्दणन्कृत्तिकाश्चक्रतुस्त्वापसस्त्वा व्यतन्वत धियोऽवयन्नव ग्रा अमृजन् । सहस्रमन्ताँ अभितोऽददन्ताशीतीर्मध्यमवयन्नु नारीरित्यहतं वासोऽभिमन्त्रयते ५ देवीर्देवाय परिधे सवित्रे परिधत्त वर्चस इमं शतायुषं कृणुत जीवसे कमिति परिधापयति ६ जरां गच्छ परिधत्स्व वासोऽभूरापीवानभिशस्तिपावा । शतं च जीव शरदः पुरूची रायश्च पोषमुपसंव्ययस्व । परीमं सोमं तेजसे महे श्रोत्राय दध्मसि । यथैनं जरसं नयज्ज्योक्छ्रोत्राय जागरज्ज्योक्छ्रोत्रेऽधि जागरदिति ब्राह्मणस्य । परीममिन्द्रमोजसे महे क्षत्राय दध्मसि । यथैनं जरसं नयज्ज्योक्क्षत्राय जागरज्ज्योक्क्षत्रेऽधि जागरदिति राजन्यस्य । परीमं मनुमायुषे महे पोषाय दध्मसि । यथैनं जरसं नयज्ज्योक्पोषाय जागरज्ज्योक्पोषेऽधि जागरदिति वैश्यस्य । परीदं वासोऽधिथाः स्वस्तये भवापी-वानभिशस्तिपावा । शतं च जीव शरदः सुवीरो वसूनि चोग्रो विभजस्व जीवन्निति परिहितवाससमनुमन्त्रयते योगे योगे युवा सुवासा इति चैताभ्याम् ७ अग्निमभिदक्षिणमानीय एह्यश्मानमातिष्ठाश्मेव त्वं स्थिरो भव । कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतमिति दक्षिणेन पदाश्मानमास्थापयति ८ मम व्रते हृदयं ते ददामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यमिति नाभिदेशादूर्ध्वं पाणिनोन्मार्ष्टि ९ दधिक्राव्ण इति त्रिर्दधि भक्षयित्वा ब्रह्मचर्यमागामुप मा नयस्वों भूर्भुवः स्वरिति वाचयति १० इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती म आगात् । प्राणापानाभ्यां बलमाभजन्ती सुखा देवी सुभगा मेखलेयम् । ऋतस्य गोप्त्री तपस्तरुत्री घ्नती रक्षः सहमाना अरातिम् । सा नः समन्तमनुपरेहि भद्रे भर्तारस्ते मेखले मा रिषाम । श्रद्धाया दुहिता तपसोऽधि जाता स्वसर्षीणां मन्त्रकृतां बभूव । सा मा मेखले परिरेरिहस्व मयि धेहि तप इन्द्रियं चेति वाचयन्मेखलामाबध्नीते ११ मौञ्जीं त्रिवृतं ब्राह्मणाय प्रयच्छति मौर्वीं धनुर्ज्यां राजन्याय सौत्रीं वैश्याय १२ चित्तस्य समोऽसि दैव्यो ग्रन्थिरसि मा विस्रंस इति ग्रन्थिं कृत्वा मित्रस्य चक्षुर्धरुणं बलाय तेजो यशस्वि स्थविरं समृद्धम् । अनाहनस्यं वसनं चरिष्णु परीदं वाज्यजिनं दधेऽयमिति वाचयन्नैणेयं चर्म ब्राह्मणाय प्रयच्छति वैयाघ्रं राजन्याय रौरवं वैश्याय १३ तच्चक्षुरित्यादित्यमुपस्थापयति १४ को

नामासीत्युक्तेऽभिवादने प्रोक्तेऽसा ग्रहं भो इति प्रत्याह १५ देवस्य ते सवितु प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसा उपनयेऽसौ । सविता ते हस्तमग्रहीदग्निराचार्यस्तव । कस्त्वा कमुपनयेऽसौ काय त्वा परिददामि । कस्य ब्रह्मचार्यसि । प्राणस्य ब्रह्मचार्यस्मीति प्रत्याह १६ प्रजापतये त्वा परिददामि । देवाय त्वा सवित्रे परिददामि । बृहस्पतये त्वा परिददाम्यसौ । देव सवितरेष ते ब्रह्मचारी तं गोपायस्व दीर्घायुः स मा मृत । ग्रग्निपुत्रैष ते । वायुपुत्रैष ते । सूर्यपुत्रैष ते । विष्णुपुत्रैष ते । ब्रह्मपुत्रैष ते ब्रह्मचारी तं गोपायस्व दीर्घायुः स मा मृत । ब्रह्मचार्यसि । ग्रपोऽशान । कर्म कुरु । दिवा मा सुषुप्सीः । वाचं यच्छ १७ मेधां मह्यमिति वाचयति । मेधां मह्यमङ्गिरसो मेधां सप्तर्षयो ददुः । मेधामग्निश्च वायुश्च मेधां धाता ददातु मे । मेधां मे वरुणो राजा मेधामग्निर्ददातु मे । मेधामिन्द्रश्च सूर्यश्च मेधां देवी सरस्वती । या मेधा ग्रप्सरःसु गन्धर्वेषु च यन्मनः । दैवी मनुष्ये या मेधा सा मामाविशतादिह । शरीरं मे विचन्नणं वाङ्मे मधुमद्दुहे । निशामितं निशामये मयि श्रुतम् । यन्मेऽनूक्तं तद्रमतां शकेयं यदनुब्रुवे । प्रियाः श्रुतस्य भूयास्म मेधया संविधीमहि । ग्रवृधमहमवृधस्त्वमसौ सोम्य प्राणस्त्वं मे गोपाय ब्रह्मण ग्राणी स्थ श्रुतं मे मा प्रहासीदिति १८ एताभिरेव चतसृभिरनुप्रवचनीयाञ्जुहुयाद्यजुषोत्तमां छन्दोभ्यः स्वाहेति क्रतुनामधेयेन यथोपाचरितः क्रतुर्भवत्येवं सर्वाणि वेदोक्तानि १९ पश्चादग्नेर्दर्भेषु प्राङासीनः प्रत्यङ्ङासीनाय तत्सवितुरिति सावित्रीं त्रिरन्वाह पच्छोऽर्धर्चशः सर्वामन्ततो यश्च मेधाकामः स्यात् २० पालाशमेकसरं दण्डं नवनीतेनाभ्यज्य तस्य छायायां वाचयति सुश्रवः सुश्रवा ग्रसि यथा त्वं सुश्रवा ग्रस्येवं मा सुश्रवः सौश्रवसं कुरु । यथा त्वं सुश्रवो देवानां वेदस्य निधिगोपोऽस्येवमहं ब्राह्मणानां ब्रह्मणो वेदस्य निधिगोपो भूयासमिति २१ पालाशं दण्डं ब्राह्मणाय प्रयछत्याश्वत्थं राजन्याय नैयग्रोधं वैश्याय २२

स्मृतं च म इति वाचयति । स्मृतं च मेऽस्मृतं च मे तन्मे उभयव्रतम् । निन्दा च मे ग्रनिन्दा च मे तन्मे उभयव्रतम् । विद्या च मे ग्रविद्या च मे तन्मे उभयव्रतम् । श्रद्धा च मे ग्रश्रद्धा च मे तन्मे उभयव्रतम् । सत्यं च मे ग्रनृतं च मे तन्मे उभयव्रतम् । मृतं च मे ग्रमृतं च मे तन्मे उभयव्रतम् ।

श्रुतं च मे अश्रुतं च मे तन्मे उभयव्रतम् । व्रतं च मे अव्रतं च मे तन्मे उभयव्रतम् । यद्ब्राह्मणस्य ब्रह्मणि व्रतं यदग्नेः सेन्द्रस्य सप्रजापतिकस्य सर्षिकस्य सपितृकस्य समनुष्यस्य समनुष्यराजन्यस्य सगन्धर्वाप्सरोजनस्कस्य ससर्पेतरजनस्कस्य सौषधिवनस्पतिकस्य सह ग्राम्यैः पशुभिरारण्यैश्च साकाशस्य सप्रकाशस्य सातीकाशस्य सानूकाशस्य सह यन्म आत्मन आत्मनि व्रतं तन्मे सर्वव्रतम् । इदमहमग्नौ समिधमभ्यादधाम्यग्ने सर्वव्रतो भवामि २३ अधीते हैतेषां वेदानामेकं द्वौ त्रीन्सर्वान्वा यमेवं विद्वानुपनयत इति श्रुतिः २४ कर्त्रे वरं ददाति २५ अहःशेषं स्थापयेत् २६ व्याख्यातं ब्रह्मचर्यम् २७ ४१

त्रैविद्यकम् १ आचार्यस्य विधिः २ यो वेदमधीते पुरस्ताच्चोपरिष्टाच्चांहोमुग्भिः समिधोऽभ्यादध्यात् ३ उक्तं व्रतोपायनविमोचनम् ४ ४२

अथातश्चातुर्होतृकम् १ ब्रह्मचारिकल्पेन व्रतमुपैति २ संवत्सरमष्टौ मासांश्चतुरो मासान्वा ३ शुद्धपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पूर्वेणाग्निं दर्भस्तम्भं निहत्य ब्राह्मणं दक्षिणत उपवेश्य हिरण्यवर्णा इति चतसृभिः समिधोऽभ्यादध्यात् ४ नित्ये व्रतोपायने ब्राह्मणा व्रतपतय इति चतुर्थम् ५ अथ व्रतहोमांश्चतुर्गृहीतैश्चतुर्होतृभिराज्येन तेजस्कामो यावकेन पशुकामोऽन्नाद्येन वीर्यकामः पयसि स्थालीपाकं श्रपयित्वा ब्रह्मवर्चसकामः ६ मनसैकैकं हुतमनुमन्त्रयते ७ यद्वेदव्रतं तदत्र व्रतम् ८ विकारानन्क्रमिष्यामो न चतुर्भिः सहासीत न चतुर्णां समक्षं भुञ्जीत न चतुर्भिः सह भुञ्जीतैकतमो वा ९ एवमपवर्गे १० वास आचार्याय ददाति वरं दक्षिणत आसीनाय ११ ४३

षोडशे वर्षे गोदानमग्नौ वा समाप्ते १ तद्व्याख्यातं जातकर्मणा २ दर्भेष्वासीनं दर्भानध्यधिकृत्य हिरण्यं चाभिषिञ्चत्यग्निकीभिर्वा राजसूयिकीभिर्वा या आपो दिव्या इति द्वाभ्याम् ३ एवं राजानं सावीर्हि देवेति चानुवाकेन यथोक्तमकृत्वज्यानिम् ४ सर्वान्नं हविष्यं क्षीरोदकाभ्यां पितुं नु स्तोषम् इत्यादिनानुवाकेन संयूय तस्यौडुम्बरेण स्रुवेण जुहोति वाजस्य नु प्रसव इति च चतुर्दशभिः ५ यस्य न जुहुयात्तदाग्नीषोमीयस्येध्मेऽपि प्रोक्षेच्छेष उदकमासिच्य तेनाभिशिञ्चति ६ ४४

अथैकाग्नेः समाधानम् १ परमेष्ठिमरणे पुत्रस्याग्निसमाधानम् २ सर्वानुपवासयेत् ३ तमग्निं प्रज्वालयेदाकालमुपव्युषम् ४ माषकणमन्थेनौदुम्बरेण कंसेनाग्निं शमयेद्धिरण्यपाणिं सवितारं वायुमिन्द्रं प्रजापतिम् । देवाँ अङ्गिरसो हवामह इमं क्रव्यादं शमयन्त्वग्निमिति ५ काशानामूते कटे भस्म समोप्य प्रस्थापयेत् क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्ञो गच्छतु रिप्रवाहः । इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्निति ६ निर्दग्धमिति दक्षिणापरस्यां दिशि चतुष्पथे निधायोपधानं सीसं च तस्मिन्नध्यधिमार्जयन्ते सीसे मलिम्लुचामहे शीर्ष्णा चोपबर्हणे । क्रव्यादः समया मृष्ट्वा तं प्रेत सुदानव इति ७ अपास्मदेत्विति चतसृभिरुपस्थाय शं नो देवीरित्युपस्पृश्य प्रतीपमायन्तः पदानि लोभयन्ते नडैर्वेतसशाखया वा मृत्योः पदं लोभयन्त इति । मृत्योः पदं लोभयन्तो यदीमो द्राघीय आयुः प्रतरं दधानाः । आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियास इति ८ अत्रैव शाखां निदध्युः ९ अनड्वाहं पुरस्कृत्य व्रजन्त्यनड्वाहं प्लवमिति । अनड्वाहं प्लवमन्वारभध्वं स वो निर्वक्षद्दुरितानि विश्वा । आरोहत सवितुर्नावं हिरण्मयीं षड्भिरूर्मिभिरमृतत्वं तरेमेति १० प्रत्यागतानक्षतधूममुपस्पर्श्य गवाग्निना च प्रदक्षिणमग्निं त्रिः परियन्ति परीमे गामनेषतेति । परीमे गामनेषत पर्यग्निमहृषत । देवेष्वक्रत श्रवः क इमाँ आदधर्षतीति ११ उदपात्रेऽश्मानं हिरण्यं चावधायाथैनानभिमर्शयन्तेऽश्मन्वतीरिति । अश्मन्वती रीयते संरभध्वमुत्तिष्ठत प्रचरता सखायः । अत्रा जहाम ये असन्नशेवाः शिवान्वयमुत्तरेमाभि वाजानिति १२ ४५

शुचिर्भूतः पितृभ्यो दद्यात् १ औपवस्त्रं भुक्त्वा कुतश्चिदग्निमानीय तं जागरयीतोपशयीत च २ उपकाश उपशान्ते भस्मोद्धृत्य ३ पार्थिवान्संभारान्पूर्वया न्युप्य ४ उत्तरया व्यूह्य ५ तमपरेण यथोत्पादितमुत्पाद्य ६ जानुदघ्नं धारयित्वादधाति भूर्भुवरङ्गिरसामिति पूर्वेण सुगार्हपत्य इति च । सुगार्हपत्यो विनुदन्नरातीरुषामुषां श्रेयसीं श्रेयसीं नः । दीर्घायुत्वाय शतशारदायाधीयस्व महते सौभगायेति ७ सहिरण्या वानस्पत्याः समिध आधाय ८ तुल्येन पूर्णाहुती हुत्वाग्नेयेन स्थालीपाकेन पशुना वा यजेत ९ गौर्वासः कंसो हिरण्यं च दक्षिणा १० ४६

एष औपसदोऽग्निर्वैवाहनो वा १ तस्मिन्पाकयज्ञाः २ तेषामुक्तमुपसमाधानम् ३ यथाचरितं च पवित्रसंस्करणाज्यनिर्वपणग्रहणाधिश्रयणोत्पवनमवेक्षणं च ४ प्रागाज्यभागाभ्यामुक्ता आघारौ ५ युक्तः पुरस्तादिति पञ्चभिराज्यस्य जुहोति ६ आयुषः प्राणमिति सन्तनीर्जुहोति ७ जयाभ्यातानान्राष्ट्रभृतश्च ८ वार्त्राघ्नावाज्यभागौ ९ स्विष्टकृदाज्यभागा अन्तरेणावापः १० नामधेयेन देवतां यजेत तद्देवतया वर्चाग्नेयीं वोहेदग्नीषोमीयामैन्द्राग्नीं वा द्विदेवतेषु वैश्वदेवीं बहुदेवतेषु ११ ऋतुतिथिनक्षत्रदेवताश्च यजेत १२ प्राक् स्विष्टकृत उपहोम इह गावोऽयं यज्ञ आ नः प्रजां । धूर्भिरुपधूर्भिश्च हुत्वेडामग्न इति स्विष्टकृतम् १३ त्वं नो अग्न इति द्वाभ्यां जुहुयादया भूरिति च सर्वप्रायश्चितानि मनो ज्योतिरिति सप्तभिः १४ परिस्तरणान्यनुप्रहरेन्नानुप्रहरेदित्येके १५ एवं सर्वा देवताश्चेज्यानि च १६ ४७

षडाहुतं प्रतिपदि पुत्रकामो ब्रह्मणाग्निः संविदान इति षड्भिराज्यस्य जुहोत्युत्तराभिः षड्भिः स्थालीपाकस्य १ सौविष्टकृते त्रयोदशीम् २ ४८

नक्षत्रयज्ञेषु नक्षत्रदेवतानामृचस्ताभिर्यजेत । अग्निर्मूर्धा हिरण्यगर्भो मरुतो यन्मृडा नो रुद्र सुत्रामाणं तव श्रिये नमो अस्तु सर्पेभ्य आहं पितॄन्सदा सुगो ये ते अर्यमंस्तत्सवितुर्य इमे द्यावापृथिवी वायुरग्रेगा इन्द्राग्नी रोचना मित्रो जनानिन्द्रः सुत्रामा यं ते देवी शं नो देवीर्विश्वे देवा ब्रह्म जज्ञानं वषट् ते विष्ण आ मे गृहा इमं मे वरुणोपप्रागादहिरिव भोगैः पूषा गा अन्वेतु नः प्र वां दंसांसि यमो दाधारेति प्रत्यृचम् १ ४९

अथोपहारः १ यथाचरितमन्नं साधयित्वा सावित्रेण देवतायै बलिं हरेत् २ यथाचारं जपः ३ उक्तः शेषः ४ ५०

अथ पशुकल्प उक्तः १ पूर्वेण शाखां निहत्य २ तस्मिंस्तूष्णीं सर्वं यन्न लुप्तार्थम् ३ देवताहोमवर्जम् ४ प्रागाज्यभागाभ्यां दर्भेण पशुमुपाकरोति प्रोक्षति पाययति पर्यग्निं करोति ५ घृतमवघ्राप्यापाव्या जुहोति ६ उल्मुकं हरति ७ दर्भमास्तृणाति ८ तस्मिन्यथोक्तं संज्ञापयन्ति ९ संज्ञप्ते यथोक्तमद्भिः प्राणायतनानि स्नापयति १० उत्खिद्य वपां शाखां विशाखां च प्रच्छाद्य

चरमेऽङ्गारे वपां निगृह्यान्तरा शाखाग्नी हृत्वाभिघार्य श्रपयति ११ शृतां दर्भेषूदगग्रेषु निधायाज्यभागपरिवप्यौ हुत्वा वपां देवताया उपनामयेदुप्यपरिवप्यौ हुत्वा सदर्भे वपाश्रपरया अग्ना अनुप्रहृत्यापोहिष्ठीयाभिर्मार्जयित्वोक्तान्यवदानानि प्राक् स्विष्टकृतो देवतायै बलिं हरेत् १२ यथाचारं जप उक्तः शेषः १३ ५१

अथ शूलगवः १ सर्वेभ्यः कामेभ्यः २ शरदि वसन्ते वा ३ अनियमः स्यादित्येके ४ गवां मध्य उत्तरतो ग्रामस्य वेद्याकृतिं कृत्वा शाखाभिः परिवार्यातष्टं यूपं तूष्णीमुच्छ्रयन्ति ५ तमपरेण यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा भवाय शर्वायेशानायेश्वराय पशुपतयेऽधिपतय इति गामुपाकरोति पशुं वा ६ प्रतिनाम प्रतिद्रव्यं प्रत्यनुवाकमिति षट् पुरोडाशानेककपालांस्तूष्णीमुपचरिताञ्श्रपयित्वा प्राक् स्विष्टकृतः षड्लोहितबलीन्पात्रेषु दर्भेषु वा कल्पयित्वा नमस्ते रुद्र मन्यव इति षड्भिरनुवाकैरुपतिष्ठत ईशानं त्वा शुश्रुमेति च सर्वत्रानुषजति ७ प्रभूतान्ब्राह्मणान्भोजयन्ति ८ नापक्वं ग्रामं प्रवेशयन्ति ९ शिष्टं भूमावर्पयन्ति सचर्म १० अनपेक्षमाणा आयान्ति ११ ५२

औपसदेऽग्नौ सायं प्रातरग्निहोत्रदेवताभ्यो जुहुयात् १ पर्वणि भार्यामुपवास्य दर्शपूर्णमासदेवताभ्यो जुहुयात् २ नवस्याग्रायणदेवताभ्योऽज्यानीभिरभिजुहुयात् ३ स्विष्टकृदनुमन्त्रणमुक्तं प्राशनं च ४ ५३

वैश्वदेवस्य सिद्धस्य सर्वतोऽग्रयस्य जुहोत्यग्नये सोमाय मित्राय वरुणायेन्द्रायेन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यः प्रजापतयेऽनुमत्यै धान्वन्तरये वास्तोष्पतयेऽग्नये स्विष्टकृते च १ तक्षोपतक्षाभ्यामित्यभितः २ पूर्वेणाग्निमम्बा नामासीति सप्त ३ गृह्याभ्यो नन्दिनि सुभगे सुमङ्गलि भद्रंकरीति स्रक्तिष्वभिदक्षिणम् ४ स्थूणायां ध्रुवायां श्रियै हिरण्यकेश्यै वनस्पतिभ्यश्चेति ५ धर्माधर्मयोर्द्वारि मृत्यवे च ६ उदधाने वरुणाय ७ विष्णव इत्युलूखले ८ मरुद्भ्य इति दृषदि ९ उपरि शरणे वैश्रवणाय राज्ञे भूतेभ्यश्चेति १० इन्द्रायेन्द्रपुरुषेभ्य इति पूर्वार्धे ११ यमाय यमपुरुषेभ्य इति दक्षिणार्धे १२ वरुणाय वरुणपुरुषेभ्य इति पश्चार्धे १३ सोमाय सोमपुरुषेभ्य इत्युत्तरार्धे १४

ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये १५ ऊर्ध्वमाकाशाय १६ स्थण्डिले दिवा-चरेभ्यो भूतेभ्य इति दिवा १७ नक्तंचरेभ्यो भूतेभ्य इति नक्तम् १८ शेषं पि-तृभ्यः पिण्डान्निदधाति १९ उदकलशमुपनिधाय स्वस्त्ययनं वाचयति २० ५४

इति लौगाक्षिसूत्रे गृह्यपञ्चिकायां चतुर्थोऽध्यायः

अथार्तवस्वस्त्ययनानि १ श्रावण्यां चत्वारि हवींष्यासादयेदपूपं स्थालीपाकं धानाः सक्तूनुभयमक्षतानाम् २ वषट् ते विष्ण इत्यपूपस्य जुहोति रात्री व्यख्यदिति स्थालीपाकस्य नमो अस्तु सर्पेभ्य इति धानानां ये वाद इति सक्तूनाम् ३ येषु वा यातुधाना इति दर्व्यावटेषु सक्तूनाम् ४ उभयत्राखुराजाय बलिं हरेदाद्यन्तयोर्वा ५ ५५

आयूतिके कपोते भयार्ते सक्तुषु भस्मनि वा पदं दृष्ट्वा देवः कपोत इत्यष्टर्चेन स्थालीपाकस्य जुहोति १ परीमे गामनेषतेति गां परिणयन्ति २ सा दक्षिणा ३ ५६

आश्वयुज्यामश्वान्महयन्ति सर्वाणि च वाहनानि १ उत्तरतो ग्रामस्य वेद्याकृतिं कृत्वा शाखाभिः परिवार्याहतैश्च वासोभिः सर्वरसैर्घटान्पूरयित्वा दिक्षु निदध्यात्सर्वबीजैश्च पात्राण्यवान्तरदिक्षु २ तमपरेण यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा तिस्रो देवता यजेत वरुणमग्निमश्विनावाश्वयुजीं च ३ इज्यमानेऽश्वान्योजयन्ति सर्वाणि च वाहनानि ४ प्रदक्षिणं देवयजनं कवचिनः त्रिः परियन्ति ५ प्रहर्षान्कुर्वन्ति ६ इष्टे यथार्थं संप्रयान्ति ७ गौर्वासः कंसो हिरण्यं च दक्षिणा ८ रसा बीजानि वासांसि ९ ५७

अथ गोमतां विधिः १ इह प्रजा यासामूधः पृषदश्वा घृतप्रतीक इति पृषातकस्य जुहोति २ अम्भः स्थेति लवणमभिमन्त्र्य गोभ्यो दद्यात् ३ रौद्री-भिरभिजुहुयान्नित्याभिश्च ४ दधिक्राव्ण इति पृषातकस्य प्राश्नाति ५ उपसृष्टा गावो वसन्ति ६ ५८

अथ वृषोत्सर्गः १ कार्त्तिक्यां पौर्णमास्यां रेवत्यां वाश्वयुज्यस्य गवां मध्ये सुषमिद्धमग्निं कृत्वा पौष्णं चरुं पयसि श्रपयित्वा पूषा गा अन्वेतु न इति पौष्णस्य जुहोति २ इह रडिरिति हुत्वा ३ रुद्राञ्जपित्वा ४ जीववत्सायाः पयस्विन्याः पुत्रमेकरूपं द्विरूपं वा यो वा यूथं छादयेद्यूथे च तेजस्वितमः स्यात्तमलंकृत्य चतस्रोऽष्टौ वा वत्सतर्यस्ताश्चालंकृत्यैतं युवानं पतिं वो ददाम्यनेन क्रीडन्तीश्चरथ प्रियेण । मा हास्महि प्रजया मा तनूभिर्मा राधाम द्विषते सोम राजन्निति ५ तस्य दक्षिणे कर्णे पिता वत्सानामिति जपित्वोत्सृज्य प्राचीमुदीचीं वा दिशं प्रकालयित्वा सह वत्सतरीभिः सर्पिष्मदन्नं ब्राह्मणान्भोजयेत् ६ ५९

आग्रहायण्यामेतान्येव चत्वारि हवींष्यासादयेद्यानि श्रावण्यां यवमयस्त्वपूपः १ एवा वन्दस्वेत्यपूपस्य जुहोति २ उप ते गा इति स्थालीपाकस्य ३ उक्तं धानासक्तूनाम् ४ अव ते हेड इति वारुणीभिरभिजुहुयान्नित्याभिश्च त्वामग्ने वृषभं चेकितानं संवत्सरस्य प्रतिमामिति च ५ उदग्दशमास्तरणमास्तीर्य शिरस्त उदकं निधाय व्रीहियवानोप्यापोहिष्ठीयाभिः शय्यामभ्युक्ष्य त्रातारमिन्द्रमिति शमीशाखया शय्यां निर्मार्ष्टि ६ ऐन्द्राग्नं वर्मेत्यहतं वासः परिधाय स्योना पृथिवीति दक्षिणेन पार्श्वेण संविशति ज्योतिष्मतीत्यन्तेन ७ अभ्युक्षणादिसंवेशनान्तमेवं द्विरुत्तरम् ८ चैत्र्यामुद्रोहणमुपरिशय्या नात्र स्थालीपाको न शाखया निर्मार्ष्टि ९ ६०

तिस्रोऽष्टका पितृदेवत्याः १ ऊर्ध्वमाग्रहायण्यास्त्रयस्तामिस्रास्तेष्वष्टमीष्व-ष्टकायज्ञाः २ प्रथमां शाकेन द्वितीयां मांसेन तृतीयामपूपैः ३ ऋतूनां पत्नीति षड् द्वे द्वे स्थालीपाकस्य जुहोति ४ देवा ग्रावाण इति सर्वत्र तृतीया ५ इयमेवेत्यनुवाकेन पञ्चभिः पञ्चभिरभिजुहुयात् ६ ६१

गवा चेदष्टका स्यात्पशुना वा तदुक्तम् १ वह वपामिति वपां जुहुयात् २ पेश्योऽवदानस्थानेऽङ्गारिणीः कुर्यात् ३ यथाकामं मञ्जुका ४ ये समाना इति द्वाभ्यां स्थालीपाकस्य पेशीनां च जुहोति ५ स्विष्टकृद्धर्मेण वहान्नं वह मांसं जातवेदः पितृभ्य इति जुहुयात् ६ ६२

हविरर्हानुपवेश्य १ पितॄनावाहयिष्यामीत्युक्त्वा २ अपयन्त्वसुरा इति द्वाभ्यां तिलैः सर्वतोऽवकीर्य ३ एत पितर आगच्छत पितर आ मे यन्त्वन्तर्दधे पर्वतैरिति जपित्वा ४ यास्तिष्ठन्त्यमृता वाग्यन्मे मातेत्ययुग्भ्यः पाद्यमानीय ५ उदकानि चानयेदेताभिरेव ६ आदित्या रुद्रा वसव इत्येतान्समीक्ष्य ७ अग्नौ करवाणीत्युक्त्वा ८ अग्निं परिस्तीर्य सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इत्यग्नौ हुत्वा ९ ये मामकाः पितर एतद्वः पितरोऽयं यज्ञ इति तिसृभिः कल्पितान्नमभिमृशति १० एषा व ऊर्गामासु पक्वमिति क्षीरं घृतं वासिच्य ११ अमुष्मै स्वधा नमोऽमुष्मै स्वधा नम इति यथा-लिङ्गमनुमन्त्र्य भोजयेत् १२ प्राश्नन्तु भवन्त इत्युक्त्वा यन्मे प्रकामादिति भुञ्जानान्समीक्ष्याहोरात्रैर्यद्वः क्रव्यात्स्वधां वहध्वमिति चैताभिः १३ पृथिवी दर्विरिति निपरणं कुर्यात् १४ येऽत्र पितरः प्रेता इति वासांसि निदध्यात् १५ ऊर्जं वहन्तीरित्यपः परिषिच्य १६ मा मे क्षेष्ठेति सतृणमन्नमभ्युक्ष्य १७ विषदमन्नमानीय कच्चित्संपन्नं भो इति उक्त्वा तृप्यन्तु भवन्त इत्युक्त्वा १८ तृप्तानाचामयित्वा यन्मे राम इति प्रदक्षिणं कृत्वा १९ प्रत्येत्याभिरमन्तु भवन्त इत्युक्त्वा देवाश्च पितरश्चेत्यनुवाकशेषेणोपतिष्ठते २० ६३

द्वितीयस्य प्रथमोद्धृतं हविष्यैरुपसिच्य १ आवाहनादि सिद्धं संप्रदानम् २ पूर्वेण निपरणं व्याख्यातम् ३ ६४

प्रातरन्वष्टक्यम् १ एतेनैव धर्मेण संप्रदाय निपरणं कुर्यात् २ षट् कर्षूः कुर्याद्दक्षिणायताः पूर्वापराः प्रादेशमात्रीश्चतुरङ्गुलपृथ्वीस्तावदन्तरास्तावदव-खाताः ३ तासां दक्षिणतः खराः ४ तेष्वग्नीन्विहृत्यावोक्ष्य कर्षूर्दक्षिणा-ग्रान्दर्भानास्तीर्य ५ पिण्डपितृयज्ञावृता पूर्वासु तिसृषु निधाय मज्ञान-मुपनिनीय दुग्धेनाभितः परिषिच्य ये चात्र रसाः स्युरेतद्भवद्भ्य इत्युक्त्वा तृप्यन्तु भवन्त इत्युक्त्वा ६ एवमपरासु स्त्रीभ्यो दद्यान्मज्ञवर्जं सुरां तूपनिनीय मन्थेनाभितः परिषिच्य ये चात्र रसाः स्युरेतद्भवतीभ्य इत्युक्त्वा तृप्यन्तु भवत्य इत्युक्त्वा ७ प्रेष्याः पिण्डान्भक्षयेयुर्निषादा वाग्नौ वाप्सु वा ब्राह्मणान्वा भोजयेत् ८ ६५

अथ प्रथमश्राद्धस्याष्टकया धर्मो व्याख्यातः १ एकवन्मन्त्रानूहेत् २ पेश्यः

प्रातरित्यनियमः ३ तिस्त्रः कर्षूः कुर्यात्त्रिष्वग्निषु कृत्वैकैकं पिराडमुत्सृज्य प्रथमामन्नस्य पूरयेद्दधिमध्विति द्वितीयां घृतमांसमिति तृतीयाम् ४ एवं मासि मासि ५ एवं सांवत्सरिकम् ६ चतुर्थं पिराडमुत्सृज्य त्रैधं कृत्वा पिराडेषु निदध्यात्संसृजतु त्वा पृथिवी वायुरग्निः प्रजापतिः संसृज्यध्वं पूर्वेभिः पितृभिः सह । समाना वः सं वो मनांसीति ७ एवमुदकानि ८ ६६

अथेतरस्य श्राद्धस्याष्टकया धर्मो व्याख्यातः १ प्रथमेन पञ्चकेन २ आवाहनादि सिद्धं संप्रदानम् ३ पूर्वेण निपरणं व्याख्यातम् ४ ६७

अथेतरस्य पशुश्राद्धस्याष्टकया धर्मो व्याख्यातः १ मध्यमेन पञ्चकेन २ आवाहनादि सिद्धं संप्रदानम् ३ पूर्वेण निपरणं व्याख्यातम् ४ ६८

अथेतरस्य मासिमासिश्राद्धस्याष्टकया धर्मो व्याख्यातः १ उत्तमेन पञ्चकेन २ आवाहनादि सिद्धं संप्रदानम् ३ पूर्वेण निपरणं व्याख्यातम् ४ ६९

अथ फाल्गुन्यां तैलापूपस्य जुहोति १ अर्यमा देवता ये ते अर्यमन्निति २ अथेन्द्रारयाः ३ प्रससाहिष इति तुरिडलस्य जुहोति ४ गोलका रुद्रदेवत्याः ५ अदितिर्द्यौरदितिरिन्द्राणी पत्येत्योदनयोः शाकपललाक्तयोः ६ ७०

गावो भग इति द्वाभ्यां गोयज्ञस्य १ सीरा युञ्जन्तीति तिसृभिरायोजनीयस्य २ प्रथमोत्तमाभ्यां युनक्ति ३ मध्यमया फालम् ४ शुनं सुफाला इति प्रदक्षिणं द्वे कृषति ५ लाङ्गलं पवीरवमित्यपरे द्वे ६ घृतेन सीतेति सीतायज्ञस्य ७ या ओषधय इति बीजवपनीयस्य ८ विमुच्यध्वमिति विमोचनीयस्य ९ त्रातारमिन्द्रमिति द्वे पर्ययणस्य १० एवं प्रथमोद्वपनस्य ११ उदुत्तमं मुमुग्ध्युदुत्तमं वरुणेति वरुणयज्ञस्य १२ सं वरत्रान्हिररायकोशमवटमिति कूपयज्ञस्य १३ प्र वां दंसांसीति मराडपानाम् १४ देवेभ्यो वनस्पत इति वनस्पतियज्ञस्य १५ वनस्पते वीड्वङ्ग इति रथयज्ञस्य १६ धन्वना गा इति द्वाभ्यां धनुर्यज्ञस्य १७ रात्री व्यख्यदिति द्वाभ्यां रात्रियज्ञस्य १८ ७१

समुपहतेऽद्भुते वा शान्त्यै शमीं शमुकं शाम्यवाकमश्वत्थप्लक्षन्यग्रोधोदुम्बरं

दूर्वां च प्राचीनप्रसृतानि षड् दर्भपिञ्जूलानि सुमनसश्चापामार्गं सर्वबीजानि सीतालोष्टं गोमयं हिरण्यं वल्मीकवपां चाद्भिः संसृजति सं वः सृजामीति द्वाभ्याम् १ या ओषधय इत्यनुवाकेन संयूयापास्मदेत्विति चतसृभिः संप्रोक्षणम् २ देवाद्भुतेषु यन्नो भयमित्यष्टर्चेन स्थालीपाकस्य जुहोति यद्देवा देवहेडनमिति तिसृभिर्भद्रं कर्णेभिरिति चतसृभिरैन्द्राग्नं वर्मेति च ३ उक्तं संप्रोक्षणम् ४ धूर्भिरुपधूर्भिश्च हुत्वा पुनः संप्रोक्षणम् ५ ७२

राका होलाके १ इन्द्राणीमासु नारिष्विति कुमारीणां यज्ञं यजेत् २ देवता अप्रज्ञायमाना आग्नेय्या यजेद्वैश्वदेव्या वा ३ स्वस्तिपुण्येष्वनादेशे त्रिकाः ४ महाव्याहृतयोऽष्टर्चं चात्र कल्पयति । अग्निर्मूर्धेति चतस्र उपप्रयन्तो अध्वरमिति द्वे कदा चन स्तरीरसीति द्वे धुरश्चोपधुरश्चोपधुरश्च ५ ७३

इति लौगाक्षिसूत्रे गृह्यपञ्चिकायां पञ्चमोऽध्यायः

<u>Credits</u>

Sources: The Kāṭhakagṛhyasūtra with extracts from three commentaries, an appendix and indexes, edited for the first time by Dr. Willem Caland, Lahore 1925
(same as Dayānanda Mahāvidyālaya Saṃskṛta Granthamālā, 9)
Typescript: Prepared by Konrad Klaus
Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection

# कौषीतकगृह्यसूत्रम्

## प्रथमाध्याये प्रथमः खण्डः

उत्थाय प्रातराचम्याहरहः स्वाध्यायमधीयीत अद्या नो देव सवितः इति द्वे अपेहि मनसस्पते इति सूक्तम् ऋतं च सत्यं च इति सूक्तमादित्या अवहि-ख्यत इति वर्गद्वयम् महि वो महतामिति सूक्तशेषः इन्द्रश्रेष्ठानि इत्येका हंसः शुचिषत् इत्येका नमो महद्भ्यः इत्येका ममाग्ने वर्चः इति सूक्तम् येनेदमिति सूक्तम् स्वस्ति नो मिमीतामिति पञ्च ऋचः १ चत्वारः पाकयज्ञाः २ हुतोऽहुतः प्रहुतः प्राशित इति ३ पञ्चसु बहिः शालायाः ४ विवाहे चूळाकरण उपन-यने केशान्ते सीमन्तोन्नयन इति ५ उपलिप्योद्धत्य प्रोक्ष्य अग्निमुपसमाधाय ६ निर्मन्थ्यैके विवाहे ७ उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्यै पाणिं गृह्णीयात् । जाया लक्षणसंपन्ना स्यात् ८ यस्या अभ्यात्ममङ्गानि स्युः स-माः केशान्ताः ९ आवर्तावपि यस्यै स्यातां प्रदक्षिणौ ग्रीवायां षड्वीरान् ज-नयिष्यतीति विद्यात् १०

## अथ द्वितीयः खण्डः

जायामुपग्रहीष्यमाणः अनृक्षराः इति वरकान् गच्छतोऽनुमन्त्रयते १ अभि-गमने पुष्पफलयवानादाय उदकुम्भं च अहमयं भो इति त्रिः प्रोच्य वरिते प्राङ्मुखा गृह्याः प्रत्यङ्मुखा आवहमानाः कन्यां वरयन्ति इमाममुष्मा इत्थं गो-त्राय इति २ उभयतो रुचिते पूर्णपात्रीमभिमृशन्ति पुष्पाक्षतफलहिरण्य-मिश्रान् । अनाधृष्टमस्यनाधृष्यं देवानामोजो अभिशस्तिपा अनभिशस्त्य-ञ्जसा सत्यमुपगेषं सुविते मा धाः इत्युत्थाय कन्याया आचार्यः आ नः प्र-जाम् इति मूर्ध्नि निषिञ्चति प्रजास्त्वयि दधामि । पशूंस्त्वयि दधामि । तेजो ब्रह्मवर्चस्यं त्वयि दधामि इति च ३

## अथ तृतीयः खण्डः

प्रतिश्रुते जुहोति १ चतुरश्रं गोमयेन स्थण्डिलमुपलिप्य पूर्वयोर्विदिशयोः दक्षिणां प्राचीं प्रित्र्य उत्तरां दैवे प्राचीमेवैक उदक्संस्थां मध्ये रेखां लिखि-त्वा तस्या दक्षिणत उपरिष्टादूर्ध्वामेकां मध्य एकामुत्तरत एकां तामभ्युक्ष्य

अग्निं दधामि मनसा शिवेनायमस्तु सङ्गमनो वसूनाम्
मा नो हिंसीः स्थविरं मा कुमारं शं नो भव द्विपदे शं चतुष्पदे

इत्यग्निं प्रणीय तूष्णीं वा प्रदक्षिणम् । अग्नेः समन्तात् पाणिना सोदकेन त्रिः परिमार्ष्टि २ तत् समूहनमित्याचक्षते ३ सकृदपसव्यं पित्र्ये ४ अथ परिस्तरणम् ५ दक्षिणेन कुशानादाय सव्येनापनोति ६ दक्षिणं जान्वाच्य प्रागग्रैः कुशैः परिस्तृणाति ७ त्रिवृत् पञ्चवृद्वा ८ पुरस्तात् प्रथमम् ९ अथ पश्चान्मूलान्यग्रैः प्रच्छादयति सर्वांश्चावृतो दक्षिणतः प्रवृत्तय उदक्संस्था भवन्ति १० सकृदपसव्यं पित्र्ये ११ नाज्याहुतिषु नित्यं परिस्तरणम् १२ नित्याहुतिषु वा १३

## अथ चतुर्थः खण्डः

दक्षिणतो ब्रह्माणं प्रतिष्ठाप्य उदपात्रं वा भूर्भुवः सुवः इत्युत्तरतः प्रणीताः कुशतरुणे अविषमे अविच्छिन्नाग्रे अनन्तर्गर्भे प्रादेशेन प्रमाय कुशेन १ छिनत्ति पवित्रे स्थः इति १ द्वे त्रीणि वा भवन्ति २ वैष्णव्यौ इत्यभ्युक्ष्य त्यं चिदश्वमिति प्रदक्षिणग्रन्थिम् ३ प्रागग्रे धारयन् आज्यस्थाल्या उपरि महीनां पयोऽसि इत्याज्यं निर्वपति ४ उदीचोऽङ्गारान्निरूह्य इषे त्वा इत्यधिश्रित्य त्रिरवद्योत्य कुशतरुणे प्रत्यस्य ऊर्जे त्वा इति त्रिरुदगुद्वास्याङ्गरान् प्रत्यूह्य अङ्गुष्ठोपकनिष्ठिकाभ्यामूर्ध्वाग्रे प्रह्वीकृत्य आज्ये प्रत्यस्य त्रिरुत्पुनाति सावितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः इति ५ आज्यसंस्कारः सर्वत्र ६ नासंस्कृतेन जुहुयात् ७ स्रुवे चापः सवितुर्वः इति ८ ताः प्रोक्षणीः स्रुवं प्रतितप्य कुशैः संमृज्य पुनः प्रतितप्य निधाय एवं स्रुचं च सस्थालीपाके प्रोक्षिता आपः प्रणीताः प्रोक्षणीश्च ९ स्रुचः पात्रमर्थलक्षणग्रहणम् १०

## अथ पञ्चमः खण्डः

दक्षिणेन कुशानादाय सव्येनापनोति १ दक्षिणं जान्वाच्य परिधिभिस्त्रिभिरच्छिन्नाग्रैरग्निं परिदधाति २ पश्चाद् दक्षिणत उत्तरतश्च ३ अलंकृत्य कुशतरुणाभ्यां प्रदक्षिणमग्निं त्रिः पर्युक्षति महान्तं कोशम् इति ४ हुत्वा च ५ ते अनुप्रहरति ६ तूष्णीं सकृदपसव्यं पित्र्ये ७ अभिघारितमिध्ममग्नौ

जुहोति स्विध्मा यद्वनधितिः इति ८ विष्णोर्हस्तोऽसि इति दक्षिणेन मूले स्रुवम् ९ स्रुवेणाज्याहुतीर्जुहोति १० स्रुचा स्थालीपाकं द्विरवद्यति ११ त्रिर्जामदग्न्यानाम् १२ उपस्तरणाभिघारणप्रत्यभिघारणं च सस्थालीपाके आ स्विष्टकृतः १३ उत्तरार्धात् स्विष्टकृतः १४ द्विरभिघारयति १५ न प्रत्यनक्ति १६ उत्तरपश्चार्धादग्नेरारभ्याविच्छिन्नं दक्षिणपूर्वार्धे जुहोति त्वमग्ने प्रमतिः इति १७ दक्षिणपश्चार्धादग्नेरारभ्याविच्छिन्नमुत्तरपूर्वार्धे जुहोति यस्येमे हिमवन्तः इति १८ आघारौ १९ आग्नेयमुत्तरमाज्यभागं सौम्यं दक्षिणम् २० अग्ने यं यज्ञमिमं यज्ञमिति २१ अग्नये स्वाहा सोमाय स्वाहा इति वा २२ मध्ये अन्या आहुतयः २३ नाज्याहुतिषु नित्यावाज्यभागौ स्विष्टकृच्च २४ नित्याहुतिषु चेति च माण्डूकेयः २५ अग्निर्जनिता स मेऽमूं जायां ददातु स्वाहा । सोमो जनिमान् स मामुया जनिमन्तं करोतु स्वाहा । पूषा ज्ञातिमान् स मामुष्यै पित्रा मात्रा भ्रातृभिर्ज्ञातिमन्तं करोतु स्वाहा इत्याज्येन २६ महाव्याहृतिसर्वप्रायश्चित्तान्तरमेतदावापस्थानमाज्यहविषि २७ व्याहृति स्विष्टकृतोः स्थालीपाके २८ ततं म आपः उद्वयं तमसस्परि उदुत्यम् चित्रमिमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने तदस्तु मित्रावरुणा वषट्ते विष्णो इष्टेभ्यो वषळनिष्टेभ्यः भेषजं दुरिष्टयै निष्कृत्यै दौराध्यै ऋद्ध्यै समृद्ध्यै देवीभ्यस्तनूभ्यः यत इन्द्र भयामहे त्वं नः पश्चात् अद्याद्याश्वश्वः सूर्यो नो दिवस्पान्तु भूर्भुवः स्वः अयाश्चाग्ने इति सर्वप्रायश्चित्ताहुतीर्हुत्वा मनसा प्राजापत्यं महाव्याहृतयश्चतस्र इत्येता आहुतीर्हुत्वा सव्ये पाणौ ये कुशास्तान् दक्षिणेनाग्रे संगृह्य मूले सव्येन तेषामग्रं स्रुवे समनक्ति मध्यमाज्यस्थाल्यां मूलं च । अथ चेत् स्थालीपाकेषु स्रुच्यग्रं मध्यमं स्रुवे मूलमाज्यस्थाल्यांताननुप्रहृत्य अग्नेर्वासोऽसि इति समिधोऽभ्याधाय यथोक्तं पर्युक्षणमनुप्रहृत्य परिधीन्नवा नित्ये प्रणीताः परिगृह्य दिशो व्युदुक्षति त्रिस्त्रिः प्राच्यां प्रथममेवं प्रदक्षिनं प्रतिदिशमूर्ध्वं च प्राचीं निनीय उदीचीर्वा ताः स्पृष्ट्वा प्राणान्मुखं च संमृशति । उत्सर्जनं ब्रह्मणः २९

## अथ षष्ठः खण्डः

व्याख्यातः प्रतिश्रुते होमकल्पः प्रकृतिर्भूतिकर्मणाम् १ सर्वासां चाज्याहु-तीनां शाखापशूनां चरुपाकयज्ञानां च २ अनाम्नातमन्त्रास्वादिष्टदेवतासु अमुष्मै स्वाहा इति शुद्धेन ३ यदि पाकयज्ञाः समानकालाः स्युरावापस्थाने

प्रधानान्येवावर्तयेदानुपूर्व्येण ४ त एते अप्रयाजा अननुयाजा अनिळा अनिगदा असामिधेनीकाश्च सर्वे पाकयज्ञा भवन्ति ५ तदपि श्लोकाः--

हुतोऽग्निहोत्रहोमेन अहुतो बलिकर्मणा
प्रहुतः पितृकर्मणा प्राशितो ब्राह्मणे हुतः

अनूर्ध्वज्ञुर्व्यूळ्हजानुः जुहुयात् सर्वदा हविः
न हि बाह्यहुतं देवाः प्रतिगृह्णन्ति कर्हिचित्

रौद्रं च राक्षसं पित्र्यमासुरं चाभिचारिकम्
उक्त्वा मन्त्रं स्पृशेदाप आलभ्यात्मानमेव च ७

अथ सप्तमः खण्डः

अथैतां रात्रीं श्वस्तृतीयां वा कन्यां वहिष्यन्तीति तस्यां रात्र्यामतीते निशाकाले सर्वसुरभिमिश्रैः फलोत्तमैः सशिरस्कां कन्यामाप्लाव्य रक्तमहतं वासः परिधाप्य प्रदक्षिणमग्निं पर्याणीय पश्चादग्नेः कन्यामुपवेश्य आघारावाज्यभागौ हुत्वा अग्नये सोमाय प्रजापतये मित्राय वरुणाय इन्द्राय इन्द्राण्यै गन्धर्वाय भगाय पूष्णे त्वष्ट्रे बृहस्पतये राज्ञे प्रत्यानीयति १ चतस्रोऽष्टौ वा अविधवाः शाकपिण्डिभिः सुरयान्नेन च तर्पयिन्वा चतुरा नर्तनं कुर्युः २ एता एव देवताः पुंभ्यो वैश्रवणमीशानं च ३ ततो ब्राह्मणभोजनम् ४

अथ अष्टमः खण्डः

स्नातं कृतमङ्गलं वरमविधवाः सुभगा युवत्यः कुमार्यै वेश्म प्रपादयन्ति । तासामप्रतिकूलः स्यादन्यत्राभक्ष्यपातकेभ्यः १ ताभिरनुज्ञातोऽथास्यै वासः प्रयच्छति रैभ्यासीत् इति २ युवं वस्त्राणि इत्यस्मै ३ चित्तिरा उपबर्हणम् इत्यञ्जनकोशमादत्ते ४ समञ्जन्तु विश्वे देवाः इति समञ्जनीया ५

यथेयं शचीं वावातां सुपुत्रां च यथादितिम्
अविधवां चापालामेवं त्वमिह रक्षतु

इति दक्षिणे पाणौ शललीं त्रिवृतां ददाति ६ रूपं रूपमित्यादर्शं सव्ये ७

रक्तकृष्णमाविकं क्षौमं वा त्रिमणिं प्रतिसरं ज्ञातयोऽस्या बध्नन्ति नीललोहितमिति ८ मधुमतीरोषधीः इति मधूकानि बध्नाति ९ विवाहे गामर्हयित्वा गृहेषु गतेषु कान्तानां माधुपर्किक्यः १० न त्वेवामांसोऽर्घ्य-स्स्यादधियज्ञमधिविवाहम् ११ कुरुत इत्येव ब्रूयात् १२ बृहस्पतये त्वा मह्यं वरुणो ददातु । सोऽमृतत्वमशीय । त्वद्राष्ट्रयोरधिमयो मह्यं प्रतिगृह्णते इति वाससी प्रतिगृह्य प्रैधायोपस्पृश्य कोऽदात् । कस्मा अदात् इति कन्याम् १३ संराज्ञी श्वशुरे इति पिता भ्राता वास्यग्रेण मूर्धनि जुहोति । स्रुवेणावति-ष्ठन्नासीनायाः प्राङ्मुख्याः प्रत्यङ्मुखः १४ हुत्वान्वारब्धायां महाव्याहृतिभिर्हुत्वा समस्ताभिः चतुर्थी प्रतीयेतैतस्यां चोदनायामेवमनादेशे १५ सर्वेष्वेव तु भूतिकर्मसु पुरस्ताच्चोपरिष्टाच्चैताभिरेव जुहुयात् १६ एहि सूनरी इत्युत्थाप्य गृभ्णामि ते सौभगत्वाय हस्तमित्युत्तानेन दक्षिणेन पाणिनोत्तानं दक्षिणं पाणिं गृह्णाति साङ्गुष्ठं प्राङ्मुख्याः प्रत्यङ्मुखस्तिष्ठन् १७ पञ्च चोत्तरा जपति अमोहमस्मि सा त्वं सा त्वमस्यमोहं द्यौरहं पृथिवी त्वं सामाहम् ऋक्त्वं तावेव विवहावहै प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहूंस्ते सन्तु जरदष्टयः इति १८ उदकुम्भं नवं भूर्भुवः स्वः इति पूरयित्वा पुँनामस्य वृक्षस्य सक्षीरान् पलाशान् सकुशानोप्य हिरण्यं चेत्येके । तं ब्रह्मचारिणे वाग्यताय प्रदाय प्रागुदीच्यां दिशि ताः स्थेयाः प्रदक्षिणा भवन्ति । दक्षिणत एकेषाम् १९ अश्मानं चोत्तरत उपस्थाप्य एहि सूनरी इत्युक्त्वा एह्यश्मानमातिष्ठ । अश्मेव त्वं स्थिरा भव । अभितिष्ठ पृतन्यतः । सहस्व पृतनायतः इति दक्षिणेनास्याः प्रपदेनाश्मा-नमाक्रमय्य विश्वा उत त्वया वयमिति प्रदक्षिणमग्निं पर्याणीय तेनैव मन्त्रेण द्वितीयं वसनं प्रदाय २० लाजान् शमीपालमिश्रान् पिता भ्राता वा अस्या अञ्जलावावपति २१ उपस्तरणाभिघारणे प्रत्यभिघारणं च लाजेषु २२ तान् जुहोति इयं नार्युपब्रूते लाजानावपन्तिका । शिवा ज्ञातिभ्यो भूयासं चिरं जिवतु मे पतिः । स्वाहा इति तिष्ठन्ती जुहोति २३ पतिर्मन्त्रं जपति २४ अश्माक्रमणादेवं द्वितीयमेवं तृतीयं तूष्णीं कामेन चतुर्थम् २५ प्रजापते न त्वदेतानि इति प्राजापत्यं हुत्वा यत्पाकत्रा इति स्विष्टकृतं च सर्वत्र २६ अग्नये स्विष्टकृते स्वाहा इति वा २७ उदङ सप्तपदानि प्रक्रमयेत् । इष एकपदी । ऊर्जे द्विपदी । रायस्पोषाय त्रिपदी । मायो भव्याय चतुष्पदी । प्रजाभ्यः पञ्चपदी । ऋतुभ्यः षट्पदी । सखा सप्तपदी भव इति । विष्णुस्त्वा नयतु इति सर्वत्रानुषजति २८ आपोहिष्ठीयाभिस्तिसृभिः स्थेयाभिरद्भिर्मार्जयित्वा

मूर्ध्न्यवसिच्य ब्राह्मणेभ्यः किंचिद् दद्यात् २९ सर्वत्र स्थालीपाकादिषु कर्मसु ३० आचार्याय वरं ददातीत्याह ३१ सूर्यो विदुषे वा धूयम् ३२ गौर्ब्राह्मणस्य वरः ३३ ग्रामो राजन्यस्य ३४ अश्वो वैश्यस्य ३५ अधिरथं शतं दुहितृमते ३६ ज्ञेभ्योऽश्वं ददाति ३७

## अथ नवमः खण्डः

प्र त्वा मुञ्चामि इति तिसृभिः गृहान् प्रतिष्ठमानायाम् १ जीवां रुदन्ति इति रुदत्याम् २ अथ रथाक्षस्योपाञ्जनं पत्नी कुरुते अभिव्ययस्व खदिरस्य सारमित्येतया सर्पिषा ३ शुची ते चक्रे द्वे ते चक्रे इति चक्रयोः ४ पूर्वया पूर्वमुत्तरयोत्तरम् ५ उस्त्रौ च ६ खे रथस्य इत्येतया फलवतो वृक्षस्य शम्याकत्रेष्वेकैकां वयां निधाय नित्यावभिमन्त्र्य अथोस्त्रौ युञ्जन्ति युक्तस्ते अस्तु दक्षिणः इति द्वाभ्याम् ७ शुक्रावनड्वाहौ इत्येतेनार्धर्चेन युक्तावभिमन्त्र्य सुकिं शुकमिति रथमारोहन्त्याम् ८ अग्निष्ठस्त्वग्रतो गच्छेत् ९ मा विदन् परिपन्थिनः इति चतुष्पथे १० ये वध्वः इति श्मशाने ११ वनस्पते शतवल्शः इति वनस्पतावर्धर्चं जपति १२ अथ यदि रथाङ्गं विशीर्येत छिद्येत वा आहिताग्नेर्गृहं कन्यां प्रवेश्य य ऋते इत्येतया संदध्यात् । त्यं चिदश्वमिति ग्रन्थिं स्वस्ति नो मिमीतामिति पञ्चर्चं जपति १३ सुत्रामाणमिति नावमारोहन्त्याम् १४ अश्मन्वतीः इति नदीं तरन्त्याम् १५ यदि वा युक्तेनैव उद्व ऊर्मिः इत्यगाधे प्रेक्षणं च १६ इह प्रियं प्रजया ते समृद्ध्यतामिति सप्त गृहान् प्राप्तायाम् १७ कृताः परिहाप्य १८

## अथ दशमः खण्डः

गृहान् प्रपद्य पश्चादग्नेरानडुहे चर्मण्युपविश्य दर्भेष्वन्वारब्धायां पतिश्चतस्त्रो जुहोति अग्निना देवेन पृथिवीलोकेन लोकानामृग्वेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा वायुना देवेनान्तरिक्षेण लोकेन लोकानां यजुर्वेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा सूर्येण देवेन दिवो लोकेन लोकानां सामवेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा चन्द्रेण देवेन दिशां लोकेन लोकानां ब्रह्मवेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा इति १ भूर्या ते पतिघ्नयलक्ष्मी देवरघ्नी जारघ्नी तां करोमि तेऽसौ इति वा २ द्वितीयया महाव्याहृत्या द्वितीया उपहिता ३ तृतीयया तृतीया ४ समस्ताभिः चतुर्थी ५ अघोरचक्षुः इत्या-

ज्यलेपेन चक्षुषी विमृज्य कया नश्चित्र आभुवत् इति तिसृभिः केशान्तानभिमृश्य उत त्या दैव्या भिषजा इति चतस्रो जपित्वा मूर्धनि संस्रावम् ६ अत्र हैके कुमारमुत्सङ्गमानयन्त्युभयतः सुजातम् आते योनि-मित्येतयर्चा ७ अपिवा तूष्णीमेव ८ तस्याञ्जलौ फलानि दत्वा पुण्याहं वाचयति ९ पुंसुवती ह भव इति १० वाचंयमावास्तामा ध्रुवस्य दर्शनात् ११ नक्षत्रेषु दृश्यमानेषु ध्रुवं दर्शयति १२ ध्रुवैधि पोष्या मयि इति ध्रुवं पश्यामि इति ध्रुवां विन्देय इति ब्रूयात् १३ दधिक्राव्णो अकारिषमिति दध्योदेनं सह भुञ्जीयातां पिबतं च तृप्णुतं च इति तृचेन च १४ त्रि-रात्रमधःशायिनावक्षारालवणाशिनौ स्याताम् १५ एवमेवाध्वनि १६ न सह भुञ्जीत १७ संवत्सरं न मिथुनमुपेयातां द्वादशरात्रं षड्रात्रम् १८ त्रिरा-त्रमन्ततः १९ सायंप्रातर्वैवाहिकमग्निं परिचरेयातां यवैर्व्रीहिभिर्वा २० अग्नये स्वाहा इति सायम् २१ सूर्याय स्वाहा इति प्रातः २२ अग्नये स्विष्टकृते स्वाहा इत्युभयोः २३

पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ
पुमानिन्द्रश्चाग्निश्च पुमांसं वर्धतां मयि स्वाहा

इति पूर्वां गर्भकामः २४ दशरात्रमविप्रवासः २५

अथ एकादशः खण्डः

अथ चतुर्थ्यां त्रिरात्रे निवृत्ते स्थालीपाकस्य जुहोति १ पयसि स्थालीपाकः पाकयज्ञेषु २ वचनादन्यत् ३ अग्ने प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्ति-रसि यास्याः पतिघ्नी तनूस्तामस्या अपजहि स्वाहा । वायो प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या अपुत्र्या तनूस्तामस्या अपजहि स्वाहा । सूर्य प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या अपशव्या तनूस्तामस्या अपजहि स्वाहा । अर्यमणं नु देवं कन्या अग्निमयक्षत । स इमां देवो अर्यमा प्रेतो मुञ्चातु नामुतस्स्वाहा । वरुणं नु देवं कन्या अग्निमयक्षत । स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतस्स्वाहा । पूषणं नु देवं कन्या अग्निमयक्षत । स इमां देवः पूषा प्रेतो मुञ्चातु नामुतस्स्वाहा । प्रजापते न स्वत् इति सप्तमी ४ सौविष्टकृत्यष्टमी ५

## अथ द्वादशः खण्डः

अध्यण्डामूलं पेषयत्यृतुवेलायाम् उदीर्ष्वातः पतिवती इति द्वाभ्यामन्ते स्वाहाकाराभ्यां नस्तो दक्षिणतो निषिञ्चेत् १ गन्धर्वस्य विश्वावसोर्मुखमसि इत्युपस्थं प्रजनिष्यमाणोऽभिमृशेत् २ समाप्तेऽर्थे जपेत् प्राणे ते रेतो दधाम्यसौ इति ३ अपान्यानुप्राण्यात् ४

यथा भूमिरग्निगर्भा यथा द्यौरिन्द्रेण गर्भिणी
वायुर्यथा दिशां गर्भ एवं गर्भे दधामि तेऽसौ
इति वा ५

आ ते योनिं गर्भ एतु पुमान् बाण इवेषुधिम्
आ वीरो अत्र जायतां पुत्रस्ते दशमास्यः

तेषां माता पिपृहि जातानां जनयामि च
पुमांस्त्वं पुत्रमाधेहि पुमाननुजायताम्

पुंसि वै पुरुषो रेतः तत्स्त्रियामनसिञ्चतु
तथा तदब्रवीद् धाता तत्प्रजापतिरब्रवीत्

प्रजापतिर्व्यदधात् सविता व्यकल्पयत्
त्वष्टा वै रूपं संदधान्नेजमेष परापतात्

स्त्रीषु यमन्यान् स्वादधात् पुमांस्त्वमददादिह
यानि भद्राणि बीजानि पुरुषा जनयन्ति च

तानि भद्राणि बीजान्यृषभा जनयन्ति नौ
तेऽभिष्ट्वं पुत्रं जनयत्सुप्रसूर्धेनुका भव

अभिक्रन्दन् वीळयस्व गर्भमाधेहि सादय
वृषाणं वृषन्नाधेहि प्रजायै त्वा हवामहे

यस्यै योनिं प्रति रेतो दधातु पुमान् पुत्रो जायतां गर्भे अस्मिन्
तं पिपृहि दशमास्योऽन्तरुदरे स जायतां श्रेष्ठतमस्वानाम्
इति वा ६

तृतीये मासि पुंसवनम् ७

पुष्येण श्रवणेन वा सोमांशुं पेषयित्वा कुशदण्डकं वा न्यग्रोधस्य वा स्कन्धस्यान्त्यां शुङ्गां यूपस्याग्निष्टां वा संस्थिते वा यज्ञे जुह्वः संस्रावम् । अग्निना रयिम् तन्नस्तुरीयम् समिद्धाग्निर्वनवत् पिशङ्गरूपः इति चतसृभिरन्ते स्वाहाकाराभिः नस्तो दक्षिणतो निषिञ्चेत् ८

अथ त्रयोदशः खण्डः

चतुर्थे मासि गर्भरक्षणम् १ ब्रह्मणाग्निस्संविदानः इति षट् स्थालीपाकस्य हुत्वा अक्षीभ्यां ते नासिकाभ्यामिति सूक्तेन प्रत्यृचमाज्यलेपेनाङ्गान्यनुविमृज्यात् २

अथ चतुर्दशः खण्डः

सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनम् १ स्नातामहतवासिनीं पश्चादग्नेरुपवेश्य स्थालीपाकस्य जुहोति २ मुद्गौदनमित्येके ३ पुंवदुपकरणानि स्युः ४ नक्षत्रं च ५ धाता ददातु दाशुषे धाता प्रजाया उत राय ईशे नेजमेष परापत इति तिस्रः प्रजापते इति षष्ठी ६ त्रिश्वेतया शलल्या दर्भसूच्या वोदुम्बरशलाटुभिस्सह मध्यादूर्ध्वं सीमन्तमुन्नयति भूर्भुवस्स्वः इति ७ उत्सङ्गे निधाय त्रिवृते कृत्वा कण्ठे बध्नाति अयमूर्जावतो वृक्ष ऊर्जीव फलिनी भव इति ८ अथाह वीणागाथिनौ राजानं संगायत इति यो वान्यो वा वीरतरः इति ९ उदपात्रे अक्षतानवनीय विष्णुर्योनिं कल्पयतु नेजमेष परापत इति षळृचेन पाययेत् राकामहमिति चतसृभिः १० अथास्या उदरमभिमृशेत् सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुश्छन्दांस्यङ्गानि यजूंषि नाम साम ते तनूः वामदेव्यं मध्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं धिष्ण्यं शफाः । मोदमानीं गापयेन्महाहैमवतीं वा ११ ऋषभो दक्षिणा १२

## अथ पञ्चदशः खराडः

काकादन्या मशकादन्या कोशातक्या बृहत्या कालकीतकस्येति मूलानि पेषयित्वोपलेपयेद् देशे यस्मिन् प्रजायेत १ रक्षसामपहत्यै २

## अथ षोडशः खराडः

अथ जातकर्म १ जातं कुमारं त्रिरभ्यपान्यानुप्राणयात् २ ऋचा प्राणिहि । यजुषा समनिहि । साम्नोदेनिहि इति जातमभिमन्त्र्य ३ सर्पिर्मधुनी दध्युदके च सन्नीय ४ एष एव मधुपर्कः ५ व्रीहि यवौ वा सन्निकृष्य ६ त्रिः प्राशयेज्ञातरूपेण प्र ते यच्छामि मधुमन्मखाय वेदं प्रसूतं सवित्रा मघोना । आयुष्मान् गुपितो देवताभिश्शतं जीव शरदो लोक अस्मिन्नसौ । इति ७ नक्षत्रनामात्र प्रब्रूयात् ८ नामास्य दधाति घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरम् ९ अपि वा षळक्षरम् १० अयुग्मवददन्त्यं कुमार्यै ११ कृतं कुर्यात् १२ न तद्धितान्तम् १३ तदस्य माता पिता च विद्याताम् १४ दशम्यां व्यावहारिकं ब्राह्मणजुष्टम् १५ कृष्णस्य शुक्लकृष्णानि लोहितानि च रोमाणि मर्षीं कारयित्वैतस्मिन्नेव चतुष्टये चतुः प्राशयेदिति माराडूकेयः । भूर्ऋग्वेदं त्वयि दधाम्यसौ स्वाहा । भुवो यजुर्वेदं त्वयि दधाम्यसौ स्वाहा । स्वस्सामवेदं त्वयि दधाम्यसौ स्वाहा । भूर्भुवस्स्वर्वाकोवाक्येतिहासपुराणान् सर्वान् वेदांस्त्वयि दधाम्यसौ स्वाहा इति १६ मेधाजननं दक्षिणे कर्णे वाग् इति त्रिः १७ वाग्देवी मनसा संविदाना प्राणेन वत्सेन सहन्द्रप्रोक्ता जुषतां त्वा सौमनसाय देवीं महीमिन्द्रावाणी चीस्सलिला स्वयंभूः इति चानुमन्त्रयीत ८ शणसूत्रेण विग्रथ्य जातरूपं दक्षिणे पाणावपिनह्योत्थानादूर्ध्वं दशम्यां ब्राह्मणेभ्यो दद्यात् १९ अमा वा कुर्वीत २०

## अथ सप्तदशः खराडः

दशरात्रे चोत्थानम् १ मातापितरौ शिरस्स्नातावहतवासिनौ कुमारश्च २ एतस्मिन्नेव सूतकेऽग्नौ स्थालीपाकं श्रपयित्वा जन्मतिथिं हुत्वा त्रीणि च भानि सदैवतानि ३ तन्मध्ये जुहुयाद् यस्मिन् जातः स्यात् ४ पूर्वं तु दैवतं सर्वत्र ५

आयुष्टे अद्य गीर्भिरयमग्निर्वरेरायः

पुनस्ते प्राण आयातु परा यद्त्मं सुवामि ते

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरत्ततादिमम्

त्वं सोम महे भगमिति दशमीं स्थालीपाकस्य हुत्वा ब्राह्मणान् स्वस्ति वाच्य नामधेयं प्रकाशं कृत्वा । एवमेव मासि मासि जन्मतिथिं हुत्वोर्ध्वमा संवत्सरात् ६ गृह्याग्नौ जुहोति ७

अथ अष्टादशः खराडः

चतुर्थे मासि निष्क्रमणिका १ स्नातः कुमारोऽलङ्कृतः सर्वसुरभिगन्धैः माल्यैश्च यथोपपादं मातुरङ्कगतो या वान्या मातृस्थाने २ सकुशपाणिः कुशैर्होतारमन्वारभते ३ सं पूषन्नध्वनः इति सूक्तेन प्रत्यृचं स्थालीपाकस्य हुत्वा ब्राह्मणान् स्वस्ति वाच्य पूर्वं देवायतनं गत्वा सातपत्रः कुमारः सुहृदगृहाणि च ४ ततः पर्यैति ५ अथ ब्राह्मणभोजनम् ६

अथ एकोनविंशः खराडः

षष्ठे मास्यन्नप्राशनम् १ आजमन्नाद्यकामस्य २ तैत्तिरं ब्रह्मवर्चसकामस्य ३ मात्स्यं जवनकामस्य ४ घृतौदनं तेजस्कामस्य ५ मध्वोदनमायुष्कामस्य ६ दध्योदनमिन्द्रियकामस्य ७ त्तीरोदनं पशुकामस्य ८ दधिमधुघृतमिद्रमन्नं प्राशयेत् ९

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः
प्र प्र दातारं तारिष ऊर्ध्वं नो धेहि द्विपदे चतुष्पदे

यच्चिद्धि ते महश्चित्
इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण सोमराजन्
मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथासत्

इति हुत्वा अग्न आयूंषि इत्यभिमन्त्र्य महाव्याहृतिभिः प्राशनम् १० शेषं माता

प्राश्नीयात् ११

अथ विंशः खण्डः

सप्तमेऽष्टमे वा मासि कर्णवेधनम् १ यथा कुलधर्मं वा २ तिष्यपुनर्वस्वोः श्रवणधनिष्ठयोर्वा ३ पूर्वोत्तरेषु वा ४ सर्वेषां यथानुकूलं वा ५ अभि त्वा देव सवितः इति तिसृभिस्त्रिमधुरस्य हुत्वा हिरण्मय्येतरया वा सूच्या आश्रुत् कर्ण इति दक्षिणं कर्णं विध्वा उत त्वा बधिरं वयमिति सव्यम् ६ रक्तकङ्कणं रक्तसूत्रं वा छिद्रयोः प्रतिनिदध्यात् राकामहमित्येतया ७ अथ ब्राह्मणान् त्रिमधुरेण स्वस्तीर्वाच्य ततोऽभिवादयीत ८

अथ एकविंशः खण्डः

संवत्सरे ब्राह्मणस्य चूळाकर्म १ तृतीये वा वर्षे २ पञ्चमे क्षत्रियस्य ३ सप्तमे वैश्यस्य ४ संवत्सरे वा सर्वेषाम् ५ अग्निमुपसमाधाय व्रीहियवानां तिलमाषानामिति च पात्राणि पूरयित्वानळुहं गोमयं कुशभित्तिं च केश-प्रतिग्रहणमादर्शं लोहक्षुरं नवनीतं चोत्तरत उपनिदधाति ६

सं पृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमाः
पृञ्चतीर्मधुना पयो मन्द्रा धनस्य सातये

इत्युष्णास्वप्सु शीताः सिञ्चति ७ आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे । त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तत्ते अस्तु त्र्यायुषमिति शीतोष्णाभिरद्भिर्दक्षिणं केशपक्षं त्रिरभ्यनक्ति ८ एवमेव नवनीतेन च्छित्वा ९ ओषधे त्रायस्वैनमिति कुशतरुणमन्तर्निदधाति १० केशान् कुशतरुणं चादर्शेन स्पृष्ट्वा तेजोऽसि स्वधितिष्टे पिता मैनं हिंसीः इति लोहक्षुरमादत्ते ११

येनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्
येन धाता बृहस्पतेरिन्द्रस्य चावपच्छिरः
तेन ब्रह्माणो वपतेदमस्यायुष्मान् दीर्घायुरयमस्तु वीरोऽसौ

इति केशाग्राणि च्छिनत्ति कुशतरुणं च १२ एवं द्वितीयम् १३ एवं तृतीयम्

१४ एवं द्विरुत्तरतः १५ निकक्षयोः षष्ठसप्तमे गोदानकर्मणि १६ एतदेव गोदानकर्म यच्चूळाकर्म षोळशे वर्षेऽष्टादशे वा १७ तृतीये तु प्रवपने गां ददाति १८ अहतं च वासो येनाच्छन्नो वपति १९ तूष्णीमावृताः कुमारीणाम् २० प्रागुदीच्यां दिश्यपां वा समीपे बह्वोपधिके देशे केशान् निखनन्ति २१ नापिताय धान्यपात्राणि नापिताय धान्यपात्राणि २२

इति कौषीतकगृह्ये प्रथमोऽध्यायः

## अथ द्वितीयोऽध्यायः

### प्रथमः खण्डः

गर्भाष्टमेषु वर्षेषु ब्राह्मणमुपनयीतैणेयेनाजिनेन १ गर्भदशमेषु वा २ गर्भैकादशेषु क्षत्रियं रौरवेण ३ गर्भद्वादशेषु वैश्यं गव्येन ४ आ षोडशाद् ब्राह्मणस्यापतिता सावित्री ५ आ द्वाविंशात् क्षत्रियस्य ६ आ चतुर्विंशाद्वैश्यस्य ७ काषायं वासो ब्राह्मणस्य ८ माञ्चिष्ठं क्षत्रियस्य ९ हारिद्रं वैश्यस्य १० अहतेन वाससा सर्वे ११ मेखलिनः १२ मौञ्जी मेखला ब्राह्मणस्य १३ धनुर्ज्या क्षत्रियस्य १४ ऊर्णासूत्रं वैश्यस्य १५ तेषां दण्डाः १६ पालाशो बैल्वो वा दण्डो ब्राह्मणस्य १७ नैयग्रोधः खादिरो वा क्षत्रियस्य १८ औदुम्बरो वैश्यस्य १९ एवमेव होमार्थे २० घ्राणान्तिको ब्राह्मणस्य २१ ललाटान्तिकः क्षत्रियस्य २२ केशान्तिको वैश्यस्य २३ सर्वे वा सर्वेषाम् २४ येनाबन्धेनोपनयीत आचार्याधीनं तत् २५ परिवाप्योपनयेत्तु २६ आप्लाव्याळङ्कृत्य २७ अग्नय इन्द्रायादित्याय विश्वेभ्यो देवेभ्य इति हुत्वा जघनेनाग्निमुपतिष्ठतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरस्तिष्ठन् तिष्ठन्तमुपनयेत् २८

इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती न आगात्
प्राणापानाभ्यां बलमाविशन्ती सखा देवी सुभगा मेखलेयम् इति

त्रिर्मेखलां परिवृत्य त्रिवृतात्रिवृतेनैकग्रन्थिरेकः २९ त्रयोऽपि वा ३० यज्ञस्योपवीतेनोपव्ययामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय सर्वेषां वेदानामाधिपत्याय यशसे ब्रह्मवर्चसाय त्वा इत्युपवीतेन ३१ उपनह्य दक्षिणं बाहुमुद्धृत्य शिर उपधाय वामेंऽसे प्रतिष्ठापयति ३२ एवं यज्ञोपवीती ३३

विपरीतं पित्र्ये ३४ उच्छिष्टमित्यजीनेन च ३५

### अथ द्वितीयः खण्डः

अद्भिरञ्जलिं पूरयित्वाथैनमाह को नामासि इति १ असावहं भोः इतीतरः २ समार्षः इत्याचार्यः ३ समार्षोऽहं भोः इतीतरः ४ ब्रह्मचारी भव इत्याचार्यः ५ ब्रह्मचारी भवानि इतीतरः ६ भूर्भुवःस्वः इत्यञ्जलावञ्जलींस्त्रीनासिच्य दक्षिणोत्तराभ्यां पाणिभ्यां पाणी संगृह्य जपति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयाम्यसौ इति ७ गणानां त्वा इति गणकामम् ८ आगन्तामरिषण्यत इति यौधम् ९ महाव्याहृतिभिर्व्याधितम् १० भगस्ते हस्तमग्रभीत् पूषा ते हस्तमग्रभीत् सविता ते हस्तमग्रभीदर्यमा ते हस्तमग्रभीन्मित्रस्ते हस्तमग्रभीन्मित्रस्त्वमसि धर्मणाग्निराचार्यस्तवासावहं चोभौ । अग्न एतं ते ब्रह्मचारिणं परिददामि इन्द्र एतं ते ब्रह्मचारिणं परिददाम्यादित्य एतं ते ब्रह्मचारिणं परिददामि विश्वे देवा एतं वो ब्रह्मचारिणं परिददामि दीर्घायुत्वाय शतशारदाय सर्वेषां वेदानामाधिपत्याय सुश्लोकाय स्वस्तये इति ११ ऐन्द्रीमावृतमावर्तस्वादित्यस्यावृतमन्वावर्तस्व इति प्रदक्षिणं पर्यावृत्य दक्षिणेन प्रादेशेन दक्षिणमंसमन्वारभ्य जपति १२ भूर्भुवःस्वररिष्यतस्ते हृदयस्य प्रियो भूयासं मात्वमध्यवच्छित्वासौ इति १३ तूष्णीमपसव्यं पर्यावृत्याथास्योर्ध्वाङ्गुलिं पाणिं हृदये निधाय जपति मम व्रते हृदयं ते दधामि मम चित्तमनुचित्तं ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यं कामस्य ब्रह्मचार्यस्यसौ इति १४ तेनैव मन्त्रेण तथैव पर्यावृत्य दक्षिणेन प्रादेशेन दक्षिणं बाहुमन्वारभ्याह ब्रह्मचार्यसि समिधमाधेहि अपोऽशान कर्म कुरु दिवा मा सुषुप्थाः वाचं यच्छा समिदाधानात् १५ एषा ते अग्ने समित् इत्यभ्यादधाति समिधम् १६ तूष्णीं वा १७

### अथ तृतीयः खण्डः

संवत्सरे सावित्रीमन्वाह त्रिरात्रेऽन्वक्षं वा १ गायत्रीं ब्राह्मणायानुब्रूयात् २ त्रिष्टुभं क्षत्रियाय ३ जगतीं वैश्याय ४ सावित्रीं त्वेव ५ उत्तरेणाग्निमुपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः ६ वैश्वामित्रीं गायत्रीं सावित्रीं भो अनुब्रूहि इतीतरः ७ तत्सवितुर्वरेण्यम् इत्येतां सप्रणवां सव्याहृतीं पच्छोऽर्धर्चशोऽनवानम् ८ यदि त्रिरात्रे संवत्सरे वा भैक्षाचरणान्तं कृत्वोपासीत ९ आपो

नाम स्थ शिवा नाम स्थौजा नाम स्थाजरा नाम स्थामृता नाम स्थाभया नाम स्थ तासां वोऽशीय सुमतौ मा धत्त इत्येनं त्रिरप आचमय्य स्वस्तिनो मिमीतामिति पञ्चर्चेन दण्डं प्रयच्छति १० दृतेरिव ते इति कमण्डलुम् ११ वरो दक्षिणा १२ तच्चक्षुः इत्यादित्यमुपस्थाय प्रदक्षिणं परिक्रम्य भिक्षते ग्रामम् १३ मातरं त्वेव प्रथमाम् १४ या वैनं न प्रत्याचक्षीत १५ आचार्याय भैक्षं वेदयीत १६ अनुज्ञातो गुरुणा भुञ्जीत १७ अहरहः समिदाधानं भैक्षाचरण-मधःशय्या गुरुशुश्रूषेति ब्रह्मचारिणो नित्यानि १८

तदपि श्लोकः--
क्षेत्रं हिरण्यं गां वासश्छत्रोपानहमन्ततः
धान्यमन्नमथो शाकं गुरवे प्रीतिमावहेत् इति

## अथ चतुर्थः खण्डः

अथानुवचनस्य १ अग्नेरुत्तरत उपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः २ अभिवाद्य पादावाचार्यस्य च पाणी प्रक्षाल्य मूले कुशतरुणान् गृह्णाति ३ तान् सव्येनाचार्योऽग्रे संगृह्य दक्षिणेनाद्भिः परिषिञ्चति ४ अधीहि भोः इत्युक्त्वा आचार्यः ५ ओंपूर्वा व्याहृतयः सावित्रीं भो अनुब्रूहि इतीतरः ६ ओंपूर्वा व्याहृतयः सावित्रींस्तेऽनुब्रवीमि इत्याचार्यः ७ ऋषीन् भो अनुब्रूहि इतीतरः ८ ऋषींस्तेऽनुब्रवीमि इत्याचार्यः ९ देवता भो अनुब्रूहि इतीतरः १० देवता-स्तेऽनुब्रवीमि इत्याचार्यः ११ छन्दांसि भो अनुब्रूहि इतीतरः १२ छन्दांसि तेऽनुब्रवीमि इत्याचार्यः १३ श्रद्धामेधे भो अनुब्रूहि इतीतरः १४ श्रद्धामेधे तेऽनुब्रवीमि इत्याचार्यः १५ येन येनर्षिणा यो यो यद्देवत्यो यच्छन्दा वा स्यात् तथा तथा तं तं मन्त्रमनुब्रूयात् १६ अपि वाविन्दन् ऋषिदैवतछन्दांस्येवमेवै-कैकमृषिमनुवाकं वानुब्रूयात् १७ क्षुद्रसूक्तेष्वनुवाकं वानुब्रूयात् १८ यावद्वा गुरुर्मन्येत १९ आद्योत्तमे वानुब्रूयादृषेरनुवाकस्य २० आद्युत्तमा इत्येषा प्रकृ-तिरिति २१ कामं सूक्तादावाचार्यः २२ इत्येतदृषिस्वाध्यायेन व्याख्यातम् २३ समा ते कुशतरुणानादाय आनळुहेन गोमयेन मूलकुण्डं कृत्वा यथो-क्तमद्भिः परिषिञ्चति २४ अथेमास्तर्पयति २५

## अथ पञ्चमः खराडः

अग्निस्तृप्यतु । प्रजापतिस्तृप्यतु । विरूपाक्षस्तृप्यतु । ब्रह्मा । वेदाः । देवाः । ऋषयः । सर्वाणि च च्छन्दांसि । ओङ्कारः । वषट्कारः । व्याहृतयः । सावित्री । यज्ञाः । द्यावापृथिवी । अन्तरिक्षम् । अहोरात्राणि । साङ्ख्याः । सिद्धाः । समुद्राः । नद्यः । गावः । गिरयः । क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसः । नागाः । वयांसि । साध्याः । विप्राः । यक्षाः । रक्षांसि । पिशाचाः । भूतानि । अथ निवीतीभूत्वा । मधुच्छन्दाः । शतर्चिनः । माध्यमाः । गृत्समदः । विश्वामित्रः । वामदेवः । अत्रिः । भरद्वाजः । वसिष्ठः । प्रगाथाः । पावमान्यः । क्षुद्रसूक्ताः । महासूक्ताः । एवमन्तानि तृप्यन्तु । अथ संवीती भूत्वा । स्मृतिं तर्पयामि । धृतिं तर्पयामि । श्रद्धां तर्पयामि । मेधां तर्पयामि । प्रज्ञां तर्पयामि । धारणां तर्पयामि १ छन्दांसि तृप्यन्ताम् । ऋषयस्तृप्यन्ताम् । देवतास्तृप्यन्ताम् २ अथ प्राचीनावीती दक्षिणां दिशमन्वीक्षमाणः । सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यमहाभारतधर्माचार्याः । जानन्तिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाराडव्यमाराडूकेयाः । सुयज्ञसांख्यायनजातूकरार्याः । पैङ्गशाम्बव्यैतरेयाः । गार्गी वाचक्नवी । बडवा प्रातिथेयी । सुलभा मैत्रेयी । कहोळं कौषीतकम् । महाकौषीतकम् । सुयज्ञम् । साङ्ख्यायनम् । ऐतरेयम् । महैतरेयम् । पैङ्गयम् । महापैङ्गयम् । शाम्बवकम् । महाशाम्बवकम् । बाष्कळम् । शाकळम् । गार्ग्यम् । महाजपत्रम् । सुजातवक्त्रम् । औदवाहिम् । सौजामिम् । बाभ्रव्यं सोमशर्माणम् । पाञ्चालं वेदमित्रम् । आचार्यं शौनकम् ३ ये चान्ये आचार्यास्ते चापि तृप्यन्तु ४ प्रतिपुरुषं पितरः ५ सुयज्ञः । सांख्यायनः । पैलः । कहोळः । कौषीतकिः । कहोळाय कौषीतकये स्वधास्तु ६

## अथ षष्ठः खराडः

अहःशेषं स्थानमुपवासश्च १ अपराह्णेऽक्षतधाना भिक्षित्वा आज्याहुतिधर्मेणाग्नौ पाणिना जुहुयात् सदसस्पतिमद्भुतमिति प्रत्यृचं सूक्तशेषेण २ भैक्षैराचार्यं स्वस्तिवाच्य अरराये समित्पाणिः सन्ध्यामुपास्ते नित्यं वाग्यत उत्तरापरमभिमुखोऽन्वष्टमदेशमर्धास्तमिते मराडले आ नक्षत्राणां दर्शनात् । अतिक्रान्तायां महाव्याहृतीः सावित्रीं स्वस्त्ययनानि च जपित्वा ३ एवं प्रातः

प्राङ्मुखस्तिष्ठन्ना मण्डलदर्शनात् ४ उदिते प्राध्ययनम् ५ अहरहः सायंप्रातरग्निं प्रणीयोपसमाधाय परिसमूह्य पर्युक्ष्य सुसमिद्धे जुहोति अग्नये समिधमाहारिष बृहते जातवेदसे तया त्वमग्ने वर्धस्व समिधा ब्रह्मणा वयं स्वाहा इति प्रथमाम् । एधोऽस्येधिषीमहि इति द्वितीयाम् । समिदसि समेधिषीमहि इति तृतीयाम् । एषा ते अग्ने समित्तया वर्धस्व चाप्यायस्व च । बर्धिषीमहि च वयमा च प्यासिषीमहि इति चतुर्थीं ६ अथ पर्युक्ष्य

अग्निः श्रद्धां च मेधां च विनिपातं स्मृतिं च मे
ईळितो जातवेदाः शुनं नः संप्रयच्छतु

इत्यग्निमुपतिष्ठते ७ स एतेषां वेदानामेकं द्वौ त्रीन् सर्वान् वाधीते य एवं हुत्वाग्निमुपतिष्ठते ८ तदपि श्लोकाः--

अश्वत्थः खदिरोऽर्कश्च प्लक्षो वैकङ्कतश्शमी
काष्मर्यश्च शकृद्वन्यं सीरवाहाश्च सर्वशः

वेणुं वर्ज्याथ वान्यानि निम्बारलसकण्टकान्
करञ्जाम्रासवर्णाश्च वर्ज्याः कान्ताश्च नामतः

होमार्थी तु प्रयुञ्जीत नित्ये नैमित्तिकेऽपि वा
पालाशी तु स्रुगेव स्याद्वा पार्णः खादिरः स्रुवः इति ९

## अथ सप्तमः खण्डः

अथ व्रतादेशनम् १ तस्योपनयनेन कल्पो व्याख्यातः २ न सावित्रीमन्वाह ३ दण्डप्रदानान्तमित्येके ४ उदगयने शुक्लपक्षेऽहोरात्रं ब्रह्मचर्यमुपेत्याचार्योऽमांसाशी ५ चतुर्दशीं परिहाप्याष्टमीं नवमीं च ६ आद्योत्तमे चैके ७ यां वान्यां भप्रशस्तां मन्येत तस्यां शुक्रियब्रह्मचर्यमादिशेत ८ शुक्रियब्रह्मचारी भव इत्याचार्यः ९ शुक्रियब्रह्मचारी भवानि इतीतरः १० एवमुत्तरेषां यद्यद्व्रतमादिशेत तस्य तस्य नाम्ना निर्दिशेत् ११ त्रिरात्रं ब्रह्मचर्यं चरेत् १२ द्वादशरात्रं संवत्सरं वा १३ यावद्वा गुरुर्मन्येत १४ गोदानस्य च १५ शाक्वरं तु संवत्सरं माहाव्रतिकमौपनिषदं च १६ पूर्णे काले चरितब्रह्मचर्ये

शयुचार्हस्पत्यान्ते वेदे प्रोक्ते रहस्यं श्रावयिष्यन् कालनियमं चादेशेन प्रतीयेन १७ कृतप्रातराशस्य १८ अपराह्णेऽपराजितायां दिशि हुत्वाचार्यः अथैनं यास्वेव देवतासु परिदत्तो भवति तास्वेनं परिपृच्छति अग्नाविन्द्र आदित्ये विश्वेषु च देवेषु चरितं ते ब्रह्मचर्यमिति १९ चरितं भो इति प्रत्युक्ते पश्चादग्नेः प्राङ्मुखे स्थिते अहतेन वाससाचार्यः प्रदक्षिणं मुखं त्रिः परिवेष्ट्य उपरिष्टाद्दशाः कृत्वा यथा न संभ्रश्येत २० त्रिरात्रं समिदाधानं भैक्षाचरणमधःशय्यां गुरुशुश्रूषां च कुर्वन् वाग्यतोऽप्रमत्तोऽरण्ये देवकुलेऽग्निहोत्र उपवसख इति २१ अत्र हैके तानेव नियमांस्तिष्ठतो रात्र्यामेवोपविशन्ति २२ आचार्योमांसाशी ब्रह्मचारी ग्रामान्निष्क्रामन्नैतानीक्षेतानध्यायान् स्पृशतामुं पिशितामं चण्डालं सूतिकान्तेजनीमपहस्तकां श्मशानं सर्वाणि च श्यामरूपाणि यान्यास्ये न प्रविशेयुः २३ प्रागुदीच्यां दिशि पुण्ये देशे उदित आदित्येऽनुवचनधर्मेण वाग्यतायोष्णीषिणेऽन्वाह २४ महानाम्नीष्वेवैष नियमः २५ अथोत्तरेषु प्रकरणेषु स्वाध्यायमेवं कुर्वीताचार्यस्येतरः शृणोति २६ उष्णीषमाज्यभाजनं दक्षिणां चाचार्याय ददाति त्वं तमिति २७ उच्चा दिवि इति च २८ प्रणवेन वा सर्वम् २९ अत्र हैके वैश्वदेवं चरुं कुर्वते सर्वेषु प्रकरणेषु ३० यथा परिदत्तमिति च माण्डूकेयः ३१

## अथ अष्टमः खण्डः

अथातो दण्डनियमः १ नान्तरागमनं कुर्यादात्मनो दण्डस्य च २ अथ चेद दण्डमेखलोपवीतानामन्यतमद्विशीर्येत च्छिद्येत वा तस्य तत्प्रायश्चित्तिः यदुद्वाहे रथस्य ३ मेखला चेदसन्धेया भवति अन्यां कृत्वानुमन्त्रयते मेध्यामेध्यविभागज्ञे देवि गोप्त्रि सरस्वति । मेखले स्कन्नविच्छिन्ने सन्तनोषि व्रतं मम । इति ४ एतयैव यथार्थमुपवीते ५ त्वमग्ने व्रतभृच्छुचिः इत्येताभ्यामृग्भ्यामाहुतीर्हुत्वा अथ मेखलां शान्ते वृक्षे निधाय पूर्णे काले मेखलामुपवीतं च दण्डे बध्नाति ६ तदप्येतत् यज्ञोपवीतं दण्डं च मेखलामजिनं तथा । जुहुयादप्सु व्रते पूर्णे वारुण्यर्चा रसेन वा ७ ब्रह्मचारी प्रवत्स्यन्नाचार्यमनुमन्त्रयते प्राणापानयोः इत्युपांशु इदं वत्स्यावो भो इत्युच्चैः ८ प्राणापान उरुव्यचास्त्वया प्रपद्ये देवाय त्वा गोप्त्रे परिददामि देवसवितरेष ते ब्रह्मचारी तं गोपाय समामृत इत्युपांशु ओं स्वस्ति इत्युच्चैराचार्यः ओं स्वस्तीत्युच्चैराचार्यः ९

इति कौषीतकगृह्ये द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

### प्रथमः खराडः

स्नानं समावर्त्स्यमानस्य १ आनळुहे चर्मरायुपविश्य केशश्मश्रुलोमनखानि वापयित्वा व्रीहियवैस्तिलसर्षपैरपामार्गैः सदापुष्पाभिरित्युच्छाद्यापोहिष्ठीये-नाभिषिच्यालङ्कृत्य युवं वस्त्राणि इति वाससी परिधाय आयुष्यं वर्चस्यमिति सूक्तेन जातरूपमपिनह्य २ उत्थाने कुमारस्य च ३ अथास्मिन्नन्वारब्ध इ-न्द्राग्निभ्यां स्थालीपाकस्य हुत्वा मधुपर्कं दद्यात् ४ प्रतिलीनस्तदहरासीत ५ वनस्पते वीड्वङ्गः शास इत्था इति रथमारोहेत् ६ यत्रैनं गत्वा पशुना वाहयेयुः तत्पूर्वमुपतिष्ठेत ७ गोभिर्वा समावर्तेत ८ फलवतो वा वृक्षात् ९ इन्द्रश्रेष्ठानि स्योना पृथिवि भव इति प्रत्यवरोहति १० ईप्सितमन्नं तदहर्भुञ्जीत ११ आ-चार्याय वस्त्रयुगं दद्यात् १२ उष्णीषं मणिकुराडलं दराडोपानहं छत्रं च

### अथ द्वितीयः खराडः

अगारं कारयिष्यन् इहान्नाद्याय विशः प्रतिगृह्णामि इत्युदुम्बरशाखया त्रिः परिलिख्य मध्ये स्थरिडले जुहोति कोऽसि कस्यासि कायं ते ग्रामकामो जुहोमि स्वाहा

अस्यां देवानामधिभागधेयमितः प्रजाताः पितरः परेताः
इरावती जुह्वद् ग्रामकामो नु देवानां कञ्च नान्तरेमि स्वाहा इति १

न च स्थूणागर्तान् खानयित्वोदमन्थानासिच्य इमां विमिन्वेऽमृतस्य शाखां मधोर्धारां प्रतरणीं वसूनाम्

एनां शिशुः क्रन्दत्वा कुमार एनां धेनुः पावकवथ्स
इत्युदुम्बरशाखां घृतेनाक्तां दक्षिणे द्वार्ये गर्तेऽवदधाति २

इमामुच्छ्रयामि भुवनस्य शाखां मधोर्धारां प्रतरणीं वसूनाम्
एना शिशुः क्रन्दत्वा कुमार एनां धेनुः पावकवथ्स

इत्युत्तरतः ३ एवं द्वयोर्दक्षिणतः पश्चादुत्तरतश्च ४

इमामहमस्मिन् वृक्षस्य शाखां घृतमुक्षन्तीममृते मिनोमि
एनां शिशुः क्रन्दत्वा कुमार आस्यन्दतां धेनवो नित्यवथ्साः

इति स्थूणाराजमुच्छ्रयति ५ एनं कुमारस्तरुण आवथ्सो भुवनस्पतिः । कुम्भाद्ध्नः कलशैर्गमः । इहैव स्थूणे प्रतितिष्ठत्यश्वावती गोमती सीलमावती क्षेमे तिष्ठ घृतमुक्षमाणाः । इहैव तिष्ठन्निमिता तिल्विलेवास्या इरावतीं मध्ये पोषस्व तिष्ठन्तीं मा त्वा प्रापन्नघायव उपहूता इह गाव उपहूता अजावयोऽथोऽन्नस्य कीळाळ उपहूता गृहेषु णो रथन्तरे प्रतिटिष्ठ वामदेव्ये बृहति श्रयस्व इति स्थूणाराजमभिमृश्य संमितस्य स्थूणाः समभिमृशति सत्यं च श्रद्धा च इति पूर्वे ६ यज्ञश्च दक्षिणा च इति दक्षिणे ७ बलं चोर्जं च इत्यपरे ८ ब्रह्म च क्षत्रं च इत्युत्तरे ९ श्रीतूस्पे १० धर्मः स्थूणाराजे ११ अहोरात्रे द्वारफलके १२ संवत्सरः पिधाने १३ उक्षा समुद्रः इत्यभ्यक्तमश्मानं स्तूपस्याधस्तान्निखनेत् १४ संस्थिते वास्तुकरणे शोभिते च समन्ततः १५

## अथ तृतीयः खण्डः

अग्निं दधामि मनसा शिवेन इत्यग्निं प्रणीय पृथिवीं शंभुवा ह प्रतितिष्ठस्व इति प्रागग्रेषु नवेषु कुशेषूदकुम्भं नवं मणिकं वा प्रतिष्ठाप्य आपोहिष्ठीयाभि-स्तिसृभिः पूरयित्वा अरिष्टा अस्माकं वीरा मा परा सेचि नो धनमित्यपिधाय रथन्तरस्य स्तोत्रियेण पुनरादाय ककुप्कारं तिस्रः पूर्वाह्णे जुहोति १ वामदेव्यस्य मध्यन्दिने २ बृहतोऽपराह्णे ३ सावित्र्या चानुसवनं शतादूर्ध्वम् ४ महाव्याहृतयश्चतस्रः । वास्तोष्पते इति चतस्रः । वास्तोष्पते ध्रुवा स्थूणा सौविष्टकृती दशमी स्थालीपाकस्य रात्रौ ५ ज्येष्ठं पुत्रमादाय जायया सद्द-धान्याः प्रपद्यते इन्द्रस्य गृहाः शिवा वसुमन्तो वरूथिनः । तानहं प्रपद्ये सह जायया सह प्रजया सह पशुभिः सह यन्मे किञ्चास्ति तेन । शमं शमं शिवं शिवं क्षेमाय वः शान्त्यै प्रपद्येऽभयं नो अस्तु इति ६ एतयैवावृताषाढ्यां पौर्णमास्यां स्वस्त्ययनमित्याचक्षते ७ उद्धरेन्मणिकप्रतिष्ठापनं गृहप्रवेशनं च ८ स्वस्ति नो मिमीतामिति पञ्चर्चं जपति ९ अथ ब्राह्मणभोजनम् १०

## अथ चतुर्थः खण्डः

ग्रामो मारण्याय परिददातु हविश्च महायमाय परिदेहि इति ग्रामान्निष्क्रामन् १

अरगयं मा ग्रामाय परिददातु हविश्च महायमाय परिदेहि इति ग्रामं प्र-
विशन्नरिक्तः २

गृहान् भद्रान् सुमनसः प्रपद्येऽवीरघ्नो वीरवतः सुवीरान्
इरां वहतो घृतमुन्तमाणास्तेष्वहं सुमनाः संविशेयम्

इति सदा प्रपदनीयः ३ अनाहिताग्निः प्रवत्स्यन् गृहान् समीन्तते

इमान्मे मित्रावरुणा गृहान् गोपायतं युवम्
अविनष्टानविहृतान् पूषेमानभिरन्नतु

इति । अपि पन्थामगन्महि इति च ४ प्रोष्यायन् गृहान् समीन्तते गृहा मा बिभीत मा मे बिभ्यतोर्जं बिभ्यतेषमूर्जं बिभ्रद्वसुमनाः सुवर्चाः गृहानैमि सुमनसा मोदमानः । येषां मध्ये विप्रवसन्ति ये सौमनसो बहु । गृहानु-पह्वयामहे ते नो हिन्वन्तु जामयः । उपहूता इह गावः उपहूता अजावयः । यो नस्य कीलाल उपहूता अजावयः । अस्योपसद्ये मारिषदयं श्रेष्ठी दधातु नः इति गृह्यमग्निमुपस्थाय कल्याणीं वाचं प्रब्रूयात् ५ विराजो दोहोऽसि विराजो दोहमशीय मयि विराजः पद्यायै दोहः इति पाद्यप्रतिग्रहणम् ६

## अथ पञ्चमः खगडः

अनाहिताग्निर्नवं प्राशिष्यन्नाग्रयणदेवताभ्य इन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यः स्विष्टकृच्चतुर्थीभ्यः स्वाहाकारेण गृह्येऽग्नौ हुत्वा प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्याय इति हुतशेषाद् ग्रहं गृहीत्वा

भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वशेन समशीमहि त्वा
स नो मयोभूः पितवाविशेह शं नो भव द्विपदे शं चतुष्पदे

इत्यद्भिरभ्युन्द्य त्रिः प्राश्नाति १
अमोऽसि प्राण तदृतं ब्रवीम्यमोऽसि सर्वाणयनु प्रविष्टः
समे जरां रोगमपनुद्य शरीरादमा म एधि मामृधाम इन्द्र

इति हृदयदेशमभिमृश्य प्राणानां ग्रन्थिरसि मा विस्त्रस इति नाभिम् २ भ-द्रं कर्णेभिः इति यथारूपं तच्चक्षुः इत्यादित्यमुपस्थाय ३ परि वपस्वेदं वृञ्जन्तु घोषिरायस्स मा स्वस्थ गोपते मा वो रक्षो मनो रिषत् पूषा गा अन्वेतु नः इति गाः प्रतिष्ठमाना अनुमन्त्रयते ४ परि पूषा इति परिक्रान्तासु ५

यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च
ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्यः

आ गावो अग्मन्निति सप्तागतासु ६ उत्तमापाकुर्वन् मयोभूर्वातः इति च सूक्तेन गोष्ठगताः ७ यासु प्रथमा प्रजायेत तस्याः पीयूषं जुहुयात् संवत्स-रीणं पय उस्त्रियायाः इति द्वाभ्याम् ८ या फाल्गुन्या उत्तरामात्रास्या सा रेवत्या संपद्यते तस्यामङ्गलक्षणानि कारयेत् भुवनमसि सहस्त्रमसि रायस्पोषं मा वो दधत् । अक्षतमस्यरिष्टं विराळन्नं गोपायति । यावतीनामिदं क-रिष्यामि भूयसीनामुत्तरासां क्रियासमिति ९ यदि यमौ प्रजायेत महा-व्याहृतिभिर्हुत्वा यमसूं दद्यात् १०

अथ षष्ठः खण्डः

अथ वृषोत्सर्गः १ कार्तिक्यां पौर्णमास्यां रेवत्यां वाश्वयुज्यां च गवां मध्ये सुसमिद्धमग्निं कृत्वाज्याहुतीर्जुहोति इह धृतिरिह स्वधृतिरुपसृजं धरुणं मात्रे धरुणो मातरं धयन् । रायस्पोषमिषमूर्जमस्मासु दीधरत् स्वाहा पूषा गा अन्वेतु नः इति पौष्णस्य २ हुत्वैकवर्णं द्विवर्णं त्रिवर्णं वा यो वा यूथं छादयति यं वा यूथं संछादयति ३ रोहितो वैव स्यात् ४ सर्वाङ्गैरुपेतः ५ यूथे वर्चस्वितमः स्यातमलंकृत्य ६ यूथे मुख्याश्चतस्त्रो वत्सतर्यः ७ ताश्चालंकृत्य ८ एतं युवानं परि वो ददामि तेन क्रीळन्तीश्चरत प्रियेण मा नश्शाप्त जनुषा संविदाना रायस्पोषेण समिषा मदेम । इत्यनुमन्त्रयते ९ नभ्यस्थे वृषे मयोभूर्वातः इति च सूक्तेन १० सर्वासां पयसि स्थालीपाकं श्रपयित्वा ब्राह्मणान् भोजयेत् ११

अथ सप्तमः खण्डः

अथात उपाकरणम् १ ओषधीनां प्रादुर्भावे २ श्रावण्यां पौर्णमास्याम् ३ हस्तेन श्रवणेन वा ४ अक्षतसूक्तानां दधिघृतमिश्राणां प्रत्यृचं वेदेन जुहुयादिति

हैक आहुः ५ सूक्तानुवाकाद्याः ६ अध्यायार्षेयाद्याभिरिति च माण्डूकेयः ७ अथ ह स्माह कौषीतकिः वेदेभ्यो देवेभ्यः छन्दोभ्यः ऋषिभ्यश्चेति ८ अग्निमीळे पुरोहितमित्येका ९ कुषुम्भकस्तदब्रवीत् आवदंस्त्वं शकुने भद्रमावद गृणाना जमदग्निना धामन्ते विश्वं भुवनमधिश्रितम् गन्ता नो यज्ञं यज्ञियाः सुशमि यो नः स्वो अरणः प्रतिचक्ष्व आग्ने याहि मरुत्सखा यत्ते राजञ्छृतं हविः इति द्व्यृचाः १० तच्छंयोरावृणीमहे इत्येका ११ हुतशेषाद्धविः प्राश्य दधिक्राव्णो अकारिषमित्याचम्योपविश्य महाव्याहृतयः सावित्रीं वेदादिप्रभृति स्वस्त्ययनानि च जपित्वा आचार्यं स्वस्ति वाच्य १२

तदपि भवति--
उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं भवेत्
अष्टकासु तथैव स्यादृत्वन्त्यासु च रात्रिषु १३

अथ अष्टमः खण्डः

अथात उत्सर्गः १ माघशुक्लपक्षप्रतिपद्यपराजितायां दिशि पुण्ये देशे प्रत्यस्य लोष्टान् शास इत्था इति प्रतिदिशमृषींश्छन्दांसि देवताः श्रद्धामेधे च तर्पयित्वा प्रतिपुरुषं पितरः २ उदुत्यम् चित्रम् नमो मित्रस्य विभ्राद् बृहत् इति सूक्तानि जपित्वा छन्दांसि विश्रामयन्त्यर्धषष्ठान् मासान् ३ अधीयीरंश्चेदहोरात्रमुपरम्य प्राध्ययनम् ४

अथ नवमः खण्डः

अथोऽपरमम् १ उत्पातेष्वाकालिकम् २ अन्येष्वद्भुतेषु च ३ विद्युत्स्तनयित्नुवर्षेषु त्रिसन्ध्यमेकाहम् ४ श्राद्धभोजने ५ दशाहमघेषु च सूतकेषु च ६ चतुर्दश्यमावास्ययोः ७ अष्टकासु ८ वासरेषु नभ्येषु च ९ आचार्ये चोपरते दशाहम् १० श्रुत्वा त्रिरात्रम् ११ तत्पूर्वाणां च प्रतिग्रहे श्राद्धे १२ सब्रह्मचारिणि समेत्य १३ प्रेतमनुगम्य पितृभ्यश्च निधाय पिण्डान् निशाम् १४ सन्ध्यायाम् १५ पर्वसु १६ अस्तमिते १७ सामशब्दे १८ श्मशाने १९ शूद्रसंनिकर्षे २० ग्रामारण्ये २१ अन्तःशवे ग्रामे २२ अदर्शनीयाश्रवणीयानिष्टाघ्राणे २३ अतिवातेऽभ्रे वर्षति २४ रथ्यायाम् २५ बाणशब्दे २६ रथस्थः २७ शूद्रवच्छुनि २८ वृक्षारोहणे २९ अवटारोहणे ३० अप्सु

३१ क्रन्दत्याम् ३२ आर्तौ ३३ नग्नः ३४ उच्छिष्टः ३५ संक्रमे ३६ केशश्मश्रुवापन आ स्नानात् ३७ उत्सादने ३८ स्नाने ३९ अभ्यञ्जने ४० संवेशने सूतिकोदक्याभ्याम् ४१ अवहितपाणिः ४२ सेनायाम् ४३ अभुञ्जति ब्राह्मणे ४४ गोषु च ४५ अतिक्रान्तेष्वधीयीरन् ४६ एतेषां यदि किञ्चिदकाममभ्याभवेत् प्राणानायम्यादित्यं निरीक्ष्यातः परमधीयीत ४७ विद्युत्स्तनयित्नुवर्षवर्जं कल्पे ४८ वर्षवर्जमर्धषष्ठेषु च ४९ तदप्येतत्

अन्नमापो मूलफलं यच्चान्यच्छ्राद्धिकं भवेत्
प्रतिगृह्याप्यनध्यायः पाण्यास्या ब्राह्मणाः स्मृताः

इति ५० न्यायोपेतेभ्य एवावर्तयेत् ५१ प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः ५२ द्वौ वा ५३ भूयांसस्तु यथासनम् ५४ अधीहि भो इत्युक्त्वा आचार्यः ओमितीतरः प्रतिपद्याधीयीत ५५ अधीत्योपसंगृह्य विरताः स्म भो इत्युक्त्वा यथार्थम् ५६ विसृष्टं विरामस्तावदित्येके ५७ नाधीयीतारमन्तरा गमयेदात्मानं परिहरन्तोऽधीयीरन् ५८ यदि चेद् दोषः स्यात् त्रिरात्रमुपोष्याहोरात्रं वा सावित्रीं चाभ्यावर्तयित्वा यावच्छक्नुयात् ५९ दण्डस्यान्तरागमने ब्राह्मणाय यत् किञ्चिदद्यात् । अतः परमधीयीत ६०

## अथ दशमः खण्डः

अथातो वैश्वदेवः १ वैश्वदेवस्य सिद्धस्य सायंप्रातर्गृह्येऽग्नौ जुहुयात् २ महान्तं कोशमिति त्रिः पर्युक्षति सर्वत्र ३ अग्नये स्वाहा सोमाय स्वाहा इन्द्राग्निभ्यां स्वाहा भरद्वाजधान्वन्तरये स्वाहा प्रजापतये स्वाहा अनुमत्यै स्वाहा श्रियै स्वाहा सरस्वत्यै स्वाहा विष्णवे स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा सर्वाभ्यो देवताभ्यः स्वाहा अग्नये स्विष्टकृते स्वाहा इति हुत्वैतासां देवतानाम् । अथ वास्तुमध्ये बलिं हरेत् ४ एताभ्यश्चैव देवताभ्यो नमो ब्रह्मणे ब्राह्मणेभ्यश्च वास्तोष्पतये नमः ५ अथ दिशां प्रदक्षिणं यथारूपं नम इन्द्राय ऐन्द्रेभ्यश्च नमो यमाय याम्येभ्यश्च नमो वरुणाय वारुणेभ्यश्च नमः सोमाय सौम्येभ्यश्च नमो बृहस्पतये बार्हस्पत्येभ्यश्च ६ नमो मरुद्भ्योऽश्विभ्यां नमश्छन्दोभ्य ऋषिभ्यश्च इत्यपराजितायां दिशि ७ नमस्साध्यायाग्नये नमो निर्ऋत्यै नमो वायवे नमो रुद्राय इति प्रदक्षिणमेव ८ अथादित्यमण्डले नमोऽदितये आदित्येभ्यश्च

नमो नक्षत्रेभ्य ऋतुभ्यो नमो मासेऽभ्योऽर्धमासेभ्यश्चाहोरात्रेभ्यश्च संवत्सरेभ्यः पूष्णे पथिकृते धात्रे विधात्रे इति ९ मरुद्भ्यश्चैव देहनेषु १० नम ओषधिवनस्पतिभ्यः इत्युलूखले नमः पर्जन्यायाद्भ्यः इति मणिके ११ विष्णवे दृषदि १२ नमः श्रियै शय्यायाः शिरसि १३ पादतो भद्रकाळ्यै १४ अनुगुप्ते देशे नमो मित्राय १५ नमो विज्ञाताभ्यो देवताभ्यः इत्युत्तरतो धनपतये च १६ अथान्तरिक्षे नक्तंचरेभ्यो नमः इति सायम् १७ अहश्चरेभ्यो नमः इति प्रातः १८ ये देवासः इति च १९ अथ प्राचीनावीती दक्षिणतः शेषं निनयेत् येऽग्निदग्धाः इति २० देवर्षिपितृगणेभ्यो दत्त्वातिथिमाकाङ्क्षेद् आ गोदोहात् २१ यद्यतिथिरागच्छेद् यथाशक्ति पाद्यमासनमन्नं दत्त्वा श्रोत्रियं भोजयेत् २२ ब्रह्मचारिणे वा भिक्षां दद्यात् २३ अनन्तरं सौवासिनीं गर्भिणीं बालान् स्थविरांश्च भोजयेत् २४ श्वभ्यश्च श्वपाकेभ्यश्च वयोभ्यश्चावपेद् भूमाविति २५ नानवत्तमश्नीयात् २६ नैकः २७ न पूर्वम् २८ तदप्येतदृषिराह २९

मोघमन्नं विन्दते अप्रचेतास्सत्यं ब्रवीमि वध इत्स तस्य
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी    इति ३०

षण्णामर्घ्याणामन्यतम आगच्छेद् गोपशुमजमन्यद्वा यत्सामान्यतमं मन्येत तत्कुर्वीत ३१ आचार्यायाग्नेयः ऋत्विजे बार्हस्पत्यो विवाह्याय प्राजापत्यो राज्ञ ऐन्द्रः प्रियाय मैत्रः स्नातकायैन्द्राग्नः ३२ यद्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुः ३३ नाकृतार्घ्याः ३४

तदपि भवति -
मधुपर्के च सोमे च पितृदैवतकर्मणि
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः

आचार्यश्च पिता चोभौ सखा चानतिथिर्गृहे
ते यद्विदध्युस्तत्कुर्यादिति धर्मो विधीयते

नैकग्रामीणमतिथिं विप्रोष्यागतमेव वा
उपस्थितं गृहं विद्याद्भार्या यत्राग्नयोऽपि वा

नोपवासः प्रवासेऽस्ति पत्नी धारयते व्रतम्
पुत्रो भ्राताथ वा शिष्यः पत्नी वाथ बलिं हरेत्

अग्निहोत्रं बलीवर्दाः काले चातिथिरागतः
बालाश्च कुलवृद्धाश्च निर्दहन्त्यवमानिताः

देवताः पितरो नित्यं गच्छन्ति गृहमेधिनम्
भागार्थमतिथिश्चापि तेभ्यो निर्वप्तुमर्हति

सिलान्युञ्छयमानस्य अग्निहोत्रं च जुह्वतः
सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो व्रजन्

औदपात्रात्तु दातव्यमा काष्ठाज्जुहुयादपि
आ सूक्तादानुवाकाद्वा ब्रह्मयज्ञो विधीयते
एते पञ्च महायज्ञा वर्तन्ते यस्य नित्यशः
स मुक्तः सर्वपापेभ्यो नाकपृष्ठे महीयते

वैश्वदेवमिमं ये च सायंप्रातः प्रयुञ्जते
तदर्थैरायुषा कीर्त्या प्रजाभिश्च समृध्नुयुः     इति ३५

अथ एकादशः खण्डः

अहरहराचार्यायाभिवादयीत १ अभिगम्य गुरुभ्यश्च २ समेत्य श्रोत्रियाय प्रोष्य प्रेत्येत्याश्रोत्रियाय ३ असावाहं भो इत्यात्मनो नाम निर्दिश्य व्यत्यस्य पाणी दक्षिणेन दक्षिणं सव्येन सव्यं दक्षिणोत्तराभ्यां पाणिभ्यामुपसंगृह्य पादौ ४ असा उ इत्यस्य पाणी संगृह्य आशिषमाशास्ते ५ नावृतो यज्ञे न धर्मार्थं जुगुप्सेत ६ न जनसमवायं गच्छेत् ७ नोपर्युद्दिशेत् समेत्यात्र ८ अनाक्रो-शकोऽपिशुनः ९ अकुलं कुलः १० नैतिहः ११ नैकश्चरेत् १२ न नग्नः १३ नावहितपाणिः १४ देवकुलायतनानि प्रदक्षिणम् १५ न हसेत् १६ न धावेत् १७ न निष्ठीवेत् १८ न कण्डूयेत् १९ मूत्रपुरीषे नावेक्षेत २० अव-कुण्ठ्यासीत २१ यद्येकवासा यज्ञोपवीतं दक्षिणे कर्णे कृत्वा २२ नादि-त्याभिमुखः २३ न जघनेन २४ नानन्तर्हितायां भूमौ २५ न वृक्षमारोहेत्

२६ न कूपमवेक्षेत २७ नैको वनं गच्छेत् २८ नावि धुवनं गच्छेत् २९ न त्वेव श्मशानम् ३० सवस्त्रोऽहरहराप्लुवीत ३१ अप्लुत्योदकोऽन्यद्वस्त्रमाच्छादयीत ३२ न नग्नां स्त्रियं निरीक्षेत ३३ नादित्यं सन्धिवेलयोः ३४ अनाप्तम् ३५ अकार्यकारिणम् ३६ प्रेतस्पर्शिनम् ३७ सूत्तिकोदक्याभ्यां न संवदेत ३८ नोद्धततेजांसि भुञ्जीत ३९ न यातयामैः कार्यं कुर्यात् ४० न सह भुञ्जीत ४१ न शिष्टम् ४२ पितृदेवतातिथिभृत्यानां शिष्टं भुञ्जीत ४३ सिलमुञ्छमयाचितप्रतिग्रहः साधुभ्यो याचतो वा याजनमध्यापनं वृत्तिः ४४ पूर्वं पूर्वं लघीयः ४५ असंसिद्धमानायां वैश्यवृत्तिर्वा ४६ अप्रमत्तः पितृदैवतकार्येषु ४७ ऋतौ स्वदारगामी ४८ न दिवा स्वपीत ४९ न पूर्वापररात्रेषु ५० अहरहः स्वाध्यायशीलः ५१ सत्यवादी ५२ नित्योदकी ५३ नित्ययज्ञोपवीती ५४ न विरहेदाचार्यमन्यत्र नियोगात् ५५ अनुज्ञातो वा ५६

अथ द्वादशः खण्डः

षड्विंशतिभिः कारणैः खलु भो ब्राह्मणेनाध्येतव्यं भवत्यपरिमितैर्वा १ तद्यथा कुले जातः २ शक्तिमान् ३ पूर्वे चाभिरूपा आसन् ४ साध्वाचरितं चैतत् ५ ऋणं चैतद्ब्राह्मणस्य ६ कर्मणामध्ययनं शुभतरम् ७ अधीत्य च कार्याकार्ये ज्ञास्यामि ४ विद्वांसश्च सर्वत्र पूज्यन्ते ९ शिष्याश्च शुश्रूषन्ते १० महयन्ति च सर्वत्र ११ सर्वत्र गतिमान् भविष्यामि १२ यक्ष्यामि १३ याजयिष्यामि १४ लक्षणीयो भविष्यामि १५ हवींषि च सुसंस्कृतानि भोक्ष्यामि १६ मया च स्वाध्यायवता मातापितरौ स्वर्गे लोके सुखमेधिष्यते १७ ब्रह्मचर्येण चायुष्मान् वर्चस्वी भविष्यामि १८ स्वाध्यायेन क्षिप्रं पाप्मानमपहन्यामिति च १९ स्वाध्यायवतः सर्वे लोकाः २० नाप्राप्यं तस्य किञ्चित् २१ न तस्य पुनरावृत्तिः २२ मन्त्रब्राह्मणयोः वेदशब्दः २३ वेदो हि धर्ममूलम् २४ अचोरहरणीयं च ब्रह्म २५ एकैका चर्क् सम्यगधीता कामधुग्भवति २६ यं यं क्रतुमधीते तेन तेन चेष्टं भविष्यतीति २७ तदपि श्लोकाः २८

केतुमान् लघिमान् दक्षो मित्रवान् घृतिमान् शुचिः
शीलवान् श्रुतवान् दान्तो भवेद्वै पङ्क्तिपावनः २९

चोरराजाग्न्युदकेभ्यः सदा सञ्चयिनां भयम्

निर्भवास्तु सुखं वैद्याश्चरन्त्यक्षय्यवृत्तयः ३०

तदेतत्पुष्कलं वाक्यं वेदज्ञानप्रयोजनम्
कुर्यादध्ययने यत्नं सत्यवादी जितेन्द्रियः इति ३१

तदप्येतदृषिराह ३२
यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यान्ति
यो जागार तमयं सोम ग्राह तवाहमस्मि सख्ये न्योकाः इति ३३

## ग्रथ त्रयोदशः खराडः

रोहिरयां कृषिकर्माणि कारयेत् १ प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीयं बलिं हरेत् २ गोमयेन परिमराडलं स्थरिडलमुपलिप्य प्रागग्रेषु नवेषु कुशेषु द्यावापृथिवीभ्यां नमः इत्यपो दद्यात् ३ एवमेव गन्धमाल्यधूपदीपानाम् ४ पयसौदनं वा ५ नमो द्यावापृथिवीभ्यां नमः इति चोपस्थानम् ६ न नित्यं परिस्तरणम् ७ यथासमाम्नातो वा विकल्पः ८ तच्छेषेण ब्राह्मणान् तर्पयति ९ प्रथमयोगे सीरस्य ब्राह्मणः सीरं स्पृशेत् शुनं नः फालाः इति १० क्षेत्रस्य पतिना इति सूक्तमनुब्रूयात् ११ कृतां परिहाप्य १२ उदकं परिष्यन् स्वस्त्ययनं करोति १३ उदकाञ्जलीन् त्रीनप्सु जुहोति १४ समुद्राय वयुनाय नमो वरुणाय नमो वारुणाय धर्मपतये नमो नमस्सर्वासां नदीनां सर्वासां पित्रे विश्वकर्मणे मर्त्यं हविर्जुषतामिति जपित्वा १५ प्रतीपं स्रवन्तीभ्य उदीचं स्थावराभ्यः १६ तरंश्चेद् भयं शङ्केत वासिष्ठं जपेत् समुद्रज्येष्ठाः इत्येतत् सूक्तं प्लवम् १७

## ग्रथ चतुर्दशः खराडः

ग्रथ मासि मासि पितृभ्यो दद्यात् १ ब्राह्मणान् वेदविदुषोऽयुग्मान् त्र्यव-राध्यान् पितृवदुपवेश्यायुग्मान्युदपात्राणि तिलैरवकीर्य ब्राह्मणानां पाणिषु निनयेत् २ ग्रत ऊर्ध्वमलङ्कृतानामन्त्र्याग्नौ कृत्वान्नं च ग्रसावेततत्ते इत्य-नुदिश्य भोजयेत् ३ भुञ्जानेषु महाव्याहृतयः सावित्रीं मधुवातीयाः पितृदे-वत्याः पावमानीर्जपेद् यथोत्साहमन्यत् ४ भुक्तवत्सु पिराडान् दद्यात् ५ पुरस्तादेके ६ पिराडान् तत्पश्चिमेन पत्नीनां किञ्चि दन्तर्धाय ७ ब्राह्मणानां शेषं निवेदयेत् ८ ग्रग्नौकरणादि पिराडपितृयज्ञेन कल्पो व्याख्यातः ९ सूत्राणि

दत्त्वाञ्जनाभ्यञ्जनगन्धपुष्पधूपदीपांश्च प्रतिपिण्डं दद्यात् १० अथात एकोद्दिष्टम् ११ एकं पवित्रम् १२ एकमर्घ्यम् १३ एकपिण्डम् १४ नाग्नौकरणम् १५ अभिरम्यतामिति विसर्गः १६ संवत्सरमेवं प्रेतः १७ चतुर्थविसर्गस्तु १८ वृद्धिपूर्तेषु युग्मान् भोजयेत् १९ प्रदक्षिणमुपचारः २० यवैस्तिलार्थः

अथ पञ्चदशः खण्डः

ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टमीष्वष्टकास्वपरपक्षेषु १ तासां प्रथमायां शाकं जुहोति

इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा
वधूर्जजान नवकं जनित्री त्रय एनां महिमानः सचन्तां स्वाहा इति २

अथ स्विष्टकृतः
यस्यां वैवस्वतो यमस्सर्वे देवास्समाहिताः
अष्टका सर्वतोमुखी सा मे कामानतीतृपत्

आहुस्ते ग्रावाणो दन्तानूधः पवमानः
अर्धमासांश्च मासांश्चाङ्गानि नमस्ते सुमनामुखि स्वाहा इति ३

मध्यमायां माघ्या वर्षे च महाव्याहृतयश्चतस्रो जुहोति ये तातृषुः इति चतस्रोऽनुद्रुत्य वपां जुहुयात् वह वपां जातवेदः पितृभ्यो यत्रैनान् वेत्थ सुकृतस्य लोके । मेदसः कुल्या उपस्तुतास्स्रवन्ति सत्यास्सन्तु यजमानस्य कामास्स्वाहा । इति महाव्याहृतिभिश्चतसृभिः ये तातृषुः इति चतसृभिरष्टावाहुतीः स्थालीपाकोऽवदानमिश्रः ४

अन्तर्हिता गिरयोऽन्तर्हिता पृथिवी मही मे
दिवा दिग्भ्यश्च सर्वाभिरन्यमन्तर्दधे पितृभ्योऽमुष्मै स्वाहा

अन्तर्हिता ऋतवोऽहोरात्रा सुसन्धिकाः
अर्धमासाश्च मासाश्चाङ्गानि नमस्ते सुमनामुखि स्वाहा

यास्तिष्ठन्ति यास्त्रवन्ति या अद्भिः परितस्थुषीः
अद्भिः सर्वस्य भर्तृभिरन्यतः पितुर्दधेऽमुष्मै स्वाहा

यन्मे माता प्रलुलोभ चरत्यपतिव्रता
रेतस्तत्पिता वृङ्क्तामाहुरन्योऽवपद्यताममुष्मै स्वाहा

इति महाव्याहृतीनां वा स्थाने चतस्रोऽन्यत्रकरणस्य ५ उत्तमायामपूपान् जुहोति

उक्थ्यश्चातिरात्रश्च सद्यस्क्रीश्छन्दसा सह
अन्ये च क्रतवो देवा ऋषयः पितरस्तथा

ऋतवः सवभूतानि शिवाश्शान्ताश्च मे सदा
सन्तु मेऽपूपकृतामष्टके समस्ते सुमनामुखि स्वाहा

इति समानं स्विष्टकृत् ६ श्वोऽन्वष्टक्यां पिण्डपितृयज्ञावृता गोपशुरजस्थालीपाको वा गोग्रासमाहरेदपि वा कक्षमुदहेदेषा मेऽष्टका इति ७ न त्वेव न कुर्वीत न त्वेव न कुर्वीत ८

इति कौषीतकगृह्ये तृतीयोऽध्यायः

अथ चतुर्थोऽध्यायः

प्रथमः खण्डः

अथातश्शान्तिं करिष्यन् रोगार्तो वा भयार्तो वा अयाज्यं वा याजयित्वा अप्रतिग्राह्यं वा प्रतिगृह्य त्रिरात्रमुपोष्याहोरात्रं वा सावित्रीं चाभ्यावर्तयित्वा यावच्छक्नुयाद् गौरसर्षपकल्कैः स्नात्वा शुक्लमहतं वा वासः परिधाय स्रवन्तीभिरद्भिरुदकुम्भं नवं भूर्भुवस्स्वः इति पूरयित्वेतराभिर्वा गौरसर्षपदूर्वाव्रीहियवानवनीय गन्धमाल्यानां च यथोपपादमग्नये स्थालीपाकस्य हुत्वा सावित्र्या सहस्रादूर्ध्वमा द्वादशात् सहस्रात् स्वशक्तितः संपातमभिजुहोति १ यावद्वा दोषनिवृत्तिः २ उत्तरेणाग्निं प्रागग्रेषु कुशेषु प्राङ्मुख उपविश्यापोहिष्ठीयाभिस्तिसृभिरभिषिञ्चेत् ३ शुक्लैरलङ्कृत्य महाव्याहृतयः

सावित्रीं स्वस्त्ययनानि च जपित्वा मुच्यते सर्वपापेभ्यो रोगेभ्यश्च भयेभ्यश्च ४ व्याधितश्चेत्तदशक्तश्चेत् पिता भ्राता वाचार्यपुत्रशिष्याणामन्यतमो वान्वारब्धे कुर्यात् ५ मुञ्चामि त्वा हविषा जीवनाय कमिति त्रीणि सूक्तानि जपति पुरस्तात् स्वस्त्ययनानाम् ६ वरो दक्षिणा ७ एवं गावो गोष्ठस्य मध्ये रुद्राय स्थालीपाकस्य हुत्वा रौद्रमूक्तैरग्निमुपतिष्ठते ८ संपाताभिः सौमश्रीभिः सावित्रीमपरिमितां जपेद् वेतसशाखाभिः कुशमुष्टिभिर्वा त्रिः प्रदक्षिणं प्रोक्षति गोसूक्तैरुपस्थानं मुच्यते सर्वरोगेभ्यः ९ अथ ब्राह्मणभोजनम् १०

## अथ द्वितीयः खण्डः

श्रावण्यां पौर्णमास्यां हस्तेन श्रवणेन वा अक्षतसक्तूनां स्थालीपाकस्य वा जुहुयात् अग्नये स्वाहा विष्णवे स्वाहा श्रावण्यै स्वाहा पौर्णमास्यै स्वाहा वर्षाभ्यः स्वाहा इति १ लाजानक्षतसक्तूंश्च सर्पिषा सन्नीयाग्नौ जुहुयात् दिव्यानां सर्पाणामधिपतये स्वाहा दिव्येभ्यः सर्पेभ्यः स्वाहा इति २ उत्तरेणाग्निं म्प्रागग्रेषु कुशेषु शुचौ वा देशे दिव्यानां सर्पाणामधिपतिरुन्नीयतां दिव्याः सर्पा उन्नीयन्तामित्यपो निनयति । दिव्यानां सर्पाणामधिपतिः प्रलिखताम् दिव्याः सर्पाः प्रलिखन्तामिति फणेन वेष्टयति । दिव्यानां सर्पाणामधिपतिरनुलिम्पताम् दिव्याः सर्पा अनुलिम्पन्ताम् इति पन्नगस्य पात्राणि निनयति । दिव्यानां सर्पाणामधिपतिस्सुमनस्यतां दिव्याः सर्पास्सुमनस्यन्तामिति सुमनस उपहरति । दिव्यानां सर्पाणामधिपतिराच्छाद्यतां दिव्याः सर्पा आच्छाद्यन्तामिति सूत्रतन्तुमुपहरति । दिव्यानां सर्पाणामधिपतिराञ्जताम् दिव्याः सर्पा आञ्जन्तामिति कुशतरुणेनोपघातमञ्जनस्य करोति । दिव्यानां सर्पाणामधिपतिरीक्षतां दिव्यास्सर्पा ईक्षन्तामित्यादर्शेनेक्षयति । एवमान्तरिक्षाणां पार्थिवानां दिव्यानां त्रिस्त्रिरुच्चैस्तरां नीचैस्तरां इत्योदनद्रव्येणोपघातमा प्रत्यवरोहाद्रात्रौ वाग्यतस्सोदकं बलिमुपहरेत् ३ उपसर्गः ४

## अथ तृतीयः खण्डः

आश्वयुज्यां पौर्णमास्यामैन्द्रं पायसः १ अश्विभ्यां स्वाहा अश्वयुग्भ्यां स्वाहा आश्वयुज्यै पौर्णमास्यै स्वाहा शरदे स्वाहा पशुपतये स्वाहा पिङ्गलाय स्वाहा इति षट् पृषातकस्य आ गावो अग्मन् इति सूक्तेन प्रत्यृचं स्थालीपाकस्य हुत्वा

मातृभिर्वत्सान् संसृजति तां रात्रिम् । अथ ब्राह्मणभोजनम् २

अथ चतुर्थः खराडः

आग्रहायरयां प्रत्यवरोहेत् १ रोहिरयां प्रोष्ठपदासु वा प्रातः शमीपलाशम-धूकापामार्गशिरीषोदुम्बरकुशतरुणबदरीणां च २ तेषां मुष्टिमादाय ३ सीतालोष्टं च ४ उदपात्रे निधाय तस्मिन्निमज्ज्य निमज्ज्य ५ उप नः शोशुचदघमिति सूक्तेन त्रिः प्रदक्षिणं प्रोक्षति शरणयेभ्यः पाप्मनोऽपहत्यै ६ उत्तरतो निधाय ७ मधुपर्को दक्षिणा ८

ग्रीष्मो हेमन्त उत नो वसन्तश्शरद्वर्षास्सुवितं नोऽस्तु
तेषां पशूनामृतूनां शतशारदानां निवात एषामभये स्याम स्वाहा

अप श्वेतपदा जहि पूर्वेण चापरेण च
सप्त च वारुणीरिमास्सर्वाश्च राजबान्धवैः स्वाहा

श्वेताय वैदर्भाय स्वाहा विदर्भाय स्वाहा तक्षकाय वैशालेयाय स्वाहा विशालाय स्वाहा इत्याज्येन ९ सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिभूषन्तां सुवर्षाः सन्तु नो वर्षाः शरदः शं भवन्तु नः इत्यग्निमुपतिष्ठते । स्योना पृथिवी भव इति पृथिवीमनुमन्त्र्य शं नो भवन्तु वाजिनः इति शमीशाखयाभिमृज्य समुद्रादूर्मिः इत्यभ्युक्ष्य प्रस्तरमास्तीर्य ज्येष्ठदक्षिणापार्श्वैः संविशेरन् १० प्रति ब्रह्मन् प्रतितिष्ठामि यज्ञे इति दक्षिणैः ११ प्रति पशुषु प्रतितिष्ठाम्यन्ने इति सव्यैः १२ प्रत्यश्वेषु प्रतितिष्ठामि क्षत्रे इति दक्षिणैः १३ प्रत्यप्सु प्रतितिष्ठाम्यमृते इति सव्यैः १४ प्रति प्रजायां प्रतितिष्ठामि पुष्टौ इति दक्षिणैः १५ प्रस्तरे तां रात्रिं शेरते १६ उदीर्ध्वं जीवः इत्युत्थाप्य नमो मित्रस्य इत्यादित्यमुपस्थाय यथासुखमत ऊर्ध्वम् १७ सुत्रामाणमिति शय्यामारोहेत् १८ चैत्र्यां पौर्णमास्यां कर्कन्धुपर्णानि मिथुनानां च यथोपपादं पिष्टस्य कृत्वा ऐन्द्राग्नस्तुरिडलो रौद्रगुलिकाः १९ लोकतो नक्षत्रारयन्वावृतश्च लोकतो नक्षत्रारयन्वावृतश्च २०

इति कौषीतकगृह्ये चतुर्थोऽध्यायः

अथ पञ्चमोऽध्यायः

प्रथमः खराडः

जीवतः कर्माणि विसमाप्ते चेदभिप्रेयात् १ मरणान्तमेकाहेषु २ नास्ति तस्य समापनम् ३ प्रेतमाहिताग्निं ज्ञात्वाजस्त्रानग्नीन् कुर्वन्ति ४ विहारं दक्षिणतो विहृत्य ५ कुशानामेवमग्रता ६ तेष्वेनं गार्हपत्यस्य पश्चाद्दक्षिणाशिरसं निपात्यान्तरेण गार्हपत्याहवनीयावेवं गार्हपत्य आज्यं बिलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वान्वारब्धे प्रेत आहवनीये जुहोति परेयिवांसमित्येतयर्चा ७ एवं गार्हपत्ये ८ एवमन्वाहार्यपचने ९ अन्वाहार्यपचने चरुं जीवतण्डुलं श्रपयन्ति १० गार्हपत्ये मैत्रावरुणीमामिक्षाम् ११ अथैनं दक्षिणतः परिश्रिते निपात्य संहार्य लोमनखानि प्रेतस्याप्लाव्यालङ्कृत्याहतेन वाससा परिदधीत इदं त्वा वस्त्रं प्रथमं न आगन् इति १२ अथेतरदपैति अपैतदूहयदिहाबिभः पुरा इति १३ तदस्य पुत्रः परिधायाजरसाद्वसीत इष्टापूर्तमनुसंपश्य दक्षिणाँ यथा ते दत्तं बहुधा विबन्धुषु इति १४

## अथ द्वितीयः खण्डः

अथोल्मुकं गार्हपत्य आदीप्याग्रतो हरन्ति १ अथाजम् २ अथ राजगवीम् ३ अथाग्नीन् ४ अथ यज्ञपात्राणि ५ अथैनमानीयमानमनुमन्त्रयते पूषा त्वेतश्च्यातयतु इत्येतया ६ द्वितीयया द्वितीयम् ७ तृतीयया तृतीयम् ८ तुरीयमध्वनो गत्वात्रैनं निपात्यास्य नेदिष्ठाः कनिष्ठप्रथमाः सव्यान्केशानुद्ग्रथ्य सव्यानूरूनाघ्नानाः सिग्भिरभिधून्वन्तः त्रिरपसलं परीत्य तद्विपर्यासमेवमेव प्रदक्षिणम् ९ दक्षिणतस्त्रीन् लोष्टानवरुज्य दक्षिणतो निधाय तेषु तूष्णीं चरोर्मेक्षणेन जुहोति । एवं द्वितीयम् १० एवं तृतीयम् ११ अथात्र चरुपात्रं भिनत्ति यथोदकं न तिष्ठेत् १२ आदहने तूष्णीं निधाय दक्षिणस्यां दिशि दक्षिणाप्रवणे दक्षिणाप्राक्प्रवणेन वा अपेत वीत इति पलाशशाखया त्रिः परिलिख्य वास्तौ हिरण्यशकलं निधाय देहि यमराज वास्त्वस्मा इत्थंनामधेयाय इति गृहीत्वा वास्तु प्राग् दक्षिणां चितिं चित्वा १३

## अथ तृतीयः खण्डः

पश्चान्निधाय गार्हपत्यं दक्षिणतो दक्षिणाग्निं पुरस्तादाहवनीयम् १ पश्चाद्दक्षिणतो वा गामनुस्तरणीम् २ जीवन्त्या वृक्कौ पृष्ठत उद्धृत्य संज्ञप्ताया वा दक्षिणाग्नौ कोष्णौ कृत्वा अति द्रव इत्यृग्भ्यां पाण्योराधाय ३ आमिक्षां च ४ अग्नेर्वर्म इति वपया मुखं प्रच्छाद्यान्तरेण गार्हपत्याहवनीयौ हृत्वोत्तानं चिते निपात्य ५

उत्तरतः पत्नीमुपसंवेश्य उदीर्ष्व नारि इत्युत्थाप्य प्राणायतनेषु हिरण्यशकलं निधाय घृतेन वाभिघार्य ६ पात्राणि युनक्ति ७ दक्षिणे पाणौ जुहूम् ८ उपभृतं सव्ये ९ ध्रुवामुरसि १० अग्निहोत्रहवणीं कण्ठे ११ स्रुवौ नासिकयोः १२ प्राशित्रहरणं दक्षिणे श्रोत्रे १३ प्रणीताप्रणयनं सव्ये १४ शिरसि कपालानि १५ दत्सु ग्राव्णः १६ उदरे समवत्तधानीम् १७ पार्श्वयोः पात्र्यौ १८ स्फ्यं दक्षिणे पार्श्वे १९ सव्ये कृष्णाजिनम् २० उपस्थेऽरणी २१ ऊर्वोरष्ठीवतो-श्चोलूखलमुसले २२ पत्तोऽग्निहोत्रपात्राणि २३ तानि घृतेन पृषदाज्येन वा पूरयित्वाभिघार्याजं बध्नीयाद् दर्भमयेनाबलेन वा २४ अजं द्रवन्तमनुमन्त्रयते अजो भागः इति २५ अयं वै त्वमस्मादयं ते योनिस्त्वमस्य योनिः । पिता पुत्रस्य लोककृज्ञातवेदः । वहस्वैनं सुकृताँ यत्र लोकः । अयं वै त्वामजनय-दयं त्वयि जायतामसौ स्वाहा इति स्रुवेण हुत्वोदङ्ङुत्क्रामन्ति २६ उपो-षन्त्यग्निभिः २७ प्रगृह्योल्मुकेन मैनमग्ने विदहः इति संप्रदीप्ते दश जपित्वा सव्यावृत्तोऽनवेक्षमाणाः प्रागुदञ्चः प्रक्रान्तान्मृत्योः पदमित्यनुमन्त्रयते द्वाभ्याम् २८ आचार्यस्य च मातापित्रोर्वपित्वा तीर्थं गत्वा तस्य पश्चात् तिर्यक् त्रीनुन्मृज्य तेष्वश्मनो निधाय पलाशशाखे ग्रन्थिं कृत्वा तयोरधोऽतिक्रामन्ति २९

देवस्य सवितुः पवित्रं सहस्रधारं विततमन्तरिक्षे
येनापुनदिन्द्रमनार्तमार्त्यै तेनाहं सर्वतनुं पुनामि

इत्यनुमन्त्र्य एतान् पृथग् जघन्यः शाखे व्यत्यस्येत् ३०

या राष्ट्रात्पर्णादुपयन्ति शाखा अभीवृता नृपतिमिच्छमानाः
धातुस्थाः सर्वाः पवनेन शुद्धाः पूता भवत यज्ञियासः इति ३१

अथ चतुर्थः खण्डः

आपो हिष्ठा स ना च सोम इत्युदकं स्पृशन्ति सूक्ताभ्याम् १ शिरसि गोमयं कृत्वा शुष्कमनुस्रोतसमनुपनिमज्जन्तोऽसन्तापमानाः २ आपो अस्मान् इत्या-कृष्योदकं प्रसिञ्चेयुः एतत्त उदकमपोऽसौ इत्यपो भूमौ निषिञ्चन्ति त्रिरु-पस्पृश्योपस्पृश्य ३ सञ्चित्वापि ४ एकैकामन्यत्रोभयतः काल आ प्रदानात्

५ ग्रामं गत्वा द्वार्युदपात्रे दूर्वायवसर्षपानोप्यार्द्रगोमये निधाय अश्मन्वतीः इत्यभ्यक्तमश्मानमुदपात्रं च संमृशति ६ तच्चक्षुः इत्यादित्यमुपस्थाय रात्रौ चेतनर्चाग्निमुपस्थाय ७ तन्तून् वा दशासु बध्वा ८ अधःशय्या हविष्यभक्षता प्रत्यूहनं च कर्मणामेकरात्रं त्रिरात्रं नवरात्रं वा ९ नाघाहानि वर्धयेयुरिति ह स्माह कौषीतकिः १०

## अथ पञ्चमः खण्डः

आ वा संचयनाद्व्रतानि १ अपरपक्षे सञ्चिनोति २ अशान्तेऽग्नावेके ३ गत्वा दहनं दक्षिणतोऽङ्गारान्निरूह्याहुतीस्तिस्रो जुहोति अवसृज पुनरग्ने इत्येताभिस्तिसृभिः ४ उदुम्बरशाखाभिः क्षीरोदकैरभ्यवोक्षति यं ते

अग्निं मन्थाम वृषभायेच पक्तवे
इमं तं शमयामसि क्षीरेण चोदकेन च

यं त्वमग्ने समदहस्तमु निर्वापया पुनः
कियांम्ब्वत्र रोहतु पाकदूर्वा व्यल्कशा

शीतिके शीतिकावति ह्लादिके ह्लादिकावति
मण्डूक्या सु सङ्गमेमं स्वग्निं शमय ५

शं ते स्रवन्तीस्तन्वापः शमु ते सन्तु कूप्याः ।
शं ते धन्वन्या आपः शमु ते सन्तु नृप्याः

शं ते समुद्रिया आपः शमु ते सन्तु वर्ष्याः
शं ते नीहारो वर्षतु शमु कृष्वावशीयताम्
इत्यद्भिरभ्युपोक्षति ६

## अथ षष्ठः खण्डः

पुराणे कुम्भे शरीराण्योप्य उपसर्प मातरमिति तिसृभिररण्ये निखनन्ति १ उत्ते स्तभ्नामि इति लोष्टेनापिधाय २ प्रवसतस्तु प्रेतस्यापि वान्यवत्सायाः पयसा तूष्णींन्यायमग्निहोत्रम् ३ अधस्ताद्धारणं समिधः ४ आ शरीराणां अङ्गमा-

ददर्शने शरीराणां चत्वारिंशच्छिरसि ग्रीवायां दशांसान्वांसयोः बाहुभ्यां शतमङ्गुलीभिर्दशोरसि त्रिंशज्जठरे विंशतिः षळ् वृषणयोः शिश्ने चत्वार्यूरुभ्यां शतं त्रिंशज्जानुजङ्घाष्ठीवतोः पादतोऽङ्गुलीभिर्दश । एवं त्रीणि षष्टिशतानि पलाशवृन्तानामाहृत्य पुरुषाकृतिं कृत्वोर्णासूत्रैः परिवेष्ट्य यवचूर्णैः परिलिप्य सर्पिषा सन्नीय दीपनप्रभृति समानम् ५ इच्छन्पत्नीं पूर्वमारिणीमग्निभिः संस्कृत्य सान्तपनेन वान्यामानीय ततः पुनरादधीत ६

अथ सप्तमः खण्डः

व्रतापवर्गे श्राद्धकर्म यथाश्राद्धम् १

अयमोदनः कामदुघोस्त्वनन्तोऽक्षीयमाणः सुरभिः सर्वकामी
स त्वोपतिष्ठत्वजरो नित्यपूतः स्वधां दुहानो महतीं तर्पयत्वसौ

इत्येकपिण्डस्य २ अञ्जनाभ्यञ्जनप्रभृति समानम् ३

अथ अष्टमः खण्डः

तस्यापवर्गे परिधिकर्म १ आनळुहं लोहितं चर्म प्राग्ग्रीवं वोदग्ग्रीवं वोत्तरलोम पश्चादग्नेरुपस्तीर्य तस्मिन्नुपविश्य २ अन्तरेणाग्निमेतांश्चाश्मानं निदधाति ३ शम्याः परिधीन् कृत्वा शमीमयमिध्मं पालाशं वारुणेन स्रुवेण कंसेन वा जुहोतीत्युपस्थकृतः समन्वारब्धेषु ४

इमं जीवेभ्यः परैतु मृत्युरमृतं न आगन् वैवस्वतो अभयं नः कृणोतु
पर्णं वनस्पतेरिवाभिनश्शीयतां रयिः सचतां नः शचीपातः

याश्चारुणेः दशान्वाधान इति अप नः शाशुचदघमिति सप्त अग्ने नय यस्त्वा हृदा त्वं नो अग्ने अधरादुदक्तात् इति द्वादश हुत्वा यथाहानि इति दक्षिणमंसं द्वाभ्यां समीक्ष्याञ्जनं सर्पिषा सन्नीय दर्भपिञ्जूलैः स्त्रीणामक्षीण्यनक्ति इमा नारीः इति सकृन्मन्त्रेण द्विस्तूष्णीम् ५ ब्राह्मणस्य बाहुमन्वारब्धां वा गोर्वा पुच्छमुत्तिष्ठतोऽनुमन्त्रयते उत्तिष्ठ ब्रह्मणस्पते इति ६ अनड्वानहतं वासः कंसश्च दक्षिणा ७ दक्षिणातो वा चित्तम् ८ नि वर्तध्वमिति सूक्तेन प्रत्येनाः प्रदक्षिणमग्निं प्रदक्षिणं त्रिः पर्येति ९ प्रत्येनसि परिधिकर्म १० एष एव बानाहिताग्नेः

कल्पः ११ राजगवीमामित्वामुल्मुकमुद्धृत्य सर्वमन्यत्समानं सर्वमन्यत्स-
मानम् १२

इति कौषीतकगृह्यस्य पञ्चमोऽध्यायः
कौषीतकगृह्यश्च समाप्तः

# मानवगृह्यसूत्रम्

श्रीरस्त्वत्र

प्रथमः पुरुषः

प्रथमः खराडः

अथ मानवगृह्यसूत्रप्रारम्भः

ॐ उपनयनप्रभृति व्रतचारी स्यात् १ मार्गवासाः संहतकेशो भैक्षाचार्यवृत्तिः सशल्कदराडः सप्त । मुञ्जां मेखलां धारयेदाचार्यस्याप्रतिकूलः सर्वकारी २ यदेनमुपेयात्तदस्मै दद्याद्बहूनां येन संयुक्तः ३ नास्य शय्यामाविशेत् ४ न सँवस्त्रयेत् ५ न रथमारोहेत् ६ नानृतँ वदेत् ७ न मुषिताँ स्त्रियं प्रेक्षेत ८ न विहारार्थो जल्पेत् ९ न रुच्यर्थं किंचन धारयीत १० सर्वाणि साँस्पर्शिकानि स्त्रीभ्यो वर्जयेत् ११ न मधुमाँसे प्राश्नीयात्क्षारलवणे च १२ न स्नायादुदकँ वाभ्यवेयात् १३ यदि स्नायाद्दराड इवाप्सु प्लवेत १४ प्रागस्तमयान्निष्क्रम्य समिधावाहरेद्धरिरायौ ब्रह्मवर्चसकाम इति श्रुतिः १५ इमँ स्तोममर्हत इत्यग्निं परिसमुह्य पर्युक्ष्य परिस्तीर्यैधोस्येधिषीमहीति समिधमादधाति समिदसि समेधिषीमहीति द्वितीयाम् १६ अपो अद्यान्वचारिषमित्युपतिष्ठते १७

यदग्ने तपसा तपो ब्रह्मचर्यमुपेयमसि
प्रियाः श्रुतस्य भूयास्मायुष्मन्तः सुमेधस

इति मुखँ विमृष्टे १८ भद्रं कर्णेभिः शृणुयाम देवा इति श्रोत्रे अभिमृशति १९ भद्रं पश्येमाक्षभिर्यजत्रा इति चक्षुषी २० स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिर्व्यशेम देवहितँ यदायुरित्यङ्गानि २१ इह धृतिरिह स्वधृतिरिति हृदयदेशमारभ्य जपति २२ रुचं नो धेहीति पृथिवीमारभते २३

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषम्
यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम्

इति भस्मनाङ्गानि सँस्पृश्यापोहिष्ठीयाभिर्मार्जयते २४

इति प्रथमः खराडः १

## द्वितीयः खराडः

ॐ अथ संध्यामुपास्ते १ प्रागस्तमयान्निष्क्रम्योत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशे निषद्योपस्पृश्यापामञ्जलिं पूरयित्वा प्रदक्षिणमावृत्य । आयाहि विरजे देव्यक्षरे ब्रह्मसंमिते । गायत्रीं छन्दसां मातरिदं ब्रह्म जुषस्व मे । इत्यावाहयति २ ओजोऽसीति जपित्वा कस्ते युनक्तीति योजयित्वों भूर्भुवः स्वस्तत्सवितुरित्यष्टौ कृत्वः प्रयुङ्क इत्याम्नाताः कामा आदेवो यातीति त्रिष्टुभँ राजन्यस्य युञ्जत इति जगतिँ वैशस्य ३ उदुत्यं जातवेदसमिति द्वे निगद्य कस्ते विमुञ्चतीति विमुच्योदकाञ्जलिमुत्सृजति ४ एवं प्रातस्तिष्ठन् ५ एतेन धर्मेण द्वादशचतुर्विँशतिँषट्त्रिँशतमष्टाचत्वारिँशतं वा वर्षाणि यो ब्राह्मणो राजन्यो वैश्यो वा ब्रह्मचर्यं चरति मुराडः शिखाजटः सर्वजटो वा मलज्ञुरबलः कृशः स्नात्वा स सर्वं विन्दते यत्किंचिन्मनसेच्छतीति ६ एतेन धर्मेण साध्वधीते ७ छन्दस्यर्थान्बुध्वा स्नास्यन्गां कारयेत् ८ आचार्यमर्हयेच्छ्रोत्रियः ९ अन्यो वेदपाठी न तस्य स्नानम् १० आपो हिष्ठेति तिसृभिर्हिरगयवर्णाः शुचय इति द्वाभ्यां स्नात्वाऽहते वाससी परिधत्ते ११ वस्वसि वसुमन्तं मा कुरु सौवर्चसाय मा तेजसे ब्रह्मवर्चसाय परिदधामीति परिदधाति १२ यथा द्यौश्च पृथिवी च न बिभीतो न रिष्यतः । एवं मे प्राण मा बिभ एवं मे प्राण मा रिष इत्याङ्क्ते १३ हिरगयमाबध्नीते १४ छत्रं धारयते दराडं मालां गन्धम् १५ प्रतिष्ठे स्थोदैवते द्यावापृथिवी मा मा संताप्तमित्युपानहौ १६ द्विवस्त्रोऽत उर्ध्वं भवति तस्माच्छोभनं वासो भर्त्तव्यमिति श्रुतिः १७ आमन्त्र्य गुरूनगुरुवन्धूंश्च स्वान्गृहान्व्रजेत् १८ प्रतिषिद्धमपरया द्वारा निष्क्रमणं मलवद्वाससा सह सँवस्त्रणं रजः सुवासिन्या सह शय्या गुरोर्दुरुक्तवचनमस्थाने शयनँ स्मयनँ सरणँ स्थानँ यानं गानं तस्य चेक्षणम् १९ पौर्णमास्याममावास्यायाँ वाग्नेयेन पशुना यजेत २० तस्य हविर्भक्षयित्वा यथासुखमत ऊर्ध्वं मधुमाँसे प्राश्नीयात्क्षारलवणे च २१

इति द्वितीयः खराडः

## तृतीयः खराडः

यमेवँ विद्वाँसमभ्युदियाद्वाभ्यस्तमियाद्वा प्रतिबुध्य जपेत्

पुनर्मा मैत्विन्द्रियं पुनरायुः पुनर्भगः
पुनर्द्रविणमैतु मां पुनर्ब्राह्मणमैतु माम्

अथोयथेमे धिष्णयासो अग्नयो यथास्थानं कल्पयन्तामिहै । वेत्यभ्युदितः १

पुनर्मात्मा पुनरायुरैतु पुनः प्राणः पुनराकूतिरैतु
वैश्वानरो वावृधानो वरणान्तस्तिष्ठतो मे मनो अमृतस्य केतुः

ईत्यभ्यस्तमितः २ उभावेव वाभ्युदितो जपेदुभावेव वाभ्यस्तमितः ३ यद्यचरणीयान्वाचरेदनाक्रोश्यान्वाक्रोशेदभोज्यस्य वान्न मश्नीयादद्गि वा स्पन्देत्कर्णौ वाक्रोशेदग्निँ वा चितिमारोहेत्स्मशानँ वा गच्छेद्यूपँ वोपस्पृशेद्रेतसो वा स्कन्देदेताभ्यामेवमन्त्राभ्यामाहुतीर्जुहुयादपि वाज्यलिप्ते समिधा वादध्यादपि वा मन्त्रावेव जपेत् ४ एवमधर्ममाचर्यास्थूलम् ५ स्थूले वेषणया विहरेदवस्त्रो लोमत्वगाच्छादोऽग्निमारोहेत्संग्रामे वा घातयेदपि वाग्निमिन्धानं तपसात्मानमुपयोजयीत ६

इति तृतीयः खरडः

चतुर्थः खरडः

वर्षासु श्रवरोन स्वाध्यायानुपाकुरुते १ स जुहोति

अप्वा नामासि तस्यास्तेजोष्ट्रीं गमेयम्
अहमिद्धि पितुः परिमेधामृतस्य जग्रभ अहं सूर्य इवाजनि स्वाहा
अप्वो नामासि तस्य तेजोष्ट्रं गमेयम्
अहमिद्धि पितुः परिमेधामृतस्यजग्रभ अहं सूर्य इवाजनि स्वाहा

सरस्वती नामासि सरस्वन्नामासि । युक्तिर्नामासि योगो नामासि । मतिर्नामासि मनो नामासि । तस्यास्तेजोष्ट्रीं गमेयम् । तस्य तेजोष्ट्रं गमेयमिति सर्वत्रानुषजति २ युजे स्वाहा प्रयुजे स्वाहोद्युजेस्वाहेत्यैतैरन्तेवासिनां योगमिच्छन्निति ३ प्राक्स्विष्टकृतोऽथ जपति । ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारम् । वाङ्मे मनसि प्रतिष्ठिना मनो मे वाचि प्रतिष्ठितमाविरायुर्मयि धेहि वेदस्य वाणीः स्थ । ॐ भूर्भुवः स्वस्तत्सवितुरिति ४ दर्भपाणिस्त्रिः सावित्रीमधीते । त्रींश्चादितोऽनुवाकान् । को वो युनक्तीति च । उपाकुर्महेऽध्यायानुपतिष्ठन्तु च्छन्दासीति च ५ तस्यानध्यायाः समूहन्वातो वली कह्लारप्रभृति वर्षं न विद्योतमाने न

स्तनयतीति श्रुतिराकालिकं देवतुमुलं विद्युद्धन्वोल्कात्यक्षराः शब्दाः । आचारेणान्ये ६ अर्धपञ्चमान्मासानधीत्योत्सृजति पञ्चार्धषष्ठान्वा ७ अथ जपति ऋतमवादिषं सत्यमवादिषं तन्मावीत्तद्वक्तारमावीदावीन्मामावीद्व-क्तारम् । वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरायुर्मयि धेहि । वेदस्य वाणीः स्थ । ॐ भूर्भुवः स्वस्तत्सवितुरिति ८ दर्भपाणिस्त्रिः सावित्रीमधीते । त्रींश्चादितोऽनुवाकान्को वो विमुञ्चतीति विमुच्योत्सृजामहे-ऽध्यायान्प्रतिश्वसन्तु छन्दांसीति च ९ प्रतिपदं पक्षिणीं रात्रीं नाधीयीत नात ऊर्ध्वमभ्रेषु १० आकालिको विद्युत्स्तनयित्नुवर्षेषु ११ गोनामेषु मन्त्रब्राह्मण-कल्पयितृमेधमहाव्रताऽष्टापदीं वैषुवतानि दिवाधीयीत वैषुवतमार्द्रपाणिः १२ रुद्रान्न नक्तं न भुक्त्वा न ग्रामे १३ शुक्रियस्य प्रवर्ग्यकल्पे नियमो व्याख्या-तस्त्रयोविँशं तु संमील्य १४ गवां तु न सकाशे गोनामानि गर्भिणी-नामसकाशेऽष्टापदीँ रेतो मूत्रमिति च १५ शुनासीर्यस्य च सौर्ये चक्षुष्कामस्य चक्षुर्नो धेहि चक्षुष इति सूर्योऽपोऽवगाहत इति चादित्यसौर्ययाम्यानि षड्चानि दिवाधीयीत १६ उपाकृत्योत्सृज्य च त्र्यहं पञ्चरात्रमेके १७ वेदारम्भणे समाप्तौ चाकालम् १८

इति चतुर्थः खण्डः

पञ्चमः खण्डः

अथातोऽन्तरकल्पँ व्याख्यास्यामः १ दर्भमयँ वासः परिधायाचम्यापां नप्त्र इति तीरे जपित्वापोऽवगाह्य ॐ भूर्भुवः स्वस्तत्सवितुरिति २ दर्भपाणिस्त्रिः सावित्रीमधीते त्रीँश्चादितोऽनुवाकान् ३ आपो देवीर्हविष्मतीरिमा निग्राभ्या स्थ महित्रीणामवोऽस्तु अग्नेरायुरसि देवीरापो अपां नपाद्देवीरापो मधुमतीरग्नये स्वाहा रात्रीँ रात्रीमित्यष्टौ ४ या ओषधयः समन्यायन्ति पुनन्तु मा पितरोऽग्ने-र्मन्वे सशेवृधमधिधाः कया नश्चित्र आभुवदूतीति तिस्त्रः ५ तच्छँयोरावृणीमह इति मार्जयित्वा वासांस्युत्सृज्याचार्यान्पितृधर्मेण तर्पयन्ति ६ श्राद्धकल्पेन शेषो व्याख्यातः ७

इति पञ्चमः खण्डः

षष्ठः खराडः

ग्रथातोऽग्निं प्रवर्तयन्ति १ उत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशे वेद्याकृतिं कृत्वाहवनीयस्थाने सप्त च्छन्दाँसि प्रतिष्ठाप्य विष्टरान्दर्भमुष्टीन्वा दक्षिणाग्निस्थाने प्रौगाकृतिं कौसितं खात्वा पश्चादुत्करमपां पूरयित्वा गार्हपत्यस्थानेऽग्निं प्रणीय युञ्जानः प्रथमं मन इत्यष्टौ हुत्वाकूतमग्निं प्रयुजँ स्वाहेति षड्जुहोति विश्वो देवस्य नेतुरिति सप्तमीम् २ यज्ञियानाँ समिधां त्रीँस्त्रीन् समित्पूलानुपकल्प्य प्राक्स्विष्टकृतस्तिष्ठन्तो व्याहृतिपूर्वकं खरिडलस्यादितस्त्रिभिरनुवाकैरेकैकेन स्वाहाकारान्ताभिरादधति ३ ग्रापोहिष्ठीयाभिः कौसितान्मार्जयित्वा धानाभिर्ब्राह्मणान्स्वस्ति वाचयन्ति धानाभिर्ब्राह्मणान्स्वस्ति वाचयन्ति ४ इति मानवे

षष्ठः खराडः ६

सप्तमः खराडः

ग्रथोपनिषदर्हाः । ब्रह्मचारी सुचरिती मेधावी कर्मकृद्धनदः प्रियो विद्यां वा विद्ययान्वेष्यन् १ तानि तीर्थानि ब्रह्मणः २ भार्या ँ विन्दते ३ कृत्तिका स्वाति पूर्वैरिति वरयेत् ४ रोहिणीमृगशिरः श्रवणश्रविष्ठोत्तराणीत्युपयमे तथोद्वाहे यद्वा पुरायोक्तम् ५ पञ्च विवाहकारकाणि भवन्ति वित्त ँ रूप ँ विद्या प्रज्ञा बान्धव इति ६ एकालाभे वित्तँ विसृजेद्द्वितीयालाभे रूपं तृतीयालाभे विद्यां प्रज्ञायां बान्धव इति च विवहन्ते ७ बन्धुमतीं कन्यामस्पृष्टमैथुना मुपयच्छेत समानवर्णामसमानप्रवराँ यवीयसीं नग्निकाँ श्रेष्ठाम् ८ विज्ञानमस्याः कुर्यादष्टौ लोष्टानाहरेत्सीतालोष्टँ वेदिलोष्टं दूर्वालोष्टं गोमयलोष्टं फलवतो वृक्षस्याधस्ताल्लोष्टँ श्मशानलोष्टमध्वलोष्टमिरिणलोष्टमिति ९ देवागारे स्थापयित्वाथ कन्यां ग्राहयेद्यदि स्मशानलोष्टं गृह्णीयादध्वलोष्टमिरिणलोष्टँ वा नो पयमेत् १० संजुष्टां धर्मेणोपयच्छेत ब्राह्मेण शौल्केन वा ११ शतमितिरथं दद्याद्गोमिथुनँ वा १२

इति सप्तमः खराडः ७

ग्रष्टमः खराडः

पश्चादग्नेश्चत्वार्यासनान्युपकल्पयीत १ तेषूपविशन्ति पुरस्तात्प्रत्यङ्मुखो दाता

पश्चात्प्राङ्मुखः प्रतिग्रहीता दातुरुत्तरतः प्रत्यङ्मुखी कन्या दक्षिणत उदङ्मुखो मन्त्रकारः २ तेषां मध्ये प्राक्तूलान्दर्भानास्तीर्य काँस्यमक्षतोदकेन पूरयित्वा-विधवास्मै प्रयच्छति ३ तत्र हिरण्यम् ४ अष्टौ मङ्गल्यान्यावेदयति ५ मङ्गल्यान्युक्त्वा ददामि प्रतीगृह्णामीति त्रिर्ब्रह्मदेयापिता भ्राता वा दद्यात् ६ सहिरण्यानञ्जलीनावपति धनाय त्वेति दाता पुत्रेभ्यस्त्वेति प्रतिग्रहीता तस्मै प्रत्यावपति ७ चतुर्व्यतिहृत्य ददाति ८ सावित्रेण कन्यां प्रतिगृह्य प्रजापतय इति च क इदं कस्मा अदादिति सर्वत्रानुषजति कामैतत्त इत्यन्तम् ९ समाना वा आकूतानीति सह जपन्त्यान्तादनुवाकस्य १०

खे रथस्य खेऽनसः खे युगस्य शतक्रतो
अपालामिन्द्रस्त्रिः पूर्त्यवकृणोत्सूर्यत्वचम्

इति तेनोदकांस्येन कन्यामभिषिञ्चेत् ११

इति अष्टमः खण्डः ८

नवमः खण्डः

षडर्घ्यार्हा भवन्त्यृत्विगाचार्यो विवाह्यो राजा स्नातकः प्रियश्चेति १ अप्राकरणिकान्वा परिसंवत्सरादर्हयन्ति २ प्राकरणिकाः कर्तारः सदस्याश्च वृताः ३ न जीवत्पितृकोऽर्घ्यं प्रतिगृह्णियादितिश्रुतिरथवा प्रतिगृह्णियात् ४ अथैनमर्हयन्ति ५ काँस्ये चमसे वा दधि मधु चानीय वर्षीयसापिधायाच-मनीयप्रथमैः प्रतिपद्यन्ते ६ विराजो दोहोऽसि विराजो दोहमशीय मयि दोहः पद्यायै विराजः कल्पतामित्येकैकमाह्रियमाणं प्रतीक्षते ७ सावित्रेण विष्टरं प्रतिगृह्य । अहं वर्ष्म सदृशानामुद्यतामिव सूर्यः । इदं तमभितिष्ठामि यो मा कश्चाभिदासति । इति जपति ८ राष्ट्रभृदसीत्याचार्य आसन्दीमनुमन्त्रयते ९ मा त्वा दोष इत्यधस्तात्पादयोर्विष्टरमुपकर्षति १० विष्टर आसीनायैकैकं त्रिः प्राह ११ नैव भो इत्याह नम आर्षेयायेति श्रुतिः स्पृशत्यर्घ्यम् १२ पाद्येन पादौ प्रक्षाल्य सावित्रेण मधुपर्कं प्रतिगृह्य प्रतिष्ठाप्यावसाय्य नमो रुद्राय पात्रसदे नमो रुद्राय पात्रसद इति प्रादेशेनाध्यधि प्रतिदिशं प्रदक्षिणं सर्वतो-ऽभ्युद्दिशति १३ मधु वाता ऋतायत इति तिसृभिरङ्गुल्या प्रदक्षिणं प्रत्यृचं त्रिरायौति १४ अमृतोपस्तरणमसीत्युपस्तरति १५ सत्यं यशः श्रीर्मयि श्रीः

श्रयतामिति मधुपर्कं त्रिः प्राश्नाति १६ श्रमृतापिधानमसीत्याचामति १७ सुहृदेऽवशिष्टं प्रयच्छति १८ श्रसि पाणिर्गां प्राह १९ हतो मे पाप्मा पाप्मानं मे हत ॐ कुरुत इति प्रेष्यति २० चतुरो ब्राह्मणान्नानागोत्रान्भोजयते २१ पश्वङ्गं पायसं वा कारयेन्नामांसो मधुपर्क इति श्रुतिः २२ यद्युत्सृजेत् । माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः । प्रनुवोचं चिकितुषे जनाय मागा मनागा मदितिं वधिष्ट । भूर्भुवः स्वरोमुत्सृजतु तृणान्यत्तु २३ श्रथा-लंकरणमलंकरणमसि सर्वस्मा श्रलं मे भूयासम् २४ प्राणापानौ मे तर्पय समानव्यानौ मे तर्पय उदानरूपे मे तर्पय सुचक्षा श्रहमक्षिभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमिति यथालिङ्गमङ्गानि सँस्पृशति २५ श्रथ गन्धोत्सदने वाससी २६ परिधास्ये यशो धास्ये दीर्घायुत्वाय जरदष्टिरस्तु । शतं जीवेम शरदः पुरूची रायस्पोषमभिसँ व्ययिष्ये । यशसा मा द्यावा-पृथिवी यशसेन्द्राबृहस्पती यशो भगश्च मारिषद्यशो मा प्रतिमुच्यताम् । इत्यहतँ--वासः परिधत्ते २७ कुमार्याः प्रमदने भगमर्यमणं पूषणं त्वष्टारमिति यजति २८ प्राक्स्विष्टकृतश्चतस्त्रोऽविधवा नन्दीरुपवादयन्ति २९ श्रभ्यन्तरे कौतुके देवपत्नीर्जयति ३०

इति नवमः खण्डः ९

दशमः खण्डः

प्रागुदञ्चं लक्षणमुद्धृत्यावोक्ष्य स्थण्डिलं गोमयेनोपलिप्य मण्डलं चतुरस्रं वा श्रग्निं निर्मथ्याभिमुखं प्रणयेत्तत्र ब्रह्मोपवेशनम् १ दर्भाणां पवित्रे मन्त्रवदुत्पाद्येमँ स्तोममर्हत इत्यग्निं परिसमुह्य पर्युक्ष्य परिस्तीर्य पश्चादग्नेरेकवद्बर्हिःस्तृणाति २ उदक्प्राक्तूलान्दर्भान्प्रकृष्य दक्षिणांस्तथोत्तरानग्रेणाग्निं दक्षिणैरुत्तरानवस्तृणाति ३ दक्षिणतोऽग्नेर्ब्रह्मणे सँस्तृणात्यपरँ यजमानाय पश्चार्धे पत्न्यै श्रपरमपरँ शाखो-दकधारयोर्लाजाधार्याश्च पश्चाद्युगधारस्य च ४ स्योना पृथिवि भवेत्येतया-वस्थाप्य शमीमयीः शम्याः कृत्वान्तर्गोष्ठेऽग्निमुपसमाधाय भर्ता भार्याम-भ्युदानयति ५ वाससोऽन्ते गृहीत्वा

श्रघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः
वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे

इत्यभिपरिगृह्याभ्युदानयति ६ उत्तरेण रथँ वानो वानुपरिक्रम्यान्तरेण ज्वलनवहनावतिक्रम्य दक्षिणस्यां धुर्युत्तरस्य युगतन्मनोऽधस्तात्कन्यामवस्थाप्य शम्यामुत्कृष्य हिरण्यमन्तर्धाय हिरण्यवर्णाः शुचय इति तिसृभिरद्भिरभिषिच्य । अत्रैव बाणशब्दं कुरुतेति प्रेष्यति ७ अथास्यै वासः प्रयच्छति या अकृन्तन्या अतन्वन्या आवन्या अवाहरन्याश्च ग्नादेव्योऽन्तानभितोऽततनन्त । तास्त्वा देव्यो जरसे सँव्ययन्त्वायुष्मतीदं परिधत्स्व वासः । इत्यहतँ वासः परिधाप्यान्वारभ्याघारावाज्यभागौ हुत्वा । अग्नये जनविदे स्वाहेत्युत्तरार्धे जुहोति सोमाय जनविदे स्वाहेति दक्षिणार्धे गन्धर्वाय जनविदे स्वाहेति मध्ये ८ युक्तो वह यदाकूतमिति द्वाभ्यामग्निँ योजयित्वा नक्षत्रमिष्ट्वा नक्षत्रदेवताँ यजेत्तिथिं तिथिदेवतामृतुमृतुदेवतां च ९

सोमो ददद्गन्धर्वाय गन्धर्वो दददग्नये
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्

अग्निरस्याः प्रथमो जातवेदाः सोऽस्याः प्रजां मुञ्चतु मृत्युपाशात्

तदिदं राजा वरुणोऽनुमन्यताम्
यथेदँ स्त्रीपौत्रमगन्म रुद्रियाय स्वाहा

इति हिरण्यगर्भ इत्यष्टाभिः प्रत्यृचमाज्याहुतीर्जुहुयात् १० येन च कर्मणेच्छेत्तत्र च जयान्जुहुयाज्जयानां च श्रुतिस्ताँ यथोक्ताम् । आकूत्यै त्वा स्वाहा भूत्यै त्वा स्वाहा प्रयुजे त्वा स्वाहा नभसे त्वा स्वाहा अर्यम्णे त्वा स्वाहा समृद्ध्यै त्वा स्वाहा जयायै त्वा स्वाहा कामाय त्वा स्वाहेत्यृचा स्तोमं प्रजापतय इति च ११ शुचिः प्रत्यङ्ङुपयन्ता ताँ समीक्षस्वेत्याह १२ तस्याँ समीक्षमाणायां जपति

मम व्रते ते हृदयं दधातु मम चित्तमनुचित्तं ते अस्तु
मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तुमह्यम् । इति १३

का नामासीत्याह १४ नामधेये प्रोक्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां

पूष्णो हस्ताभ्याँ हस्तं गृह्णाम्यसाविति हस्तं गृह्णन्नाम गृह्णाति । प्राङ्मुख्याः प्रात्यङ्मुख ऊर्ध्वस्तिष्ठन्नासीनाया दक्षिणमुत्तानं दक्षिणेन नीचारिक्त मरिक्तेन ।

यथेन्द्रो हस्तमग्रहीत्सविता वरुणो भगः
गृभ्णामि ते सौ भगत्वाय हस्तं मया पत्या जरदृष्टिर्यथासत्
भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः

याग्रे वाक्समवदत पुरा देवासुरेभ्यः
तामद्य गाथां गास्यामो या स्त्रीणामुत्तमं मनः

सरस्वति प्रेदमव सुभगे वाजिनीवति
यां त्वा विश्वस्य भूतस्य भव्यस्य प्रगायाम्यस्याग्रतः

अमोऽहमस्मि सा त्वं सा त्वमस्याप्यमोऽहम्
द्यौरहं पृथिवी त्वमृक्त्वमसि सामाहम्

रेतोऽहमस्मि रेतो धत्तम् । ता एव विवहावहै पुँसे पुत्राय कर्त्तवै । श्रीये पुत्राय वेधवै । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । इति १५ अभिदक्षिणमानीयाग्नेः पश्चात्

एतमश्मानमातिष्टतमश्मेव युवां स्थिरौ भवतम्
कृण्वन्तु विश्वे देवा आयुर्वां शरदः शतम्

इति दक्षिणाभ्यां पद्भ्यामश्मानमास्थापयति १६

यथेन्द्रः सहेन्द्राण्या अवारुहद्गन्धमादनात्
एवं त्वमस्मादश्मनो अवरोह सह पत्न्या

आरोहस्व समे पादौ प्र पूर्व्यायुष्मती कन्ये पुत्रवती भव । इत्येवं द्विरा-स्थापयति १७ चतुः परिणयति १८ समितं संकल्पेथामिति पर्याये पर्याये ब्रह्मा ब्रह्मजपं जपेत् १९

इति दशमः खण्डः १०

एकादशः खण्डः

ततो यथार्थं कर्मसन्निपातो विज्ञेयः १ अर्यम्णोऽग्नये पूष्णोऽग्नये वरुणाय च व्रीहीन्यवान्वाभिनिरूप्य प्रोन्द्य लाजा भृज्ञति २ मात्रे प्रयच्छति स जाताया अविधवायै ३ अथास्यै द्वितीयं वासः प्रयच्छति तेनैव मन्त्रेण ४ दर्भरज्वा इन्द्राण्याः संनहनमित्यन्तौ समायम्य पुमाँसं ग्रन्थिं बध्नाति ५ सं त्वा नह्यामि पयसा पृथिव्याः सं त्वा नह्याम्यद्भिरोषधीभिः । सं त्वा नह्यामि प्रजया धनेन सा सन्नद्धा सुनुहि भागधेयम् । इत्यन्तरतो वस्त्रस्य योक्त्रेण कन्यां संनह्यते ६ अथैनान्युपकल्पयते शूर्पं लाजा इषीका अश्मानमाञ्जनम् ७ चतसृभि-र्दर्भेषीकाभिः शरेषीकाभिर्वा समुञ्जाभिः सतूलाभिरित्येकैकया त्रैककुभस्या-ञ्जनस्य संनिकृष्य वृत्रस्यासि कनीनिकेति भर्तुर्दक्षिणमक्षि त्रिः प्रथममाङ्क्ते तथापरं तथा पत्न्याः शेषेण तूष्णीम् ८ दिशि शलाकाः प्रविध्यति

यानि रक्षांस्यभितो व्रजन्त्यस्या वध्वा अग्निसकाश मागच्छन्त्याः
तेषामहं प्रतिविध्यामि चक्षुः स्वस्ति वध्वै भूतपतिर्दधातु । इति ९

लाजाः पश्चादग्नेरुपसाद्य शमीपर्णैः सँयुज्य शूर्पे समं चतुर्धा विभज्याग्रेणाग्निं पर्याहृत्य लाजाधार्यै प्रयच्छति १० लाजा भ्राता ब्रह्मचारी वाञ्जलि-नाञ्जल्योरावपति ११ उपस्तरणाभिघारणैः संपातं ता अविच्छिन्नैर्जुहुतः

अर्यमणं नु देवं कन्या अग्निमयक्षत
सोऽस्मान्देवोऽर्यमा प्रेतो मुञ्चातु मामुतः स्वाहा

तुभ्यमग्ने पर्यवहन्त्सूर्याँवहतुना सह
पुनः पतिभ्यो जायां दा अग्नेः प्रजया सह

पुनः पत्नीमग्निरदादायुषा सह वर्चसा
दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम्

इयं नार्युपब्रूतेऽग्नौ लाजानावपन्तिका

दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो ममेति १२ एवं पूषणं नु देवं वरुणं नु देवम् १३ येन द्यौरुग्रेत्यादय उद्वाहे होमा जयाभ्यातानाः संततिहोमा राष्ट्रभृतश्च १४

आकूताय स्वाहेति जयाः प्राची दिग्वसन्त ऋतुरित्यभ्यातानाः । प्राणादपानँ संतन्विति संततिहोमा ऋताषाड्तधामेति द्वादशराष्ट्रभृतश्च १५ त्रातारमिन्द्रँ विश्वादित्या इति माङ्गल्ये १६ लाजाः कामेन चतुर्थँस्विष्टकृतमिति १७ अथैनां प्राचीँ सप्तपदानि प्रक्रमयत्येकमिषे द्वे ऊर्जे त्रीणि प्रजाभ्यश्चत्वारि रायस्पोषाय पञ्च भवाय षड्तुभ्यः सखा सप्तदी भव सुमृडीका सरस्वती । मा ते व्योम संदृशि । विष्णुस्त्वामुन्नयत्विति सर्वत्रानुषजति १८ पश्चादग्ने रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो दर्भानास्तीर्य तेषु वधूमुपवेशयत्यपि वा दर्भेष्वेव १९

इमँ विष्यामि वरुणस्य पाशँ यज्ञग्रन्थ सविता सत्यधर्मा
धातुश्च योनौ सुकृतस्य लोकेऽरिष्टां मा सह पत्या दधातु

इति योक्त्रपाशँ विषाय वाससोऽन्ते बध्नाति २० अनुमतिभ्याँ व्याहृतिभिश्च त्वं नो अग्ने स त्वं नो अग्ने अयाश्चाग्नेऽसीति च २१ शमीमयीस्तिस्त्रोऽक्ताः समिधः समुद्रादूर्मिरित्येताभिस्तिसृभिः स्वाहाकारान्ताभिरादधाति २२ अक्षत-सक्तूनां दध्नश्च समवदायेदँ हविः प्रजननं म इति च हुत्वा वि ते मुञ्चामि रशनाँ वि रश्मीनिति च हुत्वा पवित्रेऽनु प्रहृत्याज्येनाभिजुहोति २३ एधोऽस्ये-धिषीमहीति समिधमादधाति । समिदसि समेधिषीमहीति द्वितीयाम् २४ अपो अद्यान्वचारिषमित्युपतिष्ठन्ते २५ कुम्भादुदकेनापोहिष्ठीयाभिर्मार्जयन्ते २६ वरो दक्षिणा २७

इत्येकादशः खण्डः ११

द्वादशः खण्डः

सुमङ्गलीरियँ वधूरिमां समेत पश्यतः
सौभाग्यमस्यै दत्वायाथास्त्वं विपरेतन

इति प्रेक्षकान्व्रजतोऽनुमन्त्रयते १ अत्रैव सीमन्तं करोति त्रीश्येतया शलल्या समूलेन वा दर्भेण सेनाहनामेत्येतया २ अथाभ्यञ्जन्ति

अभ्यज्य केशान्सुमनस्यमानाः प्रजावरीर्यशसे बहुपुत्रा अघोराः
शिवा भर्तुः श्वशुरस्यावदायायुष्मतीः श्वश्रूमतीश्चिरायुः । इति ३

जीवोर्णयोपसमस्यति समस्य केशानवृजिनानघोरान्शिखा सखीभ्यो भव सर्वाभ्यः । शिवा भव सुकुलोह्यमाना शिवा जनेषु सहवाहनेषु । इति ४ अथैनौ दधिमधु समश्नुतो यद्वा हविष्यँ स्यात् ५ तस्य स्वस्ति वाचयित्वा समाना वा आकूतानीति सह जपन्ति ६ उभौ सह प्राश्नीतः ७

इति द्वादशः खण्डः १२

## त्रयोदशः खण्डः

पुण्याहे युङ्क्ते १ युञ्जन्ति ब्रध्नमिति द्वाभ्याँ युज्यमानमनुमन्त्रयते दक्षिणमथोत्तरम् २ अहतेन वाससा दर्भैर्वा रथँ संमार्ष्टि ३ अङ्क्त्यङ्कावभितो रथँ ये ध्वान्ता वाता अग्निमभि ये संचरन्ति । दूरेहेतिः पतत्री वाजिनीवाँस्ते नोऽग्नयः पप्रयः पालयन्तु । इति चक्रेऽभिमन्त्रयते ४ वनस्पते विड्वङ्ग इत्यधिष्ठानम् ५ सुकिँशुकँ शल्मलिँ विश्वरूपँ हिरण्यवर्णँ सुवृतँ सुचक्रम् । आरोह सूर्ये अमृतस्य लोकँ स्योनं पत्ये वहतं कृणुष्व । इत्यारोहयति ६ अनुमायन्तु देवता अनुब्रह्म सुवीर्यम् । अनुक्षत्रं तु यद्बलमनुमामैतु मद्यशः । इति प्राङभिप्रयाय प्रदक्षिणमावर्तयति ७ प्रति मायन्तु देवताः प्रति ब्रह्म सुवीर्यम् । प्रति क्षत्रं तु यद्बलं प्रति मामैतु यद्यशः । इति यथास्तँ यन्तमनुमन्त्रयते ८ अमङ्गल्यं चेदतिक्रामति अनुमायन्त्विति जपति ९ नमो रुद्राय ग्रामसद इति ग्रामे इमा रुद्रायेति च १० नमो रुद्रायैकवृक्षसद इत्येकवृक्षे । ये वृक्षेषु शष्पिञ्जरा इति च ११ नमो रुद्राय श्मशानसद इति श्मशाने । ये भूतानामधिपतय इति च १२ नमो रुद्राय चतुष्पथसद इति चतुष्पथे । ये पथां पथिरक्षय इति च १३ नमो रुद्राय तीर्थसद इति तीर्थे । ये तीर्थानि प्रचरन्तीति च १४ यत्रापस्तरितव्या आसीदति समुद्राय वैणवे सिन्धूनां पतये नमः । नमो नदीनाँ सर्वासां पत्ये । विश्वाहा जुषताँ विश्वकर्मणामिदँ हविः स्वः स्वाहेत्यप्सूदकाञ्जलीन्निनयति । अमृतं वा आस्ये जुहोम्यायुः प्राणेऽप्यमृतं ब्रह्मणा सह मृत्युन्तरति । प्रासहादिति रिष्टिरिति मुक्तिरिति मुक्षीयमाणः सर्वं भयं नुदस्व स्वाहेति त्रिः परिमृज्याचामति १५ यदि नावा तरेत्सुत्रामाणमिति जपेत् १६ यदि रथाक्षः शम्याणीवा रिष्येतान्यद्वा रथाङ्गं तत्रैवाग्निभुपसमाधाय जयप्रभृतिभिर्हुत्वा सुमङ्गलीरियँ वधूरिति जपेद्बध्वा सह वधूँ समेत पश्यत १७ व्युत्क्राम पन्थां जरितां जवेन शिवेन

वैश्वानर इडयास्याग्रतः । स्राचार्यो येन येन पथा प्रयाति तेन तेन सह । इत्युभावेव व्युत्क्रामतः १८ गोभिः सहास्तमिते ग्रामं प्रविशन्ति ब्राह्मण-वचनाद्वा १९

इति त्रयोदशः खराडः १३

चतुर्दशः खराडः

स्रपरस्मिन्नन्हः संधौ गृहान्प्रतिपादयीत १ प्रतिब्रह्मन्निति प्रत्यवरोहति २ मङ्गलानि प्रादुर्भवन्ति ३ गोष्ठात्सन्ततामुलपराजिँ स्तृणाति ४ रथाद-ध्योपासनात् । येष्वध्येति प्रवसन्येषु सौमनसं महत् । तेनोपव्ययामहे ते नो जानन्त्वागतम् । इति तयाभ्युपैति ५ गृहानहँ सुमनसः प्रपद्ये वीरँ हि वीरवतः सुशेवा । इराँ वहन्ती घृतमुन्नमाणास्तेष्वहँ सुमनाः सँ वसाम । इत्यभ्या-हिताग्निँ सोदकँ सौषधमावसथं प्रतिपद्यते रोहिराया मूलेन वा यद्वा पुरायोक्तम् ६ पश्चादग्ने रोहिते चर्मरायानडुहे प्राग्ग्रीवे लोमतो दर्भानास्तीर्य तेषु वधूमुप-वेशयत्यपि वा दर्भेष्वेव ७ स्रथास्यै ब्रह्मचारिणमुपस्थ स्रावेशयति । सोमे-नादित्या बलिनः सोमेन पृथिवी मही । स्रसौ नन्नत्राणामेषामुपस्थे सोम स्राहितः । इति ८ स्रथास्य तिलतराडुलानां फलमिश्राणामञ्जलिं पूरयि-त्वोत्थाप्याथास्यै ध्रुवमरुन्धतीं जीवन्तीँ सप्त ऋृषीनिति दर्शयेत् ९ स्रच्युता ध्रुवा ध्रुवपत्नी ध्रुवं पश्येम सर्वतः । ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकु-लेयम् । इति तस्याँ समीन्नमाणायां जपति १० श्वोभूते प्राजापत्यं पयसि स्थालीपाकँ श्रपयित्वा तस्य जुहोति । स्राज्यशेषे दधिसमानीय तेन हुतशेषेण ११ चक्रीवानडुहौ वा मे वाङ्क्तु ते मनः । चाक्रवाकँ सँवननं तन्नौ सँवननं कृतमिति यजमानस्त्रिः प्राश्नात्यवशिष्टं तूष्णीं पत्नी १२ स्रपराह्णे पिराड-पितृयज्ञः स व्याख्यातः १३ सँवत्सरं ब्रह्मचर्यं चरतो द्वादशरात्रं त्रिरात्रमेकरात्रं वा १४ स्रथास्यै गृहान्विसृजेत् १५ योक्त्रपाशं विषाय तौ संनिपातयेत् । स्रपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् । इह प्रजामिह रयिँ रराणः प्रजायस्व प्रजया पुत्रकाम । स्रपश्यं त्वा मनसा दीध्यानां स्वायां तनूँ ऋृत्विये बाधमानाम् । उप मामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे । प्रजापतिस्तन्वं मे जुषस्व त्वष्टा देवैः सहमान इन्द्रः । विश्वे-देवैर्ऋृतुभिः सँ विदानः पुँसां बहूनां मातरौ स्याव । स्रहं गर्भमदधामोषधीष्वहँ

विश्वेषु भुवनेष्वन्तः । अहं प्रजा अजनयं पृथिव्या अहं जनिभ्यो अपरीषु पुत्रान् । इति स्त्र्यादिव्यत्यासं जपति १६ करदिति भसदमभिमृशति १७ जननी-त्युपजननम् १८ बृहदिति जातं प्रतिष्ठितम् १९ एतेन धर्मेण ऋतावृतौ सं-निपातयेत् २०

इति चतुर्दशः खण्डः १४

पञ्चदशः खण्डः

तृतीये गर्भमासेऽरणी आहृत्य षष्ठेऽष्टमे वा जयप्रभृतिभिर्हुत्वा पश्चाद-ग्नेर्दर्भेष्वासीनायाः पत्न्याः सर्वान्प्रमुच्य केशान्नवनीतेनाभ्यज्य त्रिश्येनया शलल्या शमीशाखया च स पलाशया पुनः पत्नीमग्निरदादिति सीमन्तं करोति १

इति पञ्चदशः खण्डः १५

षोडशः खण्डः

अष्टमे गर्भमासे जयप्रभृतिभिर्हुत्वा फलैः स्नापयित्वा या ओषधय इत्यनुवाकेनाहतेन वाससा प्रच्छाद्य गन्धपुष्पैरलंकृत्य फलानि कण्ठे वै संसृज्याग्निं प्रदक्षिणं कुर्यात् १ प्रजां मे नर्य पाहीति मन्त्रेणोपस्थानं कृत्वा गुणवतो ब्राह्मणान्भोजयेत् २ फलानि दक्षिणां दद्यात् ३ ततः स्वस्त्ययनं च ४ यो गुरुस्तमर्हयेत् ५

इति षोडशः खण्डः १६

सप्तदशः खण्डः

पुत्रे जाते वरं ददाति १ अरणिभ्यामग्निं मथित्वा तस्मिन्नायुष्यहोमाञ्जुहोति २ अग्नेरायुरसीत्यनुवाकेन प्रत्यृचं प्रतिपर्यायमेकविँशतिमाज्याहुतीर्जुहोति ३ आज्यशेषे दधिमध्वपो हिरण्यशकलेनोपहत्य त्रिः प्राशापयति ४ अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामासि सजीव शरदः शतम् । इति प्रादेशेनाध्यधि प्रतिमुखं प्रदक्षिणँ सर्वतोऽभ्युद्दिशति ५ पलाशस्य मध्यमपर्णं प्रवेष्ट्य तेनास्य कर्णयोर्जपेत्--भूस्ते ददामीति दक्षिणे भुवस्तेददामीति सव्ये स्वस्ते ददामीति दक्षिणे भूर्भुवः--स्वस्ते ददामीति

सव्ये ६ इषं पिन्वोर्जं पिन्वेति स्तनौ प्रक्षाल्य प्रधापयेत् ७
इति सप्तदशः खराडः १७

अष्टादशः खराडः
दशम्यां रात्र्यां पुत्रस्य नाम दध्याद्घोषवदाद्यन्तरन्तस्थं द्व्यक्षरं चतुरक्षरं वा त्र्यक्षरं दान्तं कुमारीणाम् १ तेनाभिवादयितुं त्यक्त्वा पितुर्नामधेयं यशस्यं नामधेयं देवताश्रयं नक्षत्राश्रयं देवतायाश्च प्रत्यक्षं प्रतिषिद्धम् २ स्नात्वा सहपुत्रोऽभ्युपैति ३ अथैनमभिभृशति । अग्नेष्ट्वा तेजसा सूर्यस्य वर्चसा विश्वेषां त्वा देवानां क्रतुनाभिभृशामीति प्रक्षालितपाणिर्नवनीतेनाभ्यज्याग्नौ प्रताप्य ब्राह्मणाय प्रोच्याभिभृशेदिति श्रुतिः ४ वरं कर्त्रे ददाति ५ अङ्गादङ्गात्संभवसि हृदयादधि जायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम् । इति प्रवासादेत्य पुत्रस्य मूर्धनि जपेत् ६ न मधुमांसे प्राश्नीयादापशुबन्धात् ७ संवत्सरे चाजाविभ्यामग्निधन्वन्तरी यजेत् ८
इति अष्टादशः खराडः १८

एकोनविंशः खराडः
अथादित्यदर्शनम् १ चतुर्थे मासि पयसि स्थालीपाकं श्रपयित्वा तस्य जुहोति २ आदित्यः शुक्र उदगात्पुरस्ताद्धंसः शुचिषद्यदेदेनमिति सूर्यस्य जुहोति ३ उदुत्यं जातवेदसमित्येतयोपस्थायादित्याभिमुखं दर्शयेत्

नमस्ते अस्तु भगवन्शतरश्मे तमोनुद
जहि मे देव दौर्भाग्यं सौभाग्येन मां संयोजयस्व

इति ४ अथ ब्राह्मणतर्पणम् ५ ऋषभो दक्षिणा ६
इत्यूनविंशः खराडः १९

विंशतितमः खराडः
अथान्नप्राशनम् १ पञ्चमे षष्ठे वा मासि पयसि स्थालीपाकं श्रपयित्वा स्नातमलङ्कृतमहतेन वाससा प्रच्छाद्यान्नपतेऽन्नस्य नो देहीति हुत्वा हिरण्येन

प्राशयेदन्नात्परिस्रुत इत्यृचा २ रत्नसुवर्णोपस्करारण्यायुधानि दर्शयेत् ३ यदी-
च्छेत्तदुपसंगृह्णीयात् ४ ततो ब्राह्मणभोजनम् ५ वासो दक्षिणा ६
इति विंशः खरडः २०

एकविंशतितमः खरडः
तृतीयस्य वर्षस्य भूयिष्टे गते चूडाः कारयेत् । उदगयने ज्यौत्स्ने पुरये नक्षत्रेऽन्यत्र नवम्याम् १ जयप्रभृतिर्हुत्वा

उष्णेन वायुरुदकेनेद्यजमानस्यायुषा
सविता वरुणोदधद्यजमानाय दाशुषे

इत्युष्णा अपोऽभिमन्त्रयते २

अदितिः केशान्वपत्वाय उन्दन्तु जीवसे
धारयतु प्रजापतिः पुनः पुनः स्वस्तये

इत्यभ्युन्दति ३ ओषधे त्रायस्वैनमिति दक्षिणस्मिन्केशान्ते दर्भमन्तर्दधाति ४ स्वधिते मैनँ हिँसीरिति क्षुरेणाभिनिदधाति ५

येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य केशान्
तेन ब्राह्मणो वपत्वायुष्मानयं जरदष्टिरस्तु

येन पूषा बृहस्पतेरिन्द्रस्य चायुषेऽवपत्
तेन ते वपाम्यायुषे दीर्घायुत्वाय जीवसे

येन भूयश्चरत्ययं ज्योक्च पश्यति सूर्यः
तेन ते वपाम्यायुषे सुश्लोक्याय स्वस्तये

इति तिसृभिस्त्रिः प्रवपति ६

यत्क्षुरेण वर्तयता सुतेजसा वप्तर्वपसि केशान्

शुन्धि शिरो मास्यायुः प्रमोषीः

इति लौहायसं चूरं केशवापाय प्रयच्छति ७

मा ते केशाननुगाद्वर्च एतत्तथा धाता दधातु ते
तुभ्यमिन्द्रो वरुणो बृहस्पतिः सविता वर्च ऋादधुः

इति प्रवपतोऽनुमन्त्रयते ८ सुहृत्परिग्राहँ हरितगोशकृत्पिराडे समवचिनोति ९

उप्त्वाय केशान्वरुणस्य राज्ञो बृहस्पतिः सविता विष्णुरग्निः
तेभ्यो निधानं महतं न विन्दन्नन्तरा द्यावापृथिव्योरपस्युः

इति प्रागुदीचो ह्रियमाणाननुमन्त्रयते १० ऋरिक्ते पन्नयाश्लेषयेदिति श्रुतिः
११ वरं कर्त्रे ददाति पद्मगुडं तिलपिश्लं च केशवापाय १२ एतेन तु कल्पेन
षोडशे वर्षे गोदानमग्निँ वाध्येष्यमाणस्याग्निर्गोदानिको मैत्रायणिरिति श्रुतिः
१३ ऋदितिः श्मश्रु वपत्वित्यूहेन श्मश्रु प्रवपति शुन्धि मुखमिति च १४
इत्येकविंशः खराडः २१

द्वाविंशः खराडः

सप्तमे नवमे वोपायनम् १

ऋागन्त्रा समगन्महि प्रथममर्तिँ युयोतु नः
ऋरिष्टाः संचरेमहि स्वस्ति चरता दिशः । स्वस्त्यागृहेभ्यः

इत्युप्तकेशेन स्नातेनाक्तेनाभ्यक्तेनालंकृतेन यज्ञोपवीतिना समेत्य जपति २
ऋथास्मै वासः प्रयच्छति

या ऋकृन्तन्या ऋतन्वन्या ऋावन्या ऋवाहरन्
याश्चाग्न्या देव्योऽन्तानभितोऽततनन्त

तास्त्वा देव्यो जरसे सँव्ययन्त्वायुष्मन्निदं परिधत्स्व वासः । इत्यहतँ वा-

सः परिधाप्यान्वारभ्याघारावाज्यभागौ हुत्वाज्यशेषे दध्यानीय दधिक्राव्णो अकारिषमिति दधि त्रिः प्राश्नाति ३ को नामासीत्याह ४ नामधेये प्रोक्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ हस्तं गृह्णाम्यसा- विति हस्तं गृह्णन्नाम गृह्णाति प्राङ्मुखस्य प्रत्यङ्मुख ऊर्ध्वस्तिष्ठन्नासीनस्य दक्षिणमुत्तानं दक्षिणेन नीचारीक्तमरिक्तेन सविता ते हस्तमग्रहीदसावग्नि- राचार्यस्तव देवसवितरेषते ब्रह्मचारी त्वं गोपाय समावृतत् । कस्य ब्रह्म- चार्यसि । प्राणस्य ब्रह्मचार्यसि । कस्त्वा कमुपनयते । काय त्वा परि- ददामि । कस्मै त्वा परिददामि । तस्मै त्वा परिददामि । भगाय त्वा परिददाम्यर्यम्णे त्वा परिददामि सवित्रे त्वा परिददामि सरस्वत्यै त्वा परिददामीन्द्राग्निभ्यां त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वे- भ्यस्त्वा देवेभ्यः परिददामीति परिददाति ५ ब्रह्मणो ग्रन्थिरसि स ते मा विस्त्रसदिति हृदयदेशमारभ्य जपति । प्राणानां ग्रन्थिरसीति प्राणदेशम् ६

ऋतस्य गोप्त्री तपसस्तरुत्री घ्नती रक्षः सहमाना अरातीः
सानः समगन्तमभिपर्य्येहि भद्रे धर्तारस्ते सुभगे मेखले मा रिषाम

इति मौञ्जीं पृथ्वीं त्रिगुणां मेखलामादत्ते ७ युवा सुवासा इति मेखलां प्रदक्षिणं त्रिः परिव्ययति ८ पुँसस्त्रीन्ग्रन्थीन्बध्नाति ९

इयं दुरुक्तात्परिबाधमाना वर्णं पुराणं पुनतीम आगात्
प्राणापानाभ्यां बलमाभजन्ती शिवा देवी सुभगे मेखले मा रिषाम

इति तस्यां परिवीतायां जपति

मम व्रते ते हृदयं दधातु मम चित्तमनुचित्तं ते अस्तु
मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् । इति १०

यज्ञियस्य वृक्षस्य दण्डं प्रदाय कृष्णाजिनं चादित्यमुपस्थापयति

अध्वनामध्वपते श्रैष्ठ्यस्य स्वस्त्यस्याध्वनः पारमशीय
तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्

पश्येम शरदः शतं जीवेम शरदः शतम्
शृणुयाम शरदः शतं प्रब्रवाम शरदः शतम्
अदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्

या मेधाप्सरःसु गन्धर्वेषु च यन्मनः
दैवी या मानुषी मेधा सा मामाविशतामिहैव

इति ११ अभिदक्षिणमानीयाग्नेः पश्चात्

एह्यश्मानमातिष्ठाश्मेव त्वँ स्थिरो भव
कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतम्

इति दक्षिणेन पादेनाश्मानमास्थापयति १२ पश्चादग्नेर्महदुपस्तीर्य सूपस्थलं कृत्वा प्राङासीनः प्रत्यङ्ङासीनायानुवाचयति गायत्रीँ सावित्रीमपि ह्येके त्रिष्टुभमपि ह्येके जगतीमोमित्युक्त्वा व्याहृतिभिश्च १३ तां त्रिरवगृह्णीयात्तां द्विरवकृत्य ताँ सकृत्समस्येत्पादशोऽर्धर्चशः सर्वामन्तेन १४ यत्तिसृणां प्रातरन्वाह यद्द्वयोर्यदेकस्याः सँवत्सरे द्वादशाहे षडहे त्र्यहे वा तस्मात्सद्योऽनूच्येति श्रुतिः १५ वरं कर्त्रे ददाति काँस्यँ वसनं च १६ यस्य तु मेधाकामः स्यात्पलाशं नवनीतेनाभ्यज्य तस्य च्छायायां वाचयेत्--सुश्रवः सुश्रवा असि

यथा त्वँ सुश्रवः सुश्रवा असि एवं माँ सुश्रवः सौश्रवसं कुरु
यथा त्वं देवानाँ वेदानां निधिपो असि
एवमहं मनुष्याणाँ वेदानां निधिपो भूयासम्

इति १७ अधीतेह वा अयमेषाँ वेदानामेकं द्वौ त्रीन्सर्वान्वेति यमेवँ विद्वाँसमुपनयतीति श्रुतिः १८ व्याख्यातं ब्रह्मचर्यम् १९ अथ भैक्षं चरते मातरमेवाग्रे याश्चान्याः सुहृदो यावत्यो वा सन्निहिताः स्युः २० आचार्याय भैक्षमुपकल्पयते तेनानुज्ञातो भुञ्जीतेति श्रुतिः २१

इति द्वाविंशः खण्डः

## त्रयोविंशः खराडः

अथ दीक्षा चातुर्हौतृकी सँवत्सरम् १ चतुर्होतृन्स्वकर्मणो जुहुयात्सह षड्ढोत्रा सप्तहोतारम् २ अन्ततो व्रतं प्रदायादितो द्वावनुवाकावनुवाचयेत् ३ एवमेवोद्दीक्षां जुहुयात् ४ अथ दीक्षाग्निकी द्वादशरात्रम् ५ युञ्जानः प्रथमं मन इत्यष्टौ हुत्वाकूतमग्निं प्रयुजँ स्वाहेति षड्जुहोति विश्वो देवस्य नेतुरिति सप्तमीम् ६ व्रतं प्रदायादितोऽष्टावनुवाकाननुवाचयेत् ७ त्रिषवणमुदकमाहरेत्त्रीँ स्त्रीन्कुम्भान् ८ एकेन वाससान्तर्हितायां भूमौ शयीत भस्मनि करीषे सिकतासु वा ९ नोदकमभ्यवेयात् १० समाप्ते घृतवतापूपेनेष्ट्वा वात्सप्रं वाजयेत् ११ ततो घृतवद्भिरपूपैर्ब्राह्मणान्भोजयेत् १२ एवमेवोद्दीक्षां जुहुयात् १३ अथ दीक्षाश्वमेधिकी द्वादशरात्रम् १४ वैतसमिध्ममुपसमाधाय नवमेनानुवाकेन हुत्वा षष्ठेनोपस्थाप्य व्रतं प्रदायादित एकविंशत्यनुवाकाननुवाचयेत् १५ त्रिषवणमश्वस्य घासमाहरेत्त्रीँस्त्रीन्पूलान् १६ एकेन वाससानन्तर्हितायां भूमौ शयीत भस्मनि करीषे सिकतासु वा १७ या ओषधयः समन्या यन्ति पुनन्तु मा पितरोऽग्नेर्मन्व इति चतुर्भिरनुवाकैरपोऽभिमन्त्र्य स्नानमाचरेत् १८ एवमेवोद्दीक्षां जुहुयात् १९ शादं दद्भिरिति चतुर्दशानुवाकाननुवाचयेत् २० रहस्यमध्येष्यमाणः प्रवर्ग्यम् २१ आदेशे यथा पुरस्ताद्व्याख्यातम् २२ आदितः पञ्चविंशत्यनुवाकाननुवाचयेत् २३ त्रैविद्यकमुपनयनेन व्याख्यातम् २४ आदितस्त्रीननुवाकाननुवाचयेत् २५ व्याख्यातानि व्रतानि व्याख्यातानि व्रतानि २६ उदुत्तमं वरुणपाशमिति मेखलामुन्मुञ्चति २७

इति मैत्रायणीयमानवगृह्ये त्रयोविंशः खराडः प्रथमः पुरुषश्च समाप्तः

श्रीरस्त्वत्र

## द्वितीयः पुरुषः

औद्वाहिकं प्रेतपिता शालाग्निं कुर्वीत १ अन्यत्र ततः प्रेते पितरि प्रज्वलन्तोऽग्निं जागरयेयुः पर्वणि ज्यौत्स्ने पुराये नक्षत्रेऽन्यत्र नवम्याः २ स्नातः शुचिरहतवासाः ३ वाग्यतावरणिपाणी जागृतः ४ अवकाशेऽक्षतान्यवान्पिष्ट्वा मन्थमायौत्यनालम्बमिम्ब्लुशलाकया बहुलम् ५ हिरगयपाणिँ सवितारँ वायुमिन्द्रं प्रजापतिम् । विश्वान्देवानङ्गिरसो हवामहे । अमुं क्रव्यादँ शमयन्त्वग्निम् । इति मन्थेनाग्निमवसिञ्चति ६ सोमो राजा विभजतूभाग्निर्व्विभाजयन् ।

इहैवास्तु हव्यवाहनोऽग्निः क्रव्यादं नुदस्व । इति कटे कृतायाँ वाग्निँ समारोप्य प्रहिणोति ७ क्रव्यादमग्निं प्रहिणोमि दूरँ यमराज्यं गच्छतु रिप्रवाहः । इहैवायमितरो जातवेदा देवेभ्यो हव्या वहतु प्रजानन् । इत्यग्निमादाय दक्षिणाप्रत्यग्हरन्ति ८ सहाधिकरणैर्यन्ति ९ स्वकृत इरिणे सीसे मलिम्लुचा- महे शिरोमिमुपबर्हणे । अव्यामसितायामृष्टास्तं प्रेतसुदानवः । इति सीसमुपधानेन्यस्याध्यधि १० धाम्नो धाम्न इति तिसृभिः परोगोष्ठं मार्जयन्ते ११ अनपेक्षमाणाः प्रत्यायन्ति १२ नलैर्वेतसशाखया वा पदानि लोपयन्ते । मृत्योः पदानि लोपयन्ते यदेतद्राघीय आयुः प्रतिरं दधानः । आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवन्तु यज्ञियासः १३ अनड्वाहं प्लवमन्वारभध्वँ येनावेपत्सरमा रपन्ती । इति १४ अग्न्यायतनमुद्धत्यावोक्ष्याग्न्याधेयि- क्यान्पार्थिवान्संभारान्निर्वपत्यूषसिकतवर्जम् १५ अरणिभ्यामग्निं मथित्वा हिरण्यशकलं च न्युप्य प्रागुदयादुपस्थकृतो भूरिति ज्वलन्तमादधाति १६ गौर्वासः काँस्यं च दक्षिणा १७

इति द्वितीयपुरुषे प्रथमः खण्डः १

## द्वितीयः खण्डः

प्रागुदञ्चं लक्षणमुद्धत्यावोक्ष्य स्थण्डिलं गोमयेनोपलिप्य मण्डलं चतुरस्रँ वाग्निं निर्मथ्याभिमुखं प्रणयेत् १ दर्भाणां पवित्रे मन्त्रवदुत्पाद्याग्नेयँ स्थालीपाकं श्रपयति २ पवित्रान्तर्हितेऽप आनीय तण्डुलानोप्य मेक्षणेन प्रदक्षिणं पर्यायुव- ञ्जीव तण्डुलँ श्रपयति ३ घृतेनानुत्पूतेन नवनीतेन वोत्पूतेन शृतमभिघार्योत्तरत उद्वासयति ४ इमँ स्तोममर्हत इत्यग्निं परिसमुह्य पर्युक्ष्य परिस्तीर्य पश्चाद- ग्नेरेकवद्बर्हिस्तृणाति ५ उदक्प्राक्तूलान्दर्भान्प्रकृष्य दक्षिणाँस्तथोत्तरानग्रेणाग्निं दक्षिणैरुत्तरानवस्तृणाति ६ दक्षिणतोऽग्नेर्ब्रह्मणे सँस्तृणात्यपरँ यजमानाय पश्चार्धे पत्न्यै ७ उत्तरतः सँस्तीर्णे पवित्रे स्रुक्स्रुवावाज्यस्थालीं प्रक्षाल्य सँस्तीर्णे द्वे द्वे प्रयुनक्ति ८ तूष्णीं दक्षिणत आज्यं निरूप्य मन्त्रवत्पर्यग्निं कृत्वा तूष्णीँ स्रुक्स्रुवौ संमृज्यादब्धेन त्वा चक्षुषावेक्ष इति पत्न्याज्यमवेक्षते ९ तूष्णीमधिश्रित्योपाधिश्रित्य पश्चादग्नेरुपसाद्य मन्त्रवदुत्पूयावेक्षते १० तेजो सीत्याज्यँ यजमानोऽवेक्षते ११ आज्यस्थाल्याँ स्रुवं निधायाग्रेण स्थालीपाक- मन्वायातयत्यपरेण मेक्षणम् १२ तूष्णीं प्राञ्चमिध्ममुपसमाधाय ब्रह्माणमामन्त्र्य

ओं जुहुधीत्युक्ते दक्षिणेन हस्तेनान्तरेण जानुनी प्राङासीन आघारौ जुहोति प्राजापत्यमुत्तरार्धे प्राञ्चं मनसा ऐन्द्रं दक्षिणार्धे प्राञ्चमेव १३ अथाज्यभागौ जुहोत्याग्नेयमुत्तरार्धे सौम्यं दक्षिणार्धे समावनक्ष्णौ १४ युक्तो वह यदाकूतमिति द्वाभ्यामग्निँ योजयित्वा नक्षत्रमिष्ट्वा नक्षत्रदेवताँ यजेत्तिथिं तिथिदेवतामृतुमृतुदेवतां च १५ उपस्तीर्याप उपस्पृश्य मेक्षणेन स्थालीपाकस्यावद्यति मध्यात्पूर्वार्धाद् द्वितीयं पश्चार्धात्तृतीयँ यदि पञ्चावदानस्य १६ अवत्तमभिघार्य स्थालीपाकं प्रत्यभिघारयति १७ अग्नये स्वाहेति मध्ये जुहोति १८ यो देवानामसीति रौद्रस्य १९ जयान्हुत्वाज्यस्य स्विष्टकृते समवद्यत्युत्तराद्धात्सकृद् द्विमात्रम् । द्विर्वा यदि पञ्चावदानस्य २० अवत्तं द्विरभिघार्य नात उर्ध्वँस्थालीपाकं प्रत्यभिघारयति २१ अग्नये स्विष्टकृते स्वाहेत्यसँसक्तमुत्तरार्धपूर्वार्धे जुहोति २२ मेक्षणं दर्भाँश्चाधायानुमतिभ्याँ व्याहृतिभिश्च त्वं नो अग्ने स त्वं नो अग्ने अयाश्चाग्नेऽसीत्येताभिर्जुहुयात् २३ वि ते मुञ्चामि रशनाँ वि रश्मीनिति च हुत्वा पवित्रेऽनुप्रहृत्याज्ये नाभिजुहोति २४ एधोऽस्येधिषीमहीति समिधमादधाति समिदसि समेधिषीमहीति द्वितीयाम् २५ अपो अद्यान्वचारिषमित्युपतिष्ठते २६ आपोहिष्ठीयाभिर्माजयेत् २७ पूर्णपात्रम् दक्षिणा २८ बर्हिरनुप्रहरति २९ एतेन स्थालीपाकेन स्थालीपाकाः सर्वे व्याख्याताः ३०

इति द्वितीयपुरुषे द्वितीयः खण्डः २

## तृतीयः खण्डः

अग्नये स्वाहेति सायं जुहोति प्रजापतय इति द्वितीयाम् १ सूर्याय स्वाहेति प्रातः प्रजापतय इति द्वितीयाम् २ अग्नीषोमीयः स्थालीपाकः पौर्णमास्यामैन्द्राग्नोऽमावास्यायामुभयत्र चाग्नेयः आगन्तुः पूर्वः पौर्णमास्यामुत्तरोमावास्यायाम् ३ आश्वयुज्यां पौर्णमास्यां प्रातर्नित्येषु स्थालीपाकेषु स्थालीपाकमन्वायातयति ४ तस्याग्निँरुद्रं पशुपतिमीशानं त्र्यम्बकँ शरदं प्रषातकं गा इति यजति ५ दधिघृतमिश्रः प्रषातकस्तस्या नो मित्रावरुणा प्रवाहवेति च हुत्वाम्भः स्थाम्भो वो भक्षीयेति गाः प्राशापयति ६ अवसृष्टाश्च वसेयुः ७ ब्राह्मणान् घृतवद्भोजयेत् ८ नानिष्ट्वाग्रयणेन नवस्याश्नीयात् ९ पर्वण्याग्रयणं कुर्वीत वसन्ते यवानां शरदि व्रीहीणाम् १० अग्रपाकस्य पयसि स्थालीपाकं

श्रपयित्वा तस्य जुहोति सजूरग्नीन्द्राभ्याँ स्वाहा सजूर्विश्वेभ्यो देवेभ्यः स्वाहा सजूर्द्यावापृथिवीभ्याँ स्वाहा सजूः सोमाय स्वाहेति ११ शरदि सोमाय श्यामाकानाँ वसन्ते वेणुयवानामुभयत्र वाज्येन १२ वत्सः प्रथमजो दक्षिणा १३ ब्राह्मण एव हविःशेषं भुञ्जीतेति श्रुतिः १४

इति द्वितीयपुरुषे तृतीयः खण्डः ३

चतुर्थः खण्डः

पशुना यक्ष्यमाणः पाकयज्ञोपचाराग्निमुपचरति १ पशुबन्धवत्तूष्णीमावृद्देवताहोमवर्जम् २ प्रोक्ष्यानुमान्योपपाय्य पर्यग्निं कृत्वा शामित्रं प्रणीय वपाश्रपणीभ्यामुदञ्चं प्रक्रममाणमन्वारभन्ते ३ संज्ञप्यमानमवेक्षते ४ संज्ञप्तँ स्नपयित्वा यथादैवतँ वपामुत्कृत्य श्रपयित्वाघारावाज्यभागौ हुत्वा जातवेदो वपया गच्छ देवाँस्त्वँ हि होता प्रथमो बभूव । घृतस्याग्ने तन्वा संभव सत्याः सन्तु यजमानस्य कामाः स्वाहा । इति वपां जुहोति ५ स्वाहा स्वाहेति परिवप्यौ ६ स्थालीपाकमन्वायातयति समानदेवतं पशुना ७ तद्धुतावाज्यभागौ ८ अनिरुक्तः स्विष्टकृत् ९ पाशुबन्धिकानामवदानानां रसस्यावदाय दैवतैः प्रचर्य वसाहोमशेषेण दिशः प्रतियजति यथा वाजिनेन वनस्पतिमाज्यस्य १० जयान्हुत्वा त्र्यङ्गाणां स्विष्टकृते समवद्यति ११ स्थालीपाकेन शेषो व्याख्यातः १२ पशोः पशुरेव दक्षिणा १३

इति द्वितीयपुरुषे चतुर्थः खण्डः ४

पञ्चमः खण्डः

रौद्रः शरदि शूलगवः १ प्रागुदीच्यां दिशि ग्रामस्यासकाशे निशि गवां मध्ये तष्टो यूपः २ प्राक्स्विष्टकृतोऽष्टौ शोणितपुटान्पूरयित्वा नमस्ते रुद्र मन्यव इति प्रभृतिभिरष्टभिरनुवाकैर्दिक्ष्वन्तर्दिक्षु चोपहरेत् ३ नाशृतं ग्राममाहरेत् ४ शेषं भूमौ निखनेदपि चर्म ५ अयूपानेके पाकयज्ञपशूनाहुः ६

इति द्वितीयपुरुषे पञ्चमः खण्डः ५

षष्ठः खण्डः

अथातो ध्रुवाश्वकल्पं व्याख्यास्यामः १ आश्वयुज्यां पौर्णमास्याम् २ ऋत्वि-

गव्यङ्गः स्नातः शुचिरहतवासाः ३ प्रागस्तमयान्निष्क्रम्योत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशेऽश्वत्थस्याधस्तान्नयग्रोधस्य वापाँ वा समीपे वेद्याकृतिं कृत्वा तस्यां चतुष्कोणवनस्पतिशाखायामवसक्तचीरायां गन्धस्त्रग्दामवत्यां चतुर्दिशँ विन्यस्तोदकुम्भसहिरण्यबीजपिटिकायामपूपस्त्रस्तरलाजोल्लोपि-कमङ्गलफलान्नवत्यां सर्वगन्धसर्वरससर्वौषधीः सर्वरत्नानि चोपकल्प्य प्रतिसरदधिमधुमोदकस्वस्तिकनन्द्यावर्तवत्यामग्निं प्रणीयाश्वत्थपलाशखदिररोहितकोदुम्बराणामन्यतमस्येध्ममुपससाधाय तिस्रः प्रधानदेवता यजत्युच्चैःश्रवसँ वरुणँ विष्णुमिति स्थालीपाकैः पशुभिश्चाश्विनौ चाश्वयुजौ चाज्यस्य ४ जयान्हुत्वा या ओषधयः समन्नयायन्ति पुनन्तु मा पितरोऽग्नेर्मन्व इति चतुर्भिरनुवाकैरपोऽभिमन्त्र्याश्वान्स्नपयन्ति ५ गन्धस्त्रग्दामभिरलंकृत्य प्रदक्षिणं देवयजनं त्रिः परियन्ति ६ प्राहर्षं कारयन्ति ७ इष्टे यथास्थानँ व्रजन्ति ८ गौरनड्वाँश्च दक्षिणा ९

इति द्वितीयपुरुषे षष्ठः खण्डः ६

## सप्तमः खण्डः

आग्रहायण्यां पौर्णमास्यां पयसि स्थालीपाकँ श्रपयित्वा तस्य जुहोति । अपः श्वेतपदाग्रहि पूर्वेण चापरेण च । सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धव्यः स्वाहा । श्वेतो रुषत्यो विदधात्यश्वो दधद्गर्भँ वृषः सत्वर्यां ज्योक् । समं जनाश्चक्रमयो वसानाः प्रोषादसाविरसि विश्वमेतत् । श्वेताय रौषिदश्वाय स्वाहा न वै श्वेतस्याभ्याचारे अहिर्जघान किंचन । श्वेताय वैतहव्याय स्वाहा । अभयं नः प्राजापत्येभ्यो भूयात्स्वाहा । इति १ स्त्रस्तरेऽहतँ वास उदग्दशमास्तीर्योदकाँस्येऽश्मानँ व्रीहीन्यवान्वास्य परिषिञ्चति स्योना पृथिवि भवेति द्वाभ्याँ सुत्रामाणमिति द्वाभ्याम् २ शमीशाखया च सपलाशयोदञ्च त्रिःसमुन्मार्ष्टि स्योना पृथिवि भवेति द्वाभ्याँ सूत्रामाणमिति द्वाभ्यां नमो अस्तु सर्पेभ्य इति तिसृभिश्च ३ शाम्यन्तु सर्पाः स्वशया भवन्तु ये अन्तरिक्ष उत ये दिवि श्रिताः । इमां महीं प्रत्यवरोहेम । शिवामजस्राँ शिवाँ शान्ताँ सुहेमन्तामुत्तरामुत्तराँ समांक्रियासम् । इति ज्येष्ठ प्रथमानुदीच आवेशयति ४ उदीर्घं जीवो असुर्न आगादयः प्रागात्तम आज्योतिरेति । आरैकपन्थां यातवे सूर्यायागन्म यत्र प्रतरं न आयुः । इति कनिष्ठप्रथमानुज्ञिहते ५ चैत्र्यामुद्ग्रो-

हणम् ६ न तत्र स्थालीपाको न शाखया समुन्मार्ष्टि ७ अयं तल्पः प्रतरणो वसूनाँ विश्वार्त्विभ्य तल्पो अस्मान् । ज्योग्जीवेम सर्ववीरा वयं तम । इति तल्पमभिमन्त्रयते ८ त्रीणि नाभ्यानि फाल्गुन्यामाषाढ्यां कार्त्तिक्याम् ९ तासु नाधीयीत १० तासु पयसि स्थालीपाकः स व्याख्यातः ११

इति द्वितीयपुरुषे सप्तमः खराडः ७

## अष्टमः खराडः

तिस्रोऽष्टकाः १ ऊर्ध्वमाग्रहायरायाः प्राक् फाल्गुन्यास्तामिश्राणामष्टम्यः २ तासु नाधीयीत ३ तासु पयसि स्थालीपाकँ श्रपयित्वा तस्य जुहोति । या देव्यष्टकेष्वपसापस्तमा स्तपा अवया असि । त्वं यज्ञे वरुणस्यावया असि तस्यै त एना हविषा विधेम । उलूखला ग्रावाणो घोषमकुर्वत हविः कृरावन्तः परिवत्सरीयम् । एकाष्टके सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते । यां जनाः प्रतिनन्दन्ति रात्रीं धेनुमिवायतीम् । सँवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली । संम्वत्सरस्य प्रतिमाँ ये त्वा रात्रीमुपासते । तेषामायुष्मतीं प्रजाँ रायस्पोषेण सँसृजस्व । इति चतस्रः स्थालीपाकस्य ४ अष्टकायै सुराधसे स्वाहेति सर्वत्रानुषजति ५ हेमन्तो वसन्तो ग्रीष्म ऋतवः शिवा नः शिवा नो वर्षा अभयाश्चिरं नः । वैश्वानरोऽधिपति प्राणदो नो अहोरात्रे कृणुतां दीर्घमायुः । शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयं कृणोतु । शिवा दिशः प्रदिश आदिशो न आपो विद्युतः परिपान्त्वायुः । आपो मरीचीः परिपान्तु विश्वतो धाता समुद्रो अभयं कृणोतु । भूतं भविष्यदुत भद्रमस्तु मे ब्रह्माभिगूर्त्तँ स्वराक्षाणः । कविरग्निरिन्द्रः सोमः सूर्यो वायुरस्तु मे अग्नि-वैश्वानरो अपहन्तु पापम् । बृहस्पतिः सविता शर्म यच्छतु श्रियँ विराजं मयि पूषा दधातु । विश्व आदित्या वसवश्च सर्वे रुद्रा गोप्तारो मरुतश्च सन्तु । ऊर्जं प्रजाममृतं दीर्घमायुः प्रजापतिर्मयि परमेष्ठी दधातु । इति पञ्चाज्यस्य ६ जयान्हुत्वेडामग्न इति स्विष्टकृदिति ७ एवँ सर्वासु ८

इति द्वितीयपुरुषेऽष्टमः खराडः ८

## नवमः खराडः

उत्तमायाः प्रदोषे चतुष्पथेऽङ्गशो गां कारयेत् १ यो य आगच्छेत्तस्मै तस्मै

दद्यात् २ श्वोऽन्यां कारयेत् ३ तस्या वपां जुहुयात् । वह वपां जातवेदः पितृभ्यो यत्रैतान्वेत्थ निहितान्पराके मेदसो घृतस्य कुल्या अभिनिःस्रवन्तु सत्याः सन्तु यजमानस्य कामाः स्वाहा । इति ४ अथास्या वक्षस उदगोदनँ श्रपयति ५ तस्याष्टकाहोमकल्पेन शेषो व्याख्यातः ६ अवशिष्टं भक्तँ रन्धयति ७ श्वोऽवशिष्टं भक्तं रन्धयित्वा पिण्डानामावृता त्रीन्माँसौदनपिण्डान्निदधाति ८ श्राद्धमपरपक्षे पितृभ्यो दद्यात् ९ अनुगुप्तमन्नं ब्राह्मणान्भोजयेन्नावेदविद्भु-ञ्जीतेति श्रुतिः १० यदि गवा पशुना वा कुर्वीत प्रोक्षणमुपपायनं पर्यग्नि-करणमुल्मुकहरणं वपाहोममिति ११ त्रैधं वपां जुहुयात्स्थालीपाकमवदानानि च १२ सोमाय पितृमते स्वधा नम इति जुहोति यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयाम् । अग्नये कव्यवाहनाय स्वधा नम इति तृतीयाम् १३ एवं मासि मासि नियतं तन्त्रं पिण्डपितृयज्ञे १४

इति द्वितीये नवमः खण्डः ९

## दशमः खण्डः

फाल्गुन्यां पौर्णमास्यां पुरस्ताद्धानापूपाभ्यां भगं चार्यमणं च यजेत् १ इन्द्राण्या हविष्यानपिष्ट्वा पिष्टानि समुत्पूय यावन्ति पशुजातानि तावतो मिथुनान्प्रतिरूपाञ्श्रपयित्वा काँस्येऽध्याज्यान्कृत्वा तेनैव रुद्राय स्वाहेति जुहोति । ईशानायेत्येके २ सायमपूपाभ्यां प्रचरत्यग्नीन्द्राभ्याम् ३ आग्नेयस्तुन्दिलो न तस्य स्त्रियः प्राश्नन्ति सर्वामात्या इतरस्य ४ स्थालीपाकेनेन्द्राणीँ श्वो वा ५ संघेष्वेकवद्बर्हिरग्निराघाराज्यभागाज्याहुतयः स्विष्टकृच्च ६ अग्निरिन्द्रः सोमः सीता सविता सरस्वत्यश्विनानुमती रेवती राका पूषा रुद्र इत्येतैरायोजनपर्ययनप्रवपनप्रलवनसीतायज्ञखलयज्ञतन्तीय-ज्ञानडुद्यज्ञेष्वेता देवता इति यजति साँवत्सरेषु च पर्वसु ७ नद्युदधि-कूपतडागेषु वरुणँ यजत्योषधिवनस्पतिषु सोममनादिष्टदेवतेष्वग्निम् ८

इति द्वितीये दशमः खण्डः १०

## एकादशः खण्डः

अवसानँ समँ समूलम् १ दक्षिणाप्रवणमन्नकामस्य मारुकास्तत्र प्रजा भवन्ति २ सर्वतः समवस्रावम् ३ समवस्रुत्य वा यस्मात्प्रागुदीचीरापो निर्वहेयुस्तद्वा

४ गर्तं खात्वा यत्तैः पाँसुभिः प्रतिपूर्येत तद्वा ५ यदि धारयिष्णूदकतरँ स्यात् ६ इदमहँ विशमन्नाद्याय तेजसे ब्रह्मवर्चसाय परिगृह्णामीति वेश्म परिगृह्य गर्ते हिरण्यं निधायाच्युताय ध्रुवाय भौमाय स्वाहेति जुहोति ७ समीची नामासीति पर्यायैरुपतिष्ठते प्रतिदिशं द्वाभ्यां मध्ये ८ उदकाँस्येऽश्मानँ व्रीहीन्यवान्वास्य परिषिञ्चति स्योना पृथिवि भवेति द्वाभ्याँ सुत्रामाणमिति द्वाभ्याम् ९ शमीशाखया च पलाशयोदञ्चं त्रिः समुन्मार्ष्टि स्योना पृथिवि भवेति द्वाभ्यां सुत्रामाणमिति द्वाभ्यां नमो अस्तु सर्पेभ्य इति तिसृभिश्च १०

इदं तत् सर्वतो भद्रमयमूर्जोऽयँ रसः
प्राप्यैवं मानुषान्कामान्यदशीर्ष्णी तल्लप्स्यसि

इति मध्यमाँ स्थूणामासिच्य गर्त आसिञ्चति ११

इहैव तिष्ठ नितरा तिल्वला स्थिरावती
मध्ये पोषस्य पुष्पतामा त्वा प्रापन्नद्यायवः

आ त्वा कुमारस्तरुण आ त्वा परिसृतः कुम्भः
आ वत्सो जगता सह आ दध्नः कलशमैरयम्

इति मध्यमाँ स्थूणामभिमन्त्रयते १२ वसूनां त्वा वसुवीर्यस्याहोरात्रयोश्चेति गर्ते स्थूणामवदधाति १३ ऋतेऽवस्थूणा अधिरोह वँशो अग्ने विराजमुपसेध शक्रम् । इति मध्यमँ वँशमवदधाति १४ तूष्णीँ शिष्टाः स्थूणा वँशाश्च १५ प्राग्द्वारं दक्षिणाद्वारँ वा मापयित्वा गृहानहँ सुमनसः प्रपद्ये वीरँ हीत्येतया प्रपद्यते यथा पुरस्ताद्व्याख्यातम् १६ प्रैतु राजा वरुणो रेवतीभिरस्मिन्स्थाने तिष्ठतु पुष्यमाणः । इराँ वहन्ती घृतमुक्षमाणास्तेष्वहँ सुमनाः सँवसाम । इत्युत्तरपूर्वस्यां दिशि प्रतिपानमुदकुम्भमवस्थापयति १७ समुद्रँ वः प्रहिणोमि स्वाँ योनिमभिगच्छत अरिष्टा । अस्माकँ वीरा मा परासेचि मत्पयः । इत्युदञ्चनम् १८ वास्तोष्पत्यं पयसि स्थालीपाकँ श्रपयित्वा तस्य जुहोति । अमीवहा वास्तोष्पते वास्तोष्पत इत्येताभ्याम् । वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो

जुषस्व । वास्तोष्पते शग्मया सँसदा ते सक्षीमहि रणवया । गातुमत्या पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः । इति १९ जयप्रभृति समानम् २०

इति द्वितीय एकादशः खण्डः ११

द्वादशः खण्डः

वैश्वदेवस्य सिद्धस्य सायंप्रातर्बलिँ हरेत् १ अग्नीषोमौ धन्वन्तरिँ विश्वान्दे- वान्प्रजापतिमग्निँ स्विष्टकृतमित्येवँ होमो विधीयते २ अथ बलिँ हरत्यग्नये नमः सोमाय धन्वन्तरये विश्वेभ्यो देवेभ्यः प्रजापतये अग्नये स्विष्टकृत इत्यग्न्यागार उत्तरामुत्तराम् ३ अभ्द्य इत्युदकुम्भसकाशे ४ ओषधिभ्य इत्यो- षधिभ्यो वनस्पतिभ्य इति गृहमध्यमायां स्थूणायाम् ५ गृह्याभ्यो देवताभ्य इति गृहमध्ये ६ धर्मायाधर्मायेति द्वारे ७ मृत्यव आकाशायेत्याकाशे ८ अन्तर्गोष्ठायेत्यन्तर्गोष्ठे ९ बहिर्वैश्रवणायेति बहिः प्राचीम् १० विश्वेभ्यो देवेभ्य इति वेश्मनि ११ इन्द्रायेन्द्रपुरुषेभ्य इति पुरस्तात् १२ यमाय यमपुरुषेभ्य इति दक्षिणतः १३ वरुणाय वरुणपुरुषेभ्य इति पश्चात् १४ सोमाय सोमपुरुषेभ्य इत्युत्तरतः १५ ब्रह्मणे बर्ह्मपुरुषेभ्य इति मध्ये १६ प्राचीमापातिकेभ्यः सम्पातिकेभ्य ऋक्षेभ्यो यक्षेभ्यः पिपीलिकाभ्यः पिशाचेभ्योऽप्सरोभ्यो गन्धर्वेभ्यो गुह्यकेभ्यः शैलेभ्यः पन्नगेभ्यः १७ दिवाचारिभ्यो भूतेभ्य इति दिवा नक्तं चारिभ्यो भूतेभ्य इति नक्तम् १८ धन्वन्तरये धन्वन्तरितर्पणम् १९ अद्भिः सँसृज्य पितृभ्यः स्वधेति शेषं दक्षिणा भूमौ निनयेत् २० पाणी प्रक्षाल्याचम्यातिथिं भोजयित्वावशिष्टस्याश्नीयात् २१

इति द्वितीयपुरुषे द्वादशः खण्डः १२

त्रयोदशः खण्डः

अथातः षष्ठीकल्पँ व्याख्यास्यामः १ शुक्लपक्षस्य पञ्चम्यां प्रत्यङ्मुखो हविष्यमन्नमश्नीत २ अधः शयीत दर्भेषु शालिपलालेषु वा प्राक्शिरा ब्रह्मचारी ३ श्वोभूत उदित आदित्ये स्नानं पानं भोजनमनुलेपनँ स्रजो वासाँसि न प्रत्याचक्षीत ४ यावद्द्यात्तावदश्नीयाद्यद्यद्द्यात्तत्तदश्नीयादन्यत्रामेध्य-- पातकिभ्योऽभिनिविष्टकवर्जम् ५ अस्तमित आदित्ये पयसि स्थालीपाकँ

श्रपयित्वाथैतैर्नामधेयैर्जुहोति धनदाँ वसुमीशानां कामदाँ सर्वकामिनाम् । पुरायाँ यशस्विनीं देवीं षष्ठीं शक्र जुषस्व मे । नन्दी भूतिश्च लक्ष्मीश्चादित्या च यशस्विनी । सुमना वाक्च सिद्धिश्च षष्ठी मे दिशतां धनम् । पुत्रान्पशून्धनं धान्यं बह्वश्वाजगवेडकम् । मनसा यत्प्रणीतं च तन्मे दिशतु हव्यभुक् । कामदाँ रजनीं विश्वरूपाँ षष्ठीमुपवर्ततु मे धनम् । सा मे कामा कामपत्नी षष्ठी मे दिशतां धनम् । आकृतिः प्रकृतिर्वचनी धावनिः पद्मचारिणी मन्मना भव स्वाहा । गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् । नानापत्रका सा देवी पुष्टिश्चातिसरस्वती । अरिं देवीं प्रपद्येयमुपवर्त्तयतु मे धनम् । हिरण्यप्राकारा देवि माँ वर । आगच्छत्वायुर्यशश्च स्वाहा । अश्वपूर्णाँ रथमध्याँ हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपव्हये श्रीर्मादेवी जुषताम् । उपयन्तु मां देवगणास्त्यागाश्च तपसा सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् श्रीः श्रद्धां दधातु मे । श्रियै स्वाहा ह्रियै स्वाहा लक्ष्म्यै स्वाहा उपलक्ष्म्यै स्वाहा नन्दायै स्वाहा हरिद्रायै स्वाहा षष्ठ्यै स्वाहा समृद्ध्यै स्वाहा जयायै स्वाहा कामायै स्वाहेति ६ जयप्रभृति समानम् ७ षण्मासान्प्रयुञ्जीत त्रीन्वोभयतः पक्षान् ८ शतसाहस्त्रसँयोग एकवरो वा ९ गौरनड्वाँश्च दक्षिणा १०

इति द्वितीये त्रयोदशः खण्डः १३

## चतुर्दशः खण्डः

अथातो विनायकान्व्याख्यास्यामः १ शालकटङ्कटश्च कूष्माण्डराजपुत्रश्चोस्मितश्च देवयजनश्चेति २ एतैरधिगतानामिमानि रूपाणि भवन्ति ३ लोष्टं मृद्नाति ४ तृणानि च्छिनत्ति ५ अङ्गेषु लेखान्लिखति ६ अपस्वप्नं पश्यति ७ मुण्डान्पश्यति ८ जटिलान्पश्यति ९ काषायवाससः पश्यति १० उष्ट्रान्सूकरान्गर्दभान्दिवाकीर्त्यादीनन्याँश्चाप्रयतान्स्वप्नान्पश्यति ११ अन्तरिक्षं क्रामति १२ अध्वानँ व्रजन्मन्यते पृष्ठतो मे कश्चिदनुव्रजति १३ एतैः खलुविनायकैराविष्टा राजपुत्रा लक्षणवन्तो राज्यं न लभन्ते १४ कन्याः पतिकामा लक्षणवत्यो भर्तॄन्न लभन्ते १५ स्त्रियः प्रजाकामा लक्षणवत्यः प्रजां न लभन्ते १६ स्त्रीणामाचारवतीनामपत्यानि म्रियन्ते १७ श्रोत्रियोऽध्यापक आचार्यत्वं न प्राप्नोति १८ अध्येतृणामध्ययने महाविघ्नानि भवन्ति १९ वणिजाँ वणिक्पथो विनश्यति २० कृषिकराणां कृषिरल्पफला भवति २१ तेषां

प्रायश्चित्तम् २२ मृगाखरकुलायमृत्तिकारोचनागुग्गुलाः २३ चतुर्भ्यः प्रस्रवणेभ्यश्चतुरुदकुम्भानव्यङ्गानाहरेत् २४ सर्वगन्धसर्वरससर्वौषधीः सर्वरत्नानि चोपकल्प्य प्रतिसरदधिमधुघृतमिति २५ एतान्संभारान्सँसृज्य । ऋषभचर्मारुह्याथैनँ । सहस्राक्षँ शतधारमृषिभिः पावनं कृतम् । ताभिष्ट्वाभिषिञ्चामि पावमानीः पुनन्तु त्वा । अग्निना दत्ता इन्द्रेण दत्ताः सोमेन दत्ता वरुणेन दत्ता वायुना दत्ता विष्णुना दत्ता बृहस्पतिना दत्ता विश्वैर्देवैर्दत्ताः सर्वैर्देवैर्दत्ता ओषधय आपो वरुणसंमितास्ताभिष्ट्वाभिषिञ्चामि पावमानीः पुनन्तु त्वेति सर्वत्रानुषजति यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि । ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु ते सदा । भगं ते वरुणो राजा भगँ सूर्यो बृहस्पतिः । भगमिन्द्रश्च वायुश्च भगँ सप्तर्षयो ददुः । इति २६ अधिस्नातस्य निशायाँ सद्यः पीडितसर्षपतैलमौदुम्बरेण स्रुवेण मूर्धनि चतस्र आहुतीरुजुहोति शालकटङ्कटाय स्वाहा । कूष्माडराजपुत्राय स्वाहा उस्मिताय स्वाहा देवयजनाय स्वाहेति २७ अत ऊर्ध्वं ग्रामचतुष्पथे नगरचतुष्पथे निगमचतुष्पथे वा सर्वतोमुखान्दर्भानास्तीर्य नवे शूर्पे बलिमुपहरति फलीकृताँस्तण्डुलानफलीकृताँस्तण्डुलानामं माँसं पक्वं माँसमामान्मत्स्यान्पक्वान्मत्स्यानामानपूपान्पक्वानपूपान्पिष्टान्गन्धानपिष्टान्गन्धान् गन्धपानं मधुपानं मैरेयपानँ सुरापानं मुक्तं माल्यं ग्रथितं माल्यँ रक्तं माल्यँ शुक्लं माल्यँ रक्तपीतशुक्लकृष्णानीलहरितचित्रवासाँसि माषकल्माषमूलफलमिति २८ अथ देवानामावाहनँ विमुखः श्येनो बको यक्षः कलहो भीरुर्विनायकः कूष्माण्डराजपुत्रो यज्ञाविक्षेपी कुलङ्गापमारो यूपकेशी सूपरक्रोडी हैमवतो जम्भको विरूपाक्षो लोहिताक्षो वैश्रवणो महासेनो महादेवो महाराज इति । एते मे देवीः प्रीयन्तां प्रीता मां प्रीणयन्तु तृप्ता मां तर्पयन्त्विति २९ अधिष्ठितेऽर्धरात्र आचार्यो ग्रहानुपतिष्ठते । भगवति भगं मे देहि वर्णवति वर्णं मे देहि रूपवति रूपं मे देहि तेजस्विनि तेजो मे देहि यशस्विनि यशो मे देहि पुत्रवति पुत्रान्मे देहि सर्ववति सर्वान्कामान्मे प्रदेहीति ३० अत ऊर्ध्वमुदित आदित्ये विमले सुमुहूर्ते सूर्यपूजा पूर्वकमर्घ्यदानमुपस्थानं च । नमस्ते अस्तु भगवन्शतरश्मे तमोनुद । जहि मे देव दौर्भाग्यँ सौभाग्येन माँ सँयोजयस्व । इति ३१ अथ ब्राह्मणतर्पणम् ३२ ऋषभो दक्षिणा ३३

इति द्वितीये चतुर्दशः खण्डः १४

पञ्चदशः खरडः

यदि दुःस्वप्नं पश्येद्व्याहृतिभिस्तिलान् हुत्वा दिश उपतिष्ठेत । बोधश्च मा प्रतिबोधश्च पुरस्ताद्गोपायताम् । अस्वप्नश्च मानवद्राणश्च दक्षिणतो गोपायताम् । गोपायमानं च माँ रक्षमाणं च पश्चाद्गोपायताम् । जागृविश्च मारुन्धती चोत्तरतो गोपायताम् । विष्णुश्च मे पृथिवी च नागाश्चाधस्ताद्गोपायताम् । बृहस्पतयश्च मे विश्वे च मे देवा द्यौश्चोपरिष्टाद्गोपायताम् १ एवँ यस्मिँश्चो-त्पन्नेऽनर्थाञ्शङ्केत २ व्याहृतिभिस्तिलान्हुत्वा तपः प्रतिपद्येत द्वादशरात्रँ षड्रात्रं त्रिरात्रमेकरात्रँ वा ३ यदि समुत्पातं मन्येत तद्वा ४ यदि पर्वसु मार्त्तिकं भिद्यते पार्थिवमसि पृथिवीं दृँहस्वयोनिं गच्छ स्वाहेत्यप्सु प्रहरेत् ५ यद्यर्चा दह्येद्वा नश्येद्वा प्रपतेद्वा प्रभजेद्वा प्रहसेद्वा प्रचलेद्वा स्थाल्या वा स्थालीमासिच्य दक्षिणोत्तरा वा स्थाली भिद्येतोत्तरा वोपलाशे नियम्य द्वारवँशो वा स्फुटेत् । गौर्वा गां धयेत्स्त्री वा स्त्रियमाहन्यात् कर्तसँसर्गे हलसंसर्गे मुसलप्रपतने मुसलँ वावशीर्येतान्यस्मिँश्चाद्भुत एताभिर्जुहुयात्स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु । स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना । स्वस्तये वायुमुपब्रवामहै सोमँ स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिँ सर्वगणँ स्वस्तये स्वस्तय आदित्यासो भवन्तु नः । विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये । देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वँहसः । स्वस्ति नः पथ्यासु धन्वसु स्वस्त्यप्सु व्रजने स्वर्वतः । स्वस्ति नः पथ्याकृतेषु योनिषु स्वस्ति राये मरुतो दधातु नः । त्रातारमिन्द्रं मा ते अस्यां वि न इन्द्र मृगो न भीमस्तं शँ योरावृणीमह इति दशाहुतयः ६ जयप्रभृति समानम् ७

इति द्वितीये पुरुषे पञ्चदशः खरडः १५

षोडशः खरडः

सर्पेभ्यो बिभ्यच्छ्रावरयां तूष्णीं भौममेककपालँ श्रपयित्वाक्षतसक्तून्पिष्ट्वा स्वकृत इरिणे दर्भानास्तीर्याच्युताय ध्रुवाय भौमाय स्वाहेति जुहोति १ समीची नामासीति पर्यायैरुपतिष्ठते प्रतिदिशं द्वाभ्यां मध्ये २ अक्षतसक्तूनाँ सर्पबलिँ

हरति ईशानायेत्येके । सर्पोऽसि सर्पाणामधिपतिस्त्वयि सर्वे सर्पाः । बलि-हारोऽस्तु सर्पाणां नमो अस्तुषुर्मारीरिषुर्माहिँसिषुर्मादाँसि सर्पाः । मा नो अग्ने विसृजो अघाया विष्यवे रिपवे दुच्छुनायै । मा दत्वते दशते मादते नो मा रीषते सहसावन्परादाः । सर्पोऽसि सर्पाणामधिपतिरन्नेन मनुष्याँस्त्रायसेऽपूपेन सर्पान् । त्वयि सन्तं मयि सन्तं माक्षिषुर्मारीरिषुर्मा हिँसिषुर्मा दाङ्क्षु सर्पाः । नमो अस्तु सर्पेभ्य इति तिसृभिश्च ३ ध्रुवामुं ते परिददामीति सर्वा-मात्यान्नामग्राहमात्मानं च ४ एतेन धर्मेण चतुरो मासान्सर्पबलिँ हृत्वा वि-रमति ५ तूष्णीमपि शूद्रा प्रक्षालितपाणिः ६

इति द्वितीये षोडशः खण्डः १६

सप्तदशः खण्डः

अयूथिके भयार्ते कपोते गृहान्प्रविष्टे तस्याग्नौ पदं दृश्येत दधनि सक्तुषु घृते वा देवाः कपोत इति प्रत्यृचं जपेज्जुहुयाद्वा देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या इदमाजगाम । तस्मा अर्चाम कृणवाम निष्कृतिँ शं नो अस्तु द्विपदे शं चतुष्पदे । शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहेषु अग्निर्हि विप्रो जुषताँ हविर्नः परिहेतिः पक्षिणो नो वृणक्तु । हेतिः पक्षिणी न दभात्यस्मानाष्ट्र्यां पदं कृणुते अग्निधाने । शं नो गोभ्यश्च पुरुषेभ्यश्चास्तु मा नो हिँसीदिह देवाः कपोतः । यदुलूको वदति मोघमेतद्यत्कपोतः पदमग्नौ कृणोति । यस्य दूतः प्रहित एष एतत्तस्मै यमाय नमो अस्तु मृत्यवे । ऋचा कपोतं नुदत प्रमोदमिषं मदन्तः परि गां नयध्वम् । सँयोपयन्तो दुरितानि विश्वा हित्वा न ऊर्जं प्रपतात्पतिष्ठः । इति १ पदमादाय दक्षिणा प्रत्यग्घरन्ति २ सहाधिकरणैर्यन्ति ३ स्वकृत इरिणे पदं न्यस्याध्यधि ४ धाम्नो धाम्न इति तिसृभिः परोगोष्ठं मार्जयन्ते ५ अनपेक्षमाणाः प्रत्यायन्ति ६ अग्न आयूँषि पवसे अग्निर्ऋषिरग्ने पवस्वेति प्रत्येत्य जपन्ति ७

इति द्वितीये सप्तदशः खण्डः १७

अष्टादशः खण्डः

षडाहुतं प्रतिपदि पुत्रकामः १ पयसि स्थालीपाकँ श्रपयित्वा तस्य जुहोति

ब्रह्मणाग्निः सँविदानो रक्षोहा बाधतामितः
अमी वा यस्ते गर्भं दुर्णामा योनिमाशये

यस्ते गर्भममी वा दुर्णामा योनिमाशये
अग्निष्टं ब्रह्मणा सह निष्क्रम्यादमनीनशत्

यस्ते हन्ति पतयन्तं निषत्स्नुँ यः सरीसृपम्
जातँ यस्ते जिघाँसति तमितो नाशयामसि

यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते
प्रजाँ यस्ते जिघाँसति तमितो नाशयामसि

यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते
प्रजाँ यस्ते जिघाँसति तमितो नाशयामसि

ये ते घ्नन्त्यप्सरसो गन्धर्वा गोष्ठाश्च ये
क्रव्यादँ सुरं देविनं तमितो नाशयामसि

यस्त ऊरू विहरत्यन्तरा दम्पती शये
योनिँ यो अन्तरारेढि तमितो नाशयामसि

अभिन्नाण्डा वृद्धगर्भा अरिष्टा जीवसूकरी
विजायतां प्रजायतामियं भवतु तोकिनी

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिँशतु
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा

हिरण्ययी अरणी यं निर्मन्थतो अश्विना

तं ते गर्भँ हवामहे दशमे मासि सूतवे

परं मृत्यो अनुपरेहि पन्थाँ यस्ते स्व इतरो देवयानात्
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाँ रीरिषो मोत वीरान्

इति द्वादशगर्भवेदिन्यः षडाद्याः स्थालीपाकस्य षडुत्तरा आज्यस्य २ ज-
यप्रभृति समानम् ३ नैजमेषँस्थालीपाकँ श्रपयित्वा यथा षाडाहुतम्

नेजमेष परापत सुपुत्रः पुनरापत
अस्यै मे पुत्रकामायै पुनराधेहि यः पुमान्

यथेयं पृथिवी मह्यमुत्ताना गर्भमादधे
एवं तं गर्भमाधेहि दशमे मासि सूतवे

विष्णोः श्रेष्ठेन रूपेणास्यां नार्यां गवीन्याम्
पुमाँसं पुत्रमाधेहि दशमे मासि सूतवे

पाकयज्ञान्समासाद्य एकाज्यामेकबर्हिर्षि
एकँ स्विष्टकृतं कुर्यान्नाना सत्यपि दैवते नाना सत्यपि दैवते ४

इति द्वितीयपुरुषेऽष्टादशः खण्डः १८

इति मैत्रायणीयमानवगृह्यसूत्रे द्वितीयपुरुषाख्यो भागः

सूत्रं च समाप्तम्

# पारस्करगृह्यसूत्रम्

श्रीगणेशाय नमः

अथातो गृह्यस्थालीपाकानां कर्म १ परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्यु-
क्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य प्रणीय परिस्तीर्यार्थवदासाद्य
पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्य निरुप्याज्यमधिश्रित्य पर्यग्नि
कुर्यात् २ स्रुवं प्रतप्य सम्मृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् ३ आज्यमुद्वा-
स्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनान्कुशानादाय समिधोऽभ्याधाय
पर्युक्ष्य जुहुयात् ४ एष एव विधिर्यत्र क्वचिद्धोमः ५ १

आवसथ्याधानं दारकाले १ दायाद्यकाल एकेषाम् २ वैश्यस्य बहुपशो-
र्गृहादग्निमाहृत्य ३ चातुष्प्राश्यपचनवत्सर्वम् ४ अरणिप्रदानमेके ५ पञ्च-
महायज्ञा इति श्रुतेः ६ अग्न्याधेयदेवताभ्यः स्थालीपाकं श्रपयित्वाऽऽज्यभा-
गाविष्ट्वाऽऽज्याहुतीर्जुहोति ७ त्वन्नोऽग्ने सत्वन्नोऽग्न इमम्मेवरुण तत्वायामि
ये ते शतमयाश्चाग्न उदुत्तमं भवतन्न इत्यष्टौ पुरस्तात् ८ एवमुपरिष्टात्स्थाली-
पाकस्याग्न्याधेयदेवताभ्यो हुत्वा जुहोति ९ स्विष्टकृते च १० अयास्यग्नेर्वषट्
कृतं यत्कर्मणात्यरीरिचं देवागातु विद इति ११ बर्हिर्हुत्वा प्राश्नाति १२ ततो
ब्राह्मणभोजनम् १३ २

षडर्घ्या भवन्त्याचार्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति १ प्रतिसंव-
त्सरानर्हयेयुः २ यक्ष्यमाणास्त्वृत्विजः ३ आसनमाहार्याह साधु भवाना-
स्तामर्चयिष्यामो भवन्तमिति ४ आहरन्ति विष्टरं पद्यं पादार्थमुदकम-
र्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितं कांस्ये कांस्येन ५ अन्यस्त्रिस्त्रिः
प्राह विष्टरादीनि ६ विष्टरं प्रतिगृह्णाति ७ वर्ष्मोऽस्मि समानानामुद्यतामिव
सूर्यः । इमं तमभितिष्ठामि यो मा कश्चाभिदासतीत्येनमभ्युपविशति ८
पादयोरन्यं विष्टर आसीनाय ९ सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति १०
ब्राह्मणश्चेद्दक्षिणं प्रथमम् ११ विराजो दोहोऽसि विराजो दोहमशीय मयि
पाद्यायै विराजो दोह इति १२ अर्घं प्रतिगृह्णात्यापः स्थ युष्माभिः सर्वान्का-
मानवाप्नवानीति १३ निनयन्नभिमन्त्रयते समुद्रं वः प्रहिणोमि स्वां योनि-

मभिगच्छत । अरिष्टा अस्माकं वीरा मा परासेचिमत्पय इति १४ आचा-मत्यामागन्यशसा संसृज वर्चसा । तं मा कुरु प्रियं प्रजानामधिपतिं पशूना-मरिष्टिं तनूनामिति १५ मित्रस्य त्वेति मधुपर्कं प्रतीक्षते १६ देवस्य त्वेति प्रतिगृह्णाति १७ सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामीति १८ अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति १९ तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यं परमं रूपमन्नाद्यम् । तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति २० मधुमतीभिर्वा प्रत्यृचम् २१ पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात् २२ सर्वं वा प्राश्नीयात् २३ प्राग्वाऽसञ्चरे निनयेत् २४ आचम्य प्राणा-न्त्संमृशति वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बल-मूर्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहेति २५ आचान्तोदकाय शास-मादाय गौरिति त्रिः प्राह २६ प्रत्याह । माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः । प्रनुवोचञ्चिकितुषे जनाय मागामनागामदितिं वधिष्ट । मम चामुष्य च पाप्मानं हनोमीति यद्यालभेत २७ अथ यद्युत्सि-सृक्षेन्मम चामुष्य च पाप्मा हत ओमुत्सृजत तृणान्यत्त्विति ब्रूयात् २८ न त्वेवामांसोऽर्घः स्यात् २९ अधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयात् ३० यद्य-प्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः ३१ ३

चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति १ पञ्चसु बहिःशालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति २ उपलिप्त उद्धता-वोक्षितेऽग्निमुपसमाधाय ३ निर्मन्थ्यमेके विवाहे ४ उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात् ५ त्रिषु त्रिषूत्तरादिषु ६ स्वातौ मृगशिरसि रोहिण्यां वा ७ तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण ८ द्वे राजन्यस्य ९ एका वैश्यस्य १० सर्वेषां शूद्रामप्येके मन्त्रवर्जम् ११ अथैनां वासः परिधापयति जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा । शतं च जीव शरदः सुवर्च्चा रयिं च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वास इति १२ अथोत्तरीयम् । या अकृन्तन्नवयं या अतन्वत । याश्च देवीस्तन्तूनभितो ततन्थ । तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वास इति १३ अथैनौ समञ्जयति । समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ । संमातरिश्वा संधाता

समुदेष्ट्री दधातु नाविति १४ पित्रा प्रत्तामादाय गृहीत्वा निष्कामति । यदैषि मनसा दूरं दिशोऽनु पवमानो वा । हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोत्वित्यसाविति १५ अथैनौ समीक्षयति । अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्च्चाः । वीरसूर्द्देवकामास्योनाशन्नो भव द्विपदे शं चतुष्पदे । सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः । सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये । रयिं च पुत्राश्चादादग्नि-र्मह्यमथो इमाम् । सा नः पूषा शिवतमामैरय सा न ऊरू उशती विहर । यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्टया इति १६ ४

प्रदक्षिणमग्निं पर्याणीयैके १ पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रवृत्त्योप-विशति २ अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजा-पत्यं स्विष्टकृच्च ३ एतन्नित्यं सर्वत्र ४ प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदा-ज्याद्धविः ५ सर्वप्रायश्चित्तप्राजापत्यान्तरमेतदावापस्थानं विवाहे ६ राष्ट्रभृत इच्छञ्जयाभ्यातानांश्च जानन् ७ येन कर्मणेर्च्छेदितिवचनात् ८ चित्तं च चित्तिश्चाकूतं चाकूतिश्च विज्ञातं च विज्ञातिश्च मनश्च शक्वरीश्च दर्शश्च पौर्णमासं च बृहच्च रथन्तरं च । प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतना जयेषु । तस्मै विशः समनमन्त सर्वाः स उग्रः स इहव्यो बभूव स्वाहेति ९ अग्निर्भूतानामधिपतिः समावत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपां समुद्रः स्रोत्यानामन्नं साम्राज्यानामधिपति तन्मावतु सोम ओषधीनां सविता प्रसवानां रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते मावन्तु पितरः पितामहाः परेवरे ततास्ततामहाः । इह मावन्त्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्यां स्वाहेति सर्वत्रा-नुषजति १० अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघन्नरोदात्स्वाहा । इमाम-ग्निस्त्रायताङ्गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियं स्वाहा । स्वस्तिनो अग्ने दिव आपृथिव्या विश्वानिधेह्ययथा यजत्र यदस्यां महिदिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रं स्वाहा । सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मध्ये ह्यजरन्न आयुः । अपैतु मृत्युरमृतन्न आगाद्वैवस्वतो नो अभयं कृणोतु स्वाहेति ११ परं मृत्यविति

चैके प्राशनान्ते १२ ५

कुमार्या भ्राता शमीपलाशमिश्राँल्लाजानञ्जलिनाञ्जलावावपति १ ताञ्जुहोति संहतेन तिष्ठती अर्यमणं देवं कन्याऽऽग्निमयक्षत । सनो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा । इयं नार्युपब्रूते लाजानावपन्तिका । आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा । इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव । मम तुभ्य च संवननं तदग्निरनुमन्यतामियं स्वाहेति २ अथास्यै दक्षिणं हस्तम् गृह्णाति साङ्गुष्ठं गृभ्णामि ते सौभगत्वाय हस्तं मयापत्या जरदष्टिर्यथा सः । भगोऽऽर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः । अमोऽह-मस्मि सा त्वं सा त्वमस्यमोऽहम् । सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि विवहावहै सहरेतो दधावहै प्रजां प्रजनयावहै पुत्रान्विन्द्यावहै बहून् ते सन्तु जरदष्टयः संप्रियौ रोचिष्णू सुमनस्यमानौ पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतमिति ३ ६

अथैनामश्मानमारोहयत्युत्तरतोऽग्नेर्दक्षिणपादेन आरोहेममश्मानमश्मेव त्वं स्थिरा भव । अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायत इति १ अथ गाथां गायति सरस्वति प्रेदमव सुभगे वाजिनीवती । यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः । यस्यां भूतं समभवद्यस्यां विश्वमिदं जगत् । तामद्य गा-थां गास्यामि या स्त्रीणामुत्तमं यश इति २ अथ परिक्रामतः तुभ्यमग्रे पर्यव-हन्सूर्यां वहतु ना सह । पुनः पतिभ्यो जायां दाग्ने प्रजया सहेति ३ एवं द्विरपरं लाजादि ४ चतुर्थं शूर्पकुष्ठया सर्वाँल्लाजानावपति भगाय स्वाहेति ५ त्रिः परिणीतां प्राजापत्यं हुत्वा ६ ७

अथैनामुदीचीं सप्तपदानि प्रक्रामयति एकमिषे द्वे ऊर्जे त्रीणि रायस्पोषाय चत्वारि मायोभवाय पञ्च पशुभ्यः षड् ऋतुभ्यः सखे सप्तपदा भव सा मामनुव्रता भव १ विष्णुस्त्वानयत्विति सर्वत्रानुषजति २ निष्क्रमणप्रभृत्युद-कुम्भं स्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतः स्थितो भवति ३ उत्तरत एकेषाम् ४ तत एनां मूर्द्धन्यभिषिञ्चति आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृणवन्तु भेषजमिति ५ आपोहिष्ठेति च तिसृभिः ६ अथैनां सूर्यमुदीक्षयति तच्चक्षुरिति ७ अथास्यै दक्षिणां समधिहृदयमालभते मम व्रते ते हृदयं दधामि

मम चित्तमनुचित्तं ते अस्तु मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यमिति ८ अथैनामभिमन्त्रयते सुमङ्गलीरियम् वधूरिमां समेत पश्यत सौभाग्यमस्यै दत्वायाथास्तं विपरेतनेति ९ तां दृढपुरुष उन्मथ्य प्राग्वोद-ग्वाऽनुगुप्त आगार आनडुहे रोहिते चर्मरायुपवेशयति इह गावो निषीद-न्त्विहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो यज्ञ इह पूषा निषीदन्त्विति १० ग्रामवचनं च कुर्युः ११ विवाहश्मशानयोर्ग्रामं प्रविशतादितिवचनात् १२ तस्मात्तयोर्ग्रामः प्रमानमिति श्रुतेः १३ आचार्याय वरं ददाति १४ गौर्ब्राह्मणस्य वरः १५ ग्रामो राजन्यस्य १६ अश्वो वैश्यस्य १७ अधिरथं शतं दुहितृमते १८ अस्तमिते ध्रुवं दर्शयति । ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधिपोष्ये मयि मह्यं त्वादादबृहस्पतिर्मया पत्या प्रजावती संजीव शरदः शतमिति १९ सा यदि न पश्येत्पश्यामीत्येव ब्रूयात् २० त्रिरात्रमक्षारालवणाशिनौ स्यातामधः शयीयातां संवत्सरं न मिथुनमुपेयातां द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः २१ ८

उपयमनप्रभृत्यौपासनस्य परिचरणम् १ अस्तमितानुदितयोर्दध्ना तण्डुलैरक्ष-तैर्वा २ अग्नये स्वाहा प्रजापतये स्वाहेति सायम् ३ सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातः ४ पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ पुमानिन्द्रश्च सूर्यश्च पुमांसं वर्ततां मयि पुनः स्वाहेति पूर्वां गर्भकामा ५ ९

राज्ञोऽक्षभेदे नद्धविमोक्षे यानविपर्यासेऽन्यस्यां वा व्यापत्तौ स्त्रियाश्चोद्वहने तमेवाग्निमुपसमाधायाज्यं संस्कृत्येहरतिरिति जुहोति नानामन्त्राभ्याम् १ अन्यद्यानमुपकल्प्य तत्रोपवेशयेद्राजानं स्त्रियं वा प्रतिक्षत्र इति यज्ञान्तेना-त्वाहार्षमिति चैतया २ धुर्यौ दक्षिणा ३ प्रायश्चित्तिः ४ ततो ब्राह्मणभोजनम् ५ १०

चतुर्थ्यामपररात्रेऽभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति १ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा । वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा । सूर्यप्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा

नाथकाम उपधावामि याऽस्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा । चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा । गन्धर्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहेति २ स्थालीपाकस्य जुहोति प्रजापतये स्वाहेति ३ हुत्वा हुत्वैतासामाहुतीनामुदपात्रे संस्रवान्त्समवनीय तत एनां मूर्द्धन्यभिषिञ्चति । याते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नीं तत एनां करोमि सा जीर्य त्वं मया सहासाविति ४ अथैनां स्थालीपाकं प्राशयति प्राणैस्ते प्राणान्त्संदधाम्यस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमिति ५ तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ६ तामुदुह्य यथर्तु प्रवेशनम् ७ यथाकामी वा काममाविजनितोः संभवामेति वचनात् ८ अथास्यै दक्षिणां समधिहृदयमालभते । यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतमिति ९ एवमत ऊर्ध्वम् १० ११

पक्षादिषु स्थालीपाकं श्रपयित्वा दर्शपूर्णमासदेवताभ्यो हुत्वा जुहोति ब्रह्मणे प्रजापतये विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यामिति १ विश्वेभ्यो देवेभ्यो बलिहरणं भूतगृह्येभ्य आकाशाय च २ वैश्वदेवस्याग्नौ जुहोत्यग्नये स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहाग्नये स्विष्टकृते स्वाहेति ३ बाह्यतः स्त्रीबलिं हरति नमः स्त्रियै नमः पुंसे वयसेऽवयसे नमः शुक्लाय कृष्णदन्ताय पापीनां पतये । नमः ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यो नमोऽस्तु बलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददत्विति ४ शेषमद्भिः प्रप्लाव्य ततो ब्राह्मणभोजनम् ५ १२

सा यदि गर्भं न दधीत सिंह्याः श्वेतपुष्प्या उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चति । इयमोषधी त्रायमाणा सहमाना सरस्वती अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जग्रभमिति १ १३

अथ पुंसवनम् १ पुरा स्पन्दत इति मासे द्वितीये तृतीये वा २ यदहः पुंसा

नक्षत्रेण चन्द्रमा युज्येत तदहरुपवास्याप्लाव्याहते वाससी परिधाप्य न्यग्रोधावरोहाञ्छुङ्गाँश्च निशायामुदपेषं पिष्ट्वा पूर्ववदासेचनं हिरण्यगर्भोऽद्भ्यः संभृत इत्येताभ्याम् ३ कुशकण्टकं सोमांशु चैके ४ कूर्मपित्तं चोपस्थे कृत्वा स यदि कामयेत वीर्यवान्त्स्या दिति विकृत्यैनमभिमन्त्रयते सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः ५ १४

अथ सीमन्तोन्नयनम् १ पुंसवनवत् २ प्रथमगर्भे मासे षष्ठेऽष्टमे वा ३ तिल-मुद्गमिश्रं स्थालीपाकं श्रपयित्वा प्रजापतेर्हुत्वा पश्चादग्नेर्भद्रपीठ उपविष्टाया युग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जूलैस्त्र्येण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण च सीमन्तमूर्ध्वं विनयति भूर्भुवः स्वरिति ४ प्रतिमहाव्याहृतिभिर्वा ५ त्रिवृतमाबध्नाति । अयमूर्जावतो वृक्ष उर्जीव फलिनी भवेति ६ अथाह वीणागाथिनौ राजानं संगायेताम् यो वाऽप्यन्यो वीरतर इति ७ नियुक्तामप्येके गाथामुपोदाहरन्ति । सोम एव नो राजेमा मानुषीः प्रजाः । अविमुक्तचक्र आसीरंस्तीरे तुभ्यमसाविति यां नदीमुपा-वसिता भवति तस्या नाम गृह्णाति ८ ततो ब्राह्मणभोजनम् ९ १५

सोष्यन्तीमद्भिरभ्युक्षति । एजतु दशमास्य इति प्राग्यस्यै त इति १ अथावरावपतनम् । अवैतु पृश्निशेवलं शुनेजराय्वत्तवे । नैव मांसेन पीवसि न कस्मिंश्चनायतनमवजरायुपद्यतामिति २ जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोति ३ अनामिकया सुवर्णान्तर्हितया मधुघृते प्राजयति घृतं वा भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ४ अथास्यायुष्यं करोति ५ नाभ्यां दक्षिणे वा कर्णे जपति अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मांस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । सोम आयुष्मान्त्स ओषधीभिरायुष्मांस्तेनत्वाऽऽयुषाऽऽयुष्मन्तं करोमि । ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । देवा आयुष्म-न्तरतेऽमृतेनायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । ऋषय आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । पितर आयुष्मन्तस्ते स्वधा-भिरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । यज्ञ आयुष्मान्त्स दक्षिणा-भिरायुष्मांस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । समुद्र आयुष्मान्त्स स्त्रवन्ती-भिरायुष्मांस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमीति ६

त्रिस्त्रिस्त्र्यायुषमिति च ७ स यदि कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेत् ८ दिवस्परीत्ये-तस्यानुवाकस्योत्तमामृचं परिशिनष्टि ९ प्रतिदिशं पञ्च ब्राह्मणानवस्थाप्य ब्रू-यादिममनुप्राणितेति १० पूर्वो ब्रूयात्प्राणेति ११ व्यानेतिदक्षिणः १२ अपा-नेत्यपरः १३ उदानेत्युत्तरः १४ समानेति पञ्चम उपरिष्टादवेक्षमाणो ब्रूयात् १५ स्वयम् वा कुर्यादनुपरिक्राममविद्यमानेषु १६ स यस्मिन्देशे जातो भवति तमभिमन्त्रयते वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतमिति १७ अथैनमभिमृशत्यश्मा भव परशुर्भव हिरण्यमस्तुतं भव । आत्मा वै पुत्रना-माऽसि स जीव शरदः शतमिति १८ अथास्य मातरमभिमन्त्रयत इडासि मैत्रावरुणी वीरे वीरमजीजनथाः । सा त्वं वीरवती भव याऽस्मान्वीरवतो-ऽकरदिति १९ अथास्यै दक्षिणं स्तनं प्रक्षाल्य प्रयच्छतीमं स्तनमिति २० यस्ते स्तन इत्युत्तरमेताभ्याम् २१ उदपात्रं शिरस्तो निदधात्यापो देवेषु जाग्रथ यथा देवेषु जाग्रथ । एवमस्यां सूतिकायांसपुत्रिकायां जाग्रथेति २२ द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात्संधिवेलयोः फलीकरणमिश्रान्सर्षपानग्नावा-वपति शण्डामर्का उपवीरः शौण्डिकेय उलूखलः । मलिम्लुचो द्रोणास-श्च्यवनो नश्यतादितः स्वाहा । आलिखन्ननिमिषः किंवदन्त उपश्रुतिर्हर्यक्षः कुम्भी शत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहेति २३ यदि कुमार उपद्रवेज्जालेन प्रच्छाद्योत्तरीयेण वा पिताऽङ्क आधाय जपति कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः । चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम् । यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः । चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम् । यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वरेति २४ अभिमृशति न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसीति २५ १६

दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता नाम करोति १ द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितम् २ अयुजाक्षरमाकारान्तं स्त्रियै तद्धितम् ३ शर्म ब्राह्मणस्य वर्म क्षत्रियस्य गुप्तेति वैश्यस्य ४ चतुर्थे मासि निष्क्रमणिका ५ सूर्यमुदीक्षयति तच्चक्षुरिति ६

१७
प्रोष्येत्य गृहानुपतिष्ठते पूर्ववत् १ पुत्रं दृष्ट्वा जपति अङ्गादङ्गात्संभवसि हृद-यादधिजायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतमिति २ अथास्य मूर्द्धानमवजिघ्रति । प्रजापतेष्ट्वा हिंकारेणावजिघ्रामि सहस्रायुषाऽसौ जीव शरदः शतमिति ३ गवां त्वा हिंकारेणेति च त्रिर्दक्षिणेऽस्य कर्णे जपति । अस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्ररायोविश्ववारस्य भूरेः । अस्मे शतं शरदो जीवसे धा अस्मै वीराञ्छश्वत इन्द्र शिप्रिन्निति ४ इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे । पोषं रयीणामरिष्टिं तनूनां स्वात्मानं वाचः सुदिनत्वमह्नामिति सव्ये ५ स्त्रियै तु मूर्द्धानमेवावजिघ्रति तूष्णीम् ६ १८

षष्ठे मासेऽन्नप्राशनम् १ स्थालीपाकं श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहेति २ वाजो नो अद्येति च द्वितीयाम् ३ स्थालीपाकस्य जुहोति प्राणेनान्नमशीय स्वाहाऽपानेन गन्धान-शीय स्वाहा चक्षुषा रूपाण्यशीय स्वाहा श्रोत्रेण यशोऽशीय स्वाहेति ४ प्राशनान्ते सर्वान् रसान्त्सर्वमन्नमेकत उद्धृत्याथैनं प्राशयेत् ५ तूष्णीं हन्तेति वा हन्तकारं मनुष्या इति श्रुतेः ६ भारद्वाज्यामांसेन वाक्प्रसारकामस्य ७ कपिञ्जलमांसेनान्नाद्यकामस्य ८ मत्स्यैर्जवनकामस्य ९ कृकषाया आयु-ष्कामस्य १० आटया ब्रह्मवर्चसकामस्य ११ सर्वैः सर्वकामस्य १२ अन्न-पर्याय वा ततो ब्राह्मणभोजनमन्नपर्याय वा ततो ब्राह्मणभोजनम् १३ १९

श्रीः । सांवत्सरिकस्य चूडाकरणम् १ तृतीये वाऽप्रतिहते २ षोडशवर्षस्य केशान्तः ३ यथामङ्गलं वा सर्वेषाम् ४ ब्राह्मणान्भोजयित्वा माता कुमारमा-दायाप्लाव्याहते वाससी परिधाप्याङ्क आधाय पश्चादग्नेरुपविशति ५ अ-न्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्ते शीतास्वप्सूष्णा आसिञ्चत्युष्णेन वाय उदकेनेह्यदिते केशान्वपेति ६ केशान्वपेति ६ केशश्मश्र्विति च केशान्ते ७ अथात्र नवनीतपिण्डं घृतपिण्डं दध्नो वा प्रास्यति ८ तत आदाय दक्षिणं गोदानमुन्दति । सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूं दीर्घायुत्वाय वर्चस इति ९ त्र्येण्या शलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधात्योषध इति १० शिवो नामेति लोहक्षुरमादाय निवर्तयामीति प्रवपति येनावपत्सविता क्षुरेण

सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्यायुष्यञ्जरद-ष्टिर्यथासदिति ११ सकेशानि प्रच्छिद्यानडुहे गोमयपिण्डे प्रास्यत्युत्तरतो ध्रि-यमाणे १२ एवं द्विरपरं तूष्णीम् १३ इतरयोश्चोन्दनादि १४ अथ पश्चा-त्र्यायुषमिति १५ अथोत्तरतो येन भूरिश्चरा दिवं ज्योक्च पश्चाद्धि सूर्यम् । तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तय इति १६ त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति समुखं केशान्ते १७ यत्क्षुरेण मज्रयता सुपेशसा वप्त्वा वावपति केशाञ्छिन्धि शिरो माऽस्यायुः प्रमोषीः १८ मुखमिति च केशान्ते १९ ताभिरद्भिः शिरः समुद्य नापिताय क्षुरं प्रयच्छति । अक्षुण्व-न्परिवपेति २० यथामङ्गलं केशशेषकरणम् २१ अनुगुप्तमेतं सकेशं गोमयपिण्डं निधाय गोष्ठे पल्वल उदकान्ते वाऽऽचार्याय वरं ददाति २२ गां केशान्ते २३ संवत्सरं ब्रह्मचर्यमवपनं च केशान्ते द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः २४ १

अष्टवर्षं ब्राह्मणमुपनयेद्गर्भाष्टमे वा १ एकादशवर्षं राजन्यम् २ द्वादशवर्षं वैश्यम् ३ यथामङ्गलं वा सर्वेषाम् ४ ब्राह्मणान्भोजयेत्तं च पर्युप्तशिरसम-लंकृतमानयन्ति ५ पश्चादग्नेरवस्थाप्य ब्रह्मचर्यमागामिति वाचयति ब्रह्मचा-र्यसानीति च ६ अथैनं वासः परिधापयति येनेन्द्राय बृहस्पतिर्वासः पर्यद-धादमृतं तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चस इति ७ मेखलां बध्नीते । इयं दुरुक्तम् परिबाधमाना वर्णं पवित्रं पुनती म आगात् । प्राणा-पानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयमिति ८ युवासुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त इति वा ९ तूष्णीं वा १० यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्स हजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामीत्यथाजिनं प्रयच्छति मित्रस्यचक्षुर्द्धरुणं बलीयस्तेजो यसस्वि स्थविरं समिद्धं अनाहनस्यं वसनं जरिष्णुः परीदं वाज्यजिनं दधेऽहमिति दण्डं प्रयच्छति ११ तं प्रतिगृह्णाति यो मे दण्डः परापतद्वैहायसोऽधिभूम्यां तमहं पुनरादद आयुषे ब्रह्मणे ब्रह्मव-र्चसायेति १२ दीक्षावदेके दीर्घसत्रमुपैतीति वच नात् १३ अथास्याद्भिर-ञ्जलिनाऽञ्जलिं पूरयति आपोहिष्ठेति तिसृभिः १४ अथैनं सूर्यमुदीक्षयति तच्च-क्षुरिति १५ अथास्य दक्षिणां समधि हृदयमालभते । मम व्रते ते हृदयं द-

तयेन्द्यमाणो जपति अघोरचक्षुरपतिघ्न्येधि शिवा पतिभ्यस्सुमनास्सुवर्चाः । जीवसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे इति २५ अथैनामन्तरेण भ्रुमुखे दर्भेण सम्मार्ष्टि इदमहं या त्वयि पतिघ्न्यलक्ष्मिस्तां निर्दिशामि इति २६ दर्भं निरस्याप उपस्पृश्याथैनां दक्षिणे हस्ते गृह्णाति मित्रोऽसि इति २७ अथैनां देवयजनमुदानयति एकमिषे विष्णुस्त्वाऽन्वेतु । द्वे ऊर्जे विष्णुस्त्वाऽन्वेतु । त्रीणि व्रताय विष्णुस्त्वाऽन्वेतु । चत्वारि मायोभवाय विष्णुस्त्वाऽन्वेतु । पञ्च पशुभ्यो विष्णुस्त्वाऽन्वेतु । षडायस्पोंषाय विष्णुस्त्वाऽन्वेतु । सप्तभ्यो होत्राभ्यो विष्णुस्त्वाऽन्वेतु इति २८ सप्तमं पदमुपसङ्गृह्य जपति सखायस्सप्तपदा ऽभूम सख्यं ते गमेयं सख्यात्ते मा योषं सख्यान्मे मा योष्ठाः इति

इति बोधायनीयगृह्यसूत्रे प्रथमप्रश्ने प्रथमोऽध्यायः

## अथ प्रथमप्रश्ने द्वितीयोऽध्यायः

आवेद्यार्घ्यं कुर्यात् १ मध्येऽगारस्योदीचीनप्रतिषेवणा एरका उपस्तृणाति २ तास्वहतानि बहुगुणान्युत्तरदशानि वासांस्यास्तीर्य तेष्वृत्विजः प्राङ्मुखा उपविशन्ति ३ उत्तरपूर्वे देशेऽगारस्य प्राक्कूलान् दर्भान् संस्तीर्य तेष्वर्घ्यद्रव्याणि संसादयति ४ यावन्त ऋत्विजस्तावन्ति कांस्यानि पात्राणि सापिधानानि तावतः कूर्चान् ५ द्वावन्यौ परिग्रहणीयौ कूर्चौ ६ दधि मधु घृतमापः पयो वस्त्रयुगानि कुण्डलयुगानि ७ यस्यै गोः पयश्चमसः स्रगलङ्करणीयं चेति ८ पवित्रे कृत्वा तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा प्रोक्ष्य कूर्चे कांस्यं निधाय तिरःपवित्रं मध्वानयति ९ दधि पयो वा द्वितीयं स द्विवृत् १० घृतं तृतीयं स त्रिवृत् ११ यद्द्वितीयं तच्चतुर्थं स चतुर्वृत् १२ आपः पञ्चमीस्स पाङ्क्तः १३ वर्षीयसा तेजोमयेनापिधाय नानापुरुषा अर्घ्यद्रव्याण्याददते अन्वगनुसंव्रजता १४ कूर्चः इति कूर्चं प्राह १५ तत् सुकूर्चः इतीतरः प्रतिगृह्णाति १६ तं प्रदक्षिणं पर्यस्योदगावृत्त उपविशति १७ पुरस्ताद्वंन प्रत्यञ्चमुपोहते राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् इति १८ अथास्मा उदपात्रमादाय कूर्चाभ्यां परिगृह्य पाद्या आप इति प्राह १९ ता अभिमन्त्रयते आपः पादावनेजानीर्द्विषन्तं नाशयन्तु मे । अस्मिन् कुले ब्रह्मवर्चस्यसानि इति २० दक्षिणं पादं पूर्वं ब्राह्मणाय प्रसारयति । स्वयं शूद्राय २१ स्त्री प्रक्षाळयति पुमानभिषिञ्चति । विपरीतमित्येके २२ नियमात् पत्नीयजमानौ

जङ्घे धाव-यतः २३ अवनेक्तुः पाणी सम्मृशति मयि महो मयि भगो मयि भर्गो मयि यशः इति २४ अथाप उपस्पृश्य मयीन्द्रियं वीर्यम् इत्युरःप्रत्यात्मानं प्रत्यभिमृशते २५ अपो ब्रीहिभिर्यवैर्वा समुदायुत्य तथैव कूर्चाभ्यां परिगृह्या-र्हणीया आप इति प्राह २६ ता अभिमन्त्रये आम आगाद्वर्चसा यशमा संसृज पयसा तेजसा च । तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम् इति २७ एक-देशमञ्जलाबानीयमानमनुमन्त्रये विराजोऽसि विराजो दोहमशीय । मम पद्याय विराज इति २८ अतिशिष्टाः पराचीर्निनीयमाना अनुमन्त्रये समुद्रं वः प्रहिणोम्य क्षिताः स्वा योनिमपि गच्छत । अच्छिद्रः प्रजया भूयासं मा परासोचि मत्पयः इति २९ अथ तथैव कूर्चाभ्यां परिगृह्योपस्तरणीया आप इति प्राह ३० ता पिबति अमृतोपस्तरणमसि इति ३१ त्रिराचमेत् त्रिः परिमृजेत् । द्विरत्येके ३२ आचान्तायापावृत्ताय तथैव कूर्चाभ्यां परिगृह्यार्घ्य इति प्राह मधुपर्क इति वा ३३ मधुपर्कं प्रोक्तमनुमन्त्रयते त्रय्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि । तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम् इति ३४ तमुभाभ्यां हस्ताभ्यां प्रतिगृह्णाति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि इति ३५ तस्मिंश्चित् किञ्चिदापतितं स्यात्तदङ्गुष्ठेन च महानाम्व्या चोपसङ्गृह्येमां दिशं निरस्यति नेष्टावृद्धिं कृन्तामि या ते घोरा तनूः । तया तमाविश योस्मान् द्वेष्टि यं च वयं द्विष्मः इति ३६ अथाप उपस्पृश्य सर्वाभिरङ्गुलीभिस्समुदायुत्य प्राश्नाति यन्मधुनो मधव्यं परम-मन्नाद्यं वीर्यम् । तेनाह मधुनो मधव्येन परमेणान्नाद्येन वीर्येण परमोऽन्नादो मधव्योऽसानि इति ३७ त्रिः प्राश्य त्रिरनुपिबेच्छेषं च कुर्यात् ३८ य आत्मनः श्रेयांसमिच्छेत्तस्मै शेषं दद्यादिति ३९ आचान्तायापावृत्ताय तथैव कूर्चाभ्यां परिगृह्यापिधानीया आप इति प्राह ४० ताः पिबति अमृतापिधानमसि इति ४१ त्रिराचामेत् त्रिः परिमृजेत् । द्विरित्येके ४२ आचान्तायापावृत्ताय गौरिति गां प्राह ४३ तामनुमन्त्रयते गौरस्यपहतपाप्माऽप पाप्मानं नुद मम चामुष्य च इत्युपवेत्तुर्नाम गृह्णाति ४४ नाना महर्त्विग्भ्यो गाः प्राह ४५ एकां होतृकेभ्यः ४६ सर्वेभ्यो वैकामविभवत्वात् ४७ यः प्राह तस्मा उपाकरो-त्येकदेशं वपाय जुहोति अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्माभ्यमोपधीः कृणोतु विश्वचर्षणिः इति ४८ एकदेशमुपहरति तत् प्राश्नाति अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । अरिष्टमस्माकं कृणोत्वसौ ब्राह्मणो ब्राह्मणेषु इति । अथ यदुत्स्त्रक्ष्यन् भवति तामनुमन्त्रयते गौर्धेनुभव्या

माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः । प्रणुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट । पिबतूदकं तृणान्यत्त । ओमुत्सृजत इति ५० तस्यामुत्सृष्टायां मेषमजं वाऽऽलभते ५१ आरण्येन वा मांसेन ५२ न त्वेवामांसोऽर्घ्यस्स्यात् ५३ अशक्तौ पिष्टान्नं संसिद्धयेत् ५४ सिद्धे भूतम् इति प्राह ५५ तत् सुभूतम् इति इतरः प्रत्याह ५६ तदभिमन्त्रयते भूतं सुभूतं सा विराट् तन्मा क्षायि तन्मेऽशीय तन्म ऊर्जं वा ओं कल्पयत इति ५७ चतुरो नानागोत्रान् ब्राह्मणान् भोजयतेत्येव ब्रूयात् ५८ तेषु भुक्तवत्स्वन्नमस्मा उपहरति ५९ तत्प्राश्नाति विराडसि विराडन्नं विराड्विराजो मयि धेहि इति ६० भुक्तवद्भ्यो वस्त्रयुगानि कुण्डलयुगानि यस्यै गोः पयश्चमसः स्रगलङ्करणीयमिति च दद्यात् । एकधनं षष्ठौहीं दम्यावित्येके ६१ प्राङ्मधुपर्कादलङ्करणमेके समामनन्ति ६२ महयेदृत्विजमाचार्यं चात्मानं वा एष महयति यस्समृत्विजमाचार्यं च महयत्येवमेवंव्रता वा आत्यन्तिकास्स्युः पतितोऽननूचान इति निमित्तानि ६३ वरणेऽग्न्याधेयप्रभृतिषु चैषामृत्विजं स्मरेत् ६४ तथैते अर्घ्या ऋत्विक् श्वशुरः पितृव्यो मातुल आचार्यो राजा वा स्नातकः प्रियो वरोऽतिथिरिति ६५ संवत्सरपर्यागतेभ्य एतेभ्य एवं कुर्यात् विवाहे वराय ६६ अथर्त्विग्भ्यः कर्मणि कर्मणि ददाति ६७

इति बोधायनीयगृह्यसूत्रे प्रथमप्रश्ने द्वितीयोऽध्यायः

## अथ प्रथमप्रश्ने तृतीयोऽध्यायः

अथ शुचौ समे देशे अग्न्यायतनदेशं शकलेन त्रिः प्राचीनमुल्लिखेत् त्रिरुदीचीनम् १ अथाद्भिरभ्युक्ष्य शकलं निरस्याप उपस्पृश्य याज्ञिकात्काष्ठादग्निं मथित्वा श्रोत्रियागाराद्वाऽऽहृत्य व्याहृतिभिर्निरुप्योपसमाधायोपदिष्ठते २ जुष्टो दमूना अतिथिदुर्रोण इमं नो यज्ञमुपया हि विद्रान् । विश्वा अग्नेऽभियुजो विहत्य शत्रूयतामाभरा भोजनानि इति ३ अथैनं प्रदाक्षिणमग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्य प्रागग्रैर्दर्भैरग्निं परिस्तृणाति ४ अपि वोदगग्राः पश्चाच्च पुरस्ताच्च भवन्ति ५ दक्षिणानुत्तरानुत्तरानधरान्यदि प्रागुदगग्राः ६ उत्तरेणाग्निं प्रगग्रान् दर्भान् संस्तीर्य तेषु द्वन्द्वं न्यञ्चि पात्राणि संसादयति देवसंयुक्तान्येकैकशः पितृसंयुक्तानि सकृदेव मनुष्यसंयुक्तानि ७ यत्सह सर्वाणि मानुषाणि इत्येतस्माद्ब्राह्मणात् ८ पवित्रे कृत्वा तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा प्रोक्ष्य विस्त्रस्येध्मं त्रिस्सर्वाभिः प्रोक्षति

९ दर्भेषु दक्षिणतो ब्राह्मण उपविशति उतरत उदपात्रम् १० अथ तिरःप- वित्रमाज्यस्थाल्यामाज्यं निरुप्योदीचोऽङ्गाराऽन्निरूह्य यन्तान्कृत्वा तेष्वधि- श्रित्याभिद्योतनेनाभिद्योत्य द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाळ्य प्रत्यस्य पुनरभिद्योत्य त्रिः पर्यग्निकृत्वा वर्त्म कुर्वन्नुदगुद्वास्य प्रत्यूह्याङ्गारान् बर्हिरास्तीर्य अथैनदुदी- चीनाग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय विस्त्रस्य पवित्रेऽद्भिस्संस्पृ- श्याग्नावनुप्रहरति ११ अथ दर्वी निष्टप्य दर्भैस्संमृज्याद्भिस्संस्पृश्य पुनर्निष्टप्य प्रोक्ष्य निधाय दर्भानद्भिस्संस्पृश्याग्नावनुप्रहराति १२ अथ शम्याः परिधाति स्वादिरी दर्वी तेजस्कामस्यौदुम्बर्यन्नाद्यकामस्य पालाशी ब्रह्मवर्चसकामस्य इति १३ अथ हैकेषां विज्ञायते निर्ऋतिगृहिता वै दर्वी यद्दर्व्या जुहुया- न्निर्ऋत्याऽस्य यज्ञ ग्राहयेत्तस्मात्स्त्रुवेणैव होतव्यम् इति १४ पालाशेन स्त्रुवेणेत्यात्रेयः १५ खादिरेणेत्याङ्गिरसः १६ ताम्रायसेनेत्याथर्वणः १७ कार्ष्णायसेनाभिचरन्निति सार्वत्रिकम् १८ अन्यो वाऽस्यैतावत्कृत्वाऽऽगमनं काङ्क्षेत् १९ अपरेणाग्निमुदीचीनप्रतिषेवणामेरकां साधिवासामास्तीर्य तस्यां प्राञ्चावुपविशत उत्तरतः पतिर्दक्षिणा पत्नी २० अथान्वारब्धायां प्रदक्षिणमग्निं परिषिञ्चति २१ अदितेऽनुमन्यस्व इति दक्षिणतः प्राचीनम् २२ अनुमतेऽनुम- न्यस्व इति पश्चादुदीचीनम् २३ सरस्वतेऽनुमन्यस्व इत्युत्तरतः प्राचीनम् २४ देव सवितः प्रसुव इति समन्तं प्रदक्षिणं समन्तमेव वा तूष्णीम् २५ अथेभ्यमभ्यज्य परिसमिधं शिनष्टि स्वाहाकारेणाभ्याधायाघारावाधारयति २६ प्रजापतये स्वाहा इति मनसोत्तरे परिधिसन्धौ संस्पृश्याक्ष्णाया सन्ततम् २७ इन्द्राय स्वाहा इत्युपांशु दक्षिणे परिधिसन्धौ संस्पृश्याक्ष्णाया सन्ततम् २८ अथाज्यभागौ जुहोति २९ अग्नये स्वाहा इत्युत्तरार्धपूर्वार्धे ३० सोमाय स्वाहा इति दक्षिणार्धपूर्वार्धे ३१ अथाग्निमुखं जुहोति ३२ युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम् । त्वं भिषग्भेषजस्यासि कर्ता त्वया गा अश्वान् पुरुषान् सनेमि स्वाहा ३३ चतस्त्र आशाः प्रचरन्त्वग्नय इमं नो यज्ञं नयतु प्रजानन् । घृतं पिबन्नजरं सुवीरं ब्रह्म समिद्भवत्याहुतीनां स्वाहा ३४ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः । देवा नो यथा सदमिद्वृधे सन्न प्रायुवो रक्षितारो दिवे दिवे स्वाहा ३५ विरूपाक्ष मा विबांधिष्ठा मा विबाध विबाधिथाः । निर्ऋत्यै त्वा पुत्रमाहुस्स नः मर्माणि धारय स्वाहा ३६ विरूपाक्षमहं यजे निजङ्घं शबळोदरम् । यो माऽयं परिबाधते श्रियै पुष्ट्यै च नित्यदा तस्मै स्वाहा ३७ या तिरश्ची

निपद्यसेऽहं विघरणी इति । तां त्वा घृतस्य धारयाऽग्नौ संराधिनीं यजे स्वाहा ३८ संराधिन्यै देव्यै स्वाहा । प्रसाधिन्यै देव्यै स्वाहा । भूस्स्वाहा । भुवस्स्वाहा । सुवस्स्वाहा भूर्भुवस्सुवस्स्वाहा इत्येतावत् सर्वदर्वीहोमानामेष कल्पः ३९

इति बोधायनीयगृह्यसूत्रे प्रथमप्रश्ने तृतीयोध्यायः

अथ प्रथमप्रश्ने चतुर्थोऽध्यायः

अथास्या उपोत्थाय दक्षिणेन हस्तेन दक्षिणमंसं प्रतिबाहुमन्ववहृत्य हृदय-देशमभिमृशति--मम हृदये हृदयं ते अस्तु मम चित्ते चित्तमस्तु ते । मम वाजमेकमनाः शृणु मामेवानुव्रता सहचर्या मया भव इति १ अथास्यै दक्षिणे कर्णे जपति २ मां ते मनः प्रविशतु मां चक्षुर्मामु ते भगः मयि सर्वाणि भूतानि मयि प्रज्ञानमस्तु ते ३ मधुगे मध्वगाहे जिह्वा मे मधुवादिनी । मुखे मे सारघं मधु दत्सु संवननं कृतम् ४ चाक्रवाकं संवननं यन्नदीभ्य उदाहृतम् । यद्वित्तौ देवगन्धर्वौ तेन संवनिनौ स्वः ५ स्पृशामि तेऽहमङ्गानि वायुरापश्च मा मरः । मां चैव पश्य सूर्यं च मा चान्येषु मनः कृथाः ६ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ७ सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ८ सरस्वति प्रेदमव सुभगे वाजिनीवति । तां त्वा विश्वस्य भूतस्य प्रगायामस्यग्रतः इति ९ अथास्यै दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानं हस्तं साङ्गुष्ठमभीव लोमानि गृह्णाति गृभ्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसः । भगोअर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः इति १० अथैनां प्रदक्षिणमग्निं पर्याणयति--परित्वाऽग्ने पुरं वयं विप्रं सहस्य धीमहि । धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावतः इति ११ अथ तथोपवि-श्यान्वारब्धायामुपयमनीर्जुहोति १२ अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्त-मानि सन्तु । सञ्जास्पत्यं सुयममाकृणुष्व शत्रूयतामभितिष्ठा महांसि स्वाहा १३ सोमाय जनिविदे स्वाहा १४ गन्धर्वाय जनिविदे स्वाहा १५ अग्नये जनिविदे स्वाहा १६ कन्यला पितृभ्यो यती पतिलोकमव दीक्षामदास्थ स्वाहा १७ प्रेतो मुञ्चाति नामुतस्सुबद्धाममुतस्करत् । यथेयमिन्द्रमीढ्व-स्सुपुत्रा सुभगा सती स्वाहा १८ इमां त्वमिन्द्र मीढ्वस्सुपुत्रां सुभगां कुरु । दशास्यां पुत्रानाधेहि पतिमेकादशं स्वाहा १९ अग्निरैतु प्रथमो देवतानां

सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं स्त्री पौत्रमघं न रोदात् स्वाहा २० इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुध्यतामियं स्वाहा २१ मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यस्संविशन्तु । मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा २२ अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाऽघम् । शीर्ष्णस्स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशं स्वाहा इति २३ अथैनामुत्थाप्योत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयति आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव । अभितिष्ठ पृतन्यतस्सहस्व पृतनायतः इति २४ अथास्या अञ्जलावुपस्तीर्य तस्यास्सोदर्यो द्विर्लाजानावपति २५ तानभिधार्य जुहोति -- इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती । दीर्घायुस्तु मे पतिर्जीवातु शरदश्शतं स्वाहा २६ अथैनां प्रदक्षिणमग्निं पर्याणयति-- तुभ्यमग्ने पर्यवहन् सूर्यं वहतुना सह । पुनः पतिभ्यो जायां दा अग्ने प्रजया सह इति २७ तथाऽऽस्थापयति तथा जुहोति २८ अथैनां पुनः प्रदक्षिणमग्निं पर्याणयति--पुनः पत्नीमग्निरदादायुषा सह वर्चसा । दीर्घायुरस्या यः पतिस्स एतु शरदश्शतम् इति २९ तथैवास्थापयति तथैव जुहोति ३० अथैनां पुनरेव पर्याणयति -- विश्वा उत त्वया वयं धारा उदन्या इव । आतिगाहेमहि द्विषः इति ३१ अथ तथोपविश्यान्वरब्धायां जयानभ्यातानात्राष्ट्रभृत इति हुत्वा अथामात्यहोमान् जुहोति ३२ अथ प्राजापत्यात् जुहोति--प्रजापते न त्वदेतान्यन्यः इति ३३ अथ सौविष्टकृतं जुहोति यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निस्तत्स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामानां समर्धयित्रे स्वाहा इति ३४ अथ स्रुवेण परिधीननक्ति ३५ अथ परिस्तरात्समुल्लिप्याज्यस्थाल्यां प्रस्तरवत् बर्हिरक्त्वा तृणं प्रच्छाद्याग्नावनुप्रहरति ३६ अथ शम्या अपोह्य तथैव परिषिञ्चति । अन्वमंस्थाः प्रासावीः इति मन्त्रान्तान् सन्नमयति ३७ अथ प्रणीताभ्यो दिशो व्युन्नीय ब्रह्मणे वरं ददामीति गां ब्राह्मणेभ्यः ३८ एष आघारबान् दर्वीहोमः ३९ अथापरः--परिसमूह्य पर्युक्ष्य परिस्तीर्याज्यं विलाप्योत्पूय स्रुक् स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा सर्वान् मन्त्रान् समनुद्रुत्य सकृदेवाहुतिं जुहोति ४० अग्निस्स्विष्टकृद्द्वितीयः ४१ द्विर्जुहोति द्विर्निमार्ष्टि द्विः प्राश्नात्युत्सृप्याचामति निर्लेढीत्येष आग्निहोत्रिकः ४२ अथापरः--परिसमूह्य पर्युक्ष्य परिस्तीर्य प्राकृतेन हविषा यावदाम्ना-

तमाहुतीर्जुहोत्येष ह्यपूर्वः ४३ तत्रोदाहरन्ति आघारं प्रकृतिं प्राह दर्वीहोमस्य बादरिः । आग्निहोत्रिकं तथाऽऽत्रेयः काशकृत्स्नस्त्वपूर्वताम् इति

इति बोधायनीये गृह्यसूत्रे प्रथमप्रश्ने चतुर्थोऽध्यायः

अथ प्रथमप्रश्ने पञ्चमोऽध्यायः

तां न मिथस्संसादयेदनादेशात् १ अनुनयन्त्येतमग्निम् २ अथैनां पितुरङ्का-दुद्वहति गुरोर्वा--ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनाँ अनु । पुनस्ता-न्यज्ञिकीया देवा नयन्तु यत आगताः इति ३ अथैनां दक्षिणे हस्ते गृहीत्वा स्वरथमारोप्य स्वान् गृहानानयति पूषा त्वेतो नयतु हस्तगृह्याश्विनौ त्वा प्रवहतां रथेन । गृहान् गच्छ गृहपत्नी यथाऽसो वशिनी त्वं विदथमावदासि इति ४ पन्थानमनुमन्त्रयते--सु गं पन्थानमारुक्षमरिष्टं स्वस्तिवाहनम् । यस्मिन् वीरो न रिष्यत्यन्येषां विन्दते वसु इति ५ ओषधिवनस्पतयो नद्यो वनान्यनुमन्त्रयते--या ओषधयो या वनस्पतयो या नद्यो यानि धन्वानि ये वना । ते त्वा वधु प्रजावतीं प्रत्वे मुञ्चन्त्वंहसः इति ६ अथ जायामानीय स्वान् गृहान् प्रपादयति--भद्रान् गृहान् सुमनमः प्रपद्येऽवीरघ्नी वीरवत-स्सुवीरान् । इरां वहतो घृतमुक्षमाणास्तेष्वहं सुमनास्संविशानि इति ७ अथैनामानडुहे चर्मण्युपवेशयति--इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो रायप्सोषो निषीदतु इति ८ अत्राभ्याममात्यास्स्तोक्मा-ण्यारोपयन्ते ९ अथ वाचं यच्छतः आ नक्षत्राणामुदयात् १० अथाहोरात्रयोस्सन्धिमनुमन्त्रयते--नीललोहिते भवतः कृत्यासक्तिर्व्यज्यते । एधन्तेऽस्या ज्ञातयः पतिर्बन्धेषु बध्यताम् इति ११ अथोदितेषु नक्षत्रेषूपनि-ष्क्रम्य ध्रुवमरुन्धतीं च दर्शयति १२ ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवमसि ध्रुवत-स्स्थितम् । त्वं नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यतः इति ध्रुवम् १३ सप्त ऋषयः प्रथमां कृत्तिकानामरुन्धतीं यद्ध्रुवतां ह निन्युः । षट्कृत्तिका मुख्ययोगं वहन्तीयमस्माकमेधत्वष्टम्यरुन्धती इत्यरुन्धतीम् १४ अथ विवा-हस्यारुन्धत्युपस्थानात् कृत्वा व्रतमुपैति--अग्ने व्रतपते उपयमनं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते उपयननं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् इति १५ उभौ जायापती व्रतचारिणौ ब्रह्मचारिणौ भवतोऽधश्शयाते १६ तयोश्श्याम-न्तरेणोदुम्बरदण्डो गन्धानुलिप्तो वाससा सूत्रेण वा परिवीतस्तिष्ठत्यापक्व-

होमात् १७ चतुर्थ्यां निशायां हुते पक्वहोमे व्रतं विसृज्य दण्डमुत्थापयति–ऊर्जः पृथिव्या अध्युत्थितोऽसि वनस्पते शतवल्शो विरोह । त्वया व-यमिषमूर्ज वदन्तो रायस्पोषेण समिषा मदेम इति १८ अथैनं वध्वै प्रयच्छति ––प्रजया त्वा संसृजामि मासरेण सुरामिव इति १९ तं वधूः प्रतिगृह्णाति––प्रजावती भूयासम् इति २० अथैनं वराय प्रयच्छति––प्रजया त्वा पशुभि-स्संसृजामि मासरेण सुरामिव इति २१ तं वरः प्रतिगृह्णाति––प्रजावान् पशुमान् भूयासम् इति २२ अथैनं स्थूणादेशे निधायान्तिकेन प्रतिपद्यते २३ प्रसिद्धमुपसंवेशनम् २४ श्वोभूते दण्डमादाय पुण्याहं वाचयित्वाऽप्सु विसर्जयति २५ अथ देवयजनोल्लेखनप्रभृत्याग्निमुत्वात् कृत्वा पक्वा-ज्जुहोति––अग्निर्मूर्धा भुवः इति द्वाभ्याम् २६ स्विष्टकृत्प्रभृति सिद्धमाधेनु-वरप्रदानात् २७ स एष पार्वणो भवति २८ अथास्तमित आदित्येऽन्यो-न्यमलङ्कृत्योपरिशय्यां शयाते २९ अथ वधूमभिमन्त्रयते––सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्वायाथास्तं विपरेतन इति ३० अथैनां सर्वसुरभिगन्धया मालया युनक्ति –– सं ना मनस्सं हृदयानि सं नाऽभि सं तनुत्यजः । सं त्वा कामस्य याक्रेणे युञ्जत्यविमोचनाय इति

इति बोधायनीये गृह्यसूत्रे प्रथमप्रश्ने पञ्चमोऽध्यायः

## अथ प्रथमप्रश्ने षष्ठोऽध्यायः

आनयन्त्येतमग्निम् १ अथ देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा पद्या-मोदनं पायसं वा याचति २ तमभ्युक्ष्याग्नावधिश्रयतिं ३ आज्यं निर्वपति ४ अथाज्यमधिश्रयति ५ उभयं पर्यग्नि कृत्वा मेक्षणं स्त्रुवं च संमार्ष्टि ६ अथैतं चरुं श्रपयित्वाऽभिधार्योदञ्चमुद्वास्य प्रतिष्ठितमभिघारयति ७ परिधा-नप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जुहोति ८ स एवमेव सर्वेषां स्थालीपाकानां चरुकल्पः ९ यस्त्वा हृदा कीरिणा मन्यमानः इति पुरोनुवाक्यामनूच्य यस्मै त्वं सुकृते जातवेदः इति याज्यया जुहोति १० अथाज्याहुतीरुपजुहोति ११ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा १२ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा १३ आदित्य प्रायश्चिते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये

याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा १४ प्रजापते प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा इति १५ पक्वादेव स्विष्टवतीभ्यां सौविष्टकृतम् १६ लाजैरितरत्र १७ हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम् । ज्योतिष्मन्तं दीद्यतं पुरन्धिमग्निं स्विष्टकृतमाहुवेमोम् । स्विष्टमग्ने अभि तत् पृणाहि विश्वादेव पृतना अभिष्य । उरुं नः पन्थां प्रदिशन् विभाहि ज्योतिष्मद्धेह्यजरं न आयुस्स्वाहा इति १८ जयप्रभृति सिद्धमाधेनुवरप्रदानात् १९ अथाज्यशेषेण हिरण्यमन्तर्धाय मूर्ध्नि संस्रावं जुहोतिभूस्स्वाहा भुवस्स्वाहा सुवस्स्वाहा भूर्भुवस्सुवस्स्वाहा इति २० अथैनां प्रदक्षिणमग्निं पर्याणयति अर्यम्णो अग्निं परियन्तु क्षिप्रं प्रतीक्षन्तां श्वश्रुवो देवराश्च इति २१ अथ श्रीमन्तमगारं सम्मृष्टोपलिप्तं गन्धवन्तं पुष्पवन्तं धूपवन्तं दीपवन्तं तल्पवन्तं साधिवासं दिक्षु सर्पिस्सूत्रेन्धनप्रद्योतितमुदकुम्भादर्शोच्छिरसं प्रपाद्य तस्मिन्नेनां संवेश्य तस्या अन्तिके जपति २२ उदीर्ष्वातो विश्वावसो नमसेडामहे त्वा । अन्यामिच्छ प्रफर्व्यं सं जायां पत्या सृज । उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीट्टे । अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि इति २३ अथैनामुपसंवेशयति प्रजापतिस्स्त्रियां यशः इत्येतया २४ अथास्यास-तोकोतिं विवृणोति प्रजायै त्वा इति २५ सा यद्यश्रु कुर्यात्तामनुमन्त्रयते जीवां रुदन्ती विमयन्तो अध्वरे दीर्घामनुप्रसितिं दीधियुर्नरः । वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे इति २६

इति बोधायनीये गृह्यसूत्रे प्रथमप्रश्ने षष्ठोऽध्यायः

अथ प्रथमप्रश्ने सप्तमोऽध्यायः

ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनाज्जात इत्यभिधीयते १ उपनीतमात्रो व्रतानुचारी वेदानां किञ्चिदधीत्य ब्राह्मणः २ एकां शाखामधीत्य श्रोत्रियः ३ अङ्गाध्याय्यनूचानः ४ कल्पाध्यायी ऋषिकल्पः ५ सूत्रप्रवचनाध्यायी भ्रूणः ६ चतुर्वेदादृषिः ७ अत ऊर्ध्वं देवः ८ अथ यदि कामयेत श्रोत्रियं जनयेयमित्याऽरुन्धत्युपस्थानात्कृत्वा त्रिरात्रमक्षारलवणाशिनावधश्शायिनौ ब्रह्मचारिणावासाते ९ अहतानां च वाससां परिधानं सायं प्रातश्चालङ्कर-णामिषुप्रतोदयोश्च धारणमग्निपरिचर्या च १० चतुर्थ्यां पक्वहोम उपसंवेशनं

च ११ अथ यदि कामयेतानूचानं जनयेयमिति द्वादशरात्रमेतद्व्रतं चरेत् १२ व्रतान्ते पक्वहोम उपसंवेशनं च १३ अथ यदि कामयेत ऋषिकल्पं जनयेयमिति मासमेतद्व्रतं चरेत् १४ व्रतान्ते पक्वहोम उपसंवेशनं च १५ अथ यदि कामयेत भ्रूणं जनयेयमिति चतुरो मासानेतद्व्रतं चरेत् १६ व्रतान्ते पक्वहोम उपसंवेशनं च १७ अथ यदि कामयेत ऋषिं जनयेयमिति षण्मासानेतद्व्रतं चरेत् १८ व्रतान्ते पक्वहोम उपसंवेशनं च १९ अथ यदि कामयेत देवं जनयेयमिति संवत्सरमेतद्व्रतं चरेत् २० व्रतान्ते पक्वहोम उपसंवेशनं च २१ अथ यदैषा मलवद्वासास्स्यात्--नैनया सह संवदेत न सहासीत नास्या अन्नमद्याद्भ्रह्महत्यायै ह्योषा वर्णं प्रतिमुच्यास्तेऽथो स्वल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यत् इति २२ नैनामुपेयात् २३ नारण्ये २४ न पराचीम् २५ न स्नाति २६ नाभ्यङ्क्ते २७ न प्रलिखते २८ नाङ्क्ते २९ न दतो धावते ३० न नखानि निकृन्तते ३१ न कृणत्ति ३२ न रज्जुं सृजति ३३ न पर्णेन पिबति ३४ न खर्वेण पिबति ३५ तस्यै खर्वस्त्रिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय इति ब्राह्मणम् ३६ चतुर्थ्यां स्नातायां निशायामलङ्कृत्य शयनेऽभिमन्त्रयते विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ३७ यथाऽग्निगर्भा पृथिवी द्यौर्यथेन्द्रेण गर्भिणी । वायुर्यथा दिशां गर्भ एवं गर्भं दधातु ते ३८ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं धेहि अश्विनौ देवावाधत्तां पुष्करस्रजा ३९ हिरण्ययी अरणी यं निर्मन्थतो अश्विना । तंते गर्भं दधाम्यहं दशमे मासि सूतवे ४० नेजमेष परापत सपुत्रः पुनरापत । अस्यै मे पुत्रकामायै गर्भमाधेहि यः पुमान् इति ४१ अथैनां परिष्वजति--अमूहमस्मि सा त्वं द्यौरहं पृथिवी त्वं रेतोऽहं रेतोभृत्त्वं मनोऽहमस्मि वाक्त्वं सामाहमस्मि ऋक्त्वं तावेहि सम्भवाव सह रेतो दधावहै पुंसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय इति ४२ आत्मानं प्रत्यभिमृशतै--अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः । अहं प्रजा अजनयन्पितृणामहं जनिभ्यो अपरीषु पुत्रान् इति ४३ अथैनामुपैति--तां पूपञ्छिवतमोमरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्त्रयातै यस्यामुशन्तः प्रहरेम शेफम् इति ४४ स एवमेव चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मामुपैति ४५ प्रजानिश्श्रेयसमृतुगमनमित्याचार्याः ४६ सर्वाण्युपगमनानि मन्त्रवन्ति भवन्तीति बोधायनः ४७

यच्चादौ यच्चर्ताविति शालिकिः ४८
इति बोधायनीयगृह्यसूत्रे प्रथमप्रश्ने सप्तमोऽध्यायः

अथ प्रथमप्रश्ने अष्टमोऽध्यायः

अथाभ्यां पञ्चमेऽहनि नापितकर्म कुर्वन्ति १ नापिताय पयोदनं दत्वा ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य यत्रैकमुदुम्बरमूलं पश्यन्ति तं प्रदक्षिणं परिसमूह्य प्रदक्षिणं गन्धैरनुलिम्पन् जयति--यथा त्वं वनस्पत ऊर्जा अभ्युत्थितो वनस्पते । शतवल्शो विरोहस्येवमहं पुत्रैश्च पशुभिश्च सहस्रवल्शा वि वयं रुहेम इति २ सुमनोभिः प्रच्छादयति--यथा त्वं वनस्पते फलवानस्येवमहं पुत्रैश्च पशुभिश्च फलवान् भवानि इति ३ अत्रैव त्रिवृताऽन्नेन बलिमुपहरति ४ मन्त्रं चोदाहरन्ति--ऊर्जस्वान् पयस्वान् पयसा पिन्वमानोऽस्मान् वनस्पते पयसाऽभ्याववृत्स्व इति ५ अन्नं संस्कृत्य ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा जानुदघ्नमुदकमवतीर्य प्राचीनदशेनाहतेन वाससा मत्स्यान् गृह्णतो ब्रह्मचारिणं पृच्छतो ब्रह्मचारिन् किं पश्यसि इति ६ स पृष्टः प्रतिब्रूयात् पुत्रांश्च पशूंश्च इति ७ अथैतान् मन्स्यानुदुम्बरमूले बकानां बलिमुपहरति दीर्घायुत्वाय वर्चसे इति ८ अत्रैव निर्माल्यानि परिभुक्तानि वासांसि प्रतिसरांश्च प्रतिमुच्योदुम्बरशाखायां संसृज्य ९ अथावगाह्यान्योन्यस्य पृष्ठे धावयित्वोदकान्तं प्रति यौति -- प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाशः इति १० अन्योन्यमलङ्कृत्य रक्तानि वासांसि परिधायाहतेन वाससा वेति ११ यानेन पद्भ्यां वा गृहं गत्वा प्रक्षाळितपादावप आचम्य वाग्यतौ शयनमारभेते १२ श्वोभूते वैश्वदेवेन प्रतिपद्यते १३ मासिश्राद्धेन चापरपक्षे १४
इति बोधायनीये गृह्यसूत्रे प्रथमप्रश्ने अष्टमोऽध्यायः

अथ प्रथमप्रश्ने नवमोऽध्यायः

विज्ञाते गर्भे तिष्ये पुंसवनम् १ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा २ अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिस्सहसाम इन्द्र । विश्वैर्देवैरातिभिस्संरराणः पुंसां बहूना मातरस्स्याम स्वाहा इति ३ अथाज्याहुतीरुपजुहोति--गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् इति तिसृभिरनु-

च्छन्दसम् ४ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ५ अथास्या आज्य-शेषमास्ये प्रच्योतयति--अस्मे देवासो वपुषे चिकित्सत इति चतसृभि-रनुच्छन्दसम् ६

इति बोधायनीये गृह्यसूत्रे प्रथमप्रश्ने नवमोऽध्यायः

अथ प्रथमप्रश्ने दशमोऽध्यायः

प्रथमगर्भायाश्चतुर्थे मासि सीमन्तोन्नयनम् १ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा २ अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखा-त्कृत्वा पक्वाज्जुहोति ३ धाता ददातु नः इति पुरोनुवाक्यामनूच्य धाता प्रजाया उत राय ईशे इति याज्यया जुहोति ४ अथाज्याहुतीरुपजुहोति--धाता ददातु नो रयिं प्राचीम् इत्यान्तादनुवाकस्य ५ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ६ अथास्यास्त्रेण्या शलल्या त्रिभिर्दर्भपुञ्जीलैरुदुम्ब-रप्रसूनैर्यवप्रसूनैरिति केशान् विभजन् सीमन्तमुन्नयति राकामहम् यास्ते राके इति द्वाभ्याम् ७ अथास्यै यवप्रसूनान्याबध्नाति यवोसि यवयास्मद्द्वेषो यवया-रातीः इति ८ अथैनौ वीणागाथिनाविति प्रतिगृह्णीते ९ अथैनौ संशास्ति गायतमिति १० तावेतां गाथां गायतः सोम एव नो राजेत्याहु-र्ब्राह्मणीः प्रजाः । विवृत्तचक्रा आसीनास्तीरेणासौ तव इति ११ यस्यै नद्या-स्तीरे संश्रिता वसन्ति तस्यै नाम गृह्णाति १२ अष्टमे मासि विष्णव आहुतीर्जुहोति विष्णोर्नुकम् इत्येतेन सूक्तेन १३ विष्णवे बलिमुपहरति १४ वैष्णवो ह्येष मासो विज्ञायते १५ विष्णुर्हि गर्भस्य देवता १६ इति हुतो व्याख्यातः १७

इति बोधायनीये गृह्यसूत्रे प्रथमप्रश्ने दशमोऽध्यायः

प्रथमप्रश्ने एकादशोऽध्यायः

यथैतद्भुते बलिहरणम् १ विष्णवे बलिरष्टमे मासि पूर्वपक्षस्य सप्तम्यां द्वादश्यां रोहिण्यां श्रोणायां वा २ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ३ अथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा उपोत्थायाग्रेणाग्निं दैवतमावाहयति ओं भूः पुरुषमावाहयामि ओं भुवः पुरुषमावाहयामि ओं सुवः पुरुषमावाहयामि ओं भूर्भुवस्सुवः पुरुषमावा-हयामि इत्यावाह्य ४ परिधानप्रभृत्याऽग्निमुखात्कृत्वा दैवतमर्चयति ५ आपो

हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति चतसृभिः पवमानस्सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वा ६ अथाद्भिस्तर्पयति केशवं तर्पयामि नारायणं माधवं गोविन्दं विष्णुं मधुसूदनं त्रिविक्रमं वामनं श्रीधरं हृषीकेशं पद्मनाभं दामोदरं तर्पयामि इति ७ एतैरेव नामधेयैर्गन्धपुष्प-धूपदीपैः अमुष्मै नमोऽमुष्मै नमः इत्यभ्यर्च्य ८ अथ विष्णव आहुतीर्जुहोति विष्णोर्नु कम् तदस्य प्रियम् प्रतद्विष्णुः परो मात्रया विचक्रमे त्रिर्देवः इति ९ जयप्रभृति सिद्धमाधेनुवरप्रदानात् १० अथ गुडपायसं घृतमिश्रमन्नं निवेदय-ति अमुष्मै स्वाहा नमोऽमुष्मै स्वाहा नमः इति द्वादशभिर्यथालिङ्गम् ११ वैष्णवीभिः ऋग्यजुस्सामाथर्वभिस्स्तोत्रैस्स्तुतिभिस्स्तुवन्ति १२ व्याहृतीभिः पुरुषमुद्वासयामीत्युद्वास्यान्नशेषं पत्नीं प्राशयेन् १३ पुमानस्यै जायत इति विज्ञायते १४

इति बोधायनीयगृह्यसूत्रे प्रथमप्रश्ने एकादशोऽध्यायः

यथो एतत् । आवेद्यार्घ्यं कुर्यात् । अथ शुचौ समे देशे । अथास्या उपोत्थाय । तां न मिथस्संसादयेत् । आनयन्त्येतमग्निम् । ब्राह्मणेन ब्राह्मण्यामुत्पन्नः । अथाभ्यां पञ्चमेऽहनि । विज्ञाते गर्भे । प्रथमगर्भायाश्चतुर्थे मासि । यथैतद्भुते बलिहरणम् ११ यथैतद्भुते बलिहरणम् । प्रथमगर्भा-याश्चतुर्थे मासि । विज्ञाते गर्भे । अथाभ्यां पञ्चमेऽहनि । ब्राह्मणेन ब्राह्मण्यामुत्पन्नः । आनयन्त्येतमग्निम् । तां न मिथस्संसादयेत् । अथास्या उपोत्थाय । अथ शुचौ समे देशे । आवेद्यार्घ्यं कुर्यात् । यथो एतत् ११

इति बोधायनीयगृह्यसूत्रे प्रथमः प्रश्नः समाप्तः

अथ द्वितीयप्रश्ने प्रथमोऽध्यायः

अथ प्रहुतः १ जातं कुमारमभिमन्त्रयते--अङ्गस्सम्भूतः इत्येतेनानुवाकेन २ अथैनं स्नपयति--क्षेत्रियै त्वा निर्ऋत्यै त्वा इति षड्भिरनुच्छन्दसम् ३ अथैनं स्वोपस्थं आदधाति--अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि संजीव शरदश्शतम् इति ४ अथैनं मूर्ध्न्यभिजिघ्रति--अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । पशूनां त्वा हिङ्कारेणाभिजिघ्राम्यसौ इति नक्षत्रनामधेयेन ५ अथास्य दक्षिणे कर्णे जपति अग्निरायुष्मान् इति पञ्चभिः पर्यायैः ६ अथैनं दधिमधुघृतमिति समुदायुत्य हिरण्येन प्राशयति--प्राणो

रक्षति विश्वमेजत् इत्येतेनानुवाकेन प्रत्यृचम् ७ अतिशिष्टं गोपदे निनयति व्याहृतीभिः ८ अथैनं मातुरुपस्थ आदधाति--सीद त्वं मातुरस्या उपस्थे इति चतसृभिस्सहंसाभिः ९ स्तनमभिमन्त्रयते--यस्ते स्तनश्शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि । यो रत्नधा वसुविद्यस्सुदत्रस्सरस्वति तमिह धातवेकः इति १० धयन्तमनुमन्त्रयते--द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनं धयन्तं सविताऽभिरक्षतु । आवाससः परिधानाद्बृहस्प-तिर्विश्वेदेवा अभिरक्षन्तु पश्चात् इति ११ अथास्योदकुम्भमुच्छिरसि निदधाति--आपस्सुप्तेषु जाग्रत रक्षांसि नीरितो नुदध्वम् इति १२ अथ देवयजनो-ल्लेखनप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जुहोति--हरिं हरन्तमनुयन्ति देवाः इति पुरोऽनुवाक्यामनूच्य मा छिदो मृत्यो मा वधीः इति याज्यया जुहोति १३ अथाज्याहुतीरुपजुहोति--सद्यश्चकमानाय इत्यान्तादनुवाकस्य १४ स्विष्ट-कृत्प्रभृति सिद्धमाधेनुवरप्रदानात् १५ अथानोयुगं रथयुगं वा स्नाप्याच्छा-द्यालंकृत्य अग्रेणाग्निमुद्धृत्य तस्याग्रेणाश्वत्थपर्णेषु हुतशेषं निदधाति--नम आव्याधिनीभ्यः इति १६ अथास्तमित आदित्ये गौरसर्षपान् फलीकरण-मिश्रान् अञ्जलिना जुहोति--कृणुष्व पाजः प्रसितिं न पृथ्वीम् इत्येतेनानुवाकेन प्रत्यृचम् १७ अथौदनम् तिलसक्तुर्भिघृतेनेति समुदायुत्य गोष्ठेऽश्वत्थपर्णेषु हुतशेषं निदधाति--अघोराय महाघोराय नमो नमः इति १८ अथातिशिष्टं सर्वा दिशस्सम्प्रकिरन्ति--आवेशिना व्यश्रुमुखी कुतूहलिन्येकस्तनी जृम्भणी स्तम्भनी मोहनी च । कृष्णा विशाखा विमला ब्रह्मरात्री भ्रातृव्यसङ्घेषु पतन्त्यमोघाः । ताभ्यो वै मातृभ्यो नमो नमः इति १९ स एवमेव फली-करणहोमप्रभृति सायंप्रातर्दशरात्रं करोति २० नानुत्थितायां सूतिकायां भोज्यान्नता २१ दशम्यामुत्थानम् २२ दशम्यां द्वादश्यां वा नामकरणम् २३ प्राजापत्येन सूक्तेन हुत्वा ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयन्नामास्मै दधाति २४ द्व्यक्षरं चतुरक्षरं षडक्षरमष्टाक्षरं वा २५ घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तम् २६ अपि वा यस्मिन् स्वित्यु-पसर्गस्स्यात्तद्धि प्रतिष्ठितमिति विज्ञायते २७ ऋष्यणूकं देवताणूकं वा २८ यथैवैषां पूर्वपुरुषाणां नामानि स्युः २९ अयुगक्षरं कुमार्याः ३० अमुष्मै स्वस्तीति ३१

इति बोधायनीयगृह्यसूत्रे द्वितीयप्रश्ने प्रथमोऽध्यायः

## अथ द्वितीयप्रश्ने द्वितीयोऽध्यायः

चतुर्थे मास्युपनिष्क्रमणम् १ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्तिऋद्धि-मिति वाचयित्वा २ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा स्वस्त्या-त्रेयं होति ३ स्वस्ति नो मिमीतामश्विना भगस्स्वस्ति देव्यदितिरनर्णवः । स्वस्ति पूषा असुरो दधातु नः स्वास्ति द्यावापृथिवी सुकेतुना ४ स्वस्तये वायुमुपब्रवामहै सोमं स्वास्ति भुवनस्य यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आचित्यासो भवन्तु नः ५ विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निस्स्वस्तये । देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ६ स्वस्ति मित्राववरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ७ स्वति पन्थामनुचरेम सूर्याचन्द्रमसाविव । पुनर्ददताऽघ्नता जानता संगमेमहि ८ स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् । असुरघ्नीमिन्द्रसखं समत्सु बृहद्यशो नावमिवारुहेम ९ अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् । प्रयतपाणिश्शरणं प्रपद्य स्वस्ति संबाधेष्वभयं नो अस्तु १० स्वस्ति न इन्द्रो वृद्धश्रवास्स्वस्ति नः पूषा विश्व-वेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिस्स्वस्ति नो बृहस्पतिर्दधातु इत्यष्टाभिर-नुच्छन्दसम् ११ जयप्रभृति सिद्धमाधेनुवरप्रदानात् १२ अथोपनिष्क्रम्य बाह्यानि चित्रियाण्यभ्यर्च्य त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा प्रदक्षिणीकृत्य स्वान् गृहानानयति १३

इति बोधायनीये गृह्यसूत्रे द्वितीयप्रश्ने द्वितीयोऽध्यायः

## अथ द्वितीयप्रश्ने तृतीयोऽध्यायः

षष्ठे मास्यन्नप्राशनम् १ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा २ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा अन्नसूक्तेन जु-होति-अहमस्मि प्रथमजा ऋतस्य इत्यष्टाभिरनुच्छन्दसम् ३ जयप्रभृति सिद्धमाधेनुवरप्रदानात् ४ अथौदनं दध्ना मधुना घृतेनाद्भिरिति समुदायुत्य हिरण्येनौषधस्य कुमारं प्राशयति--या जाता ओषधयः इति षड्भिरनु-च्छन्दसम् ५ भूर्भुवस्सुवरपां त्वौषधीनां रसं प्राशयामि शिवास्त आप ओषधयस्सन्त्वसौ इति सर्वास्वनुषजति ६

इति बोधायनीयगृह्यसूत्रे द्वितीयप्रश्ने तृतीयोऽध्यायः

## अथ द्वितीयप्रश्ने चतुर्थोध्यायः

संवत्सरे चूडाकर्म त्रिषु वा संवत्सरेषु १ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा २ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति--ये केशिनः । इति पुरोनुवाक्यामनूच्य नतें ब्रह्मणः । इति याज्यया जुहोति ३ अथाज्याहुतीरुपजुहोति--आरोह प्रोष्ठं विषहस्व शत्रून् । इत्यान्तादनुवाकस्य ४ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ५ अथाग्रेणाग्निमुदुम्बरपर्णेषु हुतशेषं निदधाति--नमो हिरण्यबाहवे इति ६ अपरेणाग्निमुभयीरपस्संनिषिञ्चति ७ उष्णासु शीता आनयति--उष्णेन वायवुदकेनेह्यदितिः केशान् वपतु । इति ८ ताभिरस्य शिर उनत्ति--आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे । इति ९ ऊर्ध्वाग्रं बर्हिरनूछ्रयति--ओषधे त्रायस्वैनम् । इति १० क्षुरमभिमन्त्रयते--ज्योक्च सूर्यं दृशे इति ११ अथैनं निर्यञ्चं निदधाति--स्वधिते मैनं हिंसीः इति १२ अथास्य केशान्वपति--येनावपत्सविता क्षूरेण । इति १३ प्रवपतोऽनुमन्त्रयते--मा ते केशाननुगाद्वर्च एतत् इति १४ अथैनान् समुच्चित्य दर्भस्तम्बे निदधाति --तेभ्यो निधानं बहुधा व्यैच्छन् । इति १५ अथैनमुष्णोदकेनाप्लावयति --बलं ते बाहुवोस्सविता दधातु इति १६ अथैनमेकशिखस्त्रिशिखः पञ्चशिखो वा यथैवैषां कुलधर्मस्स्यात् १७ यथर्षि शिखां निदधातीत्येके १८ अथैनं स्नाप्याच्छाद्यालङ्कृत्य त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयति १९ इति प्रहुतो व्याख्यातः २०

इति बोधायनीयगृह्यसूत्रे द्वितीयप्रश्ने चतुर्थोऽध्यायः

## अथ द्वितीयप्रश्ने पञ्चमोऽध्यायः

अथाहुतः १ गर्भाष्टमेषु ब्राह्मणमुपनयीत गर्भैकादशेषु राजन्यं गभद्वादशेषु वैश्यम् २ आषोडशात् ब्राह्मणस्यानात्यय इति ३ एवमेवेतरयोः द्वाविंशतिश्च चतुर्विंशतिश्च ४ अथापि काम्यानि भवन्ति--सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकामं त्रयोदशे मेधाकामं चतुर्दशे पुष्टिकामं पञ्चदशे भ्रातृव्यवन्तं षोडशे सर्वकाममिति ५ वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यं वर्षासु रथकारमिति । सर्वानेव वा वसन्ते ६ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा कुमारं भोजयित्वा तस्य चौलवत्तूष्णीं

केशानोष्य स्नातं शुचिवाससं बद्धशिखं यज्ञोपवीतं प्रतिमुञ्चन् वाचयति-- यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । ग्रायुष्यमग्रियं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः इति ७ यज्ञोपवीतिनमप ग्राचमय्याथ देवयजनमुदानयति ८ ग्रथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा पाला- शीं समिधमाज्येनाक्त्वाऽभ्याधापयन् वाचयति ग्रायुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृष्ठो ग्रग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमं स्वाहा इति ९ ग्रथैनमुत्थाप्योत्तरेणाग्निं दक्षिणेन पदा ग्रश्मानमास्थापयति- ग्रातिष्ठेममश्मानमश्मेव त्वं स्थिरो भव । ग्रभितिष्ठ पृतन्यतस्सहस्व पृतना- यतः इति १० ग्रथैनं तिष्ये वासस्सद्यः कृत्तोतं परिधापयन् वाचयति या ग्रकृन्तन्नवयन् या ग्रतन्वत याश्च देवीरन्तानभितोऽददन्त । तास्त्वदेवीर्जरसा संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः इति ११ परिहितमनुमन्त्रयते परिधत्त धत्त वाससैनं शतायुषं कृणुहि दीर्घमायुः । बृहस्पतिः प्रायच्छद्वास एतत्सो- माय राज्ञे परिधातवा उ । जरां गच्छासी परिधत्स्व वासो भवा कृष्टीना- मभिशस्तिपावा । शतं च जीव शरदस्सुवर्चा रायश्च पोषमुप संव्ययस्व । परीदं वासो ग्रधि धास्खस्तयेऽभूरापीनामभिशस्तिपावा । शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन् इति १२ ग्रथैनं मौञ्जीं मेखलां त्रिवृतां त्रिः प्रदक्षिणं परिव्ययन् वाचयतिमौञ्जी ब्राह्मणस्य । ज्यामौर्वी राजन्यस्य । ग्रावीसूत्रं वैश्यस्य । सर्वेषामेव वा मौञ्जीम् । इयं दुरुक्तात्परिबाधमाना शर्म वरूथं पुनती न ग्रागात् । प्राणापानाभ्यां वलमाभरन्ती प्रिया देवानां सुभगा मेखलेयम् इति १३ परिवीतामनुमन्त्रयते क्षितस्य गोप्त्री तपसः परस्पीघ्नती रक्षस्सहमाना ग्ररातीः । सा नस्समन्तमनु परीहि भद्रया भर्तारस्ते मेखले मा रिषाम इति १४ ग्रन्थिं करोति प्राणानां ग्रन्थिरसि स मा बिस्त्रंसः इति नाभिदेशे १५ ग्रथास्मा ग्रजिनं प्रतिमुञ्चन् वाचयति कृष्णाजिनं ब्राह्मणस्य । रौरवं राजन्यस्य । वस्ताजिनं वैश्यस्य । सर्वेषां वा कृष्णाजिनम् । मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम् । ग्रनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम् इति १६ ग्रथास्मै दण्डं प्रयच्छति पालाशं बैल्वं वा ब्राह्मणस्य । नैयग्रोधं स्कन्धजमवाङ्ग्रं रौहीतकं वा राजन्यस्य । वादरमौदुम्बरं वा वैश्यस्य । सर्वेषां वा वार्क्षम् १७ सोमोसि सोमपं मा कुरु इति पालाशम् १८ ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा इति बैल्वम् १९ ग्रोजोस्योजो मयि धेहि इति नैयग्रोधम् २० बलमसि बलं मयि

धेहि इति रौहीतकम् २१ पुष्टिरसि पुष्टिं मयि धेहि इति बादरम् २२ ऊर्गस्यूर्जं मयि धेहि इत्यौदुम्बरम् २३ अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि । द्रविणं सवर्चसम् इति वार्क्षम् २४ कोनामास्यसौ नामास्मि इति शाठ्यायनकम् २५ अथैनं दक्षिणे हस्ते गृह्णाति यस्मिन् भूतं च भव्यं च सर्वे लोकास्समाहिताः । तेन गृह्णामि त्वामहं मह्यं गृह्णामि त्वामहं प्रजापतिना त्वा मह्यं गृह्णाम्यसौ इति २६ अथैनं देवताभ्यः परिददाति देवेभ्यस्त्वा परिददामि विश्वदेवेभ्यस्त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वाभ्यस्त्वा देवताभ्यः परिददाम्यसौ इति २७ अथैनमुपनयति देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयेऽसौ इति २८ अथ कुमारः पक्वाज्जुहोति--यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्योऽध्यमृतात्स-म्बभूव । समेन्द्रो मेधया स्पृणोत्वमृतस्य देव धारणो भूयासं स्वाहा इति २९ अथाज्याहुतीरुपजुहोति क्षेत्रियै त्वा निर्ऋत्यै त्वा इति षड्भिरनुच्छन्दसम् ६० एवमेव ब्रह्मसूक्तेन हुत्वा ब्रह्मजज्ञानम् इति षड्भिः ३१ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ३२ अग्रेणाग्निं पलाशपर्णेषु हुतशेषं निदधाति नमो अस्तु नीलग्नी वाय इति ३३ अत्र सावित्रिव्रतम् ३४ अथ पालाशीश्चतस्रस्समिध आर्द्रास्सपलाशा-स्सप्रारोहाः प्रादेशमात्रीरपरिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति याज्ञिकानां वा वृक्षाणां अन्यतमस्य ३५ अग्ने व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा ३६ वायो व्रतपत आदित्य व्रतमते व्रतानां व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा इति ३७ अपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन् प्राङ्मुख आचार्य उपविशति--राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् इति ३८ तस्याग्रेण कुमारो दर्भेषु प्रत्यङ्मुख उपविश्य पादावन्वारभ्याहसावित्रीं भो अनुब्रूहि इति ३९ तस्मा अन्वाहोमिति प्रतिपद्यते तत्सवितुर्वरेण्यम् इत्येतां पच्छोऽर्धर्चशस्ततस्समस्तां व्याहृतीर्वि-हृताः पादादिष्वन्तेषु वा तथाऽर्धर्चयोरुत्तमां कृत्स्नायामिति ४० अथ कुमारः पक्वादुपादाय प्राश्नाति शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसे मेधया पिहितः । श्रुतं मे गोपाय इति ४१ अथ हैके प्रक्सावित्र्याः प्राश्नाति ब्रह्म वा अन्नमिति वदन्तः ४२ तदु तथा न कुर्यान्नानुक्तायां सावित्र्यां प्राश्नीयादित्यनूक्तायामनूक्तायां सावित्र्यां प्राश्नीयादिति शाठ्यायनकम् ४३ अथाप उपस्पृश्य ज्योतिष्म-

त्याऽऽदित्यमुपतिष्ठते उद्वयं तमसस्परि इति ४४ अथैनं संशास्ति ब्रह्म-चार्यस्यपोशान कर्म कुरु मा दिवा सुषुप्थाः समिध आधेहि भैक्षाचर्यं चर सदाऽरण्यात् समिध आहरोदकुम्भं चाहराचार्याधीनो भव वेदमधीष्व इति ४५ स एवमेवैतत् सर्वं करोति ४६ अथास्मा अरिक्तं पात्रं प्रयच्छन्नाह मातरमेवाग्रे भिक्षस्व इति ४७ स मातरमेवाग्रे भिक्षेत ४८ भवति भिक्षां देहीति ब्राह्मणो भिक्षेत ४९ भिक्षां भवति देहीति राजन्यः ५० देहि भिक्षां भवतीति वैश्यः ५१ तत्समाहृत्याचार्याय प्राह भैक्षमिदम् इति ५२ तत् सुभैक्षम् इतीतरः प्रतिगृह्णाति ५३ उत्तरेणाग्निं द्वे स्त्रीप्रतिकृती कृत्य गन्धैर्माल्येन चासङ्कृत्य त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा श्रद्धामेधे प्रियेतामिति ५४ त्र्यहमेतमग्निं धारयन्ति क्षारलवणवर्जमधश्शय्या च ५५ एतस्मिन्नेवाग्नौ व्याहृतीभिस्सायंप्रातस्समिधोऽभ्यादध्यात् ५६ एवमन्यस्मिन्नपि सदा ५७ अथैनं प्रदक्षिणमग्निं परिसमूहति जुषस्व नस्समिधमग्ने अद्यशोचा बृहद्यजनं धूममृणवन् । उदश्पृश दिव्यं सा नु स्तूपैस्सं रश्मिभिस्ततनस्सूर्यस्य इति ५८ अथैनं प्रदक्षिणमग्निं परिषिञ्चति अदितेऽनुमन्यस्व इति दक्षिणतः प्राचीनम् । अनुमतेऽनुमन्मस्व इति पश्चादुदीचीनम् । सरस्वतेऽनुमन्यस्व इत्युत्तरतः प्राचीनम् । देवसवितः प्रसुव इति समन्तं प्रदक्षिणम् । समन्तमेव वा तूष्णीम् ५९ तस्मिन् व्याहृतीभिस्सायं प्रातस्समिधोऽभ्यादधाति भूस्स्वाहा भुवस्वाहा सुवस्स्वाहा भूर्भुवस्सुवस्स्वाहा इति ६० तथैव परिसमूह्य तथैव परिषिञ्चति अन्वमंस्थाः प्रासावीः इति मन्वान्तान् सन्नमयति ६१ अथैन-मुपतिष्ठते यत्ते अग्ने तेजः इति तिसृभिः मयि मेधां मयि प्रजामिति तिसृभिः षोढा विहितो वै पुरुषः । इत्येतस्माद्ब्राह्मणात् ६२ अथ तिसृषु व्युष्टा-स्वेतमग्निमादाय तां दिशं यन्ति यत्रास्य पलाशस्स्पष्टो भवति ६३ तं प्रदक्षिणं परिसमूहति सुश्रवस्सुश्रवसं मा कुरु यथा त्वं सुश्रवस्सुश्रवा अस्येवमहं सुश्रवस्सुश्रवा भूयासं यथा त्वं सुश्रवस्सुश्रवो देवानां निधिगोपोस्येवमहं ब्राह्मणानां ब्रह्मणो निधिगोपो भूयासमिति ६४ तस्याग्रेण उत्तरेण वाऽग्नि-मुपसमाधाय सम्परिस्तीर्याऽथाव्रत्यप्रायश्चित्ते जुहोति यन्म आत्मनो मिन्दाऽभूत् पुनरग्निश्चक्षुरदात् । इति द्वाभ्याम् ६५ अथ पालाशीश्चतस्रस्समिध आर्द्रास्सपलाशाः सप्रारोहाः प्रादेशमात्रीरपरिशुष्काग्रा घृतान्वक्ता अभ्याधा-पयन्वाचयति याज्ञिकानां वा वृक्षाणामन्यतमस्य ६६ अग्ने व्रतपते सावित्रं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा ६७ वायो व्रतपत आदित्य व्रतपते

व्रतानां व्रतपते सावित्रं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा इति ६८ तथैव सुश्रवसमभ्यर्च्य त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा ६९ अत्रैके दण्डमजिनं मेखलां वासश्चातिसृजन्ति ७० अन्यान्यादायास्य वास आदत्ते यस्य ते प्रथमबास्यं हरामस्तं त्वा विश्वे अनुमदनतु देवाः । तं त्वा भ्रातरस्सुहृदो वर्धमानमनुजायन्तां बहवस्सुजातमिति ७१ अथाधोनाभ्युपरि जान्वाच्छाद्य दण्डमजिनं मेखलां च धारयन् श्राद्धसूतकमैथुनमधुमांसानि वर्जयन् भैक्षाहा-रोऽधश्शायी चाचार्यस्य गृहानेतीति विज्ञायते आचार्यो वै ब्रह्मेति ७२

इति बोधायनीयगृह्यसूत्रे द्वितीयप्रश्ने पञ्चमोऽध्यायः

## अथ द्वितीयप्रश्ने षष्ठोऽध्यायः

वेदमधीत्य स्नात्यन्नित्युक्तं समावर्तनम् १ मन्त्रब्राह्मणं वेद इत्याचक्षते २ मन्त्रब्राह्मणयोर्वेदनामधेयम् ३ मन्त्रब्राह्मणे यज्ञस्य प्रमाणम् ४ मन्त्रब्राह्मणे अधीत्य चीर्णेषु वा व्रतेषु ५ एतावदेव नाना ६ अथ देवयजनोल्लेखन-प्रभृत्याऽग्निमुखात् कृत्वा पालाशीं समिधमाज्येनाक्त्वा मध्यंदिनेऽभ्यादधाति ७ तत्पुरस्ताद्व्याख्यातम् ८ अथ केशश्मश्रुलोमनखावापनेनैव प्रतिपद्यते सिद्धमाच्छत्रादानात्कृत्वा पक्वाज्जुहोति आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः । वासांसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रिय-मावह । लोमशां पशुभिस्सह स्वाहा इति ९ अथाज्याहुतीरुपजुहोति आमायन्तु ब्रह्मचारिणस्स्वाहा । यशोजनेऽसानि स्वाहा । श्रेयान् वस्य-सोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा इति १० स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ११ अथाग्रेणाग्निं बिल्वशाखायां हुतशेषं निदधाति तस्मिन् सहस्रशाखे । निभगाहं त्वयि मृजे स्वाहा इति १२ अथ पक्वादुपादाय प्राश्नति यथाऽऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः स्त्र । धातरायन्तु सर्वतस्स्वाहा इति १३ प्राश्याप आचम्योरः प्रत्यात्मानं प्रत्यभिमृशते प्रतिवेशोसि प्र मा पाहि प्र मा पद्यस्व इति १४ सोऽत्रैवास्ते आनक्षत्राणामुदयात् १५ अथोदितेषु नक्षत्रेषूपनिष्क्रम्य दिश उपतिष्ठत इति सिद्धमत ऊर्ध्वम् १६ यस्मिन्नग्नावुप-नयति तस्मिन् ब्रह्मचर्यं तस्मिन् व्रतचर्यं तस्मिन् समावर्तनं तस्मित् पाणिग्रहणं तस्मिन् गृह्यानि कर्माणि क्रियन्ते १७ तस्मिन् काम्यानि तस्मिन् प्रजासंस्कारा इत्येके १८ स एष उपनयनप्रभृति व्याहृतीभिस्समिद्भिर्हूयत आ समावर्तनात्

१९ समावर्तनप्रभृत्याज्येन व्याहृतीभिर्हूयत आ पाणिग्रहणात् २० पाणि-ग्रहणप्रभृति व्रीहिभिर्यवैर्वा हस्तेनैते आहुतीर्जुहोति अग्नये स्वाहा प्रजापतये स्वाहा इति सायम् । सूर्याय स्वाहा प्रजापतये स्वाहा प्रातरपि २१ अग्निहोत्रहविषामन्यतमेन जुहुयात् २२ पर्वणि पर्वणि चाग्नेयस्थालीपाकः २३ स एष आघारवान् स्यादाग्निहोत्रिको वाऽप्यापूर्विको वा २४ तेन सर्पिष्कता विद्यावन्तं ब्राह्मणं भोजयेत् २५ योऽस्यापचिततमस्तस्मा ऋषभं दद्यादित्येके २६ अथास्यानुगतस्य या प्रकृतिस्तत आहरणम् २७ उपवासोऽनुगतेऽन्यतरस्य भार्यायाः पत्युर्वा २८ अपि वैकां जुहुयात्-- अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयसा मनसा धृतोऽयसा हव्यमूहिषेऽया नो धेहि भेषजं स्वाहा इति २९ आहुतो व्याख्यातः ३०

इति बोधायनीयगृह्यसूत्रे द्वितीयप्रश्ने षष्ठोऽध्यायः

## अथ द्वितीयप्रश्ने सप्तमोऽध्यायः

अथ शूलगवस्संवत्सरे संवत्सरे मार्गशीर्ष्यां पौर्णमास्यां क्रियेत १ अपि वाऽऽर्द्रायाम् २ गोषु वोपतप्तासु गोषु गुप्तासु ३ अरण्येऽग्निमुपसमाधाय सम्परिस्तीर्या प्रणीताभ्यः कृत्वा बर्हिरादाय गामुपाकरोति ईशानाय त्वा जुष्टामुपाकरोमि इति ४ तूष्णीमित्येके ५ अथैनामद्भिः प्रोक्षति ईशानाय त्वा जुष्टां प्रोक्षामि इति ६ तूष्णीमित्येके ७ तामत्रैव प्रतीचीनशिरसी-मुदीचीनपदीं संज्ञपयन्ति ८ तस्यै संज्ञप्ताया अद्भिरभिषेकम् ९ प्राणाना-प्याययति तूष्णीम् १० तूष्णीं वपामुत्स्विद्य हृदयमुद्धरति ११ प्रज्ञातानि चावदानानि १२ तान्येष्वेव शूलेषूपनीक्ष्य तस्मिन्नेवाग्नौ श्रपयन्ति १३ अथैतानि शूलेभ्य उपनीक्ष्य पुनः कुम्भ्यां श्रपयन्ति १४ अथैतान्यभि-घारितान्युद्वास्य प्रतिष्ठितमभिघारयति १५ परिधानप्रभृत्याऽग्निमुखात् कृत्वा दैवतमावाहयति आ त्वा वहन्तु हरयस्सचेतसश्श्वेतैरश्वैस्सहकेतुमद्भिः । वाताजिरैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोमिति १६ अथ स्रुवेणोपस्तीर्णामभिघारितां वपां जुहोति सहस्राणि सहस्रशः इति पुरोनुवाक्यामनूच्य ईशानं त्वा भुवनानामभिश्रियमिति याज्यया जुहोति १७ अत्रैतान्यवदानानीडासूने प्रच्छौदनं मासं यूषमित्याज्येन समुदायुत्य मेक्षणे-नोपघातं पूर्वार्धे जुहोति भवाय देवाय स्वाहा शर्वाय देवाय स्वाहा ईशानाय देवाय स्वाहा पशुपतये देवाय स्वाहा रुद्राय देवाय स्वाहा उग्राय देवाय

स्वाहा मीमाय देवाय स्वाहा महते देवाय स्वाहा इति १८ अथ मध्ये जुहोति--भवस्य देवस्य पत्नयै स्वाहा शर्वस्य देवस्य पत्नयै स्वाहा ईशानस्य देवस्य पत्नयै स्वाहा पशुपतेर्देवस्य पत्नयै स्वाहा रुद्रस्य देवस्य पत्नयै स्वाहा उग्रस्य देवस्य पत्नयै स्वाहा महतो देवस्य पत्नयै स्वाहा इति १९ अथापरार्धे जुहोति भवस्य देवस्य सुताय स्वाहा शर्वस्य देवस्य सुताय स्वाहा ईशानस्य देवस्य सुताय स्वाहा पशुपतेर्देवस्य सुताय स्वाहा रुद्रस्य देवस्य सुताय स्वाहा उग्रस्य देवस्य सुताय स्वाहा मीमस्य देवस्य सुताय स्वाहा महतो देवस्य सुताय स्वाहा इति १९ अथाज्याहुतीरुपजुहोति--नमस्ते रुद्र मन्यवे इत्याऽन्तादनुवाकस्य । स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् २२ अथाग्रेणाग्निमर्कपर्णेषु हुतशेषं निदधाति--यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय नमो अस्तु इति २३ स्थालीसङ्क्षालनमाज्यशेषमुदकशेषं च पात्र्यां समानीय वेतसशाखयावोक्षन् सर्वतः त्रिः प्रदक्षिणं गाः पर्येति--आ गावो अग्मन्नुत भद्रमक्रन् इत्येतेन सूक्तेन २४ महत्स्वस्त्ययनमित्याचक्षते २५ अथ यदि गां न लभते मेषमजं वाऽऽलभते २६ ईशानाय स्थालीपाकं वा श्रपयन्ति तस्मादेतत्सर्वं करोति यद्वा कार्यम् २७ शूलगवो व्याख्यातः २८ एवमेवाष्टम्यां प्रदोषे क्रियेतै-तावदेव नाना २९ नात्रोपाकरणं पशोः ३०

इति बोधायनीयगृह्यसूत्रे द्वितीयप्रश्ने सप्तमोऽध्यायः

## अथ द्वितीयप्रश्ने अष्टमोऽध्यायः

अथ बलिहरणम् १ सायं प्रातर्यदशनीयस्य क्रियेतौपासवे पचवे वा होमः २ एतावदेव नाना ३ क्षारलवणावरान्नसंसृष्टस्य तु होमं परिचक्षते ४ काममितरेष्वायतनेषु ५ अथ यद्येतदेव स्यादुत्तरतो भस्ममिश्रानङ्गारान्निरूह्य तेषु जुहुयात् ६ सर्वेष्वायतनेषु पाणिना परिसमूह्योभयतः परिषेकं निदध्यात् ७ देशाभ्यासे मन्त्राभ्यासः कामं समानस्थानेषु ८ अवग्राहशो हस्तेन होमः--अग्नये स्वाहा सोमाय स्वाहा ध्रुवाय स्वाहा ध्रुवाय भूमाय स्वाहा ध्रुवक्षितये स्वाहा अच्युतक्षितये स्वाहा ईशानाय स्वाहा जयन्ताय स्वाहा धर्मरुचये स्वाहा धन्वन्तरये स्वाहा विद्यायै स्वाहा अम्बिकायै स्वाहा हरये स्वाहा गणेभ्यस्स्वाहा गणपतिभ्यस्स्वाहा परिषद्भ्यस्स्वाहा विश्वेभ्यो देवेभ्यस्स्वाहा साध्येभ्यो देवेभ्यस्स्वाहाः सर्वेभ्यो देवेभ्यस्स्वाहा सर्वाभ्यो देवताभ्यस्स्वाहा

भूस्स्वाहा भुवस्स्वाहा सुवस्स्वाहा भूर्भुवस्सुवस्स्वाहा ९ अग्नये स्विष्टकृते स्वाहा इत्युत्तरार्धपूर्वार्धे १० अपरेणाग्निं--धर्माय स्वाहा अधर्माय स्वाहा इति ११ अग्रेणाग्निं--कद्रुवै नाकमात्रे स्वाहा सर्पेभ्यस्स्वाहा इति १२ अब्भ्रिरयावकाशे--अवलायै देव्यै स्वाहा वास्तुपाल्यै सगणायै स्वाहा इति १३ अब्भ्रिणदेशे--अद्भ्यस्स्वाहा वरुणाय स्वाहा इति १४ स्थाल्या--प्रजापतये स्वाहा परमेष्ठिने स्वाहा इति १५ देवताऽवकाशे--ऋषभाय स्वाहा रुद्राय स्वाहा रुद्राण्यै स्वाहा इति १६ मध्येऽगारस्य--ओषधिवनस्पतिभ्य-स्स्वाहा रक्षोदेवजनेभ्यस्स्वाहा इति १७ उच्छिरसि--कामाय स्वाहा भगाय स्वाहा श्रियै स्वाहा विष्णवे स्वाहा इति १८ स्थूणादेशे गृहाय स्वाहा गृहराजाय स्वाहा इति १९ धनधान्याकाशे धनधन्याभ्यां स्वाहा वैश्रवणाय स्वाहा इति २० गोष्ठे वा पल्वले वा श्रियै स्वाहा पुष्टयै स्वाहा इति २१ उलूखलमुसलावकाशे उलूखलमुसलाभ्यां स्वाहा इति २२ दृषदुपलाव-काशे दृषदुपलाभ्यां स्वाहा इति २३ समूहन्यवकाशे समूहन्यै देव्यै स्वाहा इति २४ उत्तरपूर्वदेशेऽगारस्य गृह्याभ्यस्स्वाहा अवसानेभ्यस्स्वाहा अवसा-नपतिभ्यस्स्वाहा सर्पदेवजनेभ्यस्स्वाहा सर्वभूतेभ्यस्स्वाहा इति २५ द्वारमध्ये अन्तरिक्षाय स्वाहा अवान्तरिक्षाय स्वाहा इति २६ पार्श्वयोः धात्रे स्वाहा विधात्रे स्वाहा इति २७ उपपार्श्वयोः भूत्यै स्वाहा प्रभूत्यै स्वाहा इति २८ संवरणदेशे यदेजति जगति यच्च चेष्टति नाम्नो भागोऽयं नाम्ने स्वाहा इति २९ अथोपनिष्क्रम्य ज्येष्ठावकाशे ज्येष्ठाभ्यां स्वाहा करस्करावकाशे करस्कराभ्यां स्वाहा इति ३० अनसि वा रथे वा श्रियै स्वाहा विष्णवे स्वाहा इति ३१ गोष्ठे रुद्राय स्वाहा पशुभ्यस्स्वाहा पशुपतये स्वाहा इति ३२ वस्तुमध्ये वास्तोष्पतये स्वाहा पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यस्स्वाहा अद्भ्यस्स्वाहा ओषधीभ्यस्स्वाहा वनस्पतिभ्यस्स्वाहा चराचरेभ्यस्स्वाहा परिप्लवेभ्यस्स्वाहा सरीसृपेभ्य-स्स्वाहा देशेभ्यस्स्वाहा कालेभ्यस्स्वाहा लोकेभ्यस्स्वाहा देवेभ्यस्स्वाहा ऋषिभ्यस्स्वाहा स्वसुभ्यस्स्वाहा रुद्रेभ्यस्स्वाहा आदित्येभ्यस्स्वाहा इन्द्राय स्वाहा बृहस्पतये स्वाहा प्रजापतये स्वाहा ब्रह्मणे स्वाहा इति ३३ अथ दक्षिणतः प्राचीनावीती पितृभ्यस्स्वधा नमस्स्वाहा पितामहेभ्यस्स्वधा नम-स्स्वाहा प्रपितामहेभ्यस्स्वधा नमस्स्वाहा इति ३४ अथाप उपस्पृश्योत्तरतो यज्ञोपवीती नमो रुद्राय भगवते स्वाहा इति ३५ अथ दिक्षु प्राच्यै दिशे

स्वाहा दक्षिणायै दिशे स्वाहा प्रतीच्यै दिशे स्वाहा उदीच्यै दिशे स्वाहा ऊर्ध्वायै दिशे स्वाहा अधरायै दिशे स्वाहा इति ३६ अथावान्तरदिक्षु यमाय स्वाहा निर्ऋत्यै स्वाहा रक्षोभ्यस्स्वाहा ईशानाय स्वाहा इति ३७ अथाकाश उत्क्षिपति ये भूताः प्रचरन्ति दिवा वलिमिच्छन्तो वितुदस्य प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा इति दिवा ३७ ये भूताः प्रचरन्ति नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा इति नक्तम् ३९ संक्षालनं प्रागुदीच्यां दिशि निनयति नमो रुद्राय भौमाय स्वाहा इति ४०

इति बोधायनीये गृह्यसूत्रे द्वितीयप्रश्ने अष्टमोऽध्यायः

अथ द्वितीयप्रश्ने नवमोऽध्यायः

अथ वैश्वदेवं हुत्वाऽतिथिमाकाङ्क्षेदागोर्दोहकालम् १ अग्रं वोद्धृत्य दद्यात् २ विज्ञायते यज्ञो वा एष पञ्चमो यदतिथिः ३ जघनेन गार्हपत्ययुपवि-श्यौपासनस्य वा अधीहि भो इति गार्हपत्यमुक्त्वा प्राणायामैस्त्रिरायभ्य सावित्रीं सहस्रकृत्वा आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा दशावरम् ४ वेदादयश्छन्दांसि कूश्माण्डानि चाधीयीत अग्निमीळे पुरोहितम् इति ऋग्वेदस्य इषे त्वोर्जे त्वा इति यजुर्वेदस्य अग्न आयाहि वीतये इति सामवेदस्य शं नो देवीरभिष्टये इत्यथर्ववेदस्य अग्निर्मूर्धा भुवः इति छन्दांसि यद्देवा देवहेळनमिति कूश्माण्ड्यः ५ यदधीते स ब्रह्मयज्ञो यज्जुहोति स देवयज्ञो यत्पितृभ्यस्स्वधा करोति स पितृयज्ञो यद्भूतेभ्यो बलिं हरति स भूतयज्ञो यद्ब्राह्मणेभ्योऽन्नं ददाति स मनुष्ययज्ञ इति ६

एते पञ्च महायज्ञाः
सततं सुप्रयुक्ता नयन्ति परमां गतिम् ७

एतेभ्यो यस्य पञ्चभ्यो यज्ञ एकोऽपि हीयते
मनस्वत्याहुतिस्तत्र प्रायश्चित्तं विधीयते ८

द्व्यहं त्र्यहं वाऽपि प्रमादादकृतेषु तु
तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेत् ९

दशाहं द्वादशाहं वा विच्छिन्नेषु तु सर्वशः
चतस्रोऽभ्यावर्तिनीर्हुत्वा कार्यस्तान्तुमतश्चरुः १०

यस्य स्त्री वाऽनुपेतो वा गृहेष्वेतान् बलीन् हरेत्
कूश्माराडयस्तत्र होतव्यो हुत्वा यज्ञसमृद्धये ११

प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते
पञ्चानां महतामेषां स यज्ञैस्सह गच्छति १२

प्रवासे कुरुते चैनान्यदन्नमुपपद्यते
न चेदुत्पद्यते चान्नमद्भिरेनान् समापयेत् १३

अद्भिरेव व्रतं कुर्याद्यथालाभमनुव्रतम्
देवानां देवयज्ञेन द्विजा गच्छन्ति साम्यताम् १४

पितृणां पितृयज्ञेन भूतयज्ञेन भूतिनः
मनोर्मनुष्ययज्ञेन ब्रह्मयज्ञेन ब्रह्मणः १५

एतासां साम्यतां गत्वा देवतानां शतं समाः
आनन्दं ब्रह्म गच्छन्ति ध्रुवं शाश्वतमव्ययमिति १६

अथास्मा अतिथिर्भवति गुरोस्समानवृत्तिर्वैखानसो वा गृहस्थो वानप्रस्थः परिव्राजको गतश्रीस्स्नातको राजा वा धर्मयुक्तः १७ तेषामभ्युत्थायासनं पाद्यमर्हणमर्घ्यं वा प्रयुञ्जीत १८ यास्तत्रौषधयस्सन्ति ता देयाः १९ अन्यां वा प्रक्रियां प्रकुर्वीत २० सर्वेभ्योऽभ्यागतेभ्य आ श्वचाराडालेभ्यस्स्वागतं कार्यम् २१ ओषधिविभागस्तु बिभववता कार्योऽभावे भूमिरुदकं तृणानि कल्याणी वागिति २२ एतानि वै सतोऽगारे न क्षीयन्ते कदाचन इति तानेतान् परं ब्रह्मेत्याचक्षते २३ तेषां ग्रहणे तु द्वादशरात्रमक्षारलवणभोजनमधश्शयनं ब्रह्मचर्यम् । त्रिरात्रोपोषित उत्क्षेपणौ परौ गृह्णीयात् २५ बलिहरणं व्याख्यातम् २६

इति बोधायनीयगृह्यसूत्रे द्वितीयप्रश्ने नवमोऽध्यायः

## अथ द्वितीयप्रश्ने दशमोऽध्यायः

अथ प्रत्यवरोहणम् १ वसन्तादौ मधुश्च माधवश्च इति हुत्वा वासन्तिकैरलङ्कारैरलङ्कृत्य वासन्तिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान् सगणः प्राश्नाति २ अथ ग्रीष्मादौ शुक्रश्च शुचिश्च इति हुत्वा ग्रैष्मिकैरलङ्कारैरलङ्कृत्य ग्रैष्मिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान् सगणः प्राश्नाति ३ अथ वर्षादौ नभश्च नभस्यश्च इति हुत्वा वार्षिकैरलङ्कारैरलङ्कृत्य वार्षिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान् सगणः प्राश्नाति ४ अथ शरदादौ इषश्चोर्जश्च इति हुत्वा शारदिकैरलङ्कारैरलङ्कृत्य शारदिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान् सगणः प्राश्नाति ५ अथ हेमन्तादौ सहश्च सहस्यश्च इति हुत्वा हैमन्तिकैरलङ्कारैरलङ्कृत्य हैमन्तिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान् सगणः प्राश्नाति ६ अथ शिशिरादौ तपश्च तपस्यश्च इति हुत्वा शैशिरिकैरलङ्कारैरलङ्कृत्य शैशिरिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान् प्राश्नाति ७ अथाधिमासे संसर्पोऽस्यंहस्पत्याय त्वा इति हुत्वा चैत्रिकैरलङ्कारैरलङ्कृत्य चैत्रिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान् सगणः प्राश्नाति ८ स एष आघारवान् वा स्यादाग्निहोत्रिको वाऽप्यापूर्विको वा ९ प्रत्यवरोहणं व्याख्यातम् १०

इति बोधायनीये गृह्यसूत्रे द्वितीयप्रश्ने दशमोऽध्यायः

## अथ द्वितीयप्रश्ने एकादशोऽध्यायः

अथाष्टकाहोमः १ तैषे मास्यपरपक्षस्याष्टम्यां क्रियेत २ एवं माघ एवं फाल्गुने यदि विहृतः ३ यद्यु वै समस्त उपरिष्टान्माध्याः पौर्णमास्या आरपक्षस्य सप्तम्याष्टम्यां नवम्यामिति क्रियेतापि वाऽष्टम्यामेव ४ श्वः करिष्यामीति ब्राह्मणान्निमन्त्रयते योनिगोत्रश्रुतवृत्तसम्बन्धानित्येके ५ कामं सम्बन्धानपि श्रुतवृत्तसम्पन्नान् श्रुतवृत्तयोर्हि स्वधा निधीयत इत्युपदिशन्ति ६ तान् श्वोभूते श्मश्रुकर्माभ्यञ्जनस्नानैर्यथोपपादं सम्पूज्य स्वयमाप्लुत्य शुचौ समे देशे देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा बर्हिरादाय गामुपाकरोति-- पितृभ्यस्त्वा पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टामुपाकरोमि इति तूष्णीमित्येके ७ अथैनामद्भिः प्रोक्षति पितृभ्यस्त्वा पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टां प्रोक्षामि इति । तूष्णीमित्येके ८ तामत्रैव प्रतीचीनशिरसीं दक्षिणापदीं संज्ञपन्ति ९ तस्यै संज्ञप्ताया अद्भिरभिषेकम् १० प्राणानाप्याययति तूष्णीम् ११ तूष्णीं वपामुत्खिद्य हृदयमुद्धरति १२ प्रज्ञातानि

चावदानानि १३ तान्येतेष्वेवं शूलेषूपनीद्ध्ये तस्मिन्नेवाग्नौ श्रपयन्ति १४ पृथङ्मांसं चौदनं चापूपांश्च श्रपयन्त्यन्यांश्च भद्दयविशेषांत्सर्वं सिद्धं समानी-यायुग्मान् ब्राह्मणान् सुप्रद्दाळितपाणिपादानप आचमय्य संदर्भोपक्लृप्तेष्वा-सनेषु द्वौ दैवे त्रीन्पित्र्ये एकैकमुभयत्र वा प्राङ्मुखानुपवेशयत्युदङ्मुखान्वा १५ स यदि प्राङ्मुखान् दद्दिणापवर्गः । यद्युदङ्मुखान् प्रागपवर्गः १६ तेषामेवोद-कं निनीय सप्रणवेन द्दणं ग्राहयति १७ अष्टकाश्राद्धे द्दणः क्रियतामित्यों तथेति प्रतिवचनम् १८ प्राप्नोतु भवान् प्राप्नोतु भवान् इति १९ प्राप्नवानि प्राप्नवानि इतीतरे प्रत्याहुः २० अथैतान् तिलमिश्रा अपः प्रतिग्राहयति अमुष्मै स्वधा नमोऽमुष्मै स्वधा नमः इति २१ त्रिस्तिलोदकमेके समामनन्ति पुरोऽन्नं द्विस्तिलोदकम् दद्यात् भुक्तवत्सु च तृतीयमिति २२ अथैनान् वस्त्र-गन्धपुष्पधूपदीपमाल्यैर्यथोपपादं सम्पूज्य पृच्छति उद्ध्रियतामग्नौ च क्रियतां इतीतरे प्रत्याहुः २३ अपि वा अग्नौ करिष्यामि इति कुरुष्व इतीतरे प्रत्याहुः २४ अथाभ्यनुज्ञातः परिधानप्रभृत्याऽग्निमुखात्कृत्वा शृतायां वपायां पञ्च स्त्रुवाहुतीर्जुहोति याः प्राचीस्सम्भवन्त्याय उत्तरतश्च याः । अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधे स्वधा नमस्स्वाहा २५ अन्तर्दधे पर्व-तैरन्तर्मह्या पृथिव्या दिवा । दिग्भिरनन्ताभिरूतिभिरन्तरन्यं पितामहाद्दधे स्वधा नमस्स्वाहा २६ अन्तर्दध ऋतुभिस्सर्वैरहोरात्रैस्ससन्धिकैः । अर्धमा सैश्च मासैश्चान्तरन्यं प्रपितामहाद्दधे स्वधा नमस्स्वाहा २७ यन्मे माता प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः पिता वृङ्क्तां माऽऽभुरन्योऽवपद्यतां स्वधा नमस्स्वाहा २८ यद्वः क्रव्यादङ्गमदहं लोकाननयन् प्रणयन् जातवेदाः । तद्वो अहं पुनरावेशयाम्यरिष्टास्सर्वैरङ्गैस्सम्भवथ पितरस्स्वधा नमस्स्वाहा इति २९ त्रेधा वपां विच्छिद्यौदुम्बर्या दर्व्या जुहोति सो माय पितृमते शुष्मिणे जुहुमो हविः । वाजन्निदं जुषस्व नः स्वजा हव्यं देवेभ्यः पितृभ्यस्स्वधा नमस्स्वाहा ३० अङ्गिरस्वन्तमूतये यमं पितृमन्तमाहुवे । वैवस्वतेदमद्धि नस्स्वजा हव्यं देवेभ्यः पितृभ्यस्स्वधा नमस्स्वाहा ३१ यदग्ने कव्यवाहन पितृन्यद्दि ऋता-वृधः । प्र देवेभ्यो वह हव्यं पितृभ्यश्च स्वधा कव्यं देवेभ्यः पितृभ्यस्स्वधा नमस्स्वाहा इति ३२ अथाष्टकाहोमं जुहोति इयमेव सा या प्रथमा व्यौच्छत् इति पञ्चदश । ईयुष्टे ये पूर्वतरामपश्यन् इत्येकाम् । संवत्सरस्य प्रतिमाण-मित्येकां तास्सप्तदश ३३ अथापूपमष्टधा विच्छिद्य त्रीण्यवदानानि वपायाः कल्पेन हुत्वाऽथेतराणि ब्राह्मणेभ्यो दत्वाऽत्रैतान्यवदानानीडासूने प्रति-

च्छाद्यौदनं मांसं यूषमित्याज्येन समुदायुत्यौदुम्बर्या दर्व्योपघातं दक्षिणार्धे जुहोति पितृभ्यस्स्वधा नमस्स्वाहा । पितामहेभ्यस्स्वधा नमस्स्वाहा । प्रपितामहेभ्यस्स्वधा नमस्स्वाहा । मातृभ्यस्स्वधा नमस्स्वाहा । पितामहीभ्यस्स्वधा नमस्स्वाहा । प्रपितामहीभ्यस्स्वधा नमस्स्वाहा । मातामहेभ्यस्स्वधा नमस्स्वाहा । मातुः पितामहेभ्यस्स्वधा नमस्स्वाहा । मातुः प्रपितामहेभ्यस्स्वधा नमस्स्वाहा । मातामहीभ्यस्स्वधा नमस्स्वाहा । मातुः पितामहीभ्यस्स्वधा नमस्स्वाहा । मातुः प्रपितामहीभ्यस्स्वधा नमस्स्वाहा । आचार्याय स्वधा नमस्स्वाहा । आचार्यपत्नीभ्यस्स्वधा नमस्स्वाहा । गुरुभ्यस्स्वधा नमस्स्वाहा । गुरुपत्नीभ्यस्स्वधा नमस्स्वाहा । सखिभ्यस्स्वधा नमस्स्वाहा । सखिपत्नीभ्यस्स्वधा नमस्स्वाहा । ज्ञातिभ्यस्स्वधा नमस्स्वाहा । ज्ञातिपत्नीभ्यस्स्वधा नमस्स्वाहा । अमात्येभ्यस्स्वधा नमस्स्वाहा । अमात्यपत्नीभ्यस्स्वधा नमस्स्वाहा । सर्वेभ्यस्स्वधा नमस्स्वाहा । सर्वाभ्यस्स्वधा नमस्स्वाहा इति ३४ अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमस्स्वाहा इति दक्षिणार्धपूर्वार्धे ३५ मांसोदनं पात्रेषूद्धृत्य विशेषानुपनिक्षिप्य हुतशेषेन संसृज्य दक्षिणाग्रेषु दर्भेषु सादयित्वा दक्षिणाग्रैः दर्भैः प्रतिच्छाद्याभिमृशति पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहो-म्यक्षितमसि मा पितृणां पितामहानां प्रपितामहानां क्षेष्ठा अमुत्रामुष्मिन् लोके इति ३६ अथैतानि ब्राह्मणेभ्य उपनिक्षिप्य ब्राह्मणानामङ्गुष्ठेनानखेनानुदिश-ति अयुष्मै स्वधा नमोऽमुष्मै स्वधा नमः इति ३७ भुञ्जानान् समीक्षते प्राणे निविष्टोऽमृतं जुहोमि इति पञ्चभिः । ब्राह्मणि म आत्माऽमृतत्वाय इत्यात्मानम् ३८ न चात ऊर्ध्वं निरीक्षते ह्रीका हि पितरः इति विज्ञायते ३९ सर्वैं कामैस्तर्पयन् स्वधायुक्तानि ब्रह्माण्यभिश्रावयन् रक्षोघ्नानि च नैर्ऋृतानि च ४० तृप्तचन्ते तृप्ताः स्थेत्युक्त्वा तृप्ताः स्म इति प्रतिवचनम् ४१ तृप्तानप आचमय्याशयेष्वन्नशेषान् सम्प्रकिरति येऽग्निदग्धा जाता जीवा ये ये त्वदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति ४२ अथैनान् संक्षाळनेन विषिञ्चन्नवकीर्य स्वदितमिति वाचयित्वा दक्षिणाभिराराधयति ४३ सुवर्णहिरण्यप्राणिवस्त्रलोहभूमिभाण्डैर्गवाश्वाजाविकहस्तिदासपुरुष-व्रीहियवमाषतिलदण्डोपानच्छत्रकमण्डलुयानासनशयनोपधानैस्सर्वोपकर-णैर्यथोपपादं सम्पूज्याक्षय्यं वाचयित्वोपसङ्गृह्य स्वधां वाचयित्वोत्थाप्य प्र-

साद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्यैतेनैव यथेतमेत्यान्नशेषान्निवेदयते । यथा ब्रूयुस्तथा कुर्यात्तैस्त्वभ्यनुज्ञेयम् ४४ अथाऽभ्यनुज्ञातो दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य तेष्वन्नशेषैः पिण्डं ददाति पितृभ्यस्स्वधा नमः इति चतुर्विंशतिः ४५ अथैनान् मङ्गाळनेन त्रिरपसलैः परिषिञ्चति ऊर्जं वहन्तीरमृतं घृतं मधु पयः कलिलं परिस्नुतं स्वधा स्थ तर्पयत मे पितॄन् तृप्यत तृप्यत तृप्यत इति ४६ जयप्रभृति सिद्धमाधेनुवरप्रदानात् ४७ आचमने चाग्निमुखे चाभि-श्रावणे चोपसङ्ग्रहणे च पश्चाद्धोमेषु च यज्ञोपवीतम् ४८ अथेतरत्र प्राचीना-वीतम् ४९ एवमेव श्वोभूते मांसशेषेणैवमेव श्वोभूते यदि त्र्यहम् ५० अथ यदि गां न लभते मेषमजं वाऽऽलभते ५१ आरण्येन वा मांसेन यथोपपन्नेन ५२ खङ्गमृगमहिषमेषवराहपृषतशशरोहितशार्ङ्गतित्तिरिकपोतकपिञ्जलवा-ध्राणसानामक्षय्यं तिलमधुसंसृष्टम् ५३ तथा मत्स्यस्य शतवलैः क्षीरोदनेन वा सूपोदनेन वा ५४ यद्वा भवत्यामैर्वा मूलफलैः प्रदानमात्रम् ५५ हिरण्येन वा प्रदानमात्रम् ५६ अपि वा गोग्रासमाहरेत् ५७ अपि वाऽनूचानेभ्य उद-कुम्भानाहरेत् ५८ अपि वा श्राद्धमन्त्रानधीयीत ५९ अपि वाऽरण्येऽग्निना कक्षमुपोषेदेषामेकाष्टकेति ६० न त्वेवानष्टकस्स्यात् ६१ सिकता श्राद्धे पवित्रं यद्यध्यवसनाय यद्यन्ववकिरणाय ६२ कुशाः कुतपो दूर्वा इति श्राद्धे पवित्रं यद्यासनाय यदि परिस्तरणाय यद्युत्पवनाय ६३ तिलाश्श्राद्धे पवित्रं यदि दानाय यदि भोजनाय यद्यपां संसर्जनाय । खङ्गः श्राद्धे पवित्र यदि मांसं यद्यस्थिमयं पात्रम् ६५ दौहित्रः श्राद्धे पवित्रं यदि भोक्ता यदि परिवेष्टा यद्यभिश्रावयिता ६६ इत्यष्टकाहोमो व्याख्यातः ६७ एवमेव मासिश्राद्धम-परपक्षस्यान्यतमेऽहनि क्रियेत ६८ एतावदेव नाना नात्राष्टकाहोमो भवति ६९ इत्यष्टका व्याख्याता ७० इतीमास्सप्त पाकयज्ञसंस्था व्याख्याताः ७१

इति बोधायनीयगृह्यसूत्रे द्वितीयप्रश्ने एकादशोऽध्यायः

अथाष्टकाहोमः । अथ प्रत्यवरोहणम् । अथ वैश्वदेवम् । अथ बलिहरणम् । अथ शूलगवः । वेदमधीत्य स्नास्यन्नित्युक्तम् । अथाहुतो गर्भाष्टमेषु । संवत्सरे चूडाकर्म । षष्ठे मास्यन्नप्राशनम् । चतुर्थे मास्युपनिष्क्रमणम् । अथ प्रहुतः ११ अथ प्रहुतः । चतुर्थे मास्युपनिष्क्रमणम् । षष्ठे मास्य-न्नप्राशनम् । संवत्सरे चूडाकर्म । अथाहुतो गर्भाष्टमेषु । वेदमधीत्य स्नास्यन्नित्युक्तम् । अथ शूलगवः । अथ बलिहरणम् । अथ वैश्वदेवम्

। अथ प्रत्यवरोहणम् । अथाष्टकाहोमः ११
इति बोधायानीयगृह्यसूत्रे द्वितीयप्रश्नः

अथ तृतीयप्रश्ने प्रथमोऽध्यायः

हुतानुकृतिरुपाकर्म १ श्रावरयां पौर्णमास्यां क्रियेतापि वा आषाढ्याम् २ समन्वारब्धेष्वन्तेवासिषु ३ अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा चतस्रः प्रधानाहुतीर्जुहोति याज्ञिकीभ्यो देवताभ्यस्स्वाहा सांहितीभ्यो देवताभ्यस्स्वाहा । वरुणीभ्यो देवताभ्यस्स्वाहा । सर्वाभ्यो देवताभ्यस्स्वाहा इति ४ अथ काराडऋषीन् जुहोति प्रनापतये काराडऋषये स्वाहा । सोमाय काराडऋषये स्वाहा । अग्नये काराडऋषये स्वाहा । विश्वेभ्यो देवेभ्यः काराडऋषिभ्यस्स्वाहा । स्वयम्भुवे काराडऋषये स्वाहा इति ५ अथ सदसस्पतिं जुहोति सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषं स्वाहा इति ६ अथ सावित्रीं जुहोति तत्सवितुर्वरेरयमित्येताम् ७ अथ वेदाहुतीजुहोति ऋग्वेदाय स्वाहा । यजुर्वेदाय स्वाहा । सामवेदाय स्वाहा । अथर्ववेदाय स्वाहा । अथर्वाङ्गिरोभ्यस्स्वाहा । इतिहासपुराणेभ्यस्स्वाहा । सर्पदेवजनेभ्यस्स्वाहा । सर्वभूतेभ्यस्स्वाहा इति ८ त्रीनादितोऽनुवाकानधीयीरन् वा सर्वान् ९ जयप्रभृति सिद्धमाधेनुवरप्रदानात् १० अथ ब्राह्मणान् तर्पयत्यपूपैर्धानाभिस्सक्तुभिरोदनेनेति यद्यु वैतेभ्यो भवति ११ ऋषयश्छन्दांस्याचार्या वेदा यज्ञाश्च प्रीयन्तामिति वाचयित्वा १२ त्र्यहमेकाहं वा नाधीयीरन् १३ मासं प्रदोषे नाधीयीरन् १४ नित्यं चैव भुक्त्वोर्ध्वम् १५ मध्यरात्रात् स्तनिते सप्रदोषमहरनध्यायः अस्तमिते । चोदयाद्विद्युति च स्वप्नान्तम् १६ एवमेव काराडोपाकरणकाराडसमापनाभ्याम् १७ स एकः काराडऋषिः १८ तस्य चैवैकस्य काराडस्याद्योऽनुवाकः १९ तस्य चैवैकस्य काराडस्यैतदहरनध्यायः २० एवं काराडविसर्गे । एतावदेव नाना नात्रानुवाकः । पौरोडाशिकं याजमानं होतारो हौत्रं पैतृमेध इति सब्राह्मणानि सानुब्राह्मणानि प्राजापत्यानि २१ आध्वर्यवं ग्रहा दाक्षिणानि समिष्टयजूंष्यवभृथयजूंषि वाजपेयश्शुक्रियाणि सवा इति सब्राह्मणानि सानुब्राह्मणानि सौम्यानि २२ अग्न्याधेयमग्निहोत्रमग्न्युपस्थानमग्निचयनं सावित्रं नाचिकेतं चातुर्होत्रीयं वैश्वसृजारुणा इति सब्राह्मणानि सानुब्राह्मणान्याग्नेयानि २३ राजसूयः पशुबन्धः इष्टयो नक्षत्रेष्टयो दिवश्येनयोऽपाघा-

स्सात्रायणमुपहोमाः कौकिलीसूक्तान्यौपानुवाक्यं याज्याऽश्वमेधः पुरुषमेध-स्सौत्रामण्यच्छिद्राणि पशुहौत्रमुपनिषद इति सब्राह्मणानि सानुब्राह्मणानि वै-श्वदेवानि २४ स्वायम्भुवं काण्डं काठके पठितो विधिः स्वयम्भूश्चात्र दैवतं सर्वभूतपतिश्शुचिरिति २५ अथ कारीरीव्रतं चतूरात्रमक्षारलवणं भूमौ भुञ्जीत पशुवत् २६ एववेम काराव्रतम् २७ सावित्रीभ्यः प्रभृत्यूर्ध्वमोषध्यनुवा-कानधीयीरन्नात्र भूमौ भुञ्जीत न पशुवदिति २८

इति बोधायनीये गृह्यसूत्रे तृतीयप्रश्ने प्रथमोऽध्यायः

## अथ तृतीयप्रश्ने द्वितीयोऽध्यायः

आचार्यप्रसूतः कर्माणि करोतीति विज्ञायते १ आचार्यो वै ब्रह्मेति २ काण्डेकाण्डे च व्रतचर्या ३ अथेमानि ब्राह्मणानि सांवत्सरिकैर्व्रतैरध्येयानि भवन्ति होतारश्शुक्रियाण्युपनिषदो गोदानं सम्मितं इति ४ होतृषु प्रधान-कालेष्वथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा यथोपदेशं प्रधानाहु-तीर्जुहोति याज्ञिकीभ्यो देवताभ्यो होतृभ्यस्स्वाहा सांहितीभ्यो देवताभ्यो होतृभ्यस्स्वाहा वारुणीभ्यो देवताभ्यो होतृभ्यस्स्वाहा सर्वाभ्यो देवताभ्यो होतृभ्यस्स्वाहा इति ५ अथ काण्डऋषिं जुहोति प्रजापतये काण्डऋषये स्वाहा इति ६ अथ सदसस्पतिं जुहोति सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषं स्वाहा इति ७ अथ सावित्रीं जुहोति तत्सवि-तुर्वरेण्यमित्येताम् ८ अथ वेदाहुतीर्जुहोति ऋग्वेदाय स्वाहा यजुर्वेदाय स्वाहा सामवेदाय स्वाहा अथर्ववेदाय स्वाहा अथर्वाङ्गिरोभ्यस्स्वाहा इतिहासपुराणेभ्यस्स्वाहा सर्पदेवजनेभ्यस्स्वाहा सर्वभूतेभ्यस्स्वाहा इति ९ अथ पालाशीश्चतस्रस्समिध आर्द्रास्सपलाशास्सप्ररोहाः प्रादेशमात्रा अपरि-शुष्काग्रा घृतान्वक्ता अभ्याधापयन्वाचयति १० याज्ञीकानां वा वृक्षा-णामन्यतमस्य ११ अग्ने व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा वायो व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा आदित्य व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा व्रतानां व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा इति १२ जयप्रभृति सिद्धमाधेनुवरप्रदानात् १३ संवत्सरमेतद्व्रतं चरेत् संवत्सरं हि व्रतं नातीत्यैतस्मिंस्त्वेवैतत्संवत्सरेऽधीयीत १४ यद्यु वैतस्मिन् संवत्सरे नाधी-यीत यावदध्ययनमेतद्व्रतं चरेत् १५ अथ संवत्सरे पर्यवेतेऽध्यापयते

श्रावयते वा १६ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वाऽथावृत्य-प्रायश्चित्तं जुहोति यन्मे आत्मनो मिन्दाऽभूत् पुनरग्निश्चक्षुरदात् इति द्वाभ्याम् १७ यथोपदेशं प्रधानाहुतीर्जुहोति याज्ञिकीभ्यो देवताभ्यो होतृभ्यस्स्वाहा इति चतसृभिः १८ अथ काण्डऋषिं जुहोति प्रजापतये काण्डऋषये स्वाहा इति १९ अथ सदसस्पतिं जुहोति सदसस्पतिमिति २० अथ सावित्रीं जुहोति तत्सवितुः इत्येताम् २१ अथ वेदाहुतीर्जुहो ऋग्वेदाय स्वाहा यजुर्वेदाय स्वाहा सामवेदाय स्वाहा अथर्ववेदाय स्वाहा अथर्वाङ्गिरोभ्यस्स्वाहा इतिहासपुराणेभ्यस्स्वाहा सर्पदेवजनेभ्यस्स्वाहा सर्वभून्तेभ्यस्स्वाहा इति २२ अथ पालाशीश्चतस्रस्समिध आर्द्रांस्सपलाशास्सप्ररोहाः प्रदेशमात्रा अपरि-शुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति २३ याज्ञिकानां वा वृद्धाणामन्यतमस्य २४ अग्ने व्रतपते होतारं व्रतमचारिषं तदशकं तन्मेराधि स्वाहा वायो व्रतपतेहोतारं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा आदित्य व्रतपते होतारं व्रतमचरिषं तदशकं तन्मे राधि स्वाहा व्रतानां व्रतपते होतारं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा इति जयप्रभृति सिद्धमा धेनुवरप्रदानात् २६ अथ शुक्रियाणि २७ तेषामुक्ता व्रतचर्या २८ अथोपनिषत्सु २९ अथ देव-यजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा यथोपदेशं प्रधानाहुतीर्जुहोति याज्ञिकी-भ्यो देवताभ्य उपनिषद्भ्यस्स्वाहा इति चतस्रः ३० अथ काण्डऋषिं जुहोति विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यस्स्वाहा इति ३१ अथ सदसस्पतिं जुहोति सदसस्पतिमिति ३२ अथ सावित्रीं जुहोति तत्सवितुर्वरेण्यमित्येताम् ३३ अथ वेदाहुतीर्जुहोति ऋग्वेदाय स्वाहा यजुर्वेदाय स्वाहा सामवेदाय स्वाहा अथर्ववेदाय स्वाहा अथर्वाङ्गिरोभ्यस्स्वाहा इतिहासपुराणेभ्यस्स्वाहा सर्पदे-वजनेभ्यस्स्वाहा सर्वभूतेभ्यस्स्वाहा इति ३४ अथ पालाशीश्चतस्र-स्समिध आर्द्रास्सपलाशास्सप्ररोहाः प्रादेशमात्रा अपरिशुष्काग्रा घृतान्वक्ता अभ्या-धापयन् वाचयति ३५ याज्ञिकानां वा वृद्धाणामन्यतमस्य ३६ अग्ने व्रतपत उपनिषदं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा वायो व्रतपत उपनि-षदं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा आदित्य व्रतपत उपनिषदं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा व्रतानां व्रतपत उपनिषदं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा इति ३७ जयप्रभृति सिद्धमाधेनुवरप्रदानात् ३८ संवत्सरमेतद्व्रतं चरेत् संवत्सरं हि व्रतं नातीत्यैत-स्मिंस्त्वेवैतत् संवत्सरेऽधीयीत ३९ यद्यु वैतस्मिन् संवत्सरे

नाधीयीत यावद-ध्ययनमेतद्व्रतं चरेत् ४० अथ संवत्सरे पर्यवेतेऽध्यापयते श्रावयते वा ४१ अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वाऽथाव्र-त्यप्रायश्चित्तं जुहोति यन्म आत्मनः पुनरग्निश्चक्षुरदात् इति द्वाभ्याम् ४२ अथ यथोपदेशं प्रधानाहुतीर्जुहोति याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यस्स्वाहा इति चतस्रः ४३ अथ काण्डऋषिं जुहोति विश्वेभ्यो देवेभ्यः काण्डऋषि-भ्यस्स्वाहा इति ४४ अथ सदसस्पतिं जुहोति सदसस्पतिमिति ४५ अथ सावित्रीं जुहोति तत्सवितुर्वरेण्यमित्येताम् ४६ अथ वेदाहुतीर्जुहोति ऋग्वेदाय स्वाहा यजुर्वेदाय स्वाहा सामवेदाय स्वाहा अथर्ववेदाय स्वाहा अथर्वाङ्गिरोभ्यस्स्वाहा इतिहासपुराणेभ्यस्स्वाहा सर्पदेवजनेभ्यस्स्वाहा सर्व-भूतेभ्यस्स्वाहा इति ४७ अथ पालाशीश्चतस्रस्समिध आर्द्रास्सपलाशा-स्सप्ररोहाः प्रादेशमात्रा अपरिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति ४८ याज्ञिकानां वा वृक्षाणामन्यतमस्य ४९ अग्ने व्रतपत उपनिषदं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा वायो व्रतपत उपनिषदं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा आदित्य व्रतपत उपनिषदं व्रतमाचारिषं तदशकं तन्मे राधि स्वाहा व्रतानां व्रतपत उपनिषदं व्रतमाचारिषं तदशकं तन्मे राधि स्वाहा इति ५० जवप्रभृति सिद्धमा धेनुवरप्रदानात् ५१ षोडशे वर्षे गोदानम् ५२ तस्य चौलवत्तूष्णीं प्रतिपत्तिरवसानं च ५३ एतावदेव नाना ५४ प्रतिपत्तौ सर्वान् केशान् वापयति ५५ गामत्र गुरवे वरं ददाति ५६ अग्निगोदानो वा भवति ५७ तस्य काण्डोपाकरणकाण्डसमापनाभ्यां प्रतिपत्तिरवसानं च ५८ सर्ववेदसम्मितमित्याचक्षते ५९ तस्य द्वादश संवत्सरानेकादश नव सप्त पञ्च त्रीन् संवत्सरान् षण्मासान् चतुरो मासान् द्वौ मासौ मासं वा व्रतं चरेत् ६० तस्योपदेशात् प्रतिपत्तिरवसानं च ६१ तस्य नित्येऽधिब्रह्मचर्यं त्रिषवणम-भिषेक उत्सन्नशय्या आसनं च ६२ यन्मातुर्दुश्चरितं तस्मादेनं त्रायत इत्युप-दिशति मन्त्रब्राह्मणं वेद इत्याचक्षते ६३

इति बोधायनीये गृह्यसूत्रे तृतीयप्रश्ने द्वितीयोऽध्यायः

## अथ तृतीयप्रश्ने तृतीयोऽध्यायः

अष्टाचत्वारिंशत्सम्मितं सम्मितमित्याचक्षते १ तस्य संक्षेपस्संवत्सरः २ तत्संवत्सरमनुव्याख्यास्यामः ३ स यदि ब्रह्मचारी स्यान्नियममेव प्रतिपद्यते ४ अथ यद्यब्रह्मचारी स्यात् केशश्मश्रुलोमनखानि वापयित्वा तीर्थं गत्वा

स्नात्वाऽप आचम्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरिति मार्जयित्वाऽन्तर्जलगतोऽघमर्षणेन षोडश प्राणायामान् धारयित्वोत्तीर्य वासः पीडयित्वाऽन्यत्प्रयतं वासः परिधायाप आचम्य देवयजनमुदानयति ५ अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वाऽथाव्रत्यप्रायश्चित्तं जुहोति नाहं करोमि कामः करोति कामः कर्ता कामः कारयितैतत्ते काम कामाय स्वाहा नाहं करोमि मन्युः करोति मन्युः कर्ता मन्युः कारयितैतत्ते मन्यो मन्यवे स्वाहा इति ६ अथ यथोपदेशं प्रधानाहुतीर्जुहोति याज्ञिकीभ्यो देवताभ्यस्सम्मितीभ्यस्स्वाहा इति चतस्रः ७ अथ काण्डऋषिं जहोति स्वयम्भुवे काण्डऋषये स्वाहा इति ८ अथ सदसस्पतिं जुहोति सदसस्पतिमिति ९ अथ सावित्रीं जुहोति तत्सवितुः इत्येताम् १० अथ वेदाहुतीर्जुहोति ऋग्वेदाय स्वाहा यजुर्वेदाय स्वाहा सामवेदाय स्वाहा अथर्ववेदाय स्वाहा अथर्वाङ्गिरोभ्यस्स्वाहा इतिहासपुराणेभ्यस्स्वाहा सर्पदेवजनेभ्यस्स्वाहा सर्वभूतेभ्यस्स्वाहा इति ११ अथ चतस्र औदुम्बरीस्समिधोऽपरिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति १२ याज्ञिकानां वा वृक्षाणामन्यतमस्य १३ अग्ने व्रतपतेऽष्टाचत्वारिंशत्सम्मितं सम्मितं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा वायो व्रतपतेऽष्टाचत्वारिंशत्सम्मितं सम्मितं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा आदित्य व्रतपतेऽष्टाचत्वारिंशत् सम्मितं सम्मितं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा व्रतानां व्रतपतेऽष्टाचत्वारिंशत्सम्मितं सम्मितं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा इति १४ जयप्रभृति सिद्धमाधेनुवरप्रदानात् १५ एवमेव व्रतान्ते । अधोताभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन् अनग्निपक्ववृत्तिरच्छायोपयोगो नागारं प्रविशेदन्यत्र गुरुनियोगात् १६ भैक्षं वा तत्कालं भुञ्जीत १७ कामं कन्दमूलफलम् १८ अपराह्णे प्रसिद्धमुपस्पृश्य तदपि नोपयुञ्जीत १९ स्त्रीशूद्रपतितरभसरजस्वलाभिश्च न सम्भाषेत २० कामं मातरमुगध्यायिनीं भगिनीं च २१ याश्चान्या एवंयुक्ताः स्त्रियोऽशक्ताः पराक्रमे २२ सप्रणवा व्याहृतयः प्राणायामाग्नीन्धनभैक्षाचरणस्थानासनशयनोपस्पर्शनसुमनसोनिवेदनानि च २३ सर्वास्सम्मितदेवतास्तर्पयति ब्रह्माणं तर्पयामि प्रजापतिं तर्पयामि परमेष्ठिनं तर्पयामि स्थाणुं तर्पयामि शिवं तर्पयामि शर्वं तर्पयामि बहुरूपं तर्पयामि स्कन्दं तर्पयामि इन्द्रं तर्पयामि यमं तर्पयामि ऋषींस्तर्पयामि पितॄंस्तर्पयामि सर्वास्सम्मितदेवतास्तर्पयामि इति प्रसख्याय

समाप्नुयात् २४ गुरोस्समानवृत्तिषु गुरुवृत्तिस्स्यात् २५ प्रेबितस्तदेव प्रति-पद्येतान्यत्र पातकात् २६ एवं द्वादश संवत्सरानेकादश नव सप्त पञ्च त्रीन् संवत्सरान् षण्मासान् चतुरो मासान् द्वौ मासौ मासं वा व्रतं चरेत् २७ अपि वा योऽनूचानश्रोत्रियस्स द्वादशरात्रं पराकं वा व्रतं चरेन्न त्वेवासम्मिती स्यात् २८ स एष चरति दशपूर्वान् दशापरानात्मानं चैकविंशतिं पङ्क्तिं च पुनाति २९ यस्मा उपदिशति यस्यामुपविशति यस्मै ददाति यस्माच्च प्रतिगृह्णाति तत्सर्वं पुनाति ३० व्रतसमाप्तौ वेदसमाप्तौ वा गुरुदक्षिणामाहरेद्धार्मिको यथाशक्ति ३१ विषमगते त्वाचार्य उग्रतश्शूद्रतो वाहरेत् ३२ सर्वतो वोग्रतश्शूद्रतोऽप्याचार्यार्थं स्यादाहरणं धार्म्यमित्येके ३३ एतेन धात्र-न्तरशैवबहुरूपपार्षदस्कन्देन्द्राणां व्रतानां समापनं ब्रह्माभ्यसेदृक्साम यजुर्वा छन्दसामनुसवनं लभेत काममिति ह स्माह बोधायनः ३४

इति बोधायनीयगृह्यसूत्रे तृतीयप्रश्ने तृतीयोऽध्यायः

## अथ तृतीयप्रश्ने चतुर्थोऽध्यायः

अथातोऽवान्तरदीक्षां व्याख्यास्यामः १ उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे केशश्मश्रु वापयित्वा पूर्ववदुपाकृत्य ग्रामात्प्राचीं वोदीचीं वा दिशामुपनिष्क्रम्याखलेऽछदिर्दर्शेऽग्निमुपसमाधाय सम्परिस्तीर्य मदन्तीरधि-श्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्यः आसनानि कल्पयति २ अग्रेणाग्निं प्रवर्ग्याय कल्पयामि । घर्माय कल्पयामि । महावीराय कल्पयामि । संराज्ञे कल्पयामीति ३ दक्षिणेनाग्निं ब्रह्मणे कल्पयामि प्रजापतये कल्पयामीति ४ उत्तरेणाग्निं ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यः कल्पयामि । देवेभ्यो घर्मपेभ्यः कल्पयामीति ५ अथ दक्षिणतः प्राचीनावीती पितृभ्योऽघर्मपेभ्यः कल्पयामि । यमायाङ्गिरस्वते पितृमते कल्पयामीति ६ अथाप उपस्पृश्योत्तरतो यज्ञोपवीती रुद्राय रुद्रहोत्रे कल्पयामीति ७ प्रदक्षिणमग्निं परिषिच्य व्याहृतिभिर्वैकङ्कतीस्समिधोऽभ्या-धाय मदन्तीभिः प्रवर्ग्यदेवताभ्यस्तर्पयति ८ अग्रेणाग्निं प्रवर्ग्यं तर्पयामि । महावीरं तर्पयामि । संराजं तर्पयामीति ९ दक्षिणेनाग्निं ब्रह्माणं तर्पयामि । प्रजापतिं तर्पयामीति १० उत्तरेणाग्निमृषीन् मन्त्रकृतो मन्त्रपतीन् तर्पयामि । देवान् घर्मपांस्तर्पयामीति ११ अथ दक्षिणतः प्राचीनावीती पितॄन् घर्मपात् तर्पयामि । यममङ्गिरस्वन्तं पितृमन्तं तर्पयामीति १२ अथाप उपश्पृश्योत्तरतो

यज्ञोपवीती रुद्रं रुद्रहोतारं तर्पयामीति १३ अथाप उपस्पृश्य सर्वाः प्रवर्ग्यदेवतास्तर्पयामीति १४ अथ चतस्त्र औदुम्बरीस्समिधोऽपरिशुष्काग्रा घृताभ्यक्ता अभ्याधापयन् वाचयति पृथिवी समित् इत्येतैः प्रतिमन्त्रम् १५ अथ देवता उपतिष्ठते अग्ने व्रतपते शुक्रियं व्रतं रिमिष्यामि तच्छकेयं तन्मे राध्यताम् । वायो व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । आदित्य व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । व्रतानां व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतामिति १६ अथैतेषा-मनुवाकानां प्रभृति वाचयति प्रथमोत्तमयोर्वा १७ अथैनं संशास्ति समील्य वाचं यच्छे इति १८ अथास्याहतेन वाससा त्रिः प्रदक्षिणं समुखं शिरो वेष्टयति चितस्स्थ परिचितः । स्वाहा मरुद्भिः परिश्रियस्व इति १९ प्रदक्षिणमग्निं परिषिच्य व्याहृतिभिर्वैकङ्कतीस्समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवता-भ्यस्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वाऽथा स्तमित आदित्ये ग्राममायान्ति २० वाग्यतस्तिष्ठेदेतां रात्रिमुपविशेत् संवेशयेद्वा २१ अथ प्रातरुदित आदित्ये ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्याखलेऽछदिर्दर्शेऽग्निमुपसमाधाय सम्परिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रव-र्ग्यदेवताभ्य आसनानि कल्पयित्वा वयस्सुपर्णाः इति वासो विमुच्याथास्य षट्तयमभिनिर्दशयति अग्निमप आदित्यं गां ब्राह्मणं हिरण्यमिति २२ त्री-नादितो दर्शयित्वा यथोपपादमितराणि दर्शयित्वा प्रदक्षिणमग्निं परिषिच्य व्याहृतिभिर्वैकङ्कतीस्समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवताभ्यस्तर्पयि-त्वोत्तमेनानुवाकेन शान्तिं कृत्वाऽथास्य व्रतचर्यामुपदिशेत् २३ न यानमा-रोहेन्न वृक्षमधिरोहेन्न कूपमवरोहेन्न छत्रं धारयीत नोपानहौ धारयीत नासन्द्यां शयीत न स्त्रिया न शूद्रेण सह सम्भाषेत यदि सम्भाषेत ब्राह्मणेन सह सम्भाषेत न सायं भुञ्जीत यदि सायं भुञ्जीतापज्वलितं भुञ्जीत न स्नायादष्टम्यां पर्वणि चोपवसेत्तदहश्च स्नायाद्वाग्यतस्तिष्ठेदेतां रात्रिमुपविशेत् संवेशयेद्वा २४ अमे-ध्यलोहितशवपात्रदर्शने ज्योतिषां संदर्शनम् २५ अमेध्यं दृष्ट्वा जपति अबद्धं मनो दरिद्रं चक्षुस्सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हासीः इति २६ अथ यद्येनमभिवर्षति उन्दतीर्बलं धत्तौ जोधत्त बलं धत्त मा मे दीक्षां मा तपी निर्वधिष्ट इत्येव तत्र जपति २७ संवत्सरमेतद्व्रतं चरेत् संवत्सरं हि व्रतं नातीत्यैतस्मिंस्त्वेवैतत् संवत्सरेऽधीयीत २८ यद्यु वैतस्मिन् संवत्सरे नाधी-यीत यावदध्ययनमेतद्व्रतं चरेत्संवत्सरे पर्यवेतेऽध्यापयते श्रावयते वा २९

पूर्वेवदुपाकृत्य ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्याखलेऽछदिर्दर्शे-ऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयित्वाऽथाव्रत्यप्रायश्चित्ते जुहोति यन्म आत्मनो मिन्दाऽभूत् पुनरग्निश्चक्षुरदात् इति द्वाभ्याम् ३० प्रदक्षिणमग्निं परिषिच्य व्याहृतिभिर्वैकङ्कतीस्समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवताभ्यः तर्पयित्वा चतस्र औदुम्बरीस्समिधोऽपरिशुष्काग्रा घृताभ्यक्ता अभ्याधापयन् वाचयति द्यौस्समित् इत्येतैः प्रतिमन्त्रम् अथ देवता उपतिष्ठते आदित्य व्रतपते शुक्रियं व्रतमचारिषं तदशकं तन्मे राधि । वायो व्रतपते शुक्रियं व्रतमचारिषं तदशकं तन्मे राधि । अग्ने व्रतपते शुक्रियं व्रतमचारिषं तदशकं तन्मे राधि । व्रतानां व्रतपते शुक्रियं व्रतमचारिषं तदशकं तन्मे राधि इति ३२ प्रदक्षि-णमग्निं परिषिच्य व्याहृतिभिर्वैकङ्कतीस्समिधोऽथाभ्याधाय मदन्तीभिः प्रव-र्ग्यदेवताभ्यः तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वाऽथास्याध्यायेऽनध्या-यानुपदिशेत् । नाधीयीतास्तमित आदित्ये नानुदिते नानुविप्रोषिते न पर्यावृत्ते नाभ्रच्छायायां न ग्राम्यस्य पशोरन्ते नारण्यस्य नापामन्ते न हरितयवान् प्रेक्षमाणो न हर्म्याणी न शरीराणि न लोहितमुत्पादितं दृष्ट्वा न मांसमशित्वा न श्राद्धं भुक्त्वा न केशश्मश्रु वापयित्वा न केशान् प्रसार्य न दतो धावते नाङ्क्ते नाभ्यङ्क्ते नार्दो नार्द्रेण वाससा नार्द्रायामिति ३४ अथ स्वाध्यायम-धीयीतापरेणाग्निं दर्भेष्वासीनो दर्भान् धारयमाणः पराचीनं स्वाध्यायमधीयीत पुनरेव शांतिं कृत्वाऽधीयीत ३५ अथ यदि लौकिकमनुव्याहरेद्यत्रक्वचिद्य-द्यशान्तिकृ पश्येत्पुनरेव शांतिं कृत्वाऽधीयीत चोत्तमेन प्रवर्ग्यायोपनिष्क्रम्य नाप्रविश्य काममन्यदधीयीतान्यदधीयीत ३६

इति बोधायनीये गृह्यसूत्रे तृतीयप्रश्ने चतुर्थोऽध्यायः

## अथ तृतीयप्रश्ने पञ्चमोऽध्यायः

प्रहुतानुकृतिर्वास्तुशमनम् १ स यत्र दशोषित्वा प्रयास्यन् भवति दशभ्यो वोर्ध्वं सदारस्साग्निहोत्रिकस्तद्वास्तोष्पतीयं हुत्वा प्रयातीति २ सर्व एवा हिताग्निरित्येके ३ यायावर इत्येके ४ यच्चागारं कारयित्वा प्रथममध्य-वस्येत्तद्वास्तोष्पतीयेन शमयित्वाऽध्यवस्येत् ५ तदु हैके यजुषा स्थूणा उ-च्छ्रायन्ति यजुषा वंशान् यजुषा छदींषि यजषाब्भ्रिणं यजुषा तल्पदेशं यजुषा वास्तुमध्यं यजषाऽजुषाग्निनिधानम् ६ स यद्युहैवं कुर्याद्यथा यजुषोच्छ्रियन्ते

सदस्यक्सामयजूंष्यथर्वणान्याङ्गिरसानि मिथुनीसंभवन्तीति तद्यदध्यवस्ये-द्यथा मिथुनीसम्भवन्तावध्यवस्येत्तादृक्तद्यद्यजुष्कृतं स्यात् ७ आधयो व्याधयो ग्रहा उपसर्गाश्चाहन्युः ८ तस्मात्तूष्णीमगारं कारयित्वा द्वारदेशमलङ्कृत्य वास्तुमध्यं विमायाब्भिरणं पूरयित्वा तल्पदेशं कल्पयित्वोत्तरपूर्वदेशेऽगारस्य गृह्याग्निमुपसमाधाय सम्परिस्तीर्याग्निमुखात्कृत्वा पक्वाज्जहोति वास्तोष्पते प्रतिजानीह्यस्मान् इति पुरोनुवाक्यामनूच्य वास्तोष्पते शग्मया संसदा ते इति याज्यया जुहोति ९ अथाज्याहुतीरुपजुहोति १० वास्तोष्पते ध्रुवा स्थूणां सत्रं सोम्यानाम् । द्रप्सो भेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा स्वाहा ११ गृह्यं भयं यच्चेद्विद्रपात्सु यदु चेच्चतुष्पात्सु भयं यदस्ति । अग्निर्यविष्ठयः प्रणुदतु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यस्स्वाहा १२ अक्षिस्पन्देऽङ्गचले च यद्भयं यद्वशिते यदु चेद्दुरुक्ते । अग्निर्यविष्ठयः प्रणुदतु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यस्स्वाहा १३ दुस्स्वप्ने पापस्वप्ने च यद्भयं स्वप्नाशनं यद-मेध्यदर्शने । अग्निर्यविष्ठयः प्रणुदतु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यस्स्वाहा १४ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान् प्रति नो जुषस्व स्वाहा १५ अभीवहा वास्तोष्पते विश्वारूपाण्याविशन् । सखा सुशेव एधि नस्स्वाहा । इति १६ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् १७ अथाग्रेणाग्निं दर्भस्तम्बेषु हुतशेषं निदधाति नमो रुद्राय वास्तोष्पये । आयने विद्रावणे । उद्याने यत्परायणे । आवर्तने निवर्तने । यो गोपायति तं हुवे इति १८ स्थालीसंक्षाळनमाज्यशेषमुदकशेषं च पात्र्यां समानीयौदुम्बरशाखया पला-शशाखया शमीशाखया दर्भमुष्टिना वा सर्वतः पर्युक्षन् त्रिः प्रदक्षिणमगारं पर्येति त्वं विप्रः त्वं कविः त्वं विश्वा रूपाणि धारयन् अप जन्यं भयं नुद इति १९ अन्नं संस्कृत्य ब्राह्मणान् संपूज्याशिषो वाचयित्वा शिवं वास्तु शिवं वास्त्विति २० वास्तुशमनं व्याख्यातम् २१

इति बोधायनीयगृह्यसूत्रे तृतीयप्रश्ने पञ्चमोऽध्यायः

अथ तृतीयप्रश्ने षष्ठोऽध्यायः

अथ यद्यगारे स्थूणा विरोहेत् कपेतो वाऽगारमध्येऽधिपतेत् वायसो वा गृहं प्रविशेत् गौर्वा गां धयेत् गौरात्मानं प्रति धयेत् अन वान्वा दिवमुल्लिखेत् अनग्नौ वा धूमो जायेत अनग्नौ वा दीप्येत मधु वा जायेत वल्मीकं वोपजायेत

निर्यासं वोपजायेत छत्राकं वोपजायेत मराडूको वाऽभ्भिरो वाशयेत् श्वानप्रसूतो वा सर्पो वा गृहपतिं जायां वोपतपद्विन्देतान्येषु । अद्भुतोत्पातेषु १ अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः इति द्वाभ्याम् २ अथाज्याहुतीरुपजुहोति वास्तोष्पते वास्तोष्पते शं नो देवीः इन्द्राग्नी रोचना कया नश्चित्र आ भुवत् को अद्य युङ्क्ते भवतं नस्समनसो इति ३ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ४ अथाप्रेणाग्निं शमीपर्णेषु हुतशेषं निदधाति शं नो देवीरभिष्टये इति ५ स्थालीसंक्षालनमाज्यशेषमुदकशेषं च पात्र्यां समानीय तेषूत्पातेषु निनयेत् प्रोक्षेद्वा तच्छंयोरावृणीमहे इति ६ अन्नं संस्कृत्य ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा शिवं शिवमिति प्रोक्षति ७ अद्भुतो व्याख्यातः ८

इति बोधायनीयगृह्यसूत्रे तृतीयप्रश्ने षष्ठोऽध्यायः

## अथ तृतीयप्रश्ने सप्तमोऽध्यायः

आहुतानुकृतिरायुष्यचरुः १ संवत्सरे संवत्सरे षट्सु षट्सु मासेषु चतुर्षु चतुर्षु ऋतावृतौ मासिमासि वा कुमारस्य जन्मनक्षत्रे क्रियेत २ अथ देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा व्रीही न्निर्वपति अग्नय आयुष्मते वो जुष्टं निर्वपामि इति । तूष्णीं वा ३ धान्यान्निर्वपति प्राणाय वो जुष्टं निर्वपामि इति । तूष्णीं वा ४ तानभ्युक्ष्यावहत्य त्रिःफलीकृत्य त्रिःप्रक्षाळ्य निदधाति ५ तराडुलान् वा निर्वपति ६ तानभ्युक्ष्य त्रिः प्रक्षाळ्यैव निदधातीति ७ अथ तिरःपवित्रं स्थाल्यामपः पयो वानीयाधिश्रित्य तिरःपवित्रं तराडुलानावपति ८ अथाज्यं निर्वपत्यथाज्यमधिश्रयत्युभयं पर्यग्नि कृत्वा मेक्षणं स्त्रूवं च संमार्ष्टि ६ अथैतं चरुं श्रपयित्वाऽभिघार्योदञ्चमुद्वास्य प्रतिष्ठितमभिघारयति । एवमेव सर्वेषां स्थालीपाकानां चरुकल्पः ११ परिधानप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति आयुष्टे विश्वतो दधत् इति पुरोऽनुवाक्यामनूच्य आयुर्दा अग्ने हविषो जुषाणः इति याज्यया जुहोति १२ अथाज्याहुतीरुपजुहोत्यथान्तरेणाग्निं चाज्यस्थालीं च स्थालीपाकं निधाय तत्सहस्त्रं सम्पाताभिहुतं करोति १३ यो ब्रह्म ब्रह्मण उज्जभार प्राणेश्वरः कृत्तिवासाः पिनाकी । ईशानो देवस्स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन स्वाहा ४

बिभ्राजमानस्सरिरस्य मध्याद्रोचमानो घर्मरुचिर्य आगात्
स मृत्युपाशादपनुद्य घोरादिहायुषेणो घृतमत्तु देवस्स्वाहा १५

ब्रह्मज्योतिर्ब्रह्मपत्नीषु गर्भं यमादधात्पुरुरूपं जयन्तम्
सुवर्णरं भग्रहमर्कमर्चं तमायुषे वर्धयामो घृतेन स्वाहा १६

श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः
तां विद्यां ब्रह्मयोनिं सरूपामिहायुषे तर्पयामो घृतेन स्वाहा १७

दाक्षायण्यस्सर्वयोन्यस्सयोन्यस्सहस्रशो विश्वरूपा विरूपाः
ससूनवस्सपतयस्सयूथ्या इहायुषेणो घृतमिदं जुषन्तां स्वाहा १८

दिव्या गणा बहुरूपाः पुराणा आयुश्छिदो नः प्रमथन्तु वीरान्
तेभ्यो जुहोमि बहुधा घृतेन मा नः प्रजां रिरिषो मोतवीरान् स्वाहा १९

एकः पुरस्ताद्य इदं बभूव यतो बभूवुर्भुवनस्य गोपाः । यमप्येति भुवनं साम्पराये स नो हविर्घृतमिहायुर्षेऽत्तु देवस्स्वाहा २० वसून् रुद्रानादित्यान् मरुतोऽथ साध्यान् ऋभून् यक्षान् गन्धर्वांश्च पितृंश्च विश्वान् । भृगून् सर्पांश्चाङ्गिरसोऽथ सर्वान् घृतं हुत्वा स्वायुष्यामहयाम शश्वत्स्वाहा २१ षड्विंशतिशतकृत्वस्तदाहुतीनां अष्टसहस्रं संपद्यते २२ इतरस्मात्पक्वात्सौविष्टकृतं जुहोति २३ जयप्रभृति सिद्धमाधेनुवरप्रदानात् २४ अथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति मा नो महान्तं मा नस्तोके इति द्वाभ्याम् २५ अपरेणाग्निं प्राङ्मुख उपविश्य वाग्यतः स्थालीपाकं सगणः प्राश्नाति । तस्य प्राशनमन्त्रः आयुरसि विश्वायुरसि । सर्वायुरसि सर्वमायुरसि । सर्व म आयुर्भूयात् । सर्वमायुर्गेषम् इति प्राश्याप आचम्य जठरमभिमृशति यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः इति द्वाभ्याम् २६ कुमाराणां ग्रहगृहीतानां ज्वरगृहीतानां भूतोपसृष्टानां आयुष्येण घृतसूक्तेनाहरहस्स्वस्त्ययनार्थं स्वाध्यायमधीयीतैतैरेव मन्त्रैराहुतीर्जुहुयादेतैरेव मन्त्रैर्बलीन् हरेदगदो हैव भवति २७ तदेतदृद्धमयनं भूतोपसृष्टानां राष्ट्रभृतः पञ्चचोडास्सर्पाहुतिर्गन्धर्वाहुतिरहरहस्स्वस्त्ययनार्थं स्वाध्यायमधीयीतैतैरेव मन्त्रैराहुतीर्जुहुयात् एतैरेव मन्तैर्बलीन्

हरेदगदो हैव भवति । तदेतद्दृद्धमयनं हुतप्रहुतानुकृतयोऽन्ये होमाः बलि-
हरणानुकृतीन्यभ्यर्चनान्याश्रमानुकृतयस्संश्रया इति २९
इति बोधायनीयगृह्यसूत्रे तृतीयप्रश्ने सप्तमोऽध्यायः

अथ तृतीयप्रश्ने अष्टमोऽध्यायः

अथातोऽर्धमासेऽर्धमासेष्टम्यां ब्राह्मणा ब्रह्मचारिणस्त्रियश्चाहरुपवसन्ति १ अथ प्रदोषे रुद्रं विरूपाक्षं सपत्नीकं ससुतं सगणं सपार्षत्कमावाहयामि इत्यावाह्य गन्धपुष्पधूपदीपैरभ्यर्च्य प्रतिपुरुषं पैष्टिकान् दीपानेकातिरिक्तांश्चतस्त्रोऽष्टौ वा देवस्यायतने प्रतिदिशं प्रद्योतयति उद्दीप्यस्व जातवेदः मा नो हिंसीत् इति द्वाभ्याम् हव्यवाहमभिमातिषाहं स्विष्टमग्ने अभि इति द्वाभ्यां च २ अथोप-समिद्धमग्निं कृत्वा यदशनीयस्य जुहोति इमा रुद्राय स्थिरधन्वने गिरः इति षड्भिरनुच्छन्दसं मा नो महान्तं मा नस्तोके इति द्वाभ्यां वास्तोष्पते वास्तोष्पते इति द्वाभ्यां आर्द्रया रुद्रः हेती रुद्रस्य इति द्वाभ्यां द्वादश संपद्यन्ते द्वादश मासास्संवत्सरः संवत्सर एव प्रतितिष्ठति इति ब्राह्मणम् ३ समिधो वाऽभ्या-दधातीति विज्ञायते वैष्णवा वै वनस्पतयः विष्णोस्सायुज्यं सलोकतामाप्नोति ४ स्तुतिभिस्स्तुन्वन्ति ब्रह्म वै ब्रह्मा ब्रह्मणस्सायुज्यं सलोकतामाप्नोति ५ सर्वं पाप्मानं तरति तरति ब्रह्महत्यामपपुनर्मृत्युं जयतीत्याह भगवान् बोधायनः ६
इति बोधायनीयगृह्यसूत्रे तृतीयप्रश्ने अष्टमोऽध्यायः

अथ तृतीयप्रश्ने नवमोऽध्यायः

बलिहरणानुकृतिरुत्सर्गः १ तैष्यां पौर्णमस्यां क्रियेतापि वा माघ्याम् २ सहान्तेवासिभिर्ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य यत्रापस्सुतीर्थास्सूपावगाहास्स्रवन्त्यस्स्ववकिन्यश्शङ्खिन्यस्तासामन्तं गत्वा स्नात्वाऽप आचम्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिरिति मार्जयित्वाऽन्तर्जलगतोऽघमर्षणेन त्रीन् प्राणायामान् धारयित्वोत्तीर्य वासः पीडयित्वाऽन्यत्प्रयतं वासः परिधायाप आचम्यापां समीपे स्थण्डिलानि कृत्वा दर्भानन्योन्यस्मै संप्रदाय दर्भैरासनानि कल्पयन्ति ब्रह्मणे कल्पयामि प्रजापतये बृहस्पतये अग्नये वायवे सूर्याय चन्द्रमसे नक्षत्रेभ्यः ऋतुभ्यः संवत्सराय इन्द्राय राज्ञे यमाय राज्ञे वरुणाय राज्ञे सोमाय राज्ञे वैश्रवणाय राज्ञे वसुभ्यः रुद्रेभ्यः आदित्येभ्यः विश्भ्यो देवेभ्यः साध्येभ्यो देवेभ्यः मरुद्भ्यः ऋभुभ्यः भृगुभ्यः

अथर्वभ्योऽङ्गिरोभ्यः विश्वामित्राय जमदग्नये जामदग्न्याय भरद्वाजाय गौतमाय आत्रेयाय वसिष्ठाय काश्यपाय अरुन्धत्यै कल्पयामीति ३ अथ दक्षिणतः अगस्त्याय कल्पयामीति ४ अथोत्तरतः निवीतिनः कृष्णद्वैपायनाय जातुकर्ण्याय तरुक्षाय तृणबिन्दवे सोमशुष्मिणे सोमशुष्मायणाय वाजिने वाजश्रवसे बृहदुक्थाय वर्मिणे वज्रिणे वरूथाय सनत्कुमाराय वामदेवाय वाजिरत्नाय वीरजिताय हर्यश्वाय उदमेघाय ऋणंजयाय तृणंजयाय कृतंजयाय धनञ्ज-याय सत्यञ्जयाय बभ्रवे त्र्यरुणाय त्रिवर्षाय त्रिधातवे अश्वज्ञाय पराशराय मृत्यवे कर्त्रे विकर्त्रे सुकर्त्रे त्वष्ट्रे धात्रे विधात्रे सुश्रवसे सुतश्रवसे सत्यश्रवसे सवित्रे सावित्र्यै छन्दोभ्यः ऋग्वेदाय यजुर्वेदाय सामवेदाय अथर्ववेदाय अथर्वाङ्गिरोभ्यः इतिहासपुराणेभ्यः सर्पदेवजनेभ्यः सर्वभूतेभ्यः ५ अथ दक्षिणतः प्राचीनावीतिनो वैशम्पायनाय फलिङ्गवे तित्तिरये उखायोख्याय आत्रेयाय पदकाराय कौण्डिन्याय वृत्तिकाराय कण्वाय बोधायनाय प्रवचनकारायापस्तम्बाय सूत्रकाराय सत्याषाढाय हिरण्यकेशाय वाजसनेयाय याज्ञवल्क्याय भरद्वाजायाग्निवेश्यायाचार्येभ्य ऊर्ध्वरेतोभ्यो वानप्रस्थेभ्यः वंशस्थेभ्यः एकपत्नीभ्यः कल्पयामीति ६ अथ यथास्वयं पितृभ्यः कल्पयन्ति मातामहेभ्यश्च ७ पृथक्पृथगेतैरेव नामधेयैर्गन्धपुष्पधूपदीपैरमुष्मै नमोऽमुष्मै नम इति ८ अन्नेनामुष्मै स्वाहाऽमुष्मै स्वाहेति । फलोदकेनामुं तर्पयाम्यमुं तर्पयामीति ९ त्रीनादितोऽनुवाकानधीयीरन् काण्डादीन् वा सर्वान् १० काण्डात्काण्डात्प्ररोहन्ती या शतेन प्रतनोषि इति द्वाभ्यामुपोदके दूर्वामा-रोपयन्तेऽथाधीप्सन्तेऽन्योन्यममुष्मा अमुष्मा इति ११ अथावगाह्य सम्परिगृह्योर्मिमन्तमुदधिं कृत्वा त्रिरुद्युत्या तमितोराजिं धावन्ति १२ प्रत्येत्य गृहानथ ब्राह्मणान् तर्पयन्त्यपूपैर्धानाभिस्सक्तुभिरोदनेनेति यद्यु वैतेभ्यो भवति १३ त्र्यहमेकाहं वा नाधीयीरन् मासं प्रदोषे नाधीयेरन् नित्यं चैव विद्युत्स्तनितवर्षाणामेकस्मिन् द्वयोर्वा काले त्रिषन्निपाते त्र्यहम् १४ यथोपाकृतौ छब्दसामेवमेवमुत्सृष्टौ कल्पानाम् १५ एवमेव पारायणसमाप्तौ काण्डादिदूर्वारोपणोदधिधावनवर्जम् १६

इति बोधायनीये गृह्यसूत्रे तृतीयप्रश्ने नवमोऽध्यायः

अथ तृतीयप्रश्ने दशमोऽध्यायः

वलिहरणानुकृतिरेव सर्पबलिः १ संवत्सरे संवत्सरे षट्सु षट्सु मासेषु चतुर्षु

चतुर्षु ॠतावृतौ मासि मासि वा वर्षास्वाश्रेषासु क्रियेत २ अपां समीपे वल्मीकाग्रेण वा पचनम् ३ गन्धोदकैर्दूर्वोदकैश्चाभ्युक्ष्य चित्रास्सुम-नसस्सम्प्रकीर्य यवपिष्टानि व्रीहिपिष्टानि श्यामाकपिष्टानि वाऽऽज्येनेक्षुरसेन वा पक्त्वा पायसं घृतपक्वांश्च अपूपानोदनं धानास्सक्तून् करम्भान् लाजानि-त्युपकिरन्ति नमो अस्तु सर्पेभ्यः इति तिसृभिरनुच्छन्दसम् ४ सर्पेभ्य-स्स्वाहाऽऽश्रेषाभ्यस्स्वाहा दन्दशूकेभ्यस्स्वाहा इति त्रयस्स्वाहाकाराः ५ जीर्वरो ग्रहपतिरध्वर्युर्धृताराष्ट्र ऐरावतो ब्रह्मदत्तस्तापसो होता पृथुश्रवा दूरेश्रवा उद्गाता ग्लावश्चाजगश्च प्रस्तोता प्रतिहर्ता शितिपृष्ठो मैत्रावरुणः तक्षको वैशालकिर्ब्राह्मणाच्छंस्युपनीतिस्ताक्ष्र्यस्सदस्यश्शिखातिशिखौ नेष्टापोतारौ वारुणो होताऽच्छावाकश्चक्रः पिशङ्ग आग्नीध्रश्चाहिरो महेयस्सुब्रह्मण्योऽर्बुदो ग्रावस्तुत्साण्ड उन्नेता पशगो ध्रुवगोपः कौस्तुको धुरिमेजयश्च जनमेजयश्चे त्येतैरेव नामधेयैः समीची नामासि प्राची दिक् इति षड्भिः पर्या यैः हेतयो नाम स्थ तेषां वः पुरो गृहाः इति षड्भिः इदं सर्पेभ्यो हविरस्तु जुष्टम् इति चोपस्थानम् ६ त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्य आशिषो वाचयित्वा ७ व्याख्यातस्सर्पबलिर्व्याख्यातस्सर्पबलिः ८

इति बोधायनीयगृह्यसूत्रे तृतीयप्रश्ने दशमोऽध्यायः

## अथ तृतीयप्रश्ने एकादशोऽध्यायः

अथेमे देवते प्रबाधिन्यावुद्वाहिकाले यक्षयतम्यौ भवतस्तयोस्तदुपक्लृप्तं भवति यत्सर्पबलौ १ अपां समीपे द्वे स्त्रीप्रतिकृतीकृत्य गन्धैर्माल्येन चालङ्कृत्यैव-मेवाभ्यर्चयति २ तयोरर्चनमन्त्रः ते सूनवस्स्वपसस्सुदंससो मही जज्ञुर्मातरा-पूर्वचित्तये । स्थातुश्च सत्यं जगतश्च धर्मणि पुत्रस्य पाथः पदमद्वयाविनः ३ ते मायिनो ममिरे सुप्रचेतसो जामी सयोनी मिथुना समोकसा । नव्यं नव्यं तन्तुमातन्वते दिवि समुद्रे अन्तः कवयस्सुदीतयः इति ४ अथैते उपसङ्गृह्य पार्श्वे दत्वा प्रवाह्य त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा व्याख्यातो यक्षीबलिः ५

इति बोधायनीयगृह्यसूत्रे तृतीयप्रश्ने एकादशोऽध्यायः

## अथ तृतीयप्रश्ने द्वादशोऽध्यायः

अष्टकानुकृतिर्मासिकं तत्पुरस्ताद्व्याख्यातम् १ अथाभ्युदयिकेषु प्रदक्षिणमु-

पचारो यज्ञोपवीतं प्रागग्रान् दर्भान् युग्मान् ब्राह्मणान् यवैस्तिलार्थः पृषदाज्यं हविः २ सोपयामेन पात्रेण नान्दीमुखाः पितरः प्रीयन्तामित्यपां प्रतिग्रहणं विसर्जनं च ३ नान्दीमुखेभ्यः पितृभ्यस्स्वाहेत्यग्नौ करणमनुदेशनम् ४ आशयेषु परिसमूढेषु प्रागग्रेषु दर्भेषु पृषदाज्येनानुप्रदानं सर्वं द्विर्द्विरिति ५ अथैकोद्दिष्टेषु नाग्नौकरणं नाभिश्रावणं न पूर्वं निमन्त्रणं न दैवं न धूपं न दीपं न स्वधा न नमस्कारो नात्रापूपम् ६ सर्वं सिद्धं समानीयायुग्मान् ब्राह्मणान् सुप्रक्षाळितपाणिपादानप आचमय्य सदर्भोपक्लप्तेष्वासनेषू वेश्य सर्वस्मा-त्सकृत्सकृत् समवदायाभिघार्य दक्षिणतो भस्ममिश्रानङ्गागन्निरूह्य तेषु जुहु-यात् प्रेतायामुष्मै यमाय च स्वाहा इति । तद्धुतमहुतं च भवति ७ अमुष्मै तृप्तिरस्त्वित्यपां प्रतिग्रहणं विसर्जनं च । अमुष्मा उपतिष्ठत्वित्यनुदे-शनमाशयेष्वेव पिण्डदानं तृप्यस्वेति संक्षाळनं तृप्तिरस्त्विति विसर्जनमस्तु तृप्तिरितीतरेषां प्रतिवचनम् ८ प्रेतस्य द्वितीयाप्रभृति ब्राह्मणभोजनैरेकोत्त-रवृद्धिरादशाहात् ९ अत्र नवं विच्छिद्येत १० एकादश्यां श्राद्धं तृतीये पक्षे द्वितीयं सन्ततमेकैकेनैकादश मासान्नयन्ति न द्वादशमासमभ्यारोहन्ति ११ संवत्सरे सपिण्डीकरणं साग्नौकरणं साभिश्रावणं सपूर्वं सदैवं सधूपं सदीपं सस्वधा सनमस्कारं सापूपम् १२ अथाप्युदाहरन्ति

एकोद्दिष्टे नवश्राद्धे नाग्नौ करणमिष्यते
न चाभिश्रावणं कुर्यान्न च पूर्वं तु कारयेत् १३

प्रणामं च न कुर्वीत स्वधाकारं तथैव च
ऊर्ध्वं संवत्सरात्प्रेतः पितृत्वमुपपद्यते १४

इतीन्वा इमा अनुकृतयो व्याख्याताः १५

इति बोधायनीये गृह्यसूत्रे तृतीयप्रश्ने द्वादशोऽध्यायः

## अथ तृतीयप्रश्ने त्रयोदशोऽध्यायः

अथर्तुसंवेशनादि जन्मप्रभृति वा कुमारः क्रियाभिलुप्तस्स्यादुपनयनं चैकं स्यात् तासां पृथक्पृथक्क्रियाणां करणं न चैकहोमे सर्वाणि कर्माण्युपपादयेत् १ यद्येकहोमे सर्वाणि कर्माण्युपपादयेत् प्रधानादौ द्वेद्वे मिन्दाहुती जुहुयात् २

मिन्दाहुती हुत्वा जयानभ्यातानान् ३ रुद्राहुत्यन्ते च विज्ञायते रुद्रो वै क्रूरो देवानां सोऽस्य तुष्टः प्रीतो भवति इति सर्वत्र छेदनभेदनखनननिरसन-पितृराक्षसनैर्ऋतरौद्राभिचरणीयेष्वप उपस्पृशेदिति विज्ञायते आपो वै शान्ता-श्शान्ताभिरेवास्य शुचं शमयति इति ब्राह्मणम् ४ आषोडशात् ब्राह्म-णस्यानात्यय इत्याद्वाविंशात् क्षत्रियस्याचतुर्विंशाद्वैश्यस्यात ऊर्ध्वं पतितसा-वित्रीका भवन्ति ५ नैनानुपनयेयुर्नाध्यापयेयुर्न विवहेयुर्न याजयेयुः ६ तांस्त्रिवृता व्रात्यस्तोमेन याजयित्वा विवाहयेयुः ७

यच्च किञ्चित्सगोत्राणां सर्वेषां च सशान्तिकम्
कन्यानां चैव जन्मादिकर्तव्याः कर्ममङ्गलाः ८

क्रियामयं हि ब्राह्मण्यं नाक्रियं ब्रह्मोच्यते नाक्रियं ब्रह्मोच्यत इति
इति बोधायनीये गृह्यसूत्रे तृतीयप्रश्ने त्रयोदशोऽध्यायः

अथर्तुसंवेशनादि । अष्टकानुकृतिः । अथेमे देवते । बलिहरणानुकृतिरेव सर्पबलिः । बलिहरणानुकृतिरुत्सर्गः । अथातोऽर्धमासेऽर्धमासे । आहुता-नुकृतिरायुष्यचरुः । अथ यद्यगारे विरोहेत् । प्रहुतानुकृतिर्वास्तुशमनम् । अथातोऽवान्तरदीक्षां व्याख्यास्यामः । अष्टाचत्वारिंशत्सम्मितम् । आचा-र्यप्रसूतः कर्माणि करोति । हुतानुकृतिरुपाकर्म १३ हुतानुकृतिरुपाकर्म । आचार्यप्रसूतः कर्माणि करोति । अष्टाचत्वारिंशत्संमितम् । अथातो-ऽवान्तरदीक्षां व्याख्यास्यामः । प्रहुतानुकृतिर्वास्तुशमनम् । अथ यद्यगारे स्थूणा विरोहेत् । आहुतानुकृतिरायुष्यचरुः । अथातोऽर्धमासेऽर्धमासे । बलिहरणानुकृतिरुत्सर्गः । बलिहरणानुकृतिरेव सर्पबलिः । अथेमे देवते । अष्टकानुकृतिः । अथर्तुसंवेशनादि १३
इति बोधायनगृह्यसूत्रे तृतीयप्रश्नः

अथ चतुर्थप्रश्ने प्रथमोऽध्यायः
अथातस्सप्तपाकयज्ञानां प्रायश्चित्तानि व्याख्यास्यामः १ तत्रादित एवोपलिप्ते श्वा वेटको वा यदि गच्छेत्कीटो वा पिण्डकारी स्यात् तत्पुनरुपलिप्य प्रोक्षति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा प्रोक्षामि

इति प्रोन्दय स्थरिडलमुपलिप्य स्थरिडलमुद्धरेत् २ स्थरिडलमुद्धृतं गौरश्वो वा यदि विकिरेदन्यद्वा श्वापदमधितिष्ठेत्तस्य पदमभ्युन्दय जपति पृथिवि देव-यजन्योषध्यास्ते मूलं मा हिंसिषम् इति ३ अथ कृतान्तेन प्रतिपद्यते ४ अथ यदि प्रणीतापात्रं भिद्येत तदभिमन्त्रयते अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन् पुनः इति ५ अथान्यदाहरति घर्मो देवानप्येतु इति पूरयित्वा व्याहृतिभि-रुपतिष्ठते ६ अथ यदि प्रणीताः प्रणीयमानाः प्रणीता वा परासिच्येरंस्ता अभिमन्त्रयते अक्षितोऽस्य क्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिन् लोके इति ७ पूरयित्वोपतिष्ठते भूरायुर्मे धारयत प्राणं मे धारयत प्रजां मे धारयत पशून् मे धारयत मा म आयुः प्राणाः प्रजाः पशवः परासिच्येरन् इति ८ अथ यदि कन्योपसाद्यमाना वोह्यमाना वा पतेत्तामुत्थापयेयुः उदस्थाद्देव्यदितिर्विश्वरू-प्यायुर्यज्ञपतावधात् । इन्द्राय कृरवती भागं मित्राय वरुणाय च इति ९ अथ यदि कन्योपसाद्यमाना वोह्यमाना वा रजस्वला स्यात्तामनुमन्त्रयते पुमांसौ मित्रावरुणौ पुमांसाश्विनावुभौ । पुमानिन्द्रश्च सूर्यश्च पुमांसं वर्धयेताम् इति १० अथ यदि कन्योपसाद्यमाना वोह्यमाना वाऽश्रु कुर्यात्तामनुमन्त्रयते जीवां रुदन्ति विमयन्ते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः । वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे इति ११

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्ने प्रथमोऽध्यायः

## अथ चतुर्थप्रश्ने द्वितीयोऽध्यायः

सर्वत्र दर्वीकूर्चप्रस्तरपरिधिबर्हिःपवित्रेध्मद्रव्यसम्भाराणां चेद्दाहोपघातेषु नाशे विनाशे वाऽन्यं यथालिङ्गं कृत्वा यथालिङ्गमुपसाद्य त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयाऽसि प्रजापते इत्येताभिस्स्त्रुवाहुतीर्जुहुयात् १ अथ यदि परिस्तरणदाहे अग्नये क्षामवते स्वाहा इति हुत्वा परिस्तृणाति ३ इन्द्रं वो विश्वतस्परि इन्द्रं नरः इति द्वाभ्यां परिस्तीर्य जुहोति इन्द्राय स्वाहा इति ३ अथ यदि परिधिदाहे अन्यं यथालिङ्गमुपसाद्य जुहोति प्ररित्वाऽग्ने पुरं वयम् इति ४ अथ वस्त्राणां प्रोक्षितानां चेद्दाहोपघाते नाशे विनाशे अन्यत् यथालिङ्गं कृत्वा यथालिङ्गमुपसाद्य जुहोति सोसाय स्वाहा इति ५ अथ सिचा-ऽभिघातस्स्यात्तदभिमन्त्रयते सिगसि नसि वज्रोसि नमस्ते अस्तु मा मा हिंसीः इति दशासूत्रमादाय मुखवातेन प्रध्वंसयेत् ६ अथ यदि गौर्वाऽऽश्वो वा श्वमृगमहिषमेषवराहदंष्ट्रावन्तो वाऽन्यत् श्वापदमपसव्यं गच्छेत्तस्य पदम-

भ्युन्दय जपति तद्विष्णोः परमं पदम् इति ७ एतेनैव रौद्रमभिव्याहरेद्वा । रौद्र्यावृचौ जुहुयात् जपेद्वा त्वमग्ने रुद्रः आवो राजानम् इति ८ अथ यदि शकुनमभिव्याहरेत्तां वाचमनुमन्त्रयते द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरम् । उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि । नश्शकुने अस्तु प्रति नस्सुमना भव इति ९ अथ यदि सालावृकी वाश्येत तामनुमन्त्रयते दीर्घमुखि दुर्हणु मा स्म दक्षिणतो वदः । यदि दक्षिणतो वदाद्द्विषन्तं मेऽव बाधासै इति १० अथ यद्यर्थी स्यात् परिक्षवे परिकासने चाप उपस्पृश्य जपेत् अनुहवं परिहवं परीवादं परिक्षपं दुस्स्वप्नं दुरुदितं तद्द्विषद्भ्यो दिशाम्यहम् । अनुहूतं परिहूतं शकुने यदशाकुनं मृगस्य सृतमक्ष्णया तद्द्वि-षद्भ्यो दिशाम्यहम् इति ११ अथ नदीनां धन्वनां च व्यतिक्रमे पुरस्तादुपस्थानं जपति या ओषधयो या वनस्पतयो या नद्यो यानि धन्वानि ये वना । ते त्वा वधु प्रजावतीं प्र त्वे मुञ्चन्त्वंहसः इति १२ अथ शकृद्व्यतिक्रमे पुरस्ता-दुपस्थानं जपति नमश्शकृत्सदे रुद्राय नमश्शकृत्सदे । गामर्हसि नमस्ते अस्तु मा मा हिंसीः इति १३ अथ तीर्थस्थाणुचतुष्पथव्यतिक्रमे पुरस्तादुपस्थानं जपति कृतं तीर्थं सुप्रपाणं शुभस्पती । स्थाणुं पथेष्टामप दुर्मतिं हनत् इति १४ अथ चित्रियाणां लक्षणानां व्यतिक्रमे पुरस्तादुपस्थानं जपति ये देवा याश्च देवीर्येषु वृक्षेष्वासते । श्रिया मे श्रियं वृद्धिं वहन्तु मा मा हिंसिषुर्वहन्तु मोह्य मानाम् इति १५ अथ कर्मान्तमेव प्रतिपद्यते १६

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्ने द्वितीयोऽध्यायः

## अथ चतुर्थप्रश्ने तृतीयोऽध्यायः

सर्वत्र स्वयं प्रज्वलितेऽग्नौ समिधावादधाति उद्दीप्यस्व जातवेदः इति द्वाभ्याम् १ अथ श्मशानादिव्यतिक्रमे तमेवाग्निमुपसमाधाय सम्परिस्तीर्याऽग्निमुखा-त्कृत्वा पक्वाज्जुहोति अग्निर्भूतानामधिपतिस्स माऽवतु स्वाहा इन्द्रो ज्येष्ठाना-मधिपतिस्स माऽवतु स्वाहा इति २ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ३ अथैनन्मिथुनमभिमन्त्रयते इदं मिथुनमायुष्मदस्त्विदं मिथुनं प्रजावदस्त्विदं मिथुनं पशुमदस्त्विदं मिथुनं वीर्यवदस्तु इति ४ अथ उदुत्यं जातवेदसम् इति दक्षिणमनड्वाहं युनक्ति । चित्रं देवानामुदगादनीकम् इति सव्यं युक्त्वा प्रयातीति ५ अथ तीर्थव्यतिक्रमे नावा सन्तारः स्यात्तामनुमन्त्रयते अयं नो मह्याः पारमेतं स्वस्ति नेषद्वनस्पतिः । सीरा नस्सुतरा भव दीर्घायुत्वाय वर्चसे

इति नावा तरन्तीं वधूं पश्यति ६ कूलमुत्तीर्य जपति समुद्राय वयुनाय सिन्धूनां पतये नमः इति ७ दुर्गमध्वानं वा प्रपाद्य जातवेदसे इति सहस्रेणा- दित्यमुपतिष्ठते ८ आसन्नभये छल द्यूतव्यहारे राजकुले व्यसने बद्धो वा नि- रन्तरमुपांशु जपेदेतदेव । दुस्स्वप्नेषु शतं जपेदेतदेव ९

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्ने तृतीयोऽध्यायः

## अथ चतुर्थप्रश्ने चतुर्थोऽध्यायः

अथाभ्याघातस्स्यादग्निश्चोद्वातस्स्यात् सर्वं तत् अपहताः इति प्रोक्ष्य स्थण्डिलमुद्धृत्य तमेवाग्निमुपसमाधाय सम्परिस्तीर्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति ये देवा यज्ञहनो यज्ञमुषः इति तिसृभिरनुच्छन्दसम् १ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् २ अथ यद्यक्षभेदस्स्यात्तमेवाग्नि- मुपसमाधाय सम्परिस्तीर्याऽग्निमुखात्कृत्वा प्रधानाहुतीर्जुहोति इह धृतिस्स्वा- हेह विधृतिस्स्वाहेह रन्तिस्स्वाहेह रमतिस्स्वाहा इति ३ जयप्रभृति सिद्ध- माधेनुवरप्रदानात् ४ अथान्यमक्षमाहरति अक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिन् लोके इति ५ अथैनं रथे योजयति आतिष्ठ वृत्रहन् रथम् इति ६ अथ रथे मिथुनं प्रतिष्ठापयति प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे । प्रत्यश्वेषु प्रति तिष्ठामि गोषु । प्रत्यङ्गेषु प्रति तिष्ठाम्यात्मन् । प्रति प्रजायां प्रति तिष्ठामि भव्ये इति ७ पूर्ववददनड्वाहौ युनक्ति । अथ मिथुनं प्रतिष्ठाप्य प्रयातीति ८ अथ यदि बलवता समरथस्स्यात् पथाद्रथं प्रसर्पयति अनृणा अस्मिन्ननृणाः परस्मिंस्पृतीये लोके अनृणास्स्याम । ये देवयाना उत पितृयाणास्सर्वान् पथो अनृणा आक्षीयेम इति ९ अथ पथमवस्थाय यानाय जपति मिथुनस्य स्वस्त्ययन्यस्यपि पन्थामगस्महि स्वस्ति गामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु इति १० अथ रथमभिप्रेति पथस्पथः परिपतिम् इति ११ अथ विद्युत्स्तनिते संत्रासस्स्यात्तमस्यैन्द्र्यावृचौ जपति यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः इति १२ अथ कर्मान्तमेव प्रतिपद्यते १३

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्ने चतुर्थोऽध्यायः

## अथ चतुर्थप्रश्ने पञ्चमोऽध्यायः

अथ पाकयज्ञानां प्रायश्चित्तिः १ तद्यथा द्रव्यहविर्मन्त्रकर्मादीनामतिपन्नस्क- न्नभिन्नभग्ननष्टदुष्टविपरीतदग्धाश‍ृत्यनिकृतानामनाम्नातेषु जुहुयात् मनो ज्यो-

तिः अयाश्चाग्ने यदस्मिन् कर्मणि स्वस्ति न इन्द्रो वृद्धश्रवाः इति व्याहृतिभिश्च २ व्याहृतीनां प्रयोगे यथाकृतं यथावद्भवतीत्याचार्या ब्रुवते ३ तत्रोदाहरन्ति भूरित्यृचो भुव इति यजूंषि सुवरिति सामानि ४ प्रवृत्ते कर्मणि प्रधानादौ जुहुयादिति बोधायनः ५ प्रधानान्त इति शालिकिः ६ पुरस्तात्स्विष्टकृत इत्यौपमन्यवः ७

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्ने पञ्चमोऽध्यायः

## अथ चतुर्थप्रश्ने षष्ठोऽध्यायः

अथ गर्भाधान-पुंसवन-सीमन्तोन्नयन-विष्णुबलि-जातकर्म-नामकरणो-उपनिष्क्रमण-अन्नप्राशन-चोळ-उपनयनादि कार्यं न करयेदिति समानं कर्म । तत म आपः यत्पाकत्रा मनस्वती मिन्दाहुती महाव्याहृतीः व्याहृतयश्च प्रायश्चित्तं जुहुयादिति १ कालातिक्रमे प्रधानादौ द्वे द्वे मिन्दाहुती जुहुयादिति २ व्याहृतिर्पूर्वकं चेति सर्वेषां समानमाचार्यां ब्रुवते ३ तत्रोदाहरन्ति पक्वं सौविष्टकृतमाज्यं प्रणीताप्रणयनं ब्राह्मणमिध्माबर्हिरेकमिति विज्ञायत इति हि ब्राह्मणमिति हि ब्राह्मणम् ४

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्ने षष्ठोऽध्यायः

## अथ चतुर्थप्रश्ने सप्तमोऽध्यायः

अथ विपरीतदर्भास्तरणपवित्रकरणपात्रसादनप्रोक्षणीसंस्कारब्रह्मप्रणीताहवि-र्निर्वापणआज्यसंस्कार स्रुक्सम्मार्जनपरिधिपरिषेचन इध्माभ्याधानविपरीते-षुप्रायश्चित्तं ततं म आपः यत्पाकत्रा मनस्वती मिन्दाहुती महाव्याहृतीः व्याहृ-तयश्च प्रायश्चित्तं जुहुयादिति बोधायनः १

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्ने सप्तमोऽध्यायः

## अथ चतुर्थप्रश्ने अष्टमोऽध्यायः

अथ प्रायश्चित्तानि व्याख्यास्यामः भग्ननष्टदुष्टविपरीतस्फुटितद्विजश्वबिडाल-काकखरमृगपशुपक्षिसरीसृपाणामन्यत्कीटो वा ऋत्विजोऽग्नीनन्तरा गच्छेत् दुर्गा मनस्वती महाव्याहृतीस्तिस्त्रस्तन्तुमतीर्जुहुयात् सैव ततः प्रायश्चित्तिः १

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्ने अष्टमोऽध्यायः

## अथ चतुर्थप्रश्ने नवमोऽध्यायः

अथातस्सप्तपाकयज्ञानां प्रायश्चित्तसमुच्चयं व्याख्यास्यामः १ हुतः प्रहुत आहुतश्शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्तपाकयज्ञानां न प्रयाजा इज्यन्ते नानूयाजाः न सामिधेनीः २ अन्वाहतेषु कर्मस्वग्निमुप- समाधाय सम्परिस्तीर्य यत्र यत्र दर्वीहोमं कुर्यात्तत्रतत्र चरुं समवदाय जुहोति ३ सर्वत्र स्कन्ने भिन्ने छिन्ने न्नामे विपर्यासे उद्दाहे ऊनातिरिक्ते पवित्रनाशे पात्रभेदे द्वे मिन्दाहुती जुहोति ४ मक्षिकैर्मशकैर्वा रोमभिः पिपीलिकैर्वा व्यापद्येत प्रजपतये होमं कुर्यात् ५ व्यापन्नमाज्यमव्यापन्नमन्तर्हितमनाज्ञात- प्रायश्चित्तं यज्ञसमृद्धीर्जुहोति ६ अन्तरागमने प्रायश्चित्तं दशहोतारं चानुख्यां च जुहोति ७ अन्तर्हते प्रायश्चित्तं चतुर्होतारं चानुख्यां च जुहोति ८ मण्डूकसर्पमूषिकमार्जारान्तरागमने प्रायश्चित्तं पञ्चहोतारं चानुख्यां च जुहोति ९ विकृतरूपे विकृतशब्दे विस्फुटे प्रायश्चित्तं शंयुवाकं चानुख्यां च जुहोति १० अनादिष्टं सर्वप्रायश्चित्तं व्याख्यातं वारुणीमिति निर्दिशेत् ११ संस्का- रान्तेऽग्नावुत्सन्ने तद्भस्मसमारोपणं समिधं वा यदि नोपविन्देद्याज्ञिकं वा प्रायश्चित्तं महाव्याहृतीः प्रणवं मनस्वतीं च जुहोति १२ स्वराक्षरपदवृत्तभ्रेषेषु आभिर्गीर्भिः इति १३ सर्वत्र पाकयज्ञानां सदस्येभ्यो धेनुमृषभमनड्वाहं दद्यात् १४ सदस्यास्सर्वप्रायश्चित्तानि प्रतिनिधींश्च बोधयिष्यन्तीति १५

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्ने नवमोऽध्यायः

## अथ चतुर्थप्रश्ने दशमोऽध्यायः

अथ यदि होमकालेष्वग्निरुद्वातस्स्यात् सर्वं तत् अपहताः इति प्रोक्ष्य स्थण्डि- लमुद्धृत्याग्निमुपसमाधाय सम्परिस्तीर्य प्रायश्चित्तं जुहोति अयाश्चाग्ने पञ्चहोता ब्राह्मण एकहोता दश मनस्वतीः मिन्दाहुती महाव्याहृतीः व्याहृतयश्च प्रायश्चित्तं जुहुयादिति १ अथ यद्युपनयनाग्निर्विवाहाग्निर्जातकाग्निश्श्मशानाग्निराच- तुर्थादादशाहादासञ्चयनादुद्वातस्स्यात् अपहता असुराः इति प्रोक्ष्य क्षिप्रं भस्म- समारोहणम् । अयं ते योनिर्ऋत्वियः इति समिधि समारोप्य लौकिकमग्नि- माहृत्य समिधमादधाति आजुह्वानः उद्बुध्यस्वाग्ने इति द्वाभ्याम् २ सम्परि- स्तीर्य प्रायश्चित्तं जुहोति अयाश्चाग्ने पञ्चहोता ब्राह्मण एकहोता दश मनस्वती मिन्दाहुती महाव्याहृतीः व्याहृतयश्च प्रायश्चित्तं जुहुयादिति बोधायनः ३

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्ने दशमोऽध्यायः

## अथ चतुर्थप्रश्ने एकादशोऽध्यायः

अथ गृहमेधिनो ब्रह्मचारिणश्चानुगतेऽग्नौ कालातिक्रमे होमयोर्दर्शपूर्णमासयो-श्चाग्रयणेनानिष्ट्वा नवान्नप्राशनाज्यस्कन्नावधूतहीनमन्त्राधिककर्मणश्चाकृतसी-मन्तायां प्रसूतायां भार्यायां स्त्रीषु गोषु यमळजनने रजस्वलाऽभिगमने पति-तसम्भाषणे दिवामैथुने शूद्राऽभिगमने स्वप्नान्ते रेतस्स्कन्दने उदके मूत्र-पुरीषकरणे कुमारस्य जातस्यासंस्कारेऽकृताग्निसंसर्गे देवताविपर्यासे मन्त्र-विपर्यासे कर्मविपर्यासे ब्रह्मचारिणश्च व्रतविपर्यासे मेखलायज्ञोपवीतस्यो-च्छेदने कृष्णाजिनस्याधारणे कमण्डल्वधारणे दण्डभङ्गे सन्ध्यालोपेऽग्निका-र्यलोप उदकुम्भलोपे भिक्षाचरणस्वाध्यायलोपे शुश्रूषालोपे एतैश्चान्यैश्चानाम्ना-तेषु प्रायश्चित्तम् १ अग्निमुपसमाधाय सम्परिस्तीर्य प्रायश्चित्तं जुहोति पाहि नो अग्न एनसे स्वाहा । पाहि नो विश्ववेदसे स्वाहा । यज्ञं पाहि विभावसो स्वाहा । सर्वं पाहि शतक्रतो स्वाहा । पाहि नो अग्न एकया । पाह्युत द्वितीयया । पाहि गीर्भिस्तिसृभिरूर्जां पते । पाहि चतसृभिर्वसो स्वाहा इति २

पुरस्ताच्चोपरिष्टाच्च सानुक्रमणं यथाऽनुपूर्वकरणमविच्छिन्नं सन्ततं भवतीति ३

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्ने एकादशोऽध्यायः

## अथ चतुर्थप्रश्ने द्वादशोऽध्यायः

अथ गृहस्थस्य विद्यार्थिनस्त्रियाऽभ्यनुज्ञातस्य ऋतुसंवेशनविच्छेदप्रायश्चित्तं व्याख्यास्यामः १ वसन्तो ग्रीष्मो वर्षाश्शरद्धेमन्तश्शिशिरेणर्तुकालमुक्त्वा ब्राह्मणेभ्यो निवेदयित्वा चीर्णव्रतान्तेनाथ प्रदोषे देवयजनमुदानयति २ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति यस्त्वा हृदा कीरिणा मन्यमानः इति पुरोऽनुवाक्यामनूच्य यस्मै त्वं सुकृते जातवेदः इति याज्यया जुहोति ३ अथाज्याहुतीरुपजुहोति मधुश्च स्वाहा । माधवश्च स्वाहा इत्या-ऽन्तादनुवाकस्य ४ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ५ अपरेणाग्निं आज्यशेषमुदकशेषं चोभौ जायापती प्राश्नीयाताम् ६ ऋतुसंवेशनवि-च्छेदप्रायश्चित्तं व्याख्यातम् ७

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्ने द्वादशोऽध्यायः

अथ गृहस्थस्य । अथ गृहमेधिनः । अथ यदि होमकालेषु । अथातस्स-

प्तपाकयज्ञानाम् । अथ प्रायश्चित्तानि । अथ विपरीत । अथ गर्भाधान । अथ पाकयज्ञानाम् । अथाभ्याघातः । सर्वत्र स्वयम् । सर्वत्र दर्वी । अथातस्सप्तपाकयज्ञानाम् १२ अथातस्सप्तपाकयज्ञानाम् । सर्वत्र दर्वी । सर्वत्र स्वयम् । अथाभ्याघातः । अथ पाकयज्ञानाम् । अथ गर्भाधान । अथ विपरीत । अथ प्रायश्चित्तानि । अथातस्सप्तपाकयज्ञानाम् । अथ यदि होमकालेषु । अथ गृहमेधिनः । अथ गृहस्थस्य १२

इति बोधायनीये गृह्यसूत्रे चतुर्थप्रश्नः

इति बोधायनीयगृह्यसूत्रं समाप्तम्

## अथ बोधायनगृह्यसूत्रे परिभाषाप्रारम्भः

### अथ प्रथमप्रश्नः

अथ वै भवति जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः इति १ ब्रह्मचर्य व्याख्यास्यामः २ आ समावर्तनादेवैतद्भवति नाचीर्णव्रतो ब्रह्मचारी भवति इति तदाश्रमो व्याख्यातः ३ अत ऊर्ध्वं ब्रह्मचर्यं येनानृणो भवति ४ स्वदार इत्येकम् ५ मन्त्रवत्प्रयोग इत्येकम् ६ ऋतावित्यपरम् ७ अथाधिब्रह्मचर्यम् विवाहे त्रिरात्रम् ८ ऋतौ त्रिरात्रम् ९ अमावास्यायां पौर्णमास्यां श्राद्धं दत्वा भुक्त्वा चैकरात्रम् १० परस्त्रीषु दिवा च यावज्जीवम् ११ अग्न्याधेये द्वादशरात्रम् १२ आग्रयणेष्टिपशुबन्धानामुपवसथेष्वेकरात्रम् १३ एवमेव सर्वेषु वेदकर्मसु १४ चातुर्मास्येषु संवत्सरम् १५ यथाप्रयोगमन्येषु यज्ञक्रतुष्वन्यत्रर्तौ दीर्घसत्रेषु घर्मव्रतेषु च १६ तदेतद्धर्म्यं पुण्यं पुत्र्यमायुष्यं स्वर्ग्यं यशस्यमानृण्यमिति व्याख्यातं ब्रह्मचर्यम् १७ यज्ञेन देवेभ्यः इति यज्ञं व्याख्यास्यामः १८ एकविंशतिसंस्थो यज्ञ ऋग्यजुस्सामात्मकश्छन्दोभिश्चितो ग्राम्यारण्यपश्वौष-धीभिर्हविष्मान् दक्षिणाभिरायुष्मान् १९ स चतुर्धा ज्ञेय उपास्यश्च स्वाध्यायज्ञो जपयज्ञः कर्मयज्ञो मानसश्चेति २० तेषां परस्पराद्दशगुणोत्तरो वीर्येण २१ ब्रह्मचारिगृहस्थवनस्थयतीनामविशेषेण प्रत्येकशः २२ सर्व एवैते गृहस्थ-स्याप्रतिषिद्धाः क्रियात्मकत्वात् २३ नाक्रियो ब्राह्मणो नासंस्कारो द्विजो नाविद्वान् विप्रो नैतैः हीनश्श्रोत्रियो नाश्रोत्रियस्य यज्ञ इति २४ तस्मादाचारः प्रमाणं संस्था आचारः क्रिया सन्ततिरिति नित्याभावात् २५ तस्माद्यः कश्चन क्रियावान् सतामनुमताचारस्स श्रोत्रिय एव विज्ञेयः १६ अथाप्युदाहरन्ति

निषेके गर्भसंस्कारे जातकर्मक्रियासु च
विधिवत्संस्कृता मन्त्रैश्चीर्णव्रतसमापनाः

श्रोत्रिया इति ते ज्ञेयाश्शाखापाराश्च ये द्विजाः
विधिवद्गृह्य ये पाणिमृतौ चीर्णव्रतावुभौ

मन्त्रवत्सम्प्रयोगे तौ ब्राह्मण्य गर्भमादधुः इति २७
तस्मादाचारः प्रमाणम् २८
इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने प्रथमोऽध्यायः

अथ प्रथमप्रश्ने द्वितीयोऽध्यायः

अथ वै भवति सर्वेण वै यज्ञेन देवास्सुवर्गं लोकमायन् इति स एष हुतादिरासहस्रसंवत्सरान्तस्सर्वो यज्ञो यो हि यद्वेद स्वाध्यायजपकर्ममानसेषु तेनैवास्य तद्गुणेनेष्टं भवतीति तदेतन्मन्त्रब्राह्मणं व्याख्यातम् १ अथ वै भवति देवा वै पुष्टिं नाविन्दन्तां मिथुनेऽपश्यन् इत्येताद्विज्ञाय दारानाहृत्य सर्वयज्ञ-भाजो भवन्तीति व्याख्यातो यज्ञः २ प्रजया पितृभ्यः इति अथास्य प्रजा भवन्ति यानुत्पादयते यानुपनयते यान् ध्यापयते यान् याजयते इति सर्वाऽस्यैषा प्रजा भवतीति प्रजा व्याख्याता ३ एष वा अनृणो यः पुत्री यज्वा ब्रह्म-चारिवासी इत्याहिताग्निरित्येवैष उक्तो भवति ४ अथाप्युदाहरन्ति

पुदिति नरकस्याख्या दुःखं च नरकं विदुः
पुदि त्राणात्ततः पुत्रमिहेच्छिन्ति परत्र च

न मांसपेशलः पुत्रो नाविद्वान् नाप्यकर्मकृत्
स्वयं न याति यस्स्वर्गं किं पुनः पितरं तरेत् इति ५

विज्ञायते अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि । ममैव सन्वह हव्यान्यग्रे पुत्रः पित्रे लोककृज्जातवेदः इति ६ एतस्माद्गार्हपत्य उक्तो भवति गार्हपत्यादाहवनीयस्तस्मादग्न्याधेयेनानृण आहवनीयादिति प्रणीतः तस्मात् पशुबन्धयाज्यनृणश्शालामुखीयादाग्नीध्रीय आग्नीध्रीयादपरे धिष्ण्याः

७ विभूरसि प्रवाहणः इत्येते विहरणोपस्थानीयाः एषाऽस्य दैवी प्रजा भवति इति तस्मात्सोमयाज्यनृणः ८ तस्मात् गृहस्थस्य सर्व एवैते यज्ञास्तस्माद्गृहाश्श्रेय इति ९ अथास्य श्रेयोऽवाप्तिरापूर्यमाणपक्ष इति पूर्वपक्ष एवैष उक्तो भवति सोमेनापूर्यमाणेन व्याख्यातः १० अहोरात्राणि वा वृद्धिमन्ति ह्रासवन्ति च भवन्ति । यत्राह्नां वृद्धिर्भवति स एवैष उक्तो भवतीति ११ अथ हैकेषां विज्ञायतेऽह्नः पञ्चसु कालेषु कुर्वीतेत्युदगयन इत्येवेदमुक्तं भवति १२ संवत्सरो वै देवानामहोरात्रं तस्यैतदुदगयनमहः दक्षिणायनं रात्रिस्तस्याह्नः पञ्चसु कालेषु कुर्वीतेति तस्य प्रातस्सङ्गवौ शिशिरवसन्तौ मध्यंदिनं ग्रीष्मोऽपराह्णसायाह्ने वर्षाशरदौ प्रातस्सङ्गवे सायमिति विवाहं न कुर्वन्ति । काममितराणि १३ अथान्यत्रापि कुर्वन् भवति पुण्ये नक्षत्र इति । देवनक्षत्राणि वा अन्यानि । यमनक्षत्राण्यन्यानि । यानि देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात् इत्येवेदमुक्तं भवति १४

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने द्वितीयोऽध्यायः

## अथ प्रथमप्रश्ने तृतीयोऽध्यायः

विष्णुश्च ह वै सोमश्च ब्रह्मवाद्यमवदेतामहं ब्राह्मणानां प्रतिष्ठेति विष्णुरब्रवीदहं प्रतिष्ठेति सोमस्तौ प्रजापतिं प्रश्नमैतां सोऽब्रवीत्प्रजापतिश्छन्दांसि विष्णुमधिगच्छन्ति नक्षत्राणि सोमं तावुभौ ब्रह्मण्याविति सोऽब्रवीत्पूजितौ पूजयन्तों स्तुतौ स्तुन्वन्तौ प्रियौ प्रियन्तौ ब्रह्मण्यौ ब्रह्मवित्तौ वरप्रतिष्ठातारौ भवत इति १ यन्मां ब्राह्मणा वक्ष्यन्ति यज्ञेषु सोऽहमिति विष्णुरब्रवीत्तस्माद्विष्णुर्यज्ञो यज्ञो वै ब्राह्मणानां प्रतिष्ठेति । विज्ञायते च ब्राह्मणा वै छन्दांसि इत्येतस्मात् २ यन्मां ब्राह्मणा वक्ष्यन्ति नक्षत्रेषु सोऽहमिति सोमोऽब्रवीत्तस्माद्ब्राह्मणानां सोमो राजा तस्माद्विज्ञायते च ब्राह्मणो वा अष्टाविंशो नक्षत्राणां तत्तस्य वचः पुण्यम् इति ३ तावुभौ ब्रह्मण्यौ ब्रह्मवित्तौ ब्राह्मणानां प्रतिष्ठातारौ ब्राह्मणेषु प्रतिष्ठितौ ४ य एवं विद्वान् ब्राह्मणपुरस्कृतानि कर्माणि करोति यज्ञस्य समृद्ध्या इति ५ युग्ममयुग्ममिति समं विषमं चैतेन देवं पित्र्यं च व्याख्यातम् ६ वेदकर्माणि प्रयोक्ष्यन्नादित एव तीर्थे स्नात्वोदेत्याहतं वासः परिधायाप अचम्यैकविंशत्या दर्भपुञ्जीलैरात्मानं पवयित्वा यस्य कुर्वन् भवति तं पवयति पवित्रं वै दर्भाः पवित्रं विष्णुस्स प्रतिष्ठा सोमस्य प्रतिष्ठित्यै इति विज्ञायते ७ एकविंशत्या पवयत्येकविंशो वै यज्ञ एकविंशः पुरुष एकविंश-

तिश्छन्दांस्येकविंशतिर्वै देवलोकाः छन्दोभिरेवैनं यज्ञेन यजमानमेकविंशे प्रतिष्ठाप्य पूतं मेध्यं यज्ञियं पवयति । सप्तभिः पवयति सप्त छन्दांसि छन्दोभिरेवैनं पवयति । सप्तभिः पवयति सप्तैवास्यैते पुरुषास्सन्तति-मनुसन्तन्वन्ति त्रयः प्राञ्चस्त्रयः प्रत्यञ्च आत्मा सप्तम एतावन्त एवैनान् पवयति । त्रेधा विभक्तैः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयति इति ब्राह्मणम् ८ अथाप आचम्य बाह्याभ्यन्तरतः पूतो मेध्यो यज्ञियो भूत्वा वेदकर्माणि प्रयोक्ष्यन् पूर्वेद्युरेव युग्मान् ब्राह्मणान् भोजयेदिति नान्दीमुखा एवैता उक्ता भवन्ति ९ तेषु भुक्तवत्सु स्वधायै स्थाने मधु मनिष्ये मधु जनिष्ये इत्येतद्यजुर्जपित्वा नान्दीमुखाः पितरः प्रीयन्ताम् इत्यपो निनयति स्वधैवैषोक्ता भवति २० नैकाह्ना पित्र्यम् दैवं च कुर्वन्ति यस्यैकाह्ना पित्र्यं दैवं च कुर्वन्ति प्रजा हास्य प्रमायुका भवति तस्मात्पितृभ्यः पूर्वेद्युः क्रियते पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते इति ब्राह्मणम् ११

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने तृतीयोऽध्यायः

## अथ प्रथमप्रश्ने चतुर्थोऽध्यायः

अथापरेद्युर्देवानामिति १ अथापरेद्युर्ब्राह्मणानन्नेन परिवेषयेदिति दैवतं भवति २ यद्देवत्यं भवति तस्य पुण्याहं वाचयिष्यन्नाम गृह्णात्यसौ प्रीयतामिति ३ पुण्याहं वाचयिष्यन् ब्राह्मणान् संपूजयति ४ अरिक्तपाणयः प्राङ्मुखा युग्मास्तिष्ठन्ति ५ तेषां दक्षिणत उदङ्मुखोऽपिहितमुदकुम्भं धारयन् वाचयिता तिष्ठति ६ तस्य दक्षिणं बाहुमन्वितरस्तिष्ठति ७ अथैनान् संपूजयति मनस्समाधीयताम् इति ८ समाहितमनसः स्मः इतीतरेषां प्रतिवचनम् ९ मनो वै चन्द्रमा ब्राह्मणा नक्षत्राणि तस्माद्ब्राह्मणेषु मनस्समादधाति १० प्रसीदन्तु भवन्तः इति । प्रसन्नास्स्मः इतीतरेषां प्रतिवचनम् ११ तथैवास्य प्रसन्ना भवन्ति १२ शान्तिरस्तु । पुष्टिरस्तु । तुष्टिरस्तु । ऋद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । शिवं कर्मास्तु इत्याशिषमेवैतामाशास्ते १३ तथैवेतरेषां प्रतिवचम् १४ ओमिति ब्रह्म । ओमितीदं सर्वम् तस्मादोमिति सन्धाय पुण्याहं भवन्तो ब्रुवन्तु इत्येतेनाहश्च नक्षत्रं च पूते भवतस्ते एवैनं पूते पुनीतः १५ ओं स्वस्ति भवन्तो ब्रुवन्तु इत्येतेन गोब्राह्मणस्याशीरुक्ता भवति । त एवैनमशिषा समर्धयन्ति १६ ऋद्धिं भवन्तो ब्रुवन्तु इत्येतेन ऋग्यजुस्साम्नामृद्धिरुक्ता । तैरेव ऋद्धिमान्

भवति १७ य एवं विद्वान् पुरयाहं वाचयति नास्य कर्मोपहतं भवति १८ यत्कर्म करोत्यपरेणाग्निं प्रदक्षिणमुपचारो यज्ञोपवीती दैवानि कर्माणि क्रियते विपरीतं पित्र्येषु १९

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने चतुर्थोऽध्यायः

## अथ प्रथमप्रश्ने पञ्चमोऽध्यायः

अथ शुचौ समे देशे इति कथं विज्ञायते १ गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्तं भवति तच्छुचिर्भवति २ तस्य मध्यात् उद्धृत्यावोक्ष्या-रत्निमात्रं समचतुरतुरश्रं स्थण्डिलं करोति । तत्रोल्लेखनादि कर्म प्रतिपद्यते ३ दर्भेषु दक्षिणतो ब्राह्मण उपविशति । स यद्युपविशत्यादिशो व्युन्नय-न्नाशास्ते ४ यद्यु वै नोपविशति दर्भेषु दक्षिणतः प्रागग्रं कूर्चं निधाय ओं भूर्भुवस्सुवरों ब्रह्मन् ब्रह्मासि नमस्ते ब्रह्मणे इत्युपतिष्ठते ब्रह्मैवात्रासीनो भवति तस्मै वरं ददाति ब्राह्मणं वा भोजयेदिति ५ एतेन सशिरस्को यज्ञः यो वै यज्ञस्य शिरो वेद शीर्षण्वान् मेध्यो भवति इति ६ उत्तरत उदपात्रं ब्राह्म-णमिध्माबर्हिरिति एतद्वै यज्ञस्य शिरो य एवं वेद शीर्षण्वान् मेध्यो भवति इति ब्राह्मणम् ७ अथ शम्याः परिदधाति शम्या वा परिधयो वा इति विज्ञायते । नापरिधाय जुहुयात् रक्षसामपहत्यै इति ८ सर्वत्र परिसमूहनपर्युक्षणपरि-स्तरणपरिधानोपसमाधानालङ्करणमित्यादरादाचार्याः ९ सर्वत्रालङ्कृत्य ये तत्र ब्राह्मणास्सन्तिताननुज्ञाप्य कुर्वीत यत्कारी स्यात् समृद्धमेवास्य तत् १०

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने पञ्चमोऽध्यायः

## अथ प्रथमप्रश्ने षष्ठोऽध्यायः

सर्वत्र दर्वीहोमेष्वाघारवत्सु पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय इति ब्राह्मणम् १ यत्रैकाऽऽम्नाता स्यात्तां द्विरभ्यावर्तयेत् २ तत्सवितुर्वरेण्यम् इत्यनुद्रुत्याम्नातायां जुहोति । अथ वा भूर्भुवस्सुवरोम् इत्यनुद्रुत्य तत्सवितु-र्वरेण्यम् इति जुहोति ३ अनाम्नातेषु तदेतत्सर्वप्रायश्चित्तम् ४ विष्णव आहुतीषु नामकरणोपनिष्क्रामणान्नप्राशनोपाकर्मव्रतेषु च पक्वहोमस्स्यान्नापक्वाः पाक-यज्ञास्सर्वत्र पक्वहोमं कुर्यादिति ५ एतेन होमदानप्राशनानि व्याख्यातानि भवन्ति पक्वाज्जुहोति पक्वाद्ददाति पक्वात्प्रश्नातीति पाकयज्ञास्तस्माद्धुत-प्रहुताहुतेषु पक्वः कार्य इति ६ एकविंशतिदारुमिध्मं करोति यज्ञस्य सरू-

पत्वाय ७ अभिघारयति तेजसैवैनं समर्धयति इति ब्राह्मणम् ८ अरत्निमात्रीं दर्वीं बाहुमात्रीमित्यपरम् ९ अथ वै भवति निर्ऋृतिगृहीता वै दर्वी यद्दर्व्या जुहुयान्निर्ऋृत्याऽस्य यज्ञं ग्राहयेत् इति दर्व्याऽन्नस्य जुहोति स्रुवेणाज्यस्य वैकङ्कती स्रुगाकृतिर्भवति इति विज्ञायते १० अथाप्युदाहरन्ति

यथा सुभूमिजो वृक्षस्सुमूलस्सुप्रतिष्ठितः
बहुशाखस्सुपुष्पश्च फलवानुपयुज्यते ११

देवदानवगन्धर्वैः ऋषिभिः पितृभिस्तथा
पक्षिभिः षट्पदैश्चापि मशकैश्च पिपीलिकैः १२

एवं हि पाकयज्ञेषु सर्वमेतत्प्रतिष्ठितम्
हुतस्सुभूमिर्विज्ञेया मूलं प्रहुत उच्यते १३

आहुतोत्र प्रतिष्ठानं यज्ञवृक्षो महोच्छ्रयः
बह्वयस्तस्य स्मृताश्शाखास्सुपुष्पास्सुफलोपगाः १४

मन्त्रब्राह्मणतत्त्वज्ञैस्सुदृष्टास्ता उपासकैः
एवं हि यज्ञवृक्षस्य योऽभिज्ञः श्रोत्रियस्स्मृतः १५

दारस्याहरणं कुर्यात्कर्मेत्येवं विपश्चितः
सुभूमिं च सुमूलं च सुप्रतिष्ठानमेव च १६

वृक्षं पुष्पफलोपेतं बहुशाखं स पश्यति
ज्ञानं सुभूमिराचारो मूलं श्रद्धा प्रतिष्ठितिः १७

क्षमाऽहिंसा दमश्शाखाः सत्यं पुष्पफलोपगम्
ज्ञानोपभोग्यं बुद्धानां गृहिणां यज्ञपादपम् १८

अकामहतया बुद्ध्या त्यक्ताहङ्कारलोभया
निश्चयाध्यवसायाभ्यां चक्षुर्भ्यां स तु पश्यति १९

तस्यैको वज्रसङ्काशः क्रोधः परशुरुच्यते
तेनैव माच्छिनन् मोहात् त्याज्यः क्रोधो गृहेष्वतः २०

गृहा मूलं हि यज्ञानां गृहा ह्यानृण्यकारणम्
गृहाद्याश्रमपूजार्थं स्थित्यर्थं च गृहास्स्मृताः २१

पाकयज्ञा हविर्यज्ञास्सोमयज्ञाश्च ते त्रयः
स्थिता मूलेषु वृक्षेषु प्रमादी तेषु सीदति । इति
इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने षष्ठोऽध्यायः

अथ प्रथमप्रश्ने सप्तमोऽध्यायः

अथ विवाहस्यारुन्धत्युपस्थानात्कृत्वा व्रतमुपैति अग्ने व्रतपत उपयमनव्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां वायो व्रतपते आदित्य व्रतपते व्रतानां व्रतपते उपयमनं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् इति १ उभौ जा-यापती व्रतचारिणौ भवतोऽधश्शयाते तयोश्शय्यामन्तरेणौदुम्बरदण्डो गन्धा-नुलिप्तो वाससा सूत्रेण वा परिवीतस्तिष्ठत्यापक्वहोमान्निशायाम् २ हुते प-क्वहोमे व्रतं विसृज्य दण्डमुत्थापयति ऊर्जः पृथिव्या अध्युत्थितोऽसि वनस्पते शतवल्शो विरोह त्वया वयमिषमूर्जं वदन्तो रायस्पोषेण समिषा मदेम इति ३ अथैनं वध्वै प्रयच्छति प्रजया त्वा संसृजामि मासरेण सुरामिव इति ४ तं वधूः प्रतिगृह्णाति प्रजावती भूयासम् इति ५ अथैनं वराय प्रयच्छति प्रजया त्वा पशुभिस्संसृजामि मासरेण सुरामिव इति ६ तं वरः प्रतिगृह्णाति प्रजावान् पशुमान् भूयासम् इति ७ अथैनं स्थूणादेशे निधायान्तिकेन प्रतिपद्यते ८ प्रसिद्धमुपसंवेशनम् ९ श्वोभूते दण्डमादाय पुण्याहं वाचयि-त्वाऽप्सु विसर्जयति १० अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति अग्निर्मूर्धा भुवः इति द्वाभ्याम् ११ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् १२ स एष पार्वणो भवति १३ अथास्तमित आदित्येऽन्यो-न्यमलङ्कृत्योपरि शय्यायां शयाते १४ अथ वधूमभिमन्त्रयते सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्वा याथास्तं विपरेतन इति १५ अथैनां सर्वसुरभिगन्धया मालया युनक्ति सं नौ मनस्सं हृदयानि नौ सं नाभिस्सं तनुत्वचः सं त्वा कामस्य योक्त्रेण युज्याम्यविमोचनाय इति १६

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने सप्तमोऽध्यायः

## अथ प्रथमप्रश्ने अष्टमोऽध्यायः

अथ दशमोऽहन्ययुग्मा ब्राह्मणाः श्राविता भवन्ति १ अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति विश्वे देवाः विश्वे देवाः इति द्वाभ्याम् २ अथ वैश्वदेवं करोति ३ तूष्णीं सर्वाण्यायतनानि गन्धपुष्पधूपदीपैः प्रत्यलङ्करोति ४ प्रसिद्धं बलिहरणम् ५ वैश्वदेवं कृत्वाऽपरेणाग्निं दर्भेष्वासीनो दर्भान् धारयमाणः प्राङ्मुखस्सावित्रीं सहस्रकृत्य आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा दशवारं वा ६ वेदादीन् छन्दांसि कूष्माण्ड्यानि चाधीयीत ७ अथ यज्ञसमृद्धीर्जुहोति इष्टेभ्यस्स्वाहा वषडनिष्टेभ्यस्स्वाहा इति ८ अष्टौ स्रवाहुतीर्हुत्वा स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ९ अथापरः आपरिधानात्कृत्वा विश्वेभ्यो देवेभ्यः ब्राह्मणावुपवेश्य गन्धपुष्पधूपदीपैरभ्यर्च्य वैश्वदेवेन चरुणाऽनुदिश्य विश्वेभ्यो देवेभ्यस्स्वाहा इति १० अथ प्राचीनावीतं कृत्वा सौवर्णं राजतं ताम्रायसकांस्यं मृन्मयं वा पात्रं याचति ११ तद्दक्षिणाग्रेषु दर्भेषु सादयित्वा तूष्णीं संस्कृताभिरद्भिरुत्तानं पात्रं कृत्वा प्रोक्ष्य तस्मिन् तिरः पवित्रमप आनयन्नाह आम आगन्तु पितरो देवयानान् समुद्रान् सलिलान् सवर्णानस्मिन् यज्ञे सर्वकामान् लभन्तेऽक्षीयमाणमुपदुह्यन्तामिमाः पितृभ्यो वो गृह्णामि पितामहेभ्यो वो गृह्णामि प्रपितामहेभ्यो वो गृह्णामि इति १२ अपोद्धृत्य पवित्रं तिलानावपति तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तस्वधयेहि पितॄनिमान् लोकान् प्रीणयाहि नस्स्वधा नमः इति १३ अथ तिरः पवित्रं मध्वानयति मधु वाता ऋतायते इति तिसृभिरनुच्छन्दसम् १४ अथैनत्सर्वाभिरङ्गुलीभिस्समुदायुत्याभिमृशति सोमस्य त्वित्विषिरसि त-वेव मे त्विषिर्भूयादमृतमसि मृत्योर्मा पाहि दिद्योन्मा पाहि इति १५ तस्मिंश्चित्किञ्चिदापतितं स्यात्तदङ्गुष्ठेन च महानाम्न्या चोपसङ्गृह्येमां दिशं निरस्यति अवेष्टा दन्दशूका निरस्तं नमुचेश्शिरः इति १६ अथाप उपस्पृश्य पुनरेवाभिमृशति शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः इति १७ अथैनद्गन्धपुष्पधूपदीपैरभ्यर्च्य दक्षिणाग्रेषु दर्भैः प्रतिच्छाद्य भोजनस्थानेष्वासनेषु च तिलान् सिकताश्च सम्प्रकिरति अपहता असुरा रक्षांसि पिशाचा ये क्षयन्ति पृथिवीमनु । अन्यत्रेतो गच्छन्तु यत्रैषां गतं मनः इति १८ अथैनदद्भिरवोक्षति उदीरतामवर उत्परास उन्मध्यमाः । पितरस्सोम्यासः

। असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु इति १९ अथ पितृनावाहयति आयात पितरस्सोम्या गम्भीरैः पथिभिः पूर्व्यैः । प्रजामस्मभ्यं ददतो रयिं च दीर्घायुत्वं च शतशारदं च इति २० अथ ब्राहमणानाहूय सदर्भोपक्लृप्तेष्वासनेषूपवेश्य प्रसिद्धमग्नौ कृत्वा श्राद्धं पञ्च स्रुवाहुतीर्जुहोति याः प्राचीस्सं भवन्त्याप उत्तरतश्च याः । अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधे स्वधा नमस्स्वाहा । अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या । दिवा दिग्भिरनन्ताभिरूतिभिरन्तरन्यं पितामहाद्धे स्वधा नमस्स्वाहा । अन्तर्दध ऋतुभिस्सर्वैरहोरात्रैस्ससन्धिकैः । अर्धमासैश्च मासैश्च मासैश्चान्तरन्यं प्रपिता-महाद्धे स्वधा नमस्स्वाहा । यन्मे माता प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः पिता वृङ्क्तां माऽऽभुरन्योऽवपद्यतां स्वधा नमस्स्वाहा । यद्वः क्रव्यादङ्गम-दहल्लोकाननयन् जातवेदाः । तद्वो अहं पुनरावेशयाम्यरिष्टास्सर्वैरङ्गैस्संभवथ पितरस्स्वधा नमस्स्वाहा इति २१ त्रेधा वपां विभज्यौदुम्बर्या दर्व्या जुहोति सोमाय पितृमते शुष्मिणे जुहुमो हविः । वाजन्निदं जुषस्व नस्स्वजा हव्यं देवेभ्यः पितृभ्यस्स्वधा नमस्स्वाहा । अङ्गिरस्वन्तमूतये यमं पितृमन्तमाहुवे । वैवस्वतेदमद्धि नस्स्वजा हव्यं देवेभ्यः पितृभ्यस्स्वधा नमस्स्वाहा । यदग्ने कव्यवाहन पितृन्यक्षि ऋतावृधः । प्र देवेभ्यो वह हव्यं पितृभ्यश्च स्वजा हव्यं देवेभ्यः पितृभ्यस्स्वधा नमस्स्वाहा इति २२ अथापूपमष्टधा विभज्य त्रीण्यवदानानि वपायाः कल्पेन हुत्वाऽथेतराणि ब्राह्मणेभ्यो दत्वाऽत्रैतान्य-वदानानीडासूने प्रतिच्छाद्यौदनं मांसं यूषमित्याज्येन समुदायुत्यौदुम्बर्या दर्व्योपघातं दक्षिणार्धे जुहोति पितृभ्यस्स्वधा नमस्स्वाहा इत्यादिः । सर्वाभ्यस्स्वधा नमस्स्वाहा इत्यन्तो मन्त्र ऊह्यः २३ अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमस्स्वाहा इति २४ परिवेष्य भुक्तवतोऽनुव्रज्य प्रदक्षिणी-कृत्य शेषमनुज्ञाप्यैतेनैव यथेतमेत्यान्नशेषेण तिस्र आहुतीर्जुहोति यन्मे माता प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः पिता वृङ्क्तां माऽऽभुरन्योऽवपद्यतां स्वधा नमस्स्वाहा २५ यन्मे पितामही प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः पितामहो वृङ्क्तां माऽऽभुरन्योऽवपद्यतां स्वधा नमस्स्वाहा २७ यन्मे प्रपितामही प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः प्रपितामहो वृङ्क्तां माभुरन्योऽवपद्यतां स्वधा नमस्स्वाहा इति २६ दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य तेष्वन्नशेषैः त्रीन् पिण्डान् ददाति एतत्ते ततासौ ये ते मातामहा ये त आचार्या ये ते गुरवो ये ते सखायो ये ते ज्ञातयो ये तेऽमात्या ये तेऽन्तेवासिनस्तेभ्यश्च

पत्न्यस्तेभ्यस्ताभ्यश्च स्वधा नमः इति २८ द्वितीयं ददाति एतत्ते पितामहासौ ये ते मातामहा ये त आचार्या ये ते गुरवो ये ते सखायो ये ते ज्ञातयो ये तेऽमात्या ये तेऽन्तेवासिनस्तेभ्यश्च पत्न्यस्तेभ्यस्ताभ्यश्च स्वधा नमः इति २९ तृतीयं ददाति एतत्ते प्रपितामहासौ ये ते मातामहा ये त आचार्या ये ते गुरवो ये ते सखायो ये ते ज्ञातयो ये तेऽमात्या ये तेऽन्तेवासिनस्तेभ्यश्च पत्न्यस्ते-भ्यस्ताभ्यश्च स्वधा नमः इति ३० अत्र भूमौ लेपं निमार्ष्टि

ये नः पतिता गर्भा असृग्भाज उपासते
तेभ्यस्स्वजा स्वधा नमस्तृष्णुवन्तु मदन्तु च ३१

य आमा ये पक्वा ये च दुष्टाः पतन्ति नः
तेभ्यस्स्वजा स्वधा नमस्तृष्णुवन्तु मदन्तु च ३२

ये कुमारा यास्त्रियो येऽविज्ञाताः पतन्ति नः
तेभ्यस्स्वजा स्वधा नमस्तृष्णुवन्तु मदन्तु च इति ३३

अथैनान् सङ्क्षाळनेनाभिषिञ्चति ये समानाः ये सजाताः इति द्वाभ्याम् ३४ अथ ये बर्हिषि पिण्डास्तेषां तथैव सङ्क्षाळनेन त्रिरपसलैः परिषिञ्चति ऊर्जं वहन्तीः इति ३५ जयप्रभृति सिद्धमत ऊर्ध्वम् ३६

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने अष्टमोऽध्यायः

## अथ प्रथमप्रश्ने नवमोऽध्यायः

अथ वै भवति किञ्चिद्यज्ञस्य वाऽतिवेलं वा श्रद्धायुक्तस्य तत्त्वविदः १ पात्रमासाद्य नक्षत्रे वा ब्राह्मणानाहूय सदर्भोपक्लुप्तेष्वासनेषूपवेश्यामन्त्रयते भवत्स्वेवाग्नौ करणं पिण्डाश्च इत्येव ब्रूयात् २ तथेत्युक्तस्तेषां सपवित्रेषु पाणिषु तिलोदकं ददाति । तथाऽलङ्कृत्य ददाति । तथैव भुक्तवत्सु च ददाति ३ नोच्छिष्टं परिससूहति ४ अत्र त्रीन् पिण्डान् ददाति ब्राह्मणेभ्यो दक्षिणतः ५ विज्ञायते च ब्राह्मणो वै सर्वा देवताः एष वा अग्निर्वैश्वानरो यद्ब्राह्मणः इति ६ हुतमेवास्य भवति ७ अथ यद्यग्नौ कुर्यादौपासने पचने वाऽन्नस्य तिस्र आहुतीर्जुहोति सोमाय पितृपीताय स्वधा नमस्स्वाहा ।

यमायाङ्गिरस्वते पितृमते स्वधा नमः स्वाहा । अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहा इति ८ हुतमेवास्य भवति ९ अपि वा सङ्कल्पेन ब्राह्मणान् भोजयेत् सङ्कल्पसिद्धिरस्तु इति वाचयित्वा १०

एवमापत्सु कुर्वीत न च नित्यं तु कारयेत्
ये नित्या उपासते श्राद्धानि च हवींषि च ११

गामत्र कुर्यादिति बोधायनः १२ तस्या औपवसथ्यया कल्पो व्याख्यातः १३ आमिक्षया वैतत्क्रियत इति शालीकिः १४ अपूपेनेत्यौपमन्यवः १५ चरुणा वेत्योपमन्यवीपुत्रः १६ पितृणामनृणो भवति इति विज्ञायते १७ अथोपनिष्क्रम्य बाह्यानि चित्रियाण्यभ्यर्च्य त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा प्रतोदमिषुं च ब्राह्मणेभ्यो दत्त्वा प्रदक्षिणीकृत्य गृहानेत्य अध्वर्युं वृणीते कुनखिनमाङ्गिरसमिति १८

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने नवमोऽध्यायः

## अथ प्रथमप्रश्ने दशमोऽध्यायः

विवाहो व्याख्यातः । अत्राग्न्याधेयस्य कालः १ यथाश्रद्धमत ऊर्ध्वं जीवति पितर्यग्नीनादधीतेति बोधायनः २ जीवति मृते वा जायामवाप्य दशमेऽहनीति शालीकिः ३ मा दुर्ब्राह्मणो भवति ४ अथाप्युदाहरन्ति यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् । स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः । इति ५ औपासनो वा नित्यो धार्य इति न दुर्ब्राह्मणो भवति ६ औपासनं वा धारयमाणो ब्रह्मौदनं कृत्वोत्सृज्य कर्माणि कर्मण्येवैनं पुनस्संस्कृत्याहरति ७ यद्यु वै नाधास्यमानो भवति नैनमुत्सृजति ८ अथ वै भवति अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्तस्या उच्छेषणमददुस्तत्प्रश्नात् इति ९ यस्य पत्नी गृहे ऋतुमती भवति तस्यैतद्व्रतं यथा विवाहे त्रिरात्रम् १० एतावदेव नाना नात्र पत्नी दण्डेन सह शेते । न स्नाति । चतुर्थ्यां स्नाति । ब्रह्मौदनस्य च प्राश्नाति ११ यः कामयेत देवेभ्य ऋषिभ्यः पितृभ्योऽनृणो भूयासमिति तस्यैतद्व्रतमृतावृतौ भवति १२ पुंसवनं विष्णव आहुतीश्च नित्याः १३ पुंसवनप्रभृत्याज्याभिघारितं पत्न्यश्नात्या प्रसवात् १४ अष्टममासमुष्णोदकेन स्नात्वा विष्णवे बलिमुपहृत्य व्रतयति १५ अथ पुत्रप्रसूर्भवतीति विज्ञायते

१६

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने दशमोऽध्यायः

अथ प्रथमप्रश्ने एकादशोऽध्यायः

स यदि पुत्रप्रसूर्भवति प्रसिद्धमौपासने जातकर्म कृत्वाऽन्यत्र फलीकरणहोमं जुहोति स सूतकाग्निर्भवति १ तं दशाहं धारयति २ अथ नवम्यां व्युष्टायां सूतकाग्नावाज्यं विलाप्योत्पूय युगमुत्थापयति ब्रह्मजज्ञानम् इति ३ अथो-दकुम्भमुत्थापयति भूर्भुवस्सुवरोम् इति ४ अथैनमप्सु विसर्जयति समुद्रं वः प्रहिणोम्यक्षितास्स्वां योनिमपि गच्छत । अच्छिद्रः प्रजथा भूयासं मा परासेचि मत्पयः इति ५ अथैतेनैव यथेतमेत्य सूतकाग्निमुपतिष्ठते बोधा नो अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधा वः । पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तनुवं वन्दे अग्ने इति ६ अथ पुत्रप्रसूमुपतिष्ठते सबोधि सूरिर्मघवा वसुदा वा वसुपतिः । युयोध्यस्मद्द्वेषांसि इति ७ अथ कुमारमुत्थापयति उत्तिष्ठ ब्रह्मणस्पते । देवयन्तस्त्वेमहे । उपप्रयन्तु मरुतस्सुदानवः । इन्द्र प्राशूर्भवा सचा इति ८ अथैनमादायोपनिष्क्रम्य आदित्यमुदीक्षयति उद्वयं तमसस्परि उदुत्यं चित्रं तद्विष्णोः परमं पदम् इति चतसृभिः ९ अथ तेनैव यथेतमेत्य कुमारं मातृहस्ते दत्वा सूतकाग्ना वाज्यस्य जुहोति हिरण्यगर्भस्स-मवर्तताग्रे इत्यान्तादनुवाक्यस्य प्रत्यृचम् १० उत्सृजसि सूतकाग्निम् २२ आयुर्दा अग्ने हविषो जुषाणः इत्यरण्योर्वा समारोपयते १२ तमुपनयने मन्थति १३ अथौपासनमुपतिष्ठते अग्न आयूंषि पवसे अग्ने पवस्व स्वपाः इति द्वाभ्याम् १४ ज्योतिष्मत्या पुत्रस्य नाम गृह्णाति अन्नादमेवैनं करोति इति ब्राह्मणम् १५ अथैनं मूर्ध्न्यवघ्रायाभिमन्त्रयते अग्निरायुष्मान् इति पञ्चभिः पर्या यैः १६ प्रवासादेत्यागतं वा पुत्रमेतैरेवाभिमन्त्रयते १७ प्रसिद्धं दशम्यामुत्थानम् १८ दशम्यां द्वादश्यां वा नामकरणम् १९ नामकरणोपनिष्क्रामणान्नप्राशनानि ब्राह्मणभोजनादेवैकेषाम् २० पुण्याहवाचनादेवैकेषाम् २१ प्रसिद्धे चौळोप नयने २२

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने एकादशोऽध्यायः

अथ प्रथमप्रश्ने द्वादशोऽध्यायः

अथोपनीतस्याव्रत्यानि भवन्ति १ नान्यस्योच्छिष्टं भुञ्जीतान्यत्र पितृज्येष्ठाभ्याम्

२ न स्त्रिया सह भुञ्जीत ३ मधुमांसश्राद्धसूतकान्नमनिर्दशाहं सन्धिनीक्षीरं छत्राकनिर्यासौ विलयनं गणान्नं गणिकान्नमित्येतेषु पुनस्संस्कारः ४ प्रतिषिद्धदेशगमनमित्येकेषाम् ५ अथाप्युदाहरन्ति सौराष्ट्रं सिन्धुसौवीरमवन्तीं दक्षिणापथम् । एतानि ब्राह्मणो गत्वा पुनस्संस्कारमर्हति । इति ६ अथ पुनस्संस्कारान् व्याख्यास्यामः ७ अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पालाशीं समिधमाज्येनाक्त्वाऽभ्याधापयन् वाचयति पुनस्त्वाऽऽदित्या रुद्रा वसवस्समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वं तनुवो वर्धयस्व सत्यास्सन्तु यजमानस्य कामास्स्वाहा इति ८ अथाव्रत्यप्रायश्चित्ते जुहोति यन्म आत्मनो मिन्दाऽभूत् पुनरग्निश्चक्षुरदात् इति द्वाभ्याम् ९ अथ पक्वाज्जुहोति सप्त ते अग्ने समिधस्सप्त जिह्वाः इति १० अथाज्याहुतीरुपजुहोति येन देवाः पवित्रेण इति तिसृभिरनुच्छन्दसम् ११ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् १२ अथापरः आपरिधानात्कृत्वा पालाशीं समिधमाधायाव्रत्यप्रायश्चित्ते जुहोति १३ अथ व्याहृतिभिर्जुहोति १४ अथापरः ब्राह्मणवचनादेव सावित्र्या शतकृत्वो घृतमभिमन्त्र्य प्राश्य कृतप्रायश्चित्तो भवति १५ गुरोर्वोच्छिष्टं भुञ्जीत १६ अथाप्युदाहरन्ति वपनं दक्षिणादानं मेखलादण्डमजिनं भैक्षाचर्या व्रतानि चैतानि निवर्तन्ते पुनस्संस्कारकर्मणीति १७ एते पुनस्संस्कारा व्याख्याताः १८

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने द्वादशोऽध्यायः

## अथ प्रथमप्रश्ने त्रयोदशोऽध्यायः

वेदमधीत्य स्नात्यन्नुपकल्पयते एरकां चोपबर्हणं च नापितं क्षुरं च दारूणि चोपस्तरणं च वृकलांश्च दन्तधावनमुष्णाश्चापश्शीताश्च सर्वसुरभिपिष्टं चाञ्जनं च स्रजं चादर्शं चाहतं च वासः प्रावारं च वसनान्तरं बादरमणिं सुवर्णोपधानं सूधं च प्रवर्तौ च दण्डं चोपानहौ च छत्रमानडुहं चर्म सर्वलोहितमित्येतेऽस्य सम्भारा उपक्लृप्ता भवन्ति १ अथ स्नानस्य मीमांसा २ रोहिण्यां स्नायादित्येकम् प्राजापत्यं वा एतन्नक्षत्रं तदस्य प्राजापत्य एव नक्षत्रे स्नातं भवत्यथो सर्वान् रोहान् रोहति इति ३ तिष्ये स्नायादित्येकम् बार्हस्पत्यं वा एतन्नक्षत्रं तदस्य बार्हस्पत्य एव नक्षत्रे स्नातं भवत्यथो बृहस्पतिप्रसूतोऽसानि इति ४ उत्तरयोः फल्गुन्योस्स्नायादित्येकम् भग्यं वा एतन्नक्षत्रं तदस्य भग्य एव नक्षत्रे स्नातं भवत्यथो भग्योऽसानि इति ५ हस्ते स्नायादित्येकम् सावित्रं वा एतन्नक्षत्रं

तदस्य सावित्र एव नक्षत्रे स्नातं भवत्यथो सवितृप्रसूतोऽसानि इति ६ चित्रायां स्नायादित्येकम् ऐन्द्रं वा एतन्नक्षत्रं तदयैन्द्र एव नक्षत्रे स्नातं भवत्यथो चित्रोऽसानि इति ७ विशाखयोस्स्नायादित्येकम् ऐन्द्राग्नं वा एतन्नक्षत्रं तदस्यैन्द्राग्न एव नक्षत्रे स्नातं भवत्यथो विशाखोऽसानि प्रजया पशुभिः इति ८ एतेषामेकस्मिन्नापूर्यमाणपक्षे पुरादित्यस्योदयाद्व्रजमभिप्रपद्यते नैनमेत-दहरादित्योभितपेत्तदहस्स्नातानां मुखं वा एष एतत्तेजसा यशसा तपति ९ अन्तर्लोम्ना चर्मणा व्रजमभिनिध्नन्ति १० पूर्वार्धमध्ये व्रजस्याग्निमुपसमाधाय सम्परिस्तीर्य आहरन्त्येतान् सम्भारान् सकृदेव सर्वान् यत्सह सर्वाणि मानुषाणि इत्येतस्मात् ब्राह्मणात् ११ दक्षिणतो ब्राह्मण उपविशति १२ उत्तरत उदपात्रं पालाशीं च समिधं निदधाति १३ अपरेणाग्निमुदीचीन-प्रतिषेवणामेरकां साधिवासामास्तीर्य तस्यां प्राङ्मुख उपविशति १४ उत्तरतो नापितः १५ उत्तरत उपबर्हणम् १६ आमध्यन्दिनं भिक्षां दद्यात् १७ अपीह गां पचेद्वशा चेत्स्यादत्रैताम् १८ पालाशीं समिधमाज्येनाक्त्वा मध्यन्दि-नेऽभ्यादधाति इमं स्तोममर्हते जातवेदसे रथमिव संमहे मा मनीषया । भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव स्वाहा इति १९ अथैरकायामुदीचीनशिरा निपद्यते त्र्यायुषं जमदग्ने कश्यपस्य त्र्यायुषं अगस्त्यस्य त्र्यायुषमृषीणां त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् इति २० क्लिद्यमानमनुमन्त्रयते शिवा मे भवथ संस्पर्शाः इति २१ क्षुरमभिमन्त्रयते क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिंसीः इति २२ उप्यमानमनुमन्त्रयते यत्क्षुरेण वर्चयसि वप्ता वपसि केशश्मश्रु वर्चया मे मुखं मा म आयुः प्रमोषीः इति २३ श्मश्रूण्येवाग्रे वपतेऽथोपपक्षावथ वेशान् यथोपपादभितराण्यङ्गानि २४ एतस्माद्ध्येषा जरसा पूर्व आयुषि प्रयान्ति पर्व आयुष्यन्नादा भवन्ति य एवं विद्वासो लोमानि वापयन्ते स यदि लोमानि वापयिष्यमाणस्स्यात् केशश्मश्रु वापयित्वा लोमानि संहृत्य नखानि निकृन्त-यीत २५ अथैनानि समुच्चित्य ब्रह्मचारिणे प्रयच्छन्नाह इमानि हृत्वा दर्भस्तम्बे वोदुम्बरमूले वा निधत्तात् इति । तानि स तत्र निदधाति २६ अपरेणाग्निं प्राङ्मुख उपविश्य मेखलां विस्रंसयति इमं विष्यामि वरुणस्य पाशम् इति २७ योऽस्य तत्र रातेः पुत्रो वान्तेवासी भवति तस्मै प्रयच्छन्नाह इमा हृत्वा न्यग्रोधे वोदुम्बरमूले वा निधत्तात् इति २८ तामु स तत्र निदधाति इदमहममुष्यायणस्य शुचा पाप्मानमपगूहाम्युत्तरस्य द्विषद्भ्यः इति २९ वृकलैः प्रधाव्य दान्तान्वि-

धावते अन्नाद्याय व्यपोहध्वं भगो सजा यमागतम् । स मे मुखं प्रसर्पतु वर्चसे च भगाय च इति ३० उभयीरपस्संनिषिञ्चति उष्णासु शीता आनयति देवमानुषस्य व्यावृत्त्यै इति ३१ तासामञ्जलीनोपहत्याभिषिञ्चति आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति तिसृभिः षोढा विहितो वै पुरुषः इत्येतस्मात् ब्राह्मणात् ३२ अथैतस्य सर्वसुरभिपिष्टं समुदायुत्य त्रिः प्रसिञ्चति नमश्शाकजञ्जभाभ्यां तमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः इति ३३ अनुलिम्पेत् अप्सरासु यो गन्धो गन्धर्वेषु च यद्यशः । दिव्यो यो मानुषो गन्धस्स मामाविशात्विह इति ३४ अहतं वासः परिधत्ते स्वा मा तनूराविश शिवो मा तनूराविश इत्येवमेव सायमेवमेवात ऊर्ध्वम् ३५ अथैतं बादरमणिं स्वर्णोपधानं सूत्रे प्रोत्य दर्व्यामाधाय दर्वीदण्डे सूत्रेण पर्यस्य जुहोति इयमोषधे त्रायमाणा सहमाना सहस्वती । सा मा करोतु सोमवर्चसं सूर्यवर्चसं ब्रह्मवर्चसं ब्रह्मवर्चसिनं मान्नादं करोतु स्वाहा इति ३६ अथैनमुदपात्रेण परिप्लावयति विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमही द्विषः इति ३७ अपाशोसि इत्युक्त्वाऽन्दण्या परिहरति । वध्यं हि प्रत्यञ्चं प्रतिमुञ्चन्ति व्यावृत्त्यै इत्येतस्माद्ब्राह्मणात् ३८ अथैतौ प्रवर्तौ सूत्रे प्रोत्य दर्व्यामाधाय दर्वीदण्डे सूत्रेण पर्यस्य जुहोति आयुष्यं वर्चस्यं रायस्पोषमौद्भिद्यम् । इदं हिरण्यं वर्चसे जैत्र्यायाविशतादिमं रयिं स्वाहा इति ३९ द्वितीयां जुहोति शुनीमिवाहं हिरण्यस्य पितुरिव नामग्राहम् । तं मा करोतु सोमवर्चसं सूर्यवर्चसं ब्रह्मवर्चसिनं माऽन्नादं करोतु स्वाहा इति ४० तृतीयां जुहोति उच्चैर्वाजि पृतनासाहं सभासाहं धनञ्जयम् । सर्वास्समृद्धीर्ऋद्धयो हिरण्ये यास्समाहितास्स्वाहा इति ४१ चतुर्थीं जुहोति विराजं च स्वराजं चाभिष्टीर्या च नोगृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा सं सृजामसि स्वाहा इति ४२ पञ्चमीं जुहोति यशो मा कुरु ब्राह्मणेषु यशो राजसु मा कुरु । यशो विश्येषु शूद्रेष्वहमस्मै यशस्तव स्वाहा इति ४३ अथैतावुदपात्रेऽनुप्लावयति विश्वा उत त्वया वयम् इत्येतया ४४ तयोरन्तरमादाय दक्षिणे कर्ण आबध्नाति आयुष्यं वर्चस्यम् इत्येताभिः पञ्चभिः ४५ अथैनमनुपरिवर्तते ऋतुभिस्त्वातवैस्संवत्सरस्य धायसा तैस्त्वा सहानुकरोमि इति ४६ एवमेवोत्तरे कर्णे प्रवर्तमाबध्नीत ४७ अत स्रजं प्रतिमुञ्चति शुभिके शिर आरोह शोभयन्ती मुखं मम । मुखं हि मम शोभय भूयांसं च भगं कुरु । यां त्वा जहार जमदग्निश्श्रद्धायै कामायान्यै । तां त्वेमां प्रतिमुञ्चामि

वर्चसे च भगाय च इति ४८ त्रैककुदेनाञ्जनेनाङ्क्ते यदाञ्जनं त्रैककुदं जातं हिमवत उपरि । तेन वामाञ्जे मयि पर्वतवर्चसमस्तु इति ४९ आदर्शे परिपश्यते यन्मे मनः परागतमादर्शे परिपश्यतः । इदं तं मयि पश्याम्यायुष्यं वर्चस्यं मे अस्तु इति ५० अथोपानहावुपमुञ्चते द्यौरसि इति दक्षिणे पादे । पृथिव्यसि इत्युत्तरे ५१ अथ दण्डमादत्ते सखा मा गोपाय इति ५२ छत्रमादत्ते दिव्योऽसि सुपर्णोऽन्तरिक्षान्मा पाहि इति ५३ अथोपनिष्क्रम्य दिशमुपतिष्ठते देवीष्षडुर्वीरुरुणः कृणोत विश्वेदेवास इव वीरयध्वम् । मा हास्महे प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् इति ५४ चन्द्रमसं सूपस्थाः इति ५५ यत्र यत्र कामयते तदेतीत्येतत्समावर्तनम् ५६

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने त्रयोदशोऽध्यायः

## अथ प्रथमप्रश्ने चतुर्दशोऽध्यायः

अथ व्रतस्नातकस्य वेदमनधीयानस्य तूष्णीं समावर्तनम् १ तीर्थे स्नात्वाऽग्निमुपसमाधाय सम्परिस्तीर्य मध्याह्ने पालाशीं समिधमाज्येनाक्त्वा-ऽभ्यादधाति इमं स्तोमम् इत्येतया २ तूष्णीं वपनं तूष्णीं सम्भारग्रहणं च कृत्वा रथस्य दक्षिणं चक्रमभिमृशति रथन्तरमसि इति । सव्यं बृहदसि इति ३ रथस्य मध्यममभिमृशति वामदेव्यमसि इति ४ रथं प्रवर्तमानमभिमन्त्रयते रथं वामश्विना रथो मा दुःखे मा सुखे रिषत् इति ५ रथाभावेऽप उपस्पृश्य भूमिमभिमृशति इह धृतिरिह विधृतिरिह रन्तिरिह रमतिः इति ६ अथाप उपस्पृश्य हृदयमभिमृशति मयीन्द्रियं वीर्यम् इति ७ अपो व्रीहिभिर्यवैर्वा समुदायुत्य शिष्याय प्रयच्छति ८ तत्प्रतिगृह्णाति आ म आगाद्वर्चसा यशसा इति ९ ब्राह्मणः आ म आगाद्वर्चसा यशसा संसृज प्रियः पशूनामधिपतिः प्रजानाम् इति तदुपस्पृश्य वदेत् १० प्राक्सिक्तं तज्जलं पुरस्तात्सिञ्चति ११ अथ दधिमध्वाज्योदकमिश्रं वा दधिमध्वाज्योदकक्षीरमिश्रं वाऽर्घ्यमिति निवेदयेत् १२ शिष्योऽर्घ्यमभिमन्त्रयते स माऽवतु समाऽवन्तु स माजुषताम् इति १३ अथ द्वाभ्यां हस्ताभ्यां प्रतिगृह्णाति आ म आगाद्वर्चसा इति १४ तस्मिंश्चित् किञ्चिदापतितं स्यात्तदङ्गुष्ठेन च महानाम्न्या च सङ्गृह्येमां दिशं निरस्यति नेष्टा विद्धिम् इति १५ अथाप उपस्पृश्य सर्वाभिरङ्गुलीभि-स्समुदायुत्य प्राश्नाति इदं ते बलं हरामि इति प्रथमम् । श्रेष्ठं माऽधिपतिं कुरु इति द्वितीयम् । सोमोऽसि सोमपं मा कुरु इति तृतीयम् अन्नमस्यन्नं मा

कुरु इति चतुर्थम् १६ एवं चतुष्कृत्वः प्राश्य त्रिरनुपिबेन्न सर्वं न तृप्तिं गच्छेत् १७ यमात्मनश्श्रेयां समिच्छेत्तस्मै शेषं दद्यादिति १८ अथ कर्णे दाम्ना बद्धां गामनुमन्त्रयते जहि मे पाप्मानमुपवेत्तुः इति १९ अथ गामुत्सृजेत् गौर्धेनुभव्या इति २० अथादैनमाहृतं प्राश्नाति ब्रह्मन् त्वाश्नामि इति २१ अथोदकमिश्रं सक्तुमाहृतमश्नाति ब्रह्मन् त्वाऽश्नामि इति २२ एवमेव जडबधिरमूकान्धकुब्जादीनामशक्तस्तूष्णीं समिधमाधाय शेषं तूष्णीमाचरेत् २३

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने चतुर्दशोऽध्यायः

## अथ प्रथमप्रश्ने पञ्चदशोऽध्यायः

त्रयः स्नातका भवन्ति वेदस्नातको व्रतस्नातको वेदव्रतस्नातकश्चेति १ अथैतेषामत ऊर्ध्वं नित्यानि भवन्ति औपासनो दण्डः कमण्डलुरुपानहौ छत्रं द्वे वाससी द्वे यज्ञोपवीते उष्णीषमजिनमन्तर्वासः इति २ पूर्वेण ग्रामान्निष्क्रमणप्रवेशनानि च वाग्यत उत्तरेण वा ३ बहिर्वाचं विसृजेत् ४ प्रश्नमनुवाकं वाऽधीयीत ५ ब्रह्मपरो ब्रह्मनित्यो देवेभ्य ऋषिभ्यः पितृभ्यस्तर्पणानि कृत्वाऽश्नीयात् ६ दिवा नोष्णीषी नक्तमुष्णीषी मूत्रपुरीषोत्सर्गेषु च निवीती नित्ययज्ञोपवीती ७ तिष्ठन्नाचामेत् प्रह्वो वा ८ सन्ध्ययोश्च बहिर्ग्रामादासनं वाग्यतश्च ९ आ जायासङ्गमात् स्नातका भवन्त्यत ऊर्ध्वं गृहस्थाः १० अविच्छेदाय वेदव्रतैर्व्यवहरेत् कौमारेण माहेश्वरेण धान्वन्तरेणेति ११

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने पञ्चदशोऽध्यायः

## अथ प्रथमप्रश्ने षोडशोऽध्यायः

स यद्यौणमनं न धारयत्या दशाहादेवैनमाज्येन व्याहृतीभिर्हुत्वाऽग्नीनाधास्यमानो ब्रह्मौदनं कृत्वोत्सृजति १ कर्मणिकर्मण्येवैनं पुनस्संस्कृत्याहरति २ यद्यु वै नाधास्यमानो भवति नैनमुत्सृजति ३ यस्मिन्नग्नावुपनयति तस्मिन् व्रतचर्यं तस्मिन् समावर्तनं तस्मिन् पाणिग्रहणं तस्मिन् गृह्याणि कर्माणि क्रियन्ते । तस्मिन् प्रजासस्कारा इत्येके ४ स एष उपनयनप्रभृति व्याहृतिभिस्समिद्भिर्हूयत आ समावर्तनात् ५ समावर्तनप्रभृति आज्येन व्याहृतिभिरेव हूयत आ पाणिग्रहणात् ६ पाणिग्रहणप्रभृति व्रीहिभिर्यवैर्वा ७ हस्तेनैते आहुती जुहोति अग्नये स्वाहा प्रजापतये स्वाहा इति सायम् ८ सूर्याय स्वाहा प्रजापतये स्वाहा इति प्रातरपि ९ अग्निहोत्रहविषामन्यतमेन हूयते १० अथास्य

पार्वणः प्रसिद्ध आग्नेयस्थालीपाकः तस्यायुधानि भवन्त्युलूखलमुसले कृ-
ष्णाजिनं शूर्पं स्फ्यः चरुस्थाल्याज्यस्थाली स्रुक्स्रुवं दर्वी मेक्षणम् इति ११
अथामावास्यायां प्रसिद्धः पिण्डपितृयज्ञः १२ नात्र गार्हपत्यशब्दो विद्यते १३
एतेनास्य दर्शपूर्णमासयाजित्वम् १४ उपनयनादिरग्निस्तमौपासन इत्याचक्षते
१५ पाणिग्रहणादिरित्येके १६ नियो धार्योऽनुगतो मन्थ्यः श्रोत्रियागाराद्वाहार्यः
१७ उपवासश्चानुगतेऽन्यतरस्य भार्यायाः पत्युर्वा १८ अपि वैकां जुहुयात्
अयाश्चाग्ने इति १९ अथास्याहुतप्रायश्चित्तं मनो ज्योतिर्जुषाताम् इति २०
अथास्यातिपन्न प्रायश्चित्तम् अग्ने नया देवानाम् इति २१ अथास्या-
व्रत्यप्रायश्चित्तं त्वमग्ने व्रतपा असि यद्वो वयम् इति २२ अथास्या-
नाज्ञातप्रायश्चित्तम् अनाज्ञातं पुरुषसम्मितः इति २३ अथ यद्युखा भिद्येत
तामभिमन्त्रयते अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन् पुनः इति २४ अथाज्यं
विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा सन्तनीं जुहोति इध्मो वेदिः परिधयश्च
सर्वे यज्ञस्यायुरनुसञ्चरन्ति । त्रयस्त्रिंशत्तन्तवो ये वितत्रिरे य इमं यज्ञं स्वधया
मदन्ते तेषां छिन्नं प्रत्येतद्दधामि स्वाहा इति २५ अथान्यामाहरति घर्मो
देवानाप्येतु इति २६ एकाहं मनस्वतीं द्व्यहं वारुणीं त्र्यहं तन्तुमतीं चतस्रो-
ऽभ्यावर्तिनीराद्वादशाहात् २७ द्वादशाहं विच्छिन्नः पुनराधेयः २८ अथ यदि
द्वादशाहं विच्छिन्नः पुनराधेयस्स्याद्या प्रकृतिस्तत आहरणं प्रणवेनाहाति ब्रह्मा
प्रणवेन प्रसौति २९ व्याहृतिभिस्पिकतोपोप्ते यथोपपादमग्न्याधेयिकान्
सम्भारानाहृत्य व्याहृतिभिर्नियुप्योपसमाधायोपतिष्ठते जुष्टोदमूनाः इति ३०
अथैनं प्रदक्षिणमग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्याज्यं विलाप्योत्पूय स्रुक्स्रुवं
निष्टप्य संसृज्य स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्यग्नौ परिश्रृते पूर्णाहुतिं
जुहोत्यपरिश्रृते वा सप्त ते अग्ने इति ३१ पूर्णाहुतौ वरं ददाति धेनुमृषभमनड्वाहं
कंसं हिरण्यं वासो वा इति ३२ अपरं चतुर्गृहीतं गृहीत्वा तिस्रस्त-
न्तुमतीर्विग्राहं जुहोति तन्तुं तन्वन् उद्बुध्यस्वाग्ने त्रयस्त्रिंशत्तन्तवः इति ३३
अपरं चतुर्गृहीतं गृहीत्वा चतस्रोऽभ्यावर्तिनीर्विग्राहं जुहोति अग्नेऽभ्यावर्तिन्
अग्ने अङ्गिरः पुनरूर्जा सहरय्या इति ३४ अपरं चतुर्गृहीतं गृहीत्वा मनस्वतीं
जुहोति मनो ज्योतिः इति ३५ अपरं चतुर्गृहीतं गृहीत्वा प्राजापत्यां जुहोति
प्रजापते न त्वदेतान्यन्यः इति ३६ अपरं चतुर्गृहीतं गृहीत्वाऽनुख्यां जुहोति
अन्वग्निरुषसामग्रमख्यत् इति ३७ अपरं चतुर्गृहीतं गृहीत्वा प्रायश्चित्तं जुहोति
अयाश्चाग्ने इति ३८ अपरं चतुर्गृहीतं गृहीत्वा ज्योतिष्मतीं जुहोति उद्वयं

तमसस्परि इति ३९ अपरं चतुर्गृहीतं गृहीत्वाऽऽयुर्दा जुहोति आयुर्दा अग्ने इति ४० अपरं चतुर्गृहीतं गृहित्वा द्वे मिन्दाहुती जुहोति यन्म आत्मनो मिन्दाऽभूत् पुनरग्निश्चक्षुरदात् इति ४१ अपरं चतुर्गृहीतं गृहीत्वा व्याहृतीर्व्यस्तास्समस्ताश्च जुहोति ४२ एकाहुत्या वा प्रतिसन्धानं पुनस्त्वादित्या रुद्रा वसवः इति ४३ अथास्याध्वनि समारोपणम् अयं ते योनिर्ऋत्वियः इति ४४ अरणयोर्वा समारोप्य मथित्वा जुहुयात् ४५ अपि वात्मानि समारोपणं भवति या ते अग्ने यज्ञिया तनूः इत्यात्मनि समारोप्य उपावरोह जातवेदः इति लौकिकेऽग्नावुपावरोह्य जुहुयात् ४६ अपि वा अयं ते योनिर्ऋत्वियः इति समिधि समारोप्य आजुह्वानः उद्बुध्यस्वाग्ने इति द्वाभ्यां लौकिकेऽग्नौ समिधमभ्याधाय जुहुयात् ४७ आत्मानि समारूदेष्वग्निषु न खादेन्न पिबेन्नोपरिशय्यायां शयीत नाप्सु निमज्यान्न मैथुनं व्रजेत् ४८ कामं खादेत्कामं पिबेत्कामं त्वेवोपरि शय्यायां शयीत पालाशीमाश्वत्थीं खादिरीमौदुम्बरीं वा ४९ तेषामेतेन प्रसिद्धं समारोपणम् ५०

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने षोडशोऽध्यायः

स यद्यौपासनं धारयति । त्रयः स्नातका भवन्ति । अथ व्रतस्नातकस्य । वेदमधीत्य स्नास्यन् । अथोपनीतस्य । सा यदि पुत्रप्रसूः । अत्राग्न्याधेयस्य कालः । अथ वै भवति किञ्चित् । अथ दशमेऽहनि । अथ विवाहस्य । सर्वत्र दर्वीहोमेषु । अथ शुचौ समे देशे । अथापरेद्युर्देवानाम् । विष्णुश्च ह वै । अथ वै भवति सर्वेण वै । अथ वै भवति जायमानः १६ अथ वै भवति जायमानः । अथ वै भवति सर्वेण वै । विष्णुश्च ह वै । अथापरेद्युर्देवानाम् । अथ शुचौ समे देशे । सर्वत्र दर्वीहोमेषु । अथ विवाहस्य । अथ दशमेऽहनि । अथ वै भवति किंचित् । अत्राग्न्याधेयस्य कालः । सा यदि पुत्रप्रसूः । अथोपनीतस्य । वेदमधीत्य स्नास्यन् । अथ व्रतस्नातकस्य । त्रयस्स्नातका भवन्ति । स यद्यौपासनं न धारयति १६

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमः प्रश्नः समाप्तः

अथ द्वितीयप्रश्ने प्रथमोऽध्यायः

अथ व्रीहिभ्यो यवेभ्यश्च नवानामनिरुप्तं स्थालीपाकं श्रपयित्वाऽग्निमुपस-

माधाय संपरिस्तीर्याघारावाघार्याज्यभागाविष्ट्वाग्रयणदेवताभ्य इन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां सोमाय स्विष्टकृच्चतुर्थीभ्यो जुहुयात् १ कामं पुरस्तात्स्विष्टकृतोऽज्यानीरुपजुहोति २ प्रसिद्धौ प्राशनमन्त्रौ ३ वैश्वदेवं कृत्वा ब्राह्मणेभ्यो दत्वा प्राशनम् ४ एतेन सर्वासामोषधीनामाग्रयणं व्याख्यातमन्यत्र श्यामाकवेणुयवेभ्यश्च ५ सौम्यश्श्यामाकश्चरुरग्नीन्द्रो वेणुयवानां वैश्वदेवो वा ६ समानौ प्राशनमन्त्रौ ७ अथ फलानां मूलानां भक्षणानां ब्राह्मणेभ्यो दत्वा प्राशनमेव ८ पुष्पाणामन्येषां च नवानां ब्राह्मणेभ्यो दत्वोपयोगः ९ अथ षट्सु षट्सु मासेष्वयनप्रतिपत्तौ वाऽथ देवयजनो-ल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा स्रुक्स्रवं निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा सग्राहं षड्ढोतारं हुत्वामिक्षां श्रपयित्वा पक्वमोदनं पायसं वा याचति १० तमभ्युक्ष्याग्नावधिश्रयति ११ आज्यं निर्वपति १२ अथाज्यमधिश्रयति १३ उभयं पर्यग्नि कृत्वा मेक्षणं स्रुवं च संमार्ष्टि १४ अथैतं चरुं श्रपयित्वाभिघार्योदञ्चमुद्वास्य प्रतिष्ठितमभिघारयति १५ परिधानप्रभृत्याग्नि-मुखात् कृत्वा पुरस्तात्स्वाहाकृतिं स्रुवाहुतिं जुहोति स्वाहा देवेभ्यः इति १६ अथ स्रुचि चतुर्गृहीतं गृहीत्वा वपां जुहोति जातवेदो वपया गच्छ देवान् त्वं हि होता प्रथमो बभूथ । घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतं हविरदन्तु देवाः स्वाहा इति १७ अथोपरिष्टात्स्वाहाकृतिं स्रुवाहुतिं जुहोति देवेभ्य-स्स्वाहा इति १८ अथ पक्वाज्जुहोति इन्द्राग्निभ्यां स्वाहा अग्नये स्वाहा इति १९ अथ वाजिनस्य जुहोति घृतं घृतपावानः पिबत वसां वसापावानः पिब-तान्तरिक्षस्य हविरसि स्वाहा त्वान्तरिक्षाय स्वाहा इति २० अथामिक्षायै जुहोति इन्द्राग्नी रोचना दिवः श्नथद्वृत्रम् इति २१ अथ वाजिनस्यैव दिशो जुहोति दिशः प्रदिश आदिशो विदिश उद्दिशस्स्वाहा दिग्भ्यो नमो दिग्भ्य-स्स्वाहा इति २२ अथ पृषदाज्यात् स्रुवाहुतिं जुहोति वनस्पतये स्वाहा इति २३ अथामिक्षाया एव स्विष्टवतीभ्यां सौविष्टकृतं जुहोति २४ अथ स्रुचि चतुर्गृहीतं गृहीत्वा समुद्रं गच्छ स्वाहा इत्येकादश विग्राहं जुहोति २५ जयप्रभृति सिद्धमाधेनुवरप्रदानात् २६ एतेनास्य पशुबन्धयाजित्वं भवति २७ पार्वणेनतोऽन्यानि कर्माणि व्याख्यातान्येकदेवत्यान्याग्रयणेन बहुदेवत्यान्या-मिक्षया पशुबन्ध आचाराद्यानि गृह्यन्ते २८ यथोपदेशं देवताः २९ अग्निं स्विष्टकृतं चान्तरेणोपहोमाः ३० वैश्वदेवे विश्वेदेवाः पौर्णमास्यां पौर्णमासी यस्यां क्रियेत ३१ उपाकरणे समापने च ऋषिर्यः प्रज्ञायते ३२ सदसस्प-

तिर्द्वितीयः ३३ स्त्रियानुपतेन क्षारलवणावरान्नससृष्टस्य तु होमं परिचक्षते ३४ यथोपदेशं काम्यानि बलयश्च ३५ अथापि काम्यानि भवन्ति अथ वै भवति प्रजापतीः प्रजा असृजत तास्सृष्टा इन्द्राग्नी अपागूहताम् इत्येतस्माद्ब्राह्मणात् ३६ येऽमुत्र पुरोडाशास्त इह चरवो यथादेवतं याज्यापुरोनुवाक्याः योऽमुत्र वषट्कारस्स इह स्वाहाकार इति ३७ अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि पशुबन्धस्सोम इत्येष आघारवान् दर्वीहोमः ३८ अथात आग्निहोत्रिकं व्याख्यास्यामः ३९ सर्वमेवैतत् स्वाहाकारप्रदानं कुर्यादिति सिद्धम् ४० आ परिधानात्कृत्वा अमुष्मै स्वाहा इति दैवतं जुहोति ४१ अग्निस्स्विष्टकृद्द्वितीयः ४२ द्विर्जुहोति द्विर्निमार्ष्टि द्विः प्राश्नात्युत्सृप्याचामति निर्लेढि इति ४३ एष आग्निहोत्रिकः ४४ अथातोऽपूर्वं व्याख्यास्यामः ४५ सायंप्रातर्दशहोतारं जुहुयात्पर्वसु चतुर्होतारमाग्रयणेष्वज्यानीः चातुर्मास्येषु पञ्चहोतारं पशुबन्धं षड्ढोतारमृतुमुख ऋतुमुखीय सोमे सप्तहोतारम् इति पयसा दशहोतारं जुहयादन्नेन चतुर्होतारं पायसेनाज्यानीः पृषदाज्येन पञ्चहोतारमामिक्षया षड्ढोतारमाज्येन ऋतुमुखीयं सोमेन सप्तहोतारम् इति ४६ स एष औपासननिष्ठानां याथातथ्यदर्शितां निरीप्सितानां श्रद्दधानानामपूर्वो होमः प्रजासंस्कारार्थो वा किञ्चिज्ज्ञानानां प्राकृतेन हविषां यत्कामयते तज्जुहोति हुतमेवास्य तद्भवति ४७ इत्यपूर्वो व्याख्यातः ४८

इति बोधायनीये गृह्यपरिभाषासूत्रे द्वितीयप्रश्ने प्रथमोऽध्यायः

## अथ द्वितीयप्रश्ने द्वितीयोऽध्यायः

अथ वै भवति निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानाम् इति १ कथमु खल्वेतानि विजानीयादिति २ उपरिष्टादंसाभ्यां ग्रीवां हृदयं च सपरिगृह्य हृदयस्याधस्तादूर्ध्वं नाभेरङ्गुष्ठाभ्यां परिगृह्णाति तन्निवीतं मनुष्याणामिति ऋषीणामित्येवेदमुक्तं भवति ३ एतेन कृष्णद्वैपायनादयो व्याख्याताः ४ तेषां सप्त ऋषयो राजानो भवन्ति येह सन्ततिस्ते मनुष्या इति ५ अथ निवीतकार्याणि ऋषीणां तर्पणं व्यवायः प्रजासंस्कारोऽन्यत्रहोमान्मूत्रपुरीषोत्सर्गः प्रेतोद्वहनं यानि चान्यानि मनुष्यकार्याणि कण्ठेऽवसक्तं निवीतमिति ६ दक्षिणस्यां सस्योपरिष्टाद्ग्रीवां हृदयं पृष्ठं च परिगृह्य सव्यस्य हस्तस्याधस्तात् प्राचीनावीतं पितृणामिति मृतानामित्येवेदमुक्तं भवति ७ एतेन वैशम्पायनादयो व्याख्याताः ८ तेषां सोमः पितृमान् यमोऽङ्गिरस्वान् अग्नि-

कव्यवाहन इति राजानो भवन्ति या प्रेत्य सन्ततिस्ते पितर इति ९ सव्यस्यांसस्योपरिष्टाद्ग्रीवां हृदयं पृष्ठं च संपरिगृह्य दक्षिणस्य हस्तस्या-धस्तादुपवीतं देवानामित्यमृतानामेवेदमुक्तं भवति १० एतेन ब्रह्म दयो व्याख्याताः ११ तेषामिन्द्रस्सोमो यमो वरुणः कुबेर इति राजानो भवन्ति याऽमुत्र सन्ततिस्ते देवा इति १२ कथमु खलु यज्ञोपवीतमिति विजानीयात् १३ तदेतद्दक्षिणस्य हस्तस्याधस्ताद्भवति योऽयं दक्षिणो हस्तस्य यज्ञ इति यज इत्ययं शब्दो देवपूजासङ्गतिकरणदानेषु यस्मादेतानि कुर्वते तस्माद्यज्ञः १४ वाग्यज्ञस्तस्याग्निरधिदैवतं स चात्र यतस्तस्माद्यज्ञोपवीतम् १५ यश्चाय-मङ्गुष्ठस्स विष्णुस्स यज्ञस्याधिदैवतं तस्माच्च भवतीति तीर्थत्वाच्च १६ वागेव यज्ञो यद्वाचा वदति तदनेन निर्वर्तयतीति १७ यज्ञोपवीतं व्याख्यातम् १८

इति बोधायनीये गृह्यपरिभाषासूत्रे द्वितीयप्रश्ने द्वितीयोऽध्यायः

## अथ द्वितीयप्रश्ने तृतीयोऽध्यायः

अथ वै भवति ब्राह्मण एकहोता । स यज्ञः इति स एष कुसिन्धोऽधिकृतस्तस्य दशहोता निदानं तस्य यश्च कश्चन भवति सोऽन्तरात्मा कुसिन्ध आत्मा यज्ञः परमात्मा स पुरुषः पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं यद्भविष्यदिति तदग्निहोत्रं तदेव तत् कुसिन्धोऽधिकृतस्तदस्य दशहोता निदानं स यज्ञस्स आत्मनि वर्तते तस्योपवीतं यज्ञोपवीतमिति १ अथ वै भवति यज्ञवित्सर्वविद्भवति यज्ञस्सर्वम् इति श्रुतिः तस्माद्याज्ञीषु चिन्तासु रमन्ते तत्त्वदर्शिनः इत्यग्निहोत्रं कुसिन्धमेकहोतृत्वं स्थूरिः केवलमित्येकार्थवाचकाश्शब्दाः श्रद्धालक्षणा भवन्ति अप्सु प्रतिष्ठिताः श्रद्धा वा आपः इति विज्ञायते । ताश्च यज्ञ आप्यमग्निहोत्रमाप्यं कुसिन्धमेवहोतृत्वं स्थौर्यं कैवल्यं तद्ब्रह्मैकाक्षरं परं ब्रह्मेत्योमिति ब्रह्मेति २ अथ वै भवति अक्ति ब्रह्म प्रणक्त्यापः पापं नुदति कर्मणा । नोदनाच्चैव सङ्गानां ब्राह्मणस्तुतिरुच्यते । इति ब्राह्मणत्वमेकहोतृत्वं च । जिह्वाया आप्यत्वादध्यात्मभावेन रसवाचकस्थानत्वादधिभूतभावेन बुद्धिकर्मणोरेकत्वादधिदैवतभावेनाग्नीषोमयोरेकत्वादधिदैवतभावेन एष सो-मो वै चन्द्रमाः इति मानसत्वाद्यज्ञत्वात् प्राजापत्यो यज्ञो यज्ञो मनः इति यज्ञोपवीत्यप आचामेदिति नित्यमित्याचार्यास्सम्प्रतिपन्नाः कथमेतदुच्यत इति ४

इति बोधायनीये गृह्यपरिभाषासूत्रे द्वितीयप्रश्ने तृतीयोऽध्यायः

## अथ द्वितीयप्रश्ने चतुर्थोऽध्यायः

अजिनं वासस्सूत्रं वा द्वितीयम् यस्य यद्भवति तेन स उपव्ययते देवलक्ष्ममेव तत्कुरुते इति ब्राह्मणम् १ अथाप आचम्येति तदपि द्वितीयमब्लिङ्गाभिस्त्रिः पिबेद्व्याहृतिभिस्त्रिः परिमृजेदपि वा व्याहृतिभिस्त्रिः पिबेदब्लिङ्गाभिः त्रिः परिमृजेद्यज्ञस्य देवा देवानां यज्ञ इति यज्ञस्य देवानां च संयोगं करोति २ अथ दर्शपूर्णमासयोश्चत्वार ऋत्विज आदित्योऽध्वर्युश्चन्द्रमा ब्रह्माग्निर्होता वायुराग्नीध्रश्चातुर्मास्यप्रभृत्यश्विनावध्वर्यू पर्जन्य उद्गातापो होत्रका रश्मयश्च-मसाध्वर्यव इति यज्ञस्य देवानां च संयोगं करोति ३ अथ गृहस्थस्य वैश्वदेवं कृत्वाग्रं दत्वा कालयोर्भोजन मानुषम् ४ मासिमास्यपरपक्षे मासिकं पितृ-णामिति ५ उभौ कालावग्निपरिचर्या च होमाश्चार्धमासेऽर्धमासे पार्वणो वि-धिर्देवानामिति ६ त्रयाणां त्रयो नियमाष्षट् सम्पद्यन्ते षोढाविहितो वै पुरुषः इति तस्मादात्मनिष्क्रयणम् ७ पञ्च महायज्ञाः देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति ८ देवयज्ञस्स्वाहाकारः आ काष्ठात् ९ पितृयज्ञ-स्स्वधाकार औदनपात्रात् १० भूतयज्ञो नमस्कार आपुष्पेभ्यः ११ मनुष्ययज्ञो दानमामूलफलशाकेभ्यः १२ ब्रह्मयज्ञ ओंकार आव्याहृतिभ्यः १३ अथा-स्यातिथयोऽभ्यागता वर्णाश्रमा आनुशंसा अभ्युत्थेया अर्घ्या अर्चनीया आभ्यन्तरा रहस्या विश्वास्याश्च भवन्ति १४ श्रान्तोऽदृष्टपूर्वोऽश्रुतः केवल-मन्नार्थी नान्यत्प्रयोजनो य एति सोऽतिथिर्भवति १५ अपि वा सर्ववर्णाना-मन्यतमः काले यथोपपन्नस्सर्वेषामतिथीनां श्रेष्ठतमोऽतिथिर्भवति १६ श्वश्रूश्व-शुरयोनिसम्बन्धाः स्नेहवन्धमाभिभाषमाणा भूयोभूयोऽभ्यागच्छेरन् तथा प्रेषणिकाश्चाभ्यागता भवन्ति १७ सखा सहाधीतिस्सहाध्वनीनः ब्राह्मणक्षत्रि-यवैश्यरथकाराः सगृहास्साग्निहोत्रिका अनस्विनो रथिनश्चातिथयो भवन्ति १८ तेषामन्तराळे विपङ्क्तीः कृत्वा सर्वान् कामानुपहरेत् सानड्वाहपशूनाम् १९ विज्ञायते च तस्मादनस्वी च रथी चातिथीनामपचिततमावपचिततमो भवति य एवं वेद इति ब्राह्मणम् २०

इति बोधायनीये गृह्यपरिभाषासूत्रे द्वितीयप्रश्ने चतुर्थोऽध्यायः

## अथ द्वितीयप्रश्ने पञ्चमोऽध्यायः

अथ यदि ब्राह्मणः क्षत्रियश्च समेत्यायातां ब्राह्मणोऽतिथिः क्षत्रिये सान्त्वम् १ अथ यदि क्षत्रियो वैश्यश्च समेत्यायातां क्षत्रियोऽतिथिर्वैश्ये सान्त्वम् २ अथ

यदि वैश्यश्शूद्रश्च समेत्यायातां वैश्योऽतिथिश्शूद्रे सान्त्वम् ३ अथ यदि शूद्रमभ्यागतं कर्मणि नियुञ्ज्यात् ४ अथ यदि ब्रह्मचारी मातापित्रोराचार्यार्थं वाऽध्वनि वर्तमानो गृहमागच्छेन्नैनं प्रत्युत्तिष्ठेत् स्वागतमित्युक्त्वासनं पादशौचं च दत्वा कुशलमभिभाष्योपासीत ५ कापालमस्मै दद्यात् नियममेवोपतिष्ठस्व इति ६ उपावृत्ताय भैक्षमिति ब्रुवते गृहादेवान्नं भैक्षमित्युपहरेत्स तस्योपचारः ७ अथ यदि वानप्रस्थमभ्यागतं स्वागतमित्युक्त्वाभ्युत्थायासनं पादशौचं च दत्वा कुशलमभिभाष्योपासीत ८ विदित्वा चरणं कन्दमूलफलशाकान्यारण्याश्चौषधय इत्युपहरेत्स तस्योपचारः ९ अथ यदि यतिमागतं स्वागतमित्युक्त्वाभ्युत्थायासनं पादशौचं च दत्वा कुशलमभिभाष्योपासीत १० नैनं पूर्वमुपामन्त्रयेन्न चास्मै प्रक्रियां प्रकुर्वीत ११ काले त्वन्नं भैक्षमित्युपहरेत्स तस्योपचारः १२ अथ यद्यर्थी वसत्या शय्यादेशमुपकल्प्य काले ज्योतिष्करणं नोपस्तरणमेके ब्रुवते दद्याद्वा १३ बालानां वृद्धानां स्त्रीणां तु विभ्रष्टानां गूढचरितविकृतवेषाणामपि वा श्वचण्डालादीनामानृशंस्यवत् संविभागो विहितः १४ मूढो मत्त उन्मत्त आर्तो भीतो राजा चोरश्चेति सम्भ्रमेणाभ्युस्थेयाः १५ आचार्य ऋत्विक्पिता मातुलः श्वशुरो वेदविद्ब्राह्मणः क्षत्रियोऽभिषिक्तस्सहस्रप्रदो वैश्यो राजपुरोहितश्चेत्यर्घ्यार्हा भवन्ति १६ पितृज्येष्ठकनीयसामुपाध्यायपुत्रस्त्रिमधुस्त्रिणाचिकेतस्त्रिसुपर्णः पञ्चाग्निष्षडङ्गवित् शीर्षको ज्येष्ठसामिकोऽथर्वाङ्गिरसोऽध्येतारस्स्नातका इत्येते संवाहनस्नापनशय्यालङ्कारविभूषणाच्छादनैरर्चनीया भवन्ति १७ अथ यदि बहवोऽतिथयोऽभ्यागच्छेरन् तत्रापि विद्वद्वृद्धकृशबालाश्चार्चनीया भवन्ति १८ अथ यद्यतिथिरार्तो व्याधितो वा यद्ब्रूयादिदं मे क्रियतामित्यविद्यमानोऽन्यां प्रक्रियां प्रकुर्वीत १९ अथ यद्याग्रयणेष्टिपशुचातुर्मास्याध्वराणामुद्यतां दक्षिणां नोत्सृजेत्तां तस्मै दद्यात् अतिथिस्सर्वयज्ञक्रतुसम्मितः इति विज्ञायते २० अथ यद्यतिथिरभ्यागतो वा यस्य गृहे नाश्नीयात् तस्य सर्वा देवता अवरुद्धा भवन्ति तस्मात्सदारस्सापत्योऽभ्युत्थायासनं पाद्यमर्हणमर्घ्यं वा प्रयच्छेत यास्तत्रौषधयस्ता उपहरेत् २१ य एतेन विधिनाऽतिथीन्नियच्छति यश्चैतेन विधिनाऽतिथीन् पूजयति नैनं मृत्युरभिभवति नार्तिर्नावृत्तिर्न जरा न शोको यश्चैवं वेद यश्चैवं वेद २२

इति बोधायनीये गृह्यपरिभाषासूत्रे द्वितीयप्रश्ने पञ्चमोऽध्यायः

अथ द्वितीयप्रश्ने षष्ठोऽध्यायः

यथो एतद्यत्किञ्चिदन्यत्र विहाराद्धूयते सर्वास्ताः पाकयज्ञसंस्था इति १ या एवैता अभिचाराय पावनाय शान्तये समृद्धये स्वस्तये वा हूयन्ते ता एवैता उक्ता भवन्ति २ ताश्चेद्राजन्यो वैश्यश्च ब्राह्मणं पुरोदधीत ३ तदभिगम्याभिवाद्य ब्रूयात् आकूत्यै त्वा कामाय त्वा समृधे त्वा पुरोदधे अमृतत्वाय जीवसे इति ४ पुरोहितो जपति आकूतिमस्यावसे काममस्य समृद्ध्यै । इन्द्रस्य युञ्जते धियः इति ५ स्वयं जपति आकूतिं देवीं मनसः पुरोदधे । यज्ञस्य माता सुहवा मे अस्तु । यदिच्छामि मनसा स कामो विदेयमेनद्धृदये निविष्टम् इति ६ सर्वत्र दैवेषु पुरस्तादुदग्वोपक्रमोऽपवर्गः प्रदक्षिणमुपचारो यज्ञोपवीतं प्रागग्रैर्दर्भैरग्नीनां परिस्तरण प्रागुदगग्रैर्वा पवित्राभ्यामुत्पवनम् ७ एवमेव विपरीतोपक्रमोपवर्गः पित्र्येषु दक्षिणाग्रैर्दर्भैरग्नीनां सम्परिस्तरणं दक्षिणाप्रतीच्यग्रैर्वा पवित्रेणोत्पवनम् ८ तेषामियमेव प्रतिपत्तिर्व्याहृतिपर्यन्तो होमः ९ अतोऽन्ये कर्मव्यञ्जका उपहोमाः पृथग्विनिविष्टा अन्योन्यमुपजीवन्तः १० तदानींतनेष्वाचार्या ऊहसन्नमनैश्च मन्त्रैर्यज्ञं प्रतिसन्दधुरविच्छेदाय ११ य एवं विद्वान् यज्ञं यजेत यश्चैवं विद्वान् यज्ञेन यजते सर्वेण वै यज्ञेन यजते सर्वं चैव यज्ञं यजति १२ तदेषाऽभिवदति आ देवानामपि पन्थामगन्म यच्छक्रवाम तदनु प्रवोढुम् । अग्निर्विद्वान् स यजात्सेदु होता सो अध्वरांत्स ऋतून् कल्पयाति इति १३

इति बोधायनीये गृह्यपरिभाषासूत्रे द्वितीयप्रश्ने षष्ठोऽध्यायः

अथ द्वितीयप्रश्ने सप्तमोऽध्यायः

षष्ठोऽहनि शुची स्नातौ शुक्लवस्त्रौ स्वलङ्कृतौ
हविष्यमन्नमादाय ब्राह्मणान् सुसमाहितान् १

भोजयित्वोपसङ्गृह्य सुसंतृप्तेषु तेष्वथ
पुण्याहं वाचयित्वा तानभिवाद्य प्रणम्य च २

श्वेतायाश्श्वेतवत्सायास्स्थालीपाकं तु पाचयेत्
गायत्र्याऽष्टसहस्रं तु सम्पाताभिहुतो भवेत् ३

उभौ तु तद्धुतं प्राश्य कुर्वीत प्रतिमन्त्रणम्
जघन्ये रात्रिपर्याये सर्वत्रोपगमस्स्मृतः ४

प्रागग्रेषु तु दर्भेषु प्राक्शिरां तु निपातयेत्
चतुर्होतारं मनसाऽनुद्रुत्य प्रणवेनाहुतिर्भवेत् ५

एवमुत्पादिताः पुत्रा न लुप्यन्ते कदाचन
न लुप्यन्ते कदाचनेति ६

इति बोधायनीये गृह्यपरिभाषासूत्रे द्वितीयप्रश्ने सप्तमोऽध्यायः

षष्ठेऽहनि शुची स्नातौ । यथो एतद्यत्किञ्चित् । अथ यदि ब्राह्मणः क्षत्रियश्च समेत्यायाताम् । अजिनं वासस्सूत्रं वा द्वितीयम् । अथ वै भवति ब्राह्मण एकहोता । अथ वै भवति निवीतं मनुष्याणाम् । अथ व्रीहिभ्यो यवेभ्यश्च ७ अथ व्रीहिभ्यो यवेभ्यश्च । अथ वै भवति निवीतं मनुष्याणाम् । अथ वै भवति ब्राह्मण एकहोता । अजिनं वासस्सूत्रं वा द्वितीयम् । अथ यदि ब्राह्मणः क्षत्रियश्च समेत्यायाताम् । यथो एतद्यत्किञ्चित् । षष्ठोऽहनि शुची स्नातौ ७

इति बोधायनीये गृह्यपरिभाषासूत्रे द्वितीयः प्रश्नः समाप्तः
इति बोधायनीयगृह्यपरिभाषा समाप्ता

अथ बोधायनगृह्यशेषसूत्रप्रारम्भः

अथातस्सप्तपाकयज्ञानामुक्तं तच्छेषं व्याख्यास्यामः १ पवित्रकरणं प्रोक्षणीसंस्कारं प्रणीताप्रणयनं स्रुक्स्रुवसंमार्जनमिति दर्शपूर्णमासवत्तूष्णीम् २ अथाग्निं परिस्तीर्य दक्षिणेनाग्निं ब्रह्मायतने दर्भान् संस्तीर्योत्तरेणाग्निं प्रागग्रान् दर्भान् संस्तीर्य तेषु पात्राणि सादयित्वा तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा विस्रस्येध्मं त्रिस्सर्वाभिः प्रोक्ष्य दर्भेसु दक्षिणतो ब्राह्मणमुपवेशयति दर्शपूर्णमासवत्तूष्णीम् ३ अरत्निमात्राः परिधयः आर्द्रा वा सत्वक्काः ४ प्रादेशमात्राण्येकविंशतिरिध्मदारूणि भवन्ति इति ब्राह्मणेन व्याख्यातम् ५ अथ यदि शम्याः परिदधाति शमीमय्यश्शम्याकृतयो वाऽरत्निमात्राः ६ अथेध्ममभ्यज्य परिसमिधं शिनष्टि ७ स्वाहाकारेणाभ्याधायाघारावाघा-

र्याज्यभागौ प्रतिमुखं प्रबाहुग्जुहोति ८ प्रसिद्धमाग्निमुखात्कृत्वा स्रुवेण दर्व्यामुपस्तीर्य पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति प्रत्यनक्ति ९ यदि पञ्चावत्ती स्याद्दर्व्यामुपस्तीर्य मध्यात्पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति प्रत्यनक्ति १० स्रुवं निमृज्य यथादेवतं पुरोनुवाक्यामनूच्य याज्यया जुहोति ११ अथोपस्तीर्य सकृदुत्तरार्धात् स्विष्टकृतमवद्यति द्विरभिघारयति न प्रत्यनक्ति १२ तमन्तःपरिधि सादयित्वा यथाम्नातमाज्याहुतीर्जुहोति १३ व्याहृति-भिरनाम्नातेषु १४ अथ स्विष्टकृतमादायोत्तरार्धपूर्वार्धे जुहोति पूर्वेण वात्रैतं मेक्षणमनुप्रहरति १५ अथैनत् संस्रावेणाभिजुहोति १६ दर्व्यामप आनीय संक्षाळनमन्तः परिधि निनयति १७ निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वा बहिः परिधि निनयति १८ अथ समिधमाधाय जयान् जुहोति चित्तं च स्वाहा इति १९ त्रयोदश स्रुवाहुतीर्हुत्वाऽभ्यातानान् जुहोति अग्निर्भूतानामधिपतिस्स मावत्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्यां स्वाहा इति २० सप्तदश स्रुवाहुतीर्हुत्वा वाचयति पितरः पितामहाः परेऽवरे ततास्ततामहा इह माऽवत इति २१ अथ राष्ट्रभृतो जुहोति ऋताषा-ड्ऋतधामाऽग्निर्गन्धर्वस्स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा तस्यौषधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यस्स्वाहा इति २२ एवमेवान्ताद-नुवाकस्यान्यत्र भुवनस्य पते स नो भुवनस्य पते इति २३ अथामात्यहोमान् जुहोति यद्देवा देवहेडनम् इत्यन्तादनुवाकस्य प्रत्यृचम् २४ अथ प्राजापत्यां जुहोति प्रजापते न त्वदेतान्यन्यः इति २५ अथ सौविष्टकृतं जुहोति यदस्य कर्मणः इति २६ स्रुवेण परिधीननक्ति २७ अथ परिस्तरात्समुल्लि-प्याज्यस्थाल्यां प्रस्तरवद्बर्हिरक्त्वा तृणं प्रच्छिद्याग्नावनुप्रहृत्य तूष्णीं तृणं चाथ शम्या अपोह्य परिवीननुप्रहरति २८ मध्यमं परिधिमनुप्रहृत्याथेतरा-वुपसमस्यति २९ अथैनान् संस्रावेणाभिजुहोति ३० अथाग्रेणाग्निं यथाम्नातं हुतशेषं दत्वा शेषं कुर्यादन्यत्र विवाहशेषात् ३१ तथैव परिषिञ्चति अन्वमंस्थाः प्रासावीः इति मन्त्रान्तान् सन्नमयति ३२ अथ प्रणीताभ्यो दिशो व्युन्नयति दर्शपूर्णमासवत्तूष्णीम् ३३ ब्राह्मणं विसृज्य शेषं प्राश्नाति आयुरसि विश्वा-युरसि इति ३४ प्राश्याप आचम्य जठरमभिमृशति यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः इति द्वाभ्याम् ३५ शेषमभिघारितं ब्राह्मणाय दद्यात् ३६ न पत्न्या हविषां भक्षणमन्यत्रोच्छिष्टमभिसम्पाताभिहुतानां पिण्डदानस्य शेषं च नैव देवताहुतशेषमन्यत्र ब्रह्मौदनात् ३७

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने प्रथमोऽध्यायः

अथ प्रथमप्रश्ने द्वितीयोऽध्यायः

उपनयनादिरग्निस्तमौपासन इत्याचक्षते १ दारकाले दायाद्यकाले वा नित्यो धार्यः २ अनुगते प्रायश्चित्तं प्रसिद्धम् ३ तस्मिन् पाकयज्ञसंस्थानि दैवानि कर्माणि क्रियन्ते ४ उपस्थानादि समानमन्यत्र प्रजासंस्कारात् ५ प्रजा-संस्कारार्थमन्यत्र शुचौ देशे स्थण्डिलं कृत्वोल्लिखेन्मध्ये प्राचीनमेवं दक्षिणत एवमुत्तरतो मध्यादुदीचीनमेवं पश्चादेवं पुरस्तात् ६ औपासनादेकदेशं प्रणवेनाहृत्य व्याहृतिभिर्नियुप्यापि वा श्रोत्रियागारात् ७ एवमौपासन-मुपसमाधाय मयि गृह्याम्यग्रे अग्निं यो नो अग्निः पितरः इति द्वाभ्यामात्मन्यग्निं गृहीत्वोपस्थानादि समानमापात्रसादनात् ८ कथमु खलु पात्रसादनाना-मानुपूर्व्यं भवति आज्यस्थालीं स्रुवं च जुहूं च दर्वीं च प्रणीताप्रणयनं प्रोक्षणीपात्रं चरुस्थालीं मेक्षणं चेध्माबर्हिरिध्मप्रव्रश्चनान्येवमेवान्यानि द्वन्द्वं न्यञ्चि न हीने नातिरिक्ते सादयति ९ समानं कर्म स्रुक्संमार्जनात् १० स्रुक्स्रुवं संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा पूर्णाहुतिं जुहोति सप्त ते अग्ने समिधस्सप्त जिह्वाः इति ११ औपासनादग्निप्रणयनं विद्यते १२ अथ परिधानप्रभृति समानम् १३ अथाप्युदाहरन्ति असंस्कृताभिरद्भिः प्रोक्षणीभिरप्रोक्षितपात्रैर्होमश्चासं-मार्जनैः स्रुक्स्रुवैर्नाधिश्रितपक्वैराज्येन न प्रचरितव्यं यदि प्रचरेद्यातुधाना असु-रा रक्षांसि पिशाचा यज्ञं ग्राहयेयुः इति १४

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने द्वितीयोऽध्यायः

अथ प्रथमप्रश्ने तृतीयोऽध्यायः

अथातोऽपूर्वं व्याख्यास्यामः १ परिसमूह्य पर्युक्ष्य परिस्तीर्य परिषिच्योप-समाधायालङ्कृत्य यावदाम्नातमाहुतीर्जुहोत्याद्यन्तयोर्व्याहृतिभिराज्याहुतिः प-रिधानं प्रणीताप्रणयनं ब्रह्मोपवेशनं च न विद्यते विद्यते वा पूर्वैर्मन्त्रैरुपांशूक्त्वा उत्सृजत इत्युच्चैरेवमेवोपकल्पयतीति विज्ञायते २ पाकयज्ञसंस्थानां न तिष्ठद्धोमो विद्यते विज्ञायते च अन्यत्र विहाराद्धूयते सर्वास्ताः पाकयज्ञसंस्थाः इति ३ अथ संस्थायामाद्यन्तयोः परिषेचनं यथा पुरस्तात् ४ विज्ञायते नासमित्के जुहुयाद्यदसमित्के जुहुयाद्यथाजिह्वेऽन्नं दद्यात्तदृक्तस्मात्समि-द्वत्येव होतव्यम् इति ५ अनादिष्ट उपसमाधाय होतव्यमनादिष्ट उपहत्यैव होतव्यमिति ६ मेक्षणेन अमुष्मै स्वाहा अमुष्मै स्वाहा इति दैवतं जुहोति ७

अथाप्युदाहरन्ति ओषध्यस्सक्तवः पुष्पं काष्ठं मूलं फलं तृणम् । एतद्धस्तेन होतव्यं नान्यत्किञ्चिदचोदनात् इति ८ ओषध्यादिवद्बलिहरणं प्राक्परिषेचनाद्धुतशेषप्रदानं प्राशनं चैवमेव मूर्ध्नि संस्रावहोमः प्रदक्षिणं चान्यत्रोपनयनात् ९ सावित्रीमर्थायार्थायाग्निं प्रणयति ११ अपवृत्ते कर्मणि लौकिकस्सम्पद्यते १२ अथ यद्युत्करेऽग्न्युपस्थानादि समानं निवर्तते पूर्णाहुतिस्समानमत ऊर्ध्वम् १३

इति बोधायनीये गृह्यशेषसूत्रे प्रथमप्रश्ने तृतीयोऽध्यायः

## अथ प्रथमप्रश्ने चतुर्थोऽध्यायः

अथातस्स्थण्डलविधिं व्याख्यास्यामः १ सिकताश्चतुरङ्गुलं प्राचीनमुद्धृत्य पञ्चाङ्गुलिप्रमाणं पश्चिमत ऊर्ध्वमङ्गुलिविशेषं दक्षिणत ऊर्ध्वमङ्गुलिविहीनमुत्तरतः पञ्चप्रस्थं सिकताश्शुचयश्शुक्ला अनार्द्रा अरत्निमात्रं समचतुरश्रं प्राक्प्रवणं स्थण्डिलं करोति २ न लोष्ठेन न काष्ठेन न शर्करैर्न नखैः । काष्ठेन व्याधितस्स्याल्लोष्ठेन कुलनाशनम् । शर्करैः पुत्रनाशस्स्यान्नखैर्बन्धुविनाशनम् ३ तस्मात्सुवर्णरजतताम्रशकलेन व्रीहिभिर्यवैर्वा दर्भैस्तदङ्गुष्ठेन च महानाम्न्या चोपसङ्गृह्य तस्य मध्यतः प्राचीनं सन्ततमृजुमुल्लिखेत् । किंदेवत्यं किंमन्त्रमिति । ब्रह्मदेवत्यं ब्रह्म जज्ञानम् इति ४ तस्य दक्षिणतः प्राचीनं सन्ततमृजुमुल्लिखेन् । किंदेवत्यं किंमन्त्रमिति यमदेवत्यं नाके सुपर्णम् इति ५ तस्योत्तरतः प्राचीनं सन्ततमृजुमुल्लिखेत् । किंदेवत्यं किंमन्त्रमिति । सोमदेवत्यं आप्यायस्व समेतु ते इति ६ तस्य मध्यत उदीचीनं सन्ततमृजुमुल्लिखेत् । किंदेवत्यं किंमन्त्रमिति रुद्रदेवत्यं यो रुद्रो अग्नौ इति ७ तस्यः पश्चादुदीचीनं सन्ततमृजुमुल्लिखेत् । किंदेवत्यं किंमन्त्रमिति । विष्णुदेवत्यम् इदं विष्णुर्विचक्रमे इति ८ तस्य पुरस्तादुदीचीनं सन्ततमृजुमुल्लिखेत् । किंदेवत्यं किंमन्त्रमिति । इन्द्रदेवत्यम् इन्द्रं विश्वा अवीवृधन् इत्येतस्मात् स्थण्डिलविधिर्भवति ९ न कपालो न धूमो न ज्वालो न विस्फुटो न नम्रमुखो द्रप्सं पतितं मुखज्वलितं च वर्जयित्वा देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां भूर्भुवस्सुवरोम् इत्याह भवगवान् बोधायनः १०

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने चतुर्थोऽध्यायः

अथ प्रथमप्रश्ने पञ्चमोऽध्यायः

अथातस्सिकतादोषं व्याख्यास्यामः १ भस्मकेशतुषकपालशर्करतृणास्थि-पिपीलिकैरार्द्रसिकतानि वर्जयेत् २ भस्मना यजमानक्षयः केशेन स्त्रीमरणं तुषेण पुत्रघ्नं कपालैरर्थनाशनं शर्करैर्बन्धुवियोगः तृणेन कर्मक्षयः अस्थिना ग्रामविनाशः पिपीलिकैः राष्ट्रविनाशः आर्द्रसिकतैर्व्याधिभयं भवतीत्याह भगवान् बोधायनः ३

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने पञ्चमोऽध्यायः

अथ प्रथमप्रश्ने षष्ठोऽध्यायः

अथातः परिस्तरणविधिं व्याख्यास्यामः १ दर्भैरविच्छिन्नाग्रैरनखच्छिन्नैरवि-वर्णकैरव्याधिकरदग्धमूलैश्चतुरङ्गुळाधिकैर्मूलं छिन्द्याद्धस्तसममाज्येनाभ्यज्य वा स्पृष्ट्वाज्येन वा स्पृष्टैरद्भिरनुमृज्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां परिस्तृणामि इति पुरस्तात्परिस्तीर्य दक्षिणेन व्याहृतिभिः पश्चि-मेन उद्वयं तमसस्परि इति उत्तरेण अग्न आयाहि वीतये इति दक्षिणेनाग्निं ब्रह्मायतन उपवेश्य ओं भूर्भुवस्सुवरों ब्रह्मन् । ब्रह्मासि नमस्ते ब्रह्मन् । ब्रह्मणे इत्यासनं कल्पयित्वोत्तरेणाग्निं प्रणीताभ्यः कल्पयित्वा वरुणोऽसि धृतव्रतो वारुणमसि इति २ एतस्मात्परिस्तरणविधिर्व्याख्यातः ३

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने षष्ठोऽध्यायः

अथ प्रथमप्रश्ने सप्तमोऽध्यायः

सर्वत्र दर्वीहोमानामष्टोत्तरशतं दर्भाः द्वे हस्तपवित्रे द्वे आसने प्रागुदीचीना-ग्रैष्षोडाश परिस्तरणं दक्षिणतः प्रागग्रैस्सप्तदश पश्चादुदीचीनाग्रैरष्टादशोत्तरतः प्रागग्रैस्सप्तदश पात्राणा पञ्च सप्तदश ब्रह्मासनं प्रणीतासने द्वे द्वे आज्यपवित्रे द्वे अभिद्योतने द्वे दर्भाग्रे द्वे पर्यग्निकरणे स्रुक्सम्मार्जनं चतुर्भ्य इति १ अरत्निमात्रं षडङ्गुलं तिस्रश्शम्याः परिधीन् कृत्वा मध्यमाङ्गुलिरनामिका कनिष्ठिकेति स्थविष्ठो मध्यमोऽणीयान् द्राघीयान् दक्षिणतोऽणिष्ठो ह्रसिष्ठ उत्तरतो-ऽङ्गुष्ठपर्वमात्रमष्टादश याज्ञिकाः काष्ठाः प्रादेशमात्रं पवित्रं दर्भैतरुणकाभ्या-मङ्गुष्ठपर्वमात्रं प्रोक्षणीमाज्यस्थालीं प्रस्थचतुर्भागं पूर्ण प्रस्थद्विभागं प्रणीता-प्रणयनं चरुस्थालीं प्रस्थमाहुतिप्रमाणं चतुरङ्गुलमवदानप्रमाणमङ्गुष्ठपर्वमात्रं दर्वीप्रमाणमेकविंशत्यङ्गुष्ठं तस्या द्व्यङ्गुष्ठमुन्नतं पञ्चाङ्गुष्ठं बिलमेवमेव स्रुक्प्रा-

देशमात्रमुच्छ्रितं चतुरङ्गुलं वा किञ्चिद्दक्षिणत उन्नतो भवति मेक्षणमिति होमदर्वीप्रमाणमिति ह स्माह बोधायनः २

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने सप्तमोऽध्यायः

अथ प्रथमप्रश्ने अष्टमोऽध्यायः

अथ शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वा प्रादेशमात्रमुच्छ्रितं चतुरङ्गुलं वा किञ्चिद्दक्षिणत उन्नतो भवति १ प्राचीनप्रवणं किंकामस्य उदीचीनप्रवणं किंकामस्य । प्राचीनप्रवणं ब्रह्मवर्चसकामस्योदीचीनप्रवणमन्नाद्यक मस्य प्रागुदक्प्रवणं प्रजाकामस्य समं प्रतिष्ठाकामस्य २ उपलिप्तं वैश्वदेवत्यमुद्धत्यं नाकदेवत्यमवोक्षणं पितृदेवत्यं सैकतं सिन्धु देवत्यमुल्लेखनं यमदेवत्यं निरसनं रुद्रदेवत्य स्पर्शनं वरुणदेवत्यमग्निविधानं विष्णुदेवत्यं विहरणं वामदेवत्यं कर्म गायत्र्याः परिस्तरणदर्भाज्यस्थालीस्रुवजुहूनां पृथिवीदेवत्यं स्रुक्सोमदेवत्यमाज्यं वसुदेवत्यं पवित्रं विष्णुदेवत्यं चरुः प्रजापतिदेवत्यं मेक्षणं अग्निदेवत्यं सम्मार्जनं रुद्रदेवत्यं कूर्चं प्रजापतिदेवत्यमुदकुम्भं अब्देवत्यं प्रणीता वरुणदेवत्यमश्म महेन्द्रदेवत्यं वासः सोमदेवत्यं कर्ता बृहस्पतिदेवत्यं धूमं अतिथिदेवत्यमिध्मं अग्निदेवत्यं मध्यमपरिधिः यजमानदेवत्यं दक्षिणपरिधिः इन्द्रदेवत्यमुत्तरपरिधिः वरुणदेवत्यमूर्ध्वसमिधौ सूर्यदेवत्यमिन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशाना अष्ट दिग्देवत्यं व्यजनं वायुदेवत्यं गन्धं अश्विनिदेवत्यं पुष्पं गान्धर्वदेवत्यं धूपं इन्द्रदेवत्यं दीपं भानुदेवत्यं प्रयाजानूयाजं ऋतुदेवत्यं पक्वं प्रधानदेवत्यमुपहोमाः यथालिङ्गदेवत्यं यत्र यत्र होमे मन्त्रविधानं तत्र तत्र तल्लिङ्गदेवत्यं परिषत् ब्रह्मदेवत्यं सदस्याः सर्वदेवत्यमन्येषामनुक्ताना प्रजापतिदेवत्यं योऽस्य दैवतं मन्त्रतः कर्मतो वाभिज्ञाय जुहोति सोऽश्नुते श्रियमायुष्यमारोग्यं स्वर्ग्यं च भवति ३

अग्निहीनमनावृष्टिः मन्त्रहीनं तु ऋत्विजः
आज्यहीनं कुलं हन्ति स्वरहीनं तु पत्नयः ४

यजमानं दक्षिणाहीनमन्नहीनं तु राष्ट्रकम्
सर्वहीनं सदस्यानि नास्ति यज्ञसमो रिपुः ५

तस्मात्सर्वप्रयत्नेन किञ्चिद्द्रव्यस्समाचरेत्
श्रियःकामश्चरेत्सर्वं समृद्धं सहदक्षिणम् ६

एवं ऋृषिविधानोक्तं मुनीनां तत्त्ववेदिनाम्
सर्ववेदाह्निकं होमं सर्वलोकेषु पूजितम् ७

सर्वलोकेषु पूजितमितीत्याह भगवान् बोधायनः ८
इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने अष्टमोऽध्यायः

अथ प्रथमप्रश्ने नवमोऽध्यायः

अथातः पुण्याहदेवता व्याख्यास्यामः विवाहस्याग्निः प्रीयतां औपासनस्याग्निसूर्यप्रजापतयः प्रीयन्तां पञ्चमेऽहन्युदुम्बरो दशमेऽहन्यन्ते चित्र्याणि स्थालीपाकस्याग्निः गर्भाधानस्य ब्रह्मा पुंसवनस्य प्रजापतिः सीमन्तस्य धाता विष्णुबलेस्सविता जातकर्मणो मृत्युः नामकरणस्य सविता तस्यान्ते प्रजापतिः उपनिष्क्रामणस्य सविता तस्यान्ते चित्र्याणि अन्नप्राशनस्य सविता चौळस्य केशिनः तस्यान्ते प्रजापतिः उपनयनस्येन्द्रश्श्रद्धामेधे इत्यन्ते विसर्गे सुश्रवाः पुनरुपनयनस्याग्निः अथ यदि ब्रह्मचार्यव्रत्यमिव चरेत्तस्मिन्नध्यायहोमे सविता समावर्तनस्य श्रीरिन्द्रो वा शूलगवस्येशानः प्रत्यवरोहणस्य सविता उपाकर्मव्रतेषु च सविता वास्तुहोमस्य वास्तोष्पतिः अन्ते प्रजापतिः अद्भुतहोमस्येन्द्रः अन्ते प्रजापतिः आयुष्यहोमस्याग्निरायुष्मान् नक्षत्रहोमस्य नक्षत्रेष्टिषूक्तमष्टमी प्रदोषस्येशानः आग्रयणहोमस्याग्रयणदेवताः सर्पबलेस्सर्पाः आदित्यपुरोगा ग्रहाः प्रीयन्ताम् अथैकोद्दिष्टस्यान्ते प्रजापतिस्तटाकादीनां वरुणो देवता यक्षिबलेर्यक्षी गृहशान्तिहोमस्यादित्यादिनवग्रहाः गर्भाधानादितन्त्रहोमस्य ब्रह्मादयः प्रीयन्तामित्येवमन्येषां होमानां याज्यापुरोनुवाक्ययोर्देवता तस्यासौ प्रीयतामिति । सूतकान्ते प्रेतकान्ते प्रथमोदक्यान्ते च प्रजापतिः कूश्माण्डहोमस्याग्न्यादयः चान्द्रायणहोमस्याग्न्यादयः अग्न्याधेयेऽग्नीषोमेन्द्राः एवमनादिष्टकर्मसु प्रजापतिः १
इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने नवमोऽध्यायः

## अथ प्रथमप्रश्ने दशमोऽध्यायः

अथातः पुरायाहं व्याख्यास्यामः १ शुचौ समे देशे दर्भान्दूर्वां धारयमाणाः चत्वारो ब्राह्मणा अरिक्तहस्ताः प्राङ्मुखा युग्मास्तिष्ठन्ति २ तेषां दक्षिणत उदङ्मुखो वापिहितमुदकुम्भं धारयन्वाचयिता तस्य दक्षिणं बाहुमाश्रित्य पत्न्यस्तिष्ठन्ति ३ पूर्णकुम्भमभ्यर्च्य दर्भेष्वासीनो दर्भान्धारयमाणोऽनुज्ञां कुर्यात् भवद्भिरनुज्ञातः पुरायाहं वाचयिष्ये इति । ते प्रणवपूर्वं वाच्यताम् इति प्रतिब्रूयुः ४ ओं स्थित्वा तेषां सपवित्रेषु पाणिषु जलं ददाति ओमापः इति । शिवा आपस्तन्तु इति प्रत्यूचुः ५ ततः गन्धाः इति गन्धं ददाति । सुगन्धाः पान्तु इति प्रतिगृह्णन्ति ६ तेभ्यः सुमनसः इति पुष्पं ददाति । ते सौमनस्यमस्तु इति प्रतिगृह्णन्ति ७ तेषां पाणिषु अक्षतम् इति अक्षतान्ददाति । अक्षतशब्देन व्रीहिमिश्रास्तराडुला उच्यन्ते । अक्षतं चारिष्टं चास्तु इति प्रतिगृह्णन्ति ८ ब्राह्मणा अभुक्ताश्चेत् ओमन्वाहार्यः इत्योदनं ददाति । ते स्वन्वाहार्योऽस्तु इति प्रतिगृह्णन्ति ९ तेभ्यो दक्षिणाः इति दक्षिणां ददाति । स्वस्ति दक्षिणाः पान्तु बहुदेयं चास्तु इति प्रत्यूचुः १० ततो वाचयिता दक्षिणं जानुं भूमौ निधाय सव्यमुत्थाप्योदुङ्मुखः इडा देवहूः इति जपति । उदकुम्भमादायोपतिष्ठ इति प्रत्यूचुः ११ ततो वाचयिता मनस्समाधीयताम् इति समाहितमनसस्स्मः इतीतरे प्रत्याहुः १२ कर्ता प्रसीदन्तु भवन्तः इति प्रसन्नास्स्मः इति वाचयित्वा यद्वा सर्वैर्मन्त्रैरनवानं वदेत् १३ शान्तिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु अविघ्नमस्तु आरोग्यमस्तु शिवं कर्मास्तु इति । एवमेवेतरे प्रत्याहुः १४ यद्देवत्यं भवति तस्य नाम गृह्णाति असौ प्रीयताम् इति । एवमेवेतरे १५ वाचयिता पुरायाहं भवन्तो ब्रवन्तु ओं पुरायाहम् इती-तरे प्रत्याहुः । एवमेव त्रिः १६ ततः स्वस्ति भवन्तो ब्रुवन्तु इति । ओं स्वस्ति इतीतरे प्रत्यूचुः १८ ततो वाचयिता ओं ऋद्धिं भवन्तो ब्रवन्तु इति । ओं ऋध्यताम् इतीतरे प्रत्याहुः १८ एवमेव त्रिर्वाचयित्वा ओं पुरायाह-समृद्धिरस्तु अस्तु इति ओं शिवं कर्मास्तु अस्तु इतीतरे प्रत्याहुः १९ यद्देवत्यं भवति तस्य नाम गृह्णाति असौ प्रीयताम् इति २० प्रीयतामसौ इति प्रतिब्रूयुः २१ अथ व्याहृतिभिर्भूमौ जलं विसृज्योपविश्य सुरभिमत्याऽब्लिङ्गाभि-र्वारुणीभिर्हिरगयवर्णाभिः पावमानीभिर्व्याहृतीभिरिति मार्जयित्वा पत्नीं च प्रोक्षतीत्याह भगवान्बोधायनः २२

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने दशमोऽध्यायः

अथ प्रथमप्रश्ने एकादशोऽध्यायः

अथ प्रहुते प्रसिद्धं जातकर्म कृत्वा दशम्यां द्वादश्यां वा मातापितरौ स्नात्वा शुच्यगारं कृत्वा पुत्रस्य नामधेयस्य निदधीयातामिति १ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिम् इति वाचयित्वा देवयजनोल्लेखन-प्रभृत्याग्निमुखात्कृत्वा प्राजापत्येन सूक्तेन जुहोति प्रजापते न त्वदेतान्यन्यः इति षड्भिरनुच्छन्दसम् २ जयप्रभृति सिद्धमाधेनुवरप्रदानात् ३ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिम् इति वाचयन्नामास्मै दधाति नक्षत्रनामधेयेन ४ द्वितीयमस्य नामधेयं गुह्यमस्यान्यदभिवादनीयमोपनयनकालान्मातापितरौ संविदितौ भवतः ५ विज्ञायते च तस्मात् द्विनामा ब्राह्मणोऽर्धुकः इति ६ सोमयाजी तृतीयं नामधेयं कुर्वीत इति विज्ञायते ७ अयुगक्षरं कुमार्यै स्वस्ति श्रीसोम्येति दीर्घवर्णान्तम् ८ अथाप्युदाहरन्ति शर्मान्तं ब्राह्मणस्य बर्मान्तं क्षत्रियस्य गुप्तान्तं वैश्यस्य भृत्यदासान्तं शूद्रस्य दासान्तमेव वा ९ अथ यदि ब्राह्मणं न विन्देतौपासने ज्योतिष्मत्या पुत्रस्य नाम गृह्णात्युपतिष्ठते वा १० अथ नक्षत्राणि रोहिणीमृगशीर्षमखाचित्राज्येष्ठाश्रवणशतभिषक् रेवत्या-श्वयुक्षु प्रथमाक्षरवृद्धिस्स्याद्रोहिण्यां रौहिणायेति । तथेतराणि ११ तिष्य आश्लेषा हस्त विशाखा अनूराधा आषाढा श्रविष्ठासु प्रकृतिवत्तिष्यायेति । तथेराणि १२ फल्गुन्यां फाल्गुनायेति १३ स्वातीपुनर्वस्वोः स्वातये पुनर्वसव इति १४ मूलार्द्रयोः मूलकायार्द्रकायेति १५ प्रोष्ठपदासु प्रोष्ठपदाय प्रौष्ठपदायेति वा १६ अपभरण्यामपभरणायापभरणायेति वा १७ अग्नये कृत्तिकाय कार्तिकायेति वा व्याख्यातान्यग्नेहोतुः १८ स्त्रीविषये कुमार्यै रोहिण्यै सुश्रियै गौर्यै स्वस्तीति १९

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने एकादशोऽध्यायः

अथ प्रथमप्रश्ने द्वादशोऽध्यायः

सप्तमेऽष्टमे वा मासि कर्णवेधः १ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिम् इति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा पक्वा-ज्जुहोति श्रोत्रेण भद्रम् इति पुरोनुवाक्यामनूच्य येन प्राच्यै इति याज्यया जुहोति २ अथाज्याहुतीरुपजुहोति प्राणो रक्षति विश्वमेजत् इत्येतेनानुवाकेन प्रत्यृचम् ३ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ४ अथाग्रेणाग्निं वेणुपर्णेषु हुतशेषं निदधाति समुद्राय वायुनाय सिन्धूनां पतये नमः इति ५ अथाशिषो

वाचयित्वा लोहितसूच्या वा कण्ठकेन वा दक्षिणं कर्णमातृणत्ति गा त्री त्रिष्टुप् इति । द्विपदा इत्युत्तरम् । ६ अथ लोहितसूत्रेण वा वेणुसूत्रेण वा कर्णौ बध्नाति वरुणस्य स्कम्भनमसि इति ७ श्वोभूते विस्रंसयति वरुणस्य स्कम्भसर्जनमसि इति ८ सूत्रेण वा वेणुकाण्डेन वा वर्धयति ९ अथाप्यु-दाहरन्ति

पुत्राय च दुहित्रे च समानि ब्राह्मणक्रिया
मन्त्रवद्गर्भ आजन्म जन्माद्य आवृतं स्त्रियै १०

सर्वेषु व्याहृतीर्विद्यादनाम्नातेषु कर्मसु
होतव्या ब्रह्मभूताय नाक्रियो ब्राह्मणो भवेत् ११

अनग्निरक्रियश्शूद्रः तस्माज्ञातोऽग्निना द्विजः
नामधेयादि कर्तव्यमाकार्यादरणीकृतम् १२

मथित्वा वाऽथ शकलान् समिद्धे मन्त्रवत्तथा
उपनयनादिवाजस्रं स्वयं चारणिमग्निना १३

सायंप्रातर्विधानेन समिद्भिस्तत्र हूयते
गुरुशुश्रूषणपरस्समारोप्यात्मनि स्वयम् १४

या ते अग्नेतिमन्त्रेणोपावरोहेति लौकिके
हुत्वा व्रतानुचरितं समावृत्ते गुरोर्मतात् १५

विवाहं विधिवत्कृत्वा गृहस्थाश्रममाविशेत्
वैवाहिको विधिः स्त्रीणामौपनायनिकस्स्मृतः १६

तावुभौ चारिणौ तस्मादौपासनमिति श्रुतिः
इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने द्वादशोऽध्यायः

## अथ प्रथमप्रश्ने त्रयोदशोऽध्यायः

अथ नक्षत्रहोमं व्याख्यास्यामः संवत्सरे संवत्सरे षट्सु षट्सु मासेषुचतुर्षु चतुर्षु ऋतावृतौ मासि मासि वा कुमारस्य जन्मनक्षत्रे क्रियेत १ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिम् इति वाचयित्वाऽथ देवयजनोल्लेखन-प्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति अग्निर्मूर्धा भुवः इति द्वाभ्याम् २ अथ नक्षत्रदेवताभ्यो जुहोति यथानक्षत्रम् ३ अनु नोऽद्यानुमतिरन्विदनुमते इति तृतीयम् ४ अथाज्याहुतीरुपजुहोति नक्षत्रदेवताभ्यो यथानक्षत्रम् ५ चन्द्रमसे स्वाहा । प्रतीदृश्यायै स्वाहा । अहोरात्रेभ्यस्स्वाहा अर्धमासेभ्यस्स्वाहा । मासेभ्यस्स्वाहा इति मासि मासि ६ ऋतुभ्यस्स्वाहा इत्यृतावृतौ ७ संवत्सराय स्वाहा इति संवत्सरे ८ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ९ अन्नशेषं सगणः प्राश्नाति १० अथ संवत्सरे पर्यवेते प्रसिद्धमाग्निमुखा-त्कृत्वा पक्वाज्जुहोत्याग्नेयं प्रधानदेवत्यम् ११ यथानक्षत्रं द्वितीयम् १२ अनु नोऽद्यानुमतिरन्विदनुमतेत्वम् इति तृतीयम् १३ नवो नवो भवति जायमानः यमादित्या अंशुमाप्याययन्ति इत्यान्तादनुवाकस्य १४ अथ पूर्ववदाज्या-हुतीरुपजुहोति नक्षत्रदेवताभ्यो यथानक्षत्रम् १५ चन्द्रमसे स्वाहा । प्रतीदृ-श्यायै स्वाहा इत्येतैः स्वाहाकारैरान्तादनुवाकस्य १६ स्विष्टकृत्प्रभृति सिद्ध-माधेनुवरप्रदानात् १७ नक्षत्रहोमो व्याख्यातः १८

इति बोधायनीये गृह्यपरिभाषासूत्रे प्रथमप्रश्ने त्रयोदशोऽध्यायः

## अथ प्रथमप्रश्ने चतुर्दशोऽध्यायः

अथ वै भवति श्रद्धा वा आपश्श्रद्धामेवारभ्येति । यज्ञो वा आपो यज्ञमेवारभ्येति । वज्रो वा आपो वज्रमेव भ्रातृव्येभ्यः प्रहृत्य इति । आपो वै रक्षोघ्नी रक्ष सामपहत्यै इति । आपो वै देवान प्रियं धाम इति । अमृतं वा अपास्तस्मादद्भिरवतांतमभिषिञ्चन्ति इति । आपो वै सर्वा देवता देवता एवारभ्य इति आपो वै शान्ताश्शान्ताभिरेवास्यशुचं शमयति इति ब्राह्मणम् १ तस्मात्पवित्रेण शान्युदकं करोति जन्मनक्षत्रे पुण्ये नक्षत्रे विवाहचौळोप-नयनसमावर्तनसीमन्ताग्न्याधेयान्यन्यानि मङ्गलकार्याणि ग्रहोपरागे ग्रहोत्पाते वा द्विपात्सु चतुष्पात्सु भयं विन्देताथ शान्तिमारभेत २ युग्मान् ब्राह्मणान् सुप्रक्षाळितपाणिपादानप आचमय्य प्रतिदिशमासनेषूपवेश्य गोमयेन गोचर्म-मात्रं चतुरश्रं स्थण्डिलमुपलिप्य दर्भेषु प्राङ्मुख उपविश्य दर्भान् दूर्वाश्च

धारयमाणः पवित्रपाणिस्स्थण्डिलं कृत्वा प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्युक्ष्य दूर्वाभिर्दर्भैरवकीर्य गन्धोदकेनाभ्युक्ष्य पुष्पैरवकीर्य ब्रह्मपात्रं सूत्रेण परिवेष्ट्य तेषु ब्रह्मपात्रं निदधाति ब्रह्म जज्ञानम् इति ३ अथ तिरः पवित्रमप आनयन् जपति तत्सवितुर्वरेण्यम् इति ४ यवाक्षततण्डुलानावपति भूर्भुवस्सुवरोम् इति ५ अथ पुष्पैर्दूर्वाभिः फलैरवकीर्य दूर्वाभिः दर्भैः प्रतिच्छाद्याभिमृशति शं नो देवीरभिष्टये इति ६ अन्वारब्धेषु जपति तत्सवितुर्वरेण्यम् इत्येतां पच्छोऽर्धर्चशोऽनवानमुक्त्वा वेदादीन् जपति ७ राक्षोघ्नं कृणुष्व पाजः प्रसितिम् इत्येवमनुवाकं मदे चिदस्य इत्यर्धर्चमवोद्धृत्य इन्दुं वो विश्वतस्परि हवामहे जनेभ्यः इत्येतमनुवाकं यत इन्द्रभयामहे स्वस्तिदा विशस्पतिः इति द्वाभ्यां महां इन्द्रः सजोषा इन्द्र इति द्वाभ्यां ये देवा पुरस्पदः इति पञ्चभिः पर्यायैः अग्नये रक्षोघ्ने इति पञ्च अङ्गिरायुष्मान् इति पञ्च या वामिन्द्रावरुणौ इति चतस्रः यो वामिन्द्रावरुणौ इत्यष्टौ अग्ने यशस्विन् इति चतस्रः राष्ट्र भृतं ऋताषा-ड्तघामा इत्येतमनुवाकं नमो अस्तु सर्पेभ्यः इति तिसृभिरनुचच्छन्दसं पञ्च चोडा अयं पुरो हरिकेशः इति पञ्चभिः पर्यायैरप्रतिरथं अशुशिशशानः इत्येतमनुवाकं शं च मे मयश्च मे इत्येतमनुवाकं विहव्यं ममाग्ने वर्चो विहवेष्वस्तु इत्येतमनुवाकं सृगारं अग्नेर्मन्वे इत्येतमनुवाकं सर्पाहुतीः समीची नामासि प्राची दिक् षड्भिः पर्यायैः गन्धर्वाहुतीः हेतयो नाम स्थ तेषां वः पुरोगृहाः इति षड्भिः अज्यानीः शतायुधाय इति पञ्च भूतं भव्यं भविष्यत् इत्येतमनुवाकं अथर्वशिरसं इन्द्रो दधीचो अस्थभिः इत्येतमनुवाकं प्रत्याङ्गिरसं चक्षुषो हैते मनसो हैते इति प्रतिपद्य भ्रातृव्य पादयामसि इत्यन्तं प्राणो रक्षति विश्वमेजत् इत्येतमनुवाकं सिंहे व्याघ्र उत या पृदाकौ इत्येतमनुवाकं अहमस्मि इत्येतमनुवाकं ता सूर्याचन्द्रमसा इत्येतमनुवाकं अग्निर्नः पातु ऋध्या स्म नवोनवः इत्येतैस्त्रिभिरनुवाकैरुत्तमैरुपहोमैश्च सुरभिमत्याऽब्लिङ्गाभि-र्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतीभिः तश्छंयोरावृणीमहे इत्येत-मनुवाकं नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह इति ब्राह्मणम् ८ प्रणवे-नोस्थाप्य व्याहृतीभिः प्रोक्षति ९ अथ दक्षिणां ददाति पुरस्तादुपविष्टाय हिरण्यं ददाति दक्षिणतो रजतं पश्चात्कांस्यमुत्तरतो वासो ददाति १० अथ ग्रहगृहीतानां ज्वरगृहीतानां भूतोपसृष्टानां मित्र बन्धुसुहृज्ज्ञातिसखिस-म्बन्धिबान्धवानां राज्ञां च राजपुरोहितानां च बालवृद्धान्तर्वात्निपापरोगिदीर्घ रोगिकृशातुरान् प्रोक्षति ११ हस्त्यश्वोष्ट्रगोमहिष्यजाविकभृत्यांश्च धनधान्यानि

च प्रोक्षति १२ एवमेकरात्रं त्रिरात्रं पञ्चरात्रं सप्तरात्रं नवरात्रमित्यपपुनर्मृत्युं जयतीत्याह भगवान् बोधायनः १३

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने चतुर्दशोऽध्यायः

## अथ प्रथमप्रश्ने पञ्चदशोऽध्यायः

अथातः प्रतिसरबन्धं व्याख्यास्यामः १ यस्मिन् दिने नान्दीमुखं कुर्यात्तस्यां रात्र्यां प्रदोषान्ते प्रतिसरमारभेत २ शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य युग्मान् ब्राह्मणान् सुप्रक्षाळितपाणिपादानप आचमय्य प्रतिदिशमासनेषूपवेश्य पश्चात्प्राङ्मुख आचार्य उपविशति ३ तस्य दक्षिणं बाहुमन्वितरः ४ अथ हस्तमात्रं सैकतं स्थण्डिलं कृत्वोल्लिख्याद्भिरभ्युक्ष्य स्थण्डिलस्य मध्ये प्रागग्रान् दर्भान् संस्तीर्य तेषूपरि कुम्भं निधाय व्याहृतीभिश्शुद्धोदकैः पूरयित्वा दूर्वाक्षतफलैरवकीर्य गन्धपुष्पधूपदीपैरुद- कुम्भमभ्यर्च्य दूर्वाभिर्दर्भैः प्रतिच्छाद्योत्तरतः शालितण्डुलस्योपरि प्रतिसरसूत्रं गन्धानुलिप्तं निधाय आचार्यमुखांस्त्रीन् प्राणायामान् धारयित्वा उदकुम्भम- न्वारभ्य सावित्रीं जपति तत्सवितुर्वरेण्यम् इत्येतां पच्छोऽर्धर्चशोऽनवा- नमुक्त्वा वेदादीन् जपति ५ रक्षोघ्नं कृणुष्व पाजः इत्येतमनुवाकं अग्ने यशस्विन् इति चतस्र आप्यं हिरण्यवर्णाश्शुचयः पावकाः इत्येतमनुवाकं पवमानस्सुवर्जनः इत्येतमनुवाकं वरुणसूक्तम् उदुत्तमं वरुण पाशम् इति षडृचं रुद्रसूक्तं परि णो रुद्रस्य हेतिः इति षडृचं ब्रह्मसूक्तं ब्रह्म जज्ञानम् इति षडृचं विष्णुसूक्तं विष्णोर्नुकम् इति षडृचं पञ्च दुर्गाः जातवेदसे इति श्रीसूक्तं हिरण्यवर्णां हरिणीम् इति पञ्चदशर्चं नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह इति ब्राह्मणम् ६ प्रणवेनोत्थाप्य व्याहृतीभिस्सुरभिमत्याऽब्लिङ्गाभिः प्रोक्ष्य प्रतिसरसूत्रमादाय वासुकिं ध्यात्वा अङ्गुष्ठेनोपकनिष्ठिकाभ्यां त्र्यम्बकेन त्रिरूर्ध्वं भस्मना सम्मृज्य अग्निरायुष्मान् इति पञ्चभिः तस्य दक्षिणहस्तं गृहीत्वा बृहत्साम इति बध्वा स्त्रीणां वामहस्तं भस्मना घृतसूक्तेन यो ब्रह्म ब्रह्मणः इत्यष्टर्चेन रक्षां कुर्यादित्याह भगवान् बोधायनः ७

इति बोधायनीये गृह्यशेषसूत्रे प्रथमप्रश्ने पञ्चदशोऽध्यायः

## अथ प्रथमप्रश्ने षोडशोऽध्यायः

अथातो ग्रहातिथ्यवलिकर्मोपहारान् व्याख्यास्यामः

अश्रद्दधानमशुचिमजपं त्यक्तमङ्गळम्
ग्रहा नयन्ति सुव्यक्तं पुरुषं यमसादनम् १

ग्रहाणामुग्रचेष्टानां नक्षत्रपथचारिणाम्
उपचारान् प्रवक्ष्यामि शान्त्यर्थं तु यथाविधि २

मासिमास्यृतावृतावयने चन्द्रग्रहे सूर्यग्रहे विषुवे शुभाशुभे जन्मनक्षत्रे वा तद्ग्रहाणामातिथ्यं संवत्सरादपि प्रयुञ्जानस्सर्वान् कामानवाप्नोतीति ३ उक्त-मेकाग्निविधानम् ४ एको वा विषमस्थस्स्यात्सर्व एवार्चनीया भवन्ति ५

भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ
सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ ६

कृष्णं शनैश्चरं विद्याद्राहुं केतुं तथैव च
ग्रहवर्णानि पुष्पाणि प्राज्ञस्तत्रोपकल्पयेत् ७

बलींश्चैवोपहारांश्च गन्धमाल्यं तथैव च
यथाक्रमेणोपहरेत्सर्वेषामानुपूर्वशः इति ८

अर्कसमिधमादित्याय खादिरमङ्गारकायौदुम्बरं शुक्राय पालाशं सोमा-यापामार्गं बुधायाश्वत्थं बृहस्पतये शमीमयं शनैश्चराय राहवे दूर्वाः केतवे कुशा इति ९ सर्वेषामलाभे पालाशीर्वा । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिम् इति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा ह-वींषि निर्वपति १० अथोपोत्थायाग्रेणाग्निं तण्डुलैः स्थण्डिलं कृत्वा ग्रहदेवता आवाहयति ११

मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु
पूर्वे तु भार्गवं विद्यात्पूर्वदक्षिणतश्शशी १२

पूर्वोत्तरे बुधं विद्यादुत्तरे तु गुरुं तथा
पश्चिमे तु शनिं विद्याद्राहुं दक्षिणपश्चिमे १३

पश्चिमोत्तरतः केतुः ग्रहस्थानं विधीयते
दक्षिणोत्तरभागे तु साधिप्रत्यधिदेवताः १४

वृत्तमादित्याय त्रिकोणमङ्गारकाय पञ्चकोणं शुक्राय चतुरश्रं सोमाय बाणं बुधाय दीर्घचतुरश्रं बृहस्पतये धनुश्शनैश्चराय राहवे शूर्पं केतवे ध्वजमिति १५

अर्कश्शुक्रो बुधः पूर्वो गुरुरुत्तरतोमुखः
पश्चिमे तु शनिश्चन्द्रः शेषा दक्षिणतोमुखाः १६

यवा आढक्यस्तण्डुलाश्श्यामाका मुद्गमेव च
चणकास्तिलमाषाश्च कुळुत्थाश्च क्रमात् क्षिपेत् १७

अग्नीश्वरौ भास्करस्य भूक्षेत्रेशौ कुजस्य हि
इन्द्राणीन्द्रौ सितस्याथ ह्यापो गौरी निशापतेः १८

विष्णुर्विष्णुर्बुधस्येन्द्रमरुत्वान् ब्रह्म वै गुरोः
शनेः प्रजापतियमौ राहोस्सर्पस्तु निर्ऋृतिः १९

केतोः ब्रह्मा च चित्रश्च स्वस्वमन्त्रैस्स्वनामभिः
लोकपालान् दुर्गविघ्नक्षेत्रवास्तुत्रियम्बकान् २०

अभयंकरमृत्यू च ह्यग्निं वैश्वानरं क्रमात्
आवाहयेद्य हृतिभिर्यजेद्व्यष्टोपचारकैः २१

परिधानप्रभृत्याऽग्निमुखात्कृत्वा आ सत्येन इत्यादित्याय अग्निर्मूर्धा इत्यङ्गारकाय प्रवश्शुक्राय इति शुक्राय आप्यायस्व इति सोमाय उद्बुध्यस्व इति बुधाय बृहस्पते अति यदर्यो अर्हात् इति बृहस्पतये शं नो देवीरभिष्टये इति शनैश्चराय कया नश्चित्र आ भुवत् इति राहवे केतुं कृण्वन् इति केतवे २२ पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय इति ब्राह्मणम् २३ यत्रैकाऽम्नाता स्यात्तां द्विरभ्यवर्तयेत् तत्सवितुर्वरेण्यम् इत्यनुद्रुत्याम्नातया

जुहोति वा २४ नवानां ग्रहाणां पक्वं हुत्वा घृतान्वक्तानां समिधामष्ट-सहस्रमष्टशतमष्टाविंशतिं वा जुहुयात्प्रत्यृचं हविषो जुहुयात् प्रत्यृचमाज्यस्य जुहुयात्प्रत्यृचम् २५ गुळोदनमादित्यायि हविष्यमन्नमङ्गारकाय घृतोदनं शुक्राय घृतपायसं सोमाय क्षीरोदनं बुधाय दध्योदनं बृहस्पतये तिलपिष्टमिश्रमाषोदनं शनैश्चराय राहोः मांसोदनं केतोः चित्रोदनमिति २६ सर्वेषामलाभे हविष्यं वा २७ यदाऽष्टासहस्रं तदाऽधिप्रत्यधिदेवतानामष्टाविंशतिं यदाऽष्टशतं तदाऽष्टावष्टौ यदा विंशतिं तदा तिस्रस्तिस्र आहुतीर्जुहुयादेवमेव लोकपालादीनाम् १८ अग्निं दूतं येषामीशे इत्यादित्याय । स्योना पृथिवि क्षेत्रस्य पते इत्यङ्गारकाय । इन्द्राणीं इन्द्रं वो विश्वतः इति शुक्राय । अप्सु मे सोमो अब्रवीत् गौरी मिमाय इति सोमाय । विष्णोर्नुकं विष्णो रगटम् इति बुधाय । इन्द्र मरुत्वः ब्रह्म जज्ञानम् इति बृहस्पतये । प्रजापते इमं यम प्रस्तरम् इति शनैश्चराय । आयङ्गौः यत्ते देवी इति राहवे । ब्रह्मा देवानां सवित्र चित्रम् इति केतवे २९ त्रतारमिन्द्रम् अग्निर्दा द्रविणम् यमो दाधर पृथिवीम् असुन्वन्तम् सधमादो द्युम्निनीः आनो नियुद्भिः सोमो धेनुम् सहस्राणि सहस्रधा इति लोकपालानाम् ३० जातवेदसे गणानां त्वा क्षेत्रस्य पतिना वयम् वास्तोष्पते त्र्यम्बकं यजामहे यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः ये ते सहस्रमयुते पाशाः मूर्धानं दिवो अरतिं पृथिव्याः इति दुर्गादीनाम् ३१ एवमेव हुत्वाज्यमिश्रतिलव्रीहिभिर्व्याहृतिभिर्हुत्वा सर्वस्मात्सकृत्सकृदवदाय द्विरभिघार्य स्विष्टकृतं अर्यमणम् इति पुरोनुवाक्यामनूच्य सोमं राजानम् इति याज्यया जुहोति ३२ मेक्षणमभ्याधाय जयप्रभृति सिद्धम् ३३ मूर्धानं दिवो अरतिम् इति पूर्णां हुत्वाऽग्रेणाग्निं ग्रहानभ्यर्चयति आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति चतसृभिः पवमानस्सुवर्जन इत्येतेनानुवाकेन मार्जयित्वा स्वस्वनामभिस्तर्पयित्वा स्वेन स्वेन मन्त्रेण गन्धपुष्पधूपदीपैरभ्यर्च्य वलिमुपहृत्य लाजापूपपृथुकाद्यपहारांश्च दत्त्वा समस्कृत्य प्रवाह्य जघनेनाग्निमुपविश्याद्भिर्मार्जयति आपो हिष्ठा मयोभवः इति तिसृभिः देवस्य त्वा इति तिसृभिः शंयुवाकेन च ३४ अथ दक्षिणां ददाति कपिलां धेनुमादित्याय रक्तमनड्वाहमङ्गारकाय रजतं शुक्राय शङ्खं सोमाय काञ्चनं बुधाय वासो बृहस्पतये कृष्णां गां शनैश्चराय राहवे छागं केतवे कुञ्जामिति ३५ सर्वेषमलाभे हिरण्यं वा ३६ येन वा तुष्येदाचार्यः ३७ अथाप्युदाहरन्ति

यथा समुत्थितं घोरं यन्त्रेण प्रतिहन्यते
एवं समुत्थितं घोरं शीघ्रं शान्तिं नयेत्सदा ३८

यथा शस्त्रप्रहरणात् कवचं भवति निवारणम्
एवं दैवोपघातानां शान्तिर्भवति वारणम् ३९

अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च
नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ४०

ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः
पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः ४१

ईश्वरं भास्करं विद्यात् स्कन्धमङ्गारकं तथा
शुक्रं शचीपतिं विद्यादुमां चैव निशाकरम् ४२

बुधं नारायणं विद्याद्ब्रह्माणं च बृहस्पतिम्
यमं शनैश्चरं विद्याद्राहुं कालं तथैव च ४३

केतुमग्निमयं विद्याद्देव देवा यथा ग्रहाः
देवता ग्रहरूपेण दर्शयन्ति शुभाशुभम्

दर्शयन्ति शुभाशुभमित्याह भगवान् बोधायनः ४४
इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने षोडशोऽध्यायः

अथ प्रथमप्रश्ने सप्तदशोऽध्यायः

अथ नवग्रहपूजाविधिः

त्रैलोक्यदीपकं देवं गुणरूपं त्रयीमयम्
स्थापयामि महाभक्त्या भास्करं ग्रहनायकम् १

मध्ये वर्तुलाकारमण्डले प्रत्यङ्मुखं कलिङ्गदेशजं काश्यपगोत्रजं विश्वामित्रार्षं

विशाखानक्षत्रजं त्रिष्टुप्छन्दसं कपिलाग्निकं पद्मासनं पद्मवर्णं द्विभुजं रक्तवस्त्रं पृक्तगन्धं माणिक्यरत्नाभरणभूषितं किरीटिनं रक्तच्छत्रध्वजपताकिनं छन्दोमय-हरितसप्ताश्वं सप्तरज्जुकमेकचक्रं रक्तं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताऽग्निं प्रत्यधिदेवतारुद्रम् २

वन्दे रविं द्युमणिमम्बुरुहे निषण्णं
दोर्भ्यां दधानमरुणाम्बुरुहे ग्रहेन्द्रम्
माणिक्यभूषमरुणांशुकगन्धमाल्यैः
भ्राजन्तमर्कममितद्युतिमब्जमित्रम् ३

कपिले सर्वदेवानां पूजनीया सुरोहिणी
सर्वदेवमयी यस्मादतश्शान्तिं प्रयच्छ मे ४

जपाकुसुमसंकाशं कायपेयं महाद्युतिम्
तमोहरं कल्मषघ्न भास्करं प्रणमाम्यहम् ५

दीवाकरं दीप्तसहस्ररश्मिं तेजोमयं जगतः कर्मसाक्षिम्
मित्रं भानुं सूर्यमादिं ग्रहाणां रविं सदा शरणमहं प्रपद्ये ६

रक्तस्रगम्बरालेपं गदाशक्त्यसिशूलिनम्
चतुर्भुजं मेषगमं भारद्वाजं धरासुतम् ७

रक्तकाञ्चनसङ्काशं रक्तकिञ्जल्कसन्निभम्
स्थापयामि महारौद्रं रुद्रमूर्तिं महाबलम् ८

सूर्यस्य दक्षिणादिग्भागे त्रिकोणाकारमण्डले दक्षिणाभिमुखमवन्तीदेशजं भारद्वाजगोत्रजं जामदग्न्यार्षं गायत्रीछन्दसं धूमकेत्वग्निकं खड्गशक्तिशूल-गदाधरं चतुर्भुजं रक्ताम्बरधरं रक्तविद्रुमरत्नाभरणभूषितं किरीटिनं रक्तच्छत्रध्व-जपताकिन रक्तमेषवाहनमग्निजरक्ताष्टाश्वं काञ्चनं रथमारुह्य दिव्यं मेरुं प्रदक्षि-णीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताभूमिं प्रत्यधिदेवताक्षेत्रपालम् ९

रक्तस्रग्गन्धवासा करविधृतगदाशक्तिखड्गत्रिशूलः
भारद्वाजस्त्रिणेत्रो वसुमतितनयो लोहिताङ्गश्शुभाङ्गः
मेषव्याघ्रध्वजोऽर्कद्युतिसदृशमहाकुण्डलाश्लिष्टकर्णः
पायाद्भास्वत्किरीटाङ्गदवलयलसद्विद्रुमालङ्कृतो नः १०

धर्मस्त्वं वृषरूपेण जगदानन्दकारक
अष्टमूर्तेरधिष्ठान अतश्शान्तिं प्रयच्छ मे ११

धारणीगर्भसम्भूतं विद्युत्काञ्चनसन्निभम्
कुमारं शक्तिहस्तं च लोहिताङ्गं नमाम्यहम् १२

महेश्वरस्याननस्वेदबिन्दोर्भूमौ जातं रक्तमाल्याम्बराढ्यम्
सुदीधितिं लोहिताङ्गं कुमारमङ्गारकं सदा शरणमहं प्रपद्ये १३

शुक्रं शुक्लतनुं श्वेतवस्त्राढ्यं दैत्यमन्त्रिणम्
भार्गवं दण्डवरदकमण्डल्वक्षसूत्रिणम् १४

कुन्दपुष्पसमानाभं मुक्ताफलसमप्रभम्
स्थापयामि महाशान्तं भृगुं दैत्यगुरुं प्रभुम् १५

सूर्यस्य पूर्वदिग्भागे पञ्चकोणाकारमण्डले प्राङ्मुखं भोजकटकदेशजं भार्गव-गोत्रजं शौनकार्षं तिष्यनक्षत्रजं त्रिष्टुप्छन्दसं हाटकाग्निकं श्वेतमक्षसूत्रदण्ड-कमण्डलुवरदचतुर्भुजं श्वेताम्बरगन्धमाल्यवज्ररत्नाभरणभूषितं किरीटिनं श्वेत-च्छत्रध्वजपताकिनं श्वेताश्ववाहनं भूसम्भवश्वेतदशाश्वं श्वेतं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टं अधिदेवतेन्द्राणी प्रत्यधि देवतेन्द्रम् १६

वन्दे विराजितसितांशुकगन्धमाल्यं
अच्छाश्वगं तनुविराजितवज्ररत्नम्
दोर्भिस्सदण्डवरकुण्डिकमक्षसूत्रं
बिभ्राणमासुरगुरुं भृगुपुत्रमीड्यम् १७

विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः
विष्णोरर्कस्य वाहः स्यादतश्शान्तिं प्रयच्छ वे १८

हिमकुन्दतुषाराभं दैत्यानां परमं गुरुम्
सर्वशस्त्रप्रदातारं भार्गवं प्रणमाम्यहम् १९

वर्षप्लवं चिन्तितार्थानुकूलं नयप्रधानं विनयोपपन्नम्
तं भार्गवं योगविशुद्धसत्त्वं शुक्रं सदा शरणमहं प्रपद्ये २०

श्वेतवस्त्रधरं श्वेतदशाश्वरथवाहनम्
द्विभुजं साभयगदमात्रेयं सामृतं विधुम् २१

शान्तं नक्षत्रनाथं च रोहिणीवल्लभं प्रभुम्
कुन्दपुष्पोज्ज्वलाकारं स्थापयामि निशाकरम् २२

सूर्यस्याग्नेयदिग्भागे चतुरस्राकारमण्डले प्रस्यङ्मुख यमुनादेशजमात्रेयगोत्र-जमात्रेयार्षं कृत्तिकानक्षत्रजं गायत्रीछन्दसं पिङ्गलाग्निकं अभयगदाधरं द्विभुजं श्वेताम्बरगन्धमाल्यमुक्ताभरणभूषितं किरीटिनं श्वेतच्छत्रध्वजपताविनं वारि-संभूतदशाश्वं त्रिचक्रं श्वेतरथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रह मण्डले प्रविष्टमधिदेवतापं प्रत्यधिदेवतागौरीम् २३

श्वेताम्बरस्त्रगनुलेपनमत्रिनेत्र-
जातं दशाश्वरथवाहनमोषधीशम्
दोर्भ्यां धृताभयगदं भपतिं सुधांशुं
श्रीमत्सुमौक्तिकधरं प्रणमाभि चन्द्रम् २४

पुण्यस्त्वं शङ्ख पुण्यानां मङ्गळानां च मङ्गळम्
विष्णुना विधृतो नित्यमतश्शान्तिं प्रयच्छ मे २५

दधिशङ्खतुषाराभं क्षीरोदार्णवसम्भवम्
नमामि शशिनं भक्त्या शम्भोर्मकुटभूषणम् २६

यः कालहेतोः ज्ञयवृद्धिमेति यं देवताः पितरो वा पिबन्ति
तं वै वरेरायं ब्रह्मेन्द्रवन्द्यं सोमं सदा शरणमहं प्रपद्ये २७

पीतस्त्रग्गन्धवस्त्राढ्यं स्वर्णाभं च चतुर्भुजम्
शक्तिचर्मासिगदिनमात्रेयं सिंहगं बुधम् २८

चाम्पेयपुष्पसङ्काशं विशुद्धकनकप्रभम्
स्थापयामि महासौम्यं बुधं सोमात्मजं प्रभुम् २९

सूर्यस्येशानदिग्भागे बाणाकारमराडले प्राङ्मुखं मगधदेशजमात्रेयगोत्रजं भारद्वाजार्षां श्रविष्ठानक्षत्रजं त्रिष्टुप्छन्दसं जाठराग्निकं शक्तिखड्गचर्मगदाधरं चतुर्भुजं पीताम्बरगन्धमाल्यमरकतरत्नाभरणभूषितं किरीटिनं पीतच्छत्रध्वजपताकिनं पीतसिंहवाहनं वाय्वग्निजपीताष्टादवं पीतं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमराडले प्रविष्टं अधिदेवताविष्णु प्रत्यधिदेवताविष्णुम् ३०

वन्दे बुधं मरकतोज्ज्वलदेहकान्तिं
पीताम्बरस्त्रगनुलेपनभूषिताङ्गम्
शक्तिं च दोर्भिरसिचर्मगदा दधानं
सिंहध्वजं शशिसुतं बुधमत्रिवंशम् ३१

हिररायगर्भगर्भस्थं हेम बीजं विभावसोः
अनन्तपुरायफलदमतश्शान्तिं प्रयच्छ मे ३२

प्रियङ्गुगुलिकाभासं रूपेणाप्रतिभं बुधम्
सौम्यं सौम्यगुणोपेतं नमासि शशिनस्सुतम् ३३

विशुद्धबुद्धिं श्रुतिकालबोधं सद्व्याहरं सोमवंशप्रदीपम्
सुदीधितिं छान्दसं विश्वरूपं बुधं सदा शरणमहं प्रपद्ये ३४

आङ्गीरसं देवगुरुं पीतस्त्रग्गन्धवाससम्
दरािडनं वरदं पीतं साक्षसूत्रकमराडलुम् ३५

कुन्दपुष्पसमानाभं तप्तकाञ्चनसन्निभम्
स्थापयामि महाभक्त्या प्रसन्नवदनं गुरुम् ३६

सूर्यस्योत्तरदिग्भागे दीर्घचतुरश्रमण्डले उदङ्मुखं सिन्धुदेशजमाङ्गिरसगोत्रजं वसिष्ठार्षमुत्तराफल्गुनीनक्षत्रजं त्रिष्टुप्छन्दसं शिख्यग्निकं पीतमक्षसूत्रदण्ड-कमण्डलुवरदचतुर्भुजं पीताम्बरगन्धमाल्यपुष्यरागरत्नाभरणभूषितं किरीटिनं पीतच्छत्रध्वजपताकिनं विश्वरूपाख्यपाण्डुराष्टाश्वं कांचनं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टं अधिदेवतेन्द्रं प्रत्यधिदेवता ब्रह्माणम्
३७

पीताम्बरं तनुलसद्धृतपुष्यरागं
केयूरहारमणिकुण्डलमण्डिताङ्गं
दण्डं वराक्षगुणकुण्डियुतं दधानं
आङ्गीरसं सुरगुरुं हयगं नमामि ३८

पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम्
प्रदानादस्य मे विष्णुः प्रीतो भवतु सर्वदा ३९

देवतानामृषीणां च गुरुं काञ्चनसन्निभम्
सुवन्द्यं त्रिषु लोकेषु प्रणमामि बृहस्पतिम् ४०

बुद्ध्या समो यस्य न कश्चिदन्यो मतिं देवा उपजीवन्ति यस्य
प्रजापतेरात्मजं धर्मनित्यं बृहस्पतिं सदा शरणमहं प्रपद्ये ४१

इन्द्रनीलनिभं मन्दं काश्यपिं चित्रभूषणम्
चापबाणधरं चर्मशूलिनं गृध्रवाहनम् ४२

इन्द्रनीलसमानाभं नीलोत्पलसमप्रभम्
स्थापयामि महारौद्रं सूर्यपुत्रं शनैश्चरम् ४३

सूर्यस्य पश्चिमदिग्भागे धनुराकारमण्डले उदङ्मुखं काश्यपगोत्रजं भृग्वार्षेयं

रेवतीनक्षत्रजं सौराष्ट्रदेशजं गायत्रीछन्दसं महातेजोग्निकं नीलं चर्मबाणधनुश्शूलचतुर्भुजं नीलाम्बरगन्धमाल्यनीलरत्नाभरणभूषितं किरीटिनं नीलच्छत्रध्वजपताकिनं नीलगृध्रवाहनमाकाशजजम्बालाष्टाश्वं नीलं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टं अधिदेवताप्रजापतिं प्रत्यधिदेवतायमम् ४४

दोर्भिर्धनुर्विशिखचर्मधरं त्रिशूलं
भास्वत्किरीटमकुटोज्ज्वलितेन्द्रनीलम्
नीलातपत्रकुसुमांशुकगन्धभूषं
गृध्रस्थितं रविसुतं प्रणतोऽस्मि मन्दम् ४५

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश
यस्मात्तस्माच्छिवं मे स्यादतश्शान्तिं प्रयच्छ मे ४६

नीलाञ्जनचयाकारं रविसूनु नपुंसकम्
छायागर्भसमुद्भूतं वन्दे भक्त्या शनैश्चरम् ४७

शनैश्चरः प्रजापतिं योऽधि यस्य शनैर्भोगो गमनं चेष्टितं च
सूर्यात्मजं क्रोधनसुप्रसन्नं शनैश्चरं सदा शरणमहं प्रपद्ये ४८

सैहिकेयं करालास्यं कौण्डिनेयं तमोमयम्
खड्गचर्मधरं भीमं नीलसिंहासने स्थितम् ४९

नीलाञ्जनसमानाभं नीलमेघसमद्युतिम्
स्थापयामि महावक्त्रं राहुं चन्द्रार्कवैरिणम् ५०

सूर्यस्य नैर्ऋत्यदिग्भागे शूर्पाकारमण्डले दक्षिणाभिमुखं बर्बरदेशजं पैठीनसिगोत्रजमङ्गिरसाषमश्विनीनक्षत्रजं गायत्रीछन्दसं हुताशनाग्निकं कृष्णं खड्गचर्मधरं द्विभुजं कृष्णाम्बरगन्धमाल्यगोमेदरत्नाभरणभूषितं किरीटिनं कृष्णच्छत्रध्वजपताकिनं कराळवदनमुरगालङ्कारं कृष्णसिंहासने स्थितमष्टाश्वं रथमारुह्य दिव्यं मेरुमप्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टं अधिदेवतासर्पं प्र-

त्यादिदेवतानिर्ऋतिम्  ५१

राहुं कराग्रपरिमण्डितचर्मखड्गं
भीमं तमोमयतनुं तममिन्द्विनारिम्
कौण्डिन्यसूनुमसितांशुकगन्धभूषं
गोमेदभूषिततनुं हरिगं नमामि  ५२

यस्मात्त्वं छाग यज्ञानामङ्गत्वेन व्यवस्थितः
यानं विभावसोनित्यमतश्शान्तिं प्रयच्छ मे  ५३

अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम्
सिंहकागर्भसंभूतं तं राहुं प्रणमाम्यहम्  ५४

यो विष्णुनैवामृतं पीयमानं
छित्वा शिरो ग्रहभावे नियुक्तः
योऽभ्यर्कचन्द्रौ ग्रसति पर्वकाले
राहुं सदा शरणमहं प्रपद्ये  ५५

धूम्रान् द्विबाहुगदिनो विकृतास्यान् शतात्मकान्
गृध्रासनगतान् केतून् वरदान् ब्रह्मणस्सुतान्  ५६

नीलमेघसमानाभं चित्रवर्णं महाबलम्
स्थापयामि महारौद्रं केतुं सर्वफलप्रदम्  ५७

सूर्यस्य वायव्यदिग्भागे ध्वजाकारमण्डले दक्षिणाभिमुखमन्तर्वेदिदेशजं जैमिनीसूत्रजं रौद्राग्निकं धूम्रं वरदगदाधरं द्विभुजं चित्राम्बरगन्धमाल्यवैडूर्यरत्नाभरणभूषितं किरीटिनं धूम्रच्छत्रध्वजपताकिनं चित्रगृध्रवाहनं धूमारुणाष्टाश्वं धूम्रं रथमारुह्य दिव्यं मेरुमप्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टं अधिदेवताब्रह्माणं प्रत्यधिदेवताचित्रगुप्तम्  ५८

गृध्रस्थितान् जलजयोनिसमानवक्त्रान्

धूम्रान् वराभयकरान् सुभुजान् कुमारान्
वैदूयभूषिततनून् वरजैमिनीयान्
केतून् भयानकमुखान् द्विभुजान्नमामि ५९

महासत्त्व महाकाय क्षीरोदार्णवसम्भव
सर्वसङ्ग्रामविजय जयं गज कुरुष्व मे ६०

करालधूम्रसङ्काशान् तारकाग्रहमस्तकान्
रुद्रान् रौद्रात्मकान् घोरान् तान् केतून् प्रणमाम्यहम् ६१

ये ब्रह्मपुत्रा ब्रह्मसमानवक्त्राः
ब्रह्मोद्भवाः ब्रह्मसमाः कुमाराः
ब्रह्मोत्तमा वरदा जैमिनीय्याः
केतून् सदा शरणमहं प्रपद्ये ६२

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने सप्तदशोऽध्यायः

अथ प्रथमप्रश्ने अष्टादशोऽध्यायः

अथातो गृहकर्मणां गृहवृद्धिमिच्छन् मासि मासि ऋतावृतौ संवत्सरे संवत्सरे वापूर्यमाणपक्षे पुण्ये नक्षत्रे गृहशान्तिमारभेत १ अपामार्गपलाशसर्षपोदुम्बर-सदाभद्रामृततृणमिन्द्रवल्ल्या बध्वा गृहं संमार्ष्टि मा नो महान्तं मा नस्तोके इति द्वाभ्याम् २ पञ्चगव्यैर्दर्भमुष्टिना च संप्रोक्षति यत इन्द्र भयामहे स्वस्तिदा इति द्वाभ्याम् ३ कृणुष्व पाजः इत्येतेनानुवाकेन सिद्धार्थान् सम्प्रकीर्य वास्तु-मध्येऽथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति वास्तोष्पते वास्तोष्पते इति द्वाभ्याम् ४ अथाज्याहुतीरुपजुहोति वास्तोष्पते ध्रुवा स्थूणां इति षड्भिरनुच्छन्दसम् ५ सावित्र्या सहस्रं जुहुयात् ६ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ७ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिम् इति वाचयित्वैवं प्रयुञ्जानो महान्तं पोषं पुष्यति वहवः पुत्रा भवन्ति न च बालाः प्रमीयन्ते न प्रहव्याधयो गृह्णन्ति न दंष्ट्रिणो धातयेयुर्न तस्करसर्पराक्षसपिशाचा बाधन्ते ८ यदि गावः प्रतप्येरन् गवां मध्ये आहुतिसहस्रं जुहुयात् गवां शान्तिरित्याचक्षते ९ द्विपदां चतुष्पदां चैतदेव व्याख्यातं वासो दक्षिणे ति

ह स्माह भगवान् बोधायनः १०

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने अष्टादशोऽध्यायः

अथ प्रथमप्रश्ने एकोनविंशोऽध्यायः

अथातोऽश्वशान्तिं व्याख्यास्यामः अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति तदश्विनावश्वयुजोपयाताम् इति पुरोनुवाक्यामनूच्य यौ देवानां भिषजौ इति याज्यया जुहोति १ अथाज्याहुतीरुपजुहोति अश्विभ्यां स्वाहाऽश्वयुग्भ्यां स्वाहा श्रोत्राय स्वाहा श्रुत्यै स्वाहा इति २ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ३ अथाग्रेणाग्निं अश्वत्थपर्णेषु हुतशेष निदधाति यो अश्वत्थश्शमीगर्भ आरुरोह त्वे सचा । तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिस्सह इति ४ स्थालीसङ्क्षालनमाज्यशेषमुदकशेषं च पात्र्यां समानीयाश्वत्थशाखया प्रोक्षन् त्रिः प्रदक्षिणमश्वान् पर्येते यो वा अश्वस्य मेध्यस्य लोमनी वेद इत्येतेनानुवाकेने ते ह स्माह भगवान् बोधायनः ५

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने एकोनविंशोऽध्यायः

अथ प्रथमप्रश्ने विंशोऽध्यायः

अथातो गजशान्तिं व्याख्यास्यामः शुक्लपक्षेऽष्टम्यामेकादश्यां चतुर्दश्यां श्रोणायां वा ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिम् इति वाचयित्वा पुरस्तात्तिलतण्डुलान्निरुप्य सावित्र्या अप अनीय सावित्र्या पूर्णकुम्भौ नवेन वाससा वेष्टयित्वा फलेनापि धाय पश्चादुक्तं चरुं निधाय पञ्चदूर्वास्तम्बे प्रतिष्ठापयति १ अथ दर्भमालाभिर्गजशालामलङ्कृत्य हस्ती हुतस्य गन्धमाजिघ्रति २ आश्वत्थं मेक्षणमिध्माबर्हिः करोति ३ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा घृतेनाथ पक्वं गजसूक्तेन जुहुयात् आ तू न इन्द्र क्षुमन्तम् इति ४ अथाज्याहुतीरुपजुहोति नमस्ते रुद्र मन्यवे इत्येतैः पञ्चभिरष्टसहस्रं जुहुयात् ५ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ६ अग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति भूतेभ्यस्स्वाहा इति ७ अथ स्थालीपाकशेषं पञ्चदूर्वास्तम्बं चायुष्यसूक्तेन प्राशयित्वा प्रणीताजलेन प्रोक्षति आपो हिष्ठा इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति चतसृभिः पवमानस्सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वा स्वस्थानं नागजातिं नयति हस्ती दीर्घायुर्भवतीत्याह भगवान् बोधायनः ८

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने विंशोऽध्यायः

अथ प्रथमप्रश्ने एकविंशोऽध्यायः

यमयज्ञः स्वयं प्रोक्तः प्रवक्ष्ये विधिमुत्तमम्
मासि मासि तु कर्तव्यो ह्यन्तकाय बलिस्तथा १

मेधाकामोऽर्थकामो वा पुत्रकामस्तु वै द्विजः
याम्योऽहनि सनक्षत्रे सर्वान् कामात् समश्नुते २

संवत्सरस्य कार्तिक्यां बलिं कुर्वीत यत्नतः
अकुर्वन्नह्नि कार्तिक्यां नरके तु निमज्जति ३

तस्मात्कुर्वीत कार्तिक्यां सर्वकामस्तु वै द्विजः
तिलप्रस्थस्य कर्तव्यं गुडमिश्रं तथा हविः
एकेन न तु कर्तव्यः कर्तव्यो बहुभिस्सह ४

हविरुद्वास्याभिमृश्य हविरादाय ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्यानिर्णवदेशे नदीतीरे समे वान्यस्मिन् शुचौ देशे दिक्षु सृक्तिं वेदिं करोति मृण्मयीं सिकताभिर्वा ५ तिस्र उत्तरवेद्या दिशासृक्तयो भवन्ति ६ दक्षिणेन करकूपं खात्वोत्तरेणाग्निं प्रतिष्ठाप्य दर्भैरुत्तरवेदिं च प्रच्छादयति । प्रागग्रैस्तथैव विष्टरं निधाय प्रस्तरं निधाय प्रस्तरे च आयातु देवस्सुमनाभिरूतिभिर्यमो ह वेह प्रयताभिरक्ता । आसीदतां सुप्रयते ह बर्हिष्यूर्जाय जात्यै मम शत्रुहत्यै इति यममावाह्य यमे इव यतमाने यदैतं प्रवा भरन् इति च इमं यम प्रस्तरमा हि सीद इति तिसृभिः प्रस्तरमभिमन्त्र्य पवित्रपाणिरर्घ्यपाद्याचमनीयस्नानीयं च प्रदाय वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिरिति मार्जयित्वा सर्वसुरभिगन्धमाल्यं च प्रदाय यथोपलब्धं ददाति ७ कृष्णाः प्रतिसराः कृष्णसूत्रं वा ८ मध्यमेन पलाशपर्णेनाज्येनाग्निमन्वारब्धे जुहुयात् यमाय स्वाहा । अन्तकाय स्वाहा । धर्माय स्वाहा । अनन्ताय स्वाहा । वैवस्तताय स्वाहा । मृत्यवे स्वाहा । विष्णवे स्वाहा इति ९ व्याहृतीभिर्हुत्वा प्रागग्राण्यर्कपर्णान्यौदुम्बरपर्णानि वा निधाय तेषु मध्यम-

स्यामुत्तरवेद्यां हविर्निवेदयते यमाय सोमं सुनुत इति तिसृभिः १० दक्षिणस्यामुत्तरवेद्यां श्वभ्यां हविर्निवेदयते यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसा । ताभ्यामेनं परिदेहि राजन् स्वस्ति चास्मा अनमीवं च धेह्योम् इति ११ उत्तरस्यामुत्तरवेद्यां यमदूताभ्यां हविर्निवेदयते उरुणसाव-सुतृपा बुलुम्बलौ यमस्य दूतौ चरतो जनां अनु । तावस्मभ्यं दृशये सूर्याय पुनर्दत्तामसुमद्येह भद्रमोम् इति १२ योऽस्य कौष्ठ्य इति तिसृभिर्यमगाधाभिः प्रदक्षिणं परीगायते १३ दक्षिणेन करकूपं गत्वा प्राचीनावीतं कृत्वा सव्य जान्वाच्य इषमिषं स्वधा पितृभ्यः इति त्रीनुदकाञ्जलीन् निनयति १४ आयम्य प्राणान् सप्तभिर्व्याहृतीभिस्सप्त पदानि प्राञ्चो गच्छन्ति त्रयोऽभि स्वर्गं लोकाः इति सप्त लोकाः अवरूढा भवन्तीति विज्ञायते १५ दधिक्राव्णो अकारिषम् इति पुनः प्राणानाप्याय्याथैनं प्रत्येत्य नमोनमस्करकूपेभ्यो नमोनमस्कर-कूपेभ्यः इति करकूपमुपस्थाय यस्मै कामाय यमभिवादयन्ते यमो दाधार इति तिसृतिः सर्वा ता यम आहिता इति नाके सुपर्णम् इति प्रवाहयन्ते १६ हविरुत्तरतः पञ्चभिर्व्याहृतिभिस्स्वयमवभृथं गच्छति उरुं हि राजा इत्येतेना-नुवाकेन १७ प्रवक्ताऽवभृथे कलेकलुषमुक्ता अरोगशरीरा भवन्ति इति वि-ज्ञायते १८ यमेन दत्तं त्रित एनम् इति चतसृभिरादित्यमुपतिष्ठते १९ उद्वयं तमसस्परि इति प्रतिसरमाबध्नन्ति २० सर्वसुरभिगन्धमाल्यं च गृहीत्वा हविषा सर्वप्रायश्चित्तं च हुत्वाऽप्सु निमज्जन्तस्तत्र हविश्शेषान् भक्षयन्ते भक्षो-ऽस्यमृतभक्षः । तस्य ते मृत्युपीतस्य मृतवतः स्वगाकृतस्य मधुमत उपहू-तस्योपहूतो भक्षयामि इति २१ शेषं निनयति पुत्राय प्रियाय प्रियवादिने पुत्रभार्यायै पुत्रस्य भवति २२ यमो यष्टारमितः प्रयातमङ्के समाधाय पितेव पुत्रम् । सुहृच्च गच्छेत न चास्य भिन्नं पन्थानमस्यैव सहैव गच्छेत् २३ इति ह स्माह बोधायनः २४

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने एकविंशोऽध्यायः

## अथ प्रथमप्रश्ने द्वाविंशोऽध्यायः

सर्वपापहरं चैव सर्वव्याधिविनाशनम्
तृणगर्भं प्रवक्ष्यामि विद्धि धर्म्यं सनातनम् १

सङ्क्रमेषु च सर्वेषु ग्रहणे चन्द्रसूर्ययोः

पर्वणोरुभयोश्चैव जन्मनि श्रवणे तथा २

सरोगाभिभवे चैव व्यतीपाते तथैव च
गोमयेनोपलिप्ते तु शुचौ देशे समारभेत् ३

चतुर्णामपि वर्णानां संस्कारश्च तथा भवेत्
गृहीत्वा ब्राह्मणान् शुद्धान् चतुरो वेदपारगान् ४

आचार्यं च द्विजश्रेष्ठं सर्वशास्त्रविशारदम्
प्रागादिषु प्रतिष्ठाप्य तान् विप्रान् दिक्षु मध्यतः ५

व्रीहिभिस्स्थण्डिले शुद्धैश्चतुरश्रं तु कल्पयेत्
तन्मध्ये लेखयेत्पद्मं स्वर्णपद्मं ततः क्षिपेत् ६

तस्योपरि समासीनं वस्त्रे वस्त्रेण संवृतम्
आशिषो वाचयित्वा तु गुरुविप्रैस्समन्वितः ७

प्रच्छाद्य तु तृणैश्शुद्धैर्दूर्वाभिश्च विशेषतः
विष्णोर्नामसहस्रं वा शैवं वापि तथा जपेत् ८

गायत्रीमथ वा शैवं वैष्णवं मा जपेद्गुरुः
जपेयुः परितो विप्रास्तथा मन्त्रांश्च वैष्णवान् ९

ततस्तृणं समुत्थाप्य मधुपर्कं क्रमेण तु
प्रोक्षयेत्पावमानीभिर्घृतपात्रं निरीक्षयेत् १०

गुरोश्च दक्षिणां दद्यात् ब्राह्मणेभ्यश्च शक्तितः
वस्त्रे च गुरवे दद्याद्धिरण्यं च विशेषतः ११

घृतपात्रं च तस्यैव नमस्कुर्याच्च तं गुरुम्
दत्त्वैव विधिना तेभ्यो दक्षिणां च विशेषतः १२

विष्णुलोकमवाप्नोति शिवलोकमथापि वा
सर्वरोगविनिर्मुक्तः सर्वान् कामानवाप्नुयात् १३

गोसूक्तेन तृणं दद्यात् गवामेव विशेषतः
यश्शृणोति पठेद्वापि स याति परमां गतिम् १४

यो देवस्य प्रियो विद्वान् देवस्य पदमाप्नुयात्
देवस्य पदमाप्नुयादित्याह भगवान्बोधायनः १५
इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने द्वाविंशोऽध्यायः

अथ प्रथमप्रश्ने त्रयोविंशोऽध्यायः

अथातो राजाभिषेकं व्याख्यास्यामः १ पूर्वपक्षस्व पञ्चम्यां त्रयोदश्यां तिष्ये श्रोणायां वा यानि चान्यानि शुभानि नक्षत्राणि तेषु पूर्वेद्युरेव युग्मान् ब्राह्मणान् भोजयेत् २ आशिषो वाचयित्वा योनिगोत्रश्रुतवृत्तसम्पन्नं ब्राह्मणं पुरोहितं वृणीत आकूत्यै त्वा कामाय त्वा इति ३ पुरोहितो जपति आकूतिमस्यावसे । काममस्य समृद्ध्यै । इन्द्रस्य युञ्जते धियः इति ४ स्वयं जपति आकूतिं देवीं मनसः पुरोदधे यज्ञस्य मातां सुहवा मे अस्तु । यदिच्छामि मनसा सकामो विदेयमेनद्धृदये निविष्टम् इति ५ अथास्तमित आदित्ये पद्माकृतिं मण्डल कृत्वोपकल्पयते व्रीहिभिर्यवैस्तिलमाषैः पञ्चगव्यैस्सामुद्राश्चापो नद्याश्चौदुम्बरं भद्रासनं व्याघ्रचर्म हेमकलशैर्गोशृङ्गैश्च सम्भृत्य सह सादयति यत्सह सर्वाणि मानुषाणि इत्येतस्मात् ब्राह्मणात् ६ उत्तरपूर्वे देशेऽगारस्य पाकयज्ञविधानेन व्रीहिभिर्यवैस्तिलमाषैर्व्याहृतिभिर्महाव्याहृतिभिस्सावित्र्या च त्रियम्बकेनाष्टसहस्रं जुहोति ७ अथ दक्षिणार्धे श्रीसुक्तविधानेन श्रीदेवीमाराध्य मकुटं प्रक्षाळयति ८ गायत्र्या गृह्य गोसूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि । शुक्रमसीत्याज्यं देवस्य त्वेति कुशोदकम् । इति ९ मकुटं प्रक्षाळ्य प्रतिसरं बध्नाति प्रतत्ते अद्य शिपिविष्ट इति १० राजानं राजवाहनं चाग्रेऽभिषिञ्चेत् ११ अथैतां रात्रिमुपविशेत् संविशेद्वा १२ अथोदित आदित्ये भद्रासनं निधाय तत्मिन् व्याघ्रचर्मास्तीर्यं तस्मिन् प्राङ्मुख उपविश्य हेमकलशानादाय आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति चतसृभिर्गृह्णाति

१३ अव ते हेडः उदुत्तमम् इति द्वाभ्याम् आपो भद्राः आदित्पश्यामि इति चाभिषिच्य अब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिरन्यैश्च पवित्रमन्त्रैरथ शृङ्गोदकैश्चाभिषिञ्चति १४ अपां यो द्रवणे रसस्तमहमस्मा आमुष्यायणाय तेजसे श्रियै यशसे ब्रह्मवर्चसायान्नाद्यायाभिषिञ्चामि इति सम्मृष्टे समुत्क्रोशन्तीति समानमामुखस्य विमार्जनात् १५ एतस्मिन् काले राजवाहनं चाभिषिञ्चेत् १६ स्नापयित्वा ब्राह्मणेभ्यो निष्कसहस्रं दासीशतं ददाति १७ स्वस्त्ययनं वाचयित्या मकुटं वा पट्टं वा करोति अग्ने यशस्विन् यशसेममर्पय इति १८ अथ दुन्दुभिशब्दं करोति दुन्दुभीन् समाघ्नन्ति इति ब्राह्मणम् १९ प्रदक्षिणीकृत्य स्वराष्ट्रमनुपालयतीत्याह भगवान् बोधायनः २०

इति बोधायनगृह्यशेषे प्रथमप्रश्ने त्रयोविंशोऽध्यायः

## प्रथमप्रश्ने चतुर्विंशोऽध्यायः

अथातश्शताभिषेकं व्याख्यास्यामः १ शतसंवत्सरं जीवतस्सहस्रचन्द्रदर्शिनो वोदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽथ देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वाऽग्रेणाग्निं व्रीहिभिर्यवैर्वा मिश्रितं सुवर्णं संव्रतानुगुणं चतुरश्रं स्थण्डिलं करोति २ तत्र सुवर्णरजतताम्रमृण्मयैर्वा कलशैस्तन्तुना परिवृतैः प्रक्षाळ्य मध्ये प्रधानकलशं निधाय गन्धपुष्पधूपदीपैः फलै रत्नैरवकीर्यैन्द्रादिक्रमेण दक्षिणापरोत्तरान् कलशान् स्थापयित्वा तिरः पवित्रं निधाय शुद्धोदकेन पूरयित्वा मध्ये प्रधानकलशे नवरत्नैरवकीर्याहतेन वाससा प्रतिच्छाद्य गन्धपुष्पधूपदीपैरलङ्कृत्य मध्ये प्रधानकलशे ब्रह्माणमावाहयत्यैन्द्रादिक्रमेण प्रजापतिं परमेष्ठिनं चतुर्मुखं हिरण्यगर्भमावाहयामि इत्यावाह्य परिधानप्रभृत्याग्निमुखात्कृत्वा दैवतमर्चयति आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति चतसृभिः पवमानस्सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वाऽथैनान् गन्धपुष्पधूपदीपैः अमुष्मै नमोऽमुष्मै नमः इति । अन्नेन अमुष्मै स्वाहाऽमुष्मै स्वाहा इति ३ अथ पक्वाज्जुहोति आयुष्टे विश्वतो दधत् इति पुरोनुवाक्यामनूच्य आयुर्दा अग्ने इति याज्यया जुहोति ४ अथाज्याहुतीरुपजुहोति ब्रह्मसूक्तेन ब्रह्म जज्ञानम् इति षड्भिः अग्निरायुष्मान् इति पञ्चभिः पर्यायैस्स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ५ अथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति आयुष्टे आयुर्दा अग्ने इति द्वाभ्याम् ६ अथैनमद्भिरभिषेकं करोति यासु गन्धा रसा वर्णाः इति चतसृभिः प्रत्यृचं

प्रधानकलशेनाभिषिञ्चति ऐन्द्रादिक्रमेण याः प्राचीः इति चतसृभिरनुच्छन्द-समभिषेकं करोति । या ऊर्ध्वाः इति प्रधानकलशशेषेणाभिषिञ्चति ७ अहतानि वासांसि परिधायाप आचम्यालङ्कृत्य तत आदित्यमुदीक्षयति उद्वयं तमसस्परि उदु त्य चित्रं तच्चक्षुर्देवहितम् य उदगात् इति ८ अथैतेनैव यथेतमेत्यैरकां साधिवासामास्तीर्य तस्यां प्राङ्मुख उपविश्य सुवर्णरजतता-म्रकांस्ये वा पात्रे हविराज्यं हिरण्यं निधाय निमील्योन्मील्यावेक्ष्य ब्राह्मणाय प्रयच्छति ९ अथ रथमारुह्य ग्रामं प्रदक्षिणीकृत्य दुन्दुभिशब्देन स्वस्तिसूक्तेन गृहं प्रविश्य गुरवे वरं दत्वा ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा दश पूर्वान् दशापरानात्मानं च एकविंशतिं पङ्क्तिं च पुनाति पुत्रपौत्रैश्च षष्टिर्वर्षसहस्राणि स्वर्गलोकमतीय ब्रह्मणस्सायुज्यं सलोकतामाप्नोतीत्याह भगवान् बोधायनः १०

इति बोधायनीये गृह्यशेषे प्रथमप्रश्ने चतुर्विंशोऽध्यायः

अथातश्शताभिषेकम् । अथातो राजाभिषेकम् । सर्वपापहरं चैव । यमयज्ञस्स्वयं प्रोक्तः । अथातो गजशान्तिम् । अथातोऽश्वशान्तिम् । अथातो गृहकर्मणाम् । अथ नवग्रहपूजाविधिः । अथातो ग्रहातिथ्यबलिः । अथातः प्रतिसरबन्धम् । अथ वै भवति । अथ संवत्सरेसंवत्सरे । सप्तमेऽष्टमे वा मासि । अथ प्रहुते प्रसिद्धम् । अथातः पुण्याहम् । अथातः पुण्याहदेवताः । अथ शुचौ समे देशे । सर्वत्र दर्वीहोमानाम् । अथातः परिस्तरणविधिम् । अथातस्सिकतादोषम् । अथातस्स्थण्डिलविधिम् । अथातोऽपूर्वम् । उपनयनादिरग्निः । अथातस्सप्तपाकयज्ञानाम् २४ अथातस्सप्तपाकयज्ञानाम् । उपनयनादिरग्निः । अथातोऽपूर्वम् । अथात-स्स्थण्डिलविधिम् । अथातस्सिकतादोषम् । अथातः परिस्तरणविधिम् । सर्वत्र दर्वीहोमानाम् । अथ शुचौ समे देशे । अथातः पुण्याहदेवताः । अथातः पुण्याहम् । अथ प्रहुते प्रसिद्धम् । सप्तमेऽष्टमे वा मासि । अथ संवत्सरेसंवत्सरे । अथ वै भवति । अथातः प्रतिसरबन्धम् । अथातो ग्रहातिथ्यबलिः । अथ नवग्रहपूजाविधिः । अथातो गृहकर्मणाम् । अथातोऽश्वशान्तिम् । अथातो गजशान्तिम् । यमयज्ञस्स्वयं प्रोक्तः । सर्वपापहरं चैव । अथातो राजाभिषेकम् । अथातश्शताभिषेकम् २४

इति बोधायनगृह्यशेषे प्रथमः प्रश्नः समाप्तः

अथ द्वितीयप्रश्नप्रारम्भः

अथातः पञ्चमीश्राद्धं व्याख्यास्यामः शैशिरे मास्यारभ्य शुक्लपक्षस्य पञ्चम्यां कृष्णपक्षस्य सप्तम्यां च पुत्रकामी संवत्सरं दीक्षां कृत्वा तस्मात्पूर्वेद्युस्सायमौपासनहोमे हुते प्राचीनावीती सङ्कल्पयेत् प्रथमसंवत्सरं कर्ताऽस्मि इति १ मनसा सङ्कल्पे कृते सायमनशनः त्र्यवरान् ब्राह्मणान् निमन्त्रयते २ पादप्रक्षाळनं कृत्वा गन्धादिभिरलङ्कृत्य पुत्रानिच्छे वः पञ्चमं श्राद्धं भविता तत्र भवद्भिः प्रसादः करणीयः इति ३ अपरेद्युरामन्त्र्य पादप्रक्षाळनं कृत्वा अद्य श्राद्धं भवति इति ४ मध्याह्ने तृतीयमामन्त्रणम् ५ अवटखननादि मासिश्राद्धवत् ६ पितृणां श्राद्धं मातामहानां च श्राद्धं कुर्यादिति ७ अथाऽग्निमुखात्कृत्वा मासिश्राद्धवद्धोमं कृत्वा पृथक्पृथग्घोमं च कुर्यात् ८ वस्त्राभरणकुण्डलाद्यैरलङ्कृत्य रिद्धं भवतु इति वाचयित्वा तान् भोजयेत् ९ भोजनवेळायां दिवाकीर्त्यपठनं पुण्यकथनं स्मृतिपठनं च १० स्वाचान्तान् प्रणम्य भुक्तदक्षिणां यथाशक्ति दत्वा पुनस्सिद्धं वाचयित्वा तान् विसृज्य द्वारान्तमनुव्रज्य पिण्डदानानि मासिश्राद्धवत्कृत्वा ततश्शेषं दम्पती अश्नीयाताम् ११ मध्यमपिण्डां पत्नीं प्राशयति १२ पूर्वेद्यू रात्रावपरेद्यू रात्रौ च भोजनं मैथुनादि न कुर्याद्ये श्राद्धभोजिनश्च १३ एवं कुर्वन् पुत्रस्सगणोपेतो भवति पुत्रो न शीर्यते तस्मात्पञ्चमीश्राद्धं कुर्यात् १४ पुत्र इति निर्वचनम् पुदिति नरकस्तस्मात्त्रायते इति पुत्रोऽपुत्रस्य गतिर्नास्सीत्याह भगवान् बोधायनः १५

इति बोधायनीये गृह्यशेषे द्वितीयप्रश्ने प्रथमोऽध्यायः

अथ द्वितीयप्रश्ने द्वितीयोऽध्यायः

अथ गर्भाधानं व्याख्यास्यामः पूर्वपक्षे पुण्ये नक्षत्रे ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिम् इति वाचयित्वाथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति प्रवेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतोऽभयमभयं तन्नो अस्त्वव देवान् यजे हेड्यान् स्वाहा इति १ स्विष्टकृतमवदाय तमन्तःपरिधि सादयित्वाथाज्याहुतीरुपजुहोति ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहा कनिष्ठाय स्वाहा कनिष्ठित्यै स्वाहा प्रतिष्ठाय स्वाहा प्रतिष्ठित्यै स्वाहा दम्पत्यै स्वाहा अयने स्वाहा अयनपतये स्वाहा प्रजापतये स्वाहा ब्रह्मणे स्वाहा इति २ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ३ हविष्यम-

न्नमभिमन्त्रयते तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि इति ४ अपरेणाग्निमुभौ जायापती प्राश्नीयाताम् तस्सवितुर्वरेण्यम् इति ५ प्राश्याथ आचम्य जठरमभिमृशति यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः इति द्वाभ्याम् ६ यं कामं कामयते तं मनसा ध्यायेदिति गर्भाधानं व्याख्यातम् ७

इति बोधायनीये गृह्यशेषे द्वितीयप्रश्ने द्वितीयोऽध्यायः

## अथ द्वितीयप्रश्ने तृतीयोऽध्यायः

अथ मङ्गलानि आवृतः स्त्रीभ्यः प्रतीयेरन्निन्वकाभिः प्रसृता वरैः प्रतिनन्दिता यां कामयेत दुहितरं प्रिया स्यादिति । तां निष्ट्यायां दद्यात् । प्रियैव भवति । नेव तु पुनरागच्छति इति ब्राह्मणावेक्षो विधिः १ इन्वकाशब्दो मृगशीर्षे निष्ट्याशब्दः स्वाताविति २ सुप्तां रुदतीं निष्क्रान्तां वरणे परिवर्जयेत् ३ दत्तां गुप्तां द्योतामृषभां विनतां शरभां विकटां मुण्डां मण्डूषिकां साङ्कारिकां रातां पालीं मित्रां स्वनुजां वर्षकारीं च वर्जयेत् ४ नक्षत्रनामाः नदीनामाः वृक्षनामाः पर्वतनामाः प्रेष्यनामाः पक्षिनामाः पिशाचनामाश्च गर्हिताः सर्वाश्च रेफलकारोपान्ता वरणे परिवर्जयेत् ५ शक्तिविषये द्रव्याणि प्रतिच्छन्नान्युपनिधाय ब्रूयुरुपस्पृशेति नानाबीजानि संसृष्टानि वेद्याः पांसून् क्षेत्राल्लोष्टं शकृच्छ्मशानलोष्टमिति पूर्वेषामुपस्वर्शने यथालिङ्गमृद्धिरुत्तमं परिचक्षते ६ बन्धुशीललक्षणसम्पन्नामरोगामुपयच्छेत ७ बन्धुशीललक्षणसम्पन्नः श्रुतवानरोग इति वरसम्पत् ८ यस्यां मनश्चक्षुषोः निबन्धस्तस्यामृद्धिर्नेतरदाद्रियेतेत्येके ९ अथ यद्यससम्भवेप्सु स्यात्तां परेषां स्थूलाढारिकाजीवचूर्णानि कारयित्वा सुप्तायां सम्बाध उपवपेत् अवज्यामिव धन्वनो हृदो मन्युं तनोमि ते । इन्द्रापास्य पलिगमन्येभ्यः पुरुषेभ्योऽन्यत्र मत् इति १० सिद्ध्यर्थे बभ्रुमूत्रेण प्रक्षाळयति ११ अथ विजननकाले क्षिप्रंसुवनं शिरस्त उदकुम्भं निधाय षत्तस्तूर्यन्तीमथास्या उदरमभिमृशति यथैव वायुः पवते यथा समुद्र एजति । एवं ते गर्भ एजतु सह जरायुणाऽपसर्पतु इति १२ अथ यदि जरायुर्न पतेद्दर्भैरेव जठरं संमाष्टि तिल देऽवपद्यस्व न मांसमसि नो दलम् । स्थवित्र्यवपद्यस्य स्वप्स्ये इति १३ प्रसिद्धं जातकर्म १४

इति बोधायनीये गृह्यशेषसूत्रे द्वितीयप्रश्ने तृतीयोऽध्यायः

## अथ द्वितीयप्रश्ने चतुर्थोऽध्यायः

अथ प्रजार्थिहोमः १ पूर्वपक्षे पुण्ये नक्षत्रेऽमावास्यायां विषुवेऽयने वा नदी-तीरेऽश्वत्थच्छायायां वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वा ब्राह्मणा-नन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिम् इति वाचयित्वा प्राच्यां दिशि ब्रह्माणं प्रतिष्ठाप्य पार्श्वयोर्धातारं विधातारं दक्षिणतो धातारमुत्तरतो विधातारम् २ ततस्तानर्चयेत्पूर्वं ब्रह्माण प्रजापतिं परमेष्ठिनं हिरण्यगर्भमावाहयामि इत्यावा-ह्य सावित्र्या पाद्यं ददाति सावित्र्या निवेदयेदतैरेव नामधेयैश्शुक्लान्नं ब्रह्मणे मुद्गान्नं धातुः पीतान्न विधातुः ३ ततस्सावित्र्या अप आचम्य प्रणवेनाष्टशतं हुत्वा ब्रह्माणमुपतिष्ठते नमो वाचे नमो वाचस्पतये नमो ब्रह्मणे बृहते करोमि इत्येवं नमो धात्रे नमो विधात्रे इति ४ अग्निमुपतिष्ठेत नमोऽग्नये सप्तार्चिः सप्त जिह्वाः सप्तधाऽग्निः प्रतिष्ठितः । सप्तैव विश्वा भूतानि को ह्यग्निः प्रतितिष्ठति । तत्त्वमसि विश्वमसि योनिरसि इति ५ अथ स्त्रियमाहूय सावित्र्या पलाश-पर्णैरष्टोत्तरसहस्रैः स्नापयित्वा पुरुषसूक्तेन जुहुयात्तत्सम्पातेन मूर्ध्नि जुहुयात् प्रणवेन नमस्कुर्यात् ६ अध्वर्युं वस्त्रकुण्डलाभ्यामलङ्करोति ७ ततस्सा गर्भिणी भवतीत्याह भगवान् बोधायनः ८

इति बोधायनीये गृह्यशेषे द्वितीयप्रश्ने चतुर्थोऽध्यायः

## अथ द्वितीयप्रश्ने पञ्चमोऽध्यायः

अथ माघमासे शुक्लपक्षस्य सप्तम्यां ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋृद्धिम् इति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वाऽग्रे-णाग्निमादित्यमालिख्य संपरिस्तीर्य षोडशभिरर्कपर्णैरभ्यन्तराग्रैः प्रदक्षिणं मण्डलमास्तीर्य गन्धोदकेनाभ्युक्ष्य पुष्पैरवकीर्य धूपेनाधिवास्य तस्मिन् प्रणीतामद्भिः पूर्णां कृत्वोत्पूयादित्यमावाहयेत् १ आदित्यं नावमरोक्ष्ये पूर्णामुपरिवासिनीम् । अच्छिद्रां पारयिष्णुं शतारित्रां स्वस्तय ओं नम आदित्याय इति २ परिधानप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति आयातु देवस्सवितोपयातु हिरण्ययेन सुवृता रथेन । वहन् हंस्त सुभगं विद्मनापसं प्रयच्छन्तं पपुरिं पुण्यमच्छ इत्येकामाहुतिं हुत्वोत्तरार्धात् स्विष्टकृतमवदा-यान्तःपरिधि सादायित्वा बहुप्रकारैरन्नैरादित्यं तर्पयति ओं नमो भगवत आदित्याय नमः । क्लं नदीवृत्तिस्तटीरुवो नावमर्णालिसुरिणोरोरुमिविरि-किताकुनानारुसन्ध्यतुमे मन्त्रवदानि स्वाहा इति ३ अथाज्याहुतीरुपजुहोति

स्थविरे स्वाहा तेजसे स्वाहा यमिन्द्रमाहुके स्वाहा इद्वयम् उदुत्यं चित्रं तच्चक्षुः य उदगात् हमश्शुचिषत् वयस्सुमर्णाः अविश्वदेवं सूर्यो देवीम् इति चत्वरि सूक्तानि । द्वादश संपद्यन्ते द्वादश मासास्संवत्सरस्संवत्सरेण सर्वान् कामानवाप्नेति ४ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ५ तर्पयित्वा मनसा तान् ध्यात्वा प्रवाहयति उदस्तांप्सीत्सविता मित्रो अर्यमा सर्वानमित्रानवधीद्युगेन । बृहन्तं मामकग्द्वीरवन्तं रथन्तरे श्रयस्व स्वाहा पृथिव्यां वामदेव्ये श्रयस्व स्वाहाऽन्तरिक्षे बृहति श्रयस्व स्वाहा दिवि बृहता त्वोपस्तभ्नोमि इति ६ अथैना आदाय साहर्कपर्णैरुत्तिष्ठति उदायुषा इति ७ यत्रापस्तद्गत्वाऽपो निनयति समुद्रं वः प्रहिणोमि स्वा योनिमपि यच्छत । अच्छिद्रः प्रजाया भूयासं मा परासेचिमत्पयः इति ८ सपवित्रेण पाणिनाऽद्भिर्मार्जयति आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति चतसृभिः पवमानस्सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वा याः सुगन्धा रसा वर्णाः इत्येताभिरिति ९ एत द्वन्यं पुण्यं पुत्र्यं पौत्र्यमायुष्यं स्वर्ग्यं सूर्याचन्द्रमसोस्सायुज्यं सलोकतामाप्नोतीति दीपयेदमुनेति १०

इति बोधायनीयगृह्यशेषसूत्रे द्वितीयप्रश्ने पञ्चमोऽध्यायः

## द्वितीयप्रश्ने षष्ठोऽध्यायः

अथातः पुत्रप्रतिग्रहकल्पं व्याख्यास्यामः १ शोणितशुक्लसम्भवो मातृपितृनिमित्तकस्तस्य प्रदानपरित्यागविक्रयेषु मातापितरौ कर्तारौ भवतो न त्वेकं पुत्रं दद्यात् प्रति गृह्णीयाद्वा स हि सन्तानाय षूर्वेषाम् २ न तु स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः ३ पुत्रं प्रतिग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुण्डले अङ्गुलीयकं चाचार्यं च वेदपारगं कुशमयं बर्हिः पर्णमयमिध्ममिति ४ अथ बन्धूनां मध्ये राजनि चावेद्य दरिषदि वाऽगारमध्ये ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिम् इति वाचयित्वाऽथ देवयजनोल्लोखनप्रभृत्याप्रणीताभ्यः कृत्वा दातुस्समीपं गत्वा पुत्रं मे देहि इति मिक्षेत ददामि इतीतर आह ५ तं पुत्रं प्रतिगृह्णाति धर्माय त्वा गृह्णामि सन्तत्यै त्वा गृह्णामि इति ६ अथैनं वस्त्रकुण्डलाभ्यामङ्गुलीयकेन चालङ्कृत्य परिधानप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति यस्त्वा हृदा कीरिणा मन्यमानः इति पुरोनुवाक्यामनूच्य यस्मै त्वं सुकृते जातवेदः इति याज्यया जुहोति ७ अथ आज्याहुतीरुपजुहोति व्याहृतीभिर्हुत्वा स्विष्टकृन्प्रभृति सिद्धमाधेनुवरप्रदानात् ८ अथ दक्षिणां

ददात्येते एव वाससी एते एव कुराडले एतच्चाङ्गुलीयकम् ९ यद्येवं कृते औरसः पुत्र उत्पद्यते तुरीयभागेष भवतीति ह स्माह भगवान् बोधायनः १०
इति बोधायनीयगृह्यशेषे द्वितीयप्रश्ने षष्ठोऽध्यायः

द्वितीयप्रश्ने सप्तमोऽध्यायः

अथातो यज्ञोपवीतविधिं व्याख्यास्यामः १ जीर्णे छेदे विनाशे वा हस्तपादान् प्रक्षाळयाप आचम्य ब्राह्मणकन्यकया वा ब्राह्मणविधवया वा शुचिस्नातया कृताचमनीयया निर्मितं सूत्रं गृहीत्वा ग्रामात्प्राचीं वोदीचीं वा दिशमुप-निष्क्रम्य चतुरङ्गुलमात्र षराणवतिसूत्रं परिमराडलं वा द्वितीयमेवं तृतीयमद्भिः प्रक्षाळय आपो हिष्ठा मयोभुवः इति तिसृभिः हिररायवर्णाश्शुचयः पावकाः इति चतसृभिः पवमानस्सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वा देवागारे गवां गोष्ठे नदीतीरे शुचौ देशे वा यत्र यत्र शुचिर्देशस्स्यात् बिल्वखादिर-पलाशोदुम्बराश्वत्थवेरावादियाज्ञिकवृक्षशाखायामवलम्ब्य सजीवं बध्नाति पितृभ्यो नमः इति प्रथममपसव्यम् २ सम्पन्ने हस्ते गृहीत्वा प्रतिष्ठापयति ओं भूः प्रतिष्ठापयामि ओं भुवः प्रतिष्ठापयामि ओं सुवः प्रतिष्ठापयामि ओं भूर्भुवस्सुवः प्रतिष्ठापयामि इति प्रतिष्ठाप्यापसव्यकृतं जपति भूर्भुवस्सुवः । ओजो बलम् इत्येतमनुवाकम् ३ अथ सावित्र्या त्रिगुणीकृत्य भूरग्निं च इति दक्षिणावृत्तिमभिमन्त्रयेत् भुवो वायुं च इति मध्यमावृत्तिं सुवरादित्यं च इत्युत्तरां भूर्भुवस्सुवश्चन्द्रमसं इति त्रिधावृत्तिं च ४ अथ सूत्रान्तेन बध्नाति यथा नश्श्रेयसः करत् इति चतुर्भिर्मध्ये द्विगुणं भवति ५ तां भूः प्रतिष्ठापयामि इति पुनः प्रतिष्ठाप्य उशन्तस्त्वा हवामहे इत्यृचं जपित्वा प्रदक्षिणतो दृढं करोति ६ त्रयाणां ब्रह्मेश्वरविष्णूनां प्रमाणं कृत्वा ७

तन्तुद्विगुणितं सूत्रं विष्णुना त्रिगुणीकृतम्
चतुर्वेदस्य चत्वारि त्रिवेदस्य त्रिकं भवेत्
द्वे स्यातां वै द्विवेदस्य एकमेवैकवेदिनः ८

इति यज्ञोपवीतविधिर्व्याख्यातः ९
इति बोधायनीयगृह्यशेषे द्वितीयप्रश्ने सप्तमोऽध्यायः

## अथ द्वितीयप्रश्ने अष्टमोऽध्यायः

अथ राजन्यवैश्ययोरुपनयनं प्रसिद्धम् १ एतावदेव नाना २ आचार्य एव पक्वाज्जुहोति ३ ब्रह्मसूत्रमवोद्धृत्य त्रिष्टुग्भी राजन्यस्य जिघर्म्यग्निम् आ त्वा जिघर्मि आयुर्दा अग्ने हविषो जुषाणः इति । जगतीभिर्वैश्यस्य जनस्य गोपा अजनिष्ट जागृविः त्वामग्ने मानुषीरीडते विशः सप्त ते अग्ने समिधस्सप्तजिह्वाः इति ४ वैश्यस्य रथकारस्यैतावदेव नानाचार्य एव पक्वाज्जुहोति तत्सवितुर्वरेण्यम् इति ५ अथाज्याहुतीरुपजुहोति क्षेत्रियै त्वा निर्ऋत्यै त्वा इति षड्भिरनुच्छन्दसम् । नात्र जगतीभिर्वैश्यस्य जुहोति ६ अथाग्रेणाग्निं हुतशेषं दत्वा विरमेत् ७ ब्राह्मणेन क्षत्रियायामुत्पन्नो ब्राह्मणवदेवैतावदेव नाना तस्य क्षेत्रियै त्वा इति व्याहृतीभिश्चेत्युपहोमः ८ क्षत्रियवदम्बष्ठस्य क्षेत्रियै त्वा इत्येवोपहोमः ९ क्षत्रियाद्वैश्यायामुत्पन्नः क्षत्रियवदेव क्षेत्रियै त्वा सावित्र्या चोपहोमः १० वैश्याच्छूद्रायामुत्पन्नस्तूष्णीं वैश्यवत् ११ गायत्रीत्रिष्टुब्जगत्यः तत्सवितुर्वरेण्यम् आसत्येन युञ्जते मनः इति सावित्र्यो यथाक्रमं ब्राह्मणक्षत्रियवैश्यानाम् १२ उक्तं समावर्तनम् । समावर्तनप्रभृति स्नातकः पूर्वेण ग्रामान्निष्क्रमणप्रवेशनान्युत्तरेण वा वहिर्वाचं विसृजेदन्यत्र हस्तं दत्वां प्रसिद्धं स्नात्वा देवर्षिपितृंस्तर्पयित्वा दर्भेषु प्राङ्मुख उपविश्य दर्भान् दूर्वाश्च धारयमाणस्त्रीन् प्राणायामान् धारयित्वा सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा दशावरं वेदानधीत्य प्रश्नमनुवाकं वाऽधीयीत यावत्तरसम् इति विज्ञायते ततो गृहानेति यत्किञ्चिद्ददाति सा दक्षिणा इति ब्राह्मणम् १३ अथ दैवतान्यर्चयति वैश्वदेवं करोति प्रसिद्धं बलिहरणम् १४ अथ वै भवति पञ्च वा एते महायज्ञास्सतति प्रतायन्ते सतति संतिष्ठन्ते देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञः इत्येतदानुपूर्व्यं भवति १५ अथ देवयज्ञः देवेभ्यस्स्वाहा व्याहृतीभिश्च इति । अपि समिधं तद्देवयज्ञस्संतिष्ठते १६ अथ पितृयज्ञः ब्राह्मणान् भोजयेत् पित्र्यानपि वा दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य गन्धपुष्पधूपदीपैरभ्यर्च्यालङ्कृत्य तेषु पिण्डं ददाति पितृभ्यस्स्वधा नमः इति अप्यपस्तत्पितृयज्ञस्संतिष्ठते १७ अथ भूतयज्ञः उत्तरेणाग्निं प्रागग्रान् दर्भान् संस्तीर्य गन्धपुष्पधूपदीपैरलङ्कृत्य तेषु बलिमुपहरति भूतेभ्यो नमः इत्यापुष्पेभ्यस्तद्भूतयज्ञस्संतिष्ठते १८ अथ मनुष्ययज्ञः ब्राह्मणेभ्योऽन्नं दद्यादौदनपात्रात् तन्मनुष्ययज्ञस्संतिष्ठते १९ अथ ब्रह्मयज्ञः उक्तः २० कथमु खलु नित्यानामनुक्रम इति सन्ध्योपासनमग्न्युपस्थानं नित्यस्वाध्यायगृहक-

र्मस्नानादित्योपस्थानतर्पणजपयज्ञगृहदेवतार्चनवैष्वदेवपञ्चमहायज्ञात्मयज्ञ-
सन्ध्योपासनाग्निहोत्रात्मयज्ञसवेशनानीत्येतान्युदितहोमिनोऽजस्राग्निहोत्रिणो-
ऽनुदितहोमिनोऽग्निहोत्रं सन्ध्योपासनमिति क्रमः २१ एतानि नित्यान्युप-
व्युषमारभ्यासवेशनात् प्रसिद्धम् २२ साय प्रातस्सपत्नीकः प्रीतिं वर्धयेत् २३
तस्याः पत्न्याः पूर्वरात्रावुपसंवेशनमार्धरात्रादधश्शयनमा ब्राह्ममुहूर्तादथो-
पोत्थाय नित्यान्यारभते २४ इति व्याख्यातमुपनयनम् २५

इति बोधायनीयगृह्यशेषे द्वितीयप्रश्ने अष्टमोऽध्यायः

अथ द्वितीयप्रश्ने नवमोऽध्यायः

अथ जडबधिरमूकानां संस्कारं व्याख्यास्यामः १ ऋतुर्यथाकामी स्यात् २
पुण्ये नक्षत्रे ब्राह्मणान् भोजयित्वाशिषो वाचयित्वा केशानोप्य स्नातं शुचि-
वाससं बद्धशिखं यज्ञोपवीतिनमप आचमय्य देवयजनमुदानयति ३ अथ
देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा याज्ञिकीं समिधमाज्येनाक्त्वा तूष्णी-
मभ्याधापयति । तूष्णीमश्मानं स्थापयति । यथालाभं तूष्णीं वासः परि-
धापयति । तूष्णीं मेखलां परिव्ययति । मन्त्रवद्ग्रन्थिं करोति । तूष्णीमजिनं
प्रतिमुञ्चति । तूष्णीं दण्डं प्रयच्छति । याज्ञिकस्य वृक्षस्य नाम प्रयच्छति
४ अथैनं दक्षिणे हस्ते गृह्णाति यस्मिन् भूतं च भव्यं च इति ५ अथैनं देवताभ्यः
परिददाति देवेभ्यस्त्वा इति ६ अथैनमुपनयति देवस्य त्वा इति सर्वं नाम-
ग्रहणवर्जम् ७ आचार्य एव पक्वाज्जुहोति तत्सवितुर्वरेण्यम् इति ८ अथा-
ज्याहुतीरुपजुहोति क्षेत्रियै त्वा इति षड्भिर्व्याहृतिभिश्च ९ अथ स्विष्टकृत्प्रभृति
सिद्धमाधेनुवरप्रदानात् १० अथाग्रेणाग्निं याज्ञिकवृक्षस्य पर्णेषु हुतशेषं निद-
धाति तत्पुरस्ताद्व्याख्यातम् ११ अथ पक्वादुपादाय प्राश्नाति १२ तूष्णीं
सर्वान् मन्त्रानाचार्य एव जपेदित्येके १३ षण्डजडक्लीबान्धव्यसनिव्या-
धितोन्मत्तहीनाङ्गबधिराधिकाङ्गामयाव्यपस्मारिश्वित्रिकुष्ठीदीर्घरोगिणश्चैतेन
व्याख्याता इत्येके १४ सद्यो मधुपर्कं ददाति १५ तिसृषु व्युष्टासु मधुपर्कवदा
व्रतातूष्णीम् १६ अथाग्निमुत्सृजति आयुर्दा अग्ने हविषो जुषाणः इति १७
पिता वा भ्राता वात्मनि समारोपयेदित्येके १८

इति बोधायनीये गृह्यशेषसूत्रे द्वितीयप्रश्ने नवमोऽध्यायः

## अथ द्वितीयप्रश्ने दशमोऽध्यायः

अथातोऽश्वत्थसंस्कारं व्याख्यास्यामः १ ऋतुर्यथाकामी स्यात् २ पुण्ये नक्षत्र ब्राह्मणान् भोजयित्वाशिषो वाचयित्वा प्रदक्षिणमश्वत्थं परिसमूहति अश्वत्थे वो निषदनम् इति ३ तमभ्यर्च्य यज्ञोपवीतं प्रतिमुञ्चति ४ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा याज्ञिकीं समिधमाज्येनाक्त्वा तूष्णीमाधापयति । यथालाभं तूष्णीं वासः परिधापयति । तूष्णीं मेखलां परिव्ययति । मन्त्रवद्ग्रन्थिं करोति । तूष्णीमजिनं प्रतिमुञ्चति । तूष्णीं दण्डं प्रयच्छति । याज्ञिकस्य वृक्षस्य नाम प्रयच्छति ५ अथाश्वत्थमुपनयेत् देवस्य त्वा इति नामग्रहणवर्जम् ६ आचार्य एव पक्वाज्जुहोति तत्सवितुर्वरेण्यम् इति ७ अथाज्याहुतीरुपजूहोति क्षेत्रियै त्वा इति षड्भिर्व्याहृतिभिश्च ८ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ९ अथाग्रेणाग्निं पलाशपर्णेषु हुतशेषं निदधाति । तत्पुरस्ताद्व्याख्यातम् १० अथ पक्वादुपादायाथैनं निवेदयति ११ तूष्णीं सर्वान् मन्त्रानाचार्य एव जपेदित्याह भगवान् बोधायनः १२

इति बोधायनीये गृह्यशेषे द्वितीयप्रश्ने दशमोऽध्यायः

## अथ द्वितीयप्रश्ने एकादशोऽध्यायः

अथाहुते प्रसिद्धमुपनयनम् १ एतावदेव नाना २ कुमारं भोजयित्वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य मङ्गलानि संस्तीर्य तेषु प्राङ्मुख आचार्य उपवेश्य तस्याग्रेण कुमारो दर्भेषु प्रत्यङ्मुख उपविश्योभयीरपस्सन्निषिञ्चत्युष्णासु शीता आनयति तस्य चौलवत्तूष्णीं केशानोप्य स्नाप्याच्छाद्यालङ्कृत्यादित्याभिमुखस्तिष्ठन् अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम् इति ब्राह्मणम् ३ यज्ञोपवीतिनमप आचमय्य देवयजनमुदानयति ४ कृष्णाजिनं ब्राह्मणस्येत्यादि । चतुरङ्गुलं ब्राह्मणस्य त्र्यङ्गुलं राजन्यस्य द्व्यङ्गुलं वैश्यस्योपवीतवत् बध्नाति ५ अथ सावित्रीं भो अनुब्रूहि इत्युक्त्वा कुमारस्य दक्षिणे कर्णे उपदिशेदित्येके । कर्णाभ्यां भूरि विश्रुतम् इत्युक्त्वोन्मुखावलोकनं कृत्वा वाचयति सावित्रीम् ६ अथ सायंप्रातस्सन्ध्यां गृहस्थवत्समापयति ७ अथैनमग्निमुपसमाधाय प्रोक्षणीन्संस्कृत्य परिसमूह्य परिषिच्य व्याहृतीभिस्समिध आधापयतिषोढाविहितेनोपस्थापयति ८ तदाग्नेयं भस्म सङ्गृह्य वामपाणितके निक्षिप्य मा नस्तोके इत्यद्भिः शं नो देवीरभिष्टये इति संसृज्य संमेळय तिर्यक्त्रिपु-

राड्रमेकपुराड्रं वा ब्राह्मरास्य वर्तुळाकारं राजन्यस्यार्धचन्द्राकृतिं वैश्यस्य ९ अङ्गानि सन्धापयति सरस्वती इति शिरसि मेधावी इति ललाटे तेजस्वी इति वक्षसि वर्चस्वी इति दक्षिणेंऽसे ब्रह्मवर्चसी इत्युत्तरेंऽसे आयुष्मान् इति ग्रीवायां भूयासम् इति पिठरे स्वस्ति इति शिरस्यन्येषां स्त्रीणां वोर्ध्वपुराडम् १० प्रोक्षणीषु करं प्रक्षाळ्य नमस्कृत्य प्रोक्षणीशेषं गेहस्योपरिष्टान्निनयेदित्याह भगवान् बोधायनः ११

इति बोधायनीये गृह्यशेषे द्वितीयप्रश्ने एकादशोऽध्यायः

## अथ द्वितीयप्रश्ने द्वादशोऽध्यायः

यथो एतद्ग्रहाणामुग्रचेष्टानां नक्षत्रपथचारिणामेवं विवाहं कुर्वन्त्यपरपक्षेऽशुभे दिने वाऽशुचिना वा विवाहं कुर्वन्ति विवाहेन नर्ध्नोतीति मन्येत वावसथात् पुनर्विवाहं कुर्वीत १ अथ चेदौपासनारम्भात् प्राक् ज्वलनस्य नाशः पुनर्विवाहं कुर्वीत २ अथ पुनर्विवाहं व्याख्यास्यामः ३ उदगयन आपूर्यमाणपक्षे पुराये नक्षत्रे पूर्वेद्युर्नान्दीमुखं कृत्वोपवसति ४ अथ श्वोभूते ब्राह्मणानन्नेन परिविष्य पुरायाहं स्वस्ति ऋद्धिम् इति वाचयित्वोभौ शुची स्नातौ शुक्लवाससावलङ्कारेणालङ्कृत्य जायां समीक्षते अभ्रातृघ्नीम् इति प्रतिपद्य सप्तपदान्तं कृत्वाऽथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वाथास्या उपोत्थाय हृदयदेशमभिमृशतीति सिद्धमाधेनुवरप्रदानादत ऊर्ध्वं नाद्रियेत ५ अथ पुनर्विवाहेष्वेतानुत्सीदन्ति प्रतिसरं स्नानं वासः प्रतोदमिषुं च पूर्वं भोजनमर्ध्यं व्रतं त्रिरात्रमित्यादिविवाहशेषान् वर्जयेदित्याह भगवान् बोधायनः ६

इति बोधायनीयगृह्यशेषे द्वितीयप्रश्ने द्वादशोऽध्यायः

## अथ द्वितीयप्रश्ने त्रयोदशोऽध्यायः

अथातो विष्णुप्रतिष्ठाकल्पं व्याख्यास्यामः द्वादश्यामेकादश्यां श्रोणाया वा यानि चान्यानि शुभनक्षत्राणि तेषु पूर्वेद्युरेव युग्मान् ब्राह्मणानन्नेन परिविष्य पुरायाहं स्वस्ति ऋद्धिम् इति वाचयित्वा समागतायां निशायां कपिलापञ्चगव्येन सहिरगयवदूर्वाङ्कुराश्वत्थपलाशपर्णेन सुवर्णोपधानं प्रतिकृतिं कृत्वाऽभिषिञ्चति आपो हि ष्ठा मयोभुवः इति तिसृभिः हिरगयवर्णाश्शुचयः पावकाः इति चतसृभिः पवमानस्सुवर्जनः इत्येतेनानुवाकेन व्याहृतीभिश्च १ पुष्पफलाक्षतमिश्रैर्यवदूर्वाङ्कुरं पादपीठे निक्षिपति इदं विष्णुर्विचक्रमे इति २

प्रतिसरमाबध्नाति रक्षोहणं वाजिनमाजिघर्मि इति ३ अथैनं नदीतटाकह्रदनिर्झरसरस्तीर्थानामन्यतमेष्वहतेन वाससा कुशबन्धमाल्यमाच्छाद्याधिश्रयति अव ते हेडः उदुत्तमम् इति ४ अथ श्वोभूते स्नात्वाहतवाससश्चत्वारो ब्राह्मणाः प्रतिमामुत्थापयेयुः उत्तिष्ठ ब्रह्मणस्पते इति ५ अथ शुचौ देशे समवस्थाप्य गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति श क्षीरं दधिक्राव्णेति वै दधि । शुक्रमसि ज्योतिरसीत्याज्यं देवस्य त्वा कुशोदकम् । इत्येतत्पञ्चगव्यं नाम ६ अत्राह कपिलाया वरं क्षीरं श्वेतायाश्च वरं दधि । रक्तायास्तु घृतं श्रेष्ठं शेषौ शबलकृष्णयोः । इति ७ एतेन आ वो राजानम् इति स्नापयति ८ शमीपलाशखादिरबिल्वाश्वत्थविकङ्कतन्यग्रोधपनसाम्रशिरीषोदुम्बराणां सर्वयाज्ञिकवृक्षाणां चर्मकषायकलशेनाभिषिञ्चति अश्वत्थे वो निषदनम् इत्येतेनानुवाकेन ९ मणिमुक्ताप्रवाळरजतताम्राणामप्सु निमग्नानां पूर्णकलशेनाभिषिञ्चति हिरण्यवर्णाम् इति नवर्चेन १० हिरण्येन तेजसा चक्षुर्विमोचयेत् तेजोसि इति ११ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति विष्णोर्नुकम् इति पुरोनुवाक्यामनूच्य परो मात्रया इति याज्यया जुहोति १२ अथ पुरुषसूक्तेनाज्यहुतीरुपजुहोति इदं विष्णुर्विचक्रमे इति पादयोस्स्पृशेत् १३ पुनस्तेनैवाज्याहुतीर्जुहुयात् विष्णोर्नुकम् इति नाभिदेशेस्पृशेत् १४ पुनस्तेनैवाज्याहुतीर्जुहुयात् अतो देवा अवन्तु नः इति मूर्ध्नि स्पृशेत् १५ पुनस्तेनैवाज्याहुतीर्जुहुयादथ सर्वाङ्गं स्पृशेत्पौरुषेण सूक्तेन १६ होमान्ते उदु त्यं जातवेदसम् इत्युत्थाप्य शाकुनेन सूक्तेन देवालयं प्रवेश्य मणिमुक्ताप्रवाळसुवर्णरजतानि पादपीठे निधाय अतो देवा अवन्तु नः इति विष्णुं स्थापयेत् १७ अथ गन्धपुष्पधूपदीपान्याकाशोन्मुखानि कृत्वोपोत्थाय आवाहनं करीति प्रणवयुक्तव्याहृतिभिर्व्यस्तैस्समस्तैश्च ओं भूः पुरुषमावाहयाम्यों भुवः पुरुषमावाहयाम्यों सुवः पुरुषमावाहयाम्यों भूर्भुवस्सुवः पुरुषमावाहयामि इत्यावाह्य रत्नाम्बुकलशेनाभिषिञ्चति प्रणवेन धारयेत् ब्रह्म इति विज्ञायते १८ प्रणवेन कूर्चं ददाति १९ दूर्वाविष्णुक्रान्तश्यामाकपद्मपत्रकलशेन पाद्यं ददाति २० एलालवङ्गतक्वोलकर्पूरमिश्रकलशेनाचमनीयं ददाति २१ आपः क्षीरकुशाग्रैश्चाक्षतैर्यवतण्डुलैस्तिलैस्सिद्धार्थकैश्चार्घ्यं ददाति २२ इमा आपश्शान्ताश्शिवाश्शिवतमाः पूताः पूततमा मेध्यामेध्यतमा अमृतां अमृतरसाः पाद्या आचमनीया अर्घ्यास्ता जुषन्तां प्रतिगृह्यन्तां प्रतिगृह्णातु भगवान् महाविष्णुर्विष्णवे नमः इति पाद्यमाचमनीयमर्घ्यं ददाति २३ इदं

विष्णुर्विचक्रमे इति प्रतिसरं वित्रंसयति २४ देवतां नमस्कृत्वाथ गन्धं ददाति

इमे गन्धाश्शुभा दिव्यास्सर्वगन्धैरलङ्कृताः
पूता ब्रह्मपवित्रेण पूतास्सूर्यस्य रश्मिभिः २५

प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महाविष्णुर्विष्णवे नमः इति २६ माल्यं ददाति

इमे माल्याश्शुभा दिव्यास्सर्वमाल्यैरलङ्कृताः
पूता ब्रह्मपवित्रेण पूतास्सूर्यस्य रश्मिभिः २७

प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महाविष्णुर्विष्णवे नमः इति २८ पुष्पं ददाति

इमे पुष्पाश्शुभा दिव्यास्सर्वपुष्पैरलङ्कृताः ।
पूता ब्रह्मपवित्रेण पूतास्सूर्यस्य रश्मिभिः २९

प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महाविष्णुर्विष्णवे नमः इति ३० धूपं ददाति

वनस्पतिरसो धूपो धूपेभ्यो धूप उत्तमः
आघ्रेयस्सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ३१

प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महाविष्णुर्विष्णवे नमः इति ३२ अथ दीपं ददाति

ज्योतिश्शुक्रश्च तेजश्च देवानां सततं प्रियः
भास्वरस्सर्वभूतानां दीपोऽयं प्रतिगृह्यताम् ३३

प्रतिगृह्ययां प्रतिगृह्णातु भगवान् महविष्णुर्विष्णवे नमः इति ३४ अथ द्वादशनामभिः पुष्पाणि दद्यात्तैरेव तर्पणानि कृत्वा कृसरपायसगुळोदनं हरिद्रोदनमिति हवींषि । पवित्रं ते विततम् इति पायसं निवेदयेत् । घृताप्लुतं पूर्णशरावं गुळोदनं निवेदयेत् । कृसरं तिलमिश्रमाज्यं जुहुयात् वासुदेवाय

स्वाहा । सङ्कर्षणाय स्वाहा । प्रद्युम्नाय स्वाहा । अनिरुद्धाय स्वाहा । ईशान्यै स्वाहा । श्रियै स्वाहा । सरस्वत्यै स्वाहा । पुष्ट्यै स्वाहा । विष्णवे स्वाहा । पुरुषसूक्तेन विष्णोर्नुकं तदस्य प्रियं प्रतद्विष्णुः परोमात्रया विचक्रमे त्रिर्देवः इति द्वादशनामभिः अमुष्मै स्वाहामुष्मै स्वाहा इति स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ३५ अथ सर्वहविषां बलिमुपहरति त्वामेकमाद्यं पुरुषं पुरातनं नारायणं विश्वसृजं यजामहे । त्वमेव यज्ञो विहितो विधेयस्त्वमात्मनात्मन् प्रतिगृह्णीष्व हव्यम् इति ३६ अथाग्रेणाग्निमश्वत्थपर्णेषु हुतशेषं निदधाति भूर्भुवस्सुवरोम् इति ३७ द्विश्चतुर्वा प्रदक्षिणं साग्निं परिक्रामति विश्वभुजे नमः । सर्वभुजे नमः । आत्मने नमः । परमात्मने नमः । सर्वात्मने नमः इति ३८ ब्रह्मचारी गृहस्थो वा द्वादश ब्राह्मणान् संयतान् हरिद्रोदनं भोजयेत् । सन्तिष्ठते विष्णुप्रतिष्ठाविधिः ३९

इति बोधायनीयगृह्यशेषे द्वितीयप्रश्ने त्रयोदशोऽध्यायः

## द्वितीयप्रश्ने चतुर्दशोऽध्यायः

अथातो महापुरुषस्याहरहः परिचर्याविधिं व्याख्यास्यामः १ स्नातश्शुचिश्शुचौ समे देशे गोमयेनोपलिप्य देवस्य प्रतिकृतिं कृत्वाक्षतपुष्पैर्यथालाभमर्चयित्वा सह पुष्पोदकेन महापुरुषमावाहयेत् ओं भूः पुरुषमावाहयाम्यों भुवः पुरुषमावाहयाम्यों सुवः पुरुषमावाहयाम्यों भूर्भुवस्सुवः पुरुषमावाहयामि इत्यावाह्य आयातु भगवान् महापुरुषः इति कुशैरासनं दद्यात् भगवतोऽयं कूर्चो दर्भमयस्त्रिवृद्धरितस्सुवर्णस्तं जुषस्व इति २ अथ सावित्र्या पात्रमद्भिः प्रक्षाळ्य तिरःपवित्रमप आनीय पुनस्तेनैवापोऽभिमन्त्र्य सपवित्रेणादित्यं दर्शयेत् ओम् इत्यातमितोः ३ तासां त्रीणि पदा विचक्रमे इति पाद्यं ददाति ४ अथ व्याहृतिभिर्निर्वाल्यं व्योह्य इदं विष्णुविचक्रमे इत्यर्घ्यं दद्यात् ५ दिवो वा विष्णो इत्याचमनीयम् ६ अथैनं स्नापयति आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति चतसृभिः पवमानस्सुवर्जनः इत्येतेनानुवाकेन ब्रह्म जज्ञानम् वामदेव्यर्चा यजुः पवित्रेण इति ७ अथाद्भिस्तर्पयति केशवं तर्पयामि इति द्वादशनामधेयैर्व्याहृतीभिः प्रदक्षिणमुदकं परिषिच्य प्रणवेन वासो ददाति सावित्र्या यज्ञोपवीतं इदं विष्णुर्विचक्रमे इत्याचमनीयं गन्धद्वाराम् इति गन्धं इरावती इत्यक्षतं तद्विष्णोः इति पुष्पं सावित्र्या धूपं उद्दीप्यस्व इति दीपं देवस्य त्वा इति हविर्निवेदनम् ८ अथास्मै

द्वादशनामभिः पुष्पाणि दद्यात् । त्रीणि पदा विचक्रमे इति प्रतिपदं दद्यात् सुमृडीका भवन्तु नः इत्यन्तेन ९ अथैन वैष्णवीभि ऋग्यजुस्सामाथर्वभिः स्तुतिभिस्तुन्वन्ति १० व्याहृतीभिः पुरुषमुद्वासयेत् ओं भूः पुरुषमुद्वासयामि इत्यादिभिः प्रयातु भगवान् महापुरुषः क्षेमाय विजयाय पुनस्संदर्शनाय च इति ११ प्रतिमास्थानेष्वावाहनोद्वासनवर्जमहरहस्त्वाचक्षत इत्याह भगवान् बोधायनः १२

इति बोधायनीये गृह्यशेषे द्वितीयप्रश्ने चतुर्दशोऽध्यायः

अथ द्वितीयप्रश्ने पञ्चदशोऽध्यायः

अथातस्संप्रवक्ष्यामि विष्णोस्स्नपनमुत्तमम्
प्रासादस्याग्रतो विद्वान् कुर्यात्स्वपनमण्डपम् १

मण्डपस्य च मध्ये तु वेदिकां सम्प्रकल्पयेत्
अचलप्रतिष्ठितो यत्र देवस्तत्र न वेदिका २

तस्यास्समीपे तत्स्थाने कलशस्थानमुत्तमम्
सङ्ख्या च नव तेषां तु स्थापनं प्रणवेन तु ३

यत्किञ्चित्क्रियते चात्र प्रणवेनैव कथ्यते
स्थापनं कलशानां तु प्रागादीशानमन्ततः ४

एतेनैव क्रमेणात्र सर्वं कर्म विधीयते
नवमं कलशं मध्ये स्थापयेदन्ततो बुधः ५

कूर्चेषु स्थापयेत्सर्वान् व्रीहिप्रस्थस्थितेषु च
व्रीहयश्शालयः प्रोक्ताः कलशस्थापने बुधैः ६

तेषामभावे यत्किञ्चिद्ग्राम्यं धान्यमिहेष्यते
पूरयेत्कलशान् सर्वान् शुद्धस्फटिकसन्निभैः ७

जलैस्तु मध्यमं तत्र पञ्चगव्येन पूरयेत्

कूर्चान्निधाय सर्वेषु शरावैरपिधाय च ८

अरिक्तैरेव कर्तव्यः शरावैर्नवभिस्सदा
अपिधानक्रिया तेषां शालिजैरेव तण्डुलैः ९

अर्चयेत्कलशान् सर्वान् गन्धपुष्पादिभिः क्रमात्
प्राप्ते मुहूर्त आवाह्य परमात्मानमात्मवान् १०

पूर्वोक्तविधिनावाह्य देवमानीय वेदिकाम्
अर्चयित्वा ततो विष्णुमर्चितैरेव सर्वशः ११

आनीतं वेदिकायां तु गोमयेनापरेण तु
उपलिप्तेऽक्षतैः कीर्णे शालिभिर्व्रीहिभिश्च तत् १२

प्राङ्मुखं देवमासीनं सन्निदध्यात्ततः क्षणात्
तत्रैव त्वचलस्थाने न चावाहनमिष्यते १३

तत्रैव नित्यसान्निध्याद्देवस्य परमात्मनः
आसनादिक्रमाद्द्यात्सूक्तं पौरुषमाश्रितः १४

ततः कलशमादाय कुर्यात्स्नपनमादितः
मन्त्रा एते तु मन्तव्या स्नापने परमात्मनः १५

वैष्णवं सूक्तमापो हि हिरण्येति च सप्तकम्
पवमानानुवाकं च सर्वे साधारणास्स्मृताः १६

अनुक्तमन्त्रं यत्किञ्चिन्न गृह्णीयात्ततो बुधः
अनेन विधिवत्कृत्वा स्नापनं पुरुषस्य तु १७

दत्वा पायसमन्नं तु शेषं परिसमापयेत्
नित्यदेवार्चने यत्स्यात् कलशस्नापनं तु वै १८

स्नापनस्य त्रयश्चोक्ताः ब्रह्मजज्ञानमन्त्रतः
वामदेव्यं ततः कुर्यात्पवित्रं यजुषश्च यत् १९

पवमानानुवाकं च सर्वे साधारणास्स्मृताः
विषुवायनसङ्क्रान्तौ चन्द्रसूर्यग्रहे तथा २०

अर्चनायाश्च विच्छेदे कदाचित्कालभेदतः
उपघातेऽपि वान्यस्मिन् दुस्स्वप्ने तु भयंकरे २१

आद्यं तु स्नापनं कुर्यात्सर्वशान्तिर्भविष्यति
अथ देवोत्सवं कुर्यान्मुच्यते सर्वपातकैः २२

इह लोके परत्रापि सुखमेवास्य वर्धते
पश्चाद्विष्णोश्च सायुज्यमेतीत्यत्र न संशयः २३

जगद्धिताय कृष्णाय स्नापनं कृतवान् हि यः
इत्याह भगवान् बोधायनः २४

इति बोधायनीये गृह्यशेषसूत्रे द्वितीयप्रश्ने पञ्चदशोऽध्यायः

अथ द्वितीयप्रश्ने षोडशोऽध्यायः

अथातो रुद्रप्रतिष्ठाकल्पं व्याख्यास्यामः १ चतुर्थ्यामष्टम्यामार्द्रायामपभरण्यां वा चतुर्दश्यां वा यानि चान्यानि शुभनक्षत्राणि तेषु पूर्वेद्युरेव युग्मान् ब्राह्मणान्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिं इति वाचयित्वा समागतायां निशायां कपिलापञ्चगव्येन सहिरण्ययवदूर्वाङ्कुराश्वत्थपलाशपर्णेन सुवर्णोपधानं प्रतिकृतिं कृत्वाभिषिञ्चति आपो हिष्ठा मयुभुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति चतसृभिः पवमानस्सुवर्जनः इत्येतेनानुवाकेन व्याहृतिभिश्च २ पुष्पफलाक्षतमिश्रयवदूर्वाङ्कुरं पादपीठे निक्षिपति नमस्ते रुद्र मन्यवे इति ३ प्रतिसरं बध्नाति रक्षोहणं वाजिनम् इति ४ अथ नदीतटाकह्रदनिर्झरसरस्तीर्थानामन्यतमेष्वहतेन वाससा कुशबन्धां मालामाच्छाद्याधिवासयति अवते हेडः उदुत्तमम् इति ५ अथ श्वोभूते स्नात्वाहतवाससश्चत्वारो ब्राह्मणाः

प्रतिमामुत्थापयेयुः उत्तिष्ठ ब्रह्मणस्पते इति ६ अथ शुचौ देशे समवस्थाप्य

गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम्
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि
शुक्रमसि ज्योतिरसीत्याज्यं देवस्य त्वा कुशादिकम् ७

इत्येतत्पञ्चगव्यं नाम ८ अत्राह

कपिलाया वरं क्षीरं श्वेतायास्तु वरं दधि
रक्ताया वरमाज्यं च शेषौ शबळकृष्णयोः इति ९

एतेन नमस्ते अस्तु धन्वने इत्यष्टाभिः स्नापयति १० अथ शमापलाश-खादिरबिल्वाश्वत्थविकङ्कतन्यग्रोधपनसाम्रशिरीषोदुम्बरसर्वयाज्ञिकवृक्षाणां चर्मकषायकलशेनाभिषिञ्चति अश्वत्थे वो निषदनम् इत्येतेन ११ मणिमुक्ता-प्रवाळानामप्सु निमग्नानां पूर्णकलशेनाभिषिञ्चति हिरण्यवर्णाः इति पूर्वोक्तेन १२ हिरण्येन तेजसा चक्षुर्विमोचयेत् तेजोऽसि इति १३ लिङ्गे चेन्निवर्तते चक्षुषोरभावात् १४ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जु-होति या त इषुश्शिवतमा इत्यान्तादनुवाकस्य १६ अथाज्याहुतीरुपजुहोति द्रापे सहस्राणि इत्येताभ्यामनुवाकाभ्यां प्रत्यृचं सर्वो वै रुद्रः इति पादपीठे स्पृशेत् १७ पुनस्ताभिरेवाज्याहुतीर्जुहुयात् कद्रुद्राय इति नाभिदेशे स्पृशेत् १८ पुनस्ताभिरेवाज्याहुतीर्जुहुयात् नमो हिरण्यबाहवे इति मूर्ध्नि स्पृशेत् १९ पुनस्ताभिरेवाज्याहुतीर्जुहुयात् सर्वाङ्गमुपस्पृशेत् रुद्रेण समस्तेन २० ततः उदु त्यं जातवेदसम् इत्युत्थाप्य पञ्चब्रह्मसंज्ञकेन पञ्चानुवाकेन देवालयं प्रवेश्य मणिमुक्ताप्रवाळसुवर्णरजतानि पादपीठे निधाय नमस्ते रुद्र मन्यवे इति रुद्रं स्थापयेत् २१ अथ गन्धपुष्पधूपदीपान्याकाशोन्मुखानि कृत्वा उपोत्थाया-वाहनं करोति प्रणवयुक्तव्याहृतीभिर्व्यस्ताभिस्समस्ताभिश्च ओं भूः पुरुषमावा-हयाम्यों भुवः पुरुषमावाहयाम्यों सुवः पुरुषमावाहयाम्यों भूर्भुवस्सुवः पुरुष-मावाहयामि इति आयातु भगवान् महादेवः इत्यावाह्य रत्नाम्बुकलशेना-भिषिञ्चति प्रणवेन धारयेत् ब्रह्म इति विज्ञायते २२ प्रणवेन कूर्चं ददाति २३ विष्णुपदाश्यामाकपद्मपत्रकलशेन पाद्यं ददाति २४ एलालवङ्गतककोल-

कर्पूरमिश्रकलशेनाचमनीयं ददाति २५ आपःक्षीरकुशाग्रैश्चाक्षतैर्यवतण्डुलैः । यवैस्सिद्धार्थकैश्चार्ध्यं ददाति इमा आपश्शिवाश्शिवतमाः पूततमा मेध्या मेध्यतमा अमृता अमृतरसाः पाद्या आचमनीया अर्ध्यास्ता जुषतां प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महादेवो रुद्राय नमः इति पाद्यमाचमनीयमर्ध्यं ददाति २६ नमस्ते रुद्र मन्यवे इति प्रतिसरं विस्रंसयति २७ देवतां नमस्कृत्याथ गन्धं ददाति इमे गन्धाश्शुभा दिव्यास्सर्वगन्धैरलङ्कृताः । पूता ब्रह्मपवित्रेण पूतास्सूर्यस्य रश्मिभिः । प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महादेवो रुद्राय नमः इति २८ अथ माल्यं ददाति

इमे माल्याश्शुभा दिव्यास्सर्वमाल्यैरलङ्कृताः
पूता ब्रह्मपवित्रेण पूतास्सूर्यस्य रश्मिभिः

प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महादेवो रुद्राय नमः इति २९ अथ पुष्पं ददाति

इमे पुष्पश्शुभा दिव्यास्सर्वपुष्पैरलङ्कृताः
पूता ब्रह्मपवित्रेण पूतास्सूर्यस्य रश्मिभिः

प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महादेवो रुद्राय नमः इति ३० अथ धूपं ददाति

वनस्पतिरसो धूपो धूपाढ्यो धूप उत्तमः
आघ्रेयस्सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्

प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महादेवो रुद्राय नमः इति ३१ अथ दीपं ददाति

ज्योतिश्शुक्रश्च तेजश्च देवानां सततं प्रियः
भास्वरस्सर्वभूतानां दीपोऽयं प्रतिगृह्यताम्

प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महादेवो रुद्राय नमः इति ३२ अथ भवाय इत्यष्टाभिः पुष्पाणि दद्यात्तैरेव तर्पणानि कृत्वा कृसरं पायसं गुळोदनं हरिद्रोदनमिति हवींषि पवित्रं ते विततम् इति पायसं निवेदयेत् ३३ घृताप्लुतं

पूर्णशरावं गुळोदनं निवेदयेत् ३४ कृसरमाज्यमिश्रं जुहुयात् भवाय देवाय स्वाहा इत्यष्टाभिः भवस्य देवस्य पत्न्यै स्वाहा इत्यादिभिः ३५ अथ हरिद्रोदनं जुहुयात् भवस्य देवस्य सुताय स्वाहा इत्यष्टाभिः ३६ अथ त्र्यम्बकं यजामहे मा नो महान्तं मा नस्तोके आर्द्रया रुद्रः हेती रुद्रस्य आरात्ते अग्निः विकिरिद विलोहित सहस्राणि सहस्रधा सहस्राणि सहस्रशः इति । द्वादशनामभिः शिवाय शङ्कराय सहमानाय शितिकण्ठाय कपर्दिने ताम्राय अरुणाय अपगुरमाणाय हिरण्यबाहवे सस्थिञ्जराय बभ्लुशाय हिरण्याय स्वाहा इति ३७ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ३८ हविषां बलिमुपहरति त्वामेकमाद्यं पुरुषं पुरातनं रुद्रं शिवं विश्वसृजं यजामहे । त्वमेव यज्ञो विहितो विधेयस्त्वमात्मनात्मन् प्रतिगृह्णीष्व हव्यम् इति ३९ अथाग्रेणाग्निमश्वत्थपर्णेषु हुतशेषं निदधाति भूर्भुवस्सुवरोम् इति ४० द्विः चतुर्वा सहाग्निं प्रदक्षिणं परिक्रामति विश्वभुजे नमः । सर्वभुजे नमः । आत्मने नमः । परमात्मने नमः इति ४१ ब्रह्मचारी गृहस्थो वा द्वादश ब्राह्मणान् संयतान् हरिद्रोदनेन भोजयेत् ४२ संतिष्ठते प्रतिष्ठाविधिः ४३

इति बोधायनीये गृह्यशेषसूत्रे द्वितीयप्रश्ने षोडशोऽध्यायः

अथ द्वितीयप्रश्ने सप्तदशोऽध्यायः

अथातो महादेवस्याहरहः परिचर्याविधिं व्याख्यास्यामः स्नातश्शुचिस्समे शुचौ देशे गोमयेनोपलिप्य देवस्य प्रतिकृतिं कृत्वाऽक्षतपुष्पैर्यथालाभमर्चयित्वा सह पुष्पोदकेन महादेवमावाहयेत् ओं भूः पुरुषमावाहयामि इत्यादि आयातु भगवान् महादेवः इति १ यो रुद्रो अग्नौ इति यजुषा पात्रमभिमन्त्र्य प्रक्षाळ्य तिरःपवित्रमप आनीय पुनस्तेनैवाभिमन्त्र्य सह पवित्रेणादित्यं दर्शयेत् ओम् इत्यातमितोः २ तासां पाद्यम् इति पाद्यं ददाति ३ अथ व्याहृतीभिर्निर्माल्यं व्यपोह्यार्घ्यमाचमनीयं दत्वाऽभिषिञ्चति आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति चतसृभिः पवमानस्सुवर्जनः इत्येतेनानुवाकेन ब्रह्म जज्ञानम् कद्रुदाय त्वरितरुद्रं वामदेव्यं आपो वा इदम् इति च ४ अथ व्याहृतीभिः प्रदक्षिणमुदकं परिषिच्य पवित्रं पादमूले निधायाद्भिस्तर्पयति भवं देवं तर्पयामि इत्यष्टाभिः ५ ओं नमो भगवते रुद्राय त्र्यम्बकाय इति वस्त्रयज्ञोपवीते दद्यात् ६ भवाय देवाय नमः इत्यष्टाभिः पुष्पाणि दद्यात् ७ त्वरितरुद्रेण गन्धपुष्पधूपदीपं ददाति ८

देवस्य त्वा इति हविषो निवेदयेत् ९ त्र्यम्बकम् इति परिषेकं दद्यात् १० अमृतोपस्तरणमसि इति प्रतिपदं कृत्वा हविरविरुद्धं सर्वं स्वादु वस्तु कन्दमूलफलानि दद्यात् ११ मुहूर्तमनवेक्षमाण आसीनो हविरुद्वासयामि इति निवेद्यमुद्वास्य अमृतापिधानमसि इति प्रतिपदं कृत्वा त्र्यम्बकम् इत्याचमनीयं दद्यात् १२ सर्वोपकरणैरर्चयित्वा भवाय देवाय नमः इत्यादिभिः अमुष्मै नमोऽमुष्मै नमः इति गन्धादीन् ददाति १३ रौद्रीभिः ऋग्यजुस्सामाथर्वभिस्स्तुतिभिस्स्तुन्वन्त्यार्षैस्स्तोत्रैश्च नमस्कृत्य प्रयातु भगवान् महादेवः इति विसर्जयति १४ लिङ्गस्थानेष्वावाहनोद्वासनवर्जमहरहः स्वस्त्ययनमित्याचक्षत इत्याह भगवान् बोधायनः १५

इति बोधायनीये गृह्यशेषसूत्रे द्वितीयप्रश्ने सप्तदशोऽध्यायः

## अथ द्वितीयप्रश्ने अष्टादशोऽध्यायः

अथातो रुद्रस्नानार्चनविधिं व्याख्यास्यामः आदित एव तीर्थे स्नात्वोदेत्याहतं वासः परिधाय शुचिः प्रयतो ब्रह्मचारी शुक्लवासाः ईशानस्य प्रतिकृतिं कृत्वा तस्य दक्षिणाप्रत्यग्देशे तन्मुखः स्थित्वा आत्मनि देवताः स्थापयेत् प्रजनने ब्रह्मा तिष्ठतु । पादयोर्विष्णुस्तिष्ठतु । हस्तयोर्हरस्तिष्ठतु । बाह्वो रुद्रस्तिष्ठतु । जठरेऽग्निस्तिष्ठतु । उदरे पृथिवी तिष्ठतु । हृदये शिवस्तिष्ठतु । कण्ठे वसवस्तिष्ठन्तु । वक्त्रे सरस्वती तिष्ठतु । नासिकयोर्वायुस्तिष्ठतु । नयनयोश्चन्द्रादित्यौ तिष्ठेताम् । कर्णयोरश्विनौ तिष्ठेताम् । ललाटे रुद्रास्तिष्ठन्तु । मूर्ध्न्यादित्यास्तिष्ठन्तु । शिरसि महादेवस्तिष्ठतु । शिखायां वासुदेवस्तिष्ठतु । पृष्ठे पिनाकी तिष्ठतु । पुरतश्शूली तिष्ठतु । पार्श्वयोश्शिवाशङ्करौ तिष्ठेताम् । सर्वतो वायुस्तिष्ठतु । सर्वतोऽग्निज्वाला मालापरिवृतास्तिष्ठन्तु । सर्वेष्वङ्गेषु सर्वा देवता यथास्थानं तिष्ठन्तु । मां रक्षन्तु इति । अग्निर्मे वाचि श्रितः इति यथालिङ्गमङ्गानि संमृज्याथैनं गन्धाक्षतपत्रपुष्पधूपदीपैराराधयेत् १ अथैनं प्रसादयति

आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः
आराधयामि शक्त्या त्वानुगृहाण महेश्वर २

त्र्यम्बकं यजामहे इति च ३ अथैनमावाहयति

ग्रा त्वा वहन्तु हरयस्सचेतसश्श्वेतैरश्वैस्सह केतुमद्भिः ।
वाताजितैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोम् इति ४

स्थापिते नावाहनम् ५ ग्रथास्मा ग्रासनं ददाति सद्योजातम् इति भवे भवे इति पाद्यं भवोद्भवाय नमः इत्यर्घ्यं रुद्राय नमः इत्याचमनीयं व्याहृतीभिर्निर्माल्यं व्यपोह्याथैनं स्नापयति ग्रापो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति चतसृभिः पवमानस्सुवर्जनः इत्येतेनानुवाकेन ब्रह्म जज्ञानं कद्रुद्राय सर्वो वै कया नश्चित्र ग्राभुवत् ग्रापो वा इदं सर्वम् इति च ६ व्याहृतीभिः प्रदक्षिणमुदकं परिषिच्य पवित्र पादमूले निधायाद्भिस्तर्पयति भवं देवं तर्पयामि इत्यष्टाभिः वामदेवाय नमः इति वस्त्रं ज्येष्ठाय नमः इति यज्ञोपवीतं रुद्राय नमः इत्याचमनीयं कालाय नमः इति गन्धं कलविकरणाय नमः इत्यक्षतं बलविकरणाय नमः इति पुष्पं बलप्रमथनाय नमः इति धूपं सर्वभूतदमनाय नमः इति दीपं मनोन्मनाय नमः इति काले नैवेद्यं रुद्राय नमः इत्याचमनीयं ददाति ७ ग्रथास्याघोरतनूरुपतिष्ठते ग्रघोरेभ्योऽथ घोरेभ्यः इति ८ ग्रथ रुद्रगायत्रीं जपेत् तत्पुरुषाय विद्महे इत्येतां रौद्रीं सहस्रकृत्व ग्रावर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा दशावरम् ९ ग्रथैनमाशिषमाशास्ते ईशानस्सर्वविद्यानाम् इति १० ग्रथास्य मूर्ध्नि कलशधारया सन्ततमभिषिञ्चति नमस्ते रुद्र मन्यवे इत्येकादशानुवाकान् जपेत् । सर्वो वै रुद्रः इति त्रीननुवाकान् सद्यो जातम् इति पञ्चानुवाकान् इमा रुद्राय इति द्वादशर्चानन्यांश्च रौद्रमन्त्रान्यथाशक्ति जपेत् ११ एवमेकादशकृत्वोऽभिषिञ्चति १२ जपान्ते जपान्ते ग्रग्नाविष्णू सजोषसा इत्येकादशानुवाकानामेकमेकमनुवाकं जपेत् १३ सर्वेषामन्ते पुनराराधयेत् सद्यो जातम् इत्यासनादि दीपान्तं पूर्वोक्तं सर्वं कृत्वा मनोन्मनाय नमः इति पायसादि महाहविर्निवेदयेद्रौद्रीभिस्स्तुतिभिस्स्तुन्वन्ति १४ तदेतद्रुद्रस्नानार्चनं पापक्षयार्थी व्याधिमोचनार्थी श्रीकामश्शान्तिकामः पुष्टिकामस्तुष्टिकाम ग्रायुष्काम ग्रारोग्यकामो मोक्षकामश्च कुर्यात् १५ ग्रथ यथाशक्ति दक्षिणां ददाति दशगावस्सुवर्णभूषिता ऋषभैकादशास्तदभाव एकां गां दद्यादित्याह भगवान् बोधायनः १६

इति बोधायनीये गृह्यशेषसूत्रे द्वितीयप्रश्ने ग्रष्टादशोऽध्यायः

## अथ द्वितीयप्रश्ने एकोनविंशोऽध्यायः

अथातः पुनःप्रतिष्ठाकल्पं व्याख्यास्यामः पूर्वोक्तेषु नक्षत्रेषु यानि चान्यानि शुभनक्षत्राणि शुक्लपक्ष उदगयने वसन्तादिकाले पूर्वं प्रतिष्ठितस्यापि बुद्धि-पूर्वकमेकरात्रं द्विरात्रमेकमासं द्विमासं वाऽर्चनाविच्छेदे शूद्ररजस्वलापतिताद्युपप्लवे वा पूर्वेद्युरेव युग्मान् ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिम् इति वाचयित्वा समागतायां निशायां जलाधिवास कृत्वा श्वोभूत उत्थाय द्वौ कलशौ स्थापयेदेकं पञ्चगव्येन पूरयित्वाऽपरं शुद्धोदकेन सह रत्नेन स्नापयेत् १ अष्टसहस्रमष्टशतमष्टाविंशतिं वा मूलमन्त्रेण रुद्रगायत्र्या स्नापयित्वा पुष्पाणि दद्याद्यथालाभमर्चयित्वा गुडोदनं निवेदयेत् २ एवंकृतेऽस्य शान्तिर्भवति ३ बुद्धिपूर्वेणार्चनाविच्छेदे स्नापनं कर्तव्यम् ४ एवं कुर्वाणः स्वस्ति ऋद्धिमाप्नोतीत्याचक्षते ५ एवं पुनः प्रतिष्ठामन्त्रेण प्रतिष्ठापयेदित्याह भगवान् बोधायनः ६

इति बोधायनीये गृह्यशेषसूत्रे द्वितीयप्रश्ने एकोनविंशोऽध्यायः

## अथ द्वितीयप्रश्ने विंशोऽध्यायः

अतः परं प्रवक्ष्यामि पञ्चगव्यविधिं क्रमात्
उत्तमं द्रोणमेकं तु मध्यमं तु तदर्धकम् १

तदर्धमधमं ज्ञेयं त्रिविधं परिकीर्तितम्
प्रथपादं घृतं प्रोक्तं गोमूत्र द्विगुणं भवेत् २

गोमयं कुडुपं प्रोक्तं दधि प्रस्थसमन्वितम्
क्षीरं प्रस्थद्वयं प्रोक्तं --३

स्नापनं पञ्चगव्येन भुक्तिमुक्तिप्रदं नृणाम्
कपिलाया वरं क्षीरं श्वेतायास्तु वरं दधि
रक्ताया वरमाज्यं वै शेषौ शवलकृष्णयोः ४

--- प्रयतो देवस्य गृहं गत्वा पुरतो मण्डपे समे देशे गोमयेनोपलिप्य व्रीहिभिर्यवैर्वा खारिमात्रं तदर्धं वा संगृह्य सौवर्णं राजतं कांस्यं मृण्मयं वा

नव कलशान् याचति ५ तन्तुना परिवेष्ट्य शुचौ देशे निधाय स्थण्डिलस्य दक्षिणता उदङ्ङासीनो --- दशनामभिर्ब्राह्मणानामन्त्र्य पुण्याहं वाचयित्वा प्रोक्ष्य व्रीहिभिस्स्थण्डिलं कृत्वा तस्य मध्यतः प्रादेशाद्दक्षिणवामपार्श्वे सुवर्ण-शकलेन ऋजुमुल्लिखेत् ब्रह्म जज्ञानम् इति दक्षिणतः । पिता विराजाम् इत्युत्तरतः । तयोर्दक्षिणतो नाके सुपर्णम् इति तयोरुत्तरतः आप्यायस्व इति । सन्ततमृजुमुल्लिखेत् यो रुद्रो अग्नौ इति पश्चात् । सर्वो वै रुद्रः इति पुरस्तात् । तयोः पश्चात् इदं विष्णुर्विचक्रमे इति । तयोः पुरस्तात् इन्द्रं विश्वा अवीवृधन् इति ६ अथाभ्युक्ष्य शकलं निरस्याप उपस्पृश्य भूर्भुवस्सुवरों ब्रह्मणे नमः इति मध्यमपदेऽभ्यर्च्य ईशानाय नमः इतीशपदे तत्पुरुषाय नमः इति पूर्वे अघोराय नमः इति दक्षिणे वामदेवाय नमः इत्युत्तरे सद्योजाताय नमः इति पश्चिमे हृदयाय नमः इति दक्षिणपूर्वे शिरसे नमः इत्युत्तरपूर्वे शिखायै नमः इति दक्षिणपश्चिमे कवचाय नमः इति पश्चिमोत्तरे अस्त्राय नमः इति दिग्विदिक्ष्वभ्यर्च्य ब्रह्मणे नमः इति मध्ये प्रधानकलशं स्थाप्य ईशादिपदेषु तत्तन्मन्त्रेण कलशान् संस्थाप्य प्रोक्षणीस्संस्कृत्य पात्राणि प्रोक्ष्य गव्यानि च प्रोक्षणीपात्रपरिमाणं कुशोदकं देवस्य त्वा इति ब्रह्मकुम्भे आनयति । आपो वा इदं सर्वम् इत्यभिमन्त्र्य कूर्चं निधायेशपात्रे सपवित्रेण क्षीरम् । पुरुषे दधि । अघोरे घृतम् । सौम्ये गोमयम् । वारुणे गोमूत्रम् । हृदये पिष्टं कदळ्यादीनि च । नाळिकेरं शिरसि । आमलकं शिखायाम् । कवचे हारिद्रम् । तत्तन्मन्त्रेणावाहनाद्याचमनान्तं कृत्वा संपरिस्तीर्याथैनं स्नापयति आपो हिष्ठा मयो भुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति चतसृभिः पवमानस्सुवर्जनः इत्येतेनानुवाकेन ब्रह्म जज्ञानं कद्रुद्राय सर्वो वै कया नश्चित्रः आपो वा इदम् इति प्रदक्षिणमुदकं व्याहृतीभिः परिषि-च्याथाद्भिस्तर्पयति । स्वेन मन्त्रेण गन्धपुष्पधूपदीपैरभ्यर्च्य बलिमुपहृत्य तत्सवितुर्वरेण्यम् इति सद्यःपात्रमादाय ब्रह्मपात्रेण योजयेत् सद्योजातम् इत्य-नुवाकेन । गन्धद्वाराम् इति वामदेवमादाय वामदेवानुवाकेन ब्रह्मपात्रेण योजयेत् । आप्यायस्व इति क्षीरकुम्भमादायेशानानुवाकेन योजयेत् । दधिक्राव्णः इति दध्यादाय पुरुषानुवाकेन योजयेत् । शुक्रमसि इत्यनुद्रुत्य घृतमादायाघोरानुवाकेन योजयेत् । सोहमिति --- फलैरवकीर्य गन्धा-दिभिरभ्यर्च्य व्योमव्यापिना संपूज्य पञ्चगव्यं भवतीति ७ अथ देवस्य समीपं गत्त्वा निर्माल्यं व्यपोह्य प्रणवेन --- देवस्य त्वा सवितुः प्रसवेऽश्विनो-

र्बाहुभ्यां पूष्णो हस्ताभ्यामश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बादुभ्यां पूष्णो हस्ताभ्यां सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामि देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्रस्येन्द्रियेण श्रियै यशसे बलायाभिषिञ्चामि इति त्रिभिः । अथ पिष्टामलकहरिद्रादिभिः स्नापयति । सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिः हिरण्यवर्णाभिः पावमानीभिः व्याहृतीभिरन्यैश्च पवित्रसमूहैश्चमकनमकादि-भिरभिषेकं कुर्यात् ८ पुनरेव यथाशक्ति दक्षिणां दद्यादाचार्याय वस्त्रकुण्ड-लाभरणाङ्गुलीयधेनुभूम्यादीनि दद्यात् ९ सर्वं पाप्मानं तरति तरति ब्रह्महत्यां ब्रह्मणस्सायुज्यं सलोकतामाप्नोति १०

नाळिकेराम्रपनसकदळीनां फलत्रयम्
शर्करामधुसंयुक्तं पञ्चामृतमिति स्मृतम् ११

ब्रह्मपात्रस्थितं तोयं चतुःप्रस्थं प्रचक्षते
--- कपित्थफलमात्रकम् १२

यावत्सम्पादितं भक्त्या तावत्सम्पादयेद्बुधः
इत्याह भगवान् बोधायनः १३

इति बोधायनीये गृह्यशेषसूत्रे द्वितीयप्रश्ने विंशोऽध्यायः

अथ द्वितीयप्रश्ने एकविंशोऽध्यायः

अथातस्संप्रवक्ष्यामि देवस्य स्नपने विधिम्
महतो लिङ्गदेशे वा कारयेद्वेदिकां बुधः १

मण्डलं च पुराणोक्तं कृत्वा स्नपनमारभेत्
अचलप्रतिष्ठितो यत्र देवस्तत्र न वेदिका २

तस्यास्समीपे तत्स्थाने कलशस्थानमुत्तमम्
संख्या च नव तेषां तु स्थापनं प्रणवेन तु ३

यत्किंचित्क्रियते तत्र प्रणवेनैव कथ्यते

स्थापनं कलशानां तु प्रागादीशानमन्ततः ४

एतैरेव क्रमैरत्र सर्वं कर्म विधीयते
नवमं कलशं मध्ये स्थापयेदन्ततो बुधः ५

कूर्चेषु स्थापयेत्सर्वं व्रीहिभिस्तण्डुलेषु च
व्रीहयश्शालयः प्रोक्ताः कलशांस्थापयेद्बुधः ६

तेषामभावे यत्किंचिद्ग्राम्यं धान्यमिहेष्यते
पूरयेत्कलशांत्सर्वान् शुद्धस्फटिकसन्निभैः ७

जलैस्तु मध्यमं तत्र पञ्चगव्येन पूरयेत्
कूर्चान्निधाय सर्वेषु शरावैरपिधाय च ८

अरिक्तैरेव कर्तव्यश्शरावैर्नवभिस्सदा
अपिधानक्रिया तेषां शालिजैरेव तण्डुलैः ९

अर्चयेत्कलशांत्सर्वान् गन्धपुष्पादिभिः क्रमात्
प्राप्ते मुहूर्त आवाह्य परमात्मानमात्मवान् १०

रुद्रदेवं शिवं साक्षाद्यञ्च सर्वस्य दैवतम्
तस्मादावाहयेत्प्राज्ञः सर्वत्रावाहने विधिः ११

एष औत्सर्गिकः प्रोक्तो देवतानां च तर्पणे
नारायणादि विष्णोस्स्याद्रुद्रस्य तु शिवादिकम् १२

जपध्यानादि सर्वं स्यात् विकल्पं मनसि श्रयेत्
रौद्रं च सूक्तमापो हि हिरण्येति च सप्तकम् १३

वैकल्पिकैरेव कुर्यान्मध्येति तु न विद्यते
अथ हैके वदन्त्येवं स्नापने तु महाप्रभोः १४

सद्योजातादिपञ्चैव सर्वो वै रुद्र इत्यपि
एतैरन्यैश्च कुर्याद्वि स्नापनं सार्वकालिकम् १५

एवं च कुर्यात्स्नाने तु स्नापनेऽर्चा तथा भवेत्
इत्याह भगवान् बोधायनः १६
इति बोधायनीये गृह्यशेषसूत्रे द्वितीयप्रश्ने एकाविंशोऽध्यायः

अथ द्वितीयप्रश्ने द्वाविंशोऽध्यायः

अथ देवयोः पूजाकरणे सर्वत्र त्रीणि पदा विचक्रमे त्र्यम्बकं यजामहे इत्येताभ्यां यथालिङ्गमासनं पाद्यमाचमनीयं च १ एतयोस्त्रैवर्णिकधर्मत्वात् सर्वत्र वचनाल्लोकप्रसिद्धप्राप्तप्रतिषेधाभावात् क्रियत इति ह स्माह बोधायनः २ एवं प्रतिष्ठाप्य वा कुर्यात्तयोरेव सायुज्यं सलोकतामाप्नोति ३ यदि त्रिंशत्संवत्सरादूर्ध्वं क्रियेत ततो देवयोः परमं पदं ब्रह्मसंज्ञितं तदेव सगण आप्नोति ४ यदि तत्प्रवणः स्याद्य उ चैनदेवं विदुर्यस्मै प्रब्रूते यस्मै वा करोति तस्मै शतं दद्यान्माषाणां ब्राह्मणो राजन्यस्सहस्रं दद्याद्वैश्यो यथाश्रद्धं दद्यात् ५ न स्त्रीशूद्रौ कुर्यातां यदि कुर्यातां स्वतन्त्रोपदेशे आचार्य आश्रय इति ६ स्वतन्त्रयोस्तयोश्चेद्वृत्तिक्षीणोऽपि ब्राह्मणः पतत्येवेति शालिकिः ७ अथ देवयोर्यथाकामी स्याद्यस्यांकस्यांचिदवस्थायां जले वा स्थण्डिले वा प्रतिमासु वा सर्वं कृत्वाऽभ्यर्चयेन्न तु प्रमाद्येत् ८ देशाभावे द्रव्याभावे साधारणे कुर्यान्मनसा वाऽर्चयेदिति । तदाह भगवान्

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः । इति ९

भक्तिनम्रः एतान्मन्त्रानधीयीत न त्वेवानर्चकः स्यादन्यतरस्योभयोर्वा ततस्तयोरेव सायुज्यं सलोकतामाप्नोति १० य एतयोरर्चनां कुरुतेऽन्यत्र पुत्रशिष्येभ्यः स्त्रियाश्च तस्मै सौवर्णं शङ्खं सुवर्णोपधानं वा दद्यादृषभं रुद्रस्य दक्षिणेत्याह भगवान् बोधायनः ११ प्रतिष्ठाकरणे स्नापनकरणे वाचार्याय तदुपकरणं सर्वं दत्वा ऋषभैकादश गा दद्यादित्याह भगवान्बोधायनः १२
इति बोधायनीये गृह्यशेषसूत्रे द्वितीयप्रश्ने द्वाविंशोऽध्यायः

अथ देवयोः पूजाकरणे । अथातस्संप्रवक्ष्यामि । अतः परं प्रवक्ष्यामि । अथातः पुनःप्रतिष्ठाकल्पम् । अथातो रुद्रस्नानार्चनविधिम् । अथातो महादेवस्याहरहः । अथातो रुद्रप्रतिष्ठाकल्पम् । अथातस्संप्रवक्ष्यामि विष्णोः । अथातो महापुरुषस्याहरहः । अथातो विष्णुप्रतिष्ठकल्पम् । यथो एतद्ग्रहाणाम् । अथाहुते प्रसिद्धमुपनयनम् । अथातोऽश्वत्थसंस्कारम् । अथ जडबधिरमूकानां संस्कारम् । अथ राजन्यवैश्ययोः । अथातो यज्ञोपवीतविधिम् । अथातः पुत्रप्रतिग्रहकल्पम् । अथ माघमासे । अथ प्रजार्थिहोमः । अथ मङ्गलानि । अथ गर्भाधानम् । अथातः पञ्चमीश्राद्धम् २२ अथातः पञ्चमीश्राद्धम् । अथ गर्भाधानम् । अथ मङ्गलानि । अथ प्रजार्थिहोमः । अथ माघमासे । अथातः पुत्रप्रतिग्रहकल्पम् । अथातो यज्ञोपवीतविधिम् । अथ राजन्यवैश्ययोः । अथ जडबधिरमूकानां संस्कारम् । अथातोश्वत्थसंस्कारम् । अथाहुते प्रसिद्धमुपनयनम् । यथो एतद्ग्रहाणाम् । अथातो विष्णुप्रतिष्ठाकल्पम् । अथातो महापुरुषस्याहरहः । अथातस्संप्रवक्ष्यामि विष्णोः । अथातो रुद्रप्रतिष्ठाकल्पम् । अथातो महादेवस्याहरहः । अथातो रुद्रस्नानार्चनविधिम् । अथातः पुनः प्रतिष्ठाकल्पम् । अतः परं प्रवक्ष्यामि । अथातस्संप्रवक्ष्यामि देवस्य । अथ देवयोः पूजाकरणे २३

इति बोधायनीये गृह्यशेषसूत्रे द्वितीयप्रश्नः समाप्तः

## अथ तृतीयप्रश्ने प्रथमोऽध्यायः

अथातः पवित्राणां पवित्रायातिपवित्रायापराजिताय गुह्याय ब्रह्महृदयाय ओंकारकल्पं व्याख्यास्यामः १ यत्र ग्राम्याणां पशूनां शब्दं नोपशृणुयादपां समीपे ब्रह्मवृक्षेणैकस्थूणां कुटीं प्राङ्मुखां कारयेत् २ कुशध्वजी कुशवेष्टी कुशचीरवासाः कुशोपवीतः कुशोपविष्टः कुशहस्तः कुशमेखलां धारयमाणः त्रिषवणस्नायी कुशशायी शाकयावकयोर्भैक्षाहार आदित्याभिमुखस्तिष्ठन्नोङ्कारं पञ्चसहस्रं जपेत्ततोऽस्य मन्त्रास्सर्वे सिध्यन्ति सर्वे वेदा अधीता भवन्ति सर्वेषु वेदेषु चीर्णव्रतो भवति सर्वेषु तीर्थेषु स्नातो भवति सर्ववेदो ज्ञातो भवति सर्वैर्देवैर्ज्ञातो भवति सर्वयज्ञक्रतुभिरिष्टवान् भवत्याचक्षुषः पङ्क्तिं पुनाति मातापितृदोषैः पुरुषदोषैश्च निर्दोषः पूतो भवति चण्डालश्वपाकानां पुनाति ३ श्वेतायास्सरूपवत्सायाः पयसि स्थालीपाकं श्रपयित्वाऽऽदित्याभिमुख

ओङ्कारसहस्रेणाभिमन्त्रितं कृत्वा स्वयं प्राश्नीयात् सप्तानां पुरुषाणामलक्ष्मीं नुदति जातिस्मरत्वं लभते श्रियं देवीं भजते ब्रह्मचर्यमस्याविच्छिन्नं सन्ततं भवति ४

प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः
वाङ्मयं प्रणवं सर्वं तस्मात्प्रणवमभ्यसेत् ५

प्रणवेन विहीनं यत्तन्मन्त्रं प्राणहीनकम्
सर्वमन्त्रेषु मन्त्राणां प्राणः प्रणव उच्यते ६

इत्याह भगवान् बोधायनः ७

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने प्रथमोऽध्यायः

अथ तृतीयप्रश्ने द्वितीयोऽध्यायः

अथातो व्याहृतिकल्पं व्याख्यास्यामः त्रिषवणं स्नायादवश्शय्यासनस्त्रिरात्रमहोरात्रं वोपोष्य द्वादशसहस्रं व्याहृतीर्जपेत् १ कृतपुरश्चरणोऽथ कर्माण्यारभते २ दधिमधुघृताक्तानां पलाशसमिधामाहुतिसहस्रं जुहुयाद्ब्रह्मवर्चसकाम आज्येन तेजस्कामः पयसा पशुकामो दध्नेऽन्द्रियकाम ओदनेनान्नाद्यकामो व्रीहिभिर्यवैर्धान्यकामः कन्याकामो लाजैस्तिलै रात्नोघ्नं पापनाशनं च सद्य एव विनश्यति ज्वरो वानस्पत्यानां न्यग्रोधैः पुत्रकामः प्लक्षैर्गृहकामोऽश्वत्थैः पुष्टिकामश्शमीमयैश्शान्तिकामोऽपामार्गैर्वश्यकामः खादिरैराधिपत्यकामोऽर्कसमिद्भिरर्थकामः पलाशसमिद्भिस्सर्वकामः ३ यावज्जुहोति तावदाप्नोतीति ह स्माह भगवान् बोधायनः ४

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने द्वितीयोऽध्यायः

अथ तृतीयप्रश्ने तृतीयोऽध्यायः

अथातो दुर्गाकल्पं व्याख्यास्यामः यज्ञोपवीतं रक्तपद्मपुष्पं सम्भारानुपकल्प्य मासिमासि कृत्तिकापूर्वाह्णे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वा प्रोक्ष्य शौचेन सुव्रतस्तिष्ठन् भगवतीमावाहयेत् जातवेदसे इति ओमार्यां रौद्रीमावाहयामि इत्यावाह्य तामग्निवर्णां इति कूर्चं दत्वा अग्ने त्वं पारय इति

यज्ञोपवीतं दत्वाऽथैनां स्नापयति आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाः इति चतसृभिः पवमानः इत्येतेनानुवाकेन मार्जयित्वा आर्यायै रौद्र्यै महाकाळ्यै महायोगिन्यै सुवर्णपुष्प्यै देवसङ्कीर्त्यै महायज्ञ्यै महावैष्णव्यै महापृथिव्यै मनोगम्यै शङ्खधारिण्यै नमः इत्येकादशनामधेयैर्गन्धपुष्पधूपदीपैः अमुष्यै नमोऽमुष्यै नमः इत्येतैरेवार्चयित्वा सावित्र्या भगवत्यै दुर्गादेव्यै हविर्निवेदयामि इति हविर्निवेद्य शेषमेकादशनामधेयैर्हुत्वा पञ्चदुर्गा जपेद्दश स्वस्ति जपेत् जातो यदग्ने वषट् ते विष्णो वास्तोष्पते एवावन्दस्व आ नो नियुद्भिः हिरण्यवर्णाः अभयं कृणोतु अश्वावतीः त्वं वरुणः बृहस्पते युवमिन्द्रश्च स्वस्ति न इन्द्रो वृद्धश्रवाः इति जपित्वा शं च मे मयश्च मे इत्येतैरेकादशभिरनुवाकैश्च जपेत् सावित्र्या भगवत्यै दुर्गादेव्यै हविरुद्वासयामि इत्युद्वास्य शेषं ब्राह्मणेभ्यो दत्वा संवत्सरमुपासीत १ सर्वकामास्सिध्यन्तीत्याह भगवान् बोधायनः २

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने तृतीयोऽध्यायः

## अथ तृतीयप्रश्ने चतुर्थोऽध्यायः

अथात उपश्रुतिकल्पं व्याख्यास्यामः आदित्यवारेऽङ्गारकवारे वा चतुर्थ्यामष्टम्यां चतुर्दश्यां भरण्यां कृत्तिकायां वा क्रियेत १ पूर्वेद्युरकृतभुक्तिश्शुचिर्ब्रह्मचारी भूत्वाऽथ प्रदोषेऽग्निमुपसमाधाय सम्परिस्तीर्य तस्य दक्षिणत उपश्रुतिमावाहयेत् ओं भूः रात्रीं देवीमावाहयाम्यों भुवरुपश्रुतिं देवीमावाहयाम्यों सुवर्महारात्रीं देवीमावाहयाम्यों भूर्भुवस्सुवः महाकाळरात्रीं देवीमावाहयामि इत्यावाह्याथैनां स्नापयति आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाः इति चतसृभिः पवमानः इत्येतेनानुवाकेन मार्जयित्वा गन्धैः कृष्णपुष्पैर्धूपैर्दीपैरलंकृत्याज्यं संस्कृत्य जुहोति रात्र्यै देव्यै स्वाहोपश्रुत्यै देव्यै स्वाहा महारात्र्यै देव्यै स्वाहा महाकाळरात्र्यै देव्यै स्वाहा निशायै स्वाहा क्षपायै स्वाहा कृष्णायै स्वाहाऽन्धकारिण्यै स्वाहा यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः इति द्वाभ्यां च जुहोति २ अथ समन्तं परिषेकं कृत्वा रात्रिसूक्तेनोपतिष्ठते ३ व्याहृतीभिः रात्रीं देवीमुद्वासयामि इत्युद्वास्याथ व्रजेत् श्मशानदेशे देवागारे श्रोत्रियागारे कुलालकारुदेशे वा गच्छेत् ४ नवधनुर्मात्रात् कर्णौ बध्नाति ५ स्वस्ति न इन्द्रो वृद्धश्रवाः इत्येतामृचं जपित्वा विमुञ्चेद्व्यक्तं तत्प्रतिगृह्यतामनुरूपं युज्यतां सर्वकर्मणां चारम्भ इत्याह भगवान् बोधायनः ६

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने चतुर्थोऽध्यायः

अथ तृतीयप्रश्ने पञ्चमोऽध्यायः

अथातश्श्रीकल्पं व्याख्यास्यामः शुक्लपक्षस्य पञ्चम्यां पौर्णमास्यामपि वा श्रियं कदम्बमयीं बिल्वसारमयीं स्थण्डिले वा विधायाहोरात्रोपोषितश्शुचिः कृतशौचस्समे देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य गन्धमुमनसस्सम्प्रकीर्य हिरण्मयेन पात्रेणोदकं पूरयित्वा गन्धान् सुमनसः तस्मिन् हिरण्यवर्णां हरिणीम् इति द्वाभ्यां ओं भूः श्रियमावाहयामि ओं भुवः श्रियमावाहयामि ओं सुवः श्रियमावाहयामि ओं भूर्भुवस्सुवः श्रियमा-वाहयामि इत्यावाह्य कर्दमेन इति द्वाभ्यां प्रसिद्धं प्रोक्ष्य अश्वपूर्वां इति स्नापयित्वा गन्धद्वाराम् इति गन्धं ददाति कां सोऽस्मि ताम् इति पुष्पं ददाति उपैतु माम् इति धूपं ददाति चन्द्रां हिरण्मयीम् इति दीपं ददाति चन्द्रां प्रभासाम् इति नैवेद्यं ददाति १ अथ देव्या दक्षिणतोऽग्निमुपसमाधाय सम्परिस्तीर्य महाव्रीहिभिस्तण्डुलैः पायसं चरुं श्रपयित्वा हविर्द्विधा कृत्वा मनसः कामम् इत्यभिप्रेत्य काममन्नं वाऽऽज्यमिश्रं श्रीसूक्तेन पञ्चदशर्चेन हविर्जुहोति २ तेन सूक्तेन श्रियै नमः पुष्ट्यै नमो धात्र्यै नमस्सरस्वत्यै नमः इति बलिमुपहरति ३ पद्मपुष्पाणि यथालाभं गृहीत्वा प्रत्यङ्गं निमार्ष्टि क्षुत्पिपासाम् इत्यलक्ष्मीं निर्णुदति ४ एवमेवाहरहर्मासिमासि वा महान्तं पोषं पुष्यति धन्यं यश-स्यमारोग्यमायुष्यं पुत्र्यं पशव्यं तस्य महत्स्वस्त्ययनमित्याह भगवान् बोधायनः ५

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने पञ्चमोऽध्यायः

अथ तृतीयप्रश्ने षष्ठोऽध्यायः

अथातस्सरस्वतीकल्पं व्याख्यास्यामः शुक्लपक्षे त्रयोदश्यां वोत्तरयोः फल्गुन्योर्वा पुण्ये नक्षत्रेऽथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वाऽग्रे-णाग्निं सरस्वतीमावाहयति आयातु वरदा देव्यक्षरं ब्रह्मसम्मितम् । गायत्रीं छन्दसां मातेदं ब्रह्म जषस्व नः १ सरस्वतीमावाहयामि इत्यावाह्यात्र स्थानानि कल्पयति वाग्देव्यै कल्पयामि गीर्देव्यै कल्पयामि सरस्वत्यै कल्पयामि ब्राह्मयै कल्पयामि इति २ अथैनाः स्नापयति आपो हिष्ठा मयो भुवः हिरण्यवर्णाः पवमानस्सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वाऽद्भिस्तर्पयित्वै-

तैरेव नामधेयैर्गन्धपुष्पधूपदीपैः ग्रमुष्यै नमोऽमुष्यै नमः इति परिधानप्रभृत्या- ग्निमुखात्कृत्वा पक्वाज्जुहोति पायसं वा चोदयित्री सूनृतानां पावीरवी कन्या इति द्वाभ्याम् ३ ग्रथाज्याहुतीरुपजुहोति प्रणो देवी ग्रा नो दिवः ये ते सरस्व ऊर्मयः उत नः प्रिया प्रियासु इमा जुह्वाना यस्ते स्तनश्शशयः देवीं वाच- मजनयन्त यद्वाग्वदन्ती इत्येतेन सूक्तेन ४ स्विष्टकृत्प्रभृति सिद्धमाधेनुवर- प्रदानात् ५ ग्राथाग्रेणाग्निं पलाशपर्णेषु हुतशेषं निवेदयित्वा बाह्यबलिं दत्वोदेत्यापरेणाग्निं प्राङ्मुखं कुमारमुपवेश्य विद्यारम्भं कुरुते ६ ग्रनन्तरं देवीमुद्वासयेत् उत्तमे शिखरे देवि भूम्यां पर्वतमूर्धनि । ब्राह्मणेभ्यो ह्यनुज्ञानं गच्छ देवि यथासुखम् ७ इति पुनरागमनाय पुनर्दानाय ८ एवमेव मासि मासि विद्याकांक्षी सरस्वतीमाराधयेदित्याह भगवान् बोधायनः ९

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने षष्ठोऽध्यायः

## ग्रथ तृतीयप्रश्ने सप्तमोऽध्यायः

ग्रथातो विष्णुकल्पं व्याख्यास्यामः ग्राषाढकार्तिकफाल्गुनशुक्लपक्षेषु द्वा- दश्यां यदा श्रद्धा भवत्यहोरात्रमुपोषितश्श्वोभूते प्राग्वोदग्वाऽरण्ये शुचिर्गृहे वा यत्र रोचते मनस्तत्र स्थण्डिलेऽग्निमुपसमाधाय संपरिस्तीर्याप्रणीताभ्यः कृत्वा सिद्धे पायसे यत्ते पवित्रं पवित्रं ते विततम् इत्युदाहृत्य ग्रोम् इति वि- द्युद्गन्धोशीरमयं भगवन्तं श्वेतपीतरक्तप्रतिसरेणावेष्ट्य स्थापयित्वावाहयेत् ग्रों भूः पुरुषमावाहयाम्यों भुवः पुरुषमावाहयाम्यों सुवः पुरुषमावाहयाम्यों भूर्भुवस्सुवः पुरुषमावाहयामि इत्यावाह्य प्रसिद्धमासनस्नानपाद्याचमनीयानि दद्यात् सर्वसुरभिगन्धपुष्पधूपदीपमाल्यैरभ्यर्च्य यथोपपन्नं बर्हिष्यश्वत्थपर्णे प्रस्तरे गोभिर्जुष्टम् इति धूपभाजने न्यस्यति १ ततष्षोडशाज्याहुतीर्जुहोति पुरुषसुक्तेन परो मात्रया इति तिसृभिः । पवमानमुपनिनीय चरोराज्यमिश्रं चतस्रः ग्राहुतीर्जुहोति वासुदेवाय स्वाहा बलदेवाय स्वाहा विष्णवे स्वाहा श्रियै स्वाहा इति २ स्विष्टकृतमवदायान्तः परिधि सादयित्वा दैवतम- र्चयत्येतैरेव नामधेयैः ग्रमुष्मै नमोऽमुष्मै नमः इति गन्धपुष्पधूपदीपैरन्नेन ग्रमुष्मै स्वाहाऽमुष्मै स्वाहा इति फलोदकेन ग्रमुं तर्पयाम्यमु तर्पयामि इति स्वि- ष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ३ ग्राभिर्विश्वा ग्रभियुजः इति जानुं निपात्य चतुःप्रदक्षिणं परिक्रामेत् विश्वभुजे नमः । सर्वभुजे नमः । ग्रात्मने नमः । परमात्मने नमः इति । ध्रूवसूक्तं जपित्वा पुरुषमुद्वासयेत् ग्रों भूः

पुरुषमुद्वासयाम्यों भुवः पुरुषमुद्वासयाम्यों सुवः पुरुषमुद्वासयाम्यों भूर्भुवस्सुवः पुरुषमुद्वासयामि इत्युद्वास्य यत्रापस्तद्गत्वोत्सृजेदवभृथम् ४ प्रतत्ते अद्य किमित्ते विष्णो परिचक्ष्यं भूत् इति द्वाभ्यां प्रतिसरं विस्रंसयति ५ इदं विष्णुर्विचक्रमे इत्येतया चरुं प्राश्नाति ६ एवं घोषयेत् यो वैष्णव इत्याह वैष्णवोऽस्मि इति यः प्रतिब्रूयात्तस्मै शेषं दद्यादेतैरेव मन्त्रैः प्राश्नाति ७ प्राश्याप आचम्य ओं नमो भगवते वासुदेवाय इति द्वादशाक्षरं जपित्वा-ऽश्वमेधफलमाप्नोति सकृदिष्ट्वा सनातनमिति ८

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने सप्तमोऽध्यायः

अथ तृतीयप्रश्ने अष्टमोऽध्यायः

अथातो रविकल्पं व्याख्यास्यामः मण्डलं चतुरश्रं वा गोमयेन गोचर्ममात्रं स्थण्डिलं कृत्वाऽष्टाचत्वारिंशत्कृत्वो रविवारे ताम्रपात्रे रक्तगन्धं रक्तपुष्पं वा घृणिम्सूर्य आदित्यः इत्यावाह्य आसत्येन इत्यर्घ्यं दद्यात् हंसश्शुचिषत् इति पाद्यं अग्निर्मूर्धा इत्याचमनीयम् । आपो हिष्ठा मयोभुवः हिरण्यवर्णाः पवमा-नस्सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वाऽद्भिस्तर्पयति धातारं तर्पयामि विधातारं तर्पयामि अर्यमणं तर्पयामि मित्रं तर्पयामि वरुणं तर्पयामि भगवन्तं तर्पयामि हसं तर्पयामि पूषाणं तर्पयामि पर्जन्यं तर्पयामि विवस्वन्त तर्पयामि इन्द्रं तर्पयामि रविं तर्पयामि इत्येतैरेव नामधेयैर्गन्धपुष्पधूपदीपैः अमुष्मै नमोऽमुष्मै नमः इति । व्याहृतीभिः पुरुषमुद्वासयामि इत्युद्वास्याथापूपं दद्यादष्टाचत्वारिंशत् १ एकवारमर्चयित्वा कुष्ठरोगी क्षयरोगी २ वन्धा-द्विमुच्यते बद्धो रोगी रोगाद्विमुच्यते ३ इत्याह भगवान् बोधायनः ४

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने अष्टमोऽध्यायः

अथ तृतीयप्रश्ने नवमोऽध्यायः

अथातो ज्येष्ठाकल्पं व्याख्यास्यामः तिलतैलमाज्यं पयोदधिसक्तून् लाजान् करम्भान् कृष्णानि वासांसीति सम्भारानुपकल्पयते १ प्रोष्ठपदायामनूराधायां वाऽहविष्यं भुञ्जीत २ अथ श्वोभूते ज्येष्ठामनुस्मरन्नुत्थाय देवागारे रहस्यप्रदेशे वा यत्र रोचते मनस्तत्र स्थण्डिलं कृत्वाऽथ देवयजनोल्लेखनप्रभृत्या-प्रणीताभ्यः कृत्वाऽग्रेणाग्निं ज्येष्ठादेवीमावाहयति यस्यास्सिंहा रथे युक्ता व्या-घ्राश्चाप्यनुगामिनः । तामिमां पुण्डरीकाक्षीं ज्येष्ठामावाहयाम्यहम् ३ इत्या-

वाह्य इह लोकाकीर्तये नमः । परलोकाकीर्तये नमः । श्रियै नमः । ज्येष्ठायै नमः । सत्यायै नमः । कपिलपत्न्यै नमः । कपिलहृदयायै नमः । कुम्भ्यै नमः । कुम्भिन्यै नमः । प्रकुम्भ्यै नमः । ज्यायायै नमः । वरदायै नमः । हस्तिमुखायै नमः । विघ्नपार्षदायै नमः । विघ्नपार्षद्यै नमः इति तर्पयति ४ आपो हिष्ठा मयोभुवः हिरण्यवर्णाः पवमानस्सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वा तैरेव नामधेयैर्गन्धपुष्पधूपदीपैः अमुष्यै नमोऽमुष्यै नमः इति परिधानप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति इन्द्रो ज्येष्ठामनु नक्षत्रमेति इति पुरोनुवाक्यामनूच्य पुरन्दराय वृषभाय धृष्णवे इति याज्यया जुहोति ५ अथाज्याहुतीरुपजुहोति इन्द्राय स्वाहा । ज्येष्ठाय स्वाहा । श्रेष्ठाय स्वाहा । प्रजापतये स्वाहा इति । नमस्सुते निर्ऋते इति षड्भिरनुच्छन्दसम् ६ अथ कुत्सैर्जुहोति ७ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां भूर्भुवस्सुवरों ज्येष्ठायै हविर्निवेदयामि इति निवेदयति ८ अथ दिशां बलिं हृत्वा गन्धमाल्ये द्वे वाससी निवेद्यं दत्वाऽन्नं च ब्राह्मणेभ्यो दत्वा नमस्सुते निर्ऋते इति षड्भिरुपस्थाय स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ९ यस्यास्सिंहा रथे युक्ता व्याघ्राश्चाप्यनुयायिनः । तामिमां पुण्डरीकाक्षीं ज्येष्ठामुद्वासयाम्यहम् १० इत्युद्वास्य ज्येष्ठामन्त्रं सहस्रकृत्वः आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा दशावरम् ११ शाकयावकभैक्षमूलफलाशी अधश्शायी श्वोभूते तथैवाभ्यर्च्य षण्मासादूर्ध्वं समाचरन् नित्यानामाशास्यान् सर्वान् कामानवाप्नोतीति ह स्माह भगवान् बोधायनः १२

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने नवमोऽध्यायः

## अथ तृतीयप्रश्ने दशमोऽध्यायः

अथातो विनायककल्पं व्याख्यास्यामः मासिमासि चतुर्थ्यां शुक्लपक्षस्य पञ्चम्यां वाऽभ्युदयादौ सिद्धिकामः ऋद्धिकामः पशुकामो वा भगवतो विनायकस्य बलिं हरेत् १ पूर्वेद्युः कृतैकभुक्तः शुचिरप आचम्याथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा दक्षिणामुखं हस्तिमुखं दक्षिणतो ब्राह्मणमुपवेश्योपोत्थाय दैवतमावाहयति

विघ्न विघ्नेश्वरागच्छ विघ्नेत्येव नमस्कृत
अविघ्नाय भवान् सम्यक्सदाऽस्माकं भव प्रभो इति २

अथ दूर्वाक्षतसुमनोमिश्रमर्घ्यं ददाति इमा आपश्शिवाश्शिवतमाश्शान्ता-श्शान्ततमाः पूताः पूततमाः पुरयाः पुरयतमाः मेध्या मेध्यतमा जुष्टा जुष्टतमा अमृता अमृतरसाः पाद्या अर्घ्या अर्हणीया अभिषेचनीया आचमनीया मार्जनी-याश्च प्रतिगृह्यन्तां प्रतिगृह्णातु भगवान् विनायको विनायकाय नमः इति ३ अथ तूष्णीं वा गन्धपुष्पधूपदीपैरभ्यर्च्योपतिष्ठते भूपतये नमो भुवनपतये नमो भूतानां पतये नमः इति ४ उपस्थाय तिस्रो विनायकाहुतीर्जुहोति विनायकाय भूपतये नमो विनायकाय स्वाहा । विनायकाय भुवनपतये नमो विनायकाय स्वाहा । विनायकाय भूतानां पतये नमो विनायकाय स्वाहा इति । जयप्रभृति सिद्धमाधेनुवरप्रदानात् ५ अपूपं करम्भमोदकम् सक्तून् पायसमित्यथास्मा उपहरति विघ्नाय स्वाहा । विनायकाय स्वाहा । वीराय स्वाहा । शूराय स्वाहा । उग्राय स्वाहा । भीमाय स्वाहा । हस्तिमुखाय स्वाहा । वर-दाय स्वाहा । विघ्नपार्षदेभ्यस्स्वाहा । विघ्नपार्षदीभ्यस्स्वाहा इति ६ अथ भूतेभ्यो बलिमुपहरेत् ये भूताः प्रचरन्ति इति ७ अथ पञ्चसूत्रं कङ्कणं हस्ते व्याहृतिभिः बध्नाति विनायक महाबाहो विघ्नेश भवदाज्ञया । कामा मे साधितास्सर्वे इदं बध्नामि कङ्कणम् इति ८ अथ साग्निकं विनायकं प्रदक्षिणं कृत्वा प्रणम्याभिवाद्य विनायकं विसर्जयति कृतं यदि मया प्राप्तं श्रद्धया वा गणेश्वर । उत्तिष्ठ सगणस्साधो याहि भद्रं प्रसीदतोम् इति ९ तस्मिन्याते द्वादशेध्मसमिद्धेनोपरि मध्यमं चैव दक्षिणोर्ध्वं समिधं तथा दधिमधुपयआज्यं स्रमिश्रच परिषेचनं विसर्जनं कल्पयति १०

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने दशमोऽध्यायः

## अथ तृतीयप्रश्ने एकादशोऽध्यायः

अथातो मृत्युंजयकल्पं व्याख्यास्यामः जन्मनक्षत्रे पुरये नक्षत्रे त्रिजन्मनि वा ब्राह्मणानन्नेन परिविष्य पुरयाहं स्वस्ति ऋद्धिम् इति वाचयित्वाऽथ देव-यजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा सावित्र्या पक्वं हुत्वा प्रादेशमात्रा-स्तिस्रस्तिस्रो दूर्वा एकां समिधमाहृत्य अष्टसहस्रमष्टशतमष्टाविंशतिर्वा दधिमधुघृतपयांसि समुदायुत्याभ्यज्यादधाति अपैतु मृत्युः परं मृत्यो मा नो महन्तं मा नस्तोके त्रियम्बकं ये ते सहस्रम् इत्यष्टषष्टिशतकृत्व आवर्तयेत्तदानीं अष्टसहस्रं संपद्यते १ अथाज्याहुतीरुपजुहोति मृत्युर्नश्यत्वायुर्वर्धतां भूस्स्वाहा । मृत्युर्नश्यत्वायुर्वर्धतां भुवस्स्वाहा । मृत्युर्नश्यत्वायुर्वर्धतां सुवस्स्वाहा

। मृत्युर्नश्यत्वायुर्वर्धतां भूर्भुवस्सुवस्स्वाहा इति २ जयप्रभृति सिद्धमाधेनुवरप्रदानात् ३ अथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति तच्छं योरावृणीमहे इति ४ अथ दक्षिणां ददाति धेनुमृषभमनड्वाहं कंसं हिरण्यं वासो वेत्यपपुनर्मृत्युं जयतीति ह स्माह भगवान् बोधायनः ५

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने एकादशोऽध्यायः

अथ तृतीयप्रश्ने द्वादशोऽध्यायः

अथातोऽभिवृद्धिकल्पं व्याख्यास्यामः ग्रामस्य देवतायतनस्य गृहस्य वा सारतमक्षेत्रेषु वा भूतिमिच्छन् पूर्वपक्षे स्थिरराशौ स्थिरमुहूर्ते ब्रह्मस्थाने इन्द्रस्येशानस्य वा दिशि जानुदघ्नमवटं खात्वा गोमयेन गोचर्ममात्र चतुरश्रं स्थण्डिलमुपलिप्य प्रोक्ष्य सैकतेनावकीर्य मध्ये पद्मपत्र लिखित्वा कुशाग्रेण पञ्चगव्येन आपो हिष्ठा मयोभुवः हिरण्यवर्णाः पवमानस्सुवर्जनः इत्येतेनानुवाकेन व्याहृतीभिः प्रोक्ष्य सुमनसोऽवकीर्याशिषो वाचयित्वा पद्ममध्ये सैकतेन स्थण्डिलं कृत्वाऽग्निमुपसमाधाय संपरिस्तीर्य परिधानप्रभृत्याऽग्निमुखात्कृत्वा मध्येऽग्नौ मनसा पद्मासनं ध्यात्वा श्रियमावाहयति गन्धद्वाराम् इत्येतयर्चा गन्धादिभिरन्वाराध्य बिल्वसमिद्भिः श्रीसूक्तेन हुत्वा पक्वाज्जुहोति वास्तोष्पते वास्तोष्पते इति द्वाभ्याम् १ अथाज्याहुतीरुपजुहोति ब्रह्म जज्ञानम् इति षड्भिरनुच्छन्दसम् २ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ३ अथाग्रेणाग्निं पुष्करपर्णेषु हुतशेषं निदधाति यत्पर्यपश्यत् इति ४ पुष्करपर्णं प्रक्षाळ्य पञ्चगव्येन मथितेन पूरयित्वा गन्धादिभिस्संपूज्य श्रीसूक्तेन स्वक्षेत्राणि प्रोक्षतीत्याह भगवान् बोधायनः ५

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने द्वादशोऽध्यायः

अथ तृतीयप्रश्ने त्रयोदशोऽध्यायः

अथातश्शिथिलीकल्पं व्याख्यास्यामः गृहसीमान्तचतुरश्रदिग्विधानेनान्तश्चोत्तरविधिः १ गृहमध्ये शिथिली जायते सप्ताहात् शुभकरं भवस्यत ऊर्ध्वं प्रजानां व्याधिपीडनं करोति यत इन्द्र भयामहे इति पलाशसमिद्भिरष्टोत्तरशतं जुहुयात् हविष्यमाज्यं च दोषमपहरति २ इन्द्रदिग्भागे शिथिली जायते सकुटम्बस्य महद्भयं भवति सदसस्पतिम् इति मन्त्रेन खादिरसमिद्भिर्जुहुयात् ३ अग्निदिग्भागे शिथिली जायते सप्ताहात्सुहृदागमनं भवत्यत ऊर्ध्वं राजक्षोभं

करोति श्रयमु ते समुतसि कपोत इव गर्भधिम् । वचस्तच्छिन्न श्रोजसे स्वाहा इत्यौदुम्बरसमिद्भिर्जुहुयात् ४ यमदिग्भागे शिथिली जायतेऽष्टाहादर्थला-भमाप्नोति तत ऊर्ध्वं भार्यामरणं करोति प्लक्षसमिद्भिस्त्रियम्बकेन जुहोति ५ निर्ऋतिदिग्भागे शिथिली जायते त्र्यहाद्वृष्टिं करोति तत ऊर्ध्वं भार्यानाशं करोत्यपामार्गसमिद्भिः प्रजापते न त्वत् इति मन्त्रेण जुहोति ५ वरुणदिग्भागे शिथिली जायते गर्भलाभं करोत्यत ऊर्ध्वं चोरभयं कुर्याद्दूर्वासमिद्भिः गणानां त्वा इति जुहोति ७ वायुदिग्भागे शिथिली जायते कन्यादोषमुपजायते दूर्वासमिद्भिः सप्त ते श्रग्ने इति जुहोति ८ सोमदिग्भागे शिथिली जायते शत्रुखादनं करोत्यत ऊर्ध्वं धान्यनाशं करोति वटसमिद्भिरघोरमन्त्रेण जुहोति ९ ईशानदिग्भागे शिथिली जायते गृहपतेर्व्याधिपीडनं करोति येषामीशे इति शमीसमिद्भिर्जुहोति १० द्वारप्रदेशे शिथिली जायते गृहिणीनाशं करोति बिल्वसमिद्भिस्त्रियम्बकेन जुहोति ११ शयनप्रदेशे शिथिली जायते गृहपते-र्मरणं करोति व्याहृतीभिर्यवैर्जुहोति १२ गोमहिषस्थाने शिथिली जायते प्रजानां चक्षुर्नाशं करोति व्याहृतीभिर्यवैर्जुहोति १३ जलभाण्डस्थाने शिथिली जायते दासवर्गनाशं करोति सप्तव्याहृतीभिर्यवैर्जुहोति १४ देवालये शिथिली जायते ग्रामेऽग्निभयं करोति बिल्वसमिद्भिस्त्रियम्बकमन्त्रेण जुहोति १५ सभास्थाने शिथिली जायते ग्रामस्य सकुटुम्बस्याध्रुवं कुर्यादात्वाहा-र्षसूक्तेन दूर्वाभिर्जुहोति १६

देवालये सभास्थाने तटाके गृह एव वा
उत्पन्ने रक्तवल्मीके कुर्यात्तस्य प्रतिक्रियाम् १७

समिद्भिस्सर्पिषा चैव हविषा तिलसर्षपैः
कुर्याद्व्याहृतिमन्त्रेण होममष्टशतं पृथक् १८

धर्मास्थाने तु बल्मीके जाते मरणमादिशेत्
इन्द्रस्थाने श्रियं ब्रूयादाग्नेये च तथाऽश्रियम् १९

याम्ये बन्धुविनाशस्स्याद्राक्षसे गृहिणीं हरेत्
वारुणे बन्धुलाभस्स्याद्वायव्ये दूर श्रागतिः २०

सौम्यै सुखं तथा रौद्रे दुर्वाक्यं मरणं भवेत्
इत्याह भगवान् बोधायनः २१

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने त्रयोदशोऽध्यायः

अथ तृतीयप्रश्ने चतुर्दशोऽध्यायः

अथातो यमळकल्पं व्याख्यास्यामः पत्नी गावो वा यमळौ विजायेरन् तस्य संस्कारः प्राङ्नामकरणात् कार्यः १ ब्राह्मणाननुजाप्य चतुर्णां क्षीरवृक्षाणां कषायानाहरेयुः प्लक्षन्यग्रोधाश्वत्थोदुम्बराणां चतुर उदकुम्भान् पूरयित्वा चतस्रो विधवा ब्रह्मचारिणो वा हिरण्यमन्तर्धाय स्नापयेयुश्शतधारेण वा कृत्वाऽभिषिञ्चन्ति २ अथ भूतबलिं करोति । आचार्यमलङ्कृत्य गोमिथुनं दद्यात् ३ पुंसो यवमयं गोमूत्रं स्त्रियो हिरण्यगर्भस्समवर्तताग्रे इत्यष्टभिर्हुत्वा कार्यो मारुतश्चरुर्न तस्य भयं विद्यत इति प्रसिद्धं नामकरणम् ४

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने चतुर्दशोऽध्यायः

अथ तृतीयप्रश्ने पञ्चदशोऽध्यायः

अथातोऽर्धमासेऽर्धमासेऽष्टम्यां ब्राह्मणाः ब्रह्मचारिणः स्त्रियश्च पुत्रकामा आयुष्कामा आरोग्यकामा ब्रह्मवर्चसकामास्सौभाग्यकामाश्चोपवसन्ति १ अथ प्रदोषे रुद्रं विरूपाक्षं सपत्नीकं ससुत सगणं सपारिषत्कमावाहयामि इत्यावाह्य स्वागतेनाभिनन्दयति स्वागतं पुनरागतम् २ भगवते महादेवाय विरूपाक्षाय सपत्नीकाय ससुताय सगणाय सपारिषत्कायेत्येतदासनं क्लृप्तमत्रास्तां भगवान् महादेवो विरूपाक्षस्सपत्नीकस्ससुतस्सगणस्सपार्षत्कः इति ३ अथ कूर्चं ददाति भगवतोऽयं कूर्चः दर्भमयस्त्रिवृद्धरितस्सुवर्णमयस्तं जुषस्व इति प्रतिगृह्णातु भगवान् महादेवो विरूपाक्षाय सपत्नीकाय ससुताय सगणाय सपार्षत्कायेति ४ अथात्र स्थानानि कल्पयति महाकालाय नमः शङ्कराय नमो बभ्रुकर्णाय नमो नन्दिकेश्वराय नमो दण्डमुण्डाय नमः चण्डकेश्वराय नमः इति ५ अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति आर्द्रया रुद्रः हेती रुद्रस्य इति द्वाभ्याम् ६ अथाज्याहुतीरुपजुहोति भवाय देवाय स्वाहा इत्यादिभिश्चतुर्विंशतिभिः हुत्वा हव्यवाहं स्विष्टम् इति स्विष्टकृतं हुत्वाऽथाग्रेणाग्निमर्कपर्णेषु हुतशेषं निदधाति यो रुद्रो अग्नौ इति ७ शिष्टैर्गन्धमाल्यैरभ्यर्च्य रौद्रीभिः ऋग्यजुस्सामाथर्वभिस्स्तुतिभिः स्तुन्वन्त्या-

षैस्स्तोत्रैः ८ देवतां प्रवाहयति प्रयातु भगवान्

ईशानस्सर्वलोकानां सर्वलोकनमस्कृतः
अनेन हविषा तृप्तः पुनरागमनं प्रति इति

प्रत्यभिमृशतेऽयनाय चेति ९ य एवं विद्वानावरति पुत्रवान् पशुमान् भवति सर्वं पाप्मानं तरति तरति ब्रह्महत्यां अपपुनर्मृत्युं जयतीति ह स्माह भगवान् बोधायनः १०

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने पञ्चदशोऽध्यायः

अथ तृतीयप्रश्ने षोडशोऽध्यायः

अथ वृषोत्सर्गः कार्तिक्यां पौर्णमास्यां क्रियेतापि वा आश्वयुज्यां वैशाख्यां वा गोष्ठे गवां मध्ये १ अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा पक्वा-ज्जुहोति पूषा गा अन्वेतु नः इति पुरोनुवाक्यामनूच्य शुक्रं ते अन्यत् इति याज्यया जुहोति २ अथाज्याहुतीरुपजुहोति इह धृतिस्स्वाहा । इह विधृतिस्स्वाहा । इह रन्तिस्स्वाहा । इह रमतिस्स्वाहा इति उपसृजन्मात्रे वत्सं धारयन् धरुणो धयत्रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहा इति । आ गावो अग्मन्नुत भद्रमक्रन् इत्येतेन सूक्तेन नमस्ते रुद्र मन्यवे इत्याऽन्तादनुवाकस्य ३ स्विष्टकृ-त्प्रभृति सिद्धमाधेनुवरप्रदानात् ४ अथ रुद्रं जपित्वा गोमिथुनमध्वर्यवे ददाति ५ लाजमन्त्रेण त्रिः प्रदक्षिणं परिक्रमयेदेकवर्णो द्विवर्णो वा यूथं छादयति । यूथस्य मुख्याश्चतस्रो वत्सतर्यः स्नाप्याच्छाद्य तिलोदकं गृह्णाति ऋचां प्राची इति ६ अवधूनुयुर्जलबिन्दून् पीत्वा तृप्ता यान्तु पितरः इति ७ अथैनं मध्ये गोष्वपि सृजति एतं युवानं परि वो ददामि इति ८ अपियन्तमनुमन्त्रयते त्वां गावः इति ९ मध्यस्थमनुमन्त्रयते मयोभूर्वातो अभिवातूस्राः इति १० सर्वासां पयसि पायसं श्रपयित्वा ब्राह्मणान् संपूज्याशिषो वाचयित्वा यथाशक्ति दक्षिणां ददाति ११ तिर्यग्योनिगतान् ज्ञातीन् जात्यन्तरे वर्तमानाम् दुष्कुलै-रपरुद्धान् दशपूर्वान् दशापरानात्मानं चैकविंशतिं पङ्क्तिं च पुनाति न च पुनरा-वर्तते न च पुनरावर्तते इति १२ अथाप्युदाहरन्ति

एष्टव्या बवहः पुत्रा यद्येकोपि गयां व्रजेत्

गौरीं वा वरयेत्कन्यां नीलं वा वृषत्मुसृजेत् १३

लोहितो यस्तु वर्णेन श्वेतलागूललक्षणः
खुरे ककुदि च श्वेतस्स वै नीलवृषस्स्मृतः १४

इत्याह भगवान् बोधायनः १५
इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने षोडशोऽध्यायः

अथ तृतीयप्रश्ने सप्तदशोऽध्यायः

अथातस्सहस्रभोजनविधिं व्याख्यास्यामः उदगयने पूर्वपक्षे पुण्ये नक्षत्रे त्रिजन्मनि दक्षिणायने वा क्रियेत १ स्वगृहे देवगृहे वा यत्र शुचिर्देशः स्यात्तत्र शुचिर्भूत्वा युग्मान् ब्राह्मणान् सुप्रक्षाळितपाणिपादानप आचमय्य आसनं कल्पयित्वा गन्धपुष्पधूपदीपैरभ्यर्च्य सङ्कल्पसिद्धिरस्तु इति वाचयित्वा त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा प्रदक्षिणनमस्कारं विदधीत २ सहस्रात्मानमीश्वरं सहस्रभोजनेन सम्पूज्य एकस्मै स्वाहा द्वाभ्यां स्वाहा इति दशानुवाकान् भोजनान्ते द्वादश ब्राह्मणाः श्राविताः भवन्ति षड्वा ३ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिम् इति वाचयित्वाऽथ देवयज-नोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति विष्णोर्नुकम् इति पुरोनुवा-क्यामनूच्य विष्णो रराटमसि इति याज्यया जुहोति ४ अथाज्याहुतीरुपजुहोति केशवाय स्वाहा इत्यादि द्वादशनामधेयैस्स्विष्टकृत्प्रभृति सिद्धमाधेनुवर-प्रदानात् ५ अथ विप्रान् भोजयित्वा गुळपायसं घृतमिश्रमित्यन्नस्य बलि-मुपहरति अमुष्मै स्वाहाऽमुष्मै स्वाहा इति द्वादशनामधेयैः ६ अथ ब्राह्मणेभ्यो निवेदयित्वा वस्त्रयुगानि कुण्डलयुगान्यङ्गुलीयकमुपानहौ छत्रं कमण्डलु-मिति च दद्यात् ७ अन्नशेषमाज्यशेषं पक्वशेषं चोभौ जायापती प्राश्नीयातां सर्वान् कामानवाप्नोति सर्वकल्मषैः महापातकैः प्रमुच्यते षष्टिर्वर्षसहस्राणि ब्रह्मलोकमतीत्य विष्णुलोके महीयत इत्याह भगवान् बोधायनः ८
इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने सप्तदशोऽध्यायः

अथ तृतीयप्रश्ने अष्टादशोऽध्यायः

अथातस्सहस्रभोजनसुत्यां व्याख्यास्यामः विषुवेऽयने जन्मनक्षत्रे चन्द्रसूर्य-

ग्रहणे ग्रहगृहीते व्याधिग्रस्ते प्रजाकामोऽयकामो वा ब्राह्मणाननुज्ञाप्य अभी-ष्टमाहुर्वरणं कृत्वा सहस्त्रब्राह्मणान् वेदपारगान् भोजयित्वा सहस्त्रसङ्ख्या-परिपूर्णे पुण्ये नक्षत्रे ब्राह्मणान् द्वादश षड्वा निमन्त्रयित्वा स्नानासनादिगन्ध-पुष्पधूपदीपैरभ्यर्च्याथ देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वोपोत्थाया-ग्रेणाग्निं व्याहृतीभिर्विष्णुमावाह्य परिधानप्रभृत्याऽग्निमुखात्कृत्वा दैवतमर्च-यति आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाः इति चतसृभिः पव-मानस्सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वा गन्धपुष्पधूपदीपैरभ्यर्च्याथ प-क्वाज्जुहोति विष्णोर्नुकम् इति पुरोनुवाक्यामनूच्य विष्णो रराटमसि इति या-ज्यया जुहोति १ अथाज्याहुतीरुपजुहोति केशवाय स्वाहा इति द्वादशना-मधेयैः स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् २ अथ विप्रान् भोजयित्वा गुळपायसं घृतमिश्रमित्यन्नस्य बलिमुपहरति अमुष्मै स्वाहा इति द्वादशना-मधेयैः ३ अथ ब्राह्मणेभ्यो वस्त्रयुगानि कुण्डलयुगान्यङ्गुलीयकमुपानहौ छत्रं कमण्डलुमिति च दद्यात् ४ अन्नशेषमाज्यशेषं पक्वशेषं चोभौ जायापती प्राश्नीयातां सर्वान् कामानाप्नोति महापातकैः प्रमुच्यते षष्टिर्वर्षसहस्त्राणि ब्रह्मलोकमतीत्य विष्णुलोके महीयते इत्याह भगवान् बोधायनः ५

इति बोधायनीये गृह्यशेषसुत्रे तृतीयप्रश्ने अष्टादशोऽध्यायः

## अथ तृतीयप्रश्ने एकोनविंशोऽध्यायः

अथातो जीवश्राद्धं व्याख्यास्यामः यस्त्वात्मनश्श्रेय इच्छत्यपरपक्षे त्रयोदशी-रुपोष्य तस्मिन्नेवाहनि सम्भारानुपकल्पयते यान्यौर्ध्वदैहिकानि मृतानां वस्त्र-षट्कं सौवर्णीं सूचीमङ्कुशं तान्तवं पाशं कन्थां पलाशवृन्तमौदुम्बरीमासन्दीं कलशानीत्यन्यान्यपि च १ श्वोभूते स्नात्वा मध्याह्ने जले स्थित्वोपोत्थाय पुण्याहं स्वस्ति ऋद्धिम् इति वाचयित्वा वस्त्राङ्गुलीयकं दक्षिणां दद्यात् सघृतपायसं दक्षिणामुखोऽश्नीयात् २ अथ श्राद्धविधिनाऽग्निमुपसमाधाय सम्परिस्तीर्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति चत्वारि शृङ्गा इति पुरोनुवा-क्यामनूच्य त्रिधा हितम् इति याज्यया जुहोति तत्सवितुर्वरेण्यम् इति पुरोनुवा-क्यामनूच्य योजयित्री सूनृतानाम् इति याज्यया जुहोति ये चत्वारः इति पुरोनुवाक्यामनूच्य द्वे स्रुती इति याज्यया जुहोति अग्ने नय इति पुरोनुवा-क्यामनूच्य या तिरश्ची इति याज्यया जुहोति ३ अथाज्याहुतीरुपजुहोति पुरुष-सूक्तेनाष्टादशर्चेन हुत्वा गायत्र्याऽष्टसहस्रमष्टशतमष्टाविंशतिं वा जुहुया-

त्स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ४ धार्य एवाग्निरासमाप्तेः ५ चतुष्पथं गत्वा सूचीमङ्कुशं कन्थां रज्जुमिति कृष्णतनवे ह्रस्वाय ब्राह्मणाय दत्वा प्रीयन्तां यमकिङ्कराः इति वाचयित्वा व्रीहिषु कलशान् सादयेत् ६ तन्तुना परिवेष्ट्य जलपूर्णान् पुरुषाकृतिं कृत्वा त्रीणि शीर्ष्णि मुखे त्रीणि ग्रीवायामेकविंशतिं शरीरे चतुष्टयं बाह्वोर्द्वे द्वे लिङ्गस्यैकं पादयोः पञ्च पञ्चेति प्रीतोऽस्तु भगवान् यमः इति ७ तत आसन्दीं कृत्वा पञ्चगव्येन प्रक्षाळ्य पलाशवृन्तैः कृष्णाजिने पुरुषाकृतिं कृत्वा कलशपुरुषे प्राणानभिनिवेश्य वृन्तशरीरे देहमभिनिवेश्य स्वपेत् ८ उदिते सूर्ये कलशैर्देहं स्वयमेवाभिषेचयेत्पौरुषेण सूक्तेन पञ्चगव्येन शुद्धोदकेन सायाह्ने सतिलमन्नं सर्पिषाऽश्नीयात् ९ ब्राह्मणानपि यमकिङ्कर-तृप्तये भोजयेत् १० चतुर्थ्यां यन्त्रदाहः ११ उदकं पिण्डं च अमुकगोत्राय मह्यं पिण्डमामुत्रिकं स्वधा इति नमस्कारान्तं कृत्वा समापयेत् १२ तत्राशौचं दशाहं स्यात्स्वस्य । ज्ञातेर्न विद्यते १३ एकादश्यामेकोद्दिष्टमिति प्रतिपद्यते १४ अथाप्युदाहरन्ति

आपन्नस्त्री च शूद्रश्च यन्त्रैर्दग्ध्वा स्वकां तनुम्
तदह्नैव क्रियास्सर्वाः कुर्यादिति हि वै श्रुतिः १५

स्त्रीणां तूष्णीं समन्त्रकं वा १६ मासिमास्येवं संवत्सरात्संवत्सरादूर्ध्वमा-द्वादशाब्दात्ततो निवृत्तिः १७ यदा स्वयं न शक्नुयात्तदा पुत्रादयः कुर्युः १८ अथाप्युदाहरन्ति

जीवन्नेवात्मनश्श्राद्धं कुर्यादन्येषु सत्स्वपि
यथाविधि प्रवर्त्यांशु सपिण्डीकरणादृते इति १९

तस्योक्तं कालं न विळम्बयेद्यतोऽनित्यं जीवितमिति ह स्माह भगवान् बोधायनः २०

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने एकोनविंशोऽध्यायः

## अथ तृतीयप्रश्ने विंशोऽध्यायः

अथातो नारायणबलिं व्याख्यास्यामः दक्षिणोत्तरायणयोरपरपक्षस्य द्वादश्यां

क्रियेत १ पूर्वेद्युर्द्वादश षड्वा ब्राह्मणान्निमन्त्रयते योनिगोत्रश्रुतवृत्तसम्पन्नान् २ अथापरेद्युर्देवगृहे नदीतीरे वाऽग्निमुपसमाधाय सम्परिस्तीर्य आप्रणीताभ्यः कृत्वोपोत्थायाग्रेणाग्निं दैवतमावाहयति पुरुषसूक्ते द्वे ऋचौ जपित्वा व्याहृतिभिः पुरुषमावाहयति ३ अथैनं स्नापयति पुरुषसूक्तेन ४ अथैनं गन्धपुष्पधूपदीपैरष्टाक्षरेणार्चयित्वाऽद्भिस्तर्पयति केशवं तर्पयामि इति द्वादशनामभिः ५ परिधानप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति विष्णोर्नुकम् इति पुरोनुवाक्यामनूच्य परो मात्रया इति याज्यया जुहोति ६ अथाज्याहुतीरुपजुहोति केशवाय स्वाहा इत्येतैरेव नामधेयैः ७ अथ गुळपायसघृतमिश्रमन्नं निवेदयति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां विष्णवे महापुरुषाय हविर्निवेदयामि इति । सप्तव्याहृतिभिस्स्वाहाकारेण जपति । व्याहृतिभिराचमनीयम् ८ अथ ब्राह्मणानाहूय सदर्भोपक्लृप्तेष्वासनेषूपवेश्याथैनान् वस्त्रगन्धपुष्पधूपदीपैर्माल्यैरभ्यर्च्याथाभ्यनुज्ञातस्तिलघृतमिश्रं हविस्समुदायुत्य हस्ते जुहोति पितृभ्यस्स्वधा नमो नारायणाय स्वाहा इत्यादिचतुर्विंशतिः मन्त्रा ऊह्याः ९ अथ अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमो नारायणाय स्वाहा इति १० अथ ब्राह्मणानन्नेन परितोष्याचम्य तेषां यथाशक्ति दक्षिणां ददाति ११ प्रदक्षिणीकृत्य शेषमनुज्ञाप्य दक्षिणेनाग्निं प्रागग्रान् दर्भान् संस्तीर्य तेषु बलिं ददाति विश्वेभ्यो देवेभ्यो नमस्साध्येभ्यो देवेभ्यो नमस्सर्वेभ्यो देवेभ्यो नमस्सर्वाभ्यो देवताभ्यो नमो विष्णवे नमो नारायणाय नमस्सहस्रशीर्षाय नमो यज्ञात्मने नमो यज्ञपुरुषाय नमो विश्वात्मने नमस्सर्वात्मने नमस्सर्वेश्वराय नमः इति १२ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् १३ सर्वान् पितॄन् समधिगच्छति ब्रह्मलोके महीयत इत्याह भगवान् बोधायनः १४

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने विंशोऽध्यायः

अथ तृतीयप्रश्ने एकविंशोऽध्यायः

अथातो नारायणबलिसंस्कारविधिं व्याख्यास्यामः

चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणाम्

विषस्त्रिरज्जुपाषाणदेशान्तरमृतेऽपि वा

अभिशस्तसुरापात्मत्यागिनां द्विजहतानामन्येषां च द्वादश वर्षाणि त्रीण्येकं वा यत्र मरणं यस्य तत्रतत्र कुर्वीत १ असांहितानां पालाशाग्रमाहूयपर्णत्सरूणां कृष्णाजिने पुरुषाकृतिं कृत्वा होतृकल्पेन वा पितृमेधेन वा संस्कुर्यात् २ अथ प्रयोगमन्त्रानपोद्धृत्य पुरुषसूक्तस्य प्रत्यृचं तत्तन्मन्त्राणां स्थाने पृथक्पृथक्प्रयोगो भवति ३ अपि वा तूष्णीं सर्वं क्रियेत ४ याम्यसूक्तेनोपोषणम् ५ पौरुषेणो-पस्थानम् ६ समानमत ऊर्ध्वम् ७ तीर्थे स्नात्वा प्रेतायोदकक्रियां कृत्वा नामगोत्रे मनसा ब्रूते नारायणैतत्त उदकम् इति वाचाऽभिव्याहरेत् ८ स एतमेव सायंप्रातर्दशरात्रं करोति ९ त्रिरात्रेण वा १० पिण्डदाने असावेतत्ते पिण्डम् इति विशेषः ११ एकादश्यामेकोद्दिष्टम् १२ एवं प्रेतायामुष्मै यमाय च स्वाहा इत्यग्नौ करणे वा १३ प्रतिग्रहणे प्रदाने विसर्जने च नारायणाय इत्यनेन मन्त्रेण करोति १४ सर्वं मनसा सङ्कल्पयेद्वाचाऽभिव्याहरेत् १५ पर्वत्रये च षाण्मासिके च समानम् १६ संवत्सरे सपिण्डीकरणम् सपिण्डीकरणस्थाने नारायणवलिक्रिया १७ सायं प्रातर्न विद्यते सोयं बोधायनमतो यथा १८ द्वयोरयनसङ्क्रान्त्योः पुण्येषु दिवसेषु वा १९ अथ वाऽपरपक्षस्य क्रिया भवेत् २० सपिण्डीकरणमेतेषामन्येषां च समानम् २१ प्रेतपात्रं पितृपात्रे निनयेत् । त्रिषु वासिञ्चेत् । प्रेतपिण्डं पितृपिण्डेषु निदध्यात् असौ पितृभिः पितामहैः प्रपितामहैस्संगच्छध्वं भूर्भुवस्सुवरोम् इत्याह भगवान् बोधायनः २२

इति बोधायनीये गृह्यशेससूत्रे तृतीयप्रश्ने एकविंशोऽध्यायः

अथ तृतीयप्रश्ने द्वाविंशोऽध्यायः

यस्त्वात्मनश्श्रेयांसमिच्छत्यौर्ध्वदैहिकं स्वस्य यदि भवति तदा दहनप्रभृति सपिण्डीकरणान्तं जीवन्नेवाधस्तथोक्तं सकलं कुर्यात् १ तथाह कण्वः

जीवन्नेव च यः कुर्वन्नात्मनश्श्राद्धमिच्छति
यन्त्रेण कृत्वा संस्कारमुदकं बलिमेव च २

कृत्वाऽथ षोडशश्राद्धं दद्याद्यद्यत्प्रियं भवेत्
आत्मनस्तत्स्वयं दत्वा ततश्श्राद्धं समापयेत् ३

तत्राशौचं दशाहं स्यात् स्वस्य ज्ञातेर्न विद्यते इति ५

अत्रैव विष्णुः

आत्मार्थं पारलौक्यं यत्तत्सर्वं लमवाप्नुयात्
न हि कर्म कदाचित्तु क्षयमेति कृतं नरैः इति ५

तस्माद्यस्य न सन्ति कर्तारो ज्ञातयः पुत्रोऽन्तेवासिनो वा स जीवन्नेव आमुष्मिकं सर्वमविकृतं कुर्वन् नामोच्चारणे तद्गोत्राय तच्छर्मणे करिष्यते ६ अथ वा प्रविदानकल्पेन वा दद्यादितीदमप्येकम् ७

इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने द्वाविंशोऽध्यायः

अथ तृतीयप्रश्ने त्रयोविंशोऽध्यायः

अथातश्शुभाशुभनिमित्तानां वायसानां बलिं व्याख्यास्यामः शुक्लपक्षे त्रयोदश्यामष्टम्यां नवम्यां वा ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य देवस्य गृहे गोष्ठे नदीतीरे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्युक्ष्य प्रदक्षिणं दर्भैरासनानि कल्पयति अङ्कतेभ्यः कल्पयामि । कङ्कतेभ्यः कल्पयामि । कद्रुपुत्रेभ्यः कल्पयामि । वायसेभ्यः कल्पयामि । ब्रह्मपुत्रेभ्यः कल्पयामि इति तन्मध्ये १ अथैनानावाहयति न कपिलान्न लोहितान्नारिष्टान् न महारिष्टान् वायसमात्रकान् २ आयान्तु शकुनाश्शीघ्रा वायसा बलिभोजनाः ३ अङ्कतानावाहयामि । कङ्कतानावाहयामि । कद्रुपुत्रानावाहयामि । वायसानावाहयामि । ब्रह्मपुत्रानावाहयामि इति मध्ये ४ अथैनान् स्नापयति आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः इति चतसृभिः पवमानस्सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वाऽथाद्भिस्तर्पयति अङ्कतेभ्यस्तर्पयामि । कङ्कतेभ्यस्तर्पयामि । कद्रुपुत्रेभ्यस्तर्पयामि । वाससेभ्यस्तर्पयामि । ब्रह्मपुत्रेभ्यास्तर्पयामि इति मध्ये ५ अथैनान् गन्धपुष्पधूपदीपैः अमुष्मै नमोऽमुष्मै नमः इति पायसं दयोदनं वा हविर्निवेदयति अङ्कतेभ्यस्स्वाहा । कङ्कतेभ्यस्स्वाहा । कद्रुपुत्रेभ्यस्स्वाहा । वायसेभ्यस्स्वाहा । ब्रह्मपुत्रेभ्यस्स्वाहा इति मध्ये ६ अथैनान् ज्ञापयति

सत्याः स्थ सत्यं वदत सत्ये रमत वायसाः
यत्सत्यमिह तद्ब्रूयाद्यो मिथ्याबलिमश्नियात् ७

अथैते मातृघातेन पितृघातेन वा पुनः
तद्दुष्कृतं प्रतिगृह्णीयाद्यो मिथ्याबलिमश्नीयात् ८

कपिलानां शतं हत्वा ब्राह्मणानां विशेषतः
तद्दुष्कृतं प्रतिगृह्णीयाद्यो मिथ्याबलिमश्नियात् ९

भावाय पूर्वं गृह्णीयादभावायानु दक्षिणम्
नास्तीत्यपरं गृह्णीयाद्भविष्यत्यपि चोत्तरम् १०

मध्ये सर्वार्थलाभाय शाकुनेष्विदमुत्तमम्
इत्येवं ज्ञात्वा सर्वकर्माण्यारभत इत्याह भगवान् बोधायनः ११
इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने त्रयोविंशोऽध्यायः

अथातश्शुभाशुभनिमित्तानाम् । यस्त्वात्मनश्श्रेयांसमिच्छति । अथातो नारायणबलिसंस्कारविधिम् । अथातो नारायणबलिम् । अथातो जीव-श्राद्धम् । अथातस्सहस्रभोजनसुत्याम् । अथातस्सहस्रभोजनविधिम् । अथ वृषोत्सर्गम् । अथातोऽर्धमासेऽर्धमासे । अथातो यमळकल्पम् । अथातश्शिथिलीकल्पम् । अथातोऽभिवृद्धिकल्पम् । अथातो मृत्युंजय-कल्पम् । अथातो विनायककल्पम् । अथातो ज्येष्ठाकल्पम् । अथातो रविकल्पम् । अथातो विष्णुकल्पम् । अथातस्सरस्वतीकल्पम् । अथात-श्श्रीकल्पम् । अथात उपश्रुतिकल्पम् । अथातो दुर्गाकल्पम् । अथातो व्याहृतिकल्पम् । अथातः पवित्राणाम् २३ अथातः पवित्राणाम् । अथातो व्याहृतिकल्पम् । अथातो दुर्गाकल्पम् । अथात उपश्रुतिकल्पम् । अथातश्श्रीकल्पम् । अथातस्सरस्वतीकल्पम् । अथातो विष्णुकल्पम् । अथातो रविकल्पम् । अथातो ज्येष्ठाकल्पम् । अथातो विनायककल्पम् । अथातो मृत्युंजयकल्पम् । अथातोऽभिवृद्धिकल्पम् । अथातश्शि-थिलीकल्पम् । अथातो यमळकल्पम् । अथातोऽर्धमासेऽर्धमासे । अथ

वृषोत्सर्गम् । अथातस्सहस्रभोजनविधिम् । अथातस्सहस्रभोजनसुत्याम् । अथातो जावश्राद्धम् । अथातो नारायणबलिम् । अथातो नारायण-बलिसंस्कारम् । यस्त्वात्मनश्श्रेयांसमिच्छति । अथातश्शुभाशुभ-निमित्तानाम् २३

इति बोधायनीये गृह्य शेषे तृतीयप्रश्नस्समाप्तः

अथ चतुर्थप्रश्नप्रारम्भः

अथातो मिथ्यासत्यबलिं व्याख्यास्यामः ब्राह्मणक्षत्रियवैश्यशूद्राः पञ्चगव्येन स्नात्वा ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य देवगृहे नदीतीरे वाऽथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति यत इन्द्रभयामहे स्वस्तिदा विशस्पतिः इति द्वाभ्याम् १ अथाज्याहुतीरुपजुहोति अपैतु मृत्युः परं मृत्यो मा नो महान्तं मा नस्तोके त्र्यम्बकं ये ते सहस्रम् इति विष्णोर्नुकं जातवेदसे अग्ने त्वं पारय इति व्याहृतिभिः मृत्युर्नश्यत्वायुर्वर्धतां भूस्स्वाहा । मृत्युर्नश्यत्वायुर्वर्धतां भुवस्स्वाहा । मृत्युर्नश्यत्वायुर्वर्धतां सुवस्स्वाहा । मृत्युर्नश्यत्वायुर्वर्धतां भूर्भुवस्सुवस्स्वाहा इति । स्विष्टकृत्प्रभृति सिद्धमा-धेनुवरप्रदानात् २ अथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति यो रुद्रो अग्नौ इति भस्मसमुल्लेखनम् ३ आचार्येभ्यो गोवत्सं दद्यात् ४ अन्नं संस्कृत्य ब्राह्मणान् संपूज्याशिषो वाचयित्वा ऋषभैकादश दक्षिणां दद्यादित्याह भगवान् बोधायनः ५

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने प्रथमोऽध्यायः

अथ चतुर्थप्रश्ने द्वितीयोऽध्यायः

आहुतानुकृतिबलिहरणानुकृतिर्धूर्तबलिः चतुर्षु चतुर्षु मासेषु फाल्गुने मासि शुक्लपक्षस्य सप्तम्यां क्रियेत । अपि वा त्रयोदश्यामेवमाषाढ एवं कार्तिके १ साधनानि पुरस्तादेवोपकल्पयते बर्हिर्बैल्वानि चैव पञ्चदशेध्मदारूणि बैल्वं मेक्षणं परिधींश्च श्वेतरक्तं गन्धमाल्यं श्वेतरक्तांश्च प्रतिसरान् धूपं श्रपय-त्यन्नानि विविधांश्च भक्ष्यान् स्थालीपाकं च श्रपयति २ अथैनानादाय सहा-न्तेवासिभिर्ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य यत्रापस्तद्गत्वा स्नात्वाऽप आचम्य सुरभिमत्याऽब्लिङ्गवारुणीभिर्हिरण्यवर्णाभिः पावमानीभिरिति मार्ज-यित्वाऽन्तर्जलगतोऽघमर्षणेन त्रीन् प्राणायामान् धारयित्वोत्तीर्य वासः

पीडयित्वाऽन्यत्प्रयतं वासः परिधायाप स्राचम्य देवयजनमुदानयति ३ स्रथ शुचौ समे देशे वेदिं कुर्वन्ति पुरुषमात्रमपरिमितं वा ४ तस्याः पूर्वार्धे स्थरिडलं कल्पयित्वोदुम्बरशाखां बहुपर्णां बहुशाखामप्रतिशुष्काग्रां नियत्य दर्भैर्भगवते धूर्ताय प्रतिकृतिं कृत्वाऽपरेणोदुम्बरशाखां प्रतिसरेण सह शाखया परिव्ययन्ते ५ ज्ञोपवीतमुपव्ययन्ते यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । स्रायुष्यमग्रियं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः इति ६ तेन त्वामहं प्रतिगृह्णाम्यायुषा ब्रह्मणा ब्रह्मवर्चसाय इति ७ स्रपरार्धे वेद्यास्स्थरिडलं कृत्वोल्लेखनप्रभृत्या पर्युक्षणात्कृत्वा वेदिं स्तृणात्यनति-दृश्नम् ८ उत्तरेणाग्निं प्रागग्रान् दर्भान् संस्तीर्य तेषु द्वन्द्वं न्यञ्चि पात्राणि सादयित्वा तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा विस्रस्येध्मं त्रिस्सर्वाभिः प्रोक्ष्य दर्भेषु दक्षिणतो ब्राह्मणमुपवेश्योत्तरत उदपात्रं निधाय पक्वमोदनं पायसं वायाचितमद्भिरभ्युक्ष्याग्न वधिश्रियाज्यं निरूप्याधि-श्रित्योभयं पर्यग्नि कृत्वापरिधानात्कृत्वा समन्वारब्धेष्वन्तेवासिषु प्रदक्षिण-मग्निं परिषिच्याथेध्ममभ्यज्यादधाति इमं स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया । भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव स्वाहा इति ९ एवमेवाभ्यज्य द्वितीयामभ्यादधाति यन्मै त्वमायजसे संसाधय त्यनर्वा क्षेति दधते सुवीर्यम् । स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषाभा वयं तव स्वाहा इति १० एवमेवाभ्यज्य तृतीयामभ्यादधाति श-केम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतन् । त्वमादित्या स्रावह तान् ह्युश्मस्याग्ने सख्ये मा रिषामा वयं तव स्वाहा इति ११ एवमेवा-भ्यज्य चतुर्थीमभ्यादधाति तत्ते भद्रं यत्समिद्धः स्वे दमे सोमाहुतो जरसे मृडयत्तमः । दधासि रत्नं द्रविणं च दाशुषे स्रग्ने सख्ये मा रिषामा वयं तव स्वाहा इति १२ एवमेवाभ्यज्य पञ्चमीमभ्यादधाति तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ट्य स्वाहा इति १३ एवमेवाभ्यज्य एकापचयेन भवे नमस्स्वाहा इति षडक्षरेण परिशिष्टाः १४ स्राघारप्रभृत्या-ऽग्निमुखात्कृत्वा दैवतमावाहयन्तो नृत्यन्तः त्रिः प्रदक्षिणं परियन्ति १५

यस्य सिंहा रथे यक्ता व्याघ्राश्चाप्यनुगामिनः
तमिमं पुत्रिकापुत्रं स्कन्दमावाहयाम्यहम् १६

आयातु देवोत्तमः कर्तिकेयो ब्रह्मरयपुत्रस्सह मातृभिश्च
धात्र्या विशाखेन च विश्वरूपो जुष्टं बलिं सानुचरो जुषस्व १७

सप्ताहं जातयश्शक्तिस्सप्तपर्वमरिन्दमम्
व्याघ्रावृतं महाधूर्तं प्रपद्ये सशितव्रतम् १८

परं देवं वरदं प्रपद्ये धूर्तं सेनामुग्रसेनामपर्णासुतं कृत्तिकानां षडास्यम् । अग्नेः पुत्रम् शमयैर्यथोक्तैश्चातुर्मास्यैस्सप्तमीं त्वामरराये । गन्धैश्च भक्त्या च यजाम शक्ते वित्तं वित्ता यशसश्च राजन् । कामांश्च धूर्तः प्रयच्छतु नमश्शङ्कराय नमश्च स्थाम्ने नमो नीलग्रीवाय नमः कृत्तिकापुत्राय । प्रीयतां विनियोगः प्रीयतां विशाखः प्रीयतां कृत्तिकापुत्रः प्रीयतां नमः प्रीयतां नमोनमः इति १९ तमायान्तमनुमन्त्रयते स्वागतं पुनरागतं भगवते धूर्तायैतदासनं क्लृप्तमत्रास्तां भगवान् महाधूर्तः इति २० अत्र कूर्चमर्हणं च ददाति भगवतोऽयं कूर्चः दर्भमयः त्रिवृद्धरितस्सुवर्णमयस्तं जुषस्व इति २१ अथास्मै कंसे वा चमसे वा पुष्पफलाक्षतमिश्रैर्वर्षीयसा तेजोमयेनापिधायार्हणीया आपो निवेदयन्ते इमा आपंश्शिवाश्शिवतमाः पूताः पूततमा मेध्य मेध्यतमा अमृता अमृतरसाः पाद्या अर्घ्या अभिषेचनीया मार्जनीयाश्च ता जुषन्तां प्रतिगृह्यन्तां प्रतिगृह्णातु भगवान् महाधूर्तः इति । आपो हिष्ठा मयुभुवः इति तिसृभिः हिररायवर्णाः इति चतसृभिः एवमानस्सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वा प्रदक्षिण-मावृत्य प्रत्यङ्ङावृत्य जघनेनाग्निमुपविश्यान्वारब्धेष्वाज्याहुतीर्जुहोति स्क-न्दाय स्वाहा । कुमाराय स्वाहा । बालाय स्वाहा । हिररायचूडाय स्वाहा । अङ्गिरसे स्वाहा । गुहाय स्वाहा । भद्रासनाय स्वाहा । नीलग्रीवाय स्वाहा । भवपुत्राय स्वाहा । धूर्ताय स्वाहा । पशुभुवे स्वाहा । षष्ठ्यै स्वाहा । विशाखाय स्वाहा । सनत्कुमाराय स्वाहा । स्कन्दपार्षदे-भ्यस्स्वाहा । षष्ठीपार्षदेभ्यस्स्वाहा इत्येतैरेव नामधेयैः मेक्षणेनोपघातं पूर्वार्धे जुहोति २२ उत्तरार्धात् स्विष्टकृतमवदायान्तःपरिधि सादयित्वोपोत्थाय दैवतमर्चयत्येतैरेव नामधेयैर्गन्धपुष्पधूपदीपैः अमुष्मै नमोऽमुष्मै नमः इति । अन्नेन अमुष्मै स्वाहाऽमुष्मै स्वाहा इति । फलोदकेन अमु तर्पयाम्यमुं तर्पयामि इति २३ अत्र नमस्यति यं कामं कामयते तन्मे कामस्समृध्यतां तस्मिन् कामे समृद्धे द्रोणमुपहरिष्यामि कामं वर्धयतु इति । कामे समृद्धे द्रोणान्नमुपह-

रिष्यति २४ अथैनमुपतिष्ठते नमो भवोद्भव इति गुहो गुह्यपतिर्भवः २५ वसुर्वसुपतिः नमो धूर्तस्वामी प्रसीदतु २६ महायशा महातेजा महासेनो महारूपः २७ महातपा मे भक्तस्य प्रतिगृह्णात्विमं बलिम् इति २८ अथो-पविश्य स्विष्टकृतं हुत्वोपोत्थाय दैवतं प्रवाहयन्तो नृत्यन्तस्त्रिरपसलैः परियन्ति

सिंहव्याघ्रसमायुक्तस्स रथो रथिनां वरः
प्रयातु भगवान् धूर्तः प्रियवाणिः प्रियंकरः ओंनम इति

अथोपविश्य जयप्रभृति सिद्धमाधेनुवरप्रदानात् ३० अथैनां प्रतिकृतिमादाय शिरसि निधायावभृथमन्त्रेणाप्सु प्रप्लाव्यातिशिष्टैर्गन्धमाल्यैरात्मानमलङ्कृत्य प्रतिसरं बध्नाति ३१

अदित्या सुकृतं सूत्रमिन्द्रेण त्रिवृतं कृतम्
अश्विभ्यां ग्रथितो ग्रन्थिर्ब्रह्मणा प्रतिसरं कृतम्

अभिचारं च सर्वं च यच्च मे दुष्कृतं कृतम्
सर्वतो मे भय नास्ति यावत्सूत्रं धरिष्यति इति ३२

अथान्योन्यमपः प्रतिग्राहयन्ते प्रीयतां भगवान् महाधूर्तः इति ३३ अथ पक्वादुपादाय प्राश्नाति ३४ न स्त्रीकुमारौ प्राश्नीयाताम् ३५ तत्प्राशनमन्त्रः आयुरसि इति ३६ प्राश्याप आचम्य जठरमभिमृशति यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः इति द्वाभ्याम् ३७ पुनःपुनरवोद्यान्त आयुष्यं वर्चस्यं रात्तोघ्नं स्वस्त्ययनमृद्धमिति ३८ आहुतानुकृतिर्व्याख्यातो बलिहरणानुकृतिः ३९ दैवतमावाह्य गन्धपुष्पधूपदीपान्नफलोदकैरभ्यर्च्य नमस्कृत्य प्रवाहयन्ते ४० धूर्तबलिं चतुर्षु चतुर्षु मासेष्वेवं यजमानः चातुर्मास्यानां फलमवाप्नोतीति ह स्माह भगवान् बोधायनः ४१

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने द्वितीयोऽध्यायः

## अथ चतुर्थप्रश्ने तृतीयोऽध्यायः

अथातो मृतबलिं व्याख्यास्यामः प्राग्दक्षिणायतनं चतुरश्रं गोमयेनोपलिप्य प्राचीनावीती दक्षिणामुखस्सव्यं जानुं निपात्य सकृदुल्लिख्याद्भिरभ्युक्ष्य दक्षिणाग्रान् दर्भान् संस्तीर्याद्भिर्मार्जयित्वोपस्तीर्णाभिघारितं सकृत्तिलमिश्रं चरुमवद्यति मुष्टिप्रमाणं कुक्वटाण्डप्रमाणं वा हस्तेन अमुकगोत्रायैतत्ते ओदनस्स्वधा नमः इति १ अथाङ्गुष्ठेनाभिमृश्याथाञ्जनाभ्यञ्जने मधु वासो दशोर्णा वा गन्धपुष्पधूपदीपैर्हस्ताद्विपरीतात्सायं प्रातर्दशरात्रं कृत्वा स्वस्ति-ग्रामं भोजयित्वा दशम्यां विकृताहारं सायं बलिं दत्वाऽथैकादश्यामेकोद्दिष्टं कुर्वन्ति २ न जातु श्येनकाकादीन् पक्षिणः प्रतिषेधयेत् तद्रूपास्तस्य पितर-स्समायान्तीति वैदिकाः इति विज्ञायते ३

इति बोधायनीयं गृह्यशेषसूत्रे चतुर्थप्रश्ने तृतीयोऽध्यायः

## अथ चतुर्थप्रश्ने चतुर्थोऽध्यायः

अथ प्रहुतानुकृतिः धर्मोपभोगविधिं व्याख्यास्यामः सेतुबन्धनदीखातततटाक-पुष्करिणीवापीकूपदेवगृहप्रासादवसतीनामोषधिवनस्पतीनां च पूर्तं भवति भूतिकामो निशि जुहोति १ उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे यज्ञद्रव्या-ण्यध्वर्युरुपकल्पयते खादिरं पालाशं वा त्र्यरत्निमात्रं यूपं कृत्वा सौवर्णसर्प-शिंशुमारकूर्ममकरकर्कटकमलकुवलयकुमुतोत्पलकह्लारांश्च राजतान् हंसम-त्स्यमण्डूकांश्च देवगृहप्रासादवसतीनां तदाकृतिवदोषधिवनस्पतीनां तत्फ-लाकृतिवत् सुवर्णरत्नेषु सर्पिश्चरुतिलचूर्णपयोऽपूपधानान् सक्तून् गन्धपुष्पधूप-दीपवासांसीध्माबर्हिषी च २ सप्रदोषे द्विजातीनां होमः ३ शूद्राणां नमस्का-रैरावृतैर्वा ४ तटाकतीरे मध्यपूर्वे स्थण्डिलमुपलिप्य यूपावटं खात्वाऽध्वर्युश्च यूपं प्रतिष्ठापयति आब्रह्मन् ब्राह्मणः इति ब्राह्मणस्य अस्मिन् राष्ट्रे इति राजन्यस्य दोग्ध्री धेनुः इति वैश्यस्य ५ मणिमुक्ताप्रवाळसुवर्णगजताक्षतैरवकीर्य जघनेन यूपं स्थण्डिलं कृत्वाऽथ देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वोपोत्थाया-ग्रेणाग्निं देवानावाहयति ब्रह्मणे विष्णवे श्रियै सूर्याय चन्द्रायाग्नये यमाय निर्ऋत्यै वरुणाय वायवे सोमायेशानाय इत्यावाह्य सुवर्णरजताक्षतैरवकीर्य यूपदेवतां गन्धपुष्पधूपदीपैरभ्यर्च्य यूपमुपतिष्ठते तद्विष्णोः परमं पदम् इति ६ तं वासोभिर्वेष्टयित्वा तस्मिन् रूपाणि बध्वा परिधानप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति अवते हेडः उदुत्तमम् इति द्वाभ्याम् ७ अथाज्याहुतीरुपजुहोति

कूप्याभ्यस्स्वाहा अद्भ्यस्स्वाहा इत्येताभ्यामनुवाकाभ्याम् इमं मे वरुण तत्त्वा- यामि यच्चिद्धि यत्किं चेदं कितवासो हिरण्यवर्णाश्शुचयः पावकाः त्वं नो अग्ने स त्वं नो अग्ने इति ८ स्विष्टकृतोऽथ यूपाहुतीर्जुहोति ब्रह्मणे स्वाहा । विष्णवे स्वाहा । श्रियै स्वाहा । सूर्याय स्वाहा । चन्द्रमसे स्वाहा । इन्द्राय स्वाहा । अग्नये स्वाहा । यमाय स्वाहा । निर्ऋत्यै स्वाहा । वरुणाय स्वाहा । वायवे स्वाहा । सोमाय स्वाहा । ईशानाय स्वाहा इति ९ अथौषधिवनस्पतीनां पक्वाज्जुहोति या जाताः शतं वो अम्ब धामानि इति द्वाभ्याम् १० अथाज्याहुतीरुपजुहोति पुष्पावतीः प्रसूवतीः ओषधीभ्य- स्स्वाहा वनस्पतिभ्यस्स्वाहा इति त्रिभिरनुवाकैः प्रत्यृचम् ११ स्विष्टकृतोऽथ देवगृहेभ्यः पक्वाज्जुहोति वास्तोष्पते वास्तोष्पते इति द्वाभ्याम् १२ अथाज्या- हुतीरुपजुहोति वास्तोष्पते ध्रुवास्थूणा इति षड्भिः १३ स्विष्टकृतोऽथ नमस्ते रुद्र मन्यवे इत्यान्तादनुवाकस्य प्रत्यृचम् १४ अथ कूश्माण्डानि हुत्वा पुरस्ता- त्स्विष्टाकृतो वैश्वानराय प्रतिवेदयामः इति १५ अथ चरतिलचूर्णपयस्स- र्पिर्मिश्रैरपूपैर्धानाभिस्सक्तून् करम्भान् दर्भेषु बलिमुपहरति ब्रह्मणे नमः इति पूर्वोक्तद्वादशनामभिः १६ त्रिः प्रदक्षिणं यजमानो बलीन् सम्पकीर्य यमसूक्तं वाचयित्वा पुरुषसूक्तं चोर्मिमन्तमुदधिं कृत्वा स्नात्वाऽप आचम्य ब्राह्मणेभ्यो वासांसि दद्यादाचार्याय गोमिथुनं दद्यादृषभैकादश गा दद्यादाशिषो वाचयि- त्वा रूपाणि विसर्जयेत् १७ एवं प्रयुञ्जानो दशपूर्वान् दशापरानात्मानं चैक- विंशतिं पंक्तिं च पुनाति १८ अथाप्युदाहरन्ति नृत्तगीतवाद्यघोषैः प्रत्यूषे बोधयन्ति । एतेषां नष्टानां पुनः करणमधिकं फलमिति षष्टिर्वर्षसहस्राणि ब्रह्मलोके महीयत इत्याह भगवान् बोधायनः १९

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने चतुर्थोऽध्यायः

## अथ चतुर्थप्रश्ने पञ्चमोऽध्यायः

अथातः काम्यविधिं व्याख्यास्यामः अन्नकामस्य जुहोति अन्नपतेऽन्नस्य नो धेहि जातो यदग्ने वषट्ते वास्तोष्पते एवावन्दस्व आनो नियुद्भिः हिरण्यवर्णाः अश्वावतीः त्वं वरुण बृहस्पते युवमिन्द्रश्च स्वस्ति न इन्द्रः इत्येता अन्नहोमा बलयश्च १ अथ समिद्धोमो यदग्ने यानि कानि इति २ औदुम्बरीं शमीमयीं वा शान्तिकामः शन्नो देवीरभिष्टये इति ३ दूर्वामायुष्कामः आयुष्टे आयुर्दा अग्ने अपैतु परं वातं प्राणं अमुत्र भूयात् हरि हरन्तं मानो महान्तं मानस्तोके

वास्तोष्पते जातवेदसे तत्सवितुर्वरेण्यं ऋतेन यमादित्याः प्रजापते इति ४ यदपामार्गहोमो भवति रक्षसामपहत्यै इति ब्राह्मणम् । सर्वस्य भेषजोऽपामार्गहोमः यदपामार्गस्सपत्नहासहस्राणां पुष्टिवर्धनाय । यन्मे शिरसि पापं केशेषु निहितं ललाटे पृष्ठे जठरे च यद्विश्वं सर्वस्य भेषजोऽपामार्गोऽवलुम्पतु स्वाहा इति ५ व्याहृतीभिस्तिलहोमो रक्षोघ्नाः पापनाशनश्च ६ अथाप्युदाहरन्ति

ओषध्यस्सक्तवः पुष्पं काष्ठं मूलं फलं तृणम्
एतद्धस्तेन होतव्यं नान्यत्किञ्चिदचोदनात् इति ७

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने पञ्चमोऽध्यायः

अथ चतुर्थप्रश्ने षष्टोऽध्यायः

अथातश्शौचविधिं व्याख्यास्यामः ग्रामाद्दूरतो गत्वा यज्ञोपवीतं शिरसि दक्षिणे कर्णे वा कृत्वा मृत्तिकां गृह्णाति १ काष्ठमन्तर्धाय मध्य उपविशेत् २ अहन्युत्तरत उपेयान्निशायां दक्षिणत उभयोस्सन्ध्ययोरुदङ्मुखः ३ नाग्निं नापो न नग्नो वृक्षमूले पर्वतमूले चतुष्पथेऽग्न्यगारे गवां मध्ये गोष्ठे दहनपुळिनवर्जमन्तर्जले देवगृहे वल्मीके मूषिकस्थले प्रत्यग्निं प्रतिसूर्यं प्रत्यगारं प्रति गां प्रतिब्राह्मणं च ४

एकां लिङ्गे मृदं दद्यात्सव्ये पाणौ मृदस्त्रयः
उभयोर्द्विर्मृदं दद्यान्मूत्रवच्छौचमिष्यते ५

पञ्चापाने दशैकस्मिन्नुभयोत्सप्त मृत्तिकाः
एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः ६

त्रिगुणं तु वनस्थस्य यतीनां तु चतुर्गुणम्
आचार्यगुरुदाराभिगमने नाभिभाषते ७

संस्थिते न म्रियते योनिसंस्कारादिति बोधायनः ८

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने षष्टोऽध्यायः

## अथ चतुर्थप्रश्ने सप्तमोऽध्यायः

अथात आचमनविधिं व्याख्यास्यामः प्राङ्मुख उदङ्मुखो वा बद्धशिखो यज्ञोपवीती नोष्णाभिर्न क्षाराभिर्न विवर्णाभिर्न दुर्गन्धरसाभिः न सफेनाभिर्न चैकहस्ताभिर्न दूषिताभिर्न बहिर्जानुभिर्न विरळङ्गुळीभिर्न बुद्बुदाभिर्न तिष्ठन्न हसन् न जल्पन् न विलोकयन्न प्रह्वो न प्रणतो न रोचयन् १ ब्राह्मणस्य दक्षिणे हस्ते पञ्च तीर्थानि भवन्ति अङ्गुलीमध्ये देवतीर्थमङ्गुल्यग्र आर्षं तीर्थं मध्येऽग्नितीर्थमङ्गुष्ठतर्जन्योर्मध्ये पैतृकतीर्थमङ्गुष्ठतलेऽतिहृत्य पश्चाल्लेखं तद्ब्रह्मतीर्थम् २ माषमग्नं तु तन्मात्रं प्रतिगृह्य त्रिः पिबेदपो गोकर्णवद्धस्तेन त्रिराचामेत् ३ प्रथमं यत्पिबति तेन ऋग्वेदं प्रीणाति यद्द्वितीयं तेन यजुर्वेदं प्रीणाति यत्तृतीयं तेन सामवेदं प्रीणाति प्रथमं यत्परिमृजति तेनाथर्ववेदं प्रीणाति यद्द्वितीयं तेनेतिहासपुराणानि यन्मुखं तेनाग्निं यत्सव्यं पाणिमभ्युक्षति तेन नक्षत्राणि यत्पादमभ्युक्षति तेन विष्णुं यच्चक्षुषी तेन चन्द्रादित्यौ यन्नासिके तेन प्राणापानौ यच्छ्रोत्रं तेन दिशो यद्बाहू तेनेन्द्रं यद्धृदयं तेन रुद्रं यन्नाभिं तेन पृथिवीं यदङ्गुष्ठयोः स्रवन्त्यापः कुबेरादयः सर्वा देवताः प्रीणन्त्यग्निर्वायुः प्रजापतिरर्कचन्द्रौ मघवानिति वैदिकाः ४ अनामिकाङ्गुष्ठाभ्यां चक्षुषी समुपस्पृशेत् । प्रादेशिन्यङ्गुष्ठाभ्यां तु नासिके अङ्गुष्ठकनिष्ठकाभ्यां तु श्रोत्रे अङ्गुष्ठमध्यमाभ्यां तु बाहू चतुरङ्गुलीभिर्हृदयमङ्गुष्ठेन नाभिं सर्वैर्मूर्धानं समुपस्पृशेदेतेन विधिना युक्ता न लिप्यन्ते कदाचनेति ५

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने सप्तमोऽध्यायः

## अथ चतुर्थप्रश्ने अष्टमोऽध्यायः

अथ वै भवति आपो वा इदमग्रे सलिलमासीत्तस्मिन् प्रजापतिर्वायुर्भूत्वाऽचरत्स इमामपश्यत्तां वराहो भूत्वाऽहरत्तां विश्वकर्मा भूत्वा व्यमार्ट् साऽप्रथत सा पृथिव्यभवत् तत्पृथिव्यै पृथिवित्वं तस्यामश्राम्यत् इति तदु हैक औपासनमेवोपासते स्त्रिया एव संस्कारार्थमौपासनो नित्यो धार्योऽनुगतो मन्थ्यः श्रोत्रियागाराद्वाऽऽहार्यो द्वादशाहं विच्छिन्नः पुनराधेयोऽथ यदि द्वादशाहं विच्छिन्नः पुनराधेयस्स्याद्या प्रकृतिस्तत आहरणमित्युक्तमेतत्सन्तिष्ठते १ अथ गृहस्थस्यौपासनम् षण्मासान्नाजुहवुर्यथोपपादमाहृत्याग्निं प्रतिष्ठाप्य परिस्तीर्य द्वादशाहप्रायश्चित्तं हुत्वा तदानीमेव सम्परिस्तीर्याऽप्रणीताभ्याः कृत्वा चतुश्शरावमोदनं श्रपयित्वाऽभिघार्योदञ्चमुद्वास्य प्रतिष्ठितमभिघार्य परिधानप्र-

भृत्याग्निमुखात्कृत्वा मेक्षणेनोपघातं पक्वाज्जुहोति अग्नये स्वाहा सोमाय स्वाहा अग्नयेऽन्नवते स्वाहा अग्नयेऽन्नादाय स्वाहा अग्नयेऽन्नपतये स्वाहा अग्नये पवमानाय स्वाहा अग्नये पावकाय स्वाहा अग्नये शुचये स्वाहा अग्नये ज्योतिष्मते स्वाहा अग्नये व्रतपयते स्वाहा अग्नये पथिकृते स्वाहा अग्नये तन्तुमते स्वाहा अग्नये वैश्वानराय स्वाहा सूर्याय स्वाहा प्रजापतये स्वाहा ब्रह्मणे स्वाहा भूस्स्वाहा भुवस्स्वाहा सुवस्स्वाहा भूर्भुवस्सुवस्स्वाहा । अग्नये स्विष्टकृते स्वाहा इत्युत्तरार्धपूर्वार्धे २ तूष्णीं मेक्षणमभ्याधाय जयप्रभृति सिद्धमाधेनुवरप्रदानात् ३ अथास्तमित आदित्ये व्रीहिभिर्यवैर्वा हस्तेनैते आहुती जुहोति अग्नये स्वाहा प्रजापतये स्वाहा इति सायं सूर्याय स्वाहा प्रजापतये स्वाहा इति प्रातरप्यग्निहोत्रहविषामन्यतमेन जुहुयात् ४ पर्वणि पर्वणि चाग्नेयस्थालीपाकेन यजेत ५ उपवास एव कालान्तरे भोजनमतृप्तिश्चान्नस्य च ६ एवमेव सायंहोमेन प्रतिपद्यते सन्तिष्ठत औपासनतन्त्रम् ७

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने अष्टमोऽध्यायः

## अथ चतुर्थप्रश्ने नवमोऽध्यायः

कथमु खल्वनाहिताग्नेर्दर्शपूर्णमासौ भवत इति १ पौर्णमास्याममावास्यायामिध्माबर्हिस्सन्नह्योपवसथस्य रूपं कृत्वोपवसति २ अथ श्वोभूतेऽग्निमुपसमाधाय सम्परिस्तीर्य दक्षिणतो ब्राह्मणमुपवेशयति ३ उत्तरत उदपात्रमिति निधाय जघनेनाग्निं कृष्णाजिने व्रीहीन्निर्वपति ४ अथ तिरःपवित्रं स्थाल्यामपः पयो वानीयाधिश्रृत्य पर्यग्नि कृत्वा स्रुक्स्रुवं मेक्षणमिति सम्मृज्याथैतं चरुं श्रपयित्वाऽभिघार्योदञ्चमुद्वास्य प्रतिष्ठितमभिघारयति ५ परिधानप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति अग्निर्मूर्धा भुवः इति द्वाभ्याम् ६ चतुरवत्तं पुरस्तादुपस्तरणं पूर्वार्धादपरार्धादवदानमभिघारणं मध्यात्पूर्वार्धादपरार्धादवदानं पञ्चावत्तिनामभिघारणं प्रत्यञ्जनम् ७ अथ पुरस्तात्स्विष्टकृतः ८ पौर्णमास्यां ॠषभं वाजिनं वयम् इति । अमावास्यायां अमावास्या सुभगा इत्याज्याहुती हव्यवाहं स्विष्टम् इति स्विष्टकृतं हुत्वा मेक्षणमभ्याधाय संस्रावेणाभिहुत्वा स्रुचाऽद्भिरन्तःपरिधि निनयति वैश्वानरे हविरिदं जुहोमि इति ९ स्रुचं प्रक्षाल्य निष्टप्याद्भिः पूरयित्वा बहिःपरिधि निनयति इमं समुद्रं शतधारम् इति । जयप्रभृति सिद्धमाधेनुवरप्रदानात् १० अथ पक्वादुपादाय प्राश्नाति आयुरसि इति ११ प्राश्याप आचम्य जठरमभिमृशति यत इन्द्रभ-

यामहे स्वस्तिदा विशस्पतिः इति द्वाभ्याम् १२ प्रथमे स्थालीपाक आज्यं संस्कृत्य कूश्माण्डैर्जुहुयात् कर्मादिवेतैर्जुहुयात् पूतो देवलोकान् समश्नुते इति ब्राह्मणम् १३

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने नवमोऽध्यायः

अथ तृतीयप्रश्ने अष्टादशोऽध्यायः

अथ गृहस्थस्तु द्वे भार्ये विन्देत कथं तत्र कुर्यादिति १ यस्मिन् काले विन्देतोभावाग्नी परिचरेत् २ अपराग्निमुपसमाधाय सम्परिस्तीर्याज्यं विला- प्योत्पूय स्रुक्स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वाऽन्वारब्धायां यजमानो जुहोति नमस्त ऋषे गद । अव्यथायै त्वा स्वधायै त्वा । मा न इन्द्राभितस्त्वदृष्वारिष्टासः । एवाब्रह्मन् तवेदस्तु स्वाहा इति ३ अथ समा- रोपयति अयं ते योनिर्ऋत्वियः इति ४ अथ पूर्वाग्निमुपसमाधाय आजुह्वानः उद्बुध्यस्वाग्ने इति समिधमाधाय सम्परिस्तीर्य आज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य सम्मृज्य गृहीतं गृहीत्वा द्वयोर्भार्ययोरन्वारब्धयोर्यजमानो जुहोति यो ब्रह्मा ब्रह्मणः इत्यान्तेन सूक्तेनैकैकं चतुर्गृहीतं गृहीत्वा जुहोति ५ प्रसिद्धम- ग्निमुखात्कृत्वा पक्वाज्जुहोति समितं संकल्पेथाम् इति पुरोनुवाक्यामनूच्य अग्ने पुरीष्य इति याज्यया जुहोति ६ अथाज्याहुतीरुपजुहोति पुरीष्यस्त्वमग्ने इत्या- न्तादनुवाकस्य । स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ७ अथाग्रेणाग्निं दर्भस्तम्बेषु हुतशेषं निदधाति ब्रह्मजज्ञानं पिता विराजां इति द्वाभ्याम् ८ प्रसिद्धमौपासने पार्वणानि कुर्यात्सन्तिष्ठत औपासनतन्त्रः ९

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने दशमोऽध्यायः

अथ चतुर्थप्रश्ने एकादशोऽध्यायः

अथ वै भवति जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः इति प्रजातन्तु मा व्यवच्छेत्सीः इत्येतस्माद्ब्रा- ह्मणादाहिताग्नेर्दशवर्षाणामूर्ध्वं यदि प्रजा नोत्पद्येत कथं तत्र कुर्यादिति १ पुनरेव कुमारीं संस्कृत्य दशमेऽहन्येकादशाहे द्वादशाहे वाऽरण्योरग्नीन् समारोप्योदवसाय मथित्वाऽग्नीत् विहृत्योद्वासन्येष्येद्वा २ तदानीमेवा- रण्योरग्नीन् समारोप्यौपासने ब्रह्मौदनं श्रपयित्वोपवसथहविःप्रभृति सिद्धम- ग्न्याधेयं कुर्वन्ति ३ तस्मिन् संस्थिते पवित्रेष्ट्या यजेत ४ तस्यां संस्थितायां

तन्तुमतीं निर्वपेत् ५ तस्यां संस्थितायां त्रैधातवीयां निर्वपेत् ६ अपि वैन्द्राग्नेन पशुना यजेत । पुनराधेयं वा कुर्यात् ७ अथ यद्येको बह्वीर्जायाः प्रयुञ्जान एवमेवैतत्कुर्यात् तस्मादेको बह्वीर्जाया विन्दते इति ब्राह्मणन् ८

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने एकादशोऽध्यायः

अथ चतुर्थप्रश्ने द्वादशोऽध्यायः

अथ यद्यग्निविमोकमीप्सेताग्निमुपसमाधाय संपरिस्तीर्याज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा द्वयोर्भार्ययोरन्वारब्ध योर्यजमानो जुहोति इमं स्तनमूर्जस्वन्तं धयापां प्रप्यातमग्ने सरिरस्य मध्ये । उत्संजुषस्व मधुमन्तमूर्व संमुद्रियं सदनमाविशस्व स्वाहा इत्यग्निविमोकं हुत्वा तमनलं विभजेत् १ पुनस्संयोगो न भवति विभक्तं न हि संसृजेत् इति स्मरणात् २ पूर्वस्मिन्नग्नौ यदि विवहेत् स हि साधारणो भवति न तत्र विभाग एकत्वादग्नेरित्याह भगवान् बोधायनः ३

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने द्वादशोऽध्यायः

अथ चतुर्थप्रश्ने त्रयोदशोऽध्यायः

अथ लौकिकोपासनग्रहणधारणोपावरोहणविधिं व्याख्यास्यामः त्रिविधं समारोपणमात्मन्यरण्योस्समिधीति १ समिधि समारोपयति पालाशीमाश्वत्थीं खादिरीमौदुम्बरीं शमीमयीं वा समिधमादाय समारोपयति अयं ते योनि-र्ऋत्वियः इति २ अरण्योर्वा समारोप्य मथित्वा जुहुयात् ३ अपि वात्मनि समारोपणं भवति या ते अग्ने यज्ञिया तनूः इति ४ अथैनमुपावरोहयति उपावरोह जातवेदः इति ५ यत्र गच्छेत्तत्र नो हरेत्तत्र प्राप्य लौकिकमग्निमाहृत्य न्युप्योपसमाधाय तां समिधमादधाति यस्यात्मनि समारूढो भवति आजुह्वानः उद्बुध्यस्वाग्ने इति द्वाभ्याम् ६ अथाग्निं परिचरति व्रीहिभिर्यवैर्वा ७ यवैर्ग्राम-कामस्य तण्डुलैरोजस्कामस्य पयसा पशुकामस्य दध्नेन्द्रियकामस्याज्येन तेजस्कामस्य ८ अथातिपन्नाः प्रतिजुहोति ९ प्रसिद्धमग्निपरिचरणम् १० प्रसिद्धं दर्शपूर्णमासाभ्यां यजनम् ११ प्रसिद्धः पञ्चानां महायज्ञानामनुप्रयोगः १२ एतदेव विधानमहरहरध्वनि वर्तते १३ लौकिको व्याख्यातः १४

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने त्रयोदशोऽध्यायः

## अथ चतुर्थप्रश्ने चतुर्दशोऽध्यायः

अथ गृहस्थस्यौपासनं विच्छिद्येत प्राणेषूत्क्रान्तेषूभयोः श्रोत्रिययोर्वचनादुद्धरेत् । श्रोत्रियागाराद्वाहृत्य व्याहृतीभिर्नियुप्योपसमाधाय पर्युक्ष्य परिस्तीर्याज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य संमृत्य स्रुचि चतुर्गृहीतं गृहीत्वाऽन्वारब्धो यजमानो जुहोति सप्त ते अग्ने सप्तव्याहृतिभिश्च पूर्वं देवा अपरेण प्राणापानौ इति द्वाभ्यां मा त्वा वृक्षौ सम्बाधिष्टाम् मा त्वा वृक्षौ सम्बाधेथाम् इति द्वाभ्याम् अग्नेऽभ्यावर्तिन् अग्ने अङ्गिरः इति द्वाभ्यामेकैकं प्रति चतुर्गृहीतं गृहीत्वा जुहोति १ न च ब्रह्मा न च प्रणीता न चरुर्न च स्विष्टकृतम् २ अत ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्यते ३

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने चतुर्दशोऽध्यायः

## अथ चतुर्थप्रश्ने पञ्चदशोऽध्यायः

अथ यद्याहिताग्निर्द्वे भार्ये विन्देत प्राक्संयोगान्म्रियेत कथं तर्हि कुर्यादिति १ औपासनं संपरिस्तीर्याज्यं बिलाप्योत्पूय स्रुक्स्रुवं निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्यग्नौ परिश्रिते पूर्णाहुतिं जुहोति समितं सङ्कल्पेथाम् इति मिन्दाहुती व्याहृतीभिश्च हुत्वा तमग्निं अयं ते योनिः इति समिधि समारोप्य गार्हपत्ये समिधमादधाति भवतं नस्समनसौ इति । गार्हपत्य आज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा गार्हपत्ये जुहोति अग्नावग्निश्चरति प्रविष्टः इति २ अपरं चतुर्गृहीतं गृहीत्वा गार्हपत्य एव जुहोति चित्तिस्स्रुक् इति ३ अथ गार्हपत्ये स्रुवाहुतीर्जुहोति ब्राह्मण एकहोता इति दशभिः ४ अथ प्राचीनावीतं कृत्वाऽन्वाहार्यपचने जुहोति ये समानाः ये सजाताः इति द्वाभ्याम् ५ अथान्वाहार्यपचन एव स्रुवाहुतीर्जुहोति अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमस्स्वाहा इति ६ अथ यज्ञोपवीतं कृत्वा द्वादशगृहीतेन स्रुचं पूरयित्वा पुरुषसूक्तेन मनसाऽनुद्रत्याहवनीये जुहोति ७ अथ स्रुवाहुतीर्जुहोति अग्नये विविचये स्वाहा अग्नये व्रतपतये स्वाहा अग्नये पवमानाय स्वाहा अग्नये पावकाय स्वाहा अग्नये शुचये स्वाहा अग्नये पथिकृते स्वाहा अग्नये तन्तुमते स्वाहा अग्नये वैश्वानराय स्वाहा इति ८ अथ स्रुचि चतुर्गृहीतं गृहीत्वा मनस्वतीं जुहोति मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञं समिमं दधातु । या इष्टा उषसो निम्रचश्च तास्संदधामि हविषा घृतेन स्वाहा इति ९ अत ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्यते १०

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने पञ्चदशोऽध्यायः

अथ चतुर्थप्रश्ने षोडशोऽध्यायः

अथातः कपिलसंन्यासविधिं व्याख्यास्यामः अनग्निकस्तु मुण्डी शिखी वाऽहोरात्रोपोषितः स्नात्वाऽप आचम्याप एव पाणिनाऽप्स्वाहुती जुहोति आपो वै सर्वा देवतास्स्वाहा इति १ पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च सर्वभूतेभ्यश्च व्युत्थितोऽहं स्वाहा इति २ संन्यस्तं मया संन्यस्तं मया संन्यस्तं मया इति त्रिरुपांशूक्त्वा त्रिरुच्चैः त्रिषत्या हि देवाः इति विज्ञायते ३ अभयं सर्वभूतेभ्यो मत्तस्स्वाहा इति दण्डात् गृहीत्वा जलपवित्रं पवित्रम् इति समादाय पुत्रमित्रसुहृद्बन्धुज्ञातिसन्निधौ त्यक्त्वाऽथ ग्रामादाहृत्यैकपात्रमुदके-नाप्लाव्य सकृदल्पेन भुञ्जीत ४ न केन चित्सह सम्भाषेत ५ न किञ्चन याचेत ६ पर्वतगुहानदीपुळिनशून्यागारे देवतायतने बिलदर्योर्निवसेत् ७ स्वयं पतितं प्रक्षाळ्य जीवितमुक्तम् ८ जीर्णमानीयाहतानि दृढान्यजिनानि यदर्थं बिभृयात् ९ सूर्योदयहीनयाचितेन कार्यं कुर्वीत १० व्रतं स्नानसमर्थो न लभेत् ११ अथ प्रक्षाळ्य जलार्द्रेण कर्पटेन सशि स्कजलाकर्षणं कृत्वाऽन्तर्वासाः परितस्सन्ध्यामुपासीत १२ नित्यं मध्याह्ने प्रातस्स्नायीतेत्याह भगवान् बोधायनः १३

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने षोडशोऽध्यायः

अथ चतुर्थप्रश्ने सप्तदशोऽध्यायः

अथातस्संप्रवक्ष्यामि संस्कारविधिमुत्तमन्
समाहितानां युक्तानां यतीनां च महात्मनाम् १

शुचौ देशे तु सावित्र्या देह प्रक्षाळ्य यत्नतः
अलङ्कृत्य च गायत्र्या गन्धैर्माल्यैः पृथक्पृथक् २

वहन्ति ब्राह्मणा ये वै शुचयस्सर्व एव ते
तेषां तु वहतां सम्यक्सद्यश्शौचं विधीयते ३

प्रक्षाळनादि तत्कर्म ये कुर्वन्ति महीयसाम्

तेषामपि तथा सद्यश्शौचमेव विधीयते ४

पुत्रो वा सन्निकृष्टो वा शुचौ देशे निधाय तम्
उपावरोहमन्त्रेण तस्याग्नीनवरोप्य तु ५

तूष्णीं संमार्जनं कृत्वा व्याहृतीभिश्च सप्तभिः
प्रोक्ष्य काष्ठं च तद्देहं निधाय तु समन्त्रकम् ६

विष्णो हव्यं रक्षस्वेति मुखे जलपवित्रकम्
पवित्रं तेति मन्त्रेण निदधाति तथा पुनः ७

त्रिदण्डं दक्षिणे हस्ते वैष्णव्यर्चा निधाय च
उदरे च तथा पात्रं सावित्र्या निदधाति वै ८

यदस्य पारे रजसस्सव्ये शिक्यं निधाय च
गुह्ये कमण्डलुं चैव भूमिर्भूमिमगादिति ९

पितृमेधप्रयोगेण दहेदग्निभिरेव हि
संस्कर्तुश्च तथा तस्य नाशौचं नोदकक्रिया १०

एकोद्दिष्टं न कुर्वीत संन्यस्तानां कदाचन
अहन्येकादशे प्राप्ते पार्वणं तु विधियते ११

द्वादश्यामह्नि वा पुण्ये नारायणबलिर्भवेत्
सर्वं नारायणोद्देशमेकोद्दिष्टवदाचरेत् १२

अनाहिताग्निनां चैव संन्यस्तानां महात्मनाम्
अपि होतृविधानेन गायत्र्या प्रणवेन वा १३

अप्राकृतानां महतां ब्रह्मनिष्ठमनस्विनाम्
तेषां तु स्वननं कार्यमिति प्राहुर्मनीषिणः १४

तिसृभिर्व्याहृतीभिस्तु खात्वा दराडप्रमाणतः
त्रिदराडादीन् यथास्थानममन्त्रैस्स्थापयेद्बुधः १५

प्रच्छादयेदसंस्पृष्टं सृगालश्वापदादिभिः
श्वादयो यदि खादन्ति महान् दोषो भविष्यति १६

तस्माद्भूमिं भृशं खात्वा सम्यक्प्रच्छादयेद्यतीन्
सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च १७

न तस्य दहनं कुर्यान्नाशौचं नोदकक्रिया
निषेकाद्याश्श्मशानान्तास्सत्क्रिया ब्राह्मणाश्रिताः १८

तस्माद्यत्नेन संस्कारः कर्तव्यो गृहमेधिभिः
ये वहन्ति महात्मानं स्पृष्ट्वा दृष्ट्वा द्विजातयः १९

हयमेधफलं तेषामस्तीत्येवं विदर्बुधाः २०

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने सप्तदशोऽध्यायः

अथ चतुर्थप्रश्ने अष्टादशोऽध्यायः

अथातोऽङ्कुरार्पणविधिं व्याख्यास्यामः ब्राह्मणानन्नेन परिविष्य पुरायाहं स्वस्ति ऋद्धिम् इति वाचयित्वा शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्तरिड-लमुपलिप्याक्षतान् सम्प्रकीर्याद्भिरभ्युक्ष्य पञ्च पालिकास्सौवर्णा राजतास्ताम्रा मृरमयीर्वा यथासम्भवं गृह्णाति १

मध्ये चतुर्मुखं विन्द्यात् पूर्वे वज्रिणमेव च
दक्षिणे तु यम विन्द्यात् पश्चिमे वरुणं तथा
उत्तरे शशिनं विन्द्यात्पालिकास्थापनं क्रमात् २

वल्मीकमृत्तिकां हृत्वा गोमयं च तथैव च
एतानि प्रक्षिपेत्तासु पालिकासु यथाक्रमम् ३

दूर्वामश्वत्थपत्रं च शिरीषं बिल्वपत्रकम्
तासां मूलेषु बध्नीयाच्छ्वेतसूत्रेण वेष्टयेत् ४

मध्यमायां व्याहृतीभिर्ब्रह्माणमावाहयति ओं भूः ब्रह्माणमावाहयाम्यों भुवः प्रजापतिमावाहयाम्यों सुवः चतुर्मुखमावाहयाम्यों भूर्भुवस्सुवः हिरण्यगर्भ-मावाहयामि इति । एताभिरेव प्राच्याम् इन्द्रं वज्रिणं शचीपतिं शतक्रतुम् इति । एताभिरेव दक्षिणस्याम् यमं वैवस्वतं पितृपतिं धर्मराजम् इति । एताभिरेव प्रतीच्याम् प्रचेतसं सुरूपिणमपांपतिम् इति । एताभिरेवोदीच्याम् शशिनं निशाकरं चन्द्रं सोमम् इति ५ अथैतान् स्नापयति आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाश्शुचयः पावकाः इति चतसृभिः पवमान-स्सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वाऽथैनान् गन्धपुष्पधूपदीपैरभ्यर्चयति अमुष्मै नमोऽमुष्मै नमः इति ६ अथैनानुपतिष्ठते

दिशां पतीन् नमस्यामि सर्वकामफलप्रदान्
कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम् इति ७

व्रीहियवमाषतिलमुद्गसर्षपान् मिश्रीकृत्य क्षीरेण प्रक्षाल्यौषधिसूक्तेन या जाताः इत्यनुवाकेनाभिमन्त्र्य यथाक्रमं निवपति ब्रह्म जज्ञानं पिता विराजाम् इति द्वाभ्यां मध्यमायां यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः इति द्वाभ्यां प्राच्यां योऽस्य कौष्ठ्य यमं गाय इति द्वाभ्यां दक्षिणस्यां इमं मे वरुण तत्त्वा यामि इति द्वाभ्यां प्रतीच्यां सोमो धेनुम् आप्यायस्व इति द्वाभ्यामुत्तरस्याम् ८ यथाक्रमं शुद्धाभिस्सिकताभिः प्रच्छादयेत् ९ पञ्चगव्येन यथाक्रमं सेचयेत् १० प्रणवेनैव सापिधानं कृत्वा यावत्कर्म तावत् सुरक्षितं गोपायेत् १२ समाप्ते कर्मणि ब्राह्मणान् पञ्च भोजयेत् १२ व्याहृतीभिः देवता यथाक्रममुद्वासयेत् १३

आसप्तमात्प्रजाकाम आषष्ठात्पुत्रनाशनम्
पञ्चमे भक्तिकामानां विष्णोस्सर्वात्मनस्तथा १४

चतुर्थे चाङ्कुरं विद्यात्पापीयान् जायते तु सः

त्रियहे सर्वकामानां सद्यो वाऽप्यङ्कुरार्पणम् १५

इत्याह भगवान् बोधायनः १६

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने अष्टादशोऽध्यायः

अथ चतुर्थप्रश्ने एकोनविंशोऽध्यायः

अथातो नान्दीमुखं व्याख्यास्यामः आदित एव द्वौ विप्रौ निमन्त्र्य चतुरवरांश्च पित्रर्थानथ श्मश्रुकर्माभ्यञ्जनस्नानैर्यथोपपादं संपूज्याग्निमुपसमाधाय संपरिस्तीर्याज्यं विलाप्योत्पूय दध्ना घृतेन संयुत्य स्रुवं संमृज्य देवार्थौ विप्रावुपवेश्यालङ्कृत्यानुदेश्य द्विःपवित्र एव यवोदकं निधाय पुष्पफलाक्षतमिश्रं भोजनस्थानेष्वासनेषु यवान् सिकताश्च सम्प्रकीर्य पित्रर्थानुपवेश्य तेषां सपवित्रेषु पाणिषु नान्दीमुखाः पितरः प्रीयन्ताम् इत्यनेन मन्त्रेण पात्रान्तरेणोपहत्य यवोदकं दत्वा द्विरथालङ्कृत्यैवमेव दत्वाऽग्नौकरणमनुज्ञाप्यालङ्कृत्य पृषदाज्यात् स्रुवेणोपहत्य नान्दीमुखेभ्यः पितृभ्यस्स्वाहा इत्येतावदग्नौ कृत्वाऽन्नमुपस्तीर्णाभिघारितं पात्रेषूद्धृत्य पृषदाज्येन संसृज्य दर्भेषु सादयित्वा दर्भैः प्रतिच्छाद्य नान्दीमुखार्थानां पितॄणां क्षेष्ठा अमुत्रामुष्मिन् लोके इति मन्त्रमूह्याभिमृश्य विप्रेभ्यो द्विरुपस्तीर्याभिमृष्टस्यान्नस्य द्विरवदाय द्विरभिघार्य यथावद्भोजयेत् १ पितृसामान्यवाचिस्वधायुक्तानि ब्रह्माण्यभिश्राव्य भुक्तवत्स्वाचान्तेषूपलिप्याशयेषु दध्योदनं संप्रकीर्य संक्षाळनेन प्रदक्षिणं द्विःपरिषिच्य पूर्ववद्यबोदकं दत्वा दक्षिणां प्रदाय नान्दीमुखाः पितरः प्रीयन्ताम् इति वाचयित्वाऽभिवाद्य स्वधायै स्थाने सर्वैस्समानं दक्षिणं जानुं निपात्य सव्यमुद्धृत्य जपति इडा देवहूः इत्यान्तादनुवाकस्य जपित्वा नान्दीमुखाः पितरः प्रीयन्ताम् इत्यपो निनीय ब्राह्मणानुत्थाप्य प्रसाद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्य देवतां च विसृज्य दक्षिणेनाग्निं प्रागग्रेषु दर्भेषु नान्दीमुखेभ्यः पितृभ्यो दद्यात् नान्दीमुखेभ्यः पितृभ्यस्स्वाहा इति संक्षाळनेन प्रदक्षिणं परिषिच्य ऊर्जं वहन्तीः इति भाविजयाद्यर्थेन कालहोमान् पृषदाज्येन पूर्ववद्धोमं केचिदिच्छन्तीत्युक्तमेतन्नान्दीमुखम् २

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने एकोनविंशोऽध्यायः

## अथ चतुर्थप्रश्ने विंशोऽध्यायः

अथातो ग्रामस्योत्पातशान्तिं व्याख्यास्यामः अग्निदाहे व्याघ्रादिभिरभिभूते सृगालपीडने ग्रामादन्तश्चण्डालाध्यवसिते ग्रामस्य स्थूणावरोहणे मधुन उपवेशने वल्मीकपुष्करोत्पन्ने देवगात्रस्वेदकम्पने ज्वराभिभूते बहुब्राह्मणमरणे ग्राममध्ये श्मशाने वा दस्युभिश्चापि पीडिते रात्रौ तटाकसेतुभङ्गे जले विवर्णे वा स्वन्तस्थेऽशनिपाते चिरकालशून्यग्रामप्रवेशे तेष्वन्येषु चोत्पातेषु शान्तिं कुर्यात् १ शुभवारे शुभनक्षत्रे शुभलग्ने विष्णोस्स्नापनार्थं महादेवाभिषेकार्थं द्वौ द्वौ ब्राह्मणौ कल्पयित्वा नवग्रहशान्त्यर्थं चतुरो ब्राह्मणांस्तयैव सङ्ख्यया ग्रामशान्तिहोमार्थं कल्पयित्वाऽथ ग्रामशान्तिहोमे ग्रामस्योत्तरपूर्वदेशे देवागारे चतुष्पथे वा शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य तिलसर्षपलाजैर्गन्धपुष्पाक्षतैरवकीर्य स्थण्डिलं कल्पयित्वा कुम्भस्थापनं कृत्वाऽग्निमुपसमाधाय संपरिस्तीर्याप्रणीताभ्यः कृत्वोपोत्थायाग्रेणाग्निं देवताश्चाबाहयति व्याहृतीभिः यज्ञपुरुषमावाहयामि देवस्य दक्षिणतो ब्रह्मणमावाहयामि उत्तरतः त्रियम्बकमावाहयामि देवस्याग्ने वास्तुपुरुषमावाहयामि इन्द्रादिदेवताश्चावाहयामि इत्यावाह्य पुरुषसूक्तेन विष्णुमभ्यर्च्य ब्रह्मसूक्तेन चतुर्मुखं रुद्रसूक्तेन त्रियम्बकं चाभ्यर्च्यान्येषां देवानमावाहनादिक्रमेण स्वैस्स्वैर्नामभिरभ्यर्च्यापरेणाग्निं प्राङ्मुख उपविश्याग्निमुखात्कृत्वा पक्वाज्जुहोति वास्तोष्पते प्रति जानीह्यस्मान् इति पुरोनुवाक्यामनूच्य वास्तोष्पते शग्मया संसदा ते इति याज्यया जुहोति २ तेनैव मन्त्रेन शमीमयीं समिधमष्टोत्तरसहस्रं जुहुयात् । वास्तोष्पते प्रतरणो न एधि इत्यष्टोत्तरसहस्रमन्नाहुतीर्जुहुयात् ३ अमविहा वास्तोष्पते इत्यष्टोत्तरसहस्रमाज्याहुतीर्जुहुयात् ४ मृगारेष्टिवत् अंहोमुचे इत्यभिज्ञैः प्रत्यृचमाज्याहुतीर्हुत्वा या वामिन्द्रावरुणा इति द्वादशाहुतीर्हुत्वा पवमानस्सुवर्जनः इत्येतेनानुवाकेन प्रत्यृचमाज्याहुतीर्हुत्वा पुरुषसूक्तेन ब्रह्मसूक्तेन रुद्रसूक्तेन च प्रत्यृचमाज्याहुतीर्हुत्वा यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः इति द्वाभ्यां अग्निरायुष्मान् इति पञ्चभिः अग्ने नय सुपथा इति षड्भिः योऽस्य कौष्ठ्य इति एष ते निर्ऋते भागः इति इमं मे वरुण तत्त्वा यामि इति द्वाभ्यां समुद्राय त्वा वाताय स्वाहा इति त्रयोदशाहुतीः आप्यायस्व सं ते पयांसि इति द्वाभ्यां ईशानस्सर्वविद्यानाम् इति त्रियम्बकं यजामहे इति प्रत्येकमाज्याहुतीर्हुत्वा आसत्येन इत्यादि केतुं कृण्वन्नकेतवे इत्यन्तं नवग्रहमन्त्रेणाज्याहुतीर्हुत्वा स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ५

अथाग्रेणाग्निं शमीपत्रेषु हुतशेषं निदधाति यो रुद्रो अग्नौ इति ६ अथ देवताभ्यो हविर्निवेदयेत् ७ अथोपतिष्ठते हेतयो नाम स्थ इति ८ यथाक्रमं दिश उपस्थाय पुण्याहं वाचयित्वा उदकुम्भं चान्वारभ्य पञ्चशान्तिं च जपित्वा हुतशेषमाज्यशेषं च पूर्णकुम्भे निक्षिप्य उदुम्बरशाखया शमीशाखया दर्भ-मुष्टिना वा शिवं शिवं शं नो देवीरभिष्टये इति च शाकुनेन सूक्तेन ग्रामं त्रिः प्रदक्षिणं परिषिच्य ब्राह्मणेभ्यो भूरिदक्षिणां दत्वैवं सप्ताहं द्वादशाहं वा कुर्या-त्समस्तोत्पातशान्तिरित्याह भगवान् बोधायनः ९

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने विंशोऽध्यायः

अथ चतुर्थप्रश्ने एकविंशोऽध्यायः

अथाशनिपाते भूमिं जानुदघ्नमुद्धृत्य अद्भिः प्रोक्ष्य--पत्रावकां च संस्थाप्य ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिम् इति वाचयित्वा खननात्पश्चात् स्थण्डिलं कृत्वा परिधानप्रभृत्यग्निमुखपर्यन्तं कृत्वा शं न इन्द्राग्नी इति त्रिभि-र्मन्त्रैराज्याहुतीर्हुत्वा स प्रत्नथा सहसा जायमानः इति सूक्तेन चरुणा जुहोति १ स्वस्ति नो मिमीताम् इति प्रतिपद्य स्वस्ति नो बृहस्पतिर्दधातु इति स्वस्त्यात्रेयं जपित्वा ब्राह्मणान् सम्पूज्याशिषो वाचयित्वाचार्याय दक्षिणां ददाति २ चरुं विद्यावन्तं ब्राह्मणं भोजयेत् ३ दग्धभूमिसमं ब्राह्मणाय दद्यात् जीवनागन्धमियदिति स्वर्णं ददातीत्याह भगवान् बोधायनः ४

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने एकविंशोऽध्यायः

अथाशनिपाते । अथातो ग्रामस्योत्पातशान्तिम् । अथातो नान्दीमुखम् । अथातोऽङ्कुरार्पणविधिम् । अथातस्संप्रवक्ष्यामि । अथातः कपिलसंन्या-सविधिम् । अथ यद्याहिताग्निः । अथ गृहस्थस्यौपासनम् । अथ लौकि-कौपासनग्रहणधारणोपावरोहणविधिम् । अथ यद्यग्निविमोकम् । अथ वै भवति जायमानः । अथ गृहस्थस्तु । कथमु खल्वनाहिताग्नेः । अथ वै भवत्यापः । अथात आचमनविधिम् । अथातश्शौचविधिम् । अथातः काम्यविधिम् । अथ प्रहुतानुकृतिर्धर्मोपभोगविधिम् । अथातो मृतबलिम् । आहुतानुकृतिर्बलिहरणानुकृतिर्धूर्तबलिः । अथातो मिथ्यासत्यबलिम् २१ अथातो मिथ्यासत्यबलिम् । आहुतानुकृतिर्बलिहरणानुकृतिर्धूर्तबलिः । अथातो मृतबलिम् । अथ प्रहुतानुकृतिर्धर्मोपभोगविधिम् । अथातः

काम्यविधिम् । अथातश्शौचविधिम् । अथात आचमनविधिम् । अथ वै भवत्यापः । कथमु खल्वनाहिताग्नेः । अथ गृहस्थस्तु । अथ वै भवति जायमानः । अथ यद्यग्निविमोकम् । अथ लौकिकौपासनग्रहणधारणोपा- वरोहणविधिम् । अथ गृहस्थस्यौपासनम् । अथ यद्याहिताग्निः । अथातः कपिलसंन्यासविधिम् । अथातस्संप्रवक्ष्यामि । अथातोऽङ्कुरार्पणविधिम् । अथातो नान्दीमुखम् । अथातो ग्रामस्योत्पातशान्तिम् । अथाशनिपाते २२

इति बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्नः समाप्तः

अथ पञ्चमप्रश्ने प्रथमोऽध्यायः

अथाग्निमुखप्रयोगः १ शुचौ समे देशे गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य तत्र प्राङ्मुखस्स्नानादिपञ्चकं कृत्वोपविश्य स्फ्येनोद्धत्यावोक्ष्य पञ्चप्रस्थ- सिकताभिस्स्थण्डिलकरणं व्याहृतीभिर्नियुप्यारत्निमात्रं समचतुरश्रं कृत्वा तस्मिन् प्रादेशमात्रं चतुरश्रं दर्भैः त्रिःप्राचीनमुल्लिखेदङ्गुष्ठानामिकाभ्यां कनि- ष्ठिकया वा ब्रह्म जज्ञानम् इति मध्ये । दक्षिणे नाके सुपर्णम् उत्तरे आप्यायस्व इति त्रिरुदीचीनम् । मध्ये यो रुद्रः इत्यप उपस्पृश्य पश्चिमे इदं विष्णुः प्राच्यां इन्द्रं विश्वा अवीवृधन् इति दर्भं निरस्याप उपस्पृश्याग्नेरासनं कल्पयित्वा यथोक्तमग्निं पत्न्याहृतमङ्गाररूपं व्याहृतीभिर्नियुप्य तत्पात्रेऽक्षतजलं निनयेत् २ अथ प्रोक्षितस्थूलकाष्ठत्रयेण तूष्णीमन्वाधायोपतिष्ठतेऽग्निम् जुष्टो दमूनाः इति ३ अथासनं कल्पयित्वा तृणं निरस्याप उपस्पृश्यात्र वा पूर्वे दक्षिणतः पश्चादुत्तरतोऽथैनं प्रदक्षिणमग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्य दक्षिणानुत्तरा- नुत्तरानधरान् ४ पात्रोत्तरासनं ब्रह्मदक्षिणासनं प्रणीतोत्तरासनं पश्चादात्मासन सर्वं कल्पयित्वा पात्राणि सादयेदाज्यस्थालीं स्रुवं च जुहूं प्रणीतां च चरुस्थालीं प्रोक्षणीं चेध्माबर्हिश्चेध्मप्रव्रश्चनानि मेक्षणं च सादयित्वा दर्भैः प्रतिच्छाद्य शूर्पं कृष्णाजिनं चेत्यत्र दर्वीहोमो विकल्पे ५ अथ बर्हिषः पवित्रे कुरुते प्रादेशमात्रे समे अप्रतिच्छिन्नाग्रे अनखच्छिन्ने तरुणे तूष्णीमद्भिरनुमृज्य कृत्वा प्रोक्षण्यां निधायाप आनीय त्रिरुत्पूयाद्भिः प्रोक्ष्योत्तानानि पात्राणि कृत्वा विस्रस्येध्मं त्रिः प्रोक्ष्य ब्राह्मणमिष्टिवद्दक्षिणत उपवेश्य ओं भूर्भुवस्सुवर्ब्रह्मन् ब्रह्मासि नमस्ते ब्रह्मन् ब्रह्मणे इति ब्राह्मणमुपतिष्ठत आदिशो व्युन्नयनादास्ते ६ यद्वा कूर्चमुपवेश्याभ्यर्च्य प्रणीतायां सपवित्रायां वरुणं पूजयित्वा सह पवित्रेण

नासिकासममुत्थाप्योत्तरतस्सादयन्ति भूर्भुवस्सुवरों वरुणोसि घृतव्रतो वारुणमसि इति तमभ्यर्च्य दर्भैः प्रतिच्छाद्याथ व्रीहीन्निर्वपति अमुष्मै वो जुष्टं निर्वपामि इति वा तूष्णीं वा । एवं त्रिस्सकृत्तूष्णीम् ७ तथा तानभ्युद्त्यावहत्य त्रिष्फलीकृत्य त्रिःप्रक्षाळ्य निदधाति । तण्डुलान्वा निर्वपति । तानभ्युद्त्य त्रिः प्रक्षाळयैवं निदधाति । स्थाल्यामपः पयो वानीयाधिश्रित्य तिरःपवित्रं तण्डुलानावपति ८ अथ पक्वमोदनं पायसं वा याचति ९ तमभ्युद्त्य स्रुवेण प्रणीताजलं निनयति १० अग्नावधिश्रित्याथाज्यस्थाल्यामाज्यं निरूप्योदीचोऽङ्गारान्निरूह्य व्यन्तान् कृत्वा तेष्वधिश्रित्याभिद्योतनेनाभिद्योत्य द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाळ्य प्रत्यस्य पुनरभिद्योत्योभयं त्रिः पर्यग्नि कृत्वा वर्त्म कुर्वन्नुदगुद्वास्य प्रत्यूह्याङ्गारानथैनदुदीचीनाग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय विस्रस्य पवित्र अद्भिस्संस्पृश्याग्नावनुप्रहरति ११ अथ स्रुवं जुहूं मेक्षणं च संमृज्य त्रिरन्तरतस्त्रिर्बाह्यतस्तथा मूलैर्मूलं संमृज्याद्भिस्संस्पृश्य पुनर्निष्टप्य निदधाति क्रमेण १२ अथ दर्भानद्भिस्संस्पृश्याग्नावनुप्रहरति १३ पश्चादग्नेर्बर्हिस्तीर्त्वा तत्राज्यं निदधाति चरुमभिचार्योदञ्चमुद्वास्य बर्हिष्यासाद्य प्रतिष्ठितमभिघारयति १४ स्थविष्ठो मध्यमो द्राघीयान् दक्षिणतोऽणिष्ठो ह्रसिष्ठ उत्तरत ऊर्ध्वे समिधावादधाति १५ अथाग्निं परिषिञ्चति अदितेऽनुमन्यस्व इति दक्षिणतः प्राचीनम् अनुमतेऽनुमन्यस्व इति पश्चादुदीचीनं सरस्वतेऽनुमन्यस्व इत्युत्तरतः प्राचीनं देव सवितः प्रसुव इति समन्तं प्रदक्षिणम् । समन्तमेव वा तूष्णीं परिषिञ्चति १६ अथाग्निमैन्द्रादिक्रमेणाभ्यर्च्य परिसमिधं शिनष्टि । ब्राह्मणेनानुज्ञातस्स्वाहाकारेणाभ्याधायानूयाजसमिधमिध्मसंनहनं प्रणीतापात्र निधायाघारावाघारयति प्रजापतये स्वाहा इति मनसोत्तरे परिधिसन्धौ संस्पृश्याद्दणया सन्ततम् । इन्द्राय स्वाहा इत्युपांशु दक्षिणे परिधिसन्धौ संस्पृश्याद्दणया सन्ततम् १७ अथाज्यभागौ जुहोति अग्नये स्वाहा इत्युत्तरार्धपूर्वार्धे १८ प्रतिमुखं प्रबाहुग्जुहोति सोमाय स्वाहा इति दक्षिणार्धपूर्वार्धेऽथाग्निमुखं जुहोति युक्तः चतस्रः आरभ्य व्याहृत्यन्तं हुत्वाऽथ चरुप्रायश्चित्तं हुत्वा चरुमभिघार्याथाव्रत्यप्रायश्चित्तं कृत्वा स्रुवेण जुह्वामुपस्तीर्य मेक्षणेन चरुमालोडच्य पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति प्रत्यनक्ति पुरस्तात् स्रुवाहुतिं हुत्वा यथोक्तं पक्वाज्जुहोत्युपरिष्टात् स्रुवाहुतिं च १९ अथोपस्तीर्योत्तरार्धात् स्विष्टकृत्सकृदवद्यति द्विरभिघारयति न इत्यनक्त्यन्तःपरिधि सह मेक्षणेन सादयित्वा यथोक्तमाज्याहुतीर्जुहोति २० अथ

पुरस्तात्स्रुवाहुतिं स्विष्टकृतमुपरिष्टात् स्रुवाहुतिं च हुत्वाऽप उपस्पृश्य मेक्षणमग्नौ प्रहृत्याथैनत्संस्रावेणाभिजुहोति स्रुक्स्रुवाभ्याम् २१ जुहूसङ्क्षाळनमन्तःपरिधि निनयति २२ निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वा बहिःपरिधि निनयति २३ स्थालीपाकेऽन्तःपरिधि वहिःपरिधि समन्त्रकम् २४ अथानूयाजसभिधमाधायेध्मसंहनमद्भिस्संस्पृश्याग्नावनुप्रहरति २५ अथ जयानभ्यातानान् राष्ट्रभृतोऽमात्यहोमांश्च हुत्वाऽथ चतुर्गृहीतेन स्त्रुवेण वा प्राजापत्यं हुत्वा इध्मप्रव्रश्चनान्यभ्याधाय प्रायश्चित्तानि सौविष्टकृतं च हुत्वा स्त्रुवेण परिधीननक्ति २६ अथ परिस्तरांत्समुल्लिप्याज्यस्थाल्यां प्रस्तरवद्बर्हिरक्त्वा तृणं प्रच्छाद्याग्नावनुप्रहरति २७ अप उपस्पृश्य तृणं च मध्यमं परिधिमनुप्रहरति २८ अथेतरावुपसमस्यत्यूर्ध्वसमिधौ च २९ अथैनान् संस्रावेणाभिजुहोति वसुभ्यः इति ३० अत्र बलिं प्राशनं चान्यत्रोपनयनादन्यानि तत्तदुक्तकर्माणि ३१ अथाग्निं परिषिञ्चति अन्वमँस्थाः प्रासावीः इति ३२ वरुणमुद्वास्य बर्हिषि दिशो व्युन्नीय प्राच्याम् इत्यादिना स्वयं च प्रोक्ष्य ब्रह्मणे वरं दत्वा चरुशेषं सघृतं वा ब्रह्माणं विसृजति ३३ स्थालीपाकनक्षत्रहोमायुष्यहोमादिषु प्राशनमुक्तम् ३४ पञ्चावत्तिनां पञ्चावदानं मध्यात् पूर्वार्धादपरार्धादवद्यति ३५ स्विष्टकृत उत्तरार्धात् द्विरवद्यति ३६ शेषं पूर्ववत् ३७ अथ बहुदेवत्ये द्वितीयमवदानमपरार्धादवदाय पूर्वार्धादवद्यति । सर्वमेवमाऽन्तात् ३८ अथ स्विष्टकृत उपस्तीर्य यावती देवतासङ्ख्या तावदवदानं सकृत्सकृत् । शेषं समानम् ३९ तथा मध्यादपरार्धात्पूर्वार्धादवद्यति ४० स्विष्टकृतो द्विर्द्विरवद्यति । शेषं समानं भवति ४१ सर्वन्यायं ज्ञात्वाचार्यमुखेन कुर्यात् ४२

इति बोधायनीये गृह्यशेषसूत्रे पञ्चमप्रश्ने प्रथमोऽध्यायः

अथ पञ्चमप्रश्ने द्वितीयोऽध्यायः

अथ विवाह्यकन्यारजस्वलाप्रायश्चित्तादिविधिं व्याख्यास्यामः

विवाहे वितते यज्ञे होमकाल उपस्थिते
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः १

यजः पवित्रैस्सावित्र्या प्रोक्षयेत्पूतवारिभिः
अनेन चानुवाकेन पवमानस्सुवादिना २

स्नापयित्वाऽथ विद्वद्भिरन्यवस्त्रादलङ्कृताम्
पूर्णाहुत्यथ मिन्दाभ्यां महाव्याहृतिभिस्सह ३

हुत्वा तन्तुमतीं चैव व्याहृतीभिस्तथैव च
अनाज्ञातं च विद्वद्भिश्शेषं कार्यं समाचरेत् ४

प्रधानहोमे निर्वृत्ते मलवद्वाससी भवेत्
त्रियहे पर्यवेतेऽथ शेषकार्यं समाचरेत् ५

लाजमाज्यं स्रुवं चैव प्रणीताश्मानमेव च
सर्वमभ्यन्तरं कृत्वा ब्रह्मैवैको बहिर्भवेत् ६

दक्षिणां दिशमाश्रित्य यमो मृत्युश्च तिष्ठति
दम्पत्यो रक्षणार्थाय ब्रह्मैवैको बहिर्भवेत् ७

अङ्गुल्यग्रैर्न होतव्यं न कृत्वाऽञ्जलिभेदनम्
दञ्जलेर्वामभागेन लाजहोम इति स्मृतः ८

आद्यं प्रदक्षिणं कुर्याद्ब्रह्मणा सह मानवः
प्रदक्षिणत्रयं पश्चाद्विना तमिति केचन ९

नामादिनान्दीकरणमाशिषं द्विजभोजनम्
रक्षाबन्धनमन्नादि चौळाद्यङ्कुरमेव च १०

गर्भवर्जोत्सवात्पूर्वमयुगेऽह्नयङ्कुरार्पणम्
प्रदोषे वाऽथ सायाह्ने गुणाधिक्यऽह्नि वेष्यते ११

आधानगर्भसंस्कारजातकर्माणि नाम च
हित्वाऽन्यत्र विधातव्यं मङ्गळाङ्कुरवापनम् १२

पुंसि नामान्नचौळोपस्नानपाणिग्रहेषु च

अग्न्याधाने च सोमे च दशस्वभ्युदयं स्मृतम्  १३

आधाने सोमयागे च दम्पत्योरुभयोरपि
सीमन्ते पुंसवे गर्भे स्त्रिया एव तु कौतुकम्  १४
इति बोधायनीये गृह्यशेषसूत्रे पञ्चमप्रश्ने द्वितीयोऽध्यायः

अथ पञ्चमप्रश्ने तृतीयोऽध्यायः

अथ ऋतुशान्तिं व्याख्यास्यामः तिथिवारनक्षत्रयोगकरणलग्नदोषशान्त्यर्थं चतुर्थे वा पञ्चमेऽह्नि वा शान्तिस्नानं प्रकुर्वीत  १  देवालये गृहे वा प्रस्था-ष्टभिर्धान्यैस्तदर्धं तण्डुलैस्तदर्धं तिलैश्चोपर्युपरि चतुरश्रमरत्निमात्रं चतुरश्रं स्थण्डिलं कृत्वा तन्मध्ये नळिनमुल्लिख्य तस्मिन् तन्तुवेष्टितं कुम्भं निधाय तूष्णीं संस्कृताभिरद्भिः प्रोक्ष्य ब्रह्म जज्ञानम् इति कुम्भं निधाय सपवित्रेण आपो वा इदं सर्वम् इत्येतेनानुवाकेन  अब्लिङ्गाभिश्च कुम्भमुदकैः पूरयित्वा गन्धादिभिरलङ्कृत्य कूर्चमन्तर्धाय

गजाश्वरथवल्मीकमृदमाहृत्य गोकुलात्
चतुष्पथाद्राजगृहात्तुलसीबिल्वमूलयोः  २

देवालयात्पर्वताद्वा गृह्णीयात्पञ्च मृत्तिकाः
पालाशोदुम्बराश्वत्थवटप्लक्षकयाज्ञिषु  ३

जम्बूबिल्वकपित्थाम्रशिरीषेषु च पल्लवान्
तेषां त्वचश्च पञ्चैव गृह्णीयात्संभवेषु वै  ४

इत्युक्तरीत्या पञ्च मृत्तिकाः पञ्च पल्लवान् पञ्च त्वचश्च निक्षिप्य नवरत्नमीष-त्काञ्चनं नववस्त्रेणाच्छाद्य चूतपल्लवैर्बिल्वपल्लवैर्वाऽवकीर्य नाळिकेरफ-लेनापिधाय दर्भैर्दूर्वादिना प्रतिच्छाद्यालङ्कृत्य संपरिस्तीर्य पुरुषं पुण्डरीकाक्षं ध्यात्वा कुम्भं संपूज्य श्रोत्रियान् विप्रान् षडष्टौ वा वरणपूर्वकमभ्यर्च्याचार्यं चाभ्यर्चयेत्  ५  त ऋत्विजः कुम्भमन्वारभ्य वैष्णवीं गायत्रीमष्टसहस्रमष्टशतं वा वदन्तो वेदादीन् आपो हिष्ठा मयोभुवः इति तिस्रः हिरण्यवर्णाः पवमानः

इत्यनुवाकौ वरुणसूक्तं श्रीसूक्तं पुरुषसूक्तं पञ्चशान्तिम् ऋचां प्राची इत्येतमनुवाकं च जपेयुः । नमो ब्रह्मण इति परिधानायां त्रिरन्वाह इति ब्राह्मणम् ६ प्रणवेनोत्थाप्य आभिर्गीर्भिः इति जपेयुः ७ अथालङ्कृतामङ्कण उरुविष्टर आसीनां देवस्य त्वा इति त्रिभिः प्रोक्ष्य ऋतं च सत्यं च इति त्रिभिर्मन्त्रैः ऋत्विजः स्नापयेयुः ८ ततो नारीं पञ्चगव्यं प्राशयेत् ९

गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम्
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि

तथा शुक्रमसीत्याज्यं देवस्य त्वा कुशोदकम्
इति पञ्चगव्यम् १०

अथ शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रमुपलिप्य लौकिकमग्निं श्रोत्रियागारादाहृत्य स्वगृह्योक्तविधानेनाऽग्निमुखात् कृत्वा पालाशसमिद्भिरष्टोत्तरशतं विष्णुसूक्तेन जुहुयात् ११ तथा ब्रह्मसूक्तेनान्नं रुद्रसूक्तेनाज्यम् १२ एतानि सूक्तान्यष्टादशकृत्वः प्रत्येकमावर्तयेत्तदानीं अष्टोत्तरशतं संपद्यते १३ अथर्तुनक्षत्रस्य समिदन्नाज्याहुतीः प्रत्येकमष्टाविंशतिकृत्वः तन्मन्त्रेण जुहुयात् १४ मन्त्रौ चतुर्दशकृत्व आवर्तयेत् १५ अथ त्रियम्बकेन तिलहोममष्टोत्तरशतं जुहुयात् १६ अथाज्याहुतीर्घृतसूक्तेनाष्टौ जुहुयात् १७ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् १८ अथ ऋत्विग्भ्यो दक्षिणां ददात्याचार्याय विशेषतः १९ एवं यदि शान्तिं कुर्यात्ततो नारी दोषान्मुच्यते सर्वारिष्टशान्तिरस्त्वित्याह भगवान् बोधायनः २०

इति बोधायनीये गृह्यशेषसूत्रे पञ्चमप्रश्ने तृतीयोऽध्यायः

## अथ पञ्चमप्रश्ने चतुर्थोऽध्यायः

अथातो मृत्तिकास्नानविधिं व्याख्यास्यामः ब्रह्मचारी गृहस्थो वानप्रस्थः परिव्राजको वा अश्वक्रान्ते सहस्रपरमा देवी इति भूमिं दूर्वाभिरभिमन्त्र्य उद्धृताऽसि इति नदीतटे लोष्टमादाय काण्डात्काण्डात्प्ररोहन्ती इति द्वाभ्यां दूर्वामादाय मृत्तिके हन मे पापम् इति दूर्वा लोष्टे प्रतिष्ठाप्य यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः स्वस्ति न इन्द्रो वृद्धश्रवाः त्रातारमिन्द्रम् आपान्तमन्युः

परं मृत्यो अनु परेहि इति षड्भिः प्रतिमन्त्रं प्रदक्षिणं प्रतिदिशं लोष्टमुत्सृज्य गन्धद्वाराम् इति लोष्टमादाय उदुत्यं जातवेदसम् इति लोष्टमादित्यं दर्शयित्वा श्रीर्मे भजत्वलक्ष्मीर्मे नश्यतु इति शिरः प्रदक्षिणीकृत्य सहस्रशीर्षा इति शिर आलिप्य विष्णुमुखाः इति मुखम् ओजो ग्रीवाभिः इति ग्रीवां महाँ इन्द्रो वज्रबाहुः इति बाहू सोमानँ स्वरणम् इति कक्षः शरीरं यज्ञशमलम् इति शरीरं नाभिर्मे चित्तम् इति नामिं आपान्तमन्युः इति कटिम् विष्णो रराटमासि इति पृष्ठम् वरुणस्य स्कम्भनमसि इति मेढ्रम् आनन्दनन्दौ इत्यण्डौ उरुवोरोजः इत्यूरू ऊरू अरत्नी इति जानुनी जङ्घाभ्याम् इति जङ्घयोः चरणं पवित्रम् इति चरणौ इदं विष्णुः त्रीणि पदा इति द्वाभ्यां पादौ सजोषा इन्द्र इति शेषं दूर्वासहितं लोष्टं शिरसि निधाय हिरण्यशृङ्गम् इति तीर्थं गत्वा सुमित्रा न आप ओषधयस्सन्तु इत्यात्मानमभिषिञ्चेत् । उदकाञ्जलिमादाय लोष्टदेशे निनीय दुर्मित्रास्तस्मै भूयासुः इति प्रथमं योऽस्मान् द्वेष्टि इति द्वितीयं यं च वयं द्विष्मः इति तृतीयम् । हिरण्यशृङ्गम् इति चतुर्थं आपो हिष्ठा मयोभुवः इति तिसृभिः हिरण्यवर्णाः इति चतसृभिः पवमानस्सुवर्जनः इत्यनुवाकेन च मार्जयित्वा नमोऽग्नयेऽप्सुमते इति नमस्कृत्य यदपां क्रूरम् इत्यद्भिः त्रिरावृत्य इमं मे गङ्गे इत्यभिमन्त्र्य ऋतं च सत्यं च इत्यघमर्षणसूक्तेनापोऽवगाह्य एष भूतस्य इति मार्जयित्वा आर्द्रं ज्वलति इति पीत्वा अकार्यकारी इति पुनरवगाह्य देवानृषीन् पितॄन् तर्पयित्वा येकेचास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः । ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् । इति वस्त्रं निष्पीड्य शुची वो हव्या इति वस्त्रं प्रोक्ष्य देवस्य त्वा इति वस्त्रमादाय अवधूतम् इत्यवधूय उदुत्यं चित्रम् इति वस्त्रमादित्यं दर्शयित्वा आवहन्ती वितन्वाना इति वासः परिधाय द्विराचम्योत्क्रामन्तु भूतप्रेतपिशाचाद्यास्सर्वे ते भूमिभारकाः । सर्वेषामवि- रोधेन ब्रह्मकर्म समारभे । इति दर्भासनं प्रतिष्ठाप्योप्य त्रिः प्राणानायम्या- ष्टोत्तरशतं गायत्रीं जपेत् २ ब्राह्मणः पूतो भवति ३ ब्रह्महत्यागोवधगुरु- तल्पसुगपानसुवर्णस्तेयादिसर्वपापप्रणाशनमिति विज्ञायते ४ हित्वा तद्देहं जनार्दनं प्रपद्यत इत्याह भगवान् बोधायनः ५

इति बोधायनीये गृह्यशेषसूत्रे पञ्चमप्रश्ने चतुर्थोऽध्यायः

## अथ पञ्चमप्रश्ने पञ्चमोऽध्यायः

अथातोऽर्कोद्वाहं व्याख्यास्यामः मूकान्धबधिरादीनां जडानां च तृतीयवि-

वाहिनां च १ पूर्वपक्षे पुण्ये नक्षत्रे पूर्वाह्ने ब्रह्मसमूहे ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य यत्रैको बालोऽर्को भवति तस्योत्तरत उपलिप्य स्वयं स्नात्वाऽर्कं च स्नापयित्वा पादौ प्रक्षाळ्याचम्यालङ्कृत्य तन्त्रेण नान्दीमुखं कृत्वा स्वस्तिसूक्तं वाचयित्वा यत्किंचिद्धिरण्यं गृहीत्वा आसत्येन इति जपित्वा ब्राह्मणेभ्यो दत्वाऽलङ्कृत्यार्कं स्पृष्ट्वाऽऽदित्यमुपतिष्ठते सूर्यो देवीम् इति पञ्चभिः २ अथ वस्त्रं माङ्गल्यसूत्रं चार्के बध्वा पुण्याहं स्वस्ति ऋद्धिम् इति वाचयेदादित्योत्र देवता ३ पूर्वोक्तविधिनाऽग्निमुखमुपसमाधाय संपरिस्तीर्याज्यं संस्कृत्य स्रुक्स्रुवं संमृज्यादित्यं ध्यायन्नर्कं गृह्णाति हस्तः प्रयच्छत्वमृतम् इति ४ अथाग्निं प्रदक्षिणं करोति परि त्वाऽग्ने पुरं वयम् इति ५ अथार्कमूलं स्पृष्ट्वाऽऽदित्यभीक्षते अभीवृतं शकुनैर्विश्वरूपम् इति ६ अथ व्याहृतीर्हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा जुहोति उद्वयं तमसस्परि उदुत्यं चित्रम् इति ७ अपरं चतुर्गृहीतं गृहीत्वा मनस्वतीं जुहोति मनो ज्योतिः इति ८ अपरं चतुर्गृहीतं गृहीत्वा लाजमन्त्रेण द्विरावर्त्य जुहोति ९ अथ स्रुवेण व्याहृतीर्हुत्वा समाप्यादित्यं व्रतऋग्भ्यामुपतिष्ठते अदाभ्यो भुवनानि प्रचाकशत् त्रिरन्तरिक्षं सविता महित्वना इति द्वाभ्याम् १० अथ गोक्षीरमर्कं स्पृष्टा आयुष्यसूक्तमुक्त्वा प्राश्याचम्य पुनरादित्यमुपतिष्ठते अचित्ती यच्चकृम इति ११ अथार्काधिदैवतमुद्वास्यार्कमुत्पाट्य व्याहृतीभिरग्नौ दग्ध्वा स्नात्वा यत्किञ्चिद्दत्वा शुद्धो भवति १२ सद्य एवं कदळीविवाहं कुर्यात् १३ कदळीं छित्वा त्रिरात्रमशुचिर्भवति १४ अथाप्युदाहरन्ति

अर्कोद्वाहो जडादीनामुच्यते तु यवीयसः
विवाहार्थं मुनिश्रेष्ठैः तमुत्पाट्य दहेत्तदा

व्याहृतीभिस्तदा दत्वा यथाशक्ति हिरण्यकम्
स्नात्वा सद्यश्शुचिर्भूयादुद्वाहे च तृतीयके

तृतीया स्त्री म्रियेच्छीघ्रं तस्मादेवं चरेद्बुधः
रम्भोद्वाहं तथा कुर्याच्छित्वा तत्रैव मानवः

त्रिरात्रं सूतकं भूयादिति बोधायनोऽब्रवीत् १५

इति बोधायनीये गृह्यशेषसूत्रे पञ्चमप्रश्ने पञ्चमोऽध्यायः

अथ पञ्चमप्रश्ने षष्ठोऽध्यायः

अथातः पञ्चमीश्राद्धं व्याख्यास्यामः मार्गशीर्ष्यां माध्यां प्रोष्ठपद्यां वोपरिष्टात्पञ्चम्यामारभ्य संवत्सरं वा कुर्यात् १ पूर्वदिने व्रती भूयात् इदं करिष्याम्येवं करिष्यामि इति २ ब्राह्मणान्निमन्त्रयते योनिगोत्रश्रुतवृत्तसम्पन्नान् ३ असबन्धानपि श्रुतवृत्तसम्पन्नान्निमन्त्रयते ४ तस्य मासि श्राद्ध उक्त एतावदेव नाना ५ पुरस्तात्स्विष्टकृत एता आहुतीर्जुहोति आयुष्टे आयुर्दा अग्ने जातो यदग्ने अन्नपतेऽन्नस्य नो देहि इति चतस्रः ६ विष्णुसूक्तेन चान्नस्य जुहोति ७ अथ लाजैर्जुहोति पुरुषसूक्तेन प्रत्यृचम् ८ अथ तिलैर्जुहोति शं नो देवीः प्रजापते इमं यम प्रस्तरम् व्याहृतीभिश्च ९ अथाज्यस्य जुहोति अग्न आयूंषि पवसे अग्ने पवस्व यस्त्वा हृदा कीरिणा इति चतस्रः धाता ददातु नो रयिमीशानः इत्यान्तादनुवाकस्य प्रत्यृचम् अव ते हेडः उदुत्तमम् इमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयाऽसि उद्वयं तमसस्परि उदुत्यं चित्रं वैश्वानरो न ऊत्या पृष्टो दिवि सोमो धेनुम् इति दशहोत्राद्यैष्षड्भिः ब्राह्मण एकहोता इति दशभिः । स्विष्टकृत्प्रभृति सिद्धमापिण्डदानात् १० दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य तेष्वन्नशेषैस्त्रीन् पिण्डान् ददाति ११ दशमेऽहनि वैवाहिकश्राद्धवत् भूमौ लेपमन्त्रत्रयान्तं कृत्वाऽथैनान् संक्षाळनेन त्रिरपसलैः परिषिञ्चति ऊर्जं वहन्तीः इति १२ अथ मध्यमपिण्डं पत्न्यै प्रयच्छति वीरं मे दत्त पितरः इति १३ तं पत्नी प्राश्नाति आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषो हसत् इति पुमांस एव मे पुत्रा जायेरम् इति ब्राह्मणम् १४ जयप्रभृति सिद्धमाधेनुवरप्रदानात् १५ यदि जीवपिता पिण्डं न दद्यात् पितृभ्यस्स्वधा इति मन्त्रान् सन्नमय्य प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य चतुष्पथे दर्भस्तम्बेषु बलिमुपहरति १६

नमस्त्रियै नमः पुंसे नमस्सवयसे नमः
शुक्लाय कृष्णदन्ताय पापिनां पतये नमः १७

ये मे प्रजामुपलोपयन्ति ग्रामे वसन्त उत वाऽरण्ये

तेभ्यो नमो अस्तु बलिमेतेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे दध इति १८

सह देवमनुष्या अस्मिन् लोके पुरा बभूवुरथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्यास्तेषां ये तथा कर्माण्यारभन्ते सह देवैर्ब्रह्मणा चामुष्मिन् लोके भवन्त्यथैतन्मनुश्श्राद्धशब्दं कर्म प्रोवाच प्रजानिश्श्रेयसाय इति पञ्चम्यां श्राद्धेन बह्वयत्यो भवति । न चानपत्यः प्रमीयते । श्राद्धेन वार्षयो दिवमागच्छन् इति १९ विज्ञायते च प्रजामनुप्रजायसे । तदु ते मर्त्यामृतम् इति २० तस्मिन्प्रजापतौ यत्नः कार्यः । अत्रोदाहरन्ति २१

परानपहरेद्यस्तु बालवृक्षान् छिनत्ति यः
भक्षयन्दण्डशिशुकान्गुरून्वा सर्वदा द्विषन् २२

परपुत्रांश्च यो द्वेष्टि क्रीडन् बद्धमृगादिभिः
निर्दयस्सर्वभूतेषु पितृपूजां विलोपयन् २३

स वध्यो मृतपुत्रो वा भवेत्तेषां तु निष्कृतिः
मौनी व्रती हविष्याशी हूयते नियतेन्द्रियः २४

जुह्वा घृतेन कूश्माण्डैर्गणानष्टौ घृतोदनैः
जपन् वा पौरुषं सूक्तं हेमगोभूतिलान् ददत् २५

कृच्छ्रातिकृच्छ्रैः जपकृन्मुच्यते सोऽहसः क्षणात्
इत्याह भगवान् बोधायनः २६

इति बोधायनीये गृह्यशेषसूत्रे पञ्चमप्रश्ने षष्ठोऽध्यायः

## अथ पञ्चमप्रश्ने सप्तमोऽध्यायः

अथातो वनस्पतिहोमं व्याख्यास्यामः क्रमुकपनसनाळिकेरकदळीष्वन्यस्मिन् पक्वे ब्राह्मणैर्बन्धुभिस्सहागत्य यजमानः क्रमुकादिवृक्षमध्ये अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वाऽग्नेर्दक्षिणतो व्रीहीनवकीर्य मेधां म इन्द्रः इति श्रीदेवीं सरस्वतीमावाह्य प्रागाद्यष्टदिक्पालानावाह्य चतुरः प्रतिदिशं क्रमुकादिवृक्षानर्चयित्वा चतस्त्र ओषधीस्तेषां पार्श्वे निधाय उच्छ्रयस्व वनस्पते इति गोमयं क्रमुकमूले निधाय लाजैः पुष्पैरक्षतैस्संप्रकीर्य पूर्णपात्रं निधाय क्षेत्रस्य

पते इति क्षेत्रमभ्यर्च्य या जाता ओषधयः या ते धामानि या ओषधयस्सोमराज्ञीः शतं वो अम्ब अश्रवं हि भूरिदावत्तरावाम् इति वनस्पतिभ्यस्स्वाहा इत्येतेनानुवाकेन हविराज्यचरून् हुत्वा जयादि प्रतिपद्यते । परिषेचनान्तं कृत्वा ब्राह्मणान् भोजयित्वा दक्षिणाभिस्संपूज्य स्वस्तिसूक्तेनाध्वर्युराशिषो वाचयित्वाऽऽचार्याय दक्षिणां ददातीत्याह भगवान् बोधायनः १

इति बोधायनीये गृह्यशेषसूत्रे पञ्चमप्रश्ने सप्तमोऽध्यायः

अथ पञ्चमप्रश्ने अष्टमोऽध्यायः

अथात उग्ररथशान्तिविधिं व्याख्यास्यामः ब्राह्मणराजन्यवैश्यानां जन्मदिनादारभ्य षष्टितमसंवत्सरे जन्ममासे जन्मनक्षत्रे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वा तस्याग्नेयदिग्भागे निष्कद्वयेन मृत्युप्रतिमां कृत्वा धान्यानामुपरि यथाविधि कलशस्थापनं कृत्वा कलशस्योपरि प्रतिमां पूजयेत् अपैतु मृत्युः परं मृत्यो मा नस्तोके त्रियम्बकम् इत्यष्टोत्तरशतवारं जपित्वाऽथ देवयजनोल्लेखनप्रभृत्याग्निमुखान्तं कृत्वा पक्वाज्जुहोति द्विरवदानम् मा नो महान्तम् इति पुरोनुवाक्यामनूच्य मा नस्तोके इति याज्यया जुहोति १ अथाज्याहुतीरुपजुहोति घृतसूक्तेन प्रत्यृचम् २ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ३ अथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति ४ अपरेणाग्निं प्राङ्मुख उपविश्य मृत्युसुक्तपुराणयन्त्रैः कलशोदकेनात्मानमभिषिच्याचार्यं संपूज्य ऋत्विग्भ्यो यथाशक्ति दक्षिणां दत्वा ब्राह्मणान् भोजयेदित्याह भगवान् बोधायनः ५

इति बोधायनीये गृह्यशेषसूत्रे पञ्चमप्रश्ने अष्टमोऽध्यायः

अथात उग्ररथशान्तिविधिम् । अथातो वनस्पतिहोमम् । अथातः पञ्चमीश्राद्धम् । अथातोऽर्कोद्वाहम् । अथातो मृत्तिकास्नानविधिम् । अथर्तुशान्तिम् । अथ विवाह्यकन्या । अथाग्निमुखप्रयोगः ८ अथाग्निमुखप्रयोगः । अथ विवाह्यकन्या । अथर्तुशान्तिम् । अथातो मृत्तिकास्नानम् । अथातोऽर्कोद्वाहम् । अथातः पञ्चमीश्राधम् । अथातो वनस्पतिहोमम् । अथात उग्ररथशान्तिविधिम् ९

इति बोधायनीयगृह्यशेषसूत्रे पञ्चमप्रश्नः

इति बोधायनीयगृह्यशेषसूत्रं समाप्तम्

# कौशिक सूत्रम्

अथ विधिं वक्ष्यामः १ स पुनराम्नायप्रत्ययः २ आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च ३ तद्यथा ब्राह्मणविधिरेवं कर्मलिङ्गा मन्त्राः ४ तथान्यार्थाः ५ तथा ब्राह्मणलिङ्गा मन्त्राः ६ तदभावे संप्रदायः ७ प्रमुक्तत्वाद्ब्राह्मणानाम् ८ यज्ञं व्याख्यास्यामो देवानां पितृणां च ९ प्राङ्मुख उपांशु करोति १० यज्ञोपवीती देवानाम् ११ प्राचीनावीती पितृणाम् १२ प्रागुदग्वा देवानाम् १३ दक्षिणा पितृणाम् १४ प्रागुदगपवर्गं देवानाम् १५ दक्षिणप्रत्यगपवर्गं पितृणाम् १६ सकृत्कर्म पितृणां त्र्यवरार्धं देवानाम् १७ यथादिष्टं वा १८ अभिदक्षिणमाचारो देवानां प्रसव्यं पितृणाम् १९ स्वाहाकारवषट्कारप्रदाना देवाः २० स्वधाकारनमस्कारप्रदानाः पितरः २१ उपमूललूनं बर्हि पितृणाम् २२ पर्वसु देवानाम् २३ प्र यच्छ पर्शुमिति दर्भाहाराय दात्रं प्रयच्छति २४ ओषधीर्दान्तु पर्वन्नित्युपरि पर्वणां लूत्वा तूष्णीमाहृत्योत्तरतोऽग्नेरुपसादयाति २५ नाग्निं विपर्यावर्तेत २६ नान्तरा यज्ञाङ्गानि व्यवेयात् २७ दक्षिणं जानु प्रभुज्य जुहोति २८ या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका २९ या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूः ३० अद्योपवसथ इत्युपवत्स्यद्भक्तमश्नाति ३१ मधुलवणमांसमाषवर्जम् ३२ ममाग्ने वर्च इति समिध आधाय व्रतमुपैति ३३ व्रतेन त्वं व्रतपत इति वा ३४ ब्रह्मचारी व्रत्यधः शयीत ३५ प्रातर्हुतेऽग्नौ कर्मणे वां वेषाय वां सुकृताय वामिति पाणी प्रक्षाल्यापरेणाग्नेर्दर्भानास्तीर्य तेषूत्तरमानडुहं रोहितं चर्म प्राग्ग्रीवमुत्तरलोम प्रस्तीर्य पवित्रे कुरुते ३६ दर्भावप्रच्छिन्नप्रान्तौ प्रक्षाल्यानुलोममनुमार्ष्टि विष्णोर्मनसा पूते स्थ इति ३७ १

त्वं भूमिमत्येष्योजसा त्वं वेद्यां सीदसि चारुरध्वरे । त्वां पवित्रमृषयो भरन्तस्त्वं पुनीहि दुरितान्यस्मदिति पवित्रे अन्तर्धाय हविर्निर्वपति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति १ एवमग्नीषोमाभ्यामिति २ इन्द्राग्निभ्यामित्यमावास्यायाम् ३ नित्यं पूर्वमाग्नेयम् ४ निरुप्तं पवित्राभ्यां प्रोक्षत्यमुष्मै त्वा जुष्टमिति यथादेवतम् ५ उलूखलमुसलं शूर्पं प्रक्षालितं चर्मण्याधाय व्रीहीनुलूखल ओप्यावघ्नंस्त्रि-

र्हविष्कृता वाचं विसृजति हविष्कृदा द्रवेहीति ६ अपहत्य सुफलीकृतान्कृत्वा त्रिः प्रक्षाल्य तण्डुलानग्ने चरुर्यज्ञियस्त्वाध्यरुक्षदिति चरुमधिदधाति ७ शुद्धाः पूता इत्युदकमासिञ्चति ८ ब्रह्मणा शुद्धा इति तण्डुलान् ९ परि त्वाग्ने पुरं वयमिति त्रिः पर्यग्नि करोति १० नेक्षणेन त्रिः प्रदक्षिणमुदायौति ११ अत ऊर्ध्वं यथाकामम् १२ उत्तरतोऽग्नेरुपसादयतीध्मम् १३ उत्तरं बर्हिः १४ अग्नये त्वा जुष्टं प्रोक्षामीतीध्मम् १५ पृथिव्या इति बर्हिः १६ दर्भमुष्टिमभ्युक्ष्य पश्चादग्नेः प्रागग्रं निदधात्यूर्णम्रदं प्रथस्व स्वासस्थं देवेभ्य इति १७ दर्भाणामपादाय ऋषीणां प्रस्तरोऽसीति दक्षिणतोऽग्नेर्ब्रह्मासनं निदधाति १८ पुरस्तादग्नेरास्तीर्य तेषां मूलान्यपरेषां प्रान्तैरवच्छादयन्परिसर्पति दक्षिणेनाग्निमा पश्चार्धात् १९ परि स्तृणीहीति संप्रेष्यति २० देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूतः प्रशिषा परिस्तृणामीति २१ एवमुत्तरतोऽयुजो धातून्कुर्वन् २२ यत्र समागच्छन्ति तद्दक्षिणोत्तरं करोति २३ स्तीर्णं प्रोक्षति हविषां त्वा जुष्टं प्रोक्षामीति २४ नानभ्युक्षितं संस्तीर्णमुपयोगं लभेत २५ नैधोऽभ्याधानम् २६ नानुत्पूतं हविः २७ नाप्रोक्षितं यज्ञाङ्गम् २८ तस्मिन्प्रक्षालितोपवातानि निदधाति २९ स्रुवमाज्यधानीं च ३० विलीनपूतमाज्यं गृहीत्वाधिश्रृत्य पर्यग्नि कृत्वोदगुद्वास्य पश्चादग्नेरुपसाद्योदगग्राभ्यां पवित्राभ्यामुत्पुनाति ३१ विष्णोर्मनसा पूतमसि ३२ देवस्त्वा सवितोत्पुनातु ३३ अच्छिद्रेण त्वा पवित्रेण शतधारेण सहस्रधारेण सुप्वोत्पुनामीति तृतीयम् ३४ तूष्णीं चतुर्थम् ३५ शृतं हविरभिघारयति मध्वा समञ्जन्घृतवत्कराथेति ३६ अभिघार्योदञ्चमुद्वासयत्युद्वासयाग्नेः शृतम-कर्म हव्यमा सीद पृष्ठममृतस्य धामेति ३७ पश्चादाज्यस्य निधायालंकृत्य ममानेनोत्पुनाति ३८ अदारसृदित्यवेक्षते ३९ उत्तिष्ठतेत्यैन्द्रम् ४० अग्निर्भूम्यामिति तिसृभिरुपसमादधात्यस्मै क्षत्राण्येतमिध्ममिति वा ४१ २

युनज्मि त्वाब्रह्मणा दैव्येन हव्यायास्मै वोढवेजातवेदः
इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं त इति १

दक्षिणतो जाङ्गायनमुदपात्रमुपसाद्याभिमन्त्रयते तथोदपात्रं धारय यथाग्ने ब्रह्मणस्पतिः
सत्यधर्मा अदीधरद्देवस्य सवितुः सव इति २

अथोदकमासिञ्चति इहेत देवीरमृतं वसाना हिरण्यवर्णा अनवद्यरूपाः
आपः समुद्रो वरुणश्च राजा संपातभागान्हविषो जुषन्ताम्

इन्द्रप्रशिष्टा वरुणप्रसूता अपः समुद्राद्दिवमुद्वहन्तु
इन्द्रप्रशिष्टा वरुणप्रसूता दिवस्पृथिव्याः श्रियमा वहन्त्विति ३

ऋतं त्वा सत्येन परिषिञ्चामि जातवेद इति सह हविर्भिः पर्युक्ष्य जीवाभि-राचम्योपोत्थाय वेदप्रपद्भिः प्रपद्यत ओं प्रपद्ये भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये जनत्प्रपद्य इति ४ प्रपद्य पश्चात्स्तीर्णस्य दर्भानास्तीर्याहे दैधिषव्योदतस्ति-ष्ठान्यस्य सदने सीद योऽस्मत्पाकतर इति ब्रह्मासनमन्वीक्षते ५ निरस्तः पराग्वसुः सह पाप्मना निरस्तः सोऽस्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति दक्षिणा तृणं निरस्यति ६ तदन्वालभ्य जपतीदमहमर्वाग्वसोः सदने सीदा-म्यृतस्य सदने सीदामि सत्यस्य सदने सीदामीष्टस्य सदने सीदामि पूर्तस्य सदने सीदामि मामृषदेव बर्हिः स्वासस्थं त्वाध्यासदेयमूर्णम्रदमनभिशोकम् ७ विमृग्वरीमित्युपविश्यासनीयं ब्रह्मजपं जपति बृहस्पतिर्ब्रह्मा ब्रह्मसदन आसिष्यते बृहस्पते यज्ञं गोपाय यदुदुद्वत उन्निवतः शकेयमिति ८ दर्भैः स्रुवं निर्मृज्य निष्टप्तं रक्षो निष्टप्ता अरातयः प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इति प्रतप्य ९

मूले स्रुवं गृहीत्वा जपति विष्णोर्हस्तोऽसि दक्षिणः पूष्णा दत्तो बृहस्पतेः
तं त्वाहं स्रुवमाददे देवानां हव्यवाहनम्

अयं स्रुवो वि दधाति होमाञ्छताक्षरच्छन्दसा जागतेन
सर्वा यज्ञस्य समनक्ति विष्ठा बार्हस्पत्येष्टिः शर्मणा दैव्येनेति १०

ओं भूः शं भूत्यै त्वा गृह्णे भूतय इति प्रथमं ग्रहं गृह्णाति ११
ओं भुवः शं पुष्ट्यै त्वा गृह्णे पुष्टय इति द्वितीयम् १२
ओं स्वः शं त्वा गृह्णे सहस्रपोषायेति तृतीयम् १३
ओं जनच्छं त्वा गृह्णेऽपरिमितपोषायेति चतुर्थम् १४

राजकर्माभिचारिकेष्वमुष्य त्वा प्राणाय गृह्णेऽपानाय व्यानाय समानायोदा-

नायेति पञ्चमम् १५ अग्नावग्निर्हृदा पूतं पुरस्ताद्युक्तो यज्ञस्य चक्षुरिति जुहोति १६ पश्चादग्नेर्मध्यदेशे समानत्र पुरस्ताद्धोमान् १७ दक्षिणेनाग्निमुदपात्र आज्याहुतीनां संपातानानयति १८ पुरस्ताद्धोम आज्यभागः संस्थितहोमः संमृद्धिः शान्तानामिति १९ एतावाज्यभागौ २० ३

वृष्णे बृहते स्वर्विदे अग्नये शुल्कं हरामि त्विषीमते । स न स्थिरान्बलवतः कृणोतु ज्योक्च नो जीवातवे दधात्वग्नये स्वाहेत्युत्तरपूर्वार्ध आग्नेयमाज्यभागं जुहोति १ दक्षिणपूर्वार्ध सोमाय त्वं सोम दिव्यो नृचक्षाः सुगाँ अस्मभ्यं पथो अनु ख्यः अभि नो गोत्रं विदुष इव नेषोऽछा नो वाचमुशतीं जिगासि सोमाय स्वाहेति २ मध्ये हविः ३ उपस्तीर्याज्यं संहताभ्यामङ्गुलिभ्यां द्विर्हविषोऽवद्यति मध्यात्पूर्वार्धाच्च ४ अवत्तमभिघार्य द्विर्हविः प्रत्यभिघारयति ५ यतोयतोऽवद्यति तदनुपूर्वम् ६ एवं सर्वाण्यवदानानि ७ अन्यत्र सौविष्ट-कृतात् ८ उदेनमुत्तरं नयेति पुरस्ताद्धोमसहतां पूर्वाम् ९ एवं पूर्वांपूर्वां संहतां जुहोति १० स्वाहान्ताभिः प्रत्यृचं होमाः ११ यामुत्तरामग्नेराज्यभागस्य जुहोति रक्षोदेवत्या सा यां दक्षिणतः सोमस्य पितृदेवत्या सा १२ तस्मादन्तरा होतव्या देवलोक एव हूयन्ते १३ यां हुत्वा पूर्वामपरां जुहोति सापक्रामन्ती स पापीयान्यजमानो भवति १४ यां परांपरां संहतां जुहोति साभिक्रामन्ती स वसीयान्यजमानो भवति १४ यामनग्नौ जुहोति सान्धा तया चक्षुर्यजमानस्य मीयते सोऽन्धंभावुको यजमानो भवति १६ यां धूमे जुहोति सा तमसि हूयते सोऽरोचको यजमानो भवति १७ यां ज्योतिष्मति जुहोति तया ब्रह्मवर्चसी भवति तस्माज्ज्योतिष्मति होतव्यम् १८ एवमस्मै क्षत्रमग्नीषोमावित्यग्नीषो-मीयस्य १९ ४

अग्नीषोमा सवेदसा सहूती वनतं गिरः
सं देवत्रा बभूवथुः

युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्
युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान्

अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिम् । स प्रजया सुवीर्यं विश्व-

मायुर्व्यश्नवत् १

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः
तद्वां चेति प्र वीर्यम्

श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात्
इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता

इन्द्राग्नी अस्मान्रक्षतां यौ प्रजानां प्रजावती
स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत्

गोमद्धिरगयवद्वसु यद्वामश्वावदीमहे
इन्द्राग्नी तद्वनेमहि स्वाहेति २ ऐन्द्राग्नस्य हविषोऽमावास्यायाम् ३ प्रा-क्स्विष्टकृतः पार्वणौ होमौ समृद्धिहोमाः काम्यहोमाश्च ४ पूर्णा पश्चादिति पौर्णमास्याम् ५ यत्ते देवा अकृगवन्भागधेयमित्यमावास्यायाम् ६ आकूत्यै त्वा स्वाहा । कामाय त्वा स्वाहा । समृधे त्वा स्वाहा । आकूत्यै त्वा कामाय त्वा समृधे त्वा स्वाहा । ऋचा स्तोमं समर्धय गायत्रेण रथंतरम् । बृहद्गायत्रवर्तनि स्वाहा ७ पृथिव्यामग्नये समनमन्निति संनतिभिश्च ८ प्रजापते न त्वदेतान्यन्य इति च ९ उपस्तीर्याज्यं सर्वेषामुत्तरतः सकृत्सकृदवदाय द्विरवत्तमभिघारयति १० न हवींषि ११ आ देवानामपि पन्थामगन्म यच्छक्न-वाम तदनुप्रवोढुम् । अग्निर्विद्वान्स यजात्स इद्धोता सोऽध्वरान्स ऋतून्कल्प-यात्यग्नये स्विष्टकृते स्वाहेत्युत्तरपूर्वार्धेऽवयुतं हुत्वा सर्वप्रायश्चित्तीयान्होमा-ञ्जुहोति १२ स्वाहेष्टेभ्यः स्वाहा । वषडनिष्टभ्यः स्वाहा । भेषजं स्विष्ट्यै स्वाहा । निष्कृतिर्दुरिष्ट्यै स्वाहा । दैवीभ्यस्तनूभ्यः स्वाहा । अयाश्चाग्ने-ऽस्यनभिशस्तिश्च सत्यमित्त्वमया असि । अयासा मनसा कृतोऽयास्यं हव्य-मूहिषे । अया नो धेहि भेषजं स्वाहेत्यों स्वाहा भूः स्वाहा भुवः स्वाहा स्वः स्वाहों भूर्भुवः स्वः स्वाहेति १३ ५

यन्मे स्कन्नं मनसो जातवेदो यद्वास्कन्दद्धविषो यत्रयत्र
उत्प्रुषो विप्रुषः सं जुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहेति १ यन्मे

स्कन्नं यदस्मृतीति च स्कन्नास्मृतिहोमौ २ यदद्य त्वा प्रयतीति संस्थितहोमाः ३ मनसस्पत इत्युत्तमं चतुर्गृहीतेन ४ बर्हिराज्यशेषेऽनक्ति पृथिव्यै त्वेति मूलमन्तरिक्षाय त्वेति मध्यं दिवे त्वेत्यग्रम् ५ एवं त्रिः ६ सं बर्हिरक्तमित्यनुप्रहरति यथादेवतम् ७ स्रुवमग्नौ धारयति ८ यदाज्यधान्यां तत्संस्रावयति संस्रावभागास्तविषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवाः । इमं यज्ञमभि विश्वे गृणन्तः स्वाहा देवा अमृता मादयन्तामिति ९ स्रुवोऽसि घृतादनिशितः । सपत्नक्षयणो दिवि षीद । अन्तरिक्षे सीद पृथिव्यां सीदोत्तरोऽहं भूयासमधरे मत्सपत्ना इति स्रुवं प्राग्दण्डं निदधाति १० वि मुञ्चामि ब्रह्मणा जातवेदसमग्निं होतारमजरं रथस्पृतम् । सर्वा देवानां जनिमानि विद्वान्यथाभागं वहतु हव्यमग्निरग्नये स्वाहेति समिधमादधाति ११ एधोऽसीति द्वितीयां समिदसीति तृतीयाम् १२ तेजोऽसीति मुखं विमार्ष्टि १३ दक्षिणेनाग्निं त्रीन्विष्णुक्रमान्क्रमते विष्णोः क्रमोऽसीति दक्षिणेन पादेनानुसंहरति सव्यम् १४ सूर्यस्यावृतमित्यभिदक्षिणमावर्तते १५ अगन्म स्वरित्यादित्यमीक्षते १६ इन्द्रस्य वचसा वयं मित्रस्य वरुणस्य च । ब्रह्मणा स्थापितं पात्रं पुनरुत्थापयामसीत्यपरेणाग्निमुदपात्रं परिहृत्योत्तरेणाग्निमापो हि ष्ठा मयोभुव इति मार्जयित्वा बर्हिषि पत्न्याञ्जलौ निनयति समुद्रं वः प्र हिणोमीतीदं जनास इति वा १७ वीरपत्न्यहं भूयासमिति मुखं विमार्ष्टि १८ व्रतानि व्रतपतय इति समिधमादधाति १९ सत्यं त्वर्तेनेति परिषिच्योदञ्चि हविरुच्छिष्टान्युद्वासयति २० पूर्णपात्रं दक्षिणा २१ नादक्षिणं हविः कुर्वीत यः कुरुते कृत्यामात्मनः कुरुत इति ब्राह्मणम् २२ अन्वाहार्यं ब्राह्मणान्भोजयति २३ यद्वै यज्ञस्यानन्वितं भवति तदन्वाहार्येणान्वाह्रियते २४ एतदन्वाहार्यस्यान्वाहार्यत्वम् २५ ईड्या वा अन्ये देवाः सपर्येण्या अन्ये देवाः । ईड्या देवा ब्राह्मणाः सपर्येण्याः २६ यज्ञेनैवेड्यान्प्रीणात्यन्वाहार्येण सपर्येण्यान् २७ तेऽस्योभे प्रीता यज्ञे भवन्तीति २८ इमौ दर्शपूर्णमासौ व्याख्यातौ २९ दर्शपूर्णमासाभ्यां पाकयज्ञाः ३० अथाप्यपरो हवनयोगो भवति ३१ कुम्भीपाकादेव व्युद्धारं जुहुयात् ३२ अधिश्रयणपर्यग्निकरणाभिघारणोद्वासनालंकरणोत्पवनैः संस्कृत्य ३३ अथापि श्लोकौ भवतः । आज्यभागान्तं प्राक्तन्त्रमूर्ध्वं स्विष्टकृता सह । हवींषि यज्ञ आवापो यथा तन्त्रस्य तन्तवः । पाकयज्ञान्समासाद्यैकाज्यानेकबर्हिषः । एकस्विष्टकृतः कुर्यान्नानापि सति दैवतेति ३४ एतेनैवामावास्यो व्याख्यातः ३५ ऐन्द्राग्नोऽत्र द्वितीयो भवति ३६ तयोर्व्यतिक्रमे त्वमग्ने व्रतपा

असि कामस्तदग्ने इति शान्ताः ३७ ६

अश्नात्यनादेशे स्थालीपाकः १ पुष्टिकर्मसु सारूपवत्से २ आज्यं जुहोति ३ समिधमादधाति ४ आवपति व्रीहियवतिलान् ५ भक्षयति क्षीरौदनपुरोडाशरसान् ६ मन्थौदनौ प्रयच्छति ७ पूर्वं त्रिषप्तीयम् ८ उदकचोदनाया-मुदपात्रं प्रतीयात् ९ पुरस्तादुत्तरतः संभारमाहरति १० गोरनभिप्रापाद्वनस्प-तीनाम् ११ सूर्योदयनतः १२ पुरस्तादुत्तरतोऽरण्ये कर्मणां प्रयोगः १३ उत्त-रत उदकान्ते प्रयुज्य कर्माण्यपां सूक्तैराप्लुत्य प्रदक्षिणमावृत्याप उपस्पृश्यानवेक्षमाणा ग्राममुदाव्रजन्ति १४ आश्यबन्ध्याप्लवनयानभक्ष्याणि संपातवन्ति १५ सर्वाण्यभिमन्त्र्याणि १६ स्त्रीव्याधितावाप्लुतावसिक्तौ शिरस्तः प्रक्रम्या प्रपदात्प्रमार्ष्टि १७ पूर्वं प्रपाद्य प्रयच्छति १८ त्रयोदश्या दयस्तिस्त्रो दधिमधुनि वासयित्वा बध्नाति १९ आशयति २० अन्वारब्धा-याभिमन्त्रणहोमाः २१ पश्चादग्नेश्चर्मणि हविषां संस्कारः २२ आनुडहः शकृ-त्पिण्डः २३ जीवघात्यं चर्म २४ अकर्णोऽश्मा २५ आप्लवनावसेचना-नामाचामयति च २६ संपातवतामश्नाति न्यङ्क्ते वा २७ अभ्याधेयानां धूमं नियच्छति २८ शुचिना कर्मप्रयोगः २९ ७

पुरस्ताद्धोमवत्सु निशाकर्मसु पूर्वाह्णे यज्ञोपवीती शालानिवेशनं समूहय-त्युपवत्स्यद्भक्तमशित्वा स्नातोऽहतवसनः प्रयुङ्क्ते १ स्वस्त्ययनेषु च २ इज्या-नां दिश्यान्बलीन्हरति ३ प्रतिदिशमुपतिष्ठते ४ सर्वत्राधिकरणं कर्तुर्दक्षिणा ५ त्रिरुदकक्रिया ६ अनन्तराणि समानानि युक्तानि ७ शान्तं संभारम् ८ अधिकृतस्य सर्वम् ९ विशये यथान्तरम् १० प्र यच्छ पर्शुमिति दर्भलवनं प्रयच्छति ११ अरातीयोरिति तक्षति १२ यत्त्वा शिक्व इति प्रक्षालयति १३ यद्यत्कृष्ण इति मन्त्रोक्तम् १४ पलाशोदुम्बरजम्बुकाम्पीलस्रग्वङ्गशिरीषस्र-क्त्यवरणबिल्वजङ्गिडकुटकगर्ह्यगलावलवेतसशिम्बलसिपुनस्यन्दनारणि-काश्मयोक्ततुन्युपूतुदारवः शान्ताः १५ चितिप्रायश्चित्तिशमीशमकासवंशा-शाम्यवाकातलाशापलाशवाशाशिंशपाशिम्बलसिपुनदर्भापामार्गाकृतिलो-ष्टवल्मीकवपादूर्वाप्रान्तव्रीहियवाः शान्ताः १६ प्रमन्दोशीरशलल्युपधान-शकधूमा जरन्तः १७ सीसनदीसीसे अयोरजांसि कृकलासशिरः सीसानि १८ दधि घृतं मधूदकमिति रसाः १९ व्रीहियवगोधूमोपवाकतिलप्रियङ्गु-

श्यामाका इति मिश्रधान्यानि २० ग्रहणमा ग्रहणात् २१ यथार्थमुदर्का-
न्योजयेत् २२ इहैव ध्रुवामेह यातु यमो मृत्युः सत्यं बृहदित्यनुवाको वा-
स्तोष्पतीयानि २३ दिव्यो गन्धर्व इमं मे अग्ने यौ ते मातेति मातृनामानि २४
स्तुवानमिदं हविर्निस्सालामरायक्षयणं शं नो देवी पृश्निपर्ण्या पश्यति
तान्सत्यौजास्त्वया पूर्वं पुरस्ताद्युक्तो रक्षोहणमित्यनुवाकश्चातनानि २५ ८

अम्बयो यन्ति शम्भुमयोभू हिरण्यवर्णा निस्सालां ये अग्नयो ब्रह्म यज्ञा-
नमित्येका तदेव मृगारसूक्तानि १ उत्तमं वर्जयित्वाप नः शोशुचदघं पुनन्तु
मा सस्त्रुषीर्हिमवतः प्र स्रवन्ति वायोः पूतः पवित्रेण शं च नो मयश्च
नोऽनडुह्यस्त्वं प्रथमं मह्यमापो वैश्वानरो रश्मिभिर्यमो मृत्युर्विश्वजित्संज्ञानं नो
यद्यन्तरिक्षे पुनर्मैत्विन्द्रियं शिवा नः शं नो वातो वात्वग्निं ब्रूमो वनस्पतीनिति
२ पृथिव्यै श्रोत्रायेति त्रिः प्रत्यासिञ्चति ३ अम्बयो यन्ति शम्भुमयोभू हिर-
ण्यवर्णाः शंतातीयं शिवा नः शं नो वातो वात्वग्निं ब्रूमो वनस्पतीनिति ४
पृथिव्यै श्रोत्रायेति त्रिः प्रत्यासिञ्चति ५ इति शान्तियुक्तानि ६ उभयतः
सावित्र्युभयतः शं नो देवी ७ अहतवासाः कंसे शान्त्युदकं करोति ८
अतिसृष्टो अपां वृषभ इत्यपोऽतिसृज्य सर्वा इमा आप ओषधय इति पृष्ट्व सर्वा
इत्याख्यात ओं बृहस्पतिप्रसूतः करवाणीत्यनुज्ञाप्यों सवितृप्रसूतः भवानि-
त्यनुज्ञातः कुर्वीत ९ पूर्वया कुर्वीतेति गार्ग्यपार्थश्रवसभागलिकाङ्कायनो-
परिबभ्रवकौशिकजाटिकायनकौरुपथयः १० अन्यतरया कुर्वीतेति युवा कौ-
शिको युव कौशिकः ११ ९

इत्यथर्ववेदे कौशिकसूत्रे प्रथमोऽध्यायः समाप्तः

पूर्वस्य मेधाजननानि १ शुकसारिकृशानां जिह्वा बध्नाति २ आशयति ३
औदुम्बरपलाशकर्कन्धूनामादधाति ४ आवपति ५ भक्षयति ६ उपाध्यायाय
भैक्षं प्रयच्छति ७ सुप्तस्य कर्णमनुमन्त्रयते ८ उपसीदञ्जपति ९ धानाः
सर्पिर्मिश्राः सर्वहुताः १० तिलमिश्रा हुत्वा प्राश्नाति ११ पुरस्तादग्नेः कल्माषं
दण्डं निहत्य पश्चादग्नेः कृष्णाजिने धाना अनुमन्त्रयते १२ सूक्तस्य पारं गत्वा
प्रयच्छति १३ सकृज्जुहोति १४ दण्डधानाजिनं ददाति १५ अहं रुद्रेभिरिति
शुक्लपुष्पहरितपुष्पे किंस्त्यनाभिपिप्पल्यौ जातरूपशकलेन प्राक्स्तनग्रहा-
त्प्राशयति १६ प्रथमप्रवदस्य मातुरुपस्थे तालुनि संपातानानयति १७ दधि-

मध्वाशयति १८ उपनीतं वाचयति वार्षशतिकं कर्म १९ त्वं नो मेधे द्यौश्च म इति भक्षयति २० आदित्यमुपतिष्ठते २१ यदग्ने तपसेत्याग्रहाण्यां भक्षयति २२ अग्निमुपतिष्ठते २३ प्रातरग्निं गिरावरगराटेषु दिवस्पृथिव्या इति संहाय मुखं विमार्ष्टि २४ १ १०

पूर्वस्य ब्रह्मचारिसांपदानि १ औदुम्बर्यादयः २ ब्रह्मचार्यावसथादुपस्त-रणान्यादधाति ३ पिपीलिकोद्वापे मेदोमधुश्यामाकेषीकतूलान्याज्यं जुहोति ४ आज्यशेषे पिपीलिकोद्वापानोप्य ग्राममेत्य सर्वहुतान् ५ ब्रह्मचारिभ्योऽन्नं धानास्तिलमिश्राः प्रयच्छति ६ एतानि ग्रामसांपदानि ७ विकार स्थूणा-मूलावतक्षणानि सभानामुपस्तरणानि ८ ग्रामीणेभ्योऽन्नम् ९ सुरां सुरापेभ्यः १० औदुम्बर्यादीनि भक्षणान्तानि सर्वसांपदानि ११ त्रिर्ज्योतिः कुरुते १२ उपतिष्ठते १३ सव्यात्पाणिहृदयाल्लोहितं रसमिश्रमश्नाति १४ पृश्निमन्थः १५ जिह्वाया उत्साद्यमक्ष्योः परिस्तरणमस्तृहणं हृदयं दूर्श उपनह्य तिस्रो रात्रीः पल्पूलने वासयति १६ चूर्णानि करोति १७ मैश्रधान्ये मन्थ ओप्य दधि मधुमिश्रमश्नाति १८ अस्मिन्वसु यदाबध्नन्नव प्राणानिति युग्मकृष्णलं वासितं बध्नाति १९ सारूपवत्सं पुरुषगात्रं द्वादशरात्रं संपातवन्तं कृत्वा-नभिमुखमश्नाति २० २ ११

कथं मह इति मादानकशृतं क्षीरौदनमश्नाति १ चमसे सरूपवत्साया दुग्धे व्रीहियवाववधाय मूर्छयित्वा मध्वासिच्याशयति २ पृथिव्यै श्रोत्रायेति जुहोति ३ वत्सो विराज इति मन्थान्तानि ४ सहृदयं तदू षु सं जानीध्वमेह यातु सं वः पृच्यन्तां सं वो मनांसि संज्ञानं न इति सांमनस्यानि ५ उदकुलिजं संपातवन्तं ग्रामं परिहृत्य मध्ये निनयति ६ एवं सुराकुलिजम् ७ त्रिहायण्या वत्सतर्याः शुक्तानि पिशितान्याशयति ८ भक्तं सुरां प्रपां संपातवत्करोति ९ पूर्वस्य ममाग्ने वर्च इति वर्चस्यानि १० औदुम्बर्यादीनि त्रीणि ११ कुमार्या दक्षिणमूरुमभिमन्त्रयते १२ वपां जुहोति १३ अग्निमुपतिष्ठते १४ प्रातरग्निं गिरावरगराटेषु दिवस्पृथिव्या इति दधिमध्वाशयति १५ कीलालमिश्रं क्षत्रियं कीलालमितरान् १६ ३ १२

हस्तिवर्चसमिति हस्तिनम् १ हास्तिदन्तं बध्नाति २ लोमानि जतुना संदिह्य

जातरूपेणापिधाप्य ३ सिंहे व्याघ्रे यशो हविरिति स्नातकसिंहव्याघ्रबस्त-कृष्णवृषभराज्ञां नाभिलोमानि ४ दशानां शान्तवृक्षाणां शकलानि ५ एतयोः प्रातरग्निं गिरावरगराटेषु दिवस्पृथिव्या इति सप्त मर्माणि स्थालीपाके पृक्तान्यश्नाति ६ अकुशलं यो ब्राह्मणो लोहितमश्नीयादिति गार्ग्यः ७ उक्तो लोममणिः ८ सर्वैराप्लावयति ९ अवसिञ्चति १० चतुरङ्गुलं तृणं रजोहरणं बिन्दुनाभिश्चोत्योपमथ्य ११ शुनि किलासमजे पलितं तृणे ज्वरो योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्मिन्राजयक्ष्म इति दक्षिणा तृणं निरस्यति गन्ध-प्रवादाभिरलंकुरुते १२ ४ १३

पूर्वस्य हस्तित्रसनानि १ रथचक्रेण संपातवता प्रतिप्रवर्तयति २ याने-नाभियाति ३ वादित्रैः ४ दृतिवस्त्योरोप्य शर्कराः ५ तोत्रेण नग्नप्रच्छन्नः ६ विद्मा शरस्य मा नो विदन्नदारसृत्स्वस्तिदा अव मन्युर्निर्हस्तः परि वर्त्मान्यभिभूरिन्द्रो जयात्यभि त्वेन्द्रेति सांयामिकाणि ७ आज्यसक्तूञ्जुहोति ८ धनुरिध्मे धनुःसमिधमादधाति ९ एवमिष्विध्मे १० धनुः संपातवद्विमृज्य प्रयच्छति ११ प्रथमस्येषुपर्ययणानि १२ द्रुघ्नयार्त्नीज्यापाशतृणमूलानि बध्नाति १३ आरेऽसावित्यपनोदनानि १४ फलीकरणतुषबुसावतक्षणान्यावपति १५ अन्वाह १६ अग्निर्नः शत्रूनग्निर्नो दूत इति मोहनानि १७ ओदनेनोपयम्य फ-लीकरणानुलूखलेन जुहोति १८ एवमणून् १९ एकविंशत्या शर्कराभिः प्रतिनिष्पुनाति २० अप्वां यजते २१ संशितमिति शितिपदीं संपात-वतीमवसृजति २२ उद्बधत्सु योजयेत् २३ इममिन्द्रेति युक्तयोः प्रदानान्तानि २४ दिग्युक्ताभ्यां नमो देववधेभ्य इत्युपतिष्ठते २५ त्वया मन्यो यस्ते मन्यो इति संरम्भणानि २६ सेने समीक्षमाणो जपति २७ भाङ्गमौञ्जान्पाशानिङ्गिडा-लंकृतान्संपातवतोऽनूक्तान्सेनाक्रमेषु वपति २८ एवमामपात्राणि २९ इङ्गिडेन संप्रोक्ष्य तृणान्याङ्गिरसेनाग्निना दीपयति ३० यां धूमोऽवतनोति तां जयन्ति ३१ ५ १४

त्रृधङ्मन्त्रस्तदिदासेत्याश्वत्थ्यां पात्र्यां त्रिवृति गोमयपरिचये हस्तिपृष्ठे पुरुष-शिरसि वामित्राञ्जुह्वदभिप्रक्रम्य निवपति १ वराहविहिताद्राजानो वेदिं कुर्वन्ति २ तस्यां प्रदानान्तानि ३ एकेष्वाहतस्यादहन उपसमाधाय दीर्घदण्डेन स्रुवेण रथचक्रस्य खेन समया जुहोति ४ योजनीयां श्रुत्वा

यद्यन्या द्वितीया भवत्यपरं तस्यै ७ प्राग्रतमं श्रोत्रियाय ८ अथ यस्य भार्या दासी वा प्रद्राविणी भवति येऽमी तण्डुलाः प्रसव्यं परिकीर्णा भवन्ति तांस्तस्यै प्रयच्छति ९

अर्वाच्युपसंक्रमे मा पराच्युप वस्तथा
अन्नं प्रानस्य बन्धनं तेन बध्नामि त्वा मयीति १०

पर्युक्षणीं समिधश्चादाय मा प्र गामेत्यावज्योर्जं बिभ्रदिति गृहानुपतिष्ठते ११

रमध्वं मा बिभीतनास्मिन्गोष्ठे करीषिणः
ऊर्जं दुहानाः शुचयः शुचिव्रता गृहा जीवन्त उप वः सदेम

ऊर्जं मे देवा अददुरूर्जं मनुष्या उत
ऊर्जं पितृभ्य आहार्षमूर्जस्वन्तो गृहा मम

पयो मे देवा अददुः पयो मनुष्या उत
पयः पितृभ्य आहार्षं पयस्वन्तो गृहा मम

वीर्यं मे देवा अददुर्वीर्यं मनुष्या उत
वीर्यं पितृभ्य आहार्षं वीरवन्तो गृहा ममेति १२

अन्तरुपातीत्य समिधोऽभ्यादधाति
अयं नो अग्निरध्यक्षोऽयं नो वसुवित्तमः
अस्योपसद्ये मा रिषामायं रक्षतु नः प्रजाम्

अस्मिन्सहस्रं पुष्यास्मैधमानाः स्वे गृहे
इमं समिन्धिषीमह्यायुष्मन्तः सुवर्चसः

त्वमग्न ईडित आ त्वाग्न इधीमहीति १३ अभूहूत इत्यग्निं प्रत्यानयति १४ यदि सर्वः प्रणीतः स्याद्दक्षिणाग्नौ त्वेतदाहिताग्नेः १५ गृह्येष्वनाहिताग्नेः १६ इदं चिन्मे कृतमस्तीदं चिच्छक्नवानि । पितरश्चिन्मा वेदन्निति १७ यो ह

यजते तं देवा विदुर्यो ददाति तं मनुष्या यः श्राद्धानि कुरुते तं पितरस्तं पितरः १८ १० ८९

इत्यथर्ववेदे कौशिकसूत्र एकादशोऽध्यायः समाप्तः

मधुपर्कमाहारयिष्यन्दर्भानाहारयति १ अथ विष्टरान्कारयति २ स खल्वेकशाखमेव प्रथमं पाद्यं द्विशाखमासनं त्रिशाखं मधुपर्काय ३ स यावतो मन्येत तावत उपादाय विविच्य संपर्याप्य मूलानि च प्रान्तानि च यथाविस्तीर्ण इव स्यादित्युपोत्कृष्य मध्यदेशेऽभिसंनह्यति ४ ऋतेन त्वा सत्येन त्वा तपसा त्वा कर्मणा त्वेति संनह्यति ५ अथ ह सृजत्यतिसृष्टो द्वेष्टा योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ६ अस्य च दातुरिति दातारमीक्षते ७ अथोदकमाहारयति पाद्यं भो इति ८ हिरण्यवर्णाभिः प्रतिमन्त्र्य दक्षिणं पादं प्रथमं प्रकर्षति । मयि ब्रह्म च तपश्च धारयाणीति ९ दक्षिणे प्रक्षालिते सव्यं प्रकर्षति । मयि क्षत्रं च विशश्च धारयाणीति १० प्रक्षालितावनुमन्त्रयते । इमौ पादाववनिक्तौ ब्राह्मणं यशसावताम् । आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे ११ अस्य च दातुरिति दातारमीक्षते १२ अथासनमाहारयति । सविष्टरमासनं भो इति १३ तस्मिन्प्रत्यङ्मुख उपविशति १४ विमृग्वरीं पृथिवीमित्येतया विष्टरे पादौ प्रतिष्ठाप्याधिष्ठितो द्वेष्टा योऽस्मान्द्वेष्टि यं च वयं द्विप्मः १५ अस्य च दातुरिति दातारमीक्षते १६ अथोदकमाहारयत्यर्घ्यं भो इति १७ तत्प्रतिमन्त्रयते । अन्नानां मुखमसि मुखमहं श्रेष्ठः समानानां भूयासम् । आपोऽमतं स्थामृतं मा कृणुत दासास्माकं बहवो भवन्त्वश्वावङ्गोमन्मय्यस्तु पुष्टमों भूर्भुवः स्वर्जनदोमिति १८ तूष्णीमध्यात्मं निनयति १९ तेजोऽस्यमृतमसीति ललाटमालभते २० अथोदकमाहारयत्याचमनीयं भो इति २१ जीवाभिराचम्य २२ अथास्मै मधुपर्कं वेदयन्ते द्व्यनुचरो मधुपर्को भो इति २३ द्वाभ्यां शाखाभ्यामधस्तादेकयोपरिष्टात्सापिधानम् २४ मधु वाता ऋतायत इत्येताभिरेवाभिमन्त्रणम् २५ तथा प्रतिमन्त्रणम् २६ १ ९०

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः
माध्वीर्गावो भवन्तु नः

मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः

माध्वीर्नः सन्त्वोषधीः

मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः
मधु द्यौरस्तु नः पिता १

तत्सूर्यस्य त्वा चक्षुषा प्रतीक्ष इति प्रतीक्षते २ अयुतोऽहं देवस्य त्वा सवितुरिति प्रतिगृह्य पुरोमुखं प्राग्दण्डं निदधाति ३ पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थ इति भूमौ प्रतिष्ठाप्य ४ द्वाभ्यामङ्गुलिभ्यां प्रदक्षिणमाचाल्यानामिकयाङ्गुल्याङ्गुष्ठेन च संगृह्य प्राश्नाति ५ ओं भूस्तत्सवितुर्वरेण्यं भूः स्वाहेति प्रथमम् ६ भर्गो देवस्य धीमहि भुवः स्वाहेति द्वितीयम् ७ धियो यो नः प्रचोदयात्स्वः स्वाहेति तृतीयम् ८ वयं देवस्य धीमहि जनत्स्वाहेति चतुर्थम् ९ तुरं देवस्य भोजनं वृधत्स्वाहेति पञ्चनम् १० करत्स्वाहेति षष्ठम् ११ रुहत्स्वाहेति सप्तमम् १२ महत्स्वाहेत्यष्टमम् १३ तत्स्वाहेति नवमम् १४ शं स्वाहेति दशमम् १५ ओमित्येकादशम् १६ तूष्णीं द्वादशम् १७ तस्य भूयोमात्रमिव भुक्त्वा ब्राह्मणाय श्रोत्रियाय प्रयछेत् १८ श्रोत्रियालाभे वृषलाय प्रयच्छेत् १९ अथाप्ययं निगमो भवति । सोममेतत्पिबत यत्किं चाश्नीत ब्राह्मणाः । माब्राह्मणायोच्छिष्टं दात मा सोमं पात्वसोमप इति २० २ ९१

दधि च मधु च ब्राह्मो मधुपर्कः १ पायस ऐन्द्रो मधुपर्कः २ मधु चाज्यं च सौम्यो मधुपर्कः ३ मन्थश्चाज्यं च पौष्णो मधुपर्कः ४ क्षीरं चाज्यं च सारस्वतो मधुपर्कः ५ सुरा चाज्यं च मौसलो मधुपर्कः ६ स खल्वेष द्वये भवति सौत्रामण्यां च राजसूये च ७ उदकं चाज्यं च वारुणो मधुपर्कः ८ तैलं चाज्यं च श्रावणो मधुपर्कः ९ तैलश्च पिण्डश्च पारिव्राजको मधुपर्कः १० इति खल्वेष नवविधो मधुपर्को भवति ११ अथास्मै गां वेदयन्ते गौर्भो इति १२ तान्प्रतिमन्त्रयते । भूतमसि भवदस्यन्नं प्राणो बहुर्भव । ज्येष्ठं यन्नाम नामत ओं भूर्भुवः स्वर्जनदोमिति १३ अतिसृजति

मातादित्यानां दुहिता वसूनां स्वसा रुद्राणाममृतस्य नाभिः
प्र णो वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट

ओं तृणानि गौरत्त्वित्याह १४ सूयवसादिति प्रतिष्ठमानामनुमन्त्रयते १५ नालोहितो मधुपर्को भवति १६ नानुज्ञानमधीमह इति कुरुतेत्येव ब्रूयात् १७ स्वधिते मैनं हिंसीरिति शस्त्रं प्रयच्छति १८ पाप्मानं मेऽप जहीति कर्तारमनुमन्त्रयते १९ आग्नेयीं वपां कुर्युः २० अपि वा ब्राह्मण एव प्राश्नीयात्तद्देवतं हि तद्धविर्भवति २१ अथास्मै स्नानमनुलेपनं मालाभ्यञ्जनमिति २२ यदत्रोपसमाहार्यं भवति तदुपसमाहृत्य २३ अथोपासकाः प्राप्योपासकाः स्मो भो इति वेदयन्ते २४ तान्प्रतिमन्त्रयते । भूयांसो भूयास्म ये च नो भूयसः कार्ष्टापि च नोऽन्ये भूयांसो जायन्ताम् २५ अस्य च दातुरिति दातारमोक्षते २६ अथान्नाहाराः प्राप्यान्नाहाराः स्मो भो इति त्वेदयन्ते २७ तान्प्रतिमन्त्रयते । अन्नादा भूयास्म ये च नोऽन्नादान्कार्ष्टापि च नोऽन्येऽन्नादा भूयांसो जायन्ताम् २८ अस्य च दातुरिति दातारमीक्षते २९ आहृतेऽन्ने जुहोति यत्काम कामयमाना इत्येतया ३०

यत्काम कामयमाना इदं कृरामसि ते हविः
तन्नः सर्वं समृध्यतामथैतस्य हविषो वीहि स्वाहेति ३१

एष आचार्यकल्प एष ऋत्विक्कल्प एष संयुक्तकल्प एष विवाहकल्प एषोऽतिथिकल्प एषोऽतिथिकल्पः ३२ ३ ९२

इत्यथर्ववेदे कौशिकसूत्रे द्वादशोऽध्यायः समाप्तः

अथाद्भुतानि १ वर्षे २ यक्षेषु ३ गोमायुवदने ४ कुले कलहिनि ५ भूमिचले ६ आदित्योपप्लवे ७ चन्द्रमसश्च ८ औषस्यामनुद्यत्याम् ९ समायां दारुणायाम् १० उपतारकशङ्कायाम् ११ ब्राह्मणेष्वायुधिषु १२ दैवतेषु नृत्यत्सु च्योतत्सु हसत्सु गायत्सु १३ लाङ्गलयोः संसर्गे १४ रज्ज्वोस्तन्त्वोश्च १५ अग्निसंसर्गे १६ यमवत्सायां गवि १७ वडवागर्दभ्योर्मानुष्यां च १८ यत्र धेनवो लोहितं दुहते १९ अनडुहि धेनुं धयति २० धेनौ धेनुं धयन्त्याम् २१ आकाशफेने २२ पिपीलिकानाचारे २३ नीलमक्षानाचारे २४ मधुमक्षानाचारे २५ अनाज्ञाते २६ अवदीर्णे २७ अनुदक उदकोन्मीले २८ तिलेषु समतैलेषु २९ हविःष्वभिमृष्टेषु ३० प्रसव्येष्वावर्तेषु ३१ यूपे विरोहति ३२ उल्कायाम् ३३ धूमकेतौ सप्तर्षीनु-

पधूपयति ३४ नक्षत्रेषु पतापतेषु ३५ मांसमुखे निपतति ३६ अनग्नावबभासे ३७ अग्नौ श्वसति ३८ सर्पिषि तैले मधुनि च विष्यन्दे ३९ ग्राम्येऽग्नौ शालां दहति ४० आगान्तौ च ४१ वंशे स्फोटति ४२ कुम्भोदधाने विकसत्युखायां सक्तुधान्यां च ४३ १ ९३

अथ यत्रैतानि वर्षाणि वर्षन्ति घृतं मांसं मधु च यद्धिरण्यं यानि चाप्यन्यानि घोराणि वर्षाणि वर्षन्ति तत्पराभवति कुलं वा ग्रामो वा जनपदो वा १ तत्र राजा भूमिपतिर्विद्वांसं ब्रह्माणमिच्छेत् २ एष ह वै विद्वान्यद्भृग्वङ्गिरोवित् ३ एते ह वा अस्य सर्वस्य शमयितारः प्रालयितारो यद्भृग्वङ्गिरसः ४ स आहोपकल्पयध्वमिति ५ तदुपकल्पयन्ते कंसमहते वसने शुद्धमाज्यं शान्ता ओषधीर्नवमुदकुम्भम् ६ त्रीणि पर्वाणि कर्मणः पौर्णमास्यमावास्ये पुण्यं नक्षत्रम् ७ अपि चेदेव यदा कदा चिदार्ताय कुर्यात् ८ स्नातोऽहतवसनः सुरभिर्व्रतवान्कर्मण्य उपवसत्येकरात्रं त्रिरात्रं षड्रात्रं द्वादशरात्रं वा ९ द्वादश्याः प्रातर्यत्रैवादः पतितं भवति तत उत्तरमग्निमुपसमाधाय १० परिसमुह्य पर्युक्ष्य परिस्तीर्य बर्हिरुदपात्रमुपसाद्य परिचरणेनाज्यं परिचर्य ११ नित्यान्पुरस्ताद्धो-मान्हुत्वाज्यभागौ च १२ अथ जुहोति १३

घृतस्य धारा इह या वर्षन्ति पक्वं मांसं मधु च यद्धिरण्यम्
द्विषन्तमेता अनु यन्तु वृष्टयोऽपां वृष्टयो बहुलाः सन्तु मह्यम्

लोहितवर्षं मधुपांसुवर्षं यद्वा वर्षं घोरमनिष्टमन्यत्
द्विषन्तमेते अनु यन्तु सर्वे पराञ्चो यन्तु निवर्तमानाः

अग्नये स्वाहेति हुत्वा १४ दिव्यो गन्धर्व इति मातृनामभिर्जुहुयात् १५ वरमनड्वाहं ब्राह्मणः कर्त्रे दद्यात् १६ सीरं वैश्योऽश्वं प्रादेशिको ग्रामवरं राजा १७ सा तत्र प्रायश्चित्तिः १८ २ ९४

अथ यत्रैतानि यक्षाणि दृश्यन्ते तद्यथैतन्मर्कटः श्वापदो वायसः पुरुषरूपमिति तदेवमाशङ्क्यमेव भवति १ तत्र जुहुयात् २

यन्मर्कटः श्वापदो वायसो यदीदं राष्ट्रं जातवेदः पतानि पुरुषरक्षसमिषिरं य-
त्पताति
द्विषन्तमेते अनु यन्तु सर्वे पराञ्चो यन्तु निवर्तमानाः

अग्नये स्वाहेति हुत्वा ३ दिव्यो गन्धर्व इति मातृनामभिर्जुहुयात् ४ सा तत्र प्रायश्चित्तिः ५ ३ ९५

अथ ह गोमायू नाम मण्डूकौ यत्र वदतस्तद्यन्मन्यन्ते मां प्रति वदतो मां प्रति वदत इति तदेवमाशङ्क्यमेव भवति १ तत्र जुहुयात् २

यद्गोमायू वदतो जातवेदोऽन्यया वाचाभि जञ्जभातः
रथंतरं बृहच्च सामैतद्द्विषन्तमेतावभि नानदैताम्

रथंतरेण त्वा बृहच्छमयामि बृहता त्वा रथंतरं शमयामि
इन्द्राग्नी त्वा ब्रह्मणा वावृधानावायुष्मन्तावुत्तमं त्वा कराथः

इन्द्राग्निभ्यां स्वाहेति हुत्वा ३ दिव्यो गन्धर्व इति मातृनामभिर्जुहुयात् ४ सा तत्र प्रायश्चित्तिः ५ ४ ९६

अथ यत्रैतत्कुलं कलहि भवति तन्निर्ऋतिगृहीतमित्याचक्षते १ तत्र जुहुयात् २ आरादरातिमिति द्वे ३
अयाश्चाग्नेऽस्यनभिशस्तिश्च सत्यमित्त्वमया असि
अयासा मनसा कृतोऽयास्यं हव्यमूहिषे
अया नो धेहि भेषजं

स्वाहेत्यग्नौ हुत्वा ४ तत्रैवैतान्होमाञ्जुहुयात् ५

आरादग्निं क्रव्यादे निरूहञ्जीवातवे ते परिधिं दधामि
इन्द्राग्नी त्वा ब्रह्मणा वावृधानावायुष्मन्तावुत्तमं त्वा कराथः

इन्द्राग्निभ्यां स्वाहेति हुत्वा ६ अपेत एतु निर्ऋतिरित्येतेन सूक्तेन जुहुयात् ७

अपेत एतु निर्ऋतिर्नेहास्या अपि किं चन
अपास्याः सत्वनः पाशान्मृत्यूनेकशतं नुदे

ये ते पाशा एकशतं मृत्यो मर्त्याय हन्तवे
तांस्ते यज्ञस्य मायया सर्वाँ अप यजामसि

निरितो यन्तु नैर्ऋत्या मृत्यव एकशतं परः
सेधामैषां यत्तमः प्राणं ज्योतिश्च दध्महे

ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः
तेभ्यो अस्मान्वरुणः सोम इन्द्रो विश्वे मुञ्चन्तु मरुतः स्वर्काः

ब्रह्म भ्राजदुदगादन्तरिक्षं दिवं च ब्रह्मावाधूष्टामृतेन मृत्युम्
ब्रह्मोपद्रष्टा सुकृतस्य साक्षाद्ब्रह्मास्मदप हन्तु शमलं तमश्च ८

वरमनड्वाहमिति समानम् ९ ५ ९७

अथ यत्रैतद्भूमिचलो भवति तत्र जुहुयात् १

अच्युता द्यौरच्युतमन्तरिक्षमच्युताभूमिर्दिशो अच्युता इमाः
अच्युतोऽयं रोधावरोधाद्ध्रुवो राष्ट्रे प्रति तिष्ठाति जिष्णुः

यथा सूर्यो दिवि रोचते यथान्तरिक्षं मातरिश्वाभिवस्ते
यथाग्निः पृथिवीमा विवेशैवायं ध्रुवो अच्युतो अस्तु जिष्णुः

यथा देवो दिवि स्तनयन्वि राजति यथा वर्षं वर्षकामाय वर्षति
यथापः पृथिवीमा विविशुरेवायं ध्रुवो अच्युतो अस्तु जिष्णुः

यथा पुरीषं नद्यः समुद्रमहोरात्रे अप्रमादं क्षरन्ति
एवा विशः संमनसो हवं मेऽप्रमादमिहोपा यन्तु सर्वाः

दृंहतां देवी सह देवताभिर्ध्रुवा दृढाच्युता मे अस्तु भूमिः
सर्वपाप्मानमपनुद्यास्मदमित्रान्मे द्विषतोऽनु विध्यतु

पृथिव्यै स्वाहेति हुत्वा २ आ त्वाहार्षं ध्रुवा द्यौः सत्यं बृहदित्येतेनानु-
वाकेन जुहुयात् ३ सा तत्र प्रायश्चित्तिः ४ ६ ९८

अथ यत्रैतदादित्यं तमो गृह्णाति तत्र जुहुयात् १

दिव्यं चित्रमृतूया कल्पयन्तमृतूनामुग्रं भ्रमयन्नुदेति
तदादित्यः प्रतरन्नेतु सर्वत आप इमां लोकाननुसंचरन्ति

ओषधीभिः संविदानाविन्द्राग्नी त्वाभि रक्षताम्
ऋतेन सत्यवाकेन तेन सर्वं तमो जहि

आदित्याय स्वाहेति हुत्वा २ विषासहिं सहमानमित्येतेन सूक्तेन जुहुयात्
३ रोहितैरुपतिष्ठते ४ सा तत्र प्रायश्चित्तिः ५ ७ ९९

अथ यत्रैतच्चन्द्रमसमुपप्रवति तत्र जुहुयात् १

राहू राजानं त्सरति स्वरन्तमैनमिह हन्ति पूर्वः
सहस्रमस्य तन्व इह नाश्याः शतं तन्वो वि नश्यन्तु

चन्द्राय स्वाहेति हुत्वा २ शकधूमं नक्षत्राणीत्येतेन सूक्तेन जुहुयात् ३
सा तत्र प्रायश्चित्तिः ४ ८ १००

अथ यत्रैतदौषसी नोदेति तत्र जुहुयात् १

उदेतु श्रीरुषसः कल्पयन्ती पूल्यान्कृत्वा पलित एतु चारः
ऋतून्बिभ्रती बहुधा विरूपान्मह्यं भव्यं विदुषी कल्पयाति

औषस्यै स्वाहेति हुत्वा २ दिव्यो गन्धर्व इति मातृनामभिर्जुहुयात् ३ सा

तत्र प्रायश्चित्तिः ४ ९ १०१

अथ यत्रैतत्समा दारुणा भवति तत्र जुहुयात् १

या समा रुशत्येति प्राजापत्यान्वि धूनुते
तृप्तिं यां देवता विदुस्तां त्वा सं कल्पयामसि

व्याधकस्य मातरं हिरण्यकुक्षीं हरिणीम्
तां त्वा सं कल्पयामसि

यत्ते घोरं यत्ते विषं तद्द्विषत्सु नि दध्मस्यमुष्मिन्निति ब्रूयात् २ शिवेना-
स्माकं समे शान्त्या सहायुषा समायै स्वाहेति हुत्वा ३ समास्त्वाग्न इत्येतेन
सूक्तेन जुहुयात् ४ सा तत्र प्रायश्चित्तिः ५ १० १०२

अथ यत्रैतदुपतारकाः शङ्कन्ते तत्र जुहुयात् १

रेवतीः शुभ्रा इषिरा मदन्तीस्त्वचो धूममनु ताः सं विशन्तु
परेणापः पृथिवीं सं विशन्त्वाप इमां लोकाननुसंचरन्तु

अद्भ्यः स्वाहेति हुत्वा २ समुत्पतन्तु प्र नभस्वेति वर्षीर्जुहुयात् ३ सा तत्र
प्रायश्चित्तिः ४ ११ १०३

अथ यत्रैतद्ब्राह्मणा आयुधिनो भवन्ति तत्र जुहुयात् १
य आसुरा मनुष्या आत्तधन्वः पुरुषमुखाश्चरानिह
देवा वयं मनुष्यास्ते देवाः प्र विशामसि

इन्द्रो नो अस्तु पुरोगवः स नो रक्षतु सर्वत
इन्द्राय स्वाहेति हुत्वा २

मा नो विदन्नमो देववधेभ्य इत्येताभ्यां सूक्ताभ्यां जुहुयात् ३ सा तत्र प्रा-
यश्चित्तिः ४ १२ १०४

अथ यत्रैतद्देवतानि नृत्यन्ति च्योतन्ति हसन्ति गायन्ति वान्यानि वा रूपाणि कुर्वन्ति य आसुरा मनुष्या मा नो विदन्नमो देववधेभ्य इत्यभयैर्जुहुयात् १ सा तत्र प्रायश्चित्तिः २ १३ १०५

अथ यत्रैतल्लाङ्गले संसृजतः पुरोडाशं श्रपयित्वा १ अरण्यस्यार्धमभिव्रज्य २ प्राचीं सीतां स्थापयित्वा ३ सीताया मध्ये प्राञ्चमिध्ममुपसमाधाय ४ परिसमुह्य पर्युक्ष्य परिस्तीर्य बर्हिः शम्याः परिधीन्कृत्वा ५ अथ जुहोति । वित्तिरसि पुष्टिरसि श्रीरसि प्राजापत्यानां तां त्वाहं मयि पुष्टिकामो जुहोमि स्वाहा ६

कुमुद्वती पुष्करिणी सीता सर्वाङ्गशोभनी
कृषिः सहस्रप्रकारा प्रत्यष्टा श्रीरियं मयि

उर्वीं त्वाहुर्मनुष्याः श्रियं त्वा मनसो विदुः
आशयेऽन्नस्य नो धेह्यनमीवस्य शुष्मिणः

पर्जन्यपत्नि हरिण्यभिजितास्यभि नो वद
कालनेत्रे हविषो नो जुषस्व तृप्तिं नो धेहि द्विपदे चतुष्पदे

याभिर्देवा असुरानकल्पयन्यातून्मनून्गन्धर्वान्राक्षसांश्च
ताभिर्नो अद्य सुमना उपा गहि सहस्रापोषं सुभगे रराणा

हिरण्यस्रक्पुष्करिणी श्यामा सर्वाङ्गशोभनी
कृषिर्हिरण्यप्रकारा प्रत्यष्टा श्रीरियं मयि

अश्विभ्यां देवि सह संविदाना इन्द्रेण राधेन सह पुष्ट्या न आ गहि
विशस्त्वा रासन्तां प्रदिशोऽनु सर्वा अहोरात्रार्धमासमासा आर्तवा ऋतुभिः सह

भर्त्री देवानामुत मर्त्यानां भर्त्री प्रजानामुत मानुषाणाम्
हस्तिभिरितरासैः क्षेत्रसारथिभिः सह
हिरण्यैरश्वैरा गोभिः प्रत्यष्टा श्रीरियं मयि ७

अत्र शुनासीराण्यनुयोजयेत् ८ वरमनड्वाहमिति समानम् ९ १४ १०६

अथ यत्रैतत्सृजन्त्योर्वा कृन्तन्त्योर्वा नाना तन्तू संसृजतो मनायै तन्तुं प्रथम-
मित्येतेन सूक्तेन जुहुयात् १

मनायै तन्तुं प्रथमं पश्येदन्या अतन्वत
तन्नारीः प्र ब्रवीमि वः साध्वीर्वः सन्तूर्वरीः

साधुर्वस्तन्तुर्भवतु साधुरेतु रथो वृतः
अथो होर्वरीर्यूयं प्रातर्वोढवे धावत

खर्गला इव पत्वरीरपामुग्रमिवायनम्
पतन्तु पत्वरीरिवोर्वरीः साधुना पथा

अवाच्यौ ते तोतुद्येते तोदेनाश्वतराविव
प्र स्तोममुर्वरीणां शशयानामस्ताविषम्

नारी पञ्चमयूखं सूत्रवत्कृणुते वसु
अरिष्टो अस्य वस्ता प्रेन्द्र वास उतोदिर २

वासः कर्त्रे दद्यात् ३ सा तत्र प्रायश्चित्तिः ४ १४ १०७

अथ यत्रैतदग्निनाग्निः संसृज्यते भवतं नः समनसौ समोकसावित्येतेन सू-
क्तेन जुहुयात् १

भवतं नः समनसौ समोकसावरेपसौ
मा हिंसिष्टं यज्ञपतिं मा यज्ञं जातवेदसौ शिवौ भवतमद्य नः

अग्निनाग्निः संसृज्यते कविर्बृहस्पतिर्युवा
हव्यवाड्जुह्वास्यः

त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्सता
सखा सख्या समिध्यमे

पाहि नो अग्न एकया पाहि न उत द्वितीयया
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो

समीची माहनी पातामायुष्मत्या ऋचो मा सत्सि
तनूपात्साम्नो वसुविदं लोकमनुसंचराणि २

रुक्मं कर्त्रे दद्यात् ३ सा तत्र प्रायश्चित्तिः ४ १६ १०८

अथ यत्रैतदयमसूर्यमौ जनयति तां शान्त्युदकेनाभ्युक्ष्य दोहयित्वा १ तस्या एव गोर्दुग्धे स्थालीपाकं श्रपयित्वा २ प्राञ्चमिध्ममुपसमाधाय ३ परिसमुह्य पर्युक्ष्य परिस्तीर्य बर्हिरुदपात्रमुपसाद्य ४ एकैकयैषा सृष्ट्या सं बभूवेत्येतेन सूक्तेनाज्यं जुह्वन् ५ उदपात्रे संपातानानयति ६ उत्तमं संपातमोदने प्रत्यानयति ७ ततो गां च प्राशयति वत्सौ चोदपात्रादेनानाचामयति च संप्रोक्षति च ८ तां तस्यैव दद्यात् ९ सा तत्र प्रायश्चित्तिः १० १७ १०९

अथ चेद्वडवा वा गर्दभी वा स्यादेवमेव प्राञ्चमिध्ममुपसमाधाय १ एवं परिस्तीर्य २ एवमुपसाद्य ३ एतेनैव सूक्तेनाज्यं जुह्वन् ४ उदपात्रे संपातानानयति ५ उदपात्रादेनानाचामयति च संप्रोक्षति च ६ तां तस्यैव दद्यात् ७ सा तत्र प्रायश्चित्तिः ८ १८ ११०

अथ चेन्मानुषी स्यादेवमेव प्राञ्चमिध्ममुपसमाधाय १ एवं परिस्तीर्य २ एवमुपसाद्य ३ उपस्थे जातकावाधाय ४ एतेनैव सूक्तेनाज्यं जुह्वन् ५ अमीषां मूर्ध्नि स मातुः पुत्रयोरित्यनुपूर्वं संपातानानयति ६ उदपात्र उत्तरान्संपातान् ७ उदपात्रादेनानाचामयति च संप्रोक्षति च ८ तां तस्यैव दद्यात् ९ सा तत्र प्रायश्चित्तिः १० तस्या निष्क्रयो यथार्हं यथासंपद्वा ११ १९ १११

अथ यत्रैतद्धेनवो लोहितं दुहते यः पौरुषेयेण क्रविषा समङ्क इत्येताभिश्चत-

सृभिर्जुहुयात् १ वरां धेनुं कर्त्रे दद्यात् २ सा तत्र प्रायश्चित्तिः ३ २० ११२

अथ यत्रैतदनड्वान्धेनुं धयति तत्र जुहुयात् १

अनड्वान्धेनुमधयदिन्द्रो गो रूपमाविशत्
स मे भूतिं च पुष्टिं च दीर्घमायुश्च धेहि नः

इन्द्राय स्वाहेति हुत्वा २ मा नो विदन्नमो देववधेभ्य इत्येताभ्यां सूक्ता-भ्यां जुहुयात् ३ सा तत्र प्रायश्चित्तिः ४ २१ ११३

अथ यत्रैतद्धेनुर्धेनुं धयति तत्र जुहुयात् १

योगक्षेमं धेनुं वाजपत्नीमिन्द्राग्निभ्यां प्रेषिते जज्ञभाने
तस्मान्मामग्ने परि पाहि घोरात्प्र नो जायन्तां मिथुनानि रूपशः

इन्द्राग्निभ्यां स्वाहेति हुत्वा २ दिव्यो गन्धर्व इति मातृनामभिर्जुहुयात् ३ सा तत्र प्रायश्चित्तिः ४ २२ ११४

अथ यत्रैतद्गौर्वाश्वो वाश्वतरो वा पुरुषो वाकाशफेनमवगन्धयति तत्र जुहुयात् १
पयो देवेषु पय ओषधीषु पय आशासु पयोऽन्तरिक्षे
तन्मे धाता च सविता च धत्तां विश्वे तद्देवा अभिसंगृणन्तु

पयो यदप्सु पय उस्त्रियासु पय उत्सेषूत पर्वतेषु
तन्मे धाता च सविता च धत्तां विश्वे तद्देवा अभिसंगृणन्तु

यन्मृगेषु पय आविष्टमस्ति यदेजति पतति यत्पततत्रिषु तन्मे धाता च स-विता च धत्तां विश्वे तद्देवा अभिसंगृणन्तु

यानि पयांसि दिव्यार्पितानि यान्यन्तरिक्षे बहुधा बहूनि । तेषामीशानं वशिनी नो अद्य प्रदत्ता द्यावापृथिवी अहृणीयमाना इत्येतेन सूक्तेन जुहुयात्

२ सा तत्र प्रायश्चित्तिः ३ २३ ११५

अथ यत्रैतत्पिपीलिका अनाचाररूपा दृश्यन्ते तत्र जुहुयात् १ भुवाय स्वाहा भुवनाय स्वाहा भुवनपतये स्वाहा भुवां पतये स्वाहावोषाय स्वाहा विनताय स्वाहा शतारुणाय स्वाहा २

यः प्राच्यां दिशि श्वेतपिपीलिकानां राजा तस्मै स्वाहा
यो दक्षिणायां दिशि कृष्णपिपीलिकानां राजा तस्मै स्वाहा
यः प्रतीच्यां दिशि रजतपिपीलिकानां राजा तस्मै स्वाहा
य उदीच्यां दिशि रोहितपिपीलिकानां राजा तस्मै स्वाहा
यो ध्रुवायां दिशि बभ्रुपिपीलिकानां राजा तस्मै स्वाहा
यो व्यध्वायां दिशि हरितपिपीलिकानां राजा तस्मै स्वाहा
य ऊर्ध्वायां दिश्यरुणपिपीलिकानां राजा तस्मै स्वाहा ३

ताश्चेदेतावता न शाम्येयुस्तत उत्तरमग्निमुपसमाधाय ४ शरमयं बर्हिरुभ-यतः परिच्छिन्नं प्रसव्यं परिस्तीर्य ५ विषावध्वस्तमिङ्गिडमाज्यं शाकपला-शेनोत्पूतं बाधकेन स्रुवेण जुहोति ६

उत्तिष्ठत निर्द्रवत न व इहास्त्वित्यञ्जनम्
इन्द्रो वः सर्वासां साकं गर्भानाण्डानि भेत्स्यति
फङ्गताः पिपीलिका इति ७

इन्द्रो वो यमो वो वरुणो वोऽग्निवो वायुर्वः सूर्यो वश्चन्द्रो वः प्रजापतिर्व ई-शानो व इति ८ २४ ११६

अथ यत्रैतन्नीलमक्षा अनाचाररूपा दृश्यन्ते तत्र जुहुयात् १

या मर्त्यैः सरथं यान्ति घोरा मृत्योर्दूत्यः क्रविशः सं बभूवुः
शिवं चक्षुरुत घोषः शिवानां शं नो अस्तु द्विपदे शं चतुष्पदे

शान्तं चक्षुरुत वायसीनां या चासां घोरा मनसो विसृष्टिः

मनसस्पते तन्वा मा पाहि घोरान्मा वि रिक्षि
तन्वा मा प्रजया मा पशुभिर्वायवे स्वाहेति हुत्वा २

वात आ वातु भेषजमित्येतेन सूक्तेन जुहुयात् ३

वात आ वातु भेषजं शंभु मयोभु नो हृदे
प्र ण आयूंषि तार्षत्

उत वात पितासि न उत भ्रातोत नः सखा
स नो जीवातवे कृधि

यददो वात ते गृहे निहितं भेषजं गुहा
तस्य नो धेहि जीवस इत्येतेन सूक्तेन जुहुयात् ४

सा तत्र प्रायश्चित्तिः ५ २५ ११७

अथ यत्रैतन्मधुमक्षिका अनाचाररूपा दृश्यन्ते मधु वात ऋतायत इत्येतेन सूक्तेन जुहुयात् १ सा तत्र प्रायश्चित्तिः २ २६ ११८

अथ यत्रैतदनाज्ञातमद्भुतं दृश्यते तत्र जुहुयात् १

यदज्ञातमनाम्नातमर्थस्य कर्मणो मिथः
अग्ने त्वं नस्तस्मात्पाहि स हि वेत्थ यथायथम्

अग्नये स्वाहा २ वायो सूर्य चन्द्रेति च ३ पुरुषसंमितोऽर्थः कर्मार्थः पुरु-षसंमितः
वायुर्मा तस्मात्पातु स हि वेत्थ यथायथम्

वायवे स्वाहा ४ अग्निर्मा सूर्यो मा चन्द्रो मेति च ५ २७ ११९

अथ यत्रैतद्ग्रामे वावसाने वाग्निशरणे वा समज्यायां वावदीर्येत चतस्रो

धेनव उपक्लृप्ता भवन्ति श्वेता कृष्णा रोहिणी सुरूपा चतुर्थी १ तासामेतद्द्वादशरात्रं संदुग्धं नवनीतं निदधाति २ द्वादश्याः प्रातर्यत्रैवादोऽवदीर्णं भवति तत उत्तरमग्निमुपसमाधाय ३ परिसमुह्य पर्युक्ष्य परिस्तीर्य बर्हिः श्वेताया आज्येन संनीय ४ अग्निर्भूम्यामिति तिसृभिरभिमन्त्र्यालभ्य ५ अथ जुहुयात् ६ तथा दक्षिणार्धे ७ तथा पश्चार्धे ८ उत्तरार्धे संस्थाप्य वास्तोष्पत्यैर्जुहुयात् ९ अवदीर्णे संपातानानीय संस्थाप्य होमान् १० अवदीर्णं शान्त्युदकेन संप्रोक्ष्य ११ ता एव ब्राह्मणो दद्यात् १२ सीरं वैश्योऽश्वं प्रादेशिको ग्रामवरं राजा १३ सा तत्र प्रायश्चित्तिः १४ २८ १२०

अथ यत्रैतदनुदक उदकोन्मीलो भवति हिरण्यवर्णा इत्यपां सूक्तैर्जुहुयात् १ सा तत्र प्रायश्चित्तिः २ २९ १२१

अथ यत्रैतत्तिलाः समतैला भवन्ति तत्र जुहुयात् १ अनूनाय स्वाहा । अक्षिताय स्वाहा । अपरिमिताय स्वाहा । परिपूर्णाय स्वाहा २ स यं द्विष्यात्तस्याशायां लोहितं ते प्र सिञ्चामीति दक्षिणामुखः प्रसिञ्चेत् ३ ३० १२२

अथ यत्रैतद्रूपां वा हवींषि वा वयांसि द्विपदचतुष्पदं वाभिमृश्यावगच्छेयुर्ये अग्नयो नमो देववधेभ्य इत्येताभ्यां सूक्ताभ्यां जुहुयात् १ सा तत्र प्रायश्चित्तिः २ ३१ १२३

अथ यत्रैतत्कुमारस्य कुमार्या वा द्वावावर्तौ मूर्धन्यौ भवतः सव्यावृदेको देशावर्तस्तत्र जुहुयात् १
त्वष्टा रूपाणि बहुधा विकुर्वञ्जनयन्प्रजा बहुधा विश्वरूपाः
स मे करोत्वविपरीतमस्माननुपूर्वं कल्पयतामिहैव
त्वष्ट्रे स्वाहा २

अन्तर्गर्भेषु बहुधा सं तनोति जनयन्प्रजा बहुधा विश्वरूपाः
स मे करोत्वविपरीतमस्माननुपूर्वं कल्पयतामिहैव
त्वष्ट्रे स्वाहा ३

यद्युन्मृष्टं यदि वाभिमृष्टं तिरश्चीनर्थ उत मर्मृजन्ते
शिवं तद्देवः सविता कृणोतु प्रजापतिः प्रजाभिः संविदानः
त्वष्ट्रे स्वाहा ४

सव्यावृत्तान्युत या विश्वरूपा प्रत्यग्वृत्तान्युत या ते परुःषु
तान्यस्य देव बहुधा बहूनि स्योनानि शग्मानि शिवानि सन्तु
त्वष्टे स्वाहेति हुत्वा ५

त्वष्टा मे दैव्यं वच इत्येतेन सूक्तेन जुहुयात् ६ सा तत्र प्रायश्चित्तिः ७ ३२
१२४

अथ यत्रैतद्यूपो विरोहति तत्र जुहुयात् १

यूपो विरोहञ्छतशाखो अध्वरः समावृतो मोहयिष्यन्यजमानस्य लोकान्
वेदाभिगुप्तो ब्रह्मणा परिवृतोऽथर्वभिः शान्तः सुकृतामेतु लोकम्

यूपो ह्यरुक्षद्द्विषतां वधाय न मे यज्ञो यजमानश्च रिष्यात्
सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि

वनस्पतये स्वाहेति हुत्वा २ वनस्पतिः सह देवैर्न आगन्निति जुहुयात् ३
सा तत्र प्रायश्चित्तिः ४ ३३ १२५

अथ यत्रैतद्दिवोल्का पतति तदयोगक्षेमाशङ्कं भवत्यवृष्ट्याशङ्कं वा १ तत्र राजा भूमिपतिर्विद्वांसं ब्रह्माणं वृणीयात् २ स वृतोऽरण्यस्यार्धमभिव्रज्य तत्र द्वादशरात्रमनुशुष्येत् ३ स खलु पूर्वं नवरात्रमारण्यशाकमूलफलभक्षश्चाथोत्तरं त्रिरात्रं नान्यदुदकात् ४ श्वो भूते सप्त धेनव उपक्लृप्ता भवन्ति श्वेता कृष्णा रोहिणी नीली पाटला सुरूपा बहुरूपा सप्तमी ५ तासामेतद्द्वादशरात्रं संदुग्धं नवनीतं निदधाति ६ द्वादश्याः प्रातर्यत्रैवासौ पतिता भवति तत उत्तरमग्नि-मुपसमाधाय ७ परिसमुह्य पर्युक्ष्य परिस्तीर्य बर्हिः ८ अथामुं नवनीतं सौवर्णे पात्रे विलाप्य सौवर्णेन स्रुवेण रक्षोघ्नैश्च सूक्तैर्यामाहुस्तारकैषा विके-

शीत्येतेन सूक्तेनाज्यं जुह्वन् ९ अवपतिते संपातानानीय संस्थाप्य होमान् १० अवपतितं शान्त्युदकेन संप्रोक्ष्य ११ ता एव ब्राह्मणो दद्यात् १२ सीरं वैश्योऽश्वं प्रादेशिको ग्रामवरं राजा १३ सा तत्र प्रायश्चित्तिः १४ ३४ १२६

अथ यत्रैतद्धूमकेतुः सप्तर्षीनुपधूपयति तदयोगक्षेमाशङ्कमित्युक्तम् १ पञ्च पशवस्तायन्ते वारुणः कृष्णो गौर्वाजो वाविर्वा हरिर्वायव्यो बहुरूपो दिश्यो मारुती मेष्याग्नेयः प्राजापत्यश्च क्षीरौदनोऽपां नप्त्र उद्रः २ उतेयं भूमिरिति त्रिर्वरुणमभिष्टूय ३ अप्सु ते राजन्निति चतसृभिर्वारुणस्य जुहुयात् ४

वायवा रुन्द्धि नो मृगानस्मभ्यं मृगयद्भ्यः
स नो नेदिष्ठमा कृधि वातो हि रशनाकृत इति वायव्यस्य ५

आशानामिति दिश्यस्य ६

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे
मरुद्भिरग्न आ गहीति मारुतस्य ७

अपामग्निरित्याग्नेयस्य ८ प्रजापतिः सलिलादिति प्राजापत्यस्य ९ अपां सूक्तैर्हिरण्यशकलेन सहोर्द्रमप्सु प्रवेशयेत् १० प्र हैव वर्षति ११ सर्वस्वं तत्र दक्षिणा १२ तस्य निष्क्रयो यथार्हं यथासंपद्वा १३ ३५ १२७

अथ यत्रैतन्नक्षत्राणि पतापतानीव भवन्ति तत्र जुहुयात् १

यन्नक्षत्रं पतति जातवेदः सोमेन राज्ञेषिरं पुरस्तात्
तस्मान्मामग्ने परि पाहि घोरात्प्र णो जायन्तां मिथुनानि रूपशः

इन्द्राग्निभ्यां स्वाहेति हुत्वा २ सोमो राजा सविता च राजेत्येतेन सूक्तेन जुहुयात् ३

सोमो राजा सविता च राजा भुवो राजा भुवनं च राजा
शर्वो राजा शर्म च राजा त उ नः शर्म यच्छन्तु देवाः

आदित्यैर्नो बृहस्पतिर्भगः सोमेन नः सह
विश्वे देवा उर्वन्तरिक्षं त उ नः शर्म यछन्तु देवाः

उताविद्वान्निष्कृदयाथोस्त्रघ्नी यथायथम्
मा नो विश्वे देवा मरुतो हेतिमिच्छत ४

रुक्मं कर्त्रे दद्यात् ५ सा तत्र प्रायश्चित्तिः ६ ३६ १२८

अथ यत्रैतन्मांसमुखो निपतति तत्र जुहुयात् १

घोरो वज्रो देवसृष्टो न आगन्यद्वा गृहान्घोरमुता जगाम
तन्निर्जगाम हविषा घृतेन शं नो अस्तु द्विपदे शं चतुष्पदे

रुद्राय स्वाहेति हुत्वा २ भवाशर्वौ मृडतं माभि यातमित्येतेन सूक्तेन जुहु-
यात् ३ सा तत्र प्रायश्चित्तिः ४ ३७ १२९

अथ यत्रैतदनग्नाववभासो भवति तत्र जुहुयात् १

या तेऽवदीप्तिरवरूपा जातवेदोऽपेतो रक्षसां भाग एषः
रक्षांसि तया दह जातवेदो या नः प्रजां मनुष्यां सं सृजन्ते

अग्नये स्वाहेति हुत्वा २ अग्नी रक्षांसि सेधतीति प्रायश्चित्तिः ३ ३८ १३०
अथ यत्रैतदग्निः श्वसतीव तत्र जुहुयात् १

श्वेता कृष्णा रोहिणी जातवेदो यास्ते तनूस्तिरश्चीना निर्दहन्तीः श्वसन्तीः
रक्षांसि ताभिर्दह जातवेदो या नः प्रजां मनुष्यां सं सृजन्ते

अग्नये स्वाहेति हुत्वा २ अग्नी रक्षांसि सेधतीति प्रायश्चित्तिः ३ ३९ १३१

अथ यत्रैतत्सर्पिर्वा तैलं वा मधु वा विष्यन्दति यद्यामं चक्रुर्निखनन्त इत्येतेन
सूक्तेन जुहुयात् १ सा तत्र प्रायश्चित्तिः २ ४० १३२

अथ यत्रैतद्ग्राम्योऽग्निः शालां दहत्यपमित्यमप्रतीत्तमित्येतैस्त्रिभिः सूक्तैर्मैश्र-धान्यस्य पूर्णाञ्जलिं हुत्वा १ ममोभा मित्रावरुणा मह्यमापो मधुमदेरय-न्तामित्येताभ्यां सूक्ताभ्यां जुहुयात् २

ममोभा मित्रावरुणा ममोभेन्द्राबृहस्पती
मम त्वष्टा च पूषा च ममैव सविता वशे

मम विष्णुश्च सोमश्च ममैव मरुतो भवन्
सरस्वांश्च भगश्च विश्वे देवा वशे मम

ममोभा द्यावापृथिवी अन्तरिक्षं स्वर्मम
ममोमाः सर्वा ओषधीरापः सर्वा वशे मम

मम गावो ममाश्वा ममाजाश्चावयश्च ममैव पुरुषा भवन्
ममेदं सर्वमात्मन्वदेजत्प्राणद्वशे ममेति ३

अरणी प्रताप्य स्थण्डिलं परिमृज्य ४ अथाग्निं जनयेत् ५

इत एव प्रथमं जज्ञे अग्निराभ्यो योनिभ्यो अधि जातवेदाः । स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा देवो देवेभ्यो हव्यं वहतु प्रजानन्निति जनयित्वा ६ भवतं नः समनसौ समोकसावित्येतेन सूक्तेन जुहुयात् ७ सा तत्र प्रायश्चित्तिः ८
४१ १३३

अथ चेदागन्तुर्दहत्येवमेव कुर्यात् १ सा तत्र प्रायश्चित्तिः २ ४२ १३४

अथ यत्रैतद्वंश स्फोटति कपालेऽङ्गारा भवन्त्युदपात्रं बर्हिराज्यं तदादाय १ शालायाः पृष्ठमुपसर्पति २ तत्राङ्गारान्वा कपालं वोपनिदधात्या संतपनात् ३ प्राञ्चमिध्ममुपसमाधाय ४ परिसमुह्य पर्युक्ष्य परिस्तीर्य बर्हिरुदपात्रमुपसाद्य ५ परिचरणेनाज्यं परिचर्य ६ नित्यान्पुरस्ताद्धोमान्हुत्वाज्यभागौ च ७ अथ जुहोति ८

असौ वै नाम ते मातासौ वै नाम ते पिता
असौ वै नाम ते दूतः स्ववंशमधि तिष्ठति

उत्तमरात्री णाम मृत्यो ते माता तस्य ते अन्तकः पिता
समंदधानस्ते दूतः स्ववंशमधि तिष्ठति

बहवोऽस्य पाशा विततः पृथिव्यामसंख्येया अपर्यन्ता अनन्ताः
याभिर्वशानभिनिदधाति प्राणिनां यान्कांश्चेमान्प्राणभृतां जिघांसन्
स इमं दूतं नुदतु वंशपृष्ठात्स मे गच्छतु द्विषतो निवेशं मृत्यवे स्वाहा

बृहस्पतिराङ्गिरसो ब्रह्मणः पुत्रो विश्वे देवाः प्रददुर्विश्वमेजत्
स इमं दूतं नुदतु वंशपृष्ठात्स मे गच्छतु द्विषतो निवेशं बृहस्पतय आङ्गिर-
साय स्वाहा

यस्य तेऽन्नं न क्षीयते भूय एवोपजायते
यस्मै भूतं च भव्यं च सर्वमेतत्प्रतिष्ठितम्
स इमं दूतं नुदतु वंशपृष्ठात्स मे गच्छतु द्विषतो निवेशमिन्द्राय स्वाहा

मुखं देवानामिह यो बभूव यो जानाति वयुनानां समीपे
यस्मै हुतं देवता भक्षयन्ति वायुनेत्रः सुप्रणीतिः सुनीतिः
स इमं दूतं नुदतु वंशपृष्ठात्स मे गच्छतु द्विषतो निवेशमग्नये स्वाहा

यः पृथिव्यां च्यावयन्नेति वृक्षान्प्रभञ्जनेन रथेन सह संविदानः
रसान्गन्धान्भावयन्नेति देवो मातरिश्वा भूतभव्यस्य कर्ता
स इमं दूतं नुदतु वंशपृष्ठात्स मे गच्छतु द्विषतो निवेशं वायवे स्वाहा

ब्रह्मचारी चरति ब्रह्मचर्यमृचं गाथां ब्रह्म परं जिगांसन्
तं विघ्ना अनुपरियन्ति सर्वे ये अन्तरिक्षे ये च दिवि श्रितासः
तं विशो अनुपर्यन्ति सर्वाः कर्माणि लोके परिमोहयन्ति
स इमं दूतं नुदतु वंशपृष्ठात्स मे गच्छतु द्विषतो निवेद्शमादित्याय स्वाहा

यो नक्षत्रैः सरथं याति देवः संसिद्धेन रथेन सहं संविदानः
रूपंरूपं कृरावानश्चित्रभानुः सुभानुः
स इमं दूतं नुदतु वंशपृष्ठात्स मे गच्छतु द्विषतो निवेशं चन्द्राय स्वाहा

ओषधयः सोमराज्ञीर्यशस्विनीः
ता इमं दूतं नुदन्तु वंशपृष्ठात्स मे गच्छतु द्विषतो निवेशमोषधीभ्यः सोमरा-ज्ञीभ्यः स्वाहा

ओषधयो वरुणराज्ञीर्यशस्विनीः
ता इमं दूतं नुदन्तु वंशपृष्ठात्स मे गच्छतु  द्विषतो निवेशमोषधीभ्यो वरुणरा-ज्ञीभ्यः स्वाहा

अष्टस्थूणो दशपक्षो यदृच्छजो वनस्पते
पुत्रांश्चैव पशूंश्चाभि रक्ष वनस्पते

यो वनस्पतीनामुपतापो बभूव यद्वा गृहान्घोरमुता जगाम
तन्निर्जगाम हविषा घृतेन शं नो अस्तु द्विपदे शं चतुष्पदे

यो वनस्पतीनामुपतापो न आगद्यद्वा यज्ञं नोऽद्भुतमा  जगाम
सर्वं तदग्ने हुतमस्तु भागशः शिवान्वयमुत्तरेमाभि  वाजान्

त्वष्ट्रे स्वाहेति हुत्वा  ९  त्वष्टा मे दैव्यं वच इत्यत्रोदपात्रं  निनयति  १०
कपालेऽग्निं चादायोपसर्पति  ११  सा  तत्र प्रायश्चित्तिः  १२   ४३   १३५

अथ यत्रैतत्कुम्भोदधानः सक्तुधानी वोखा वानिङ्गिता विकसति तत्र जुहुयात्
१

भूमिर्भूमिमवागान्माता मातरमप्यगात्
ऋध्यास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति  २

सदसि सन्मे भूयादिति सक्तूनावपेत्  ३  अथ चेदोदनस्यान्नमस्यन्नं मे देह्यन्नं

मा मा हिंसीरिति त्रिः प्राश्य ४ अ्थ यथाकामं प्राश्नीयात् ५ अ्थ चेदुदधानः स्यात्समुद्रं वः प्र हिणोमीत्येताभ्यामभिमन्त्र्य ६ अ्न्यं कृत्वा ध्रुवाभ्यां दृंहयित्वा ७ तत्र हिरगयवर्णा इत्युदकमासेचयेत् ८ स खल्वेतेषु कर्मसु सर्वत्र शान्त्युदकं कृत्वा सर्वत्र चातनान्यनुयोजयेन्मातृनामानि च ९ सर्वत्र वरां धेनुं कर्त्रे दद्यात् १० सर्वत्र कंसवसनं गौर्दत्तिणा ११ ब्राह्मणान्भक्तेनोपेप्सन्ति १२ यथोद्दिष्टं चादिष्टास्विति प्रायश्चित्तिः प्रायश्चित्तिः १३ ४४ १३६

इत्यथर्ववेदे कौशिकसूत्रे त्रयोदशोऽध्यायः समाप्तः

यथावितानं यज्ञवास्त्वध्यवसेत् १ वेदिर्यज्ञस्याग्नेरुत्तरवेदिः २ उभे प्रागायते किंचित्प्रथीयस्यौ पश्चादुद्यततरे ३ अ्पृथुसंमितां वेदिं विदध्यात् ४ षट्शमीं प्रागायतां चतुःशमीं श्रोणयाम् ५ त्रीन्मध्ये अ्र्धचतुर्थानग्रतः ६ त्रयाणां पुरस्तादुत्तरवेदिं विदध्यात् ७ द्विःशमीं प्रागायतामृज्वीमध्यर्धशमीं श्रोणयाम् ८ ग्रीष्मस्ते भूम इत्युपस्थाय ९ वि मिमीष्व पयस्वतीमिति मिमानमनुमन्त्रयते १० बृहस्पते परि गृहाण वेदिं सुगा वो देवाः सदनानि सन्तु । अ्स्यां बर्हिः प्रथतां साध्वन्तरहिंस्रा णः पृथिवी देव्यस्त्विति परिगृह्णाति ११ यत्ते भूम इति विखनति १२ यत्त ऊनमिति संवपति १३ त्वमस्यावपनी जनानामिति ततः पांसूनन्यतोदाहार्य १४ बृहस्पते परि गृहाण वेदिमित्युत्तरवेदिमोप्यमानां परिगृह्णाति १५ अ्संबाधं बध्यतो मानवानाभिति प्रथयति १६ यस्याश्चतस्रः प्रदिशः पृथिव्या इति चतुरस्रां करोति १७ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा दद इति लेखनमादाय यत्राग्निं निधास्यन्भवति तत्र लत्तणं करोति १८ इन्द्रः सीतां नि गृह्णात्विति दत्तिणत आरभ्योत्तरत आलिखति १९ प्राचीमावृत्य दत्तिणतः प्राचीम् २० अ्परास्तिस्रो मध्ये २१ तस्यां व्रीहियवावोप्य २२ वर्षेण भूमिः पृथिवी वृतावृतेत्यद्भिः संप्रोत्त्य २३ यस्यामन्नं व्रीहियवाविति भूमिं नमस्कृत्य २४ अ्थाग्निं प्रणयेत्

त्वामग्ने भृगवो नयन्तामङ्गिरसः सदनं श्रेय एहि
विश्वकर्मा पुर एतु प्रजानन्धिष्ण्यं पन्थामनु ते दिशामेति २५

भद्रश्रेयःस्वस्त्या वा २६ अ्ग्ने प्रेहीति वा २७ विश्वंभरा वसुधानी प्रतिष्ठेति लत्तणे प्रतिष्ठाप्य २८ अ्थेध्ममुपसमादधाति २९ अ्ग्निर्भूम्यामोषधी-

ष्वग्निर्दिव ग्रा तपत्यग्निवासाः पृथिव्यसितजूरेतमिध्मं समाहितं जुषाणोऽस्मै क्षत्राणि धारयन्तमग्न इति पञ्चभि स्तरणम् ३० ग्रत ऊर्ध्वं बर्हिषः ३१ त्वं भूमिमत्येष्योजसेति दर्भान्संप्रोक्ष्य ३२ ऋषीणां प्रस्तरोऽसीति दक्षिणतोऽग्ने-र्ब्रह्मासनं निदधाति ३३ पुरस्तादग्नेरुदक्संस्तृणाति ३४ तथा प्रत्यक् ३५ प्रदक्षिणं बर्हिषां मूलानि च्छादयन्तोत्तरस्या वेदिश्रोणेः पूर्वोत्तरतः संस्थाप्य ३६ ग्रहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर इति ब्रह्मास-नमन्वीक्षते ३७ निरस्तः पराग्वसुः सह पाप्मना निरस्तः सोऽस्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति दक्षिणा तृणं निरस्यति ३८ तदन्वालभ्य जपतीदम-हमर्वाग्वसोः सदने सीदाम्यृतस्य सदने सीदामि सत्यस्य सदने सीदामीष्टस्य सदने सीदामि पूर्तस्य सदने सीदामि मामृषदेव बर्हिः स्वासस्थं त्वाध्यासदे-यमूर्णम्रदमनभिशोकम् ३९ विमृग्वरीमित्युपविश्यासनीयं ब्रह्मजपं जपति बृहस्पतिर्ब्रह्मा ब्रह्मसदन ग्रासिष्यते बृहस्पते यज्ञं गोपाय यदुदुद्वत उन्निवतः शकेयम् ४० पातं मा द्यावापृथिवी ग्रघान्न इति द्यावापृथिव्यौ समीक्षते ४१ सविता प्रसवानामिति कर्मणिकर्मण्यभितोऽभ्यातानैराज्यं जुहुयात् ४२ व्याख्यातं सर्वपाकयज्ञियं तन्त्रम् ४३ १ १३७

ग्रष्टकायामष्टकाहोमाञ्जुहुयात् १ तस्या हवींषि धानाः करम्भः शष्कुल्यः पुरोडाश उदौदनः क्षीरौदनस्तिलौदनो यथोपपादिपशुः २ सर्वेषां हविषां समुद्धृत्य ३ दर्व्या जुहुयात्प्रथमा ह व्युवास सेति पञ्चभिः ४ ग्रायमा-गन्संवत्सर इति चतसृभिर्विज्ञायते ५ ऋतुभ्यस्त्वेति विग्राहमष्टौ ६ इन्द्रपुत्र इत्यष्टादशीम् ७ ग्रहोरात्राभ्यामित्यूनविंशीम् ८ पशावुपपद्यमाने दक्षिणं बाहुं निर्लोमं सचर्म सखुरं प्रक्षाल्य ९ इडायास्पदमिति द्वाभ्यां विंशीम् १० ग्रनुपपद्यमान ग्राज्यं जुहुयात् ११ हविषां दर्विं पूरयित्वा पूर्णा दर्व इति सदर्वीमेकविंशीम् १२ एकविंशतिसंस्थो यज्ञो विज्ञायते १३ सर्वा एव यज्ञतनूरवरून्द्धे सर्वा एवास्य यज्ञतनूः पितरमुपजीवन्ति य एवमष्टकामुपैति १४ न दर्विहोमे न हस्तहोमे न पूर्णहोमे तन्त्रं क्रियेतेत्येके १५ ग्रष्टकायां क्रियेतेतीषुफालिमाठरौ १६ २ १३८

ग्रभिजिति शिष्यानुपनीय श्वो भूते संभारान्संभरति १ दधिसक्तून्पालाशं दण्डमहते वसने शुद्धमाज्यं शान्ता ग्रोषधीर्नवमुदकुम्भम् २ बाह्यतः

शान्तवृक्षस्येध्मं प्राञ्चमुपसमाधाय ३ परिसमुह्य पर्युक्ष्य परिस्तीर्य बर्हिरुद-पात्रमुपसाद्य परिचरणेनाज्यं परिचर्य ४ नित्यान्पुरस्ताद्धोमान्हुत्वाज्यभागौ च ५ पश्चादग्नेर्दधिसक्तूञ्जुहोत्यग्नये ब्रह्मप्रजापतिभ्यां भृग्वङ्गिरोभ्य उशनसे का-व्याय ६ ततोऽभयैरपराजितैर्गणकर्मभिर्विश्वकर्मभिरायुष्यैः स्वस्त्ययनैराज्यं जुहुयात् ७ मा नो देवा अहिर्वधीदरसस्य शर्कोटस्येन्द्रस्य प्रथमो रथो यस्ते सर्पो वृश्चिकस्तृष्टदंश्मा नमस्ते अस्तु विद्युत आरेऽसावस्मदस्तु यस्ते पृथु स्तनयित्नुरिति संस्थाप्य होमान् ८ प्रतिष्ठाप्य स्रुवं दधिसक्तून्प्राश्याच-म्योदकमुपसमारभन्ते ९ अव्यचसश्चेति जपित्वा सावित्रीं ब्रह्म जज्ञानमित्येकां त्रिषप्तीयं च पच्छो वाचयेत् १० शेषमनुवाकस्य जपन्ति ११ योयो भोगः कर्तव्यो भवति तंतं कुर्वते १२ स खल्वेतं पक्षमपक्षीयमाणः पक्षमनधीयान उपश्राम्येता दर्शात् १३ दृष्टे चन्द्रमसि फल्गुनीषु द्व्यान्रसानुपसादयति १४ विश्वे देवा अहं रुद्रेभिः सिंहे व्याघ्रे यशो हविर्यशसं मेन्द्रो गिरावरागराटेषु यथा सोमः प्रातःसवने यच्च वर्चो अक्षेषु येन महानघ्न्या जघनं स्वाहेत्यग्नौ हुत्वा १५ रसेषु संपातानानीय संस्थाप्य होमान् १६ तत एतान्प्राशयति रसान्मधुघृताञ्छिष्यान् १७ योयो भोगः कर्तव्यो भवति तंतं कुर्वते १८ नान्यत आगताञ्छिष्यान्परिगृह्णीयात्परसंदीक्षितत्वात् १९ त्रिरात्रोनांश्चतुरो मासाञ्छिष्येभ्यः प्रब्रूयादर्धपञ्चमान्वा २० पादं पूर्वरात्रेऽधीयानः पादमपररात्रे मध्यरात्रे स्वपन् २१ अभुक्त्वा पूर्वरात्रेऽधीयान इत्येके २२ यथाशक्त्यपररात्रे दुष्परिमाणो ह पादः २३ पौष्यस्यापरपक्षे त्रिरात्रं नाधीयीत २४ तृतीयस्याः प्रातः समासं संदिश्य यस्मात्कोशादित्यन्तः २५

यस्मात्कोशादुदभराम वेदं तस्मिन्नन्तरव दध्म एनम्
अधीतमिष्टं ब्रह्मणो वीर्येण तेन मा देवास्तपसावतेहेति २६

योयो भोगः कर्तव्यो भवति तंतं कुर्वते २७ ये परिमोक्षं कामयन्ते ते परि-मुच्यन्ते २८ ३ १३९

अथ राज्ञामिन्द्रमहस्योपाचारकल्पं व्याख्यास्यामः १ प्रोष्ठपदे शुल्कप-क्षेऽश्वयुजे वाष्टम्यां प्रवेशः २ श्रवणेनोत्थापनम् ३ सम्भृतेषु मंभारेषु ब्रह्मा राजा चोभौ स्नातावहतवसनौ सुरभिणौ व्रतवन्तौ कर्मण्यावुपवसतः ४ श्वो

भूते शं नो देव्याः पादैरर्धर्चाभ्यामृचा षट्कृत्वोदकमाचामतः ५ अर्वाञ्चमिन्द्रं त्रातारमिन्द्रः सुत्रामेत्याज्यं हुत्वा ६ अथेन्द्रमुत्थापयन्ति ७ आ त्वाहार्षं ध्रुवा द्यौर्विशस्त्वा सर्वा वाञ्छन्त्विति सर्वतोऽप्रमत्ता धारयेरन् ८ अद्भुतं हि विमानोत्थितमुपतिष्ठन्ते ९ अभिभूर्यज्ञ इत्येतैस्त्रिभिः सूक्तैरन्वारब्धे राजनि पूर्णहोमं जुहुयात् १० अथ पशूनामुपाचारम् ११ इन्द्रदेवताः स्युः १२ ये राज्ञो भृत्याः स्युः सर्वे दीक्षिता ब्रह्मचारिणः स्युः १३ इन्द्रं चोपसद्य यजेरंस्त्रिरात्रं पञ्चरात्रं वा १४ त्रिरयनमह्नामुपतिष्ठन्ते हविषा च यजन्ते १५ आवृत इन्द्रमहमिति १६ इन्द्र क्षत्रमिति हविषो हुत्वा ब्राह्मणान्परिचरेयुः १७ न संस्थितहोमाञ्जुहुयादित्याहुराचार्याः १८ इन्द्रस्यावभृथादिन्द्रमवभृथाय व्रजन्ति १९ अपां सूक्तैराप्लुत्य प्रदक्षिणमावृत्याप उपस्पृश्यानवेक्षमाणाः प्रत्युदाव्रजन्ति २० ब्राह्मणान्भक्तेनोपेप्सन्ति २१ श्वःश्वोऽस्य राष्ट्रं ज्यायो भवत्येकोऽस्यां पृथिव्यां राजा भवति न पुरा जरसः प्रमीयते य एवं वेद यश्चैवं विद्वानिन्द्रमहेण चरति २२ ४ १४०

अथ वेदस्याध्ययनविधिं वक्ष्यामः १ श्रावण्यां प्रौष्ठपद्यां वोपाकृत्यार्धपञ्चमान्मासानधीयीरन् २ एवं छन्दांसि ३ लोम्नां चानिवर्तनम् ४

अर्धमासं चोपाकृत्य क्षपेरंस्त्र्यहमुत्सृज्य
आरम्भः श्रावण्यामुक्तः पौष्यामुत्सर्ग उच्यते ५

अथानध्यायान्वक्ष्यामः ६ ब्रह्मज्येषु निवर्तते ७ श्राद्धे ८ सूतकोत्थानच्छर्दनेषु त्रिषु चरणम् ९ आचार्यास्तमिते वा येषां च मानुषी योनिः १० यथाश्राद्धं तथैव तेषु ११ सर्वं च श्राद्धिकं द्रव्यमदसाहव्यपेतं प्रतिगृह्यानध्यायः १२ प्राणि चाप्राणि च १३ दन्तधावने १४ क्षुरसंस्पर्शे १५ प्रादुष्कृतेष्वग्निषु १६ विद्युतार्धरात्रे स्तनिते १७ सप्तकृत्वो वर्षेण विरत आप्रातराशम् १८ वृष्टे १९ निर्घाते २० भूमिचलने २१ ज्योतिषोपसर्जन ऋतावप्याकालम् २२ विषमे न प्रवृत्तिः २३

अथ प्रमाणं वक्ष्यामः समानं विद्युदुल्कयोः
मार्गशीर्षपौषमाघापरपक्षेषु तिस्रोऽष्टकाः २४

अमावास्यायां च  २५  त्रीणि चानध्यानि  २६

जनने मरणे चैव दशरात्रो विधीयते
आचार्ये दशरात्रं स्यात्सर्वेषु च स्वयोनिषु  २७

सूतके त्वेको नाधीयीत त्रिरात्रमुपाध्यायं वर्जयेत्  २८  आचार्यपुत्रभार्याश्च २९  अथ शिष्यं सहाध्यायिनमप्रधानगुरुं चोपसन्नमहोरात्रं वर्जयेत्  ३०  तथा सब्रह्मचारिणं राजानं च  ३१  अपर्तुदैवमाकालम्  ३२

अविशेषर्तुकालेन सर्वे निर्घातादयः स्मृताः
यच्चान्यद्दैवमद्भुतं सर्वं निर्घातवद्भवेत्  ३३

ऋतावध्यायश्छान्दसः काल्प्य आपर्तुकः स्मृतः
ऋतावूर्ध्वं प्रातराशाद्यस्तु कश्चिदनध्यायः
संध्यां प्राप्नोति पश्चिमाम्  ३४

सर्वेण प्रदोषो लुप्यते  ३५  निशि निगदायां च विद्युति शिष्टं नाधीयीत  ३६

अस्तमिते द्विसत्तायां त्रिसत्तायां च पाटवः
अथ तावत्कालं भुक्त्वा पदोष उभे संध्ये  ३७

अप्सु श्मशाने शय्यायामभिशस्ते खिलेषु च
अन्तःशवे रथ्यायां ग्रामे चाण्डालसंयुते  ३८

दुर्गन्धे शूद्रसंश्रावे पैङ्गे शब्दे भये रुते
वैधृत्ये नगरेषु च  ३९

अनिक्तेन च वाससा चरितं येन मैथुनम्
शयानः प्रौढपादो चाग्रतोपस्थान्तिके गुरोः  ४०

विरम्य मारुते शीघ्रे प्रत्यारम्भो विभाषितः

सर्वेणापररात्रेण विरम्य प्रत्यारम्भो न विद्यते ४१

पौषी प्रमाणमभ्रेष्वापर्तु चेदधीयानाम् ४२ वर्षं विद्युत्स्तनयित्नुर्वा विपद्यते ४३ त्रिरात्रं स्थानासनं ब्रह्मचर्यमरसाशं चोपेयुः ४४ सा तत्र प्रायश्चित्तिः सा तत्र प्रायश्चित्तिः ४५ ५ १४१

इत्यथर्ववेदे कौशिकसूत्रे चतुर्दशोऽध्यायः समाप्तः
इति कौशिकसूत्रं समाप्तम्

# अथ हिरण्यकेशिगृह्यसूत्रम्

उपनयनं व्याख्यास्यामः १ सप्तवर्षं ब्राह्मणमुपनयीत २ एकादशवर्षं राजन्यं द्वादशवर्षं वैश्यम् ३ वसन्तो ब्राह्मणं ग्रीष्मे राजन्यं शरदि वैश्यम् ४ आपूर्यमाणपक्षे पुण्ये नक्षत्रे विशेषेण पुंनामधेये ५ युग्मान्ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा ६ आशितस्य कुमारस्य केशान्वापयित्वा स्नातमलंकृतम् ७ अहतं वासः परिधाय ८ प्राचीनप्रवण उदीचीनप्रवणे प्रागुदक्प्रवणे समे वा देश उद्धत्यावोक्ष्य ९ अग्निं मथित्वा लौकिकं वाहृत्य न्युप्योपसमादधाति १० प्रागग्रैर्दर्भैरग्निं परिस्तृणाति ११ अपि वोदगग्राः पश्चात्पुरस्ताच्च भवन्ति १२ दक्षिणानुत्तरान्करोत्युत्तरानधरान्यदि प्रागुदगग्राः १३ दक्षिणेनाग्निं ब्रह्मायतने दर्भान्संस्तीर्य १४ मयि गृह्णामि । यो नो अग्निः । इति द्वाभ्यामात्मन्नग्निं गृहीत्वा १५ उत्तरेणाग्निं दर्भान्संस्तीर्य यथार्थं द्रव्याणि प्रयुनक्ति १६ अश्मानमहतं वासोजिनं मौञ्जीं मेखलां त्रिवृतां ब्राह्मणस्य ज्यां राजन्यस्यावीसूत्रं वैश्यस्य बैल्वं पालाशं वा दण्डं ब्राह्मणस्य नैय्यग्रोधं राजन्यस्यौदुम्बरं वैश्यस्य १७ एकविंशतिदारुमिध्मं संनह्यत्याहुतिपरिमाणं वा १८ तस्मिञ्छम्याः परिधीनिध्म उपसंनह्यति १९ दर्वीं कूर्चमांज्यस्थालीं प्रणीताप्रणयनं येन चार्थः २० सकृदेव सर्वाणि यथोपपदं वा २१ एतस्मिन्काले ब्रह्मा यज्ञोपवीतं कृत्वाप आचम्यापरेणाग्निं दक्षिणातिक्रम्य ब्रह्मसदनात्तृणं निरस्याप उपस्पृश्याग्निमभिमुख उपविशति २२ समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कृत्वान्येन नखाच्छित्त्वाद्भिरनुमृज्य पवित्रान्तर्हिते पात्रेप आनीयोपबिलं पूरयित्वोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूयोत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैरपिदधाति २३ तिरःपवित्रं प्रोक्षणीः संस्कृत्य यथा पुरस्ताद्बिलवन्त्युत्तानानि कृत्वा विषायेध्मं त्रिः सर्वाभिः प्रोक्षति २४ दर्वीं निष्टप्य संमृज्य पुनर्निष्टप्य निदधाति २५ संमार्गानभ्युक्ष्याग्नावादधाति २६ आज्यं विलाप्य पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरूप्योदीचोङ्गारान्निरूह्य तेष्वधिश्रित्यावद्योत्य दर्भतरुणाभ्यां प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्याङ्गारान्प्रत्यूह्योदगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं त्रिरुत्पूय पवित्रेग्नावाधाय २७ १

शम्याभिः परिदधाति १ अपरेणाग्निमुदीचीनकुम्बां मध्यमां निदधाति २ दक्षिणेनाग्निं संस्पृष्टां मध्यमया प्राचीनकुम्बाम् ३ उत्तरेणाग्निं संस्पृष्टां मध्यमया प्राचीनकुम्बाम् ४ अपरेणाग्निं प्राङ्मुख उपविशति ५ दक्षिणतो यज्ञोपवीत्याचान्तः कुमार उपविश्यान्वारभते ६ अथ परिषिञ्चति ७ अदितेनुमन्यस्व । इति दक्षिणतः प्राचीनम् ८ अनुमतेनुमन्यस्व । इति पश्चादुदीचीनम् । सरस्वतेनुमन्यस्व । इत्युत्तरतः प्राचीनम् ९ देव सवितः प्रसुव । इति सर्वतः प्रदक्षिणम् १० परिषिच्येध्ममङ्क्त्वाभ्यादधाति । अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेन्द्धि । वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय । स्वाहा । इति ११ अथ दर्व्या जुहोति १२ उत्तरं परिधिसंधिमन्ववहृत्य दर्वीम् । प्रजापतये मनवे स्वाहा । इति मनसा ध्यायन्दक्षिणाप्राञ्चमृजुं दीर्घं संततं जुहोति १३ दक्षिणं परिधिसंधि-मन्ववहृत्य । इन्द्राय स्वाहा । इति प्राञ्चमुदञ्चमृजुम् १४ आघारावाघा-र्याज्यभागौ जुहोति १५ अग्नये स्वाहा । इत्युत्तरार्धपूर्वार्धे । सोमाय स्वाहा । इति दक्षिणार्धपूर्वार्धे १६ तावन्तरेणेतरा जुहोति १७ युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम् । त्वं भिषग्भेषजस्यासि कर्ता त्वया गा अश्वान्पुरुषान्सनेम । स्वाहा । या तिरश्ची निपद्यसेहं विधरणी इति । तां त्वा घृतस्य धारयाग्नौ संराधनीं यजे । स्वाहा । संराधन्यै देव्यै स्वाहा । प्रसाधन्यै देव्यै स्वाहा । इति १८ २

सर्वदर्विहोमाणामेष कल्पः १ मन्त्रान्ते नित्यः स्वाहाकारः २ अमन्त्रासु । अमुष्मै स्वाहा । इति यथादेवतम् ३ भूः । भुवः । सुवः । इति व्याहृतिभिर्जुहोत्येकैकशः समस्ताभिश्च ४ आयुर्दा अग्ने । इत्येषा । आयुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमम् । स्वाहा ५ इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयास्यया सन्मनसा हितः । अया सन्हव्यमूहिषेया नो धेहि भेषजम् । स्वाहा । प्रजापते । इत्येषा ६ यदस्य कर्मणीत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुते सर्वहुत आहुतीनां कामानां स-मर्धयित्रे स्वाहा । इत्युत्तरार्धपूर्वार्धेसंसक्तामितराभिराहुतीभिर्जुहोति ७ अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति पुरस्तात्स्विष्टकृतः ८ चित्तं च स्वाहा ।

चित्तिश्च स्वाहा । इति जयाञ्जुहोति । चित्ताय स्वाहा । चित्तये स्वाहा । इति वा ९ अग्निर्भूतानामधिपतिः स मावतु । इत्यभ्यातानान् १० अस्मिन्ब्रह्मन्नस्मिन्त्त्रे । इत्यभ्यातानेष्वनुषजति ११ पितरः पितामहाः । इति प्राचीनावीती जुहोत्युपतिष्ठते वा १२ ऋताषाड्तधामा । इति राष्ट्रभृतः । पर्यायमनुद्रुत्य । तस्मै स्वाहा । इति पूर्वामाहुतिं जुहोति । ताभ्यः स्वाहा । इत्युत्तराम् १३ अग्रेणोत्तरं परिधिसंधिमश्मानं निधाय दक्षिणेन पादेन १४ ३

कुमारमास्थापयति । आतिष्ठेममश्मानमश्मेव त्वं स्थिरो भव । प्रमृणीहि दुरस्यून्सहस्व पृतनायतः । इति १ अथैनमहतं वासः परिधापयति पूर्वं निधाय । या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितोददन्त । तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः । परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः । बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिदातवा उ । जरां गच्छासि परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा । शतं च जीव शरदः सुवर्चा रायश्च पोषमुपसंव्ययस्व । इति २ परिधाप्याभिमन्त्रयते । परीदं वासो अधिधाः स्वस्तयेभूरापीणामभिशस्तिपावा । शतं च जीव शरदः पुरूचीर्वसूनि चार्य्यो विभजा स जीवन् । इति ३ अथैनं मेखलया नाभिदेशे त्रिः प्रदक्षिणं परिव्ययति । द्विरित्येके । या दुरिता परिबाधमाना शर्मवरूथे पुनती न आगात् । प्राणापानाभ्यां बलमावहन्ती स्वसा देवानां सुभगा मेखलेयम् । इति ४ उत्तरतो नाभेस्त्रिवृतं ग्रन्थिं कृत्वा दक्षिणतो नाभेः परिकर्षति ५ अथास्मा अजिनमुत्तरीयं करोति । मित्रस्य चक्षुर्धरुणं धरीयस्तेजोयशस्वि स्थविरं समिद्धम् । अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं धत्स्वासौ । अदितिस्ते कक्षां बध्नातु वेदस्यानुवक्तवै मेधायै श्रद्धाया अनूक्तस्यानिराकरणाय ब्रह्मणे ब्रह्मवर्चसाय । इति ६ कृष्णाजिनं ब्राह्मणस्य रौरवं राजन्यस्य बस्ताजिनं वैश्यस्य ७ अथैनं परिददाति । परीममिन्द्र ब्रह्मणे महे श्रोत्राय दध्मसि । अथैनं जरिमा णयेज्ज्योक्श्रोत्रे अधिजागरत् । इति ब्राह्मणम् । परीममिन्द्र ब्रह्मणे महे राष्ट्राय दध्मसि । अथैनं जरिमा णयेज्ज्योग्राष्ट्रे अधिजागरत् । इति राजन्यम् । परीममिन्द्र ब्रह्मणे महे पोषाय दध्मसि । अथैनं जरिमा णयेज्ज्योक्पोषे अधिजागरत् । इति वैश्यम् ८ तमपरेणाग्निमुदञ्चमुपवेश्य हुतोच्छेषणं प्राशयति । त्वयि

मेधां त्वयि प्रजाम् । इत्येतैः संनतैः ९ पृषदाज्यमेके प्राशयन्ति १० योगे योगे तवस्तरम् । इममग्न आयुषे वर्चसे कृधि । इति द्वाभ्यां प्राश्नन्तं समीक्षते ११ प्राशयन्त्येके १२ आचान्तमुपस्पर्शयित्वाभिमन्त्रयते । शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः । इति १३ ४

प्रथमः पटलः

आगन्त्रा समगन्महि प्र स मृत्युं युयोतन । अरिष्टाः संचरेमहि स्वस्ति चरतादिह । स्वस्त्या गृहेभ्यः । इति प्रदक्षिणमग्निं परिक्रामन्तमभिमन्त्रयते १ अथैनमभिव्याहारयति । ब्रह्मचर्यमागामुप मा नयस्व ब्रह्मचारी भवानि देवेन सवित्रा प्रसूतः । इति २ तं पृच्छति ३ को नामासि । इति ४ असौ । इत्याचष्टे यथानामा भवति ५ स्वस्ति देव सवितरहमनेनामुनोदृचमशीय । इति नामनी गृह्णाति ६ शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः । इति मार्जयेते ७ अथास्य दक्षिणेन हस्तेन दक्षिणमंसमन्वारभ्य सव्येन सव्यं व्याहृतिभिः सावित्र्येति दक्षिणं बाहुमभ्यात्मन्नुपनयते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयेसौ । इति च ८ अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति । अग्निष्टे हस्तमग्रभीत्सोमस्ते हस्तमग्रभीत्सविता ते हस्तमग्रमीत्सरस्वती ते हस्तमग्रभीत्पूषा ते हस्तमग्रभीद्बृहस्पतिस्ते हस्तमग्रभीन्मित्रस्ते हस्तमग्रभीद्वरुणस्ते हस्तमग्रभीत्त्वष्टा ते हस्तमग्रभीद्धाता ते हस्तमग्रभीद्विष्णुस्ते हस्तमग्रभीत्प्रजापतिस्ते हस्तमग्रभीत् । इति ९ सविता त्वाभिरक्षतु मित्रस्त्वमसि धर्मणा । अग्निराचार्यस्तव । देवेन सवित्रा प्रसूतो बृहस्पतेर्ब्रह्मचारी भवासावपोशानः समिध आधेहि कर्म कुरु मा दिवा स्वाप्सीः । इत्येनं संशास्ति १० अथास्य दक्षिणेन हस्तेन दक्षिणमंसमुपर्युपर्यन्ववमृश्य हृदयदेशमभिमृशति । मम हृदये हृदयं ते अस्तु मम चित्तं चित्तेनान्वेहि । मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यम् । मामेवानुसंरभस्व मयि चित्तानि सन्तु ते । मयि सामीच्यमस्तु ते मह्यं वाचं नियच्छतात् । इति ११ प्राणानां ग्रन्थिरसि स मा विस्रसः । इति नाभिदेशम् १२ भूर्भुवः सुवः सुप्रजाः प्रजया भूयासं सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैः सुमेधा मेधया सुब्रह्मा ब्रह्मचारिभिः । इत्येनमभिमन्त्र्य । भूर्ऋक्षु त्वाग्नौ पृथिव्यां

वाचि ब्रह्मणि ददेसौ । भुवो यजुःषु त्वा वायावन्तरिक्षे प्राणे ब्रह्मणि ददेसौ । सुवः सामसु त्वा सूर्ये दिवि चक्षुषि ब्रह्मणि ददेसौ । इष्टस्ते प्रियोसान्यसावनलस्य ते प्रियोसान्यसौ । इदं वत्स्यावः प्राण आयुषि वत्स्यावः प्राण आयुषि वसासौ । इति च १३ अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति । अग्निरायुष्मान् । इति पञ्चभिः पर्यायैः १४ आयुष्टे विश्वतो दधत् । इति १५ ५

दक्षिणे कर्णे जपति १ आयुर्दा अग्ने । इत्युत्तरे २ अग्नौ पृथिव्यां प्रतितिष्ठ वायावन्तरिक्षे सूर्ये दिवि । यां स्वस्तिमग्निर्वायुरादित्यश्चन्द्रमा आपोनुसंचरन्ति तां स्वस्तिमनुसंचरासौ । प्राणस्य ब्रह्मचार्यभूरसौ । इत्युभयत्रानुषजति ३ मेधां त इन्द्रो ददातु मेधां देवी सरस्वती । मेधां ते अश्विनावुभावाधत्तां पुष्करस्रजौ । इति तस्य मुखेन मुखं संनिधाय जपति ४ अथैनं परिददाति । कषकाय त्वा परिददाम्यन्तकाय त्वा परिददाम्यघोराय त्वा परिददामि गदाय त्वा परिददामि यमाय त्वा परिददामि मखाय त्वा परिददामि वशिन्यै त्वा परिददामि पृथिव्यै त्वा सवैश्वानरायै परिददाम्यद्भ्यस्त्वा परिददाम्योषधीभ्यस्त्वा परिददामि वनस्पतिभ्यस्त्वा परिददामि द्यावापृथिवीभ्यां त्वा परिददामि सुभूताय त्वा परिददामि ब्रह्मवर्चसाय त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददामि सर्वाभ्यस्त्वा देवताभ्यः परिददामि । इति ५ अत्र सावित्रीं वाचयति यदि पुरस्तादुपेतो भवति ६ यद्यनुपेतस्त्र्यहे पर्यवेते ७ सद्यः पुष्करसादिः ८ अपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्प्राङ्मुख उपविशति । राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् । इति ९ आदित्यायाञ्जलिं कृत्वाचार्यायोपसंगृह्य दक्षिणतः कुमार उपविश्य । अधीहि भो । इत्युक्त्वाथाह । सावित्रीं भो अनुब्रूहि । इति १० गणानां त्वा गणपतिं हवामहे । इत्येनमभिमन्त्र्याथास्मै पच्छोग्रेन्वाहाथार्धर्चशोथ संतताम् । भूस्तत्सवितुर्वरेण्यम् । भुवो भर्गो देवस्य धीमहि । सुवर्धियो यो नः प्रचोदयात् । भूर्भुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । सुवर्धियो यो नः प्रचोदयात् । भूर्भुवः सुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । इति ११ ६

अथ सप्त पालाशीः समिध आर्द्रा अप्रच्छिन्नाग्राः प्रादेशमात्रीर्घृतान्वक्ता

अ्भ्याधापयति १ अग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिध्यस एवं मां मेधया प्रज्ञया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा । इत्येकाम् २ अग्नये समिधौ । इति द्वे ३ अग्नये समिधः । इति चतस्रः ४ अथ परिषिञ्चति यथा पुरस्तात् ५ अन्वमंस्थाः । प्रासावीः । इति मन्त्रान्तान्संनमति ६ अथ देवता उपतिष्ठते ७ अग्ने व्रतपते व्रतं चरिष्यामि । इत्यग्निम् । वायो व्रतपते । इति वायुम् । आदित्य व्रतपते । इत्यादित्यम् । व्रतानां व्रतपते । इति व्रतपतिम् ८ अत्र गुरवे वरं ददाति ९ उदायुषा । इत्युत्थाप्य । सूर्यैष ते पुत्रस्तं ते परिददामि । इति परिदाय । तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् । नन्दाम शरदः शतं मोदाम शरदः शतम् । भवाम शरदः शतं शृणवाम शरदः शतम् । प्रब्रवाम शरदः शतमजिताः स्याम शरदः शतम् । ज्योक् च सूर्यं दृशे । इत्यादित्यमुपतिष्ठते १० अग्निष्ट आयुः प्रतरां कृणोत्वग्निष्टे पुष्टिं प्रतरां दधातु । इन्द्रो मरुद्भिरिह ते दधात्वादित्यस्ते वसुभिरादधातु । इति दण्डं प्रदायामत्रं प्रयच्छति ११ अथाह । भिक्षाचर्यं चर । इति १२ स मातरमेवाग्रे भिक्षेत १३ अतोन्येषु रातिकुलेषु १४ आहृत्य । भैक्षम् । इति गुरवे प्राह १५ तत्सुभैक्षम् । इत्युक्त्वा १६ यस्य ते प्रथमवास्यं हरामस्तं त्वा विश्वे अवन्तु देवाः । तं त्वा भ्रातरः सुहृदो वर्धमानमनुजायन्तां बहवः सुजातम् । इति प्रथमवास्यमस्यादत्ते १७ उपस्थितेन्न ओदनस्यापूपानां सक्तूनामिति समवदाय सर्पिर्मिश्रस्य जुहोति । अग्नये स्वाहा । सोमाय स्वाहा । अग्नयेन्नादाय स्वाहा । अग्नयेन्नपतये स्वाहा । प्रजापतये स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा । सर्वाभ्यो देवताभ्यः स्वाहा । अग्नये स्विष्टकृते स्वाहा । इति १८ सर्वत्रैवमनादिष्टदेवते १९ अमुष्मै स्वाहा । इति यथादेवतमादिष्टदेवते २० एतेषामेवान्नानां समवदाय प्रागग्रेषु दर्भेषु बलिं करोति । वास्तुपतये स्वाहा । इति २१ त्रिवृतान्नेन ब्राह्मणान्परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा २२ ७

त्र्यहव्रतं चरति १ अक्षारमलवणमशमीधान्यं भुञ्जानोधःशाय्यमृन्मयपाय्यशूद्रोच्छिष्टच्यमधुमांसाश्यदिवास्वाप्युभौ कालौ भिक्षाचर्यमुदकुम्भमित्याहरन्नहरहः काष्ठकलापमुभौ कालौ सायं सायं वा समिधोभ्यादधाति २ पुर-

स्तात्परिषेचनात् । यथा ह तद्वसवो गौर्यम् । इति प्रदक्षिणमग्निं परिमृज्य परिषिञ्चति यथा पुरस्तात् ३ व्याहृतिभिः समिधोभ्यादधात्येकैकशः समस्ताभिश्च । एषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व । वर्धिषीमहि च वयमा च प्यासिषीमहि । स्वाहा । मेधां म इन्द्रो ददातु मेधां देवी सरस्वती । मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजौ । स्वाहा । अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः । दैवीं मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषताम् । स्वाहा । आ मां मेधा सुरभिर्विश्वरूपा हिरगयवर्णा जगती जगम्या । ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषताम् । स्वाहा । इति ४ तथैव परिमृज्य परिषिञ्चति यथा पुरस्तात् ५ यत्ते अग्ने तेजस्तेनाहम् । इत्येतैर्मन्त्रैरुपतिष्ठते । मयि मेधां मयि प्रजाम् । इति च ६ त्र्यहे पर्यवेते तथैव त्रिवृतान्नेन ब्राह्मणान्परिविष्य पुगयाहं स्वस्त्ययनमृद्धिमिति वाचयित्वा व्रतं विसृजते । अग्ने व्रतपते व्रतमचारिषम् । इत्येतैः संनतैः ७ एतद्व्रत एवात ऊर्ध्वम् ८ आचार्यकुलवास्यश्नाति क्षारं लवणं शमीधान्यमिति ९ दगडी जटी मेखली १० शिखाजटो वा स्यात् ११ काषायमजिनं वा वस्ते १२ न स्त्रियमुपैति १३ अष्टाचत्वारिंशद्वर्षाणि चतुर्विंशतिं द्वादश यावद्ग्रहणं वा १४ न त्वेवाव्रतः स्यात् १५ कागडोपाकरणे कागडविसर्गे च । सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् । स्वाहा । इति कागडर्षिर्द्वितीयः । इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि । प्रजापते । यदस्य कर्मणोत्यरीरिचम् । इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् १६ ८

द्वितीयः पटलः

अधीत्य वेदं स्नानम् १ तद्व्याख्यास्यामः २ उदगयन आपूर्यमाणपक्षे रोहिगयां मृगशिरसि तिष्य उत्तरयोः फल्गुन्योर्हस्ते चित्रायां विशाखयोर्वैतेषु स्नायात् ३ यत्रापस्तद्गत्वाग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा पालाशीं समिधमादधाति । इमं स्तोममर्हते जातवेदसे स्थमिव संमहेमा मनीषया । भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव । स्वाहा । इति ४ अथ व्याहृतिभिर्जुहोति यथा पुरस्तात् ५ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् । स्वाहा ६ इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि

। प्रजापते । यदस्य कर्मणोत्यरीरिचम् । इति च । अत्रैके जयाभ्याताना- न्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् ७ ब्राह्मणानन्नेन परिविष्य पुगयाहं स्वस्त्ययनमृद्धिमिति वाचयित्वा व्रतं विसृजते । अग्ने व्रतपते व्रतमचारिषम् । इत्येतैः ८ व्रतं विसृज्य । उदु त्यम् । चित्रम् । इति द्वाभ्यामा- दित्यमुपतिष्ठते ९ उदुत्तमं वरुण पाशमस्मत् । इत्युत्तरीयं ब्रह्मचारिवासो निधायान्यत्परिधाय । अवाधमम् । इत्यन्तरीयम् । वि मध्यमम् । इति मेखलाम् । अथा वयमादित्य व्रते । इति दगडम् । मेखलां दगडं कृष्णाजिनं चाप्सु प्रवेश्यापरेणाग्निं प्राङ्मुख उपविश्य क्षुरं संमृशति । क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिंसीः । इति १० वप्त्रे प्रदायोन्दनीया अपोभिमृशति । शिवा नो भवथ संस्पृशे । इति ११ आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे । इति दक्षिणं गोदानमुनत्ति १२ ओषधे त्रायस्वैनम् । इत्यूर्ध्वाग्रामोषधिमन्तर्दधाति १३ स्वधिते मैनं हिंसीः । इति क्षुरेणाभिनिदधाति १४ देवश्रूरेतानि प्रवपे । इति प्रवपति १५ यत्क्षुरेण मर्चयता सुपेशसा वप्तर्वपसि केशश्मश्रु । वर्चया मुखं मा न आयुः प्रमोषीः । इति वप्तारं समीक्षते १६ श्मश्रूगयग्रे वापयतेत्थोपपक्षावथ केशानथ लोमान्यथ नखानि १७ आनडुहे शकृत्पिगडे संयम्य केशश्मश्रुलोमनखानि । इदमहममुष्यामुष्यायणस्य पाप्मानमवगूहामि । इति गोष्ठ उदुम्बरे दर्भस्तम्बे वा निखनति योस्य रातिर्भवति १८ स्नायनीयेनोत्साद्यौदुम्बरेण दन्तान्प्रक्षालयते १९ ९

अन्नाद्याय व्यूहध्वं दीर्घायुत्वाय व्यूहध्वं ब्रह्मवर्चसाय व्यूहध्वं दीर्घायुरहमन्नादो ब्रह्मवर्चसी भूयासमिति १ अथोष्णशीताभिरद्भिः स्नापयति । आपो हि ष्ठा मयोभुवः । इति तिसृभिः । हिरगयवर्णाः शुचयः पावकाः । इति चतसृभिः । पवमानः सुवर्जनः । इति चैतेनानुवाकेन २ गोष्ठे वावच्छाद्य संपरिश्रित्य पुरोदयमादित्यस्य प्रविशति । अत्र सर्वं क्रियते । नैनमेतदहरादित्योभितपतीत्येकेषाम् । स्नातानां वा एष तेजसा तपति य एष तपति तस्मात्स्नातकस्य मुखं रेफायतीव ३ आहरन्त्यस्मै सर्वसुरभि चन्दनं वा पिष्टम् । तदभ्युक्ष्य । नमो ग्रहाय चाभिग्रहाय च नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः । इति देवेभ्यः प्राचीनमञ्जलिं कृत्वा तेनानुलिम्पते । अप्सरासु च यो गन्धो गन्धर्वेषु च यद्यशः । दैव्यो यो

मानुषो गन्धः स मामाविशतादिह । इति ४ स्राहरन्त्यस्मा स्रहते वाससी । ते स्रभ्युन्द्य । सोमस्य तनूरसि तनुवं मे पाहि । स्वा मा तनूराविश शिवा मा तनूराविश । इत्यन्तरीयं वासः परिधायाप उपस्पृश्य तथैवोत्तरी-यमपरेणाग्निं प्राङ्मुख उपविशति ५ स्राहरन्त्यस्मै कुगडले चान्दनमणिं बादरं वा सुवर्णाभिच्छादनम् । तदुभयं दर्भेण प्रबध्योपर्यग्नौ धारयन्नभिजुहोति । स्रायुष्यं वर्चस्यं रायस्पोषमौद्भिदम् । इदं हिरगयमायुषे वर्चसे जैत्र्याया-विशतां माम् । स्वाहा । उच्चैर्वाजि पृतनासाहं सभासाहं धनंजयम् । सर्वाः समग्रा ऋद्धयो हिरगयेस्मिन्समाभृताः । स्वाहा । शुनमहं हिरगयस्य पितुरिव नामाग्रभिषम् । तं मा हिरगयवर्चसं करोतु पूरुषु प्रियम् । ब्रह्मव-र्चसिनं मा करोतु स्वाहा । प्रियं मा कुरु देवेषु प्रियं मा ब्रह्मणि कुरु । प्रियं विश्येषु शूद्रेषु प्रियं मा कुरु राजसु । स्वाहा । इयमोषधे त्रायमाणा सहमाना सहस्वती । सा मा हिरगयवर्चसं करोतु पूरुषु प्रियम् । ब्रह्मवर्चसिनं मा करोतु स्वाहा । इति ६ एतैरेव पञ्चभिरस्वाहाकारैस्त्रिः प्रदक्षिणमुदपात्रे-नुपरिप्लाव्य ७ १०

विराजं च स्वराजं चाभिष्टीर्या च नो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा संसृजामसि । इति कुगडले प्रतिहरते दक्षिणे कर्णे दक्षिणं सव्ये सव्यम् १ ऋतुभिष्ट्वार्तवैरायुषे वर्चसे । संवत्सरस्य धायसा तेन सन्ननुगृह्णासि । इति कुगडले संगृह्णीते २ इयमोषधे त्रायमाणा सहमाना सहस्वती । सा मा हिरगयवर्चसं करोतु पूरुषु प्रियम् । ब्रह्मवर्चसिनं मा करोत्वपाशोसि । इति ग्रीवायां मणिं प्रतिमुञ्चते ३ शुभिके शुभमारोह शोभयन्ती मुखं मम । मुखं च मम शोभय भूयांसं च भगं कुरु । यामाहरज्जमदग्निः श्रद्धायै कामायास्यै । इमां तां प्रतिमुञ्चेहं भगेन सह वर्चसा । इति द्वाभ्यां स्रजं प्रतिमुञ्चते ४ यदाञ्जनं त्रैककुदं जातं हिमवत उपरि । तेन वामाञ्जेहं भगेन सह वर्चसा । मयि पर्वतपूरुषम् । इति त्रैककुदेनाञ्जनेनाङ्क्ते तस्मिन्नविद्यमाने येनैव केनचित् ५ यन्मे मनः परागतम् । इत्यादर्शेवेक्षते ६ देवस्य त्वा । इति वैणवं दगडं प्रतिगृह्य । इन्द्रस्य वज्रोस्यश्विनौ मा पातम् । इति त्रिरूर्ध्वमुन्मार्ष्टि ७ वेग वेजयास्मद्द्विषतस्तस्करान्सरीसृपाञ्छ्वापदान्रक्षांसि पिशाचान्पौ-रुषेयाद्भयान्नो दगड रक्ष विश्वस्माद्भयाद्रक्ष सर्वतो जहि तस्करान् । स्रनग्नः सर्ववृक्षेषु जायसे त्वं सपत्नहा । जहि शत्रुगणान्सर्वान्समन्तं मघवानिव ।

इति त्रिः प्रदक्षिणमुपर्युपरि शिरः प्रतिहरते ८ प्रतिष्ठे स्थो देवते मा मा संताप्तम् । इत्युपानहावध्यवरोहति ९ प्रजापतेः शरणमसि ब्रह्मणश्छदिः । इति च्छत्रं प्रतिगृह्णाति १० यो मे दण्डः परापतद्विहायसोधि भूम्याम् । इमं तं पुनराददेयमायुषे च बलाय च । इति दण्डं पुनरादत्ते यद्यस्य हस्तात्पतति ११ ११

तृतीयः पटलः

आनयन्त्यस्मै रथमश्वं हस्तिनं वा १ रथंतरमसि वामदेव्यमसि बृहदसि । अङ्कौ न्यङ्कावभितः । इत्येषा

अयं वामश्विना रथो मा दुःखे मा सुखे रिषत्
अरिष्टः स्वस्ति गच्छतु विविघ्नन्नभिदासतः

इह धृतिरिह विधृतिरिह रम इह रमताम् । इति रथमातिष्ठते यदि रथेन प्रविशति २ अश्वोसि हयोसि मयोसि । इत्येकादशभिरश्वनामभिरश्वं यद्यश्वेन ३ इन्द्रस्य त्वा वज्रेणाभ्युपविशामि वह कालं वह श्रियं माभिवह हस्त्यसि हस्तियशसमसि हस्तिवर्चसमसि हस्तियशसिहस्तिवर्चसी भूयासम् । इति हस्तिनं यदि तेन ४ तद्गच्छति यत्रास्मा अपचितिं करिष्यन्तो भवन्ति ५ संस्रवन्तु दिशो मयि समागच्छन्तु सूनृताः । सर्वे कामा अभियन्तु नः प्रिया अभिस्रवन्तु नः प्रियाः । इति दिश उपतिष्ठते ६ यशोसि यशोहं त्वयि भूयासम् । इति योस्यापचितिं करिष्यन्भवति तमभ्यागच्छन्समीक्षते ७ अथास्मा आवसथं कल्पयित्वा । अर्घः । इति प्राह ८ कुरुत । इति प्रत्याह ९ कुर्वन्त्यस्मै त्रिवृतं पाङ्क्तं वा १० दधि मधु घृतमिति त्रिवृत् ११ दधि मधु घृतमापः सक्तव इति पाङ्क्तः १२ कंसे दध्यानीय मध्वानयति १३ ह्रसीयस्यानीय कर्षीयसापिधायानूचीनानि पृथगादापयति कूर्चं पाद्यमर्घ्यमाचमनीयं मधुपर्क इति १४ अन्वङ्ङनुसंवृजिना सोनुपकिंचया वाचैकैकं प्राह १५ कूर्चः । इति कूर्चम् १६ तस्मिन्प्राङ्मुख उपविशति । राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् । इति १७ अथास्मै । पाद्यम् । इति प्राह १८ तेनास्य शूद्रः शूद्रा वा पादौ प्रक्षालयति सव्यमग्रे ब्राह्मणस्य दक्षिणमितरयोः १९ १२

विराजो दोहोसि । मयि दोहः पद्यायै विराजः । इति योस्य पादौ प्रद्मालयति तस्य हस्तावभिमृश्यात्मानं प्रत्यभिमृशति । मयि तेज इन्द्रियं वीर्यमायुः कीर्तिर्वर्चो यशो बलम् । इति १ ग्रथास्मै । ग्रर्घ्यम् । इति प्राह २ तत्प्रतिगृह्णाति । ग्रा मागन्यशसा संसृज तेजसा वर्चसा पयसा च । तं मा कुरु प्रियं प्रजानामधिपतिं पशूनाम् । इति ३ समुद्रं वः प्रहिणोम्यद्मिताः स्वां योनिमपिगच्छत । ग्रच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः । इति शेषं निनीयमानमनुमन्त्रयते ४ ग्रथास्मै । ग्राचमनीयम् । इति प्राह ५ ग्रमृतोपस्तरणमसि । इत्यप ग्राचामति ६ ग्रथास्मै । मधुपर्कः । इति प्राह ७ तं सावित्रेणोभाभ्यां हस्ताभ्यां प्रतिगृह्य । पृथिव्यास्त्वा नाभौ सादयामीडायाः पदे । इति पृथिव्यां प्रतिष्ठाप्य । यन्मधुनो मधव्यं परममन्नाद्यं रूपम् । तेनाहं मधुनो मधव्येन परमेण रूपेण परमो मधव्योन्नादो भूयासम् । इत्यङ्गुष्ठेनोपमध्यमया चाङ्गुल्या त्रिः प्रदद्मिणं संयुज्य । तेजसे त्वा श्रियै यशसे बलायान्नाद्याय प्राश्नामि । इति त्रिः प्राश्य योस्य रातिर्भवति तस्मा उच्छिष्टं प्रयच्छति ८ सर्वं वा प्राश्य । ग्रमृतापिधानमसि । इत्यप ग्रा-चामति ९ ग्रथास्मै । गौः । इति प्राह १० तस्याः कर्मोत्सर्गो वा ११ गौर्धेनुर्भव्या माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः । प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट । पिबतूदकं तृणान्यत्तु । ग्रोमुत्सृजत । इत्युत्सर्गे संशास्ति १२ गौरस्यपहतपाप्माप पाप्मानं जहि मम चामुष्य च हतं मे द्विषन्तं हतो मे द्विषन् । कुरुत । इति द्रियमाणायाम् १३ उत्सर्गेन्येन मांसेनान्नं संस्कृत्याथास्मै । भूतम् । इति प्राह १४ तत्सुभूतं विराडन्नं तन्मा द्मायि तन्मेशीय तन्म ऊर्जं धास्तत्सुभूतम् । इत्युक्त्वाथाह । ब्राह्मणान्भोजयत । इति १५ तेष्वस्मै भुक्तवत्स्वनुसंवृजिनमन्नमाहारयति १६ तत्प्रतिगृह्णाति । द्यौस्ते ददातु पृथिवी प्रतिगृह्णातु पृथिवी ते ददातु प्राणः प्रतिगृह्णातु प्राणस्त्वाश्नातु प्राणः पिबतु । इति १७ इन्द्राग्नी मे वर्चः कृणुताम् । इति यावत्कामं प्राश्य योस्य रातिर्भवति तस्मा उच्छिष्टं प्रयच्छति १८ यं कामयेत न विच्छिद्येतेति । यस्मिन्भूतं च भव्यं च सर्वे लोका इह श्रिताः । तेन त्वाहं प्रतिगृह्णामि त्वामहं ब्रह्मणा त्वा मह्यं प्रतिगृह्णाम्यसौ । इत्याचम्य १९ १३

भुक्तवतो दद्मिणं हस्तं गृह्णीयात् १ यममात्यमन्तेवासिनं प्रेष्यं वा कामयेत

ध्रुवो मेनपायी स्यादिति स पूर्वाह्णे स्नातः प्रयतवस्त्रोहःत्त्वान्तो ब्राह्मणसंभाषो निशायां तस्यावसथं गत्वा जीवशृङ्गे प्रस्नाव्य त्रिः प्रदक्षिणमावसथं परिषिञ्चन्परिक्रामेत् । परि त्वा गिरेरिह परि भ्रातुः परि ष्वसु । परि सर्वेभ्यो ज्ञातिभ्यः परिषीदः क्लेष्यसि । शश्वत्परिकुपिलेन संक्रामेणाविच्छिदा । ऊलेन परिमीढोसि परिमीढोस्यूलेन । इति २ अनिगुप्ते जीवशृङ्गं निदधाति ३ यस्मा अमात्या अन्तेवासिनः प्रेष्या वोद्रवेयुस्तान्परिक्रोशेत् । अनुपौह्वदनुपह्वयेन्निवर्तो यो न्यवीवृधः । ऐन्द्रो वः परिक्रोशः परिक्रोशतु सर्वदा । यदिति मामतिमन्यध्वं मायादेवा अवतरन् । इन्द्रः पाशेन वः सिक्त्वा मह्यं पुनरुदाजतु । इति ४ सोथ स्वागारं प्रविश्य सैध्रकीं समिधमाधाय । अ वर्तन वर्तय । इत्याकर्षणेन जुहोति ५ अथातो दारगुप्तिम् ६ स्थूरा दृढा जारी चूर्णानि कारयित्वा सुप्तायै योनिमुपवपेत् । इन्द्राययास्य शेफमलीकमन्येभ्यः पुरुषेभ्योन्यत्र मत् । इति ७ अथातः पणयसिद्धिः ८ पणयस्यापादाय जुहोति ९ १४

यद्वो देवाः प्रपणं चराम देवा धनेन धनमिच्छमानाः । तस्मिन्सोमो रुचमादधात्वग्निरिन्द्रो बृहस्पतिरीशानश्च । स्वाहा । इति १ अथातः क्रोधविनयनम् २ या त एषा रराट्या तनूर्मन्योर्मृद्धस्य नाशिनी तां देवा ब्रह्मचारिणो विनयन्तु सुमेधसः । यत्त एतन्मुखे मतं रराटमुदिव विध्यसि । अव द्यामिव धन्विनो हृदो मन्युं तनोमि ते । अहर्द्यौश्च पृथिवी च विधे क्रोधं नयामसि । गर्भमश्वतर्या इव । इति क्रुद्धमभिमन्त्रयते ३ अथातः संवादाभिजयनम् ४ निशायामन्तरागारेग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा करणैराज्यमिश्रैर्जुहोति । अवजिह्व निजिह्विकाव त्वा हविषा यजे । यथाहमुत्तरो वदाम्यधरो वदसौ वदा । स्वाहा । इति ५ अथैनं संनिधावभिजपति । आ ते वाचमास्याददे मनस्यां हृदयादधि । अङ्गादङ्गात्ते वाचमाददे यत्र यत्र निहिता वाक्तां त आददे । रुद्र नीलशिखण्ड वीर कर्मणि कर्मणि । इमं मे प्रतिसंवादिनं वृत्तमिवाशनिना जहि । अधो वदाधरो वदाधस्ताद्भूम्या वद । अधोप्रतिरिव कूटेन निजस्य निहितो मया । तत्सत्यं यदहं ब्रवीम्यधरो मत्पद्यस्वासौ । इति ६ हिरण्यबाहुः सुभगा जितात्त्यलंकृता मध्ये । देवानामासीनार्थं मह्यमवोचत्स्वाहा । इति सभामालभ्य जपति ७ मम परे ममापरे ममेयं पृथिवी मही । ममाग्निश्चेन्द्रश्च दिव्यमर्थमसाधयन्निव । इति परिषदमभिवी-

न्नतेभ्येव जपति ८ १५

## चतुर्थः पटलः

दर्शे चन्द्रमसं दृष्ट्वाप ग्राचम्यापो धारयमाणः । ग्रा प्यायस्व । सं ते । नवो नवो भवति जायमानः । यमादित्या ग्रंशुमाप्याययन्ति । इति चतसृभिरुपतिष्ठते १ मयि दत्तक्रतू । इति जञ्जभ्यमानो जपति २ सिगसि नसि वज्रो नमस्ते ग्रस्तु मा मा हिंसीः । इति सिचाधिक्षिप्तो जपति ३ तस्य तन्तुमाच्छिद्य मुखवातेन प्रध्वंसयेत् ४ ये पक्षिणः पतयन्ति बिभ्यतो निर्ऋतैः सह । ते मा शिवेन शग्मेन तेजसोन्दन्तु वर्चसा । इति वयसाधिक्षिप्तो जपति तदन्येन हस्तात्प्रमृज्याद्भिः प्रक्षालयीत ५ दिवो नु मा बृहतो ग्रन्तरिक्षादपां स्तोको ग्रभ्यपतच्छिवाय । समिन्द्रियेण मनसाहमागां ब्रह्मणा गुप्तः सुकृता कृतेन । इति जपेद्यद्येनमविज्ञातोपां स्तोकोभिच्छादयेत् ६ यदि वृक्षाग्रादभ्यपतत्फलं यद्वान्तरिक्षात्तदु वायुरेव । यत्रा वृक्षस्तनुवै यत्र वास ग्रापो बाधन्तां निर्ऋतिं पराचैः । इति जपेद्यद्येनमविज्ञातं फलमभिपतेत् ७ नमः पथिषदे वातेषवे रुद्राय नमो रुद्राय पथिषदे । इति चतुष्पथमवक्रम्य जपति ८ नमः पशुषदे वातेषवे रुद्राय नमो रुद्राय पशुषदे । इति शकृद्धतौ ९ नमः सर्पसदे वातेषवे रुद्राय नमो रुद्राय सर्पसदे । इति सर्पसृप्ते १० नमोन्तरिक्षसदे वातेषवे रुद्राय नमो रुद्रायान्तरिक्षसदे । इति जपेद्यद्येनं संवर्तवात ग्रागच्छेत् ११ नमोप्सुषदे वातेषवे रुद्राय नमो रुद्रायाप्सुषदे । इति नदीमुदन्वतीमवगाह्य जपति १२ नमस्तत्सदे वातेषवे रुद्राय नमो रुद्राय तत्सदे । इति चित्रं देशं देवयजनं वनस्पतिं वाक्रम्य जपति १३ सूर्याभ्युदितोहनि नाश्नीयाद्वाग्यतोहस्तिष्ठेत् १४ सूर्याभिनिम्रुक्तो रात्रावेवम् १५ न यूपमुपस्पृशेत् । यद्युपस्पृशेद्दुरिष्टं यज्ञस्य प्रतिमुञ्चीत । यद्येकमुपस्पृशेत् । एष ते वायो । इति ब्रूयाद्यदि द्वौ । एतौ ते वायू । इति यदि बहून् । एते ते वायवः । इति १६ ग्रनिहूतं परिहूतं परिष्टुतं शकुनै रुदितं च यत् । मृगस्य शृतमक्ष्णया तद्द्विषद्भ्यो भयामसि । इत्यध्वानमभिप्रव्रजञ्जपति १७ उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि । स्वस्ति नः शकुने ग्रस्तु शिवो नः सुमना भव । इत्यनभिप्रेतं शकुनं प्रतिजपति १८ यदेतद्भूतान्यन्वाविश्य दैवीं वाचं वदसि । द्विषतो नः परावद तान्मृत्यो मृत्यवे नय । इत्येकमृकम् १९ ग्रथास्मा उभयत ग्रादीप्तमुल्मुकं तां दिशं

प्रति निरस्यति । अग्ने अग्निना संवदस्व मृत्यो मृत्युना संवदस्व । इत्यप उपस्पृश्य २० अथैनमुपतिष्ठते । विभूरसि प्रवाहणः । इत्येतेनानुवाकेन २१ १६

यदीषितो यदि वा स्वकामी भयेडको वदति वाचमेताम् । तामिन्द्राग्नी ब्रह्मणा संविदानौ शिवामस्मभ्यं कृणुतं गृहेषु । इति सलावृकीम् १ प्रसार्य सक्थ्यौ पतसि सव्यमक्षि निपेपि च । मेह कस्य चनाममत् । इति शकुनिम् २ हिरन्यपक्षः शकुनिर्देवानां वसतिंगमः । ग्रामं प्रदक्षिणं कृत्वा स्वस्ति नो वद कौशिक । इति पिङ्गलाम् ३ पुनर्मामैत्विन्द्रियं पुनरायुः पुनर्भगः । पुनर्ब्राह्मणमैतु मा पुनर्द्रविणमैतु मा । इति अथैते धिष्णियासो अग्नयो यथास्थानं कल्पन्तामिहैव । स्वाहा । पुनर्म आत्मा पुनरायुरागात्पुनः प्राणः पुनराकूतमागात् । वैश्वानरो रश्मिभिर्वावृधानोन्तस्तिष्ठतु मे मनोमृतस्य केतुः । स्वाहा । यदन्नमद्यते सायं न तत्प्रातरवति क्षुधः । सर्वं तदस्मान्मा हिंसीन्न हि तद्दिवा ददृशे दिवः । स्वाहा । इत्यनभिप्रेतं स्वप्नं दृष्ट्वा तिलै-राज्यमिश्रैर्जुहोति ४ अथैतान्यद्भुतप्रायश्चित्तानि भवन्ति । कुप्त्वा कपोत उपाविक्षत् । मध्वागार उपाविक्षत् । गौर्गामधैषीत् । स्थूणा व्यरौक्षीत् । वल्मीक उदैक्षीदित्येवंरूपाणि ५ स पूर्वाह्णे स्नातः प्रयतवस्त्रोहःक्षान्तो ब्राह्मणसंभाषोन्तरागारेग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति । इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि । प्रजापते । यदस्य कर्मणोत्यरीरिचम् । इति च । अत्रैके जयाभ्याताना-न्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्व-स्त्ययनमृद्धिमिति वाचयित्वा ६ १७

इन्द्राग्नी वः प्रस्थापयतामश्विनावभिरक्षताम् । बृहस्पतिर्वो गोपालः पूषा वः पुनरुदाजतु । इति गाः प्रतिष्ठमाना अनुमन्त्रयते । पूषा गा अन्वेतु नः । इति च १ इमा या गाव आगमन्नयक्ष्मा बहुसूवरीः । नद्य इव स्रवन्तु समुद्र इव निषिञ्चन्तु । इति गा आयतीः प्रतीक्षते २ संस्था स्थ संस्था वो भूयास्थाच्युता स्थ मा मा च्योढ्वं माहं भवतीभ्यश्चौषीः । इति संस्थिताः ३ ऊर्जा वः पश्याम्यूर्जा मा पश्यत । इति गोष्ठगताः । सहस्रपोषं वः पुष्यासम् । इति च ४ अतो गवां मध्येग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा

पयसा जुहोति । उद्दीप्यस्व जातवेदोपघ्नन्निर्ऋृतिं मम । पशूंश्च मह्यमावह जीवनं च दिशो दिश । स्वाहा । मा नो हिंसीज्जातवेदो गामश्वं पुरुषं जगत् । अबिभ्रदग्न आगहि श्रिया मा परिपातय । स्वाहा । अपामिदं न्ययनम् । नमस्ते हरसे शोचिषे । इति च ५ इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि । प्रजापते । यदस्य कर्मणोत्यरीरिचम् । इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् ६ १८

पञ्चमः पटलः

समावृत्त आचार्यकुलान्मातापितरौ बिभृयात् १ ताभ्यामनुज्ञातो भार्यामुपयच्छेत्सजातां नग्निकां ब्रह्मचारिणीमसगोत्राम् २ अह्नः पञ्चसु कालेषु प्रातः संगवे मध्यंदिनेपराह्णे सायं वैतेषु यत्कारी स्यात्पुरायाह एव कुरुते ३ अग्निमुपसमाधाय परिधानान्तं कृत्वा वधूमानीयमानां समीक्षते । सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन । इति ४ दक्षिणतः पतिं भार्योपविशति ५ आचान्तसमन्वारब्धायां परिषिञ्चति यथा पुरस्तात् ६ व्याहृतिपर्यन्तं कृत्वा जुहोति । अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोनुमन्यतां पथेयं स्त्री पौत्रमघं न रोदात् । स्वाहा । इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुध्यतामियम् । स्वाहा । मा ते गृहे निशि घोष उन्थादन्यत्र त्वद्रुदत्यः संविशन्तु । मा त्वं विकेश्युर आविधिष्ठा जीवपत्नी पतिलोके विराज प्रजां पश्यन्ती सुमनस्यमानाम् । स्वाहा । द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनं धयतस्ते पुत्रान्सविताभिरक्षतु । आ वाससः परिधानाद्बृहस्पतिर्विश्वे देवा अभिरक्षन्तु पश्चात् । स्वाहा । अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाघम् । शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पापम् । स्वाहा । देवकृतं ब्राह्मणं कल्पमानं तेन हन्मि योनिषदः पिशाचान् । क्रव्यादो मृत्यूनधरान्पादयामि दीर्घमायुस्तव जीवन्तु पुत्राः । स्वाहा । इति ७ इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि । प्रजापते । इति हुत्वाश्मानमास्थापयति । आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव । प्रमृणीहि दुरस्यून्सहस्व पृतनायतः । इति ८ अपरेणाग्निं

द्वयान्दर्भान्पूर्वापरानुदगग्रान्संस्तीर्य तेषु पूर्वापराववतिष्ठेते ६ १९

प्राङ्मुखः प्रत्यङ्मुख्या हस्तं गृह्णीयात्प्रत्यङ्मुखः प्राङ्मुख्या वा । यदि कामयेत पुंसो जनयेयमित्यङ्गुष्ठं गृह्णीयात् । यदि कामयेत स्त्रीरित्यङ्गुलीः । यदि कामयेतोभयं जनयेयमित्यभीव लोमान्यङ्गुष्ठं सहाङ्गुलिभिर्गृह्णीयात् ।

सरस्वति प्रेदमिव सुभगे वाजिनीवति
तां त्वा विश्वस्य भूतस्य प्रजायामस्यग्रतः

गृह्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथासत्
भगो अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः । इति १

तामग्रेण दक्षिणमंसं प्रतीचीमभ्यावृत्याभिमन्त्रयते
अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः
जीवसूर्वीरसूः स्योना शं न एधि द्विपदे शं चतुष्पदे

तां नः पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति
या न ऊरू उशती विस्रयातै यस्यामुशन्तः प्रहरेम शेपम्

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः
तृतीयो अग्निष्टे पतिस्तुरीयोहं मनुष्यजाः

सोमोददाद्गन्धर्वाय गन्धर्वोग्नयेददात्
पशूंश्च मह्यं पुत्रांश्चाग्निर्ददात्यथो त्वाम्

अमूहमस्मि सा त्वं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेहि संभावाव सह रेतो दधावहै पुंसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कुरु । दशास्यां पुत्रानाधेहि पतिमेकादशं कुरु । इति २ तां यथायतनमुपवेश्याथास्या अञ्जलावाज्येनोपस्तीर्य लाजान्द्विरावपति । इमाँल्लाजानावपामि समृद्धिकरणान्मम । तुभ्यं च संवननं तदग्निरनुमन्यतामयम् । इति ३ अभिघार्य । इयं नार्युपब्रूतेग्नौ लाजानावप-

न्ती । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम । स्वाहा । इति तस्या अञ्जलिना जुहोति ४ उदायुषा । इत्युत्थाप्य । विश्वा उत त्वया वयं धारा उदन्या इव अतिगाहेमहि द्विषः । इति प्रदक्षिणमग्निं परिक्रम्य तथैव लाजानावपति ५ द्वितीयं परिक्रम्य तथैव लाजानावपति ६ तृतीयं परिक्रम्य सौविष्टकृतीं जुहोति ७ अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् ८ तामपरेणाग्निं प्राचीमुदीचीं वा विष्णुक्रमान्क्रामयति ९ अथैनां संशास्ति । दक्षिणेन प्रक्रम्य सव्येनानुप्रक्राम मा सव्येन दक्षिणमतिक्रामीः । इति १० २०

एकमिषे विष्णुस्त्वान्वेतु । द्वे ऊर्जे विष्णुस्त्वान्वेतु । त्रीणि व्रताय विष्णुस्त्वान्वेतु । चत्वारि मायोभवाय विष्णुस्त्वान्वेतु । पञ्च पशुभ्यो विष्णुस्त्वान्वेतु । षड्रायस्पोषाय विष्णुस्त्वान्वेतु । सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वान्वेतु । इति १ सप्तमं पदमवस्थाप्य जपति । सखायौ सप्तपदावभूव सख्यं ते गमेयं सख्यात्ते मा योषं सख्यान्मे मा योष्ठाः इति २ अथास्या दक्षिणेन पादेन दक्षिणं पादमवक्रम्य दक्षिणेन हस्तेन दक्षिणमंसमुपर्युपर्यन्ववमृश्य हृदयदेशमभिमृशति यथा पुरस्तात् ३ प्राणानां ग्रन्थिरसि स मा विस्रसः । इति नाभिदेशम् ४ तामपरेणाग्निं प्राचीमुपवेश्य पुरस्तात्प्रत्यङ्तिष्ठन्नद्भिः प्रोक्षति । आपो हि ष्ठा मयोभुवः । इति तिसृभिः । हिरगयवर्णाः शुचयः पावकाः । इति चतसृभिः । पवमानः सुवर्जनः । इति चैतेनानुवाकेन ५ अत्र बीजान्यधिश्रयन्ति ६ २१

षष्ठः पटलः

तां ततः प्रवाहयन्ति प्र वा हारयन्ति १ समोप्यैतमग्निमनुहरन्ति २ नित्यो धार्यः ३ अनुगतो मन्थ्यः श्रोत्रियागाराद्वाहार्यः ४ उपवासश्चानुगते भार्यायाः पत्युर्वा ५ आगारं प्राप्याथैनां संशास्ति । दक्षिणं पादमग्रेतिहर देहलिं माधिष्ठाः । इति ६ पूर्वार्धे शालायां न्युप्योपसमादधाति ७ अपरेणाग्निं लोहितमानडुहं चर्म प्राचीनग्रीवमुत्तरलोमास्तृणाति ८ तस्मिन्प्राङ्मुखावुदङ्मुखौ वोपविशतः । पश्चात्पतिं भार्योपविशति । इह गावो निषीदन्त्विहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणोपि पूषा निषीदतु । इति ९ वाचंनियमावासाते आ नक्षत्राणामुदयात् १० उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य

। देवीः षडुर्वीः । इति दिश उपतिष्ठते ११ मा हास्महि प्रजया । इति नक्षत्राणि १२ मा रधाम द्विषते सोम राजन् । इति चन्द्रमसम् १३ सप्तर्षयः प्रथमां कृत्तिकानामरुन्धतीं ये ध्रुवतां ह निन्युः । षट्कृत्तिकामुख्ययोगं वहन्तीयमस्माकं भ्राजत्वष्टमी । इति सप्तर्षीनुपस्थाय ध्रुवमुपतिष्ठते । ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसि ध्रुवत स्थितम् । त्वं नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यतः । नमो ब्रह्मणे ध्रुवायाच्युतायास्तु नमो ब्रह्मणः पुत्राय प्रजापतये नमो ब्रह्मणः पुत्रेभ्यो देवेभ्यस्त्रयस्त्रिंशेभ्यो नमो ब्रह्मणः पुत्रपौत्रेभ्योङ्गिरोभ्यः । यस्त्वा ध्रुवमच्युतं सपुत्रं सपौत्रं ब्रह्म वेद ध्रुवा अस्मिन्पुत्राः पौत्रा भवन्ति । प्रेष्यान्तेवासिनो वसनं कम्बलानि कंसं हिरगयं स्त्रियो राजानोन्नमभयमायुः कीर्तिर्वर्चो यशो बलं ब्रह्मवर्चसमन्नाद्यमित्येतानि मयि सर्वाणि ध्रुवागयच्युतानि सन्तु १४ २२

ध्रुवं त्वा ब्रह्म वेद ध्रुवोहमस्मिँल्लोकेस्मिंश्च जनपदे भूयासम । अच्युतं त्वा ब्रह्म वेद माहमस्माल्लोकादस्माच्च जनपदाच्चयोषि द्विषन्मे भ्रातृव्योस्माल्लोकादस्माच्च जनपदाच्चयवताम् । अचेष्टं त्वा ब्रह्म वेद माहमस्माल्लोकादस्माच्च जनपदाच्चेष्टिषि द्विषन्मे भ्रातृव्योस्माल्लोकादस्माच्च जनपदाच्चेष्टताम् । अव्यथमानं त्वा ब्रह्म वेद माहमस्माल्लोकादस्माच्च जनपदाद्व्यथिषि द्विषन्मे भ्रातृव्योस्माल्लोकादस्माच्च जनपदाद्व्यथताम् । नभ्यं त्वा सर्वस्य वेद नभ्यमहमस्य जनपदस्य भूयासम् । मध्यं त्वा सर्वस्य वेद मध्यमहमस्य जनपदस्य भूयासम् । तन्तिं त्वा सर्वस्य वेद तन्तिरहमस्य जनपदस्य भूयासम् । मेथीं त्वा सर्वस्य वेद मेथ्यहमस्य जनपदस्य भूयासम् । नाभिं त्वा सर्वस्य वेद नाभिरहमस्य जनपदस्य भूयासम् । यथा नाभिः प्राणानां विषूवानेवमहं विषूवान् । एकशतं तं पाप्मानमृच्छतु योस्मान्द्वेष्टि यं च वयं द्विष्मो भूयांसि मामेकशतात्पुगयान्यागच्छन्तु । इति १ अत्र मनोज्ञेन संभाष्यागारं प्राप्याथैनामाग्नेयेन स्थालीपाकेन याजयति २ पत्न्यवहन्ति ३ श्रपयित्वाभिघार्योद्वास्याग्नये हुत्वाग्नये स्विष्टकृते जुहोति ४ तेन ब्राह्मणं विद्यावन्तं परिवेवेष्टि ५ योस्यापचितो भवति तस्मा ऋषभं ददाति ६ नित्यमत ऊर्ध्वं पर्वस्वाग्नेयेन स्थालीपाकेन यजते ७ नित्यं सायं प्रातर्व्रीहिभिर्यवैर्वा हस्तेनैते आहुती जुहोति । अग्नये स्वाहा । प्रजापतये स्वाहा । इति ८ सौरीं पूर्वां प्रातरेके समामनन्ति ९ त्रिरात्रमक्षारालवणाशिनाव-

धःशायिनावलंकुर्वाणौ ब्रह्मचारिणौ वसतः १० चतुर्थ्यामपररात्रेग्निमुपसमा-
धाय प्रायश्चित्तिपर्यन्तं कृत्वा नव प्रायश्चित्तीर्जुहोति ११ २३

अग्ने प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै घोरा तनूस्तामितो नाशय स्वाहा । वायो प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै निन्दिता तनूस्तामितो नाशय स्वाहा । आदित्य प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पतिघ्नी तनूस्तामितो नाशय स्वाहा । आदित्य प्रायश्चित्ते वायो प्रायश्चित्तेग्ने प्रायश्चित्तेग्ने प्रायश्चित्ते वायो प्रायश्चित्त आदित्य प्रायश्चित्ते । इति १ हुत्वाथास्यै मूर्ध्नि संस्रावं जुहोति । भूर्भगं त्वयि जुहोमि स्वाहा । भुवो यशस्त्वयि जुहोमि स्वाहा । सुवः श्रियं त्वयि जुहोमि स्वाहा । भूर्भुवः सुवस्त्विषिं त्वयि जुहोमि स्वाहा । इति २ अत्रैवोदपात्रं निधाय प्रदक्षिणमग्निं परिक्रम्यापरेणाग्निं प्राचीमुदीचीं वा संवेश्याथास्यै योनिमभिमृशति । अभि त्वा पञ्चशाखेन शिवेनाविद्विषावता । साहस्रेण यशस्विना हस्तेनाभिमृशामसि सुप्रजास्त्वाय । इति ३ अथैनामुपयच्छते । सं नाम्नः सं हृदयानि सं नाभिः सं त्वचः । सं त्वा कामस्य योक्त्रेण युञ्जान्यविमोचनाय । इति ४ अथैनां परिष्वजते । मामनुव्रता भव सहचर्या मया भव । या ते पतिघ्नी तनूर्जारघ्नीं त्वेतां करोमि । शिवा त्वं मह्यमेधि क्षुरपविर्जारिभ्यः । इति ५ अथास्यै मुखेन मुखमीप्सते । मधु हे मध्विदं मधु जिह्वा मे मधुवादिनी । मुखे मे सारघं मधु दत्सु संवननं कृतम् । चाक्रवाकं संवननं यन्नदीभ्य उदाहृतम् । यद्युक्तो देवगन्धर्वस्तेन संवनिनौ स्वके । इति ६ त्रिरात्रं मलवद्वाससा ब्राह्मण्याख्यातानि व्रतानि चरति ७ चतुर्थ्यां स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषामाचम्योपह्वयते ८ २४

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति
गर्भं ते अश्विनावुभावाधत्तां पुष्करस्रजौ

हिरगययी अरणी यं निर्मन्थतो अश्विना
तं ते गर्भं हवामहे दशमास्याय सूतवै

यथाग्निगर्भा पृथिवी द्यौर्यथेन्द्रेण गर्भिणी
वायुर्यथा दिशां गर्भ एवं गर्भं दधामि ते

यस्य योनिं प्रति रेतो गृहाण पुमान्पुत्रो जायतां गर्भो अन्तः
तं माता दश मासो बिभर्तु स जायतां वीरतमः स्वानाम्

आ ते गर्भो योनिमेतु पुमान्बाण इवेषुधिम्
आ वीरो अत्र जायतां पुत्रस्ते दशमास्यः

करोमि ते प्राजापत्यमा गर्भो योनिमेतु ते
अनूनः पूर्णो जायतामनन्धोश्लोणोपिशाचधीरः

यानि प्रभूणि वीर्यागयृषभा जनयन्तु नः
तैस्त्वं गर्भिणी भव स जायतां वीरतमः स्वानाम्

यो वशायां गर्भो यश्च वेहतीन्द्रस्तं निदधे वनस्पतौ
तेन त्वं गर्भिणी भव सा प्रसूर्धेनुगा भव

सं नाम्नः । चाक्रवाकम् । इति च १

भूः प्रजापतिनात्यृषभेण स्कन्दयामि वीरं धत्स्वासौ
भुवः प्रजापतिनात्यृषभेण स्कन्दयामि वीरं धत्स्वासौ
सुवः प्रजापतिनात्यृषभेण स्कन्दयामि वीरं धत्स्वासौ

इति वीरं हैव जनयति २ सर्वागयुपगमनानि मन्त्रवन्ति भवन्तीत्यात्रेयः ३
यच्चादौ यच्चर्ताविति बादरायणः ४ २५

पाणिग्रहणादिरग्निस्तमौपासनमित्याचक्षते १ तस्मिन्गृह्याणि कर्माणि क्रियन्ते

२ तस्यौपासनेनाहिताग्नित्वं तथा पार्वणेन चरुणा दर्शपूर्णमासयाजित्वं चेति ३ द्वादशाहं विच्छिन्नः पुनराधेयः ४ प्रतिसंख्याय वा सर्वान्होमाञ्जुहुयात् ५ परिश्रित उद्धतेवोक्षिते सिकतोपोप्ते ६ उदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छाद्य यथालाभं तूष्णीं संभारान्संभृत्य याज्ञिकात्काष्ठादग्निं मथित्वा लौकिकं वाहृत्य सते कृत्वा प्रज्वलयित्वाभ्यादधाति ७ भूर्भुवः सुवरों प्रतिष्ठ । इति ८ अथैनमग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा द्वे मिन्दाहुती जुहोति । यन्म आत्मनो निन्दाभूत् । पुनरग्निश्चक्षुरदात् । इति ९ तिस्रस्तन्तुमतीर्जुहोति । तन्तुं तन्वन् । उद्बुध्यस्वाग्ने । त्रयस्त्रिंशत्तन्तवः । इति १० चतस्रोभ्यावर्तिनीर्जुहोति । अग्नेभ्यावर्तिन् । अग्ने अङ्गिरः । पुनरूर्जा । सह रय्या । इति ११ एकैकशो व्याहृतीः समस्ताश्च १२ हुत्वा । अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयसा मनसा धृतोयसा हव्यमूहिषेया नो धेहि भेषजम् । स्वाहा । इत्येतां मनस्वतीम् १३ प्राजापत्यां सप्तवतीं च हुत्वा दशहोतारं मनसानुद्रुत्य सग्रहं हुत्वा । इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयामि । प्रजापते । यदस्य कर्मणोत्यरीरिचम् । इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरुस्तात् १४ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा प्रसिद्धमाग्नेयेन स्थालीपाकेन यजते १५ अत्र गुरवे वरं ददाति वाससी धेनुमनड्वाहं वा १६ यदि प्रयायाद्व्याख्यातमात्मन्नरण्योर्वा समारोपणम् १७ समिधि वा समारोपयेत् १८ अरणी कल्पेन खादिरः पालाश औदुम्बर आश्वत्थश्च १९ अत्रैकतरस्मिन्यत्रावस्येत्तस्मिञ्छ्रोत्रियागारादग्निमाहृत्याजुह्वानः । उद्बुध्यस्व । इति द्वाभ्यां यस्यां समारूढस्तामादधाति २० व्याख्यातो होमकल्पः २१ यदि पार्वणो विच्छिद्येत तस्मिन्पाथिकृतेन याजयेत् । यदि द्वौ वैश्वानरपाथिकृतौ । यदि बहून्पुनराधेयः । यदि नाशे विनाशे वान्यैरग्निभिरग्नौ संसृष्टे वा पुनराधेयः २२ २६

सप्तमः पटलः

शालां कारयिष्यन्नुदगयन आपूर्यमाणपक्षे रोहिण्यां त्रिषु चोत्तरेष्वग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति । इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयामि । प्रजापते । यदस्य कर्मणोत्यरीरिचम् । इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति

यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुगयाहं स्वस्त्ययनमृद्धिमिति वाचयित्वाहतं वासः परिधायाप उपस्पृश्य । देवस्य त्वा । इत्यभ्रिमादाय । परिलिखितम् । इति त्रिः प्रदक्षिणं परिलिख्य यथार्थमवटान्खात्वाभ्यन्तरंपांसून्करोति १ इहैव ध्रुवां निमिनोमि शालां क्षेमे तिष्ठति घृतमुक्षमाणा । तां त्वा शाले सुवीराः सर्ववीरा अरिष्टवीरा अनुसंचरेम । इति दक्षिणां द्वारस्थूणामुच्छ्रयति २

इहैव ध्रुवा प्रतितिष्ठ शाले अश्वावती गोमती सूनृतावती
ऊर्जस्वती पयसा पिन्वमानोच्छ्रयस्व महते सौभगाय

इत्युत्तराम् ३

आ त्वा कुमारस्तरुण आ वत्सो जगता सह
आ त्वा हिरगमयः कुम्भ आ दध्नः कलशैरयन्निव

इति संमितावभिमृशति ४ एवमेव स्थूणाराजावुच्छ्रयति ५ एवमभिमृशति ६ ऋतेन स्थूणावधिरोह वंशोर्ध्वो विराजन्नपसेध शत्रून् । अथास्मभ्यं सहवीरां रयिं दाः । इति पृष्ठवंशमारोपयते ७

मा नः सपत्नः शरणः स्योना देवो देवेभिर्विमितास्यग्रे
तृणं वसानाः सुमना असि त्वं शं न एधि द्विपदे शं चतुष्पदे

इति च्छन्नामभिमृशति ८ ततोनूराधैर्वास्तुशमनम् ९ निशायामन्तरागारेग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति १० २७

वास्तोष्पते । वास्तोष्पते । इति द्वे । वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व । स्वाहा । अपैतु मृत्युरमृतं न आगन्वैवस्वतो नो अभयं कृणोतु । पर्णं वनस्पतेरिवाभि नः शीयतां रयिः सचतां नः शचीपतिः । स्वाहा । परं मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो देवयानात् । वास्तोष्पते शृगवते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् । स्वाहा । इदमू नु श्रेयो वसानमागन्म

यद्गोजिद्धनजिदश्वजिद्यत् । पर्णं वनस्पतेरिवाभि नः शीयतां रयिः सचतां नः शचीपतिः । स्वाहा । इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयामि । प्रजापते । यदस्य् कर्मणोत्यरीरिचम् । इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुगयाहं स्वस्त्ययनमृद्धिमिति वाचयित्वा १ एवं विहितं संवत्सरे संवत्सरे वास्तुशमनम् २ ऋतावृतावित्येके ३ २८

गृहा मा बिभीत मा वेपिढ्वमूर्जं बिभ्रत एमसि
ऊर्जं बिभ्रद्वसुवनिः सुमेधा गृहानेमि मनसा मोदमानः

येषामध्येति प्रवसन्नेति सौमनसो बभुः
गृहानुपह्वयामहे ते नो जानन्तु जानतः

उपहूता इह गाव उपहूता अजावयः
अथो अन्नस्य कीलाल उपहूतो गृहेषु नः

उपहूता भूरिसखाः सखायः स्वादुसंमुदः
अरिष्टाः सर्वपूरुषा गृहा नः सन्तु सर्वदा

ऊर्जस्वन्तः पयस्वन्त इरावन्तो हसामुदः
अनश्या अतृष्या गृहा मास्मद्बिभीतन

इति गृहानभ्येति १

क्षेमाय वः शान्त्यै प्रपद्ये शिवं शग्मं शं योः शं योः
इति प्रविशति न तदहरागतः कलहं करोति

गृहानहं सुमनसः प्रपद्ये अवीरघ्नो वीरतमः सुशेवान्
इरां वहन्तः सुमनस्यमानास्तेष्वहं सुमनाः संविशामि

इति संविशति

विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः । इति भार्यां समीक्षते समीक्षते २ २६

अष्टमः पटलः

प्रथमः प्रश्नः समाप्तः

अथातः सीमन्तोन्नयनम् १ प्रथमगर्भायाश्चतुर्थे मास्यापूर्यमाणपक्षे पुगये नक्षत्रे-ग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा धाता ददातु नो रयिम् । इति चतस्रो धात्रीर्जुहोति २ इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि । प्रजापते । यदस्य कर्मणोत्यरीरिचम् । इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुगयाहं स्वस्त्ययनमृद्धिमिति वाचयित्वा स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषामपरेणाग्निं मगडलागारे प्राचीमुपवेश्य त्रेगया शलल्या शला-लुग्रप्समुपसंगृह्य पुरस्तात्प्रत्यङ्तिष्ठन्व्याहृतीभिः । राकामहम् । यास्ते राके । इति द्वाभ्यामूर्ध्वं सीमन्तमुन्नीयाभिमन्त्रयते । सोम एव नो राजेत्या-हुर्ब्राह्मणीः प्रजाः । विवृत्तचक्रा आसीनास्तीरे तुभ्यं गङ्गे । विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः । इति ३ १

अथातः पुंसवनम् १ तृतीये मास्यापूर्यमाणपक्षे पुगये नक्षत्रेग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा । धाता ददातु नो रयिम् । इति चतस्रो धात्रीर्जुहोति । इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि । प्रजापते । यदस्य कर्मणोत्परीरिचम् । इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुगयाहं स्वस्त्ययनमृद्धिमिति वाचयित्वा स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषामपरेणाग्निं मगडलागारे प्राचीमुपवेश्य । वृषासि । इति तस्या दक्षिणे पाणौ यवमादधाति २ आगडौ स्थः । इत्यभितो यवं सर्षपौ धान्यमाषौ वा ३ श्वावृत्तत् । इति दधिद्रप्सम् । तदेनां प्राशयति ४ आचान्ताया उदरमभिमृशति । आभिष्ट्वाहं दशभिरभिमृशामि दशमास्याय सूतवै । इति ५ न्यग्रोधशृङ्गं वा घृतेन कोशकारीं वा प्रैयङ्गवेण संयावेन यूपशकलं वोत्तरपूर्वस्याभिष्टेरग्निं वा निर्मन्थ्य मूरुमूलोपधानायै दक्षिणे नासिकाछिद्रे प्रणयेत् ६ यदि गर्भः स्रवेदार्द्रेणास्याः पाणिना त्रिरूर्ध्वं नाभेरुन्मार्ष्टि । पराञ्चं

त्वा नार्वाञ्चं त्वष्टा बध्नातु बन्धने । स ऋतूनुपवेश्य दश मासो अवीरहा ।
इति ७ विजननकाले क्षिप्रप्रसवनम् । शिरस्त उदकुम्भं निधाय पत्तस्तूर्य-
न्तीमथास्या उदरमभिमृशति ८ २

यथैव वायुः पवते यथा समुद्र एजति
एवं ते गर्भ एजतु सह जरायुणावसर्पतु

इत्यवाङवमार्ष्टि १ जातेश्मनि परशुं निधायोपरिष्टाद्धिरगयं तेषूत्तराधरेषूप-
रिष्टात्कुमारं धारयति

अश्मा भव परशुर्भव हिरगयमस्तृतं भव
वेदो वै पुत्रनामासि जीव त्वं शरदः शतम्

अङ्गादङ्गात्संभवसि हृदयादधिजायसे
आत्मा वै पुत्रनामासि स जीव शरदः शतमिति

२ यद्यपरा न पतेदञ्जलिनोदकमादाय मूर्धानमस्यावसिञ्चेत् ।
तिलदेव पद्यस्व न मांसमसि नो दलम् । अवपद्यस्व स्वपथात् । इति
३ उपनिर्हरन्त्यौपासनमतिहरन्ति सूतिकाग्निम् ४ स एष उत्तपनीय एव
५ नास्मिन्किंचन कर्म क्रियतेन्यत्रोद्धूपनात् ६ अथैनं कणैः
सर्षपमिश्रैरुद्धूपयति । शगडो मर्क उपवीरः शागडीकेर उलूखलः ।
च्यवनो नश्यतादितः । स्वाहा । आलिखन्विलिखन्ननिमिषन्किंवदन्त
उपश्रुतिः । स्वाहा । अर्यम्णः कुम्भी शत्रुः पात्रपाणिर्निपुणिः । स्वाहा
। आन्त्रीमुखः सर्षपारुणो नश्यतादितः । स्वाहा । केशिनी श्वलोमिनी
बजाबोजोपकाशिनी । अपेत नश्यतादितः । स्वाहा । कौबेरका
विश्ववासो रक्षोराजेन प्रेषिताः । ग्रामान्सजातयो यन्तीप्सन्तः परिजाकृतान्
। स्वाहा । एतान्हतैतान्बध्नीतेत्ययं ब्रह्मणो दूतस्तानग्निः पर्यसरत् ।

तानिन्द्रस्तान्बृहस्पतिस्तानहं वेद ब्राह्मणः
प्रमृशतः कूटदन्तान्विकेशाल्लँम्बस्तनान् । स्वाहा

नक्तंचारिण उरस्पेशाञ्छूलहस्तान्कपालपान् । स्वाहा

पूर्व एषाम् पितेत्युच्चैःश्राव्यकर्णकः
माता जघन्या गछन्ति ग्रामे विखुरमिच्छन्ती । स्वाहा

नक्तंचारिणी स्वसा सन्धिना प्रेक्षते कुलम्
या स्वपत्सु जागर्ति यस्यै विजातायां मनः । स्वाहा

तासां त्वं कृष्णवर्त्मने क्लोमानं हृदयं यकृत् । अग्नेयक्षीणि निर्दह । स्वाहा । इति प्रतिमन्त्रमङ्गारेष्वावपति ७ ततः पाणी प्रक्षाल्य भूमिमालभते

यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम्
तस्यामृतत्वस्य नो धेहि माहं पौत्रमघं रुदम्

वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम्
तथामृतत्वस्येशानो माहं पौत्रमघं रुदमिति

इति ८ अथातो मेधाजननम् । दर्भेण हिरगयं प्रबध्य तदन्तर्धायोपरिष्टात्प्राञ्चं कुमारं धार्यमाणं घृतं प्राशयति । भूरृचस्त्वयि जुहोमि स्वाहा । भुवो यजूंषि त्वयि जुहोमि स्वाहा ॥ सुवः सामानि त्वयि जुहोमि स्वाहा । भूर्भुवः सुवरथर्वाङ्गिरसस्त्वयि जुहोमि स्वाहा । इति ९ अथैनमुष्णशीताभिरद्भिः स्नापयति । क्षेत्रियै त्वा निरृत्यै त्वा द्रुहो मुञ्चामि वरुणस्य पाशात् । अनागसं ब्रह्मणे त्वा करोमि शिवे ते द्यावापृथिवी उभे इमे । शं ते अग्निः सहाद्भिरस्तु शं द्यावापृथिवी सहौषधीभिः । शमन्तरिक्षं सह वातेन ते शं ते चतस्रः प्रदिशो भवन्तु । सूर्यमृतं तमसो ग्राह्या यद्देवा अमुञ्चन्नसृजन्व्येनसः । एवमहमिमं क्षेत्रियाज्जामिशंसाद्द्रुहो मुञ्चामि वरुणस्य पाशात् । इति १० अथैनं मातुरुपस्थ आदधाति ११ ३

या दैवीश्चतस्रः प्रदिशो वातपत्नीरभि सूर्यो विचष्टे
तासां त्वा जरस आदधामि प्र यक्ष्म एतु निरृतिं पराचैः

इति १ आधायाभिमन्त्रयते । मा ते पुत्रं रक्षो हिंसीन्मा धेनुरतिसारिणी । प्रिया धनस्य भूया एधमाना स्वे वशे । इति २ प्रक्षाल्य दक्षिणं स्तनमाधापयति । अयं कुमारो जरां धयतु सर्वमायुरेतु । तस्मै स्तनं प्रप्यायस्वायुः कीर्तिर्वर्चो यशो बलम् । इति ३ एवमुत्तरम् ४ नामयति न रुदति यत्र वयं वदामो यत्र वाभिमृशामसि । इत्युभावभिमृश्याथास्यै शिरस्त उदकुम्भमपिहितं निदधाति । आपो गृहेषु जाग्रत यथा देवेषु जाग्रथ । एवमस्यै सुपुत्रायै जाग्रत । इति ५ द्वादश्यां मातापुत्रौ स्नातः ६ शुच्यगारं कुर्वन्ति ७ उपनिर्हरन्ति सूतिकाग्निमतिहरन्त्यौपासनम् ८ तमग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा । धाता ददातु नो रयिम् । इति द्वादशाहुतीर्जुहोति । त्रयोदशेत्येकेषाम् ९ इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि । प्रजापते । यदस्य कर्मणोत्यरीरिचम् । इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा पुत्रस्य नाम दध्याद्द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं यत्र वा स्वित्युपसर्गः स्यात् । तद्धि प्रतिष्ठितमिति विज्ञायते १० पिता माते-त्यग्रेभिव्याहरेयाताम् । विज्ञायते च मम नाम प्रथमं जातवेद इति ११ द्वे नामनी कुर्यात् । विज्ञायते च तस्माद्द्विनामा ब्राह्मणोर्धुक इति १२ नक्षत्रनाम द्वितीयं स्यादन्यतरद्गुह्यं स्यात् १३ अन्यतरेणैनमामन्त्रयीरन् १४ सोमयाजी तृतीयं नाम कुर्वीतेति विज्ञायते १५ प्रवासादेत्यागतं वा पुत्रमभिमृशति । सोमस्य त्वा द्युम्नेनाभिमृशाम्यग्नेस्तेजसा सूर्यस्य वर्चसा । इति १६ पशूनां त्वा हुंकारेणाभिजिघ्राम्यसावायुषे वर्चसे हुम् । इति मूर्ध्न्यभिजिघ्रय १७ अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति । अग्निरायुष्मान् । इति पञ्चभिः पर्यायैः १८ आयुष्टे विश्वतो दधत् । इति दक्षिणे कर्णे जपति यथा पुरस्तात् १९ ४

अथ षष्ठे मास्यन्नप्राशनम् १ आपूर्यमाणपक्षे पुण्ये नक्षत्रेग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति । इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि । प्रजापते । यदस्य कर्मणोत्यरीरिचम् । इति च अत्रैके यजाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयि-

त्वाथैनं दधि मधु घृतमिति त्रिवृत्प्राशयति । भूस्त्वयि दधामि भुवस्त्वयि दधामि सुवस्त्वयि दधामि । इति २ अथैनमन्नं प्राशयति । अपां त्वौषधीनां रसं प्राशयामि शिवास्त आप ओषधयः सन्त्वनमीवास्त आप ओषधयो भवन्तु । इति ३ ५

तृतीये वर्षे चूडाकर्म १ आपूर्यमाणपक्षे पुगये नक्षत्रेग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति । इमं मे वरुण । तत्त्वा यामि । त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि । प्रजापते । यदस्य कर्मणोत्यरीरिचम् । इति च अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुगयाहं स्वस्त्ययनमृद्धिमिति वाचयित्वापरेणाग्निं प्राङ्मुखः कुमार उपविशति २ उत्तरतो माता ब्रह्मचारी वानडुहं शकृत्पिगडं धारयति ३ तेनास्य केशान्प्रतिगृह्णाति ४ अथोष्णशीता आपः संसृजति ५ शीतासूष्णा आनीय । आप उन्दन्तु जीवसे । इति दक्षिणं गोदानमुनक्ति ६ ओषधे त्रायस्वैनम् । इत्यूर्ध्वाग्रामोषधिमन्तर्दधाति ७ स्वधिते मैनं हिंसीः । इति क्षुरेणाभिनिदधाति ८ देवश्रूरेतानि प्रवपे । इति प्रवपति ९ एवमितरान्प्रदक्षिणम् । येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्य ऊर्जेमं रय्या वर्चसा संसृजाथ इति पश्चात् । येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चायुषेवपत् । तेन तेहं वपाम्यसौ । इत्युत्तरतः । यथा ज्योक्सुमना असत् । ज्योक्च सूर्यं दृशे । इति पुरस्तात् १० उप्त्वा यथोचितं चूडाः कारयति यथर्षि वा ११ संयम्य केशान् । यत्र पूषा बृहस्पतिः सविता सोमो अग्निः । तेभ्यो निधानं बहुधा व्यैच्छन्नन्तरा द्यावापृथवी अपः सुवः । इति गोष्ठ उदुम्बरे दर्भस्तम्बे वा निखनति योस्य रातिर्भवति १२ यथाश्रद्धं ब्राह्मणाय ददाति १३ सर्पिष्मन्तमोदनं नापिताय १४ एवं विहितं षोडशे वर्षे गोदानकर्म १५ सशिखं वापयते १६ शिखामन्त्रावशिनष्टीत्येकेषाम् १७ अग्निगोदानो वा भवति १८ गुरवे गां ददाति १९ ६

प्रथमः पटलः

अथातः श्वग्रहप्रायश्चित्तम् १ समुपसृते यज्ञोपवीत्याचान्तोनाप्रीतेन शरावेणोदकमाहृत्य सभायां मध्येधिदेवनमुद्धत्यावोक्ष्याक्षान्न्युप्य व्यूह्य समूह्य

प्रथयित्वोपरिष्टात्सभायां व्यूह्य तृणानि तेन कुमारमभ्याहृत्याक्षेषूत्तानं निपा-
त्य दध्ना लवणोदकमिश्रेणाभ्युक्षति । ग्राघ्नन्ति कंसं दक्षिणतः

कुर्कुरः सुकुर्कुरः कुर्कुरो नीलबन्धनः
ग्रौलव इत्तमुपाह्वयतार्जिम छम्बलः

ग्रथोराम उलुम्बरः सारमेयो ह धावति
समुद्रमिव चाकशद्विभ्रन्निष्कं च रुक्मं च

शुनामग्रं सुवीरिणः सुवीरिणः सृज सृज
एकव्रात्य सृज  शुनक सृज छत्

टेकश्च ससरमटङ्कश्च तूलश्च वितूलश्चार्जुनश्च लोहितश्च
उत्सृज त्वं शितिम्र त्वं पिशंक रोहितः

ग्रमी ये के सरस्यका ग्रवधावति तृतीयस्यामितो दिवि
छदपेहि सीसरम सारमेय नमस्ते ग्रस्तु सीसर

दूत्या ह नाम वो माता मगडाकको ह वः पिता
छदपेहि सीसरम सारमेय नमस्ते ग्रस्तु सीसर

दुला ह नाम वो माता मगडाकको ह वः पिता
छदपेहि सिसरम सारमेय नमस्ते ग्रस्तु सीसर

समश्वा वृषणः पदो न सीसरिदतः
छदपेहि सीसरम सारमेय नमस्ते ग्रस्तु सीसर

संतक्षा हन्ति चक्रिणो न सीसरिदतः । छदपेहि सीसरम सारमेय नमस्ते ग्रस्तु सीसर । इति २ ग्रथाह । वरं वृणीष्व । इति ३ कुमारमेवाहं वरं वृणे । इति ४ एवं समुपसृते त्रिरन्हः प्रातर्मध्यंदिने सायं च कुर्याद्यदि चागतः स्यात् ५  ७

## द्वितीयः पटलः

अथातः शूलगवम् १ आपूर्यमाणपक्षे पुराये नक्षत्रेऽग्निमुपसमाधाय संपरिस्तीर्य पयसि स्थालीपाकं श्रपयित्वाभिघार्योद्वास्यापरेणाग्निं द्वे कुटी कृत्वा दक्षिणस्यां शूलगवमावाहयति । आ त्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः । वाताजिरैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोम् । इति २ उत्तरस्यां मीढुषीम् ३ मध्ये जयन्तम् ४ यथोढमुदकानि प्रदायोपस्तीर्णाभिघारितांस्त्रीनोदनान्कल्पयित्वा यथोढमेवोपस्पर्शयति । उपस्पृशतु मीढ्वान्मीढुषे स्वाहा । उपस्पृशतु मीढुषी मीढुष्यै स्वाहा । जयन्त उपस्पृशतु जयन्ताय स्वाहा । इति ५ व्याहृतिपर्यन्तं कृत्वौद-नानभ्याहृत्य जुहोति । भवाय देवाय स्वाहा । रुद्राय देवाय स्वाहा । शर्वाय देवाय स्वाहा । ईशानाय देवाय स्वाहा । पशुपतये देवाय स्वाहा । उग्राय देवाय स्वाहा । भीमाय देवाय स्वाहा । महते देवाय स्वाहा । इति ६ अथ पत्न्योदनस्य पत्न्यै जुहोति । भवस्य देवस्य पत्न्यै स्वाहा । रुद्रस्य देवस्य पत्न्यै स्वाहा । शर्वस्य देवस्य पत्न्यै स्वाहा । ईशानस्य देवस्य पत्न्यै स्वाहा । पशुपतेर्देवस्य पत्न्यै स्वाहा । उग्रस्य देवस्य पत्न्यै स्वाहा । भीमस्य देवस्य पत्न्यै स्वाहा । महतो देवस्य पत्न्यै स्वाहा । इति ७ अथ मध्यमौदनस्य जुहोति । जयन्ताय स्वाहा । जयन्ताय स्वाहा । इति ८ अथ सर्वेभ्य ओदनेभ्यः समवदाय सौविष्टकृतीं जुहोति । अग्नये स्विष्टकृते स्वाहा । इति ९ अभित एतमग्निं गा स्थापयन्ति यथा हूयमानस्य गन्धमाजिघ्रेयुः १० स्वस्ति नः पूर्णमुखं परिक्रामन्तु । इति सर्वतः प्रदक्षिणं परिक्रम्य । नमस्ते रुद्र मन्यवे । इत्येतैरनुवाकैरुपतिष्ठते प्रथमोत्तमाभ्यां वा ११ ८

अथातो बौढ्यविहार एव १ गृहपोपस्पृश गृहपाय स्वाहा । गृहप्युपस्पृश गृहप्यै स्वाहा । द्वारपोपस्पृश द्वारपाय स्वाहा । द्वारप्युपस्पृश द्वारप्यै स्वाहा । इति चत्वारि पलाशानि ददाति । घोषिण उपस्पृशत घोषिभ्यः स्वाहा । निषङ्गिण उपस्पृशत निषङ्गिभ्यः स्वाहा । अन्वासारिण उपस्पृशता-न्वासारिभ्यः स्वाहा । प्रयुन्वन्त उपस्पृशत प्रयुन्वद्भ्यः स्वाहा । विचिन्वन्त उपस्पृशत विचिन्वद्भ्यः स्वाहा । समश्नन्त उपस्पृशत समश्नद्भ्यः स्वाहा ।

इति २ दशाथापराणि । देवसेना उपस्पृशत देवसेनाभ्यः स्वाहा । इति ३ दशैवाथापराणि । या आख्याता देवसेना याश्चानाख्याता उपस्पृशत ताभ्यः स्वाहा । इति ४ अथ पर्णपुटं कृत्वा तस्मिन्नुपस्तीर्णाभिघारितमोद-नपिगडमवदाय परो गव्यूतिं गत्वा वृक्ष आसजति । निषङ्गिण उपस्पृशत निषङ्गिभ्यः स्वाहा । इति ५ अथोपतिष्ठते । नमो निषङ्गिण इषुधिमते तस्कराणां पतये । इति ६ अथ चान्दनसुरोदकाक्षताक्षतगोमयदूर्वास्त-म्बोदुम्बरपलाशशमीवैकङ्कताश्वत्थेन गोवालेनेति गाः प्रोक्षति वृषाणमेवाग्रे । शिवो भव शिवो भव । इत्यथ शिवो हैव भवति ७ अथैनं क्षैत्रपत्यं पयसि स्थालीपाकं श्रपयित्वाभिघार्योद्वास्य गवां मार्गेनग्नौ क्षेत्रस्य पतिं यजति ८ चतुर्षु सप्तसु वा पलाशेषु तं तथैवावाहयति यथा शूलगवम् ९ नूर्ते यजते । पाको देवः १० अथोपतिष्ठते । क्षेत्रस्य पतिना वयं । क्षेत्रस्य पते । इति ११ अथैतस्य क्षैत्रपत्यस्य ये सनाभयो भवन्ति ते प्राश्नन्ति यथैवैषां कुलधर्मो भवति १२ ९

## तृतीयः पटलः

अमावास्यायामपराह्णे मासिकमपरपक्षस्य वायुक्षवहःसु १ पितृभ्योन्नं संस्कृत्य दक्षिणाग्रान्दर्भानासनानि कल्पयित्वा ब्राह्मणाञ्छुचीन्मन्त्रवतः समङ्गानयुज आमन्त्रयते योनिगोत्रमन्त्रासंबन्धान् २ नार्थापेक्षो भोजयेत् ३ अग्निमुप-समाधाय दक्षिणाप्रागग्रैर्दर्भैः परिस्तीर्यैकपवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं संस्कृत्य प्रसव्यं परिषिच्यौदुम्बरमिध्ममभ्याधायौदुम्बर्या दर्व्या जुहोति ४ आज्यभागान्तं कृत्वा प्राचीनावीती पितॄनावाहयति । आयात पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः । प्रजामस्मभ्यं ददतो रयिं च दीर्घायुत्वं च शतशारदं च । इति ५ एतामेव दिशमभ्यपः प्रसिञ्चति । आपो देवीः प्रहिणुताग्निमेतं यज्ञं पितरो नो जुषन्ताम् । मासीमामूर्जमुत ये भजन्ते ते नो रयिं सर्ववीरं नियच्छन्तु । इति ६ यज्ञोपवीती व्याहृतिपर्यन्तं कृत्वा प्राचीनावीती जुहोति । सोमाय पितृमते स्वधा नमः । यमायाङ्गिरस्वते पितृमते स्वधा नमः । याः प्राचीः संभवन्त्याप उत्तरतश्च या अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधे स्वधा नमः । अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या दिवा दिग्भिरन-न्ताभिरूतिभिरन्तरन्यं पितामहाद्दधे स्वधा नमः । अन्तर्दध ऋतुभिरहोरात्रैः सुसन्धिभिरर्धमासैश्च मासैश्चान्तरन्यं प्रपितामहाद्दधे स्वधा नमः । इति ।

अथ नामधेयैर्जुहोति । अमुष्मै स्वधा नमः । अमुष्मै स्वधा नमः । इति । यन्मे माता प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः पिता वृङ्क्तामाभुरन्योपपद्यताम् । स्वधा नमः । इति । एवं द्वितीयां तथा तृतीयाम् । यन्मे पितामही । यन्मे प्रपितामही । इति मन्त्रं संनमति ७ १०

ये चेह पितरो ये च नेह यांश्च विद्म याँ उ च न प्रविद्म । अग्ने तान्वेत्थ यदि ते जातवेदस्तया प्रत्तं स्वधया मदन्तु । स्वधा नमः । यद्वः क्रव्यादङ्गम-दहल्लोकानयं प्रणयञ्जातवेदाः । तद्वोहं पुनरावेशयाम्यरिष्टाः सर्वैरङ्गैः संभवत पितरः । स्वधा नमः । वहाज्यं जातवेदः पितृभ्यो यत्रैतान्वेत्थ निहितान्पराके । आज्यस्य कूल्या उप तान्क्षरन्तु सत्या एषामाशिषः सन्तु कामैः । स्वधा नमः । इति । एवं द्वितीयां तथा तृतीयाम् । पितामहेभ्यः । प्रपितामहेभ्यः । इति मन्त्रं संनमति १ एवमन्नस्य जुहोति । वहान्नम् । इति मन्त्रं संन-मति २ अथ सौविष्टकृतीं जुहोति । अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः । इति ३ अथान्नमभिमृशति । पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा प्राणापानयोर्जुहोमि । अक्षितमसि मा पितॄणां क्षेष्ठा अमुत्रामुष्मिँल्लोके । पृथिवी समा तस्याग्निरुपद्रष्टा दत्तस्याप्रमादाय । पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा प्राणा-पानयोर्जुहोमि । अक्षितमसि मा पितामहानां क्षेष्ठा अमुत्रामुष्मिँल्लोके । अन्तरिक्षं समं तस्य वायुरुपद्रष्टा दत्तस्याप्रमादाय । पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा प्राणापानयोर्जुहोमि । अक्षितमसि मा प्रपितामहानां क्षेष्ठा अमुत्रामुष्मिँल्लोके । द्यौः समा तस्यादित्य उपद्रष्टा दत्तस्याप्रमादाय । इति ब्राह्मणानुपस्पर्शयति ४ प्राणे निविश्यामृतं जुहोमि । इति ५ ११

भुञ्जानान्समीक्षते । ब्रह्मणि म आत्मामृतत्वाय । इति १ भुक्तवतोनुप्रव्रज्य शेषमनुज्ञाप्योदकुम्भं दर्भमुष्टिं चादाय दक्षिणपूर्वमवान्तरदेशं गत्वा दक्षि-णाग्रान्दर्भान्संस्तीर्य तेष्ववाचीनपाणिर्दक्षिणापवर्गांस्त्रीनुदकाञ्जलीन्निनयति । मार्जयन्तां पितरः सोम्यासः । मार्जयन्तां पितामहाः सोम्यासः । मार्जयन्तां प्रपितामहाः सोम्यासः । इति । असाववनेनिङ्क्ष्वासाववनेनिङ्क्ष्व । इति वा २ तेष्ववाचीनपाणिर्दक्षिणापवर्गान्पिण्डान्ददाति । एतत्ते ततासौ

। इति पित्रे पिराडं ददाति । एतत्ते पितामहासौ । इति पितामहाय । एतत्ते प्रपितामहासौ । इति प्रपितामहाय तूष्णीं चतुर्थम् । स कृताकृतः ३ अथ यदि नामधेयानि न विन्द्यात् । स्वधा पितृभ्यः पृथिविषद्भ्यः । इति पित्रे पिराडं दद्यात् । स्वधा पितृभ्योन्तरिक्षसद्भ्यः । इति पितामहाय । स्वधा पितृभ्यो दिविषद्भ्यः । इति प्रपितामहाय ४ अत्राञ्जनाभ्यञ्जने वासश्चानुपिराडं ददाति ५ आङ्क्ष्वासावाङ्क्ष्वासौ । इति त्रिराञ्जनम् ६ अभ्यङ्क्ष्वासावभ्यङ्क्ष्वासौ । इति त्रिरभ्यञ्जनम् ७ एतानि वः पितरो वासांस्यतो नोन्यत्पितरो मा यूढ्वम् । इति दशामूर्णास्तुकान्वा छित्त्वा न्यस्यति पूर्वे वयसि ८ स्वं लोभे च्छित्त्वोत्तरे ९ अथ पात्रं संक्षाल्य । पुत्रान्पौत्रानभितर्पयन्तीरापो मधुमतीरिमाः स्वधां पितृभ्यो अमृतं दुहानाः । आपो देवीरुभयांस्तर्पयन्तु नदीरिमा उदन्वतीर्वेतस्विनीः सुतीर्थ्याः । अमुष्मिँल्लोक उप वः क्षरन्तु । इति प्रथव्यं परिषिच्य न्युब्जपात्रं पाणी व्यत्यस्य दक्षिणमुत्तरमुत्तरं च दक्षिणम् । नमो वः पितरो रसाय । इति नमस्कारैरुपतिष्ठते १० तत उदकान्तं गत्वा त्रीनुदकाञ्जलीन्निनयति ११ १२

एष ते तत मधुमाँ ऊर्मिः सरस्वान्यावानग्निश्च पृथिवी च तावत्यस्य मात्रा तावानस्य महिमा तावन्तमेनं भूतं ददामि यथाग्निरक्षितोनुपदस्त एवं मह्यं पित्रेक्षितोनुपदस्तः स्वधा भवतां तं स्वधामक्षितं तैः सहोपजीवासावृचस्ते महिमा । एष ते पितामह मधुमाँ ऊर्मिः सरस्वान्यावान्वायुश्चान्तरिक्षं च तावत्यस्य मात्रा तावानस्य महिमा तावन्तमेनं भूतं ददामि यथा वायुरक्षितोनुपदस्त एवं मह्यं पितामहायाक्षितोनुपदस्तः स्वधा भवतां तं स्वधामिक्षितं तैः सहोपजीवासौ यजूंषि ते महिमा । एष ते प्रपितामह मधुमाँ ऊर्मिः सरस्वान्यावानादित्यश्च द्यौश्च तावत्यस्य मात्रा तावानस्य महिमा तावन्तमेनं भूतं ददामि यथादित्योक्षितोनुपदस्त एवं मह्यं प्रपितामहायाक्षितोनुपदस्तः स्वधा भवतां तं स्वधामक्षितं तैः सहोपजीवासौ सामानि ते महिमा । इति १ प्रत्येत्य प्रतिष्ठितमुदपात्रेणोपप्रवर्तयति । परायात पितरह् सोम्या गम्भीरैः पथिभिः पूर्व्यैः । अथ मासि पुनरायात नो गृहान्हविरत्तुं सुप्रजसः सुवीराः । इति २ एतेन माध्यावर्षं व्याख्यातम् ३ तत्र मांसं नियतम् ४ मांसाभावे शाकम् ५ १३

चतुर्थः पटलः

अष्टकां व्याख्यास्यामः १ माघ्याः पौर्णमास्या योपरपक्षस्तस्याष्टमीमेका- ष्टकेत्याचक्षते २ ततः पूर्वेद्युरनूराधेष्वपराह्णेऽग्निमुपसमाधाय दक्षिणाप्रागग्रैर्दर्भैः परिस्तीर्यैकपवित्रान्तर्हितानि चत्वारि व्रीहिशरावाणि निर्वपति । इममपूपं चतुःशरावं निर्वपामि क्लेशावहं पितृणां सांपराये देवेन सवित्रा प्रसूतः । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो वो जुष्टं निर्वपामि । इति ३ एतेनैव पवित्रेण तूष्णीं प्रोक्षणीः संस्कृत्य तूष्णीं प्रोक्ष्य तूष्णीमवहत्य यथापुरोडाशमेवं चतुर्षु कपालेषु तूष्णीं श्रपयित्वाभिघार्योद्वास्य प्रसव्यं परिषिच्यौदुम्बरमिध्ममभ्याधायौदुम्बर्या द- र्व्योपस्तिर्णाभिघारितं दक्षिणाप्राचीसंततं परंपरमवदाय दक्षिणाप्राचीसंततं परंपरं जुहोति । उलूखला ग्रावाणो घोषमक्रत हविः कृगवन्तः परिवत्सरीणाम् । एकाष्टके सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् । स्वधा नमः । अपूपं देव घृतवन्तमग्ने स्वधावन्तं पितृणां तर्पणाय । यथातथं वह हव्यमग्ने पुत्रः पितृभ्य आहुतिं जुहोमि । स्वधा नमः । अयं चतुःशरावो घृतवानपूपः पयस्वानग्ने रयिमान्पुष्टिमांश्च । प्रतिनन्दन्तु पितरः संविदानाः स्विष्टोयं सुहुतो ममास्तु । स्वधा नमः । इति ४ अथान्नस्य जुहोति । इयमेव सा या प्रथमा व्यौछत् । एकाष्टका तपसा तप्यमाना । या प्रथमा व्यौछत् । इति ५ अपूपस्यान्नस्येति समवदाय सर्पिर्मिश्रस्य जुहोति । अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः । इति ६ तं घृतवन्तं मधुमन्तमन्नवन्तं श्राद्धा- भिमर्शनेनाभिमृश्य पिगडानामावृता पिगडान्ददाति ७ तेन ब्राह्मणान्विद्यावतः परिवेवेष्टि ८ तेभ्यो यथाश्रद्धमन्नं धनं च ददाति ९ प्रसिद्धमोदकाञ्जलिदा- नाद्यथा मासिके १० १४

श्वोभूते पितृभ्यो गामालभते १ अग्निमुपसमाधाय दक्षिणाप्रागग्रैर्दर्भैः परिस्तीर्य । इमां पितृभ्यो गामुपाकरोमि तां मे समेताः पितरो जुषन्ताम् । मेदस्वतीं घृतवतीं स्वधावतीं सा मे पितॄन्सांपराये धिनोतु । स्वधा नमः । इत्युपाकरणीयां हुत्वैकेन बर्हिषैकशूलया च वपाश्रपरायौदुम्बर्योपाकरोति । पितृभ्यस्त्वा जुष्टामुपाकरोमि । इति २ अथैनां प्रोक्षति । पितृभ्यस्त्वा जुष्टां प्रोक्षामि । इति ३ तां प्रोक्षितां पर्यग्नि कृत्वा तामपरेणाग्निं प्रत्यक्शिरसं दक्षिणापदीं संज्ञपयन्ति ४ सञ्ज्ञप्तायै तूष्णीमद्भिः प्राणानाप्याय्य तूष्णीं वपां हृदयं मतस्ने उद्धरति ५ औदुम्बर्या वपाश्रपण्या वपां श्रपयत्यौदुम्बरेषु शूलेषु

पृथगितराणि ६ श्रपयित्वाभिघार्योद्वास्य प्रसव्यं परिषिच्यौदुम्बरमिध्ममभ्याधायौदुम्बर्या दर्व्योपस्तीर्णाभिघारितां वपां जुहोति । वह वपां जातवेदः पितृभ्यो यत्रैतान्वेत्थ निहितान्पराके । मेदसः कूल्या उप तान्क्षरन्तु सत्या एषामाशिषः सन्तु कामैः । स्वधा नमः । इति ७ सर्वहुतां वपां जुहोति शेषमुत्कृष्य ब्राह्मणान्भोजयेत् ८ उपस्थितेन्न ओदनस्य मांसानामिति समवदाय सर्पिर्मिश्रस्य जुहोति ।

एकाष्टकां पश्यत दोहमानामन्नं मांसवद्धृतवत्स्वधावत्
तद्ब्राह्मणैरतिपूतमन्नंतमक्षितं तन्मे अस्तु स्वधा नमः

एकाष्टका तपसा तप्यमाना संवत्सरस्य पत्नी दुदुहे प्रपीना । तं दोहमुपजीवाथ पितरः संविदानाः स्विष्टोयं सुहुतो ममास्तु । स्वधा नमः । संवत्सरस्य प्रतिमाम् । इति ९ हुत्वान्नस्य मांसानामिति समवदाय सर्पिर्मिश्रस्य जुहोति । अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः । इति १० प्रसिद्धमोदकाञ्जलिदानाद्यथा मासिके ११ अन्नधनदाने त्वत्रानियते १२ श्वोभूते मांसशेषेण पितृभ्योन्नं संस्कृत्य । त्वमग्ने अयासि । प्रजापते । इति जुहोति १३ प्रसिद्धमोदकाञ्जलिदानाद्यथा मासिके १४ १५

पञ्चमः पटलः

अथातः श्रवणाकर्म १ तद्या पौर्णमासी श्रवणेन युञ्ज्यात्तस्यामुपरिष्टात्सायमग्निहोत्रस्य दक्षिणाग्निमुपसमादधात्यौपासनमनाहिताग्निः २ अथोपकल्पयतेक्षतधाना अक्षतलाजान्सक्तून्किंशुकान्याञ्जनाभ्यञ्जने आज्यमिति ३ दर्व्यामुपस्तीर्यैतेषामेवान्नानां समवदाय सर्पिर्मिश्रस्य जुहोति । नमोग्नये पार्थिवाय पार्थिवानामधिपतये स्वाहा । नमो वायवे विभुमत आन्तरिक्षाणामधिपतये स्वाहा । नमः सूर्याय रोहिताय दिव्यानामधिपतये स्वाहा । नमो विष्णवे गौराय दिश्यानामधिपतये स्वाहा । इति ४ किंशुकान्याज्येन संयुज्य जुहोति । जग्धो मशको जग्धा विचष्टिर्जग्धो व्यध्वरः । जग्धो व्यध्वरो जग्धा विचष्टिर्जग्धो मशकः । जग्धा विचष्टिर्जग्धो मशको जग्धो व्यध्वरः । इति ५ उदकुम्भं दर्भमुष्टिं चादाय प्राङ्मुखो निष्क्रम्य प्राचो दर्भान्संस्तीर्य तेषु चतुरो बलीन्हरति । ये पार्थिवाः सर्पास्तेभ्य इमं बलिं हरामि

। य आन्तरिक्षाः । ये दिव्यः । ये दिश्याः । इति ६ अत्राञ्जनाभ्यञ्जने दत्त्वोपतिष्ठते । नमो अस्तु सर्पेभ्यः । इत्येतैर्मन्त्रैः ७ उदकुम्भमादाय त्रिः प्रदक्षिणमावसथं परिषिञ्चन्परिक्रामेद्यावता कामयेतैतावता मे सर्पा नाव- क्रामेयुरिति । अप श्वेत पदा जहि पूर्वेण चापरेण च

सप्त च मानु-षीरिमास्तिस्त्रश्च राजबन्धवैः
न वै श्वेतस्याभ्याचरेणाहिर्जघान कं चन

श्वेताय वैदर्वाय नमो नमः श्वेताय वैदर्वाय । इति ८ अथोपतिष्ठते । समीची नामासि प्राची दिक् । इत्येतैर्मन्त्रैः प्रतिदिशम् ९ नित्यमत ऊर्ध्वं बलिं हरत्या मार्गशीर्ष्याः १० नात्र किंशुकहोमः ११ न परिषेचनं विद्यते १२ निरवदास्यन्निरवदास्यन् । इत्यन्ततो बलीन्हरति १३ १६

षष्ठः पटलः

आग्रहायणीं व्याख्यास्यामः १ मार्गशीर्ष्यां पौर्णमास्यामग्निमुपसमाधाय संपरिस्तीर्य पयसि स्थालीपाकं श्रपयित्वाभिघार्योद्वास्य व्याहृतिपर्यन्तं कृत्वा जुहोति । इडायै सृप्तं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व । ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानामिह रन्तिरस्तु पुष्टिः । स्वाहा । यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा । शिवा पशुभ्यो दारेभ्यः शिवा नक्तं शिवा दिवा । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली । स्वाहा । पौर्णमासी पूरयन्त्यायान्त्यपरापरान् । मासार्धमासान्विभजति सा नः पूर्णाभिरक्षतु । स्वाहा । इति २ अथ सौविष्टकृतीं जुहोति । स्विष्टमग्ने अभि तत्पृणाहि विश्वा देव पृतना अभिष्य । उरुं नः पन्थां प्रदिशन्विभाहि ज्योतिष्मद्धेह्यजरं न आयुः । इति ३ ततः पाणी प्रक्षाल्य भूमिमालभते । प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन्प्रति प्राणेषु प्रतितिष्ठामि पुष्टे । प्रति द्यावापृथिव्योः प्रतितिष्ठामि यज्ञे । त्रया देवा एकादश त्रयस्त्रिंशाः सुराधसः । बृहस्पतिपुरोहिता देवस्य सवितुः सवे । देवा देवैरवन्तु मा । इति ४ तेषां दक्षिणा गृहपतिरुपविशति ५ उत्तरा उत्तरे ६ प्रजोत्पत्त्यानुपूर्व्येण ७ तेषां मन्त्रविदस्ते मन्त्राञ्जपन्ति ८ स्योना पृथिवि भवानृक्षरा निवेशनी ।

यच्छा नः शर्म सप्रथाः । बडित्था पर्वतानाम् । इति द्वाभ्यां दक्षिणैः पार्श्वैः संविशन्ति ९ उदायुषा । इत्युत्तिष्ठन्ति १० उदस्थामामृता अभूम । इत्युत्थाय जपन्ति ११ एवं रात्रेस्त्रिः संजिहते १२ ब्राह्मणानन्नेन परिविष्य पुरायाहं स्वस्त्ययनमृद्धिमिति वाचयित्वाथैतां रात्रिं वसन्ति १३ १७

सप्तमः पटलः

अथात उपाकरणोत्सर्जने व्याख्यास्यामः १ श्रवणापक्ष ओषधीषु जातासु हस्तेन पौर्णमास्यां वाध्यायोपाकर्म २ अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा काराडर्षीञ्जुहोति । प्रजापतये काराडर्षये स्वाहा । सोमाय काराडर्षये स्वाहा । अग्नये काराडर्षये स्वाहा । विश्वेभ्यो देवेभ्यः काराडर्षिभ्यः स्वाहा । स्वयंभुवे काराडर्षये स्वाहा । इति काराडर्षयः काराडनामानि वा सावि- त्रीमृग्वेदं यजुर्वेदं सामवेदमथर्ववेदं सदसस्पतिमिति ३ हुत्वा त्रीना- दितोनुवाकानधीयते ४ काराडादीन्वा सर्वान् ५ जयादि प्रतिपद्यते ६ स्विष्टकृदन्तं कृत्वा त्र्यहमेकाहं वा क्षम्य यथाध्यायमध्येतव्यमिति वदन्ति ७ तैषीपक्षस्य रोहिरायां पौर्णमास्यां वोत्सर्गः ८ सगणः प्राचीमुदीचीं वा दिश- मुपनिष्क्रम्य यत्रापः सुखाः सुखावगाहास्तदवगाह्याघमर्षणेन त्रीन्प्राणायामा- न्कृत्वा सपवित्रैः पाणिभिः । आपो हि ष्ठा मयोभुवः । इति तिसृभिः । हिररायवर्णाः शुचयः पावकाः । इति चतसृभिः । पवमानः सुवर्जनः । इति चैतेनानुवाकेन स्नात्वा दर्भानन्योन्यस्मै संप्रयच्छन्तो दित्सन्त इवान्योन्यम् ९ ततः शुचौ देशे प्राचीनप्रवणे प्रागग्रैर्दर्भैरुदगपवर्गारायासनानि कल्पयन्ति १० १८

ब्रह्मने प्रजापतये बृहस्पतयेग्नये वायवे सूर्याय चन्द्रमसे नक्षत्रेभ्य इन्द्राय राज्ञे यमाय राज्ञे वरुणाय राज्ञे सोमाय राज्ञे वैश्रवणाय राज्ञे वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः साध्येभ्य ऋभुभ्यो भृगुभ्यो मरुद्भ्योथर्वभ्योङ्गिरोभ्य इति देवगणानाम् १ विश्वामित्रो जमदग्निर्भरद्वाजोथ गौतमः । अत्रिर्वसिष्ठः कश्यपः । इत्येते सप्तर्षयः २ निवीतिन उत्तरत उदीचीनप्रवण उदगग्रैर्दर्भैः प्रागपवर्गारायासनानि कल्पयन्ति विश्वामित्राय जमदग्नये भरद्वाजाय गौतमायात्रये वसिष्ठाय कश्यपाय ३ वसिष्ठकश्यप- योरन्तरालेरुन्धत्यै कल्पयन्ति ४ दक्षिणतः प्राचीनप्रवणेगस्त्याय ५ तत

एकवेद्यान्तेभ्यः कृष्णद्वैपायनाय जातूकर्ण्याय तरुक्षाय तृणबिन्दवे वर्मिणे वरूथिने वाजिने वाजश्रवसे सत्यश्रवसे सुश्रवसे सुतश्रवसे सोमशुष्मायणाय सत्ववते बृहदुक्थाय वामदेवाय वाजिरत्नाय हर्यज्वायनायोदमयाय गौतमाय ऋणंजयाय ऋतंजयाय कृतंजयाय धनंजयाय बभ्रवे त्र्यरुणाय त्रिवर्षाय त्रिधातवे शिबिन्ताय पराशराय विष्णवे रुद्राय स्कन्दाय काशीश्वराय श्वराय धर्मायार्थाय कामाय क्रोधाय वसिष्ठायेन्द्राय त्वष्ट्रे कर्त्रे धर्त्रे धात्रे मृत्यवे सवित्रे सावित्र्यै वेदेभ्यश्च पृथक्पृथगृग्वेदाय यजुर्वेदाय सामवेदायाथर्ववेदायेति- हासपुराणायेति ६ दक्षिणतः प्राचीनावीतिनो दक्षिणाप्रवणे दक्षिणाग्रैर्दर्भैः प्रत्यगपवर्गाण्यासनानि कल्पयन्ति ९ १९

वैशम्पायनाय पलिङ्गवे तित्तिरायोखायात्रेयाय पदकाराय कौण्डिण्याय वृत्तिकाराय सूत्रकारेभ्यः सत्याषाढाय प्रवचनकर्तृभ्य आचार्येभ्य ऋषिभ्यो वानप्रस्थेभ्य ऊर्ध्वरेतोभ्य एकपत्नीभ्य इति १ यथास्वं पितृभ्यो मातामहेभ्यश्च कल्पयन्ति २ अमुष्मै कल्पयाम्यमुष्मै कल्पयामि । इत्यासनेन ३ अमुं तर्पयाम्यमुं तर्पयामि । इत्युदकेन ४ अमुष्मै नमोमुष्मै नमः । इति गन्धपुष्पधूपदीपैः ५ अमुष्मै स्वाहामुष्मै स्वाहा । इत्यन्नेन ६ अमुं तर्पयाम्यमुं तर्पयामि । इति फलोदकेन ७ अमुष्मै नमोमुष्मै नमः । इत्युपस्थाय ८ अपरेण वेदिमग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा काण्डर्षीञ्जुहोति काण्डनामानि वा सावित्रीमृग्वेदं यजुर्वेदं सामवेदमथर्ववेदं सदसस्पतिमिति । हुत्वा प्रथमेनानुवाकेनाधीयते । काण्डादीन्वा सर्वान् । जयादि प्रतिपद्यते । स्विष्टकृदन्तं कृत्वा त्र्यहमेकाहं वा क्षम्य यथाध्यायमध्येतव्यमिति वदन्ति ९ काण्डात्काण्डात् । या शतेन । इति द्वाभ्यामुदकान्ते दूर्वा रोपयन्ति १० उदधिमूर्मिमन्तं कृत्वा प्राचीमुदीचीं वा दिशमातमितोराजिं धावन्ति ११ प्रत्येत्यापूपैः सक्तुभिरोदनेनेति ब्राह्मणांस्तर्पयन्ति १२ एवं पारायणसमाप्तौ दूर्वारोपणोदधिधावनवर्जम् १३ नित्यमेवाद्भिर्देवानृषीन्पितृंश्च तर्पयन्ति तर्पयन्ति १४ २०

अष्टमः पटलः

द्वितीयः प्रश्नः समाप्तः

# वाराहगृह्यसूत्र

नमो यज्ञवराहाय

अतः परं परिशिष्टा मैत्रायणीयसूत्रस्य । गृह्यपुरुषः प्रायश्चित्तं अनुग्रहिकहौतृकशुल्विकोत्तरेष्टकवैष्णवाध्वर्यविकचातुर्होतृकगोनामिकाकुलपादरहस्यप्रतिग्रहयमकवृषोत्सर्गप्रश्नद्रविणषट्कारणप्रधानसान्देहिकप्रवराध्यायरुद्रविधानछन्दोऽनुक्रमणी अन्तर्क्यकल्पप्रवासविधिप्रातरुपस्थानभूतोत्पत्तिरिति द्वाविँशतिः परिशिष्टसंख्यानाम् १ गृह्येऽग्नौ पाकयज्ञान्विहरेत् २ हस्वत्वात्पाकयज्ञः । ह्रस्वँ हि पाक इत्याचक्षते ३ दर्शपूर्णमासप्रकृतिः पाकयज्ञविधिरप्रयाजोऽननुयाजोऽसामिधेनीकः ४ स्वाहाकारान्तं निगद्य होमाः ५ परतन्त्रोत्पत्तिः दक्षिणाग्नावाहिताग्निः कुर्वीत शालाग्नावनाहिताग्निः ६ गोमयेन गोचर्ममात्रं चतुरस्रँ स्थण्डिलमुपलिप्येषुमात्रं तस्मिन्लक्षणं कुर्वीत--सत्यसदसीति पश्चार्धादुदीचीं लेखां लिखति । ऋतसदसीति दक्षिणार्धात्प्राचीम् । धर्मसदसीत्युत्तरार्धात्प्राचीम् । मध्ये द्वे तिस्रो वा प्राचीः । ऊर्जस्वतीति दक्षिणाम् । पयस्वतीत्युत्तराम् । इन्द्राय त्वेति मध्याद्वा । सर्वाः प्रादेशमात्र्यो दर्भेणावलिखेत् ७ अद्भिः प्रोक्ष्याग्निँ सादयति ८ परिसमुह्य परिस्तीर्य पर्युक्ष्य तूष्णीमिध्माबर्हिः संनह्य ग्रागग्रैर्दक्षिणारम्भैरुदक्सँस्थैरयुग्मैर्धातुभिः स्तृणाति ९ दक्षिणतोऽग्नेर्ब्रह्माणमुपवेश्योत्तरत उदपात्रम् १० बर्हिषः पवित्रे कुरुते ११ समावप्रच्छिन्नप्रान्तौ दर्भौ प्रादेशमात्रौ पवित्रे स्थो वैष्णव्ये इत्योषध्या छित्त्वा विष्णोर्मनसा पूते स्थ इत्यद्भिस्त्रिरुन्मृज्य प्रोक्षणीर्धर्मैः सँस्कृत्य प्रणीतां प्रणीय निर्वपणप्रोक्षणसँवपनमिति यथादेवतं चरुमधिश्रित्य स्रुक्स्रुवं प्रमृज्याभ्युक्ष्याग्नौ प्रताप्य--अदितिरसि नाच्छिन्नपत्रेत्याज्यमग्नावधिश्रयति १२ पृश्नेः पयोऽसीत्याज्यं निर्वपति १३ परि वाजपतिरित्याज्यँ हविश्च त्रिः पर्यग्नि करोति १४ देवस्त्वा सवितोत्पुनात्वित्याज्यँ श्रपयति १५ तूष्णीमिध्माबर्हिर्विप्रोक्ष्य यथाम्नातमभिपरिस्तृणाति १६ परिधीन्परिदधाति १७ तेजोऽसीत्याज्यमवेक्ष्य पश्चादग्नेर्दर्भेष्वासादयति १८ अभिघार्य स्थालीपाकमुत्तरत उद्वासयति १९ सकृदेवेध्ममाधाय वैरूपाक्षः प्रथमो होमानाम् २० ब्रह्माणमामन्त्र्य समिध-

माधायाघारावाघार्याज्यभागौ हुत्वा युनज्मि त्वेति च योजयित्वा २१ न ह्ययुक्तो हव्यँ वहत इति ह विज्ञायते २२ कामं पुरस्ताद्धुरो जुहोति--

युक्तो वह जातवेदः पुरस्तादिदँ विद्धि क्रियमाणँ यथेह
त्वं भिषग्भेषजस्यासि गोप्ता त्वया प्रसूता गामश्वं पूरुषँ सनेम । स्वाहा

इति । विश्वा अग्ने त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषम् । इति २३ नक्षत्रमिष्ट्वा देवताँ यजेत । अहोरात्रमृतुं तिथिं च २४ अभि-घार्य यद्देवतँ हविः स्यात्तच्च जुहुयाद्यथादेवतँ यथादेवतया चर्चा २५ आ-कूताय स्वाहा । आकूतये स्वाहेति जयान्जुहुयात् २६ प्रजापतिः प्राय-च्छत् । इडामग्न इति स्विष्टकृतमुत्तरार्धपूर्वार्धे जुहुयात् २७ मेक्षणमुप-यामं पवित्रे चान्वादध्यात् २८ अन्वद्य नो अनुमतिः । अन्विदनुमते त्वमिति भूः स्वाहेति प्रायश्चित्ताहुतीश्च २९ त्वन्नो अग्ने । स त्वन्नो अग्ने । मनो ज्योतिः । त्रयस्त्रिँशत्तन्तवः । अयाश्चाग्नेऽसीति च ३०

इमँ स्तनं मधुमन्तं धयापां प्रपीनमग्ने सलिलस्य मध्ये
उत्सं जुषस्व मधुमन्तमूर्मिँ समुद्रयँ सदनमाविशस्व । स्वाहा

इति परिधिविमोकमभिजुहोति ३१ अन्नपत इत्यन्नस्य जुहुयात् ३२ एधो-ऽस्येधिषीमहि स्वाहेति समिधमादधाति । समिदसि समेधिषीमहीति द्वि-तीयाम् ३३ बर्हिषि पूर्णपात्रं निनयेत् ३४ एषोऽवभृथः ३५ पाकयज्ञा-नामेतत्तन्त्रम् ३६ आपोहिष्ठीयाभिर्मार्जयित्वा पर्युक्षेत ३७ वरो दक्षिणा । अश्वँ वरँ विद्यात् । गामित्येके ३८

इति वाराहगृह्ये प्रथमं खण्डम्

प्राङ्मुखमुदङ्मुखँ वा सूतिकालयं कल्पयित्वा ध्रुवं प्रपद्ये शुभं प्रपद्य आशां प्र-पद्य इति काले प्रपादयेत् १ रेतो मूत्रमिति च्यावनीभ्यां दक्षिणं कुक्षिमभि-मृशेत् । श्रावयेद्वा २ पुत्रं जातमन्वक्षँ स्नातं न मातोपयन्यादा मन्त्रप्रयो-गात् ३ अग्नेरभ्याहितस्य परिसमूढस्य परिस्तीर्णस्य पश्चादहते वाससि कुमारं प्राक्शिरसमुत्तानँ सँवेश्य पलाशस्य मध्यमं पर्णं प्रवेष्ट्य तेनास्य क-

र्णावाजपेत्--भूस्त्वयि दधानीति दक्षिणे । भुवस्त्वयि दधानीति सव्ये । स्वस्त्वयि दधानीति दक्षिणे । भूर्भुवः स्वस्त्वयि दधानीति सव्ये ४ अथैनमभिमन्त्रयेते--अश्मा भव परशुर्भव हिरण्यमस्तृतं भव ।

अङ्गादङ्गात्संभवसि हृदयादधि जायसे
आत्मा वै पुत्रनामासि स जीव शरदः शतम्

इति ५ यत्र शेते तदभिमृशेत्--

वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम्
वेदामृतस्य देवा माहं पुत्र्यमघँ रुदम् इति ६

आज्यँसँस्कृत्य ब्रह्माणमामन्त्र्य समिधमाधायाघारावाघार्याज्यभागौ हुत्वा व्याहृतिभिश्चतस्त्र आज्याहुतीर्जुहुयात् । जयाभ्यातानानाँ राष्ट्रभृतश्चैके ७ काँस्ये चमसे वाऽऽहुतिसंपातानवनीय तस्मिन्सुवर्णँ संनिघृष्य व्याहृतिभिः कुमारं चतुः प्राशयेत् । अत्यन्तमेके सुवर्णप्राशनमुदके निघृष्याद्वादशवर्षतायाः ८ इषं पिन्व । ऊर्जं पिन्वेति स्तनौ प्रक्षाल्य प्रधापयेत् । दक्षिणं पूर्वँ सव्यं पश्चात् ९ स्विष्टकृते हुत्वा प्रायश्चित्ताहुतीश्च समिधमाधाय पर्युक्षति १० एष कर्मान्तो बहिर्द्वारेऽग्निर्नित्यः । कणसर्षपयवानाँ होमः । व्याहृतिभिर्जुहुयात् ११ अप्रतिरथं जपेत् । इन्द्रो भूतस्येति षडर्चं च १२ सूतिकालयँ यथाकालँ समन्तादुदकेन परिषिञ्चेत् १३

इति वाराहगृह्ये द्वितीयं खण्डम्

एवमेव दशम्यां कृत्वा पिता माता च पुत्रस्य नाम दध्याताम्--घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्टानान्तं कृतं न तद्धितं द्व्यक्षरं चतुरक्षरँ वा त्यक्त्वा पितुर्नामधेयात् नक्षत्रदेवतेष्टनामानो वा १ द्विनामा तु ब्राह्मणः २ नामैव कन्यायाः--अकारव्यवधानमाकारान्तमयुग्माक्षरं नदीनक्षत्रचन्द्रसूर्यपूषदेवदत्तरक्षितावर्जम् ३ नवनीतेन पाणी प्रलिप्य सोमस्य त्वा द्युम्नेत्येनमभिमृशेत् ४ सर्वेषु कुमारकर्मस्वाग्नेयः स्थालीपाकः प्राजापत्यो वा ५

सर्वत्रानादेशेऽग्निः पुँसामर्यमा स्त्रीणाम् ६ सँवत्सरं मातापितरौ न माँसमश्नीयाताम् ७ पुत्रस्य जातदन्ते यजेताग्निं गवा पशुना वा ८ विप्रोषितः प्रत्येत्य पुत्रस्य मूर्धानं त्रिराजिघ्रेत्--पशूनां त्वा हिङ्कारेणाभिजिघ्रामीति ९ जातकर्मवद्धस्ताङ्गुलिं प्रवेष्ट्य तेनास्य कर्णावाजपेत् १० अथैनमभिमन्त्रयते--अश्मा भवेति ११ अग्निधन्वन्तरी पुत्रव्रती छागमेषाभ्यामिष्ट्वा दीर्घाणाँ व्याहृतिभिः कुमारं चतुः प्राशयेत् । आयुर्दा देवेति च १२ कुमारकर्माणि शुक्ल उदगयने पुण्ये नक्षत्रे नवमीवर्जम् । सर्व ऋतवो विवाहेऽमाघचैत्रौ मासौ परिहाप्योत्तरं च नैदाघम् १३ अन्वारम्भयित्वा हवनम् १४

इति वाराहगृह्ये तृतीयं खण्डम्

तृतीयवर्षस्य जटाः कुर्वन्ति । यथा वा कुलकल्पः १ अग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्य दक्षिणतोऽग्नेर्ब्रह्माणमुपवेश्योत्तरत उदपात्रँ शमीशमकवत् २ अथैनमभिमन्त्रयते--हिरण्यवर्णाः शुचर्य इति चतसृभिः । या ओषधय इत्यनुवाकेन

शं नो देवीरभिष्टय आपो भवन्तु पीतये
शँ योरभि स्त्रवन्तु नः
प्रियाः शं न आपो धन्वन्याः शं नः सन्तु नूप्याः
शं नः समुद्रिया आपः शमु नः सन्तु कूप्याः
शं नो मित्रः शँ वरुणः शं नो भवत्वर्यमा
शं न इन्द्रश्चाग्निश्च शं नो विष्णुरुरुक्रमः

इति । तासामुदकार्थान्कुर्वीत--पर्युक्षणेऽभ्युन्दने स्नापने च ३ आज्यँ सँस्कृत्य ब्रह्माणमामन्त्र्य समिधमाधायाघारावाघार्याज्यभागौ हुत्वा--अग्न आयूँषि पवस इति सप्तभिः सप्त हुत्वा ४ आयुर्दा देवेति च । ये केशिनः प्रथमे सत्रमासत येभिरावृतँ यदिदँ विराजति । तेभ्यो जुहोम्यायुषे दीर्घायुत्वाय स्वस्तये । इति ५ व्याहृतिभिश्च ६ उक्तः कर्मान्तः पूर्वेण ७ शीतेन वाय उदकेनेधि । उष्णेन वाय उदकेनेधीति तप्ता इतराभिः सँसृज्य --आर्द्रदानव स्थ जीवदानव स्थोन्दतीरिषमावदेत्यपोऽभिमन्त्र्य दक्षिणं

केशान्तमभ्युन्द्यात्-अदितिः केशान्वपत्वाप उन्दन्तु जीवसे । दीर्घायुत्वाय स्वस्तये । इति ८ दक्षिणस्मिन्केशान्ते दर्भमूर्ध्वाग्रं निदधाति ९ ओषधे त्रायस्वैनमिति दर्भमन्तर्दधाति १० स्वधिते मैनँ हिँसीरिति क्षुरेणाभिनिदधाति ११

येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्
तेन ब्रह्माणो वपतेदमस्यायुष्मानयं जरदष्टिर्यथासत् । अहमसौ

इति प्रवपति १२ दक्षिणतो माताऽन्या वाऽविधवाऽऽनडुहेन गोमयेनाऽभू-मिगतान्केशान्परिगृह्णीयात् १३

मा ते केशाननुगाद्वर्च एतत्तथा धाता दधातु ते
तुभ्यमिन्द्रो वरुणो वृहस्पतिः सविता वर्च आदधुः

इति प्रपततोऽनुमन्त्रयते १४ तेन धर्मेण पुनरपोऽभिमन्त्र्यापरं केशान्तमभ्यु-न्द्यादुत्तरं च १५ अन्यौ तु प्रवपनौ--

येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत्
तेन ते वपाम्यायुषे दीर्घायुत्वाय स्वस्तये

इति पश्चात्

येन भूयश्चरत्ययं ज्योक्च पश्यसि सूर्यम्
तेन ते वपाम्यायुषे दीर्घायुत्वाय सुश्लोक्याय सुवर्चसे

इत्युत्तरतः १६

यत्क्षुरेण पर्चयता सुपेशसा वप्तर्वपसि केशान्
शुन्ध शिरो मास्यायुः प्रमोषीः

इति लोहायसं क्षुरं केशवापाय प्रयच्छति १७ यथार्थं केशयत्नान्कुर्व-

न्ति--दक्षिणतः कपर्दा वसिष्ठानामुभयतोऽत्रिभार्गवकाश्यपानां पञ्चचूडा आङ्गिरसः शिखिनोऽन्ये १८ वाजिमेके मङ्गलार्थम् १९

त्र्यायुषं कश्यपस्य जमदग्नेस्त्र्यायुषमगस्त्यस्य त्र्यायुषम्
यद्देवानां त्र्यायुषं तन्मे अस्तु शतायुषम्

इति शिरः संमृशति २० परिगृह्य गोमयेन केशानुत्तरपूर्वस्यां गृहस्य मूष्यामन्तरा गेहात्पलदं च निदध्यात् । अरिक्ते वा वपने

उप्त्वाय केशान्वरुणाय राज्ञो बृहस्पतिः सविता विष्णुरिन्द्रः
तेभ्यो निधानं महदन्वविन्दन्नन्तरा द्यावापृथिवी अप स्वः

इति २१ कर्त्रे वरं ददाति २२ पद्मगुणं तिलपिशितं च केशवापाय प्रयच्छति २३ सँवत्सरं माता नाम्लाय धारयेत् । रोषाय नाश्नीयात् । लवणवर्जं तूष्णीम् २४ कन्याया आहुतिवर्जम् २५ विदुषो ब्राह्मणानर्थसिद्धिँ वाचयेत् २६ एवमुत्तरेषु २७

इति वाराहगृह्ये चतुर्थं खण्डम्

गर्भाष्टमेषु ब्राह्मणमुपनयेत् । षष्ठे सप्तमे पञ्चमे वा १ ततो गर्भैकादशेषु क्षत्रियं गर्भद्वादशेषु वैश्यम् २ प्राक्षोडशाद्वर्षाद् ब्राह्मणस्यापतिता सावित्री द्वाविँशात्क्षत्रियस्य चतुर्विँशाद्वैश्यस्य । अत ऊर्ध्वं पतितसावित्रिका भवन्ति । नैनान्याजयेयुर्नाध्यापयेयुर्न विवहेयुर्ना विवाहयेयुः ३ अभ्यन्तरं जटाकरणं बहिरुपनयनम् ४ उक्तोऽग्निसँस्कारो ब्रह्मणश्च ५ कुमारं पर्युप्तिनँ स्नातमभ्यक्तशिरसमुपस्पर्शनकल्पेनोपस्पृष्टमग्नेर्दक्षिणतोऽवस्थाप्य दधिक्राव्णो अकारिषमिति दध्नः कुमारं त्रिः प्राशयेत् ६

इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती न आगात्
प्राणापानाभ्यां बलमाभजन्ती शिवा देवी सुभगा मेखलेयम्

ऋतस्य गोप्त्री तपसस्तरुत्री घ्नती रक्षः सहमाना अरातीः
सा मा समन्तमनुपर्येहि भद्रे धर्तारस्ते सुभगे मेखले मा रिषाम

इति मौञ्जीं त्रिगुणां त्रिः परिवीतां मेखलामाबध्नीते । मौर्वीं धनुर्ज्यां क्षत्रि-

यस्य शार्णीं वैश्यस्य ७ उपवीतमसि यज्ञस्य त्वोपवीतेनोपव्ययामीति यज्ञोपवीतम् ८

या अकृतन्या अतन्वन्या अवायन्या अवाहरन्
याश्चाग्ना देवीरन्तानभितोऽतन्वत तास्त्वा देवीर्जरसे सँव्ययन्ताम्

आयुष्मानयं परिधत्त वासः परिधत्त वर्चः
शतायुषं कृणुहि दीर्घमायुः

शतं च जीव शरदः पुरूचीर्वसूनि चाय्यो विभजाय जीयान्

इत्यहतँ वास आच्छाद्य

मित्रस्य चक्षुर्धरणं बलीयस्तेजो यशस्वि स्थविरं च धृष्णु
अनाहनस्यँ वसनं चरिष्णु परीदँ वाज्यँ वाजिनं दधेऽहम्

इति कृष्णाजिनं च ९ आज्यँ सँस्कृत्य ब्रह्माणमामन्त्र्य समिधमाधायाघा-
रावाघार्याज्यभागौ हुत्वाऽष्टौ जटाकरणीयान्जुहुयात् १० व्याहृतिभिश्च ११
उक्तः कर्मान्तः पूर्वेण १२ कालाय वां गोत्राय वां जैत्राय वामौद्भेत्राय वा-
मन्नाद्याय वामवेनेनिजेदित्युदकेनाञ्जलिं पूरयित्वा सुकृताय वामिति पाणी
प्रक्षाल्य इदमहं कुर्यमन्या निष्प्लावयामीत्याचम्य निष्ठीवति १३ भ्रातृ-
व्याणाँ सपत्नानामहं भूयासमुत्तम इति द्वितीयम् १४

प्रातर्जितं भगमुग्रँ हुवेम वयं पुत्रमदितेर्यो विधर्ता
आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीमहीत्याह

इत्यादित्यमुपतिष्ठेत १५ ब्रह्मचर्यमुपागामुप मा ह्वयस्वेति ब्रूयात् १६ एहि
ब्रह्मोपेहि ब्रह्म ब्रह्म त्वा स ब्रह्म सन्तमुपनयाम्यहमसाविति १७ अथा-
स्याभिवादनीयं नाम गृह्णाति १८ देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां

पूष्णो हस्ताभ्याँ हस्तं गृह्णाम्यहमसावित्यस्य हस्तं दक्षिणेन दक्षिणमुत्तानम-भीवाङ्गुष्ठमभीव लोमानि गृह्णीयात्  १९

मामेवान्वेतु ते मनो मामेवापि त्वमन्विहि
अग्नौ घृतमिव दीप्यताँ हृदयं तव यन्मयि

इत्येनं प्रेक्षमाणँ समीक्षते  २०  पृष्ठतोऽस्य पाणिमन्ववहृत्य हृदयदेशमन्वा-रभ्य जपेत्--प्राणानां ग्रन्थिरसि स मा विस्रसदिति ।  ब्रह्मणो ग्रन्थिरसी-ति नाभिदेशम्  २१

गणानां त्वा गणपतिँ हवामहे कविं कवीनामुपमश्रवस्तमम्
ज्येष्ठराजं ब्रह्माणं ब्रह्मणस्पत आ नः कृण्वन्नूतिभिः सईद सादनम्

इति प्रदक्षिणमग्निं परिणयेत्  २२  पश्चादग्नेर्दर्भेषूपविशति दक्षिणतश्च ब्रह्म-चारी  २३  अधीहि भो इत्युपविश्य जपति  २४  प्रभुज्य दक्षिणं जानुं पाणी संधाय दर्भहस्तावोमित्युक्त्वा व्याहृतीः सावित्रीं चानुब्रूयात् ।  एवं का-ण्डानुवचनेषु  २५  तत्सवितुर्वरेण्यमिति गायत्रीं ब्राह्मणाय ।  आ देवो यातु सविता सुरत्न इति त्रिष्टुभं क्षत्रियाय ।  युञ्जते मन इति जगतीँ वैश्याय ।  पच्छोऽर्धर्चशः सर्वामन्ततः  २६  पालाशं दण्डं ब्राह्मणाय प्रयच्छति नैयग्रोधं क्षत्रियायाश्वत्थँ वैश्याय ।  सुश्रुवः सुश्रवसं मां कुरु ।  यथा त्वँ सुश्रवः सुश्रवा अस्येवमहँ सुश्रवः सुश्रवा भूयासम् ।  यथा त्वं देवानाँ वेदस्य निधिगोपोऽस्येवमहं मनुष्याणां ब्रह्मणो निधिगोपो भूयासमिति प्रतिगृह्णाति २७  ऊर्ध्वकपालो ब्राह्मणस्य कमण्डलुः परिमण्डलः क्षत्रियस्य निचल्कलो वैश्यस्य

इमा आपः प्रभराम्ययक्ष्मा यक्ष्मचातनीः
ऋतेनापः प्रभराम्यमृतेन सहायुषा

इति प्रतिगृह्णामीति प्रतिगृह्य भैक्ष्यचर्यं चरेत्  --  भवति भिक्षां देहीति ब्राह्मणः भवतिमध्यां क्षत्रियः भवत्यन्त्याँ वैश्यः ।  चतस्रः षडष्टौ वाऽवि-धवा अप्रत्याख्यायिन्यः ।  मातरं प्रथममेके  २८  गुरवे निवेद्य  २९  वा-

ग्यतः प्राग्ग्रामात्संध्यामासेत् । तिष्ठन्पूर्वाम् । सावित्रीं त्रिरधीत्य

अध्वनामध्वपते स्वस्त्यस्याध्वनः पारमशीय
या मेधा अप्सरःसु गन्धर्वेषु च यन्मनः
या मेधा दैवी मानुषी सा मामाविशतामिह

इति ३० प्रत्येत्याग्निं परिचरेत् । इमँ स्तोममर्हत इति परिसमूहेत् । एधोऽस्येधिषीमहीति समिधमादधाति । समिदसि समेधिषीमहीति द्वितीयाम् ३१ अपो अद्यान्वचारिषमित्युपतिष्ठते ३२ तं मा सँसृज वर्चसेति मुखं परिमृजीत ३३

यदग्ने तपसा तपो ब्रह्मचर्यमुपेमसि
प्रियाः श्रुतस्य भूयास्मायुष्मन्तः सुमेधसः

अग्ने समिधमहारिषं बृहते जातवदसे
स मे श्रद्धां च मेधां च जातवदाः प्रयच्छतु । स्वाहा

इति समिधमादधाति ३४ तेजसा मा समङ्ग्धि वर्चसा मा समङ्ग्धि ब्रह्मवर्चसेन मा समङ्ग्धीति मुखं परिमृजीत ३५ आयुर्धा अग्नेऽसीति यथारूपं गात्राणि संमृशति ३६ इह धृतिरिति पर्यायैरँसं ग्रीवाश्चार्चिरालभ्य रुचं नो धेहीति ललाटमभिमृशेत् ३७ आद्यन्तयोः पर्युक्षणम् ३८ गुरवे ब्रह्मणे च वरमुत्तरासङ्गं च ददाति ३९ द्वादशरात्रमक्षारलवणमाशेत् ४० अक्षारमेके ४१ व्युष्टे द्वादशरात्रे षड्रात्रे वा ग्रामात्प्राचीँ वोदीचीँ वा दिशमुपनिष्क्रम्य पश्चात्पलाशस्य यज्ञीयस्य वा वृक्षस्य सावित्रेण स्थालीपाकेनेष्ट्वा जयप्रभृतिभिश्चाज्यस्य पुरस्तात्स्विष्टकृतो मेखलां दण्डं चाप्सु प्रास्येत् ४२ तत्रैव हविश्शेषं भुञ्जीतेति श्रुतिः ४३

इति वाराहगृह्ये पञ्चमं खण्डम्

उपनयनप्रभृति व्रतचारी स्यात् १ उपनयनेन व्रतादेशा व्याख्याताः २ मार्गवासाः सँहतकेशः भैक्षाचर्यवृत्तिः सशल्कदण्डः सप्तमौञ्जीं मेखलां

धारयेद् आचार्यस्याप्रतिकूलः सर्वकारी ३ यदेनमुपेयात्तदस्मै दद्यात् । बहूनाँ येन संयुक्तः ४ नास्य शय्यामाविशेत् ५ न रथमारोहेत् ६ न सँवसेत् ७ न विहारार्थो जल्पेत् ८ न रुच्यर्थः कञ्चनं धारयेत् ९ सर्वाणि साँस्पर्शकानि स्त्रीभ्यो वर्जयेत् १० न स्नायाद्दण्डवत् ११ नोदकमभ्युपेयात् १२ न दिवा स्वपेत् १३ त्रैविद्यकं ब्रह्मचर्यं चरेत् १४ इन्द्रियसँयतः सायं प्रातर्भैक्ष्यवृत्तिः १५ सायं प्रातरग्निं परिचरेत् १६ अधश्शायी आचार्याधीनवृत्तिः तन्निसर्गादशनम् अयाचितं लवणम् १७ वाग्यतोऽश्नीयात् १८ मधुमाँसे वर्जयेत् १९ अच्छन्नवस्त्राँ विवृताँ स्त्रियं न पश्येत् २० यौप्यस्य वृक्षस्य दण्डी स्यात् २१ नानेन प्रहरेद्धवे न ब्राह्मणाय २२ न नृत्यगीते गच्छेत् २३ न चैने कुर्यात् २४ नावलिखेत् २५ शिखाजटः सर्वजटो वा स्यात् २६ शाणीक्षौमाजिनवासाः २७ रक्तँ वसनकम्बलम्--एणेयं ब्राह्मणस्य रौरवं क्षत्रियस्य आजँ वैश्यस्य २८ एतेन धर्मेण द्वादशवर्षाण्येकवेदे ब्रह्मचर्यं चरेत् । चतुर्विँशति द्वयोः षट्त्रिँशति त्रयाणाम् अष्टाचत्वारिँशति सर्वेषाम् । यावद् ग्रहणँ वा २९ मलज्ञुरबलः कृशः स्नात्वा स सर्वं लभते यत्किञ्चिन्म-नसेप्सितमिति ३० एतेन धर्मेण साध्वधीते ३१ मन्त्रब्राह्मणान्यधीत्य कल्पं मीमाँसां च याज्ञिकोऽधीत्य वक्त्रं पदँ स्मृतिं चैच्छिकः ३२ तौ स्नातकौ ३३ श्रोत्रियोऽन्यो वेदपाठी । न तस्य स्नानम् ३४ उपविश्याचमनँ विधीयते । अन्तर्जानु बाहू कृत्वा त्रिराचामेत् ३५ द्विः परिमृजेत् खानि चोपस्पृशे-च्छीर्षण्यानि ३६

इति वाराहगृह्ये षष्ठं खण्डम्

अथ चातुर्होतृकी दीक्षा सँवत्सरम् १ आघारावाघार्याज्यभागौ हुत्वा चतु-र्होतृन्स्वकर्मणो जुहुयात् । सह पञ्चहोत्रा षड्ढोत्रा च सप्तहोतारमन्ततः २ हुत्वा व्रतं प्रदायादितो द्वावनुवाकावनुवाचयेत् ३ अथाग्निव्रताश्वमेधिकी दीक्षा सँवत्सरं द्वादशरात्रँ वा ४ आकूतमग्निमिति षड्ढुत्वा व्रतं प्रदायादि-तोऽष्टावनुवाकाननुवाचयेत् ५ त्रिषवणमुदकमाहरेत्त्रीँस्त्रीन्कुम्भान् ६ त्रीँश्च समित्पुलान् ७ भस्मनि शयीत करीषे सिकतासु भूमौ वा ८ नोद-कमभ्युपेयात् ९ सँवत्सरे समाप्ते घृतवतापूपेनाग्निमिष्ट्वा वात्सप्रँ वाचयेत् १० स्मार्तेन यावदध्ययनं काण्डव्रतविशेषा होमार्थश्चाद्यन्तयोर्जुहुयात् ११ अथैनं परिददीत--अग्नये त्वा परिददानि । वायवे त्वा परिददानि । सूर्याय त्वा

परिददानि । प्रजापतये त्वा परिददानीति १२ एतेनैवाश्वमेधो व्याख्यातः १३ नवमेनानुवाकेन हुत्वा दशमेनोपतिष्ठेत १४ अश्वाय घा-समुदकस्थानमुदकं चाभ्युपेयात् १५ एताभ्यामेव मन्त्राभ्यां त्रैविद्यकँ व्रत-मुपेयात् १६ रहस्यमध्येष्यता प्रवर्ग्यः १७ तस्य रहस्ये व्रतोपायनँ समि-न्मन्त्रश्च १८ तिष्ठेदहनि रात्रावासीत वाग्यतः १९ पर्वसु चैवँ स्यात् २० सर्वजटश्च स्यात् २१ सँवत्सरावरः प्रवर्ग्यो भवति २२

इति वाराहगृह्ये सप्तमं खण्डम्

वर्षासु श्रवणेनाध्यायानुपाकरोति । हस्तेन वा । प्रौष्ठपदीमित्येके १ अथ जुहोति--

अप्वा नामासि तस्यास्ते जोष्ट्रीं गमेयम्
अहमिद्धि पितुः परि मेधा अमृतस्य जग्रभ । अहँ सूर्य इवाजनि स्वाहा

अप्वो नामासि तस्य ते जोष्ट्रं गमेयम्
अहमिद्धि पितुः परि मेधा अमृतस्य जग्रभ । अहँ सूर्य इवाजनि स्वाहा

इति २ युक्तिर्नामासि । योगो नामासि । मतिर्नामासि । सुमतिर्ना-मासि । सरस्वती नामासि । सरस्वान्नामासि । तस्यास्ते जोष्ट्रीं गमेयं तस्य ते जोष्ट्रीं गमेयं इत्यनुषजेत् ३ यजे स्वाहा । प्रयुजे स्वाहा । सँयुजे स्वाहा । उद्युजे स्वाहा । उद्युज्यमानाय स्वाहेति जयप्रभृतिभि-श्चाज्यस्य पुरस्तात्स्विष्टकृतोऽन्तेवासिनाँ योगमिच्छन्नथ जपति--

ऋतँ वदिष्यामि सत्यँ वदिष्यामि ब्रह्म वदिष्यामि
तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारम्

वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरायुर्मयि धेहि
वेदस्य वाणी स्थ

उपतिष्ठन्तु छन्दाँस्युपाकुर्महेऽध्यायान् ४ ओं भूर्बुवः स्वरिति दर्भपाणिस्त्रिः सावित्रीमधीत्यादितश्च त्रीननुवाकाँस्तथाङ्गानामेकैकम् । को वो युनक्तीति

च ५ तस्यानध्यायाः । समूहन्वातः वलीकक्षारप्रभृति वर्षं न विद्योतमाने न स्नयतीति श्रुतिः आकालिकं देवतुमूलँ विद्युद्धन्वोल्काऽत्यक्षराः शब्दाः आचारेणान्ये ६ अर्धपञ्चमान्मासानधीत्य पञ्चार्धषष्ठान्वा दक्षिणायनँ वा-ऽधीत्याथोत्सृजन्त्येतेन धर्मेण--

ऋतमवादिषँ सत्यमवादिषं ब्रह्मावादिषं
तन्मामावीत्तद्वक्तारमावीदावीन्मामावीद्वक्तारम्

वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरायुर्मयि धेहि
वेदस्य वाणी स्थ

प्रतिश्वसन्तु छन्दाँस्युत्सृजामहेऽध्यायान् ७ ओं भूर्भुवः स्वरित्यन्तमधीत्य को वो विमुञ्चतीति च ८ पक्षिणीँ रात्रीं नाधीयीत । उभयतःपक्षाँ वा ९ नात ऊर्ध्वमभ्रेषु १० आकालिकविद्युत्स्तनयित्नुवर्षँ वर्षं च ११ अथोप-निषदर्हाः । ब्रह्मचारी सुचरिती मेधावी कर्मकृद्धनदः प्रियः विद्यया वा विद्यामन्विच्छन् १२ तानि तीर्थानि ब्रह्मणः १३

इति वाराहगृह्येऽष्टमं खण्डम्

षोडशवर्षस्य गोदानम् । अग्निँ वाऽध्येष्यमाणस्य । अग्निगोदानो मैत्रा-यणिः १ जटाकरणेनोक्तो मन्त्रविधिः २ उपस्थ उपकक्षयोश्चाधिको म-न्त्रप्रयोगः

यत्क्षुरेण पर्चयता सुपेशसा वप्तर्वपसि केशश्मश्रून्
शुन्ध शिरो मुखं मास्यायुः प्रमोषीः

इति ३ भूमौ केशान्निखनेत् ४ अन्ते गां दद्यात् ५ वेदे गुरुणाऽनुज्ञातः स्नायात् ६ छन्दस्यर्थान्बुद्ध्वा स्नास्यन्गां कारयेत् ७ आचार्यमर्हयेत् ८ आपो हि ष्ठेति तिसृभिः हिरण्यवर्णाः शुचय इति चतसृभिः स्नात्वाऽहते वाससी परिदधीत--वस्वसि वसुमन्तं मां कुरु सौवर्चसाय वां तेजसे ब्रह्मवर्चसाय परिदधानीति ९ विश्वजनस्य छायासीति छत्रं धारयते १०

मालामाबध्नीते--

यामश्विनौ धारयेतां बृहतीं पुष्करस्रजम्
ताँ विश्वैर्देवैरनुमतां मालामारोपयामि

इति ११ तेजोऽसीति हिरण्यं बिभृयात् १२ प्रतिष्ठे स्थो देवते मा मा संताप्तमित्युपानहौ १३ विष्टम्भोऽसीति धारयेद्वैणवीँ यष्टिम् १४ सोदकं च कमण्डलुम् १५ नित्यव्रतान्याहुराचार्याः १६ द्विवस्त्रोऽत ऊर्ध्वम् । शोभनँ वासो भर्तव्यमिति श्रुतिः १७ आमन्त्र्य गुरून्गुर्वधीनाँश्च स्वान्गृहान्व्रजेत् १८ प्रतिषिद्धमपरया द्वारा निस्सरणं मलवद्वाससा सह संभाषा रजस्वद्वाससा सह शय्या गोर्गुरोर्दुरुक्तवचनमस्थाने शयनँ स्थानँ स्मयनँ यानं गानँ स्मरणमिति । तानि वर्जयेत् १९ याजनँ वृत्तिः । उञ्छँ शिलमयाचितप्रतिग्रहः साधुभ्यो वा याचितम् । असँसिध्यमानायाँवा वैश्यवृत्तिः २० स्वाध्यायविरोधिनोऽर्थानुत्सृजेत् २१

इति वाराहगृह्ये नवमं खण्डम्

विनीतक्रोधः सहर्षः सहर्पीं भार्याँ विन्देतानन्यपूर्वाँ यवीयसीम् १ असमानप्रवरैर्विवाहः । ऊर्ध्वँ सप्तमात्पितृबन्धुभ्यः पञ्चमान्मातृबन्धुभ्यो बीजिनश्च २ कृत्तिकास्वातिपूर्वैरिति वरयेत् ३ मृगशिरःश्रविष्ठोत्तराणीत्युपयमेत् ४ पञ्च विवाहकारकाणि भवन्ति--वित्तँ रूपँ विद्या प्रज्ञा बान्धवमिति ५ एकालाभे वित्तँ विसृजेत् । द्वितीयालाभे रूपम् । तृतीयालाभे विद्याम् । प्रज्ञायां तु बान्धवे च विवदन्ते ६

अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्तु नो वरेयम्
समर्यमा सं भगो नोऽनुनीयात्सं जास्पत्यँ सुयममस्तु देवाः

इति वरकान्व्रजतोऽनुमन्त्रयते ७ बन्धुमतीं कन्यामस्पृष्टमैथुनामुपयच्छेतानग्निकाँ श्रेष्ठाम् ८ विज्ञानमस्यै कुर्यात् । चतुरो लोष्टानाहरेत्--सीतालोष्टँ वेदिलोष्टं गोमयलोष्टँ श्मशानलोष्टं च ९ तेषामेकं गृह्णीष्वेति ब्रूयात् । श्मशानलोष्टं चेद्गृह्णीयान्नोपयच्छेत १० असँस्पृष्टां धर्मेणोपय-च्छेत ब्राह्मेण शौल्केन वा ११ शतमितिरथं दद्याद् गोमिथुनँ वा १२

उभयाँस्तेजनीष्वासजेञ्जन्यान्कौमारिकाँश्च । पूर्वे जन्याःस्युरपरे कौमारि-काः १३ चतुरो गोमयपिरडान्कृत्वा द्वावन्येभ्यस्तथान्येभ्य इति प्रयच्छेत् १४ धनं न इति ब्रूयुः । पुत्रपशवो न इति जन्याः १५ ददानि । प्रतिगृह्णानीति त्रिर्ब्रह्मदेयाम् १६ कृतेनाँसेन विसंकसेयुः १७ त्रिरानन्दं मागधो ह्वयेत् १८

इति वाराहगृह्ये दशमं खराडम्

षडर्घ्यार्हा भवन्ति--ऋत्विगाचार्यो विवाह्यो राजा स्नातकः प्रियश्चेति १ अप्राकरणिकान्ना परिसँवत्सरादर्हयन्ति । अन्यत्र याज्यात्कर्मणो विवाहाच्च २ न जीवपितृकोऽर्घ्यं प्रतिगृह्णीयात् ३ अथैनमर्हयन्ति ४ काँस्ये चमसे वा दधनि मध्वासिच्य वर्षीयसाऽपिधाय विराजो दोहोऽसि विराजो दोहोऽसि विराजो दोहमशीय मयि दोहः पद्यायै विराज इति मधुपर्कमाहियमाणं प्रतीक्षते ५ सावित्रेण विष्टरौ प्रतिगृह्यराष्ट्रभृदसीत्यासन्द्यामुदगग्रमास्तृणाति ६

अहँ वर्ष्म सदृशानामुद्यतानामिव सूर्यः
इदमहं तमधरं करोमि यो मा कश्चाभिदासति

इत्येकस्मिन्नुपविशति ७ मा त्वद्योषमित्यन्यतरमधस्तात्पादयोरुपकर्षति ८ विष्टर आसीनायैकैकं त्रिः प्राह ९ नैव भो इत्याह । न मा रिषामेति १० आचमनीयाः प्रथमाः प्रतिपद्यन्ते ११ अमृतोपस्तरणमसीत्याचामति १२ पद्येन पादौ प्रक्षालयति १३ स्पृशत्यर्धम् १४ ततः प्रणयति १५ सावित्रेणोभयतोविष्टरं मधुपर्कं प्रतिगृह्य--अदित्यास्त्वा पृष्ठे सादयामीति भूमौ प्रतिष्ठाप्यावसाय्य सुपर्णस्य त्वा गरुत्मतश्चक्षुषाऽवेक्ष इत्यवेक्ष्य नमो रुद्राय पात्रसद इति प्रादेशेन प्रतिदिशँ व्युद्दिश्याङ्गुष्ठेनोपमध्यमया च मधु वाता ऋतायत इति तिसृभिः सँसृजति १६ सत्यँ यशः श्रीर्मयि श्रीः श्रयतामिति त्रिः प्राश्नाति भूयिष्ठम् १७ सुहृदेऽवशिष्टं प्रयच्छति १८ अमृ-तापिधानमसीत्याचामति १९ असिविष्टरपाणिर्गां प्राह २० हतो मे पाप्मा पाप्मानं मे हत । यां त्वा देवा वसवोऽन्वजीविषुरादित्यानाँ स्वसारँ रु-द्रमातरम् । दैवीं गामदितिं जनानामारभन्तामर्हतामर्हणाय । ओं कुरुतेति संप्रेष्यति २१ चतुरवरान्ब्राह्मणान्नानागोत्रानित्यैकैकं पश्वङ्गं पायसँ वा भोजयेत् २२ यद्युत्सृजेत्--

माता रुद्राणां दुहिता वसूनाँ स्वसादित्यानाममृतस्य नाभिः
प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिँ वधिष्ट

ओमुत्सृजत तृणान्यत्तूदकं पिबतु । इत्युक्ते पशुमालभन्ते २३ शं नो मित्र इति पाणी प्रक्षाल्य यथार्थम् २४

इति वाराहगृह्ये एकादशं खण्डम्

अथालंकरणम्--अलंकरणमसि सर्वस्मा अलं भूयासम् १ प्राणापानौ मे तर्पयामि समानव्यानौ मे तर्पयाम्युदानरूपे मे तर्पयामि चक्षुःश्रोत्रे मे तर्पयामि सुचक्षा अहमक्षिभ्यां भूयासँ सुवर्चा मुखेन सुश्रुत्कर्णाभ्यामिति गन्धाच्छादने २

परिधास्ये यशो धास्ये दीर्घायुत्वाय जरदष्टिरस्मि
शतं च जीव शरदः पुरूचीर्वसूनि चाय्यो विभजाय जीयाम्

इत्यहतँ वास आछाद्याग्निं प्रज्वाल्य व्याहृतिभिर्व्रीहियवान्हुत्वा मङ्गलान्याशासेत् ३

इति वाराहगृह्ये द्वादशं खण्डम्

अथ प्रवदने कन्यामुपवसिताँ स्नाताँ सशिरस्कामहतेनाछिन्नदशेन वाससा सँवीताँ सँस्तीर्णस्य पुरस्ताद्विहितानि वादित्राणि विधिवदुपकल्प्य पुरस्तात्स्विष्टकृतो वाचे पथ्यायै पूष्णे पृथिव्या अग्नये सेनायै धेनायै गायत्र्यै त्रिष्टुभे जगत्या अनुष्टुभे पङ्क्ये विराजे राकायै सिनीवाल्यै कुह्वै त्वष्ट्र आशायै संपत्त्यै भूत्यै निर्ऋृत्या अनुमत्यै पर्जन्यायाग्नये स्विष्टकृते च जुहुयात् १ आज्यशेषेण पाणी प्रलिप्य कन्याया मुखँ संमार्ष्टि--

प्रियां करोमि पतये देवराणाँ श्वसुराय च
रुच्यै त्वाग्निः सँसृजतु रुचिष्या पतये भव

सौभाग्येन त्वा सँसृजत्विळा देवी घृतपदीन्द्राण्यग्नाय्यश्विनी राट्

वागिळा द्यौररुन्धती

इति च २ सर्वाणि वादित्राणयभिमन्त्रयते--

या चतुर्धा प्रवदत्यग्नौ या वाते या बृहत्युत
पशूनाँ यां ब्राह्मणे न्यदधुः शिवा सा प्रवदत्विह

इति ३ सर्वाणि वादित्राणयलंकृत्य कन्या प्रवादयते--

शुभँ वद दुन्दुभे सुप्रजास्त्वाय गोमुख
प्रक्रीडन्तु कन्याः सुमनस्यमानाः सहेन्द्राणया सवयसः सनीडाः

प्रजापतिर्यो वसति प्रजासु प्रजास्तन्वते सुमनस्यमानाः
स इमाः प्रजा रमयतु प्रजात्यै स्वयं च नो रमताँ शं दधानः

इति ४ प्रवदन्ति कारालिकानि ५ कन्यामुदकेनामिषिञ्चेत् ६
इति वाराहगृह्ये त्रयोदशं खणडम्

खे रथस्य खेऽनसः खे युगस्य शतक्रतोः
अबालामिन्द्रस्त्रिः पूर्त्यकृणोत्सूर्यवर्चसः

इत्यथास्या अहतँ वासः प्रयच्छति १ अथैनां दर्भशुल्वेन संनह्यति--

सं त्वा नह्यामि पयसा पृथिव्याः सं त्वा नह्याम्यद्भिरोषधीभिः
सं त्वा नह्यामि प्रजया धनेन सह संनद्धा सुनुहि भागधेयम्

इति २ अथैनाँ वाससोऽन्तं ग्राहयित्वाऽभ्युदानयति --
अघोरचक्षुरपतिघ्न्येधि

एहि शिवा पशुभ्यः सुमनाः सुवर्चाः
दीर्घायुपत्नी प्रजया स्वर्विदिन्द्रप्रणयीरुप नो वस्तुमेहि

इति ३ समूहनोल्लेपनोद्धननावेक्षणमित्यग्निकाले भूमिसँस्कारान्सर्वत्र यथानिमित्तम् ४ पश्चादग्नेः कटे तेजन्याँ वा दर्भेष्वासनम् ५ शुचौ भूमिप्रदेशे शमीशमकश्यामाकानां प्रियङ्गुदूर्वागौरसर्षपाणाँ यथालाभगन्धसक्षीरफलवद्भ्यो वनस्पतिभ्यो हरित्पर्णकुशयवादिभिश्चान्नैर्या ओषधयः । समन्या यन्तीत्यनुवाकेन शं नो देवीरिति च सहिरण्यापोऽभिमन्त्र्य प्रणीतोदकुम्भं प्रणयेत् ६ तं लाजाहुतीषु हूयमानासु भ्राता ब्रह्मचारी वोद्दृह्य धारयेद् दक्षिणतश्च ७ लाजान्सँस्कृतान्शमीपर्णमिश्रान्शूर्पेण दक्षिणतो माताऽन्या वाऽविधवा ८ आज्यँ सँस्कृत्य ब्रह्माणमामन्त्र्य समिधमाधायाघारावाघार्याज्यभागौ हुत्वा ९ अथ जुहोति--

अग्नये जनविदे स्वाहा
सोमाय जनविदे स्वाहा
गन्धर्वाय जनविदे स्वाहा
सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः
तृतीयोऽग्निष्टे पतिस्तुर्योऽहं मनुष्यजाः । स्वाहा

सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये
रयिं च पुत्राँश्चादादग्निर्मह्यमथो इमाम्

इति १० हिरण्यगर्भ इत्यष्टाभिः प्रत्यृचमाज्याहुतीर्जुहुयात् ११ येन कर्मणेत्सेत्तत्र जयाञ्जुहुयादिति जयानाँ श्रुतिः । त्वा यथोक्तम् । आकूत्यै त्वा स्वाहा । भूत्यै त्वा स्वाहा । कामायै त्वा स्वाहा । रक्षायै त्वा स्वाहा । समृधे त्वा स्वाहा । समृद्ध्यै त्वा स्वाहा । ऋचा स्तोमम् । प्रजापतये । भूः स्वाहा । अयाश्चाग्नेऽसीति च १२ उत्तरतोऽग्नेर्दर्भेषु प्राचीं कन्यामवस्थाप्य पुरस्तात्प्रत्यङ्मुख उपयन्ता देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ हस्तं गृह्णाम्यहमसावित्यथास्या उपनयनवद्धस्तं गृह्णाति नीचारिक्तमरिक्तेन--

गृह्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासत्
भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः

ऊर्ध्वा वाक्समभवत्पुरा देवासुरेभ्यः
यां त्वा विश्वस्य भूतस्य प्रागायाम्यस्या अग्रतः

सरस्वति प्रेदमव सुभगे वाजिनीवति
येन भूतँ समभवद्येन विश्वमिदं जगत्
तामद्य गाथां गास्यामो या स्त्रीणामुत्तमं मनः

सा त्वमस्यमोऽहममोऽहमस्मि सा त्वम्
द्यौरहं पृथिवी त्वं बृहदहँ रथन्तरं त्वम् । रेतोऽहमस्मि रेतोधृक्त्वम्

सामाहमस्मि ऋक्त्वं मनोऽहमस्मि वाक्त्वम्
सा मामनुव्रता भव सा मामनुप्रजायस्व

प्रजाँ सृजावहा उभौ पुँसे पुत्राय कर्तवे
श्रियै पुत्राय वेथवेह सूनृते

इति १३ प्रदक्षिणमग्निं परिणयेत् १४ पश्चादग्नेर्दर्भेष्वश्मानमवस्थापयति --

आतिष्ठेममश्मानमश्मेव त्वँ स्थिरा भव
कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतम्

इति १५ अत्रैवास्या द्वितीयँ वासः प्रयच्छति १६ उपर्यग्नावञ्जलौ लाजा-न्भ्राता ब्रह्मचारी वोपस्तीर्ण आवपेत् १७ तानभिघारितानविच्छिन्दती जु-हुयात् । कर्तानुमन्त्रयेत--

इयं नार्युपब्रूते लाजानावपन्तिका
दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम

अर्यमणं नु देवं कन्याग्निमयक्षत
सोऽस्मान्देवोऽर्यमा प्रेतो मुञ्चातु मामुत । स्वाहा

इति १८ वीरसूर्जीवपत्नीर्भूयासमिति सर्वत्र वाचयेत् १९

तुभ्यमग्रे पर्यणयँ सूर्यां वहतुना सह
पुनः पतिभ्यो जायां दा अग्ने प्रजया सह
इति द्वितीयं परिणयेत् २० एवमेव तृतीयम् । अवस्थापनप्रभृति समानम् । पूषणं न देवम् । वरुणं नु देवमिति होमौ । कन्याग्निमयक्षतेति समानम् २१ कामेन चतुर्थीं पूरयित्वा द्विरभिघार्योत्तरार्धपूर्वार्धे जुहुयात् २२ अथैनां प्राचीं सप्त पदानि प्रक्रमयति--एकमिषे विष्णुस्त्वां नयतु । द्वे ऊर्जे । त्रीणि रायस्पोषाय । चत्वारि मायोभवाय । पञ्च प्रजाभ्यः । षड्तुभ्यः । सप्त सप्तभ्यो होत्राभ्यः । विष्णुस्त्वां नयत्विति द्वितीयप्रभृत्यनुषजेत् । सखी सप्तपदी भव सख्यं ते गमेयँ सख्यात्ते मा रिषमिति सप्तम एनां प्रेक्षमाणाँ समीक्षते २३

प्र त्वा मुञ्चातु वरुणस्य पाशाद्येन त्वाबध्नात्सविता सुशेवः
धातुश्च योनौ सुकृतस्य लोके हृष्टा सँ सह पत्या भूयासम्

इति शुल्वँ विस्त्रँस्योदकुम्भेन मार्जयन्ते--पुनन्तु मा पितर इत्यनुवाकेन । आपोहिष्ठीयेनेत्येके २४

सुमङ्गलीरियँ वधुरिमाँ समेत्य पश्यत
सौभाग्यमस्यै दत्त्वा यथार्थँ विपरेतन

इति २५ स्थालीपाकेन शेषो व्याख्यातः २६ पृथक्त्वेत् । येन द्यौरुग्रेत्येवंप्रभृतय उद्वाहे होमाः स्युः । नापाणिग्रहणे लाजाः । समानं प्रक्रमणं मार्जनं च २७

इति वाराहगृह्ये चतुर्दशं खण्डम्

अङ्कौ न्यङ्कावभितो रथँ ये ध्वान्ता वाता अग्रमभि ये संपतन्ति
दूरेहेतिः पतत्री वाजिनीवाँस्ते नोऽग्नयः पप्रयः पारयन्तु

इति चक्रमभिमन्त्रयते १

सुकिँशुकँ शल्मलिँ विश्वरूपँ हिरगयवर्गं सुधुरँ सुचक्रम्
आरोह सूर्ये अमृतस्य पन्थाँस्तेन याहि गृहान्स्वस्ति

इत्यारोपयेत् २

उप मायन्तु देवता उप ब्रह्म सुवीर्यम्
उप क्षत्रं च यद्बलमुप मामैतु यद्बलम्

इति प्रयास्यन्जपति ३

अनु मायन्तु देवता अनु ब्रह्म सुवीर्यम्
अनु क्षत्रं च यद्यशमनु मामैतु यद्यशम्

इति प्राञ्चं प्रयाप्य प्रदक्षिणमावृत्य यथार्थलक्षणयँ वृक्षं चैत्यँ वोपतिष्ठेत ४
नमो रुद्रायैकवृक्षसद इत्येकवृक्षे जपति । ये वृक्षेषु शष्पिञ्जरा इति च ५
नमो रुद्राय चतुष्पथसद इति चतुष्पथे । ये पथां पथिरक्षय इति च ६
नमो रुद्राय श्मशानसद इति श्मशाने । ये भूतानामधिपतय इति च ७
नमो रुद्राय पात्रसद इति पिबन् । ये अन्नेषु विविध्यन्तीति च ८

ये तीर्थानीति तीर्थे ९ यत्रापस्तरितव्या आसीदति--

समुद्राय वयुनाय सिन्धूनां पतये नमः
नदीनाँ सर्वासां पित्वे जुहुता विश्वकर्मणे
विश्वहादाभ्यँ हविः

इत्यप्सूदकाञ्जलीर्जुहुयात् १० यावताँ सखायानँ स्वस्तिमिच्छेत्तावत उदकाञ्जलीर्जुहुयात्--अमृतमास्ये जुहोम्यायुः प्राणे प्रतिदधामि । अमृतं ब्रह्मणा सह मृत्युं तरेम । प्रासहादितीष्टिरस्यदितिरेव मृत्युन्धयमिति त्रिराचामेत् ११ द्विः परिमृजेत् १२ यद्यक्षा शम्याणिर्वा रिष्येत तत्रैवाग्निमुपसमाधायाग्नेयेन स्थालीपाकेनेष्ट्वा जयप्रभृतिभिश्चाज्यस्य पुरस्तात्स्विष्टकृतः १३ अपरस्पाह्नः संधिकाले गृहान्प्रपादयेत् १४ रथाद्यौपासनात्संततामुलपराजीँ

स्तृणाति १५ तयाभ्युपैति १६

गृहानहँ सुमनसः प्रपद्येऽवीरघ्नी वीरवतः सुशेवा
इराँ वहन्ती घृतमुक्षमाणाँस्तेष्वहँ सुमनाः सँविशामि

इत्यभ्याहिताग्निँ सोदकँ सौषधमावसथं प्रपद्येत । रेवत्या रोहिण्या यद्वा पुण्योक्तम् १७ आनडुहे चर्मण्युपविश्य १८ अथास्या ब्रह्मचारिणं जीवपितृकं जीवमातृकमुत्सङ्गमुपवेशयेत् १९ फलानामञ्जलिं पूरयेत्तिलतण्डुलानाँ वा २० अच्युता ध्रुवा ध्रुवपत्नी ध्रुवं पश्येम विश्वत इति ध्रुवं जीवन्तीँ सप्तर्षीनरुन्धतीमिति दर्शयित्वा प्राजापत्येन स्थालीपाकेनेष्ट्वा जयप्रभृतिभिश्चाज्यस्य पुरस्तात्स्विष्टकृत आज्यशेषे दध्यासिच्य दधिक्राव्णो अकारिषमिति दध्नः पुमाँस्त्रिः प्राश्नाति २१

चक्रमिवानडुहः पदं मामेवान्वेतु ते मनः
मां च पश्यसि सूर्यं च मा चान्येषु मनस्कृथाः

चाक्रवाकँ सँवसनं तन्नौ सँवननं कृतम्

इत्यवशिष्टं जायायै प्रयच्छति २२ तूष्णीँ सा प्राश्नाति २३ सँवत्सरं मुदा तौ ब्रह्मचर्यं चरतः । द्वादशरात्रं त्रिरात्रमेकरात्रँ वा २४ एवमेव चतुर्थ्यां कृत्वा हिरण्यगर्भ इत्यष्टाभिः स्थालीपाकस्य हुत्वा जयप्रभृतिभिश्चाज्यस्य पुरस्तात्स्विष्टकृतः २५ अथास्याः सव्येँऽसे पूषा ते ग्रन्थिं ग्रथ्नात्विति वाससो ग्रन्थिं क्रियमाणमनुमन्त्रयते २६ चतस्रोऽविधवाः कुर्वन्ति । ताभ्यो हिरण्यं ददाति २७ सँवत्सरं न प्रवसेत् । द्वादशरात्रं तिरात्रमेकरात्रँ वा २८

इति वाराहगृह्ये पञ्चदशं खण्डम्

तौ संनिपातयतः ।

अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसोऽभिभूतम्
इह प्रजामिह रयिँ रराणः प्रजायस्व प्रजया पुत्रकाम

अपश्यं त्वा मनसा दीध्यानाँ स्वायां तनूँ ऋत्विये नाधमानाम्
उप मामुच्चा युवतिर्बभूयात्प्रजायस्व प्रजया पुत्रकामे

प्रजापते तन्वं मे जुषस्व त्वष्टा वीरैः सहसाहमिन्द्रः
इन्द्रेण देवैर्वीरुधः सँव्ययन्तां बहूनां पुँसां पितरौ स्याव

अहं प्रजा अजनयं पृथिव्यामहं गर्भमदधामोषधीषु
अहँ विश्वेषु भुवनेष्वन्तरहं प्रजाभ्यो बिभर्षि पुत्रान्

इति स्त्र्यादिव्यत्यासं जपतः १ करदिति भसदभिमृशेत् २ जनदित्युपरि-जननम् ३ बृहदिति जातः प्रतिष्ठितम् ४ अथास्यास्तृतीये गर्भमासे पुँसा नक्षत्रेण यदहश्चन्द्रमा न दृश्येत तदहर्वोपोष्याप्लाव्याहतँ वास आछाद्य न्य-ग्रोधावरोहशुङ्गान्युदपेषं पिष्ट्वा दक्षिणस्मिन्नासिकाच्छिद्र आसिञ्चेत्--हिर-ण्यगर्भः । अद्भ्यः संभृत इत्येताभ्याम् ५ अथास्या दक्षिणं कुक्षिमभिमृ-शेत्--

पुमानग्निः पुमानिन्द्रः पुमान्देवो बृहस्पतिः
पुमानग्निश्च वायुश्च पुमान्गर्भस्तवोदरे

पुमाँसौ मित्रावरुणौ पुमाँसावश्विनावुभौ
पुमाँसं गर्भं जायस्व त्वं पुमाननुजायताम्

इत्येताभ्याम् ६ अथास्याः पञ्चमे षष्ठे सप्तमे वा गर्भमासे मङ्गल्यैः स्नाप-यित्वा प्राजापत्येन स्थालीपाकेनेष्ट्वा जयप्रभृतिभिश्चाज्यस्य पुरस्तात्स्विष्ट-कृतः । पश्चादग्नेर्दर्भेष्वासीनायाः सर्वान्केशान्विप्रमुच्य

त्वमर्यमा भवसि यत्कनीनां देवः स्वधावो गुह्यं बिभर्षि
अञ्जन्ति विप्रँ सुकृतं न गोभिर्यद्दम्पती सुमनसा कृणोषि

इति नवनीतेन पाणी प्रलिप्य सर्वान्केशान्संप्रयौति ७ इन्द्राणी चक्रे कङ्कतँ स सीमन्तँ विसर्पतु इति कङ्कतं गृह्णाति ८ पुनः पत्नीमग्निरिति केशप्रसाधनं

कुर्यात् ९ शलल्या शमीशाखया सपलाशया--

अन्तर्वती पुमाँसं दीर्घं जीवन्तँ शतायुषम्
दीर्घायुरस्या यः पतिर्जीवातु शरदः शतम्

इति त्रिश्वेतया सीमन्तं करोति १० अथास्याः पतिर्द्वेधा केशान्बध्नाति-- नीललोहितेन सूत्रेण जीवोर्णया वा ११

इति वाराहगृह्ये षोडशं खण्डम्

अथ वैश्वदेवँ व्याख्यास्यामः १ तत्र सायंप्रातःप्रभृतीनामग्निहोत्रवत्परिसमुह्य परिस्तीर्य पर्युक्ष्य सायं प्रातः स्यादित्येके २ हविष्यस्य वा सिद्धस्य वैश्वदेवः ३ अग्नये सोमाय प्रजापतये धन्वन्तरये वास्तोष्पतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृते च जुहुयात् ४ अवशिष्टस्य बलिँ हरेत् ५ दधिमधुमिश्रस्याग्नये पुरस्ताद्यमाय दक्षिणतः सोमाय पश्चाद्वरुणायोत्तरतः मध्ये वरुणार्यमभ्यां ब्रह्मणे च । अग्नये पृथिव्यै वायवेऽन्तरिक्षाय सूर्याय दिवे चन्द्रमसे नक्षत्रेभ्य इति ६ अद्भ्यः कुम्भदेशे ७ ओषधिवनस्पतिभ्यो मध्यदेशे ८ कामाय । गृहपतय इति शय्यादेशे ९ श्रियै च १० रक्षोजनेभ्योऽन्तः शरणे ११ आकाशायेति स्थलिकाण्डाभ्याम् १२ तूष्णीं निष्क्रम्योपरि शरणे १३ कव्यं प्राच्याम् १४ पितृभ्यः स्वधेत्यनुषजेत् १५ नम इत्यन्ते च १६ ये ब्राह्मणाः प्राच्यां दिश्यर्हन्तु । ये देवा यानि भूतानि प्रपद्ये तानि मे स्वस्त्ययनं कुर्वन्त्विति । दक्षिणस्याम् । प्रतीच्याम् । उत्तरस्याम् । ऊर्ध्वायाम् । ये ब्राह्मणा इति सर्वत्रानुषजेत् १७ स्नेहवदमाँसमन्नं भोजयित्वा विदुषो ब्राह्मणानर्थसिद्धिँ वाचयेत् १८ बलिहरणस्यान्ते यामाशिषमिच्छेत्तामासीत १९ गृहपतिः--ओमक्षयमन्नमस्त्वित्याह २० भिक्षां प्रदाय सायंभोजनमेव प्रातराशेत् २१ विप्रोष्य गृहानुपतिष्ठेत् २२

इति वाराहगृह्ये सप्तदशं खण्डम्

इति वाराहगृह्यसूत्रम्

# सामवेदस्य गोभिलीयगृह्यसूत्रम्

अथातो गृह्यकर्माण्युपदेक्ष्यामः १ यज्ञोपवीतिनाचान्तोदकेन कृत्यम् २ उदगयने पूर्वपक्षे पुण्येऽहनि प्रागावर्तनादह्नः कालं विद्यात् ३ यथादेशं च ४ सर्वाण्येवान्वाहार्यवन्ति ५ अपवर्गेऽभिरूपभोजनं यथाशक्ति ६ ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन् ७ जायाया वा पाणिं जिघृक्षन् ८ अनुगुप्ता अप आहृत्य प्रागुदक्प्रवणं देशं समं वा परिसमुह्योपलिप्य मध्यतः प्राचीं लेखामुल्लिख्योदीचीं च संहतां पश्चाद्यध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षेत् ९ लक्षणावृदेषा सर्वत्र १० भूर्भुवःस्वरित्यभिमुखमग्निं प्रणयन्ति ११ प्रेते वा गृहपतौ परमेष्ठिकरणम् १२ तथा तिथिनक्षत्रपर्वसमवाये १३ दर्शे वा पौर्णमासे वाग्निसमाधानं कुर्वीत १४ वैश्यकुलाद्वाम्बरीषाद्वाग्निमाहृत्याभ्यादध्यात् १५ अपि वा बहुयाजिन एवागाराद्ब्राह्मणस्य वा राजन्यस्य वा वैश्यस्य वा १६ अपि वान्यं मथित्वाभ्यादध्यात् १७ पुण्यस्त्वेवानर्धुको भवतीति १८ यथा कामयेत तथा कुर्यात् १९ स यदेवान्त्यां समिधमभ्यादधाति जायाया वा पाणिं जिघृक्षन्जुहोति तमभिसंयच्छेत् २० स एवास्य गृह्योऽग्निर्भवति २१ तेन चैवास्य प्रातराहुतिर्हुता भवतीति २२ सायमाहुत्युपक्रम एवात ऊर्ध्वं गृह्येऽग्नौ होमो विधीयते २३ पुरा प्रादुष्करणवेलायाः सायंप्रातरनुगुप्ता अप आहरेत्परिचरणीयाः २४ अपि वा सायम् २५ अपि वा कुम्भाद्वा मणिकाद्वा गृह्णीयात् २६ पुरास्तमयादग्निं प्रादुष्कृत्यास्तमिते सायमाहुतिं जुहुयात् २७ पुरोदयात्प्रातः प्रादुष्कृत्योदितेनुदिते वा प्रातराहुतिं जुहुयात् २८ १

यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वापि वा कुशरज्जुमेव १ दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येऽँसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवत्येवं यज्ञोपवीती भवति २ सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेऽँसे प्रतिष्ठापयति सव्यं कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति ३ पितृयज्ञे त्वेव प्राचीनावीती भवति ४ उदङ्ङग्नेरुत्सृप्य प्रक्षाल्य पाणी पादौ चोपविश्य त्रिराचामेद्द्विः परिमृजीत ५ पादावभ्युक्ष्य शिरोऽभ्युक्षेत् ६ इन्द्रियाण्यद्भिः संस्पृशेत् ७ अक्षिणी नासिके कर्णाविति ८ यद्यन्मीमाँस्यं स्यात्तत्तदद्भिः संस्पृशेत् ९ तत्रैतदाहुः १० नोऽपस्पृशेद्व्रजन् ११ न तिष्ठन् १२ न हसन्

१३ न विलोकयन् १४ नाप्रणतः १५ नाङ्गुलीभिः १६ नातीर्थेन १७ न सशब्दम् १८ नानवेक्षितम् १९ न बाह्याँसः २० नान्तरीयैकदेशस्य कल्पयित्वोत्तरीयताम् २१ नोष्णाभिः २२ न सफेनाभिः २३ न च सोपानत्कः क्वचित् २४ कासक्तिकः २५ गले बद्धः २६ चरणौ न प्रसार्य च २७ अन्ततः प्रत्युपस्पृश्य शुचिर्भवति २८ हृदयस्पृशस्त्वेवाप आचामेत् २९ उच्छिष्टो हैवातोऽन्यथा भवतीति ३० अथ प्रत्युपस्पर्शनानि ३१ सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा विपरिधाय च रथ्यामाक्रम्य श्मशानं चाचान्तः पुनराचामेत् ३२ २

अग्निमुपसमाधाय परिसमूह्य दक्षिणजान्वक्तो दक्षिणेनाग्निमदितेऽनुमन्य-स्वेत्युदकाञ्जलिं प्रसिञ्चेत् १ अनुमतेऽनुमन्यस्वेति पश्चात् २ सरस्वत्य-नुमन्यस्वेत्युत्तरतः ३ देव सवितः प्रसुवेति प्रदक्षिणमग्निं पर्युक्षेत्सकृद्वा त्रिर्वा ४ पर्युक्षणान्तान्व्यतिहरन्नभिपर्युक्षन्होमीयम् ५ अथ हविष्यस्यान्न-स्याग्नौ जुहुयात्कृतस्य वाकृतस्य वा ६ अकृतं चेत्प्रक्षाल्य जुहुयात्प्रोदकं कृत्वा ७ अथ यदि दधि पयो यवागूं वा कँसेन वा चरुस्थाल्या वा स्रुवेण वैव ८ अग्नये स्वाहेति पूर्वां तूष्णीमुत्तरां मध्ये चापराजितायां च दिशीति सायम् ९ अथ प्रातः सूर्याय स्वाहेति पूर्वां तूष्णीमेवोत्तरां मध्ये चैवापराजितायां चैव दिशि १० समिधमाधायानुपर्युक्ष्य तथैवोदकाञ्जलीन्प्रसिञ्चेदन्वमँस्था इति मन्त्रविशेषः ११ प्रदक्षिणमग्निं परिक्रम्यापां शेषं निनीय पूरयित्वा चमसं प्रतिष्ठाप्य यथार्थम् १२ एवमत ऊर्ध्वं गृह्येऽग्नौ जुहुयाद्वा हावयेद्वाजीविता-वभृथात् १३ अथाप्युदाहरन्ति १४ कामं गृह्येऽग्नौ पत्नी जुहुयात्सायंप्रातर्होमौ गृहाः पत्नी गृह्य एषोऽग्निर्भवतीति १५ निष्ठिते सायमाशप्रातराशे भूतमिति प्रवाचयेत् १६ ऋते भगया वाचा शुचिर्भूत्वा १७ प्रतिजपत्योमित्युच्चैस्तस्मै नमस्तन्माख्या इत्युपाँशु १८ ३

अथ वाग्यतो बलीन्हरेत् १ भाषेतान्नसंसिद्धिमतिथिभिः कामं सम्भाषेत २ अथ हविष्यस्यान्नस्योद्धृत्य हविष्यैर्व्यञ्जनैरुपसिच्याग्नौ जुहुयात्तूष्णीं पाणिनैव ३ प्राजापत्या पूर्वाहुतिर्भवति सौविष्टकृत्युत्तरा ४ अथ बलीन्हरेद्बाह्यतो वान्तर्वा सुभूमिं कृत्वा ५ सकृदपो निनीय चतुर्धा बलिं निदध्यात्सकृदन्ततः परिषिञ्चेत् ६ एकैकं वानुनिधानमुभयतः परिषिञ्चेत् ७ स यत्प्रथमं निदधाति

स पार्थिवो बलिर्भवत्यथ यद्द्वितीयं स वायव्यो यत्तृतीयं स वैश्वदेवो यच्चतुर्थं स प्राजापत्यः ८ अथापरान्बलीन्हरेदुदधानस्य मध्यमस्य द्वारस्याब्दैवतः प्रथमो बलिर्भवत्योषधिवनस्पतिभ्यो द्वितीय आकाशाय तृतीयः ९ अथापरं बलिं हरेच्छयनं वाधिवर्चं वा स कामाय वा बलिर्भवति मन्यवे वा १० अथ सस्तूपं स रक्षोजनेभ्यः ११ अथैतद्बलिशेषमद्भिरभ्यासिच्यावसलवि दक्षिणा निनयेत्तत्पितृभ्यो भवति १२ आसीन एवाग्नौ जुहुयात् १३ आसीनः पितृभ्यो दद्याद्यथोपपादमितरान् १४ स्वयं त्वेवैतान्यावद्वसेद्बलीन्हरेत् १५ अपि वान्यो ब्राह्मणः १६ दम्पती एव १७ इति गृहमेधिव्रतम् १८ स्त्री ह सायं प्रातः पुमानिति १९ सर्वस्य त्वेवान्नस्यैतान्बलीन्हरेत्पित्र्यस्य वा स्वस्त्ययनस्य वार्थार्थस्य वा २० यज्ञादेव निवर्तते २१ यद्येकस्मिन्काले व्रीहियवौ प्रक्रियेतान्यतरस्य कृत्वा कृतं मन्येत २२ यद्येकस्मिन्काले पुनः पुनरन्नं पच्येत सकृदेवैतद्बलितन्त्रं कुर्वीत २३ यद्येकस्मिन्कुले बहुधान्नं पच्येत गृहपतिमहानसादेवैतद्बलितन्त्रं कुर्वीत २४ यस्य त्वेषामग्रतः सिध्येन्नियुक्तमग्नौ कृत्वाग्रं ब्राह्मणाय दत्त्वा भुञ्जीत २५ यस्यो जघन्यं भुञ्जीतैवेति २६ अथाप्युदाहरन्ति २७ एतस्यैव बलिहरणस्यान्ते कामं प्रब्रुवीत भवति हैवास्य २८ स्वयं त्वेवाशस्यं बलिं हरेद्यवेभ्योऽध्या व्रीहिभ्यो व्रीहिभ्योऽध्यायवेभ्यः सत्वाशस्यो नाम बलिर्भवति २९ दीर्घायुर्हैव भवति ३० विश्राणिते फलीकरणानामाचामस्यापामिति बलिं हरेत्स रौद्रो भवति स रौद्रो भवति ३१
४

अथ दर्शपूर्णमासयोः १ सन्ध्यां पौर्णमासीमुपवसेत् २ उत्तरामित्येके ३ अथ यदहश्चन्द्रमा न दृश्येतताममावास्याम् ४ पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः ५ आमावास्येन हविषा पूर्वपक्षमभियजते पौर्णमास्येनापरपक्षम् ६ यः परमो विकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी यः परमः संकर्षः सामावास्या ७ यदहस्त्वेव चन्द्रमा न दृश्येत ताममावास्यां कुर्वीत ८ दृश्यमानेऽप्येकदा गताध्वा भवतीति ९ त्रयः पौर्णमासीकाला भवन्ति सन्ध्या वास्तमितोदिता वोच्चैर्वा १० अथ यदहः पूर्णो भवति ११ पृथगेवैतस्य ज्ञानस्याध्यायो भवत्यधीयीत वा तद्विद्भ्यो वा पर्वावगमयेत १२ अथ यदहरुपवसथो भवति तदहः पूर्वाह्ण एव प्रातराहुतिं हुत्वैतदग्नेः स्थण्डिलं गोमयेन समन्तं पर्युपलिम्पति १३ अथैध्मानुपकल्पयते खादिरान्वा पाला-

शान्वा १४ खादिरपालाशालाभे बिभीदकतिल्वकबाधकनीवनिम्बराजवृक्षशाल्मल्यरलुदधित्थकोविदारश्लेष्मातकवर्जं सर्ववनस्पतीनामिध्मो यथार्थं स्यात् १५ विशाखानि प्रति लूनाः कुशा बर्हिः १६ उपमूललूनाः पितृभ्यः १७ तेषामलाभे शूकतृणशरशीर्यबल्वजमुतवनलशुण्ठवर्जं सर्वतृणानि १८ आज्यं स्थालीपाकीयान्व्रीहीन्वा यवान्वा चरुस्थालीं मेक्षणं स्रुवमनुगुप्ता अप इति १९ यानि चानुकल्पमुदाहरिष्यामः २० न तदहः प्रसृज्येत २१ दूरादपि गृहानभ्येयात् २२ अन्यतस्तु धनं क्रीणीयान्न विक्रीणीत २३ अबहुवादी स्यात् २४ सत्यं विवदिषेत् २५ अथापराह्ण एवाप्लुत्यौपवसथिकं दम्पती भुञ्जीयातां यदेनयोः काम्यं स्यात्सर्पिर्मिश्रं स्यात्कुशलेन २६ ५

मानतन्तव्यो होवाचाहुता वा एतस्य मानुष्याहुतिर्भवति य औपवसथिकं नाश्नाति १ अनीश्वरो ह क्षोधुको भवत्यकाम्यो जनानां पापवसीयसी हास्य प्रजा भवति २ य औपवसथिकं भुङ्क्ते ईश्वरो ह भवत्यक्षोधुकः काम्यो जनानां वसीयसी हा स्य प्रजा भवति ३ तस्माद्यत्कामयेतौपवसथिकं भुञ्जीयाताम् ४ अध एवैतां रात्रिं शयीयाताम् ५ तौ खलु जाग्रन्मिश्रावेवैतां रात्रिं विहरेयातामितिहासमिश्रेण वा केनचिद्वा ६ जुगुप्सेयातां त्वेवाव्रत्येभ्यः कर्मभ्यः ७ न प्रवसन्नुपवसेदित्याहुः ८ पत्न्या व्रतं भवतीति ९ यथा कामयेत तथा कुर्यात् १० एवमेवाहिताग्नेरप्युपवसथो भवति ११ यच्चाम्नायो विदध्यात् १२ अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वाग्रेणाग्निं परिक्रम्य दक्षिणतोऽग्नेः प्रागग्रान्दर्भानास्तीर्य १३ तेषां पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्सव्यस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या ब्रह्मासनात्तृणमभिसंगृह्य दक्षिणापरमष्टमं देशं निरस्यति निरस्तः परावसुरिति १४ अप उपस्पृश्याथ ब्रह्मासन उपविशत्या वसोः सदने सीदामीति १५ अग्निमभिमुखो वाग्यतः प्राञ्जलिरास्त आ कर्मणः पर्यवसानात् १६ भाषेत यज्ञसंसिद्धिम् १७ नायज्ञियां वाचं वदेत् १८ यद्ययज्ञियां वाचं वदेद्वैष्णवीमृचं यजुर्वा जपेत् १९ अपि वा नमो विष्णव इत्येवं ब्रूयात् २० यद्यु वा उभयं चिकीर्षेद्धौत्रं चैव ब्रह्मत्वं चैवैतेनैव कल्पेन छत्त्रं वोत्तरासङ्गं वोदकमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय तेनैव प्रत्याव्रज्याथान्यच्चेष्टेत् २१ ६

अथोलूखलमुसले प्रक्षाल्य शूर्पं च पश्चादग्नेः प्रागग्रान्दर्भानास्तीर्योपसादयति

१ अथ हविर्निर्वपति व्रीहीन्वा यवान्वा कँसेन वा चरुस्थाल्या वा २ अमुष्मै त्वा जुष्टं निर्वपामीति देवतानामादेशं सकृद्द्विस्तूष्णीम् ३ अथ पश्चात्प्राङ्मुखोऽवहन्तुमुपक्रमते दक्षिणोत्तराभ्यां पाणिभ्याम् ४ त्रिःफलीकृताँस्तण्डुलान्स्त्रिर्देवेभ्यः प्रक्षालयेदित्याहुर्द्विर्मनुष्येभ्यः सकृत्पितृभ्य इति ५ पवित्रान्तर्हिताँस्तण्डुलानावपेत् ६ कुशलशृतमिव स्थालीपाकं श्रपयेत्प्रदक्षिणमुदायुवन् ७ शृतमभिघार्योदगुद्वास्य प्रत्यभिघारयेत् ८ अग्निमुपसमाधाय कुशैः समन्तं परिस्तृणुयात्पुरस्ताद्दक्षिणत उत्तरतः पश्चादिति ९ सर्वतस्त्रिवृतं पञ्चवृतं वा १० बहुलमयुग्मसंहतम् ११ प्रागग्रैरग्रैर्मूलानि च्छादयन् १२ पश्चाद्वास्तीर्य दक्षिणतः प्राञ्चं प्रकर्षति तथोत्तरेण १३ दक्षिणोत्तराण्यग्राणि कुर्यात् १४ एष परिस्तरणन्यायः सर्वेष्वाहुतिमत्सु १५ परिधीनप्येके कुर्वन्ति शामीलान्पार्णान्वा १६ उत्तरतोऽपां पूर्नः स्रुवः प्रणीता १७ भवेन वा स्यादित्येके १८ बर्हिषि स्थालीपाकमासाद्येध्ममभ्याधायाज्यां संस्कुरुते १९ सर्पिस्तैलं दधि पयो यवागूं वा २० तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते २१ ओषधिमन्तर्धाय च्छिनत्ति न नखेन पवित्रे स्थो वैष्णव्याविति २२ अनेन अद्भिरनुमार्ष्टि विष्णोर्मनसा पूते स्थ इति २३ सम्पूयोत्पुनात्युदगग्राभ्यां पवित्राभ्याम् २४ अङ्गुष्ठाभ्यां चोपकनिष्ठिकाभ्यां चाङ्गुलिभ्यामभिसंगृह्य प्राक्शस्त्रिरुत्पुनाति देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति सकृद्यजुषां द्विस्तूष्णीम् २५ अथैने अद्भिरभ्युक्ष्याग्नावप्युत्सृजेत् २६ अथैतदाज्यमधिश्रृत्योदगुद्वासयेत् २७ एवमाज्यस्य संस्करणकल्पो भवतीति २८ ७

पूर्वमाज्यमपरः स्थालीपाकः १ पर्युक्ष्य स्थालीपाक आज्यमानीय मेक्षणेनोपघातं होतुमेवोपक्रमते २ यद्यु वा उपस्तीर्णाभिघारितं जुहुषेदाज्यभागावेव प्रथमौ जुहुयात् ३ चतुर्गृहीतमाज्यं गृहीत्वा पञ्चावत्तं तु भृगूणामग्नये स्वाहेत्युत्तरतः सोमाय स्वाहेति दक्षिणतः प्राक्शो जुहुयात् ४ अथ हविष उपस्तीर्यावद्यति ५ मध्यात्पूर्वार्धाच्चतुरवत्ती चेद्भवति मध्यात्पूर्वार्धात्पश्चार्धादिति पञ्चावत्ती चेद्भवति ६ अभिघारयत्यवदानानि ७ प्रत्यनक्त्यवदानस्थानान्ययातयामतायै ८ अग्नये स्वाहेति मध्ये जुहुयात् ९ सकृद्वा त्रिर्वैतेनैव कल्पेन १० अथ स्विष्टकृत उपस्तीर्यावद्यत्युत्तरार्धपूर्वार्धात्सकृदेव भूयिष्ठं द्विरभिघारयेत् ११ यद्यु पञ्चावत्ती स्याद्द्विरुपस्तीर्यावदाय द्विरभि-

घारयेत् १२ न प्रत्यनक्त्यवदानस्थानं यातयामतायै १३ अग्नये स्विष्टकृते स्वाहेत्युत्तरार्धपूर्वार्धे जुहुयात् १४ महाव्याहृतिभिराज्येनाभिजुहुयात् १५ प्राक् स्विष्टकृत आवापः १६ गणेष्वेकं परिसमूहनमिध्मो बर्हिः पर्युक्षण-माज्यमाज्यभागौ च १७ सर्वेभ्यः समवदाय सकृदेव सौविष्टकृतं जुहोति १८ हुत्वैतन्मेक्षणमनुप्रहरेत् १९ प्रक्षाल्य वैतेनोद्धृत्य भुञ्जीत २० न स्रुवम-नुप्रहरेदित्येक आहुः २१ आग्नेय एवानाहिताग्नेरुभयोर्दर्शपूर्णमासयोः स्थाली-पाकः स्यात् २२ आग्नेयो वाग्नीषोमीयो वाहिताग्नेः पौर्णमास्याम् २३ ऐन्द्रो वैन्द्राग्नो वा माहेन्द्रो वामावास्यायाम् २४ अपि वाहिताग्नेरप्युभयोर्दर्श-पूर्णमासयोराग्नेय एव स्यात् २५ समिधमाधायानुपर्युक्ष्य यज्ञवास्तु करोति २६ तत एव बर्हिषः कुशमुष्टिमादायाज्ये वा हविषि वा त्रिरवदध्यादग्राणि मध्यानि मूलानीत्यक्तं रिहाणा व्यन्तु वय इति २७ अथैनमद्भिरभ्युक्ष्या-ग्नावप्यर्जयेद्यः पशूनामधिपती रुद्रस्तन्तिचरो वृषा पशूनस्माकं मा हिँसीरे-तदस्तु हुतं तव स्वाहेति २८ एतद्यज्ञवास्त्वित्याचक्षते २९ ८

अथैतद्धविरुच्छिष्टमुदगुद्वास्योद्धृत्य ब्रह्मणे प्रयच्छेत् १ तं तितर्पयिषेत् २ ब्राह्मणस्य तृप्तिमनु तृप्यामीति ह यज्ञस्य वेदयन्ते ३ अथ यदस्यान्यद-न्नमुपसिद्धं स्यात् ४ अथ ब्राह्मणान्भक्तेनोपेप्सेत् ५ पूर्णपात्रो दक्षिणा तं ब्रह्मणे दद्यात् ६ कँसं चमसं वान्नस्य पूरयित्वा कृतस्य वाकृतस्य वापि वा फलानामेवैतं पूर्णपात्रमित्याचक्षते ७ ब्रह्मैवैक ऋत्विक् ८ पाकयज्ञेषु स्वयं होता भवति ९ पूर्णपात्रोऽवमः पाकयज्ञानां दक्षिणा १० अपरिमितं पराध्र्यम् ११ अपि ह सुदाः पैजवन ऐन्द्राग्नेन स्थालीपाकेनेष्ट्वा शतं सहस्राणि ददौ १२ अथ यदि गृह्येऽग्नौ सायंप्रातर्होमयोर्वा दर्शपूर्णमासयोर्वा हव्यं वा होतारं वा नाधिगच्छेत्कथं कुर्यादिति १३ आ सायमाहुतेः प्रातराहुतिर्नात्येत्या प्रात-राहुतेः सायमाहुतिरामावास्यायाः पौर्णमासं नात्येत्या पौर्णमास्या आमावा-स्याम् १४ एतेनैवावकाशेन हव्यं वा होतारं वा लिप्सेत १५ अपि वा यज्ञियानामेवौषधिवनस्पतीनां फलानि वा पलाशानि वा श्रपयित्वा जुहुयात् १६ अप्यप एवान्ततो जुहुयादिति ह स्माह पाकयज्ञ ऐडो हुतं ह्येव १७ अहुतस्य प्रायश्चित्तं भवतीति १८ नाव्रतो ब्राह्मणः स्यादिति १९ अथाप्युदाहरन्ति २० यावन्न हूयेताभोजनेनैव तावत्संतनुयात् २१ अथ यदाधिगच्छेत्प्रतिजुहुयात् २२ एवमप्यस्य व्रतं संततं भवतीति २३ एषोऽत ऊर्ध्वं हविराहुतिषु न्यायः

२४ मन्त्रान्ते स्वाहाकारः २५ आज्याहुतिष्वाज्यमेव संस्कृत्योपघातं जुहुयान्नाज्यभागौ न स्विष्टकृत् २६ आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होमः २७ यथा पाणिग्रहणे तथा चूडाकर्मण्युपनयने गोदाने २८ अपवृत्ते कर्मणि वामदेव्यगानं शान्त्यर्थं शान्त्यर्थम् २९ ९

इति प्रथमः प्रपाठकः

पुण्ये नक्षत्रे दारान्कुर्वीत १ लक्षणप्रशस्तान्कुशलेन २ तदलाभे पिण्डान् ३ वेद्याः सीताया हृदाद्गोष्ठाच्चतुष्पथादादेवनादादहनादिरिणात् ४ सर्वेभ्यः सम्भार्यं नवमम् ५ समान्कृतलक्षणान् ६ पाणावाधाय कुमार्या उपनामयेदृतमेव प्रथममृतं नात्येति कश्चन र्त इयं पृथिवी श्रिता सर्वमिदमसौ भूयादिति तस्या नाम गृहीत्वैषामेकं गृहाणेति ब्रूयात् ७ पूर्वेषां चतुर्णां गृह्णन्तीमुपयच्छेत् ८ सम्भार्यमपि त्वेके ९ क्लीतकैर्यवैर्माषैर्वाप्लुतां सुहृत्सुरोत्तमेन सशरीरां त्रिर्मूर्धन्यभिषिञ्चेत्काम वेद ते नाम मदो नामासीति समानयामुमिति पतिनाम गृह्णीयात्स्वाहाकारान्ताभिरुपस्थमुत्तराभ्यां प्लावयेत् १० ज्ञातिकर्मैतत् ११ पाणिग्रहणे पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितो भवति १२ अथ जन्यानामेको ध्रुवाणामपां कलशं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते १३ प्राजनेनान्यः १४ शमीपलाशमिश्राँश्च लाजाँश्चतुरञ्जलिमात्राञ् छूर्पेणोऽपसादयन्ति पश्चादग्नेः १५ दृषत्पुत्रं च १६ अथ यस्याः पाणिं ग्रहीष्यन्भवति सशिरस्का साप्लुता भवति १७ अहतेन वसनेन पतिः परिदध्याद्या अकृन्तन्नित्येतयर्चा परिधत्त धत्त वाससेति च १८ प्रावृतां यज्ञोपवीतिनीमभ्युदानयन्जपेत्सोमोऽददद्गन्धर्वायेति १९ पश्चादग्नेः संवेष्टितं कटमेवंजातीयं वान्यत्पदा प्रवर्तयन्तीं वाचयेत्प्र मे पतियानः पन्थाः कल्पतामिति २० स्वयं जपेदजपन्त्यां प्रास्या इति २१ बर्हिषोऽन्तं कटान्तं प्रापयेत् २२ पूर्वे कटान्ते दक्षिणतः पाणिग्राहस्योपविशति २३ दक्षिणेन पाणिना दक्षिणमँसमन्वारब्धायाः षडाज्याहुतीर्जुहोत्यग्निरेतु प्रथम इत्येतत्प्रभृतिभिः २४ महाव्याहृतिभिश्च पृथक् २५ समस्ताभिश्चतुर्थीम् २६ १

हुत्वोपोत्तिष्ठतः १ अनुपृष्ठं पतिः परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते वध्वञ्जलिं गृहीत्वा २ पूर्वा माता लाजानादाय भ्राता वा वधूमाक्रामयेदश्मानं

दक्षिणेन प्रपदेन ३ पाणिग्राहो जपतीममश्मानमारोहेति ४ सकृत्संगृहीतं लाजानामञ्जलिं भ्राता वध्वञ्जलावावपति ५ तं सोऽपस्तीर्णाभिघारितमग्नौ जुहोत्यविच्छिन्दत्यञ्जलिमियं नार्युपब्रूत इति ६ अर्यमणं नु देवं पूषणमित्युत्तरयोः ७ हुते पतिर्यथेतं परिव्रज्य प्रदक्षिणमग्निं परिणयति मन्त्रवान्वा ब्राह्मणः कन्यला पितृभ्य इति ८ परिणीता तथैवावतिष्ठते तथाक्रामति तथा जपति तथावपति तथा जुहोति ९ एवं त्रिः १० शूर्पेण शेषमग्नावोप्य प्रागुदीचीमभ्युत्क्रामयन्त्येकमिष इति ११ दक्षिणेन प्रक्रम्य सव्येनानुक्रामेत् १२ मा सव्येन दक्षिणमतिक्रामेति ब्रूयात् १३ ईक्षकान्प्रतिमन्त्रयेत सुमङ्गलीरियं वधूरिति १४ अपरेणाग्निमौदकोऽनुसंव्रज्य पाणिग्राहं मूर्धदेशेऽवसिञ्चति तथेतरां समञ्जन्त्वित्येतयर्चा १५ अवसिक्तायाः सव्येन पाणिनाञ्जलिमुपोदृह्य दक्षिणेन पाणिना दक्षिणं पाणिं साङ्गुष्ठमुत्तानं गृहीत्वैताः षट् पाणिग्रहणीया जपति गृभ्णामि त इति १६ समाप्तासूद्वहन्ति १७ २

प्रागुदीच्यां दिशि यद्ब्राह्मणकुलमभिरूपम् १ तत्राग्निरुपसमाहितो भवति २ अपरेणाग्निमानडुहं रोहितं चर्म प्राग्ग्रीवमुत्तरलोमास्तीर्णं भवति ३ तस्मिन्नेनां वाग्यतामुपवेशयन्ति ४ सा खल्वास्त एवानक्षत्रदर्शनात् ५ प्रोक्ते नक्षत्रे षडाज्याहुतीर्जुहोति लेखासन्धिष्वित्येतत्प्रभृतिभिः ६ आहुतेराहुतेस्तु सम्पातं मूर्धनि वध्वा अवनयेत् ७ हुत्वोपोत्थायोपनिष्क्रम्य ध्रुवं दर्शयति ८ ध्रुवमसि ध्रुवाहं पतिकुले भूयासममुष्यासाविति पतिनाम गृह्णीयादात्मनश्च ९ अरुन्धतीं च १० रुद्धाहमस्मीत्येवमेव ११ अथैनामनुमन्त्रयते ध्रुवा द्यौरित्येतयर्चा १२ अनुमन्त्रिता गुरुं गोत्रेणाभिवादयते १३ सोऽस्या वाग्विसर्गः १४ तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयीयाताम् १५ अत्रार्घ्यमित्याहुः १६ आगतेष्वित्येके १७ हविष्यमन्नं प्रथमं परिजपितं भुञ्जीत १८ श्वो भूते वा समशनीयं स्थालीपाकं कुर्वीत १९ तस्य देवता अग्निः प्रजापतिर्विश्वे देवा अनुमतिरिति २० उद्धृत्य स्थालीपाकं व्यूह्यैकदेशं पाणिनाभिमृशेदन्नपाशेन मणिनेति २१ भुक्त्वोच्छिष्टं वध्वै प्रदाय यथार्थम् २२ गौर्दक्षिणा २३ ३

यानमारोहन्त्यां सुकिंशुकं शाल्मलिमित्येतामृचं जपेत् १ अध्वनि चतुष्पथान्प्रतिमन्त्रयेत नदीश्च विषमाणि च महावृक्षाञ्श्मशानं च मा विदन्परिपन्थिन

इति २ अक्षभङ्गे नद्धविमोक्षे यानविपर्यासेऽन्यासु चापत्सु यमेवाग्निं हरन्ति तमेवोपसमाधाय व्याहृतिभिर्हुत्वान्यद्द्रव्यमाहृत्य य ऋते चिदभिश्रिष इत्याज्यशेषेणाभ्यञ्जेत् ३ वामदेव्यं गीत्वारोहेत् ४ प्राप्तेषु वामदेव्यम् ५ गृहगतां पतिपुत्रशीलसम्पन्ना ब्राह्मण्योऽवरोप्यानडुहे चर्मण्युपवेशयन्तीह गावः प्रजायध्वमिति ६ तस्याः कुमारमुपस्थ आदध्युः ७ तस्मै शकलोटानञ्जलावावपेयुः ८ फलानि वा ९ उत्थाप्य कुमारं ध्रुवा आज्याहुतीर्जुहोत्यष्टाविह धृतिरिति १० समाप्तासु समिधमाधाय यथावयसं गुरून्गोत्रेणाभिवद्य यथार्थम् ११ ४

अथातश्चतुर्थीकर्म १ अग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोत्यग्ने प्रायश्चित्त इति चतुः २ अग्नेः स्थाने वायुचन्द्रसूर्याः ३ समस्य पञ्चमीं बहुवदूह्य ४ आहुतेराहुतेस्तु सम्पातमुदपात्रेऽवनयेत् ५ तेनैनां सकेशनखामभ्यज्य ह्लासयित्वाप्लावयन्ति ६ ऊर्ध्वं त्रिरात्रात्सम्भव इत्येके ७ यदर्तुमती भवत्युपरतशोणिता तदा सम्भवकालः ८ दक्षिणेन पाणिनोपस्थमभिमृशेद्विष्णुर्योनिं कल्पयत्वित्येतयर्चा गर्भं धेहि सिनीवालीति च ९ समाप्यर्चौ सम्भवतः १० ५

तृतीयस्य गर्भमासस्यादिसदेशे पुँसवनस्य कालः १ प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति २ पश्चात्पतिरवस्थाय दक्षिणेन पाणिना दक्षिणमँसमन्ववमृश्यानन्तर्हितं नाभिदेशमभिमृशेत्पुमाँसौ मित्रावरुणावित्येतयर्चा ३ अथ यथार्थम् ४ अथापरम् ५ प्रागुदीच्यां दिशि न्यग्रोधशुङ्गामुभयतःफलामस्रामामकृमिपरिसृप्तां त्रिःसप्तैर्यवैर्माषैर्वा परिक्रीयोत्थापयेत् ६ यद्यसि सौमी सोमाय त्वा राज्ञे परिक्रीणामि यद्यसि वारुणी वरुणाय त्वा राज्ञे परिक्रीणामि यद्यसि वसुभ्यो वसुभ्यस्त्वा परिक्रीणामि यद्यसि रुद्रेभ्यो रुद्रेभ्यस्त्वा परिक्रीणामि यद्यस्यादित्येभ्य आदित्येभ्यस्त्वा परिक्रीणामि यद्यसि मरुद्भ्यो मरुद्भ्यस्त्वा परिक्रीणामि यद्यसि विश्वेभ्यो देवेभ्यो विश्वेभ्यस्त्वा देवेभ्यः परिक्रीणामि ७ ओषधयः सुमनसो भूत्वास्यां वीर्यं समाधत्तेयं कर्म करिष्यतीत्युत्थाप्य तृणैः परिधायाहृत्य वैहायसीं निदध्यात् ८ दृषदं प्रक्षाल्य ब्रह्मचारी व्रतवती वा ब्रह्मबन्धूः कुमारी वाप्रत्याहरन्ती पिनष्टि ९ प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु

प्राक्शिराः संविशति १० पश्चात्पतिरवस्थाय दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याभिसंगृह्य दक्षिणे नासिकास्रोतस्यवनयेत्पुमानग्निः पुमानिन्द्र इत्येतयर्चा ११ अथ यथार्थम् १२ ६

अथ सीमन्तकरणं प्रथमगर्भे १ चतुर्थे मासि षष्ठेऽष्टमे वा २ प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति ३ पश्चात्पतिरवस्थाय युग्मन्तमौदुम्बरं शलाटुग्रथ्नमाबध्नात्ययमूर्जावतो वृक्ष इति ४ अथ सीमन्तमूर्ध्वमुन्नयति भूरिति दर्भपिञ्जूलीभिरेव प्रथमं भुवरिति द्वितीयं स्वरिति तृतीयम् ५ अथ वीरतरेण येनादितेरित्येतयर्चा ६ अथ पूर्णचात्रेण राकामहमित्येतयर्चा ७ त्रिःश्वेतया च शलल्या यास्ते राके सुमतय इति ८ कृसरः स्थालीपाक उत्तरघृतस्तमवेक्षयेत् ९ किं पश्यसीत्युक्त्वा प्रजामिति वाचयेत् १० तं सा स्वयं भुञ्जीत ११ वीरसूर्जीवसूर्जीवपत्नीति ब्राह्मण्यो मङ्गल्याभिर्वाग्भिरुपासीरन् १२ अथ सोष्यन्तीहोमः १३ प्रतिष्ठिते वस्तौ परिस्तीर्याग्निमाज्याहुती जुहोति या तिरश्चीत्येतयर्चा विपश्चित्पुच्छमभरदिति च १४ पुमानयं जनिष्यतेऽसौ नामेति नामधेयं गृह्णाति १५ यत्तद्गुह्यमेव भवति १६ यदास्मै कुमारं जातमाचक्षीरन्नथ ब्रूयात्काङ्क्षत नाभिकृन्तनेन स्तनप्रतिधानेन चेति १७ व्रीहियवौ पेषयेत्तयैवावृता यया शुङ्गाम् १८ दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याभिसंगृह्य कुमारस्य जिह्वायां निमार्ष्टीयमाज्ञेति १९ तथैव मेधाजननं सर्पिः प्राशयेत् २० जातरूपेण वादाय कुमारस्य मुखे जुहोति मेधां ते मित्रावरुणावित्येतयर्चा सदसस्पतिमद्भुतमिति च २१ कृन्तत नाभिमिति ब्रूयात्स्तनं च प्रतिधत्तेति अत ऊर्ध्वमसमालम्भनमा दशरात्रात् २२ ७

जननाद्यस्तृतीयो ज्यौत्स्नस्तस्य तृतीयायां प्रातः सशिरस्कं कुमारमाप्लाव्यास्तमिते वीते लोहितिम्नयञ्जलिकृतः पितोपतिष्ठते १ अथ माता शुचिना वसनेन कुमारमाच्छाद्य दक्षिणत उदञ्चं पित्रे प्रयच्छत्युदक्शिरसम् २ अनुपृष्ठं परिक्रम्योत्तरतोऽवतिष्ठते ३ अथ जपति यत्ते सुसीम इति यथायं न प्रमीयेत पुत्रो जनित्र्या अधीति ४ उदञ्चं मात्रे प्रदाय यथार्थम् ५ अथ येऽत ऊर्ध्वं ज्यौत्स्नाः प्रथमोद्दिष्ट एव तेषु पितोपतिष्ठतेऽपामञ्जलिं पूरयित्वाभिमुखश्चन्द्रमसम् ६ यददश्चन्द्रमसीति सकृद्यजुषा द्विस्तूष्णीमुत्सृज्य यथार्थम् ७

जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणम् ८ अथ यस्तत्करिष्यन्भवति पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङुपविशति ९ अथ माता शुचिना वसनेन कुमारमाच्छाद्य दक्षिणत उदञ्चं कर्त्रे प्रयच्छत्युदक्शिरसम् १० अनुपृष्ठम्परिक्रम्योत्तरत उपविशत्युदगग्रेष्वेव दर्भेषु ११ अथ जुहोति प्रजापतये तिथये नक्षत्राय देवताया इति १२ तस्य मुख्यान्प्राणान्संमृशन्कोऽसि कतमोऽसीत्येतं मन्त्रं जपति १३ आहस्पत्यं मासं प्रविशासावित्यन्ते च मन्त्रस्य घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं कृतं नाम दध्यात् १४ एतदतद्धितम् १५ अयुग्दान्तं स्त्रीणाम् १६ मात्रे चैव प्रथमं नामधेयमाख्याय यथार्थम् १७ गौर्दक्षिणा १८ कुमारस्य मासि मासि संवत्सरे सांवत्सरिकेषु वा पर्वस्वग्नीन्द्रौ द्यावापृथिवी विश्वान्देवाँश्च यजेत १९ दैवतमिष्ट्वा तिथिं नक्षत्रं च यजेत २० विप्रोष्य ज्येष्ठस्य पुत्रस्योभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेद्यदा वा पिता म इति विद्यादुपेतस्य वाङ्गादङ्गात्सस्रवसीति २१ पशूनां त्वा हिङ्कारेणाभिजिघ्रामीत्यभिजिघ्रेच्च यथार्थम् २२ एवमेवावरेषाम् २३ यथाज्येष्ठं यथोपलम्भं वा २४ स्त्रियास्तूष्णीं मूर्धन्यभिजिघ्रणं मूर्धन्यभिजिघ्रणम् २५ ८

अथातस्तृतीये वर्षे चूडाकरणम् १ पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितो भवति २ तत्रैतान्युपक्लृप्तानि भवन्ति ३ एकविँशतिर्दर्भपिञ्जूल्य उष्णोदककँस औदुम्बरः क्षुर आदर्शो वा क्षुरपाणिर्नापित इति दक्षिणतः ४ आनडुहो गोमयः कृसरः स्थालीपाको वृथापक्व इत्युत्तरतः ५ व्रीहियवैस्तिलमाषैरिति पृथक् पात्राणि पूरयित्वा पुरस्तादुपनिदध्युः ६ कृसरो नापिताय सर्वबीजानि चेति ७ अथ माता शुचिना वसनेन कुमारमाच्छाद्य पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति ८ अथ यस्तत्करिष्यन्भवति पश्चात्प्राङवतिष्ठते ९ अथ जपत्यायमगात्सविता क्षुरेणेति सवितारं मनसा ध्यायन्नापितं प्रेक्षमाणः १० उष्णेन वाय उदकेनैधीति वायुं मनसा ध्यायन्नुष्णोदककँसं प्रेक्षमाणः ११ दक्षिणेन पाणिनाप आदाय दक्षिणां कपुष्णिकामुन्दत्याप उन्दन्तु जीवस इति १२ विष्णोर्दँष्ट्रोऽसीत्यौदुम्बरं क्षुरं प्रेक्षत आदर्शं वा १३ ओषधे त्रायस्वैनमिति सप्त दर्भपिञ्जूलीर्दक्षिणायां कपुष्णिकायामभिशिरोग्रा निदधाति १४ ता वामेन पाणिना निगृह्य दक्षिणेन पाणिनौदुम्बरं क्षुरं गृहीत्वादर्शं वाभिनिदधाति स्वधिते मैनं हिँसीरिति १५ येन पूषा बृहस्पतेरिति त्रिः प्राञ्चं प्रोहत्य-

प्रच्छिन्दन्सकृद्यजुषा द्विस्तूष्णीम् १६ अथायसेन प्रच्छिद्यानडुहे गोमये निदधाति १७ एतयैवावृता कपुच्छलम् १८ एतयोत्तरां कपुष्णिकाम् १९ उन्दनप्रभृति त्वेवाभिनिवर्तयेत् २० उभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेत्त्र्यायुषं जमदग्नेरिति २१ एतयैवावृता स्त्रियाः २२ तूष्णीम् २३ मन्त्रेण तु होमः २४ उदङङग्नेरुत्सृप्य कुशलीकारयन्ति यथागोत्रकुलकल्पम् २५ आनडुहे गोमये केशान्कृत्वारण्यं हृत्वा निखनन्ति २६ स्तम्बे हैके निदधति २७ यथार्थम् २८ गौर्दक्षिणा २९ ९

गर्भाष्टमेषु ब्राह्मणमुपनयेत् १ गर्भैकादशेषु क्षत्रियं २ गर्भद्वादशेषु वैश्यम् ३ आ षोडशाद्वर्षाद्ब्राह्मणस्यानतीतः कालो भवत्या द्वाविँशात्क्षत्रियस्याचतुर्विँशाद्वैश्यस्य ४ अत ऊर्ध्वं पतितसावित्रीका भवन्ति ५ नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्विवहेयुः ६ यदहरुपैष्यन्माणवको भवति प्रग एवैनं तदहर्भोजयन्ति कुशलीकारयन्त्याप्लावयन्त्यलङ्कुर्वन्त्यहतेन वाससाच्छादयन्ति ७ क्षौमशाणकार्पासौर्णान्येषां वसनानि ८ ऐणेयरौरवाजान्यजिनानि मुञ्जकाशताम्बल्यो रशनाः ९ पार्णबैल्वाश्वत्था दण्डाः ११ क्षौमं शाणं वा वसनं ब्राह्मणस्य कार्पासं क्षत्रियस्याविकं वैश्यस्य १२ एतेनैवेतराणि द्रव्याणि व्याख्यातानि १३ अलाभे वा सर्वाणि सर्वेषाम् १४ पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितो भवति १५ अग्ने व्रतपत इति हुत्वा पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङाचार्योऽवतिष्ठते १६ अन्तरेणाग्न्याचार्यौ माणवकोऽञ्जलिकृतोऽभिमुख आचार्यमुदगग्रेषु दर्भेषु १७ तस्य दक्षिणतोऽवस्थाय मन्त्रवान्ब्राह्मणोऽपामञ्जलिं पूरयति १८ उपरिष्टाच्चाचार्यस्य १९ प्रेक्षमाणो जपत्यागन्त्रा समगन्महीति २० ब्रह्मचर्यमागामिति वाचयति २१ को नामासीति नामधेयं पृच्छति तस्याचार्यः २२ अभिवादनीयं नामधेयं कल्पयित्वा २३ देवताश्रयं वा नक्षत्राश्रयं वा २४ गोत्राश्रयमप्येके २५ उत्सृज्यापामञ्जलिमाचार्यो दक्षिणेन पाणिना दक्षिणं पाणिं साङ्गुष्ठं गृह्णाति देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसाविति २६ अथैनं प्रदक्षिणमावर्तयति सूर्यस्यावृतमन्वावर्तस्वासाविति २७ दक्षिणेन पाणिना दक्षिणमँसमन्ववमृश्यानन्तर्हितां नाभिमभिमृशेत्प्राणानां ग्रन्थिरसीति २८ उत्सृप्य नाभिदेशमहुर इति २९ उत्सृप्य हृदयदेशं कृशन इति ३० दक्षिणेन पाणिना दक्षिणमँसमन्वालभ्य प्रजापतये त्वा परिददाम्यसाविति ३१ सव्येन

सव्यं देवाय त्वा सवित्रे परिददाम्यसाविति ३२ अथैनं संप्रेष्यति ब्रह्मचार्यस्यासाविति ३३ समिधमाधेह्यपोशान कर्म कुरु मा दिवा स्वाप्सीरिति ३४ उदङ्ङग्नेरुत्सृप्य प्राङाचार्य उपविशत्युदगग्रेषु दर्भेषु ३५ प्रत्यङ्गाणवको दक्षिणजान्वक्तोऽभिमुख आचार्यमुदगग्रेष्वेव दर्भेषु ३६ अथैनं त्रिः प्रदक्षिणं मुञ्जमेखलां परिहरन्वाचयतीयं दुरुक्तात्परिबाधमानेत्यृतस्य गोप्त्रीति च ३७ अथोपसीदत्यधीहि भोः सावित्रीं मे भवाननुब्रवीत्विति ३८ तस्मा अन्वाह पच्छोऽर्धर्चश ऋक्श इति ३९ महाव्याहृतीश्च विहृता ओँकारान्ताः ४० वार्क्षं चास्मै दण्डं प्रयच्छन्वाचयति सुश्रवः सुश्रवसं मा कुर्विति ४१ अथ भैक्षं चरति ४२ मातरमेवाग्रे द्वे चान्ये सुहृदौ यावत्यो वा सन्निहिताः स्युः ४३ आचार्याय भैक्षं निवेदयते ४४ तिष्ठत्यहःशेषं वाग्यतः ४५ अस्तमिते समिधमादधात्यग्नये समिधमहार्षमिति ४६ त्रिरात्रमक्षारालवणाशी भवति ४७ तस्यान्ते सावित्रश्चरुः ४८ यथार्थम् ४९ गौर्दक्षिणा ५० १०

इति द्वितीयः प्रपाठकः

अथातः षोडशे वर्षे गोदानम् १ चूडाकरणेन केशान्तकरणं व्याख्यातम् २ ब्रह्मचारी केशान्तान्कारयते ३ सर्वाण्यङ्गलोमानि संहारयते ४ गोमिथुनं दक्षिणा ब्राह्मणस्य ५ अश्वमिथुनं क्षत्रियस्य ६ अविमिथुनं वैश्यस्य ७ गौर्वैव सर्वेषाम् ८ अजः केशप्रतिग्राहाय ९ उपनयनेनैवोपनयनं व्याख्यातम् १० न त्विहाहतं वासो नियुक्तम् ११ नालङ्कारः १२ नाचरिष्यन्तं संवत्सरमुपनयेत् १३ वार्क्षं चास्मै दण्डं प्रयच्छन्नादिशति १४ आचार्याधीनो भवान्यत्राधर्मचरणात् १५ क्रोधानृते वर्जय १६ मैथुनम् १७ उपरिशय्याम् १८ कौशीलवगन्धाञ्जनानि १९ स्नानम् २० अवलेखनदन्तप्रक्षालनपादप्रक्षालनानि २१ क्षुरकृत्यम् २२ मधुमाँसे २३ गोयुक्तारोहणम् २४ अन्तर्ग्राम उपानहोर्धारणम् २५ स्वयमिन्द्रियमोचनमिति २६ मेखलाधारणभैक्षचर्यदण्डधारणसमिदाधानोदकोपस्पर्शनप्रातरभिवादा इत्येते नित्यध-र्माः २७ गोदानिकव्रातिकादित्यव्रतौपनिषदज्यैष्ठसामिकाः संवत्सराः २८ तेषु सायंप्रातरुदकोपस्पर्शनम् २९ आदित्यव्रतं तु न चरन्त्येके ३० ये चरन्त्येकवाससो भवन्ति ३१ आदित्यं च नान्तर्दधतेऽन्यत्र वृक्षशरणाभ्याम् ३२ नापोऽभ्यवयन्त्यूर्ध्वं जानुभ्यामगुरुप्रयुक्ताः ३३ १

द्वादश महानाम्निकाः संवत्सराः १ नव षट् त्रयः २ इति विकल्पः ३ संवत्सरमप्येके ४ व्रतं तु भूयः ५ पूर्वैश्चेच्छ्रुता महानाम्न्यः ६ अथापि रौरुकिब्राह्मणं भवति ७ कुमारान्ह स्म वै मातरः पाययमाना आहुः ८ शक्वरीणां पुत्रका व्रतं पारयिष्णवो भवतेति ९ तास्वनुसवनमुदकोपस्पर्शनम् १० नानुपस्पृश्य भोजनं प्रातः ११ सायमुपस्पृश्याभोजनमा समिदाधानात् १२ कृष्णवस्त्रः १३ कृष्णभक्षः १४ आचार्याधीनः १५ अपन्थदायी १६ तपस्वी १७ तिष्ठेद्दिवा १८ आसीत नक्तम् १९ वर्षति च नोपसर्पेच्छन्नम् २० वर्षन्तं ब्रूयादापः शक्वर्य इति २१ विद्योतमानं ब्रूयादेवंरूपाः खलु शक्वर्यो भवन्तीति २२ स्तनयन्तं ब्रूयान्मह्या महान्घोष इति २३ न स्रवन्तीमतिक्रामेदनुपस्पृशन् २४ न नावमारोहेत् २५ प्राणसंशये तूपस्पृश्यारोहेत् २६ तथा प्रत्यवरुह्य २७ उदकसाधवो हि महानाम्न्य इति २८ एवं खलु चरतः कामवर्षी पर्जन्यो भवति २९ अनियमो वा कृष्णस्थानासनपन्थभक्षेषु ३० तृतीये चरिते स्तोत्रीयामनुगापयेत् ३१ एवमितरे स्तोत्रीये ३२ सर्वा वान्ते सर्वस्य ३३ उपोषिताय संमीलितायानुगापयेत् ३४ कँसमपां पूरयित्वा सर्वौषधीः कृत्वा हस्താववधाय प्रदक्षिणमाचार्योऽहतेन वसनेन परिणह्येत् ३५ परिणहनान्ते वानुगापयेत् ३६ परिणद्धो वाग्यतो न भुञ्जीत त्रिरात्रमहोरात्रौ वा ३७ अपि वारण्ये तिष्ठेदास्तमयात् ३८ श्वो भूतेऽरण्येऽग्निमुपसमाधाय व्याहृतिभिर्हुत्वाथैनमवेक्षयेत् ३९ अग्निमाज्यमादित्यं ब्रह्माणमनड्वाहमन्नमपो दधीति ४० स्वरभिव्यख्यं ज्योतिरभिव्यख्यमिति ४१ एवं त्रिः सर्वाणि ४२ शान्तिं कृत्वा गुरुमभिवादयते ४३ सोऽस्य वाग्विसर्गः ४४ अनड्वान्कँसो वासो वर इति दक्षिणाः ४५ प्रथमे विकल्पः ४६ आच्छादयेद्गुरुमित्येके ४७ ऐन्द्रः स्थालीपाकस्तस्य जुहुयादृचं साम यजामह इत्येतयर्चा सदसस्पतिमद्भुतमिति वोभाभ्यां वा ४८ अनुप्रवचनीयेष्वेवम् ४९ सर्वत्राचार्षं तदशकं तेनारात्समुपगामिति मन्त्रविशेषः ५० आग्नेयेऽज ऐन्द्रे मेषो गौः पावमाने पर्वदक्षिणाः ५१ प्रत्येत्याचार्यं सपरिषत्कं भोजयेत् ५२ सब्रह्मचारिणश्चोपसमेतान् ५३ ज्येष्ठसाम्नो महानाम्निकेनैवानुगापनकल्पो व्याख्यातः ५४ तत्रैतानि नित्यव्रतानि भवन्ति ५५ न शूद्रामुपेयात् ५६ न पक्षिमाँसं भुञ्जीत ५७ एकधान्यमेकदेशमेकवस्त्रं च वर्जयेत् ५८ उद्धृताभिरद्भिरुपस्पृशेत् ५९ आदेशनात्प्रभृति न मृण्मयेऽश्नीयात् ६० न पिबेत् ६१ श्रवणादित्येके ६२ २

प्रौष्ठपदीं हस्तेनोऽपाकरणम् १ व्याहृतिभिर्हुत्वा शिष्याणां सावित्र्यनुवचनं यथोपनयने २ सामसावित्रीं च ३ सोमं राजानं वरुणमिति च ४ आदितश्छन्दसोऽधीत्य यथार्थम् ५ अक्षतधाना भक्षयन्ति धानावन्तं करम्भिणमिति ६ दध्नः प्राश्नन्ति दधिक्राव्णोऽकारिषमिति ७ आचान्तोदकाः खाण्डिकेभ्योऽनुवाक्या अनुगेयाः कारयेत् ८ सावित्रमहः काङ्क्षन्ते ९ उदगयने च पक्षिणीं रात्रिम् १० उभयत एके त्रिरात्रम् ११ आचार्याणां चोदकोत्सेचनमुभयत्र १२ श्रवणामेक उपाकृत्यैतमा सावित्रात्कालं काङ्क्षन्ते १३ तैषीमुत्सृजन्ति १४ प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य या आपोऽनवमेहनीयास्ता अभ्येत्योपस्पृश्य च्छन्दाँस्यृषीनाचार्यांश्च तर्पयेयुः १५ तस्मिन्प्रत्युपाकरणेऽध्यानध्याय आ पुनरुपाकरणाच्छन्दसः १६ विद्युत्स्तनयित्नुपृषितेष्वाकालम् १७ उल्कापातभूमिचलज्योतिषोरुपसर्गेषु १८ निर्घाते च १९ अष्टकामावास्यासु नाधीयीरन् २० पौर्णमासीषु २१ तिसृषु कार्त्तिक्यां फाल्गुन्यामाषाढ्यां च २२ अहोरात्रम् २३ सब्रह्मचारिणि च प्रेते २४ स्वे च भूमिपतौ २५ त्रिरात्रमाचार्ये २६ उपसन्ने त्वहोरात्रम् २७ गीतवादित्ररुदितातिवातेषु तत्कालम् २८ शिष्टाचारोऽतोऽन्यत्र २९ अद्भुते कुलपत्योः प्रायश्चित्तम् ३० वँशमध्यमयोर्मणिके वा भिन्ने व्याहृतिभिर्जुहुयात् ३१ दुःस्वप्नेष्वद्य नो देव सवितरित्येतामृचं जपेत् ३२ अथापरम् ३३ चित्ययूपोपस्पर्शनकर्णक्रोशाक्षिवेपनेषु सूर्याभ्युदितः सूर्याभिनिम्लुप्त इन्द्रियैश्च पापस्पर्शैः पुनर्मामैत्विन्द्रियमित्येताभ्यामाज्याहुती जुहुयात् ३४ आज्यलिप्ते वा समिधौ ३५ जपेद्वा लघुषु ३६ ३

ब्रह्मचारी वेदमधीत्य १ उपन्याहृत्य गुरवे २ अनुज्ञातो दारान्कुर्वीत ३ असगोत्रान् ४ मातुरसपिण्डा ५ अनग्निका तु श्रेष्ठा ६ अथाप्लवनम् ७ उत्तरतः पुरस्ताद्वाचार्यकुलस्य परिवृतं भवति ८ तत्र प्रागग्रेषु दर्भेषूदङ्ङाचार्य उपविशति ९ प्राग्ब्रह्मचार्युदगग्रेषु दर्भेषु १० सर्वौषधिविफाण्टाभिरद्भिर्गन्धवतीभिः शीतोष्णाभिराचार्योऽभिषिञ्चेत् ११ स्वयमिव तु १२ मन्त्रवर्णो भवति १३ ये अप्स्वन्तरग्नयः प्रविष्टा इत्यपामञ्जलिमवसिञ्चति १४ यदपां घोरं यदपां क्रूरं यदपामशान्तमिति च १५ यो रोचनस्तमिह गृह्णामीत्यात्मानमभिषिञ्चति १६ यशसे तेजस इति च १७ येन स्त्रियमकृणुतमिति च १८ तूष्णीं चतुर्थम् १९ उपोत्थायदित्यमुपतिष्ठेतोद्यन्भ्राजभृ-

ष्टिभिरित्येतत्प्रभृतिना मन्त्रेण २० यथालिङ्गं वा विहरन् २१ चक्षुरसी-त्यनुबध्नीयात् २२ मेखलामवमुञ्चत उदुत्तमं वरुणपाशमिति २३ ब्राह्मना-न्भोजयित्वा स्वयं भुक्त्वा केशश्मश्रुरोमनखानि वापयीत शिखावर्जम् २४ स्नात्वालङ्कृत्याहते वाससी परिधाय स्रजमाबध्नीत श्रीरसि मयि रमस्वेति २५ नेत्र्यौ स्थो नयतं मामित्युपानहौ २६ गन्धर्वोऽसीति वैणवं दण्डं गृह्णाति २७ आचार्यं सपरिषत्कमभ्येत्याचार्यपरिषदमीक्षते यक्षमिव चक्षुषः प्रियो वो भूयासमिति २८ उपोपविश्य मुख्यान्प्राणान्संमृशन्नोष्ठापिधाना नकुलीति २९ अत्रैनमाचार्योऽर्हयेत् ३० गोयुक्तं रथमुपसंक्रम्य पक्षसी कूबरबाहू वाभि-मृशेद्वनस्पते वीड्वङ्गो हि भूया इति ३१ आस्थाता ते जयतु जेत्वानीत्यातिष्ठति ३२ प्राङ्वोदङ्वाभिप्रयाय प्रदक्षिणमावृत्योपयाति ३३ उपयाताया-र्घ्यमिति कौहलीयाः ३४ ४

अत ऊर्ध्वं वृद्धशीली स्यादिति समस्तोद्देशः १ तत्रैतान्याचार्याः परिसंचक्षते २ नाजातलोम्न्योपहासमिच्छेत् ३ नायुग्वा ४ न रजस्वलया ५ न समानर्ष्या ६ नापरया द्वारा प्रपन्नमन्नं भुञ्जीत ७ न द्विःपक्वम् ८ न पर्युषितम् ९ अन्यत्र शाकमाँसयवपिष्टविकारेभ्यः १० न वर्षति धावेत् ११ नोपानहौ स्वयं हरेत् १२ नोदपानमवेक्षेत् १३ न फलानि स्वयं प्रचिन्वीत १४ नागन्धां स्रजं धारयेत् १५ अन्यां हिरण्यस्रजः १६ न मालोक्ताम् १७ स्रगिति वाचयेत् १८ भद्रमित्येतां वृथावाचं परिहरेत् १९ भद्रमिति ब्रूयात् २० तत्रैते त्रयः स्नातका भवन्ति २१ विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति २२ तेषामुत्तमः श्रेष्ठस्तुल्यौ पूर्वौ २३ नार्द्रं परिदधीत २४ नैकं परिदधीत २५ न मनुष्यस्य स्तुतिं प्रयुञ्जीत २६ नादृष्टं दृष्टतो ब्रुवीत २७ नाश्रुतं श्रुततः २८ स्वाध्यायविरोधिनोऽर्थानुत्सृजेत् २९ तैलपात्रमिवात्मानं दिधारयिषेत् ३० न वृक्षमारोहेत् ३१ न प्रतिसायं ग्रामान्तरं व्रजेत् ३२ नैकः ३३ न वृषलैः सह ३४ न कासृत्या ग्रामं प्रविशेत् ३५ न चाननुचरश्चरेत् ३६ एतानि समावृत्तव्रतानि ३७ यानि च शिष्टा विदध्युः ३८ ५

गाः प्रकाल्यमाना अनुमन्त्रयेतेमा मे विश्वतो वीर्य इति १ प्रत्यागता इमा मधुमतीर्मह्यमिति २ पुष्टिकामः प्रथमजातस्य वत्सस्य प्राङ्मातुः प्रलेहना-ज्जिह्वया ललाटमुल्लिह्य निगिरेद्गवां श्लेष्मासीति ३ पुष्टिकाम एव संप्रजा-

तासु निशायां गोष्ठेऽग्निमुपसमाधाय विलयनं जुहुयात्संग्रहण संगृहाणेति ४ पुष्टिकाम एव संप्रजातास्वौदुम्बरेणासिना वत्समिथुनयोर्लक्षणं करोति पुँस एवाग्रेऽथ स्त्रिया भुवनमसि साहस्रमिति ५ कृत्वा चानुमन्त्रयेत लोहितेन स्वधितिनेति ६ तन्त्रीं प्रसार्यमाणां बद्धवत्सां चानुमन्त्रयेतेयं तन्ती गवां मातेति ७ तत्रैतान्यहरहः कृत्यानि भवन्ति ८ निष्कालनप्रवेशने तन्त्रीविहरणमिति ९ गोयज्ञे पायसश्चरुः १० अग्निं यजेत पूषणमिन्द्रमीश्वरम् ११ ऋषभपूजा १२ गोयज्ञेनैवा श्वयज्ञो व्याख्यातः १३ यमवरुणौ देवतानामत्राधिकौ १४ गन्धैरभ्युक्षणं गवां गन्धैरभ्युक्षणं गवाम् १५ ६

अथातः श्रवणाकर्म १ पौर्णमास्यां कृत्यम् २ पुरस्ताच्छालाया उपलिप्य शालाग्नेरग्निं प्रणयन्ति ३ अभितश्चत्वार्युपलिम्पन्ति ४ प्रतिदिशम् ५ साधिके प्रक्रमे ६ अग्नौ कपालमाधाय सकृत्संगृहीतं यवमुष्टिं भृज्ञत्यनुपदहन् ७ पश्चादग्नेरुलूखलं दृँहयित्वावहन्त्युद्वेचम् ८ सुकृतान्सक्तून्कृत्वा चमस ओप्य शूर्पेणापिधाय निदधाति ९ दक्षिणपश्चिमे अन्तरेण संचरः १० अस्तमिते चमसदर्व्यावादाय शूर्पं चातिप्रणीतस्यार्धं व्रजति ११ शूर्पे सक्तूनावपति चमसे चोदकमादत्ते १२ सकृत्संगृहीतान्दर्व्या सक्तून्कृत्वा पूर्व उपलिप्त उदकं निनीय बलिं निवपति यः प्राच्यां दिशि सर्पराज एष ते बलिरिति १३ उपनिनयत्यपां शेषं यथा बलिं न प्रवक्ष्यतीति १४ सव्यं बाहुमन्वावृत्य चमसदर्व्यावभ्युक्ष्य प्रताप्यैवं दक्षिणैवं प्रतीच्येवमुदीची यथालिङ्गमव्या-वर्तमानः १५ शूर्पेण शेषमग्नावोप्यानतिप्रणीतस्यार्धं व्रजति १६ पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्य नमः पृथिव्या इत्येतं मन्त्रं जपति १७ प्रदोषे पायसश्चरुः १८ तस्य जुहुयाच्छ्रवणाय विष्णवेऽग्नये प्रजापतये विश्वेभ्यो देवेभ्यः स्वाहेति १९ स्थालीपाकावृतान्यत् २० उत्तरतोऽग्नेर्दर्भस्तम्बं समूलं प्रतिष्ठाप्य सोमो राजेत्येतं मन्त्रं जपति यां सन्धां समधत्तेति च २१ श्वस्ततोऽक्षतसक्तून्कार-यित्वा नवे पात्रेऽपिधाय निदधाति २२ अहरहस्तूष्णीं बलीन्हरेत्सायं प्राग्घो-मादाग्रहायरयाः २३ ७

आश्वयुज्यां पौर्णमास्यां पृषातके पायसश्चरू रौद्रः १ तस्य जुहुयादा नो मित्रावरुणेति प्रथमां मा नस्तोक इति द्वितीयाम् २ गोनामभिश्च पृथक् काम्यासीत्येतत्प्रभृतिभिः ३ स्थालीपाकावृतान्यत् ४ पृषातकं प्रदक्षिणमग्निं

पर्याणीय ब्राह्मणानवेक्षयित्वा स्वयमवेक्षेत तच्चक्षुर्देवहितं पुरस्ताच्छुक्र-मुच्चरत्पश्येम शरदः शतं जीवेम शरदः शतमिति ५ ब्राह्मणान्भोजयित्वा स्वयं भुक्त्वा जातुषान्मणीन्सर्वौषधिमिश्रानाबध्नीरन्स्वस्त्ययनार्थम् ६ सायं गाः पृषातकं प्राशयित्वा सहवत्सा वासयेत ७ स्वस्ति हासां भवति ८ नवयज्ञे पायसश्चरुरैन्द्राग्नः ९ तस्य मुख्यां हविराहुतिं हुत्वा चतसृभिराज्या-हुतिभिरभिजुहोति शतायुधायेत्येतत्प्रभृतिभिः १० स्थालीपाकावृतान्यत् ११ हविरुच्छिष्टशेषं प्राशयेद्यावन्त उपेताः स्युः १२ सकृदपामुपस्तीर्य द्विश्चरोर-वद्यति १३ त्रिर्भृगूणाम् १४ अपां चैवोपरिष्टात् १५ असंस्वादं निगिरेद्भद्रान्नः श्रेय इति १६ एवं त्रिः १७ तूष्णीं चतुर्थम् १८ भूय एवावदाय १९ कामं तत्र संस्वादयेरन् २० आचान्तोदकाः प्रत्यभिमृशेरन्मुखं शिरोऽङ्गानीत्य-नुलोमममोऽसीति २१ एतयैवावृता श्यामाकयवानाम् २२ अग्निः प्राश्नातु प्रथम इति श्यामाकानाम् २३ एतमु त्यं मधुना संयुतं यवमिति यवानाम् २४ ८

आग्रहायण्यां बलिहरणम् १ तच्छ्रावणेनैव व्याख्यातम् २ नमः पृथिव्या इत्येतं मन्त्रं न जपति ३ अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वा दर्भाञ्शमीं वीरणां फलवतीमपामार्गं शिरीषमित्येतान्याहारयित्वा तूष्णीमक्षतसक्तूनामग्नौ कृत्वा ब्राह्मणान्स्वस्तिवाच्यैस्तैः सम्भारैः प्रदक्षिणमग्न्यागारात्प्रभृति धूमं शात-यन्गृहाननुपरीयात् ४ उत्सृजेत्कृतार्थान्सम्भारान् ५ जातशिलासु मणिकं प्रतिष्ठापयति वास्तोष्पत इत्येतेन द्विकेन पर्केण ६ द्वावुदकुम्भौ मणिक आसिञ्चेत्समन्या यन्तीत्येतयर्चा ७ प्रदोषे पायसश्चरुः ८ तस्य जुहुया-त्प्रथमा हव्युवाससेति ९ स्थालीपाकावृतान्यत् १० पश्चादग्नेर्बर्हिषि न्यञ्चौ पाणी प्रतिष्ठाप्य प्रति क्षत्र इत्येता व्याहृतीर्जपति ११ पश्चादग्नेः स्वस्तर-मास्तारयेत् १२ उदगग्रैस्तृणैः १३ उदक्प्रवणम् १४ तस्मिन्नहतान्या-स्तरणान्यास्तीर्य दक्षिणतो गृहपतिरुपविशति १५ अनन्तरा अवरे यथाज्येष्ठम् १६ अनन्तराश्च भार्याः सजाताः १७ समुपविष्टेषु गृहपतिः स्वस्तयेन्न्यञ्चौ पाणी प्रतिष्ठाप्य स्योना पृथिवि नो भवेत्येतामृचं जपति १८ समाप्तायां संविशन्ति दक्षिणैः पार्श्वैः १९ एवं त्रिरभ्यात्ममावृत्य २० स्वस्त्ययनानि प्रयुज्य यथाज्ञानम् २१ अरिष्टं सामसंयोगमेके २२ अप उपस्पृश्य यथार्थम् २३ ९

अष्टका रात्रिदेवता १ पुष्टिकर्म २ आग्नेयी पित्र्या वा प्राजापत्यर्तुदेवता वैश्वदेवीति देवताविचाराः ३ चतुरष्टको हेमन्तः ४ ताः सर्वाः समाँसाश्चिकीर्षेत् ५ इति कौत्सः ६ त्र्यष्टक इत्यौद्गाहमानिः ७ तथा गौतमवार्कखण्डी ८ योर्ध्वमाग्रहायण्यास्तामिस्राष्टमी तामपूपाष्टकेत्याचक्षते ९ स्थालीपाकावृता तण्डुलानुपस्कृत्य चरुं श्रपयति १० अष्टौ चापूपान्कपालेऽपरिवर्तयन् ११ एककपालान् १२ अमन्त्रानित्यौद्गाहमानिः १३ त्रैयम्बकप्रमाणान् १४ शृतानभिघार्योदगुद्वास्य प्रत्यभिघारयेत् १५ स्थालीपाकावृतावदाय चरोश्चापूपानां चाष्टकायै स्वाहेति जुहोति १६ स्थालीपाकावृतान्यत् १७ तैष्या ऊर्ध्वमष्टम्यां गौः १८ तां सन्धिवेलासमीपं पुरस्तादग्नेरवस्थाप्योपस्थितायां जुहुयाद्यत्पशवः प्र ध्यायतेति १९ हुत्वा चानुमन्त्रयेतानु त्वा माता मन्यतामिति २० यवमतीभिरद्भिः प्रोक्षेदष्टकायै त्वा जुष्टां प्रोक्षामीति २१ उल्मुकेन परिहरेत्परि वाजपतिः कविरिति २२ अपः पानाय दद्यात् २३ पीतशेषमधस्तात्पशोरवसिञ्चेदात्तं देवेभ्यो हविरिति २४ अथैनामुदगुत्सृप्य संज्ञपयन्ति २५ प्राक्शिरसमुदक्पदीं देवदेवत्ये २६ दक्षिणाशिरसं प्रत्यक्पदीं पितृदेवत्ये २७ संज्ञप्तायां जुहुयाद्यत्पशुर्मायुमकृतेति २८ पत्नी चोदकमादाय पशोः सर्वाणि स्रोताँसि प्रक्षालयेत् २९ अग्रेण नाभिं पवित्रे अन्तर्धायानुलोममाकृत्य वपामुद्धरन्ति ३० तां शाखाविशाखयोः काष्ठयोरवसज्याभ्युक्ष्य श्रपयेत् ३१ प्रश्चयुतितायां विशसतेति ब्रूयात् ३२ यथा न प्रागग्नेर्भूमिं शोणितं गच्छेत् ३३ शृतामभिघार्योदगुद्वास्य प्रत्यभिघारयेत् ३४ स्थालीपाकावृता वपामवदाय स्विष्टकृदावृता वाष्टकायै स्वाहेति जुहोति ३५ स्थालीपाकावृतान्यत्स्थालीपाकावृतान्यत् ३६ १०

इति तृतीयः प्रपाठकः

अनुप्रहरति वपाश्रपण्यौ १ प्राचीमेकशूलां प्रतीचीमितराम् २ अवद्यन्त्यवदानानि सर्वाङ्गेभ्यः ३ अन्यत्र वामाच्च सक्थ्नः क्लोम्नश्च ४ वामं सक्थ्यन्वष्टक्याय निदध्यात् ५ तस्मिन्नेवाग्नौ श्रपयत्योदनचरुं च माँसचरुं च पृथङ्मेक्षणाभ्यां प्रदक्षिणमुदायुवन् ६ शृतावभिघार्योदगुद्वास्य प्रत्यभिघारयेत् ७ कँसे रसमवासिच्य ८ प्लक्षशाखावति प्रस्तरेऽवदानानि कृत्वा ९ स्थालीपाकावृतावदानानां कँसेऽवद्यति १० स्विष्टकृतश्च पृथक् ११ चरोरुद्धृत्य बिल्वमात्रमवदानैः सह यूषेण सन्नयेत् १२ चतुर्गृहीतमाज्यं गृहीत्वा-

ष्टर्चप्रथमया जुहुयादग्नावग्निरिति १३ सन्नीतात्तृतीयमात्रमवदाय द्वितीया-तृतीयाभ्यां जुहोति १४ उत्तरस्यां स्वाहाकारं दधाति १५ एवमेवावरे चतुर्थीपञ्चमीभ्यां षष्ठीसप्तमीभ्यां च १६ शेषमवदाय सौविष्टकृतमष्टम्यां जुहुयात् १७ यद्यु वा अल्पसम्भारतमः स्यादपि पशुनैव कुर्वीत १८ अपि वा स्थालीपाकं कुर्वीत १९ अपि वा गोग्रासमाहरेत् २० अपि वारण्ये कक्ष-मुपधाय ब्रूयादेषा मेऽष्टकेति २१ न त्वेव न कुर्वीत न त्वेव न कुर्वीत २२ १

श्वस्ततोन्वष्टक्यम् १ अपरश्वो वा २ दक्षिणपूर्वेऽष्टमदेशे परिवारयन्ति ३ तथायतम् ४ तथामुखैः कृत्यम् ५ चतुरवरार्ध्यान्प्रक्रमान् ६ पश्चादुप-संचारः ७ उत्तरार्धे परिवृतस्य लक्षणं कृत्वाग्निं प्रणयन्ति ८ पश्चादग्नेरुलूखलं दृँहयित्वा सकृत्संगृहीतं व्रीहिमुष्टिमवहन्ति सव्योत्तराभ्यां पाणिभ्याम् ९ यदा वितुषाः स्युः १० सकृदेव सुफलीकृतान्कुर्वीत ११ अथामुष्माच्च सक्थ्नो माँसपेशीमवकृत्य नवायां सूनायामणुशश्छेदयेत् १२ यथा माँसाभिघाराः पिण्डा भविष्यन्तीति १३ तस्मिन्नेवाग्नौ श्रपयत्योदनचरुं च माँसचरुं च पृथङ्मेक्षणाभ्यां प्रसव्यमुदायुवन् १४ शृतावभिघार्य दक्षिणोद्वास्य न प्रत्यभि-घारयेत् १५ दक्षिणार्धे परिवृतस्य तिस्रः कर्षूः खानयेत्पूर्वोपक्रमाः १६ प्रादेशायामाश्चतुरङ्गुलपृथिवीस्तथावखाताः १७ पूर्वस्याः कर्ष्वाः पुरस्ता-ल्लक्षणं कृत्वाग्निं प्रणयन्ति १८ अपरेण कर्षूः पर्याहृत्य लक्षणे निदध्यात् १९ सकृदाच्छिन्नं दर्भमुष्टिं स्तृणोति २० कर्षूश्च २१ पूर्वोपक्रमाः २२ पश्चात्कर्षूणां स्वस्तरमास्तारयेत् २३ दक्षिणाग्रैः कुशैः २४ दक्षिणाप्रवणम् २५ वृषीं चोपदध्यात् २६ तत्रास्मा आहरन्त्येकैकशः सव्यं बाहुमनु २७ चरुस्थाल्यौ मेक्षणे कँसं दर्वीमुदकमिति २८ पत्नी बर्हिषि शिलां निधाय स्थगरं पिनष्टि २९ तस्यां चैवाञ्जनं निघृष्य तिस्रो दर्भपिञ्जूलीरञ्जति सव्यन्तराः ३० तैलं चोपकल्पयेत् ३१ क्षौमदशां च ३२ शुचौ देशे ब्राह्मणाननिन्द्यानयुग्मा-नुदङ्मुखानुपवेश्य ३३ दर्भान्प्रदाय ३४ उदकपूर्वं तिलोदकं ददाति पितुर्नाम गृहीत्वासावेतत्ते तिलोदकं ये चात्र त्वानु याँश्च त्वमनु तस्मै ते स्वधेति ३५ अप उपस्पृश्यैवमेवेतरयोः ३६ तथा गन्धान् ३७ अग्नौ करिष्यामीत्यामन्त्रणं होष्यतः ३८ कुर्वित्युक्ते कँसे चरू समवदाय मेक्षणेनोपघातं जुहुयात्स्वाहा सोमाय पितृमत इति पूर्वां स्वाहाग्नये कव्यवाहनाय इत्युत्तराम् ३९ २

अत ऊर्ध्वं प्राचीनावीतिना वाग्यतेन कृत्यम् १ सव्येन पाणिना दर्भपिञ्जूलीं गृहीत्वा दक्षिणाग्रां लेखामुल्लिखेदपहता असुरा इति २ सव्येनैव पाणिनोल्मुकं गृहीत्वा दक्षिणार्धे कर्षूणां निदध्याद्ये रूपाणि प्रतिमुञ्चमाना इति ३ अथ पितॄनावाहयत्येत पितरः सोम्यास इति ४ अथोदपात्रान्कर्षूषु निदध्यात् ५ सव्येनैव पाणिनोदपात्रं गृहीत्वावसलवि पूर्वस्यां कर्ष्वां दर्भेषु निनयेत्पितुर्नाम गृहीत्वासाववनेनिक्ष्व ये चात्र त्वानु याँश्च त्वमनु तस्मै ते स्वधेति ६ अप उपस्पृश्यैवमेवेतरयोः ७ सव्येनैव पाणिना दर्वीं गृहीत्वा सन्नीतात्तृतीयमात्रमवदायावसलवि पूर्वस्यां कर्ष्वां दर्भेषु निदध्यात्पितुर्नाम गृहीत्वासावेष ते पिण्डो ये चात्र त्वानु याँश्च त्वमनु तस्मै ते स्वधेति ८ अप उपस्पृश्यैवमेवेतरयोः ९ यदि नामानि न विद्यात्स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं निदध्यात्स्वधा पितृभ्योऽन्तरीक्षसद्भ्य इति द्वितीयं स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम् १० निधाय जपत्यत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति ११ अपर्यावृत्य पुरोच्छ्वासादभिपर्यावर्तमानो जपेदमीमदन्त पितरो यथाभागमावृषायिषतेति १२ सव्येनैव पाणिना दर्भपिञ्जूलीं गृहीत्वावसलवि पूर्वस्यां कर्ष्वां पिण्डे निदध्यात्पितुर्नाम गृहीत्वासावेतत्त आञ्जनं ये चात्र त्वानु याँश्च त्वमनु तस्मै ते स्वधेति १३ अप उपस्पृश्यैवमेवेतरयोः १४ तथा तैलम् १५ तथा सुरभि १६ अथ निह्नुते १७ पूर्वस्यां कर्ष्वां दक्षिणोत्तानौ पाणी कृत्वा नमो वः पितरो जीवाय नमो वः पितरः शूषायेति १८ मध्यमायां सव्योत्तानौ नमो वः पितरो घोराय नमो वः पितरो रसायेति १९ उत्तमायां दक्षिणोत्तानौ नमो वः पितरः स्वधायै नमो वः पितरो मन्यव इति २० अथाञ्जलिकृतो जपति नमो वः पितरः पितरो नमो व इति २१ गृहानवेक्षते गृहान्नः पितरो दत्तेति २२ पिण्डानवेक्षते सदो वः पितरो देष्मेति २३ सव्येनैव पाणिना सूत्रतन्तुं गृहीत्वावसलवि पूर्वस्यां कर्ष्वां पिण्डे निदध्यात्पितुर्नाम गृहीत्वासावेतत्ते वासो ये चात्र त्वानु याँश्च त्वमनु तस्मै ते स्वधेति २४ अप उपस्पृश्यैवमेवेतरयोः २५ सव्येनैव पाणिनोदपात्रं गृहीत्वावसलवि पिण्डान्परिषिञ्चेदूर्जं वहन्तीरिति २६ मध्यमं पिण्डं पत्नी पुत्रकामा प्राश्नीयादाधत्त पितरो गर्भमिति २७ यो वा तेषां ब्राह्मणानामुच्छिष्टभाक् स्यात् २८ अभून्नो दूतो हविषो जातवेदा इत्युल्मुकमद्भिरभ्युक्ष्य २९ द्वन्द्वं पात्राणि प्रक्षाल्य प्रत्यतिहारयेत् ३० अप्सु पिण्डान्सादयेत् ३१ प्रणीते वाग्नौ ३२ ब्राह्मणं वा भोजयेत् ३३ गवे वा दद्यात् ३४

वृद्धिपूर्तेषु युग्मानाशयेत् ३५ प्रदक्षिणमुपचारः ३६ यवैस्तिलार्थः ३७ ३

अन्वष्टक्यस्थालीपाकेन पिण्डपितृयज्ञो व्याख्यातः १ अमावास्यायां तच्छ्रा-
द्धम् २ इतरदन्वाहार्यम् ३ मासीनम् ४ दक्षिणाग्नौ हविषः संस्करणम् ५
ततश्चैवातिप्रणयः ६ शालाग्नावनाहिताग्नेः ७ एका कर्षूः ८ तस्या दक्षिण-
तोऽग्नेः स्थानम् ९ नात्रोल्मुकनिधानम् १० न स्वस्तरः ११ नाञ्जनाभ्यञ्जने
१२ न सुरभि १३ न निह्नवनम् १४ उदपात्रान्तः १५ वासस्तु निदध्यात्
१६ माघ्या ऊर्ध्वमष्टम्यां स्थालीपाकः १७ तस्य जुहुयात् १८ अष्टकायै
स्वाहेति जुहोति १९ स्थालीपाकावृतान्यत् २० शाकं व्यञ्जनमन्वाहार्ये २१
अथ पितृदैवत्येषु पशुषु वह वपां जातवेदः पितृभ्य इति वपां जुहुयात् २२
देवदेवत्येषु जातवेदो वपया गच्छ देवानिति २३ अनाज्ञातेषु तथादेशं
यथाष्टकायै स्वाहेति जुहोति २४ स्थालीपाकावृतान्यत् २५ ऋणे प्रज्ञायमाने
गोलकानां मध्यमपर्णेन जुहुयाद्यत्कुसीदमिति २६ अथातो हलाभियोगः
२७ पुण्ये नक्षत्रे स्थालीपाकं श्रपयित्वैताभ्यो देवताभ्यो जुहुयादिन्द्राय मरुद्भ्यः
पर्जन्यायाशन्यै भगाय २८ सीतामाशामरडामनघां च यजेत २९ एता एव
देवताः सीतायज्ञखलयज्ञप्रवपणप्रलवनपर्ययणेषु ३० आखुराजं चोत्करेषु
यजेत ३१ इन्द्राण्याः स्थालीपाकः ३२ तस्य जुहुयादेकाष्टका तपसा तप्य-
मानेति ३३ स्थालीपाकावृतान्यत्स्थालीपाकावृतान्यत् ३४ ४

काम्येष्वत ऊर्ध्वम् १ पूर्वेषु चैके २ पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्येदं
भूमेर्भजामह इति ३ वस्वन्तं रात्रौ धनमिति दिवा ४ इमं स्तोममिति तृचेन
परिसमूहेत् ५ वैरूपाक्षः पुरस्ताद्धोमानाम् ६ काम्येषु च प्रपदः ७ तपश्च
तेजश्चेति जपित्वा प्राणायाममायम्यार्थमना वैरूपाक्षमारभ्योच्छ्वसेत् ८
काम्येषु त्रिरात्राभोजनम् ९ त्रीणि वा भक्तानि १० नित्यप्रयुक्तानां तु प्रथम-
प्रयोगेषु ११ उपोष्य तु यजनीयप्रयोगेषु १२ उपरिष्टाद्दैक्षं सान्निपातिकम् १३
अरण्ये प्रपदं प्रयुञ्जीत दर्भेष्वासीनः १४ प्राक्तूलेषु ब्रह्मवर्चसकामः १५ उद-
क्तूलेषु पुत्रपशुकामः १६ उभयेषूभयकामः १७ पशुस्वस्त्ययनकामो व्रीहि-
यवहोमं प्रयुञ्जीत सहस्रबाहुर्गौपत्य इति १८ कौतोमतेन महावृक्षफलानि
परिजप्य प्रयच्छेत् १९ यस्यात्मनि प्रसादमिच्छेत्तस्मै २० एकभूयाँस्यात्मनो
युग्मानि कुर्यात् २१ वृक्ष इवेति पञ्चर्चः २२ तस्मिन्प्रथमं पार्थिवं कर्म २३

अर्धमासमभुक्त्वा २४ अशक्तौ वा पेयामन्यतरं कालम् २५ यत्रात्मानं परिपश्येत् २६ एतद्व्रतमर्धमासव्रतेषु २७ पौर्णमास्यां रात्राववविदासिनि ह्रदे नाभिमात्रमवगाह्याक्षततण्डुलानृगन्तेष्वास्येन जुहुयात्स्वाहेत्युदके २८ अथापरम् २९ प्रथमयादित्यमुपतिष्ठेत भोगकामोऽर्थपतिचक्षुर्विषये सिध्यत्यर्थः ३० द्वितीययादित्ये परिविष्यमाणेऽक्षततण्डुलाञ्जुहुयाद्बृहत्पत्त्रस्वस्त्ययनकामः ३१ तृतीयया चन्द्रमसि तिलतण्डुलान्क्षुद्रपशुस्वस्त्ययनकामः ३२ चतुर्थ्यादित्यमुपस्थायार्थान्प्रतिपद्येत स्वस्त्यर्थवानागच्छति ३३ पञ्चम्यादित्यमुपस्थाय गृहान्प्रपद्येत स्वस्ति गृहानागच्छति स्वस्ति गृहानागच्छति ३४
५

भूरित्यनकाममारं नित्यं प्रयुञ्जीत १ न पापरोगान्नाभिचरणाद्भयम् २ अलक्ष्मीनिर्णोदः ३ यजनीयप्रयोगः ४ मूर्ध्नोऽधि म इत्येकैकया ५ या तिरश्चीति सप्तमी ६ वामदेव्यर्चः ७ महाव्याहृतयः ८ प्रजापत इत्युत्तमा ९ यशोऽहं भवामीति यशस्काम आदित्यमुपतिष्ठेत पूर्वाह्णमध्यन्दिनापराह्णेषु १० प्रातरह्नस्येति सन्नामयन् ११ सन्धिवेलयोरुपस्थानं स्वस्त्ययनमादित्य नावमित्युद्यन्तं त्वादित्यानूदियासमिति पूर्वाह्णे प्रतितिष्ठन्तं त्वादित्यानुप्रतितिष्ठासमित्यपराह्णे १२ आचितशतकामोऽर्धमासव्रतस्तामिस्रादौ व्रीहिकाँसौदनं ब्राह्मणान्भोजयित्वा १३ तस्य कणानपरासु सन्धिवेलासु प्रत्यङ्ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमाधायादित्यमभिमुखो जुहुयाद्भलाय स्वाहा भल्लाय स्वाहेति १४ एतयैवावृतापरौ तामिस्रौ १५ तामिस्रान्तरेषु ब्रह्मचारी स्यादा समापनादा समापनात् १६ ६

अवसानं जोषयेत १ समं लोमशमविभ्रँशि २ प्राच्य उदीच्यो वा यत्रापः प्रवर्तेरन् ३ अक्षीरिण्योऽकण्टका अकटुका यत्रौषधयः स्युः ४ गौरपाँसु ब्राह्मणस्य ५ लोहितपाँसु क्षत्रियस्य ६ कृष्णपाँसु वैश्यस्य ७ स्थिराघातमेकवर्णमशुष्कमनूषरममरुपरिहितमकिलिनम् ८ दर्भसम्मितं ब्रह्मवर्चसकामस्य ९ बृहत्तृणैर्बलकामस्य १० मृदुतृणैः पशुकामस्य ११ शादासम्मितम् १२ मण्डलद्वीपसम्मितं वा १३ यत्र वा श्वभ्राः स्वयंखाताः सर्वतोऽभिमुखाः स्युः १४ तत्रावसानं प्राग्द्वारं यशस्कामो बलकामः कुर्वीत १५ उदग्द्वारं पुत्रपशुकामः १६ दक्षिणाद्वारं सर्वकामः १७ न प्रत्यग्द्वारं कुर्वीत १८

अनुद्वारं च १९ गृहद्वारम् २० यथा न संलोकी स्यात् २१ वर्जयेत्पूर्वतोऽश्वत्थं प्लक्षं दक्षिणतस्तथा न्यग्रोधमपराद्देशादुत्तराच्चाप्युदुम्बरम् २२ अश्वत्थादग्नि-भयं च प्लक्षाद्ब्रूयात्प्रमायुकान्न्यग्रोधाच्छस्त्रसंपीडामक्ष्यामयमुदुम्बरात् २३ आदित्यदेवतोऽश्वत्थः प्लक्षो च यमदेवतः न्यग्रोधो वारुणो वृक्षः प्राजापत्य उदुम्बरः २४ तानस्वस्थानस्थान्कुर्वीत २५ एताश्चैव देवता अभियजेत् २६ मध्येऽग्निमुपसमाधाय कृष्णया गवा यजेत २७ अजेन वा श्वेतेन २८ सपायसाभ्याम् २९ पायसेन वा ३० वसामाज्यं माँसं पायसमिति संयूय ३१ अष्टगृहीतं गृहीत्वा जुहुयात् ३२ वास्तोष्पत इति प्रथमा ३३ वामदेव्यर्चः ३४ महाव्याहृतयः ३५ प्रजापतय इत्युत्तमा ३६ हुत्वा दश बलीन्हरेत् ३७ प्रदक्षिणं प्रतिदिशम् ३८ अवान्तरदेशेषु ३९ आनुपूर्व्येणाव्य-तिहरन् ४० इन्द्रायेति पुरस्ताद्वायव इत्यवान्तरदेशे यमायेति दक्षिणतः पितृभ्य इत्य-वान्तरदेशे वरुणायेति पश्चान्महाराजायेत्यवान्तरदेशे सोमायेत्युत्तरतो महेन्द्रा-येत्यवान्तरदेशे वासुकय इत्यधस्तादूर्ध्वं नमो ब्रह्मण इति दिवि ४१ प्राच्यू-र्ध्वावाचीभ्योऽहरहर्नित्यप्रयोगः ४२ संवत्सरेसंवत्सरे नवयज्ञयोर्वा ४३ ७

श्रवणाग्रहायणीकर्मणोरक्षताञ् छिष्ट्वा १ प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य चतुष्प-थेऽग्निमुपसमाधाय हये राक इत्येकैकयाञ्जलिना जुहुयात् २ प्राङुत्क्रम्य व-सुवन एधीत्यूर्ध्वमुदीक्षमाणो देवजनेभ्यः ३ तिर्यङ्ङितरजनेभ्योऽर्वाङ्वे-क्षमाणः ४ अनपेक्षमाणः प्रत्येत्याक्षतान्प्राश्नीयादुपेतैरमात्यैः सह ५ स्व-स्त्ययनम् ६ वशंगमौ शङ्खश्चेति पृथगाहुती व्रीहियवहोमौ प्रयुञ्जीत ७ यस्यात्मनि प्रसादमिच्छेत्तस्मै ८ नित्यप्रयोगः ९ एकाक्षर्यायामर्धमासव्रते द्वे कर्मणी १० पौर्णमास्यां रात्रौ खदिरशङ्कुशतं जुहुयादायुष्कामः ११ आय-सान्वधकामः १२ अथापरम् १३ प्राङ् वोदङ्वा ग्रामान्निष्क्रम्य चतुष्पथे पर्वते वारण्यैर्गोमयैः स्थण्डिलं प्रताप्यापोह्याङ्गारान्मन्त्रं मनसानुद्रुत्य सर्पिरास्येन जुहुयात् १४ ज्वलन्त्यां द्वादश ग्रामाः १५ धूमे त्र्यवराध्र्याः १६ अमोघं कर्मेत्याचक्षते १७ वृत्त्यविच्छित्तिकामो हरितगोमयान्सा-यंप्रातर्जुहुयात् १८ त्रिरात्रोपोषितः पण्यहोमं जुहुयादिदमहमिमं विश्वकर्माण-मिति १९ वाससस्तन्तून् २० गोर्वालान् २१ एवमितरेभ्यः पण्येभ्यः २२ पूर्णहोमो यजनीयप्रयोगः २३ इन्द्रामवदादिति च २४ यशस्कामः पूर्वां सहायकाम उत्तराम् २५ ८

पुरुषाधिपत्यकामोऽष्टरात्रमभुक्त्वा १ औदुम्बरान्स्रुचमसेध्मानुपकल्पयित्वा २ प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमाधाय ३ आज्यमादित्य-मभिमुखो जुहुयादन्नं वा एकच्छन्दस्यं श्रीर्वा एषेति च ४ अन्नस्य घृतमेवेति ग्रामे तृतीयाम् ५ गोष्ठे पशुकामः ६ विदूयमाने चीवरम् ७ प्रतिभयेऽध्वनि वस्त्रदशानां ग्रन्थीन्बध्नीत ८ उपेत्य वसनवतः ९ स्वाहाकारान्ताभिः १० सहायानां च स्वस्त्ययनम् ११ आचितसहस्रकामोऽक्षतसक्त्वाहुतिसहस्रं जुहुयात् १२ पशुकामो वत्समिथुनयोः पुरीषाहुतिसहस्रं जुहुयात् १३ अवि-मिथुनयोः क्षुद्रपशुकामः १४ वृत्त्यविच्छित्तिकामः कम्बू-कान्सायंप्रात-र्जुहुयात्क्षुधे स्वाहा क्षुत्पिपासाभ्यां स्वाहेति १५ मा भैषीर्न मरिष्यसीति विषवता दष्टमद्भिरभ्युक्षञ्जपेत् १६ तुर गोपायेति स्नातकः संवे-शनवेलायां वैणवं दण्डमुपनिदधीत १७ स्वस्त्ययनार्थम् १८ हतस्ते अत्रिणा कृमिरिति कृमिमन्तं देशमद्भिरभ्युक्षञ्जपेत् १९ पशूनां चेच्चिकीर्षेदपराह्णे सी-तालोष्ट-माहृत्य वैहायसं निदध्यात् २० तस्य पूर्वाह्णे पाँसुभिः परिकिरञ्जपेत् २१ ९

उत्तरतो गां बद्ध्वोपतिष्ठेरन्नर्हणा पुत्र उवास सेति १ इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामीति प्रतितिष्ठमानो जपेत् २ यत्रैनमर्हयिष्यन्तः स्युः ३ यदा वार्हयेयुः ४ विष्टरपाद्यार्घ्याचमनीयमधुपर्कानेकैकशस्त्रिस्त्रिर्वेदयेरन् ५ या ओषधीरित्युदञ्चं विष्टरमास्तीर्याध्युपविशेत् ६ द्वौ चेत्पृथगृग्भ्याम् ७ पादयोरन्यम् ८ यतो देवीरित्यपः प्रेक्षेत ९ सव्यं पादमवनेनिज इति सव्यं पादं प्रक्षालयेद्दक्षिणं पादमवनेनिज इति दक्षिणं पादं प्रक्षालयेत् १० पूर्वमन्यमपरमन्यमित्युभौ शेषेण ११ अन्नस्य राष्ट्रिरसीत्यर्घ्यं प्रतिगृह्णीयात् १२ यशोऽसीत्याचमनीयमाचामेत् १३ यशसो यशोऽसीति मधुपर्कं प्रतिगृह्णीयात् १४ यशसो भक्षोऽसि महसो भक्षोऽसि श्रीर्भक्षोऽसि श्रियं मयि धेहीति त्रिः पिबेत् १५ तूष्णीं चतुर्थम् १६ भूय एवाभिपाय शेषं ब्राह्मणाय दद्यात् १७ आचान्तोदकाय गौरिति नापितस्त्रिर्ब्रूयात् १८ मुञ्च गां वरुणपाशाद्द्विषन्तं मेऽभिधेहीति तं जह्यमुष्य चोभयोरुत्सृज गामत्तु तृणानि पिबतूदकमिति ब्रूयात् १९ माता रुद्राणामित्यनुमन्त्रयेत २० अन्यत्र यज्ञात् २१ कुरुतेत्यधियज्ञम् २२ षड् अर्घ्यार्हा भवन्ति २३ आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति २४ परिसंवत्सरानर्हयेयुः २५ पुनर्यज्ञविवाहयोश्च पुनर्यज्ञ-विवाहयोश्च २६ १०

इति चतुर्थः प्रपाठकः

इति सामवेदस्य गोभिलीयगृह्यसूत्रं समाप्तम्

Credits
Source: *Gobhila-GṛhyaSūtra*, F. Knauer, Dorpat 1884.
Typescript: Entered and corrected by Carlos Jordan Colera
Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection

# आग्निवेश्यगृह्यसूत्रम्

प्रथमः प्रश्नः

उपनयनं व्याख्यास्यामः सप्तमे वर्षे ब्राह्मणमुपनयीतैकादशवर्षे राजन्यं द्वादशे वर्षे वैश्यम् । वसन्ते ब्राह्मणं ग्रीष्मे राजन्यं शरदि वैश्यम् । आपूर्यमाणपक्षे पुण्ये नक्षत्रे विशेषेण पुंनामधेये युग्मान् ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा अशितस्य कुमारस्य केशान् वापयित्वा स्नातयलङ्कृतमहतं वासः परिधाप्य प्राचीनप्रवण उदीचीनप्रवने प्रागुदक्प्रवणे समे वा देशे उद्धत्यावोक्ष्य सिकताभिः स्थण्डिलं कृत्वोल्लिख्याग्निं मथित्वा लौकिकं वाहृत्य निधाप्योपसमादधाति । प्रागग्रैर्दर्भैः परिस्तृणात्यपिवोदग-ग्राः पश्चात् पुरस्ताच्च भवन्ति । दक्षिणानुत्तरान् करोत्युत्तरानधरान् यदि प्रागुद-गग्राः । दक्षिणेनाग्निं ब्रह्मायतने दर्भान् सँस्तीर्य मयि गृह्णामि यो नो अग्निः इति द्वाभ्यामात्मानमग्निं गृहीत्वोत्तरेणाग्निं दर्भान् सँस्तीर्याथास्य द्रव्याणि प्रयुनक्ति । अश्मानमहतं वासोऽजिनं मौञ्जीमेखलां त्रिवृतां ब्राह्मणस्य ज्यां राजन्यस्य आविकं वैश्यस्य बैल्वं पालाशं वा दण्डं ब्राह्मणस्य नैयग्रोधं राजन्यस्यौदुम्बरं वैश्यस्यैकविंशतिदारुमिध्ममस्येत्याहुतिपरिमाणं वा । एतस्मिन् शम्याः परिधीनिध्म उपसन्नह्यति । दर्वीं कूर्चमाज्यस्थालीं प्रणी-ताप्रणयं येन चान्यानि प्रोक्ष्यते तच्च सकृदेवसर्वाणि यथोपपदं वा एतस्मिन् काले ब्रह्मा यज्ञोपवीतं कृत्वाप आचम्यापरेणाग्निं दक्षिणातिक्रम्य ब्रह्मासनात् तृणं निरस्याप उपस्पृश्याग्निमभिमुखमुपविशति । समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रे पवित्रे कृत्वा अन्येन नखाच्छित्त्वाद्भिरनुमृज्य पवित्रान्तर्हिते पात्रेऽप आनीयोपबिलं पूरयित्वा उदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूयोत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैरपिदधाति । तिरःपवित्रं प्रोक्षणीः संस्कृत्य यथा पुरस्ताद् बिलवन्त्युत्तानानि कृत्वा विषायेध्मं त्रिः सर्वाभिः प्रोक्षति । दर्वीं निष्टप्य सम्मृज्य पुनर्निष्टप्य निदधाति । समाग्रानभ्युक्ष्याग्नावादधाति । आज्यं विलाप्य पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्योदीचोऽङ्गारान्निरूह्य तेष्वधिश्रित्य अवद्योत्य दर्भतृणाभ्यां प्रत्यस्य त्रिः पर्यग्नि कृत्वा उदगुद्वा-स्याङ्गारान् प्रत्यूह्य उदगग्राभ्यां पवित्राभ्यां पुनराहार माज्यं त्रिरुत्पूय पवित्रे अग्नावादधाति । शम्याभिः परिधिभिः परिदधात्यपरेणाग्निजुदीचीनकुम्भां

मध्यमां निदधाति । दक्षीणेनाग्निं संस्पृष्ट्वा मध्यमया प्राचीनकुम्बाम् उत्तरेणा-ग्निं संस्पृष्ट्वा मध्यमया प्राचीनकुम्बाम् अपरेणाग्निं प्राङ्मुख उपविशति । दक्षिणतो यज्ञोपवीत्याचान्तः कुमार उपविश्यान्वारभते । अथ परिषिञ्चति । अदितेऽनुमन्यस्व इति दक्षिणतः प्राचीनम् अनुमतेऽनुमन्यस्व इति पश्चा-दुदीचीनं सरस्वतेऽनुयन्यस्व इति उत्तरतः प्राचीनं देव सवितः प्रसुव इति सर्वतः प्रदक्षिणं परिषिच्येध्यमाज्येनाभ्यज्याभ्यादधाति । अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान् प्रजया पशुभिः ब्रह्मवर्चसे-नान्नाद्येन समेधय स्वाहा इति अथ दर्व्या जुहोति । उत्तरं परिधिसन्धिम-न्ववहृत्य प्रजापतये यनसे स्वाहा इति मनसा ध्यायन् दक्षिणाप्राञ्चमुदञ्चमृजुं सन्ततं जुहोति । दक्षिणं परिधिसन्धिमन्ववहृत्य इन्द्राय स्वाहा इति प्राञ्च-मुदञ्चमृजुम् आघारावाघार्याज्यभागौ जुहोति । अग्नये स्वाहा इत्युत्तरार्धपूर्वार्धे । सोमाय स्वाहा इति दक्षिणार्धपूर्वार्धे । तावन्तरेणेतराहुतीर्जुहोति । युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम् । त्वं भिषग् भेषज-स्यासि कर्ता त्वया गा अश्वान् पुरुषान् सनेमि स्वाहा । या तिरश्ची निपद्यसेऽहं विधरणी इति । तां त्वा घृतस्य धारयाग्नौ सँराधन्यै यजे स्वाहा । संराधन्यै देव्यै स्वाहा । प्रसाधन्यै देव्यै स्वाहा । भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । भूर्भुवःस्वः स्वाहा इति । सर्वदर्वीहोमानामेष कल्पः १ मन्त्रान्ते नित्यः स्वाहाकारोऽमन्त्रास्वमुष्मै स्वाहेति । यथादैवतम् भूर्भुव-स्स्वरिति व्याहृतिभिर्जुहोत्येकैकशः समस्ताभिश्च । आयुर्दा अग्न इत्येषः । आयुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमं स्वाहा इति । इमं मे वरुण तत्त्वायामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयास्ययासन्मनसा हितः अयासन् हव्यमूहिषे अयानो धेहि भेषजं स्वाहा । प्रजापतय इत्येषा । यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत् स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुते सर्वहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे स्वाहा । इत्युत्तरार्धपूर्वार्धेऽसंसक्तामितराभिराहुतिभिर्जुहोति । अत्रैके जया-भ्यातानान् राष्ट्रभृत इत्युयजुह्वति पुरस्तात् स्विष्टकृतः । चित्तं च स्वाहा चित्तिश्च स्वाहा । इति जयाञ्जुहोति । चित्ताय स्वाहा । चित्तये स्वाहा इति वा । अग्निर्भूतानामधिपतिस्स मावतु इत्यभ्यातानान् । अस्मिन् ब्रह्मन्नस्मिन् क्षत्र इत्यभ्यातानेष्वनु-युञ्जति । पितरः पितामहाः परेऽवरे इति

प्राचीनावीती जुहोत्युपतिष्ठति । ऋताषाड् ऋतधामा इति राष्ट्रभृतः । पर्याय-मनुद्रुत्य तस्मै स्वाहा इति पूर्वामाहुतीं जुहोति । ताभ्यस्स्वाहा इत्युत्तराम् । अग्रेणोत्तरं परिधिसन्धिमश्मानं निधाय दक्षिणेन पादेन कुमारमास्थापयति आतिष्ठेममश्मानमश्मेव त्वँ स्थिरो भव । प्रमृणीहि दुरस्यून् सहस्व पृतनायतः । इत्येतेन । अहतं वासः परिधापयति पूर्वं निधाय या अकृन्तन्नवयन् या अतन्वत याश्च देवीरन्तानभितोऽददन्त । तास्त्वा देवीर्जरसे संव्ययन्त्वा-युष्मानिदं परिधत्स्व वासः । परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः । बृहस्पतिः प्रायच्छद्वास एतत् सोमाय राज्ञे परिधातवा उ । जरां गच्छासि परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा । शतं च जीव शरदः सुवर्चा रायश्च पोषमुपसंव्ययस्व इति । परिधाप्याभिमन्त्रयते परीदं वासो अधिता स्वस्तयेऽभूरापीनामभिशस्तिपावा । शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन् ॥ इत्येनं मेखलया त्रिः प्रदक्षिणं परिदधाति । द्विरित्येके । या दुरितात् परिबाधमाना शर्म वरूथं पुनती न आगात् । प्राणापानाभ्यां बलमावहन्ती स्वसा देवानां सुभगा मेखलेयम् । इत्युत्तरतो नाभेस्त्रिवृतं ग्रन्थिं कृत्वा दक्षिणतो नाभेः परिकर्षति । अथास्मा अजिनमुत्तरीयं करोति । मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम् । अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधत्स्व । असावदितिस्ते कक्ष्यां वध्नातु वेदस्यानुवक्तवै मेधायै श्रद्धाया अनूक्तस्यानिराकरणाय ब्रह्मणे ब्रह्मवर्चसाय इति । कृष्णाजिनं ब्राह्मणस्य रौरवं राजन्यस्य वस्ताजिनं वैश्यस्य । अथैनं परिददाति । परीयमिन्द्रं ब्रह्मणे महे श्रोत्राय दध्यसि । यथैनं जरिमाणे यो ज्योक् श्रोत्रे अधिजागरत् । इति ब्राह्मणम् । परीममिन्द्रं ब्रह्मणे महे राष्ट्राय दध्मसि । यथैनं जरिमाणे यो ज्योग्राष्ट्रे अधिजागरत् । इति राजन्यम् । परीममिन्द्रं ब्रह्मणे महे पोषाय दध्मसि । यथैनं जरिमाणे यो ज्योक् पोषे अधिजागरत् । इति वैश्यम् अप्रेणाग्निमुदञ्चम् उपवेश्याहुतोच्छेषं प्राशयति । त्वयि मेधां त्वयि प्रजां त्वय्यग्निस्तेजो दधातु । इत्येतैः सन्नद्धैः । पृषदाज्यमेके प्राशयति । योगे योगे तवस्तरम् । इममग्न आयुषे वर्चसे कृधि इति प्राश्नन्तं समीक्षते । प्राशयत्येके । आचान्तमुपस्पर्शयि-त्वाभिमन्त्रयते शतमिन्नु शरदो अन्ति देवा यत्रानश्चक्रा जरसम् तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः । इति २ आगम्त्रा समगन्महि प्रसुमृत्युं युयोतन । अरिष्टास्सञ्चरेमहि स्वस्ति चरतादिह स्वस्त्या

गृहेभ्यः इति प्रदक्षिनमग्निम् परिक्रामन्तमभिमन्त्रयते । अथैनमभिव्याहारयति ब्रह्मचर्यमागाम् उप मा नयस्व । ब्रह्मचारी भवानि देवेन सवित्रा प्रसूतः इति । तं पृच्छति । को नामासि इति । असौ इत्याचष्टे यथानामा भवति । स्वस्ति देव सवितरहं येनामुना ऋचमधीय इति नाम निगृह्णाति । शन्नो देवीरभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः इत्यद्भिर्मार्जयते ३ अथास्य दक्षिणेन हस्तेन दक्षिणमंसमन्वारभ्य सव्येन सव्यं व्याहृतिभिः सावित्र्येति दक्षिणं बाहुमध्यास्य ऩुपनयते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पुष्णो हस्ताभ्यामुपनयेऽसौ इति च । अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति । अग्निस्ते हस्तमग्रहीत् । सोमस्ते हस्तमग्रहीत् । सविता ते हस्तमग्रहीत् । सरस्वती ते हस्तमग्रहीत् । पूषा ते हस्तमग्रहीत् । बृहस्पतिस्ते हस्तमग्रहीत् । मित्रस्ते हस्तमग्रहीत् । वरुणस्ते हस्तमग्रहीत् । त्वष्टा ते हस्तमग्रहीत् । धाता ते हस्तमग्रहीत् । विष्णुस्ते हस्तमग्रहीत् । प्रजापतिस्ते हस्तमग्रहित् । इति मन्त्रैर्दक्षिणेन हस्तेन कुमारस्य दक्षिणं हस्तं साङ्गुष्ठं प्रतिमन्त्रं गृह्णाति । सविता त्वाभिरक्षतु । मित्रस्त्वमसि शर्मणा । अग्निराचार्यस्तव । देवेन सवित्रा प्रसूतो बृहस्पतेर्ब्रह्मचारी भवासौ । अपोऽशान सपिध आधेहि कर्म कुरु मा दिवा स्वाप्सीः इत्येनं संशास्ति ॥ अथास्य दक्षिणेन हस्तेन दक्षिणमंसमुपर्युपरि अन्ववमृश्य हृदयदेशमभिमृशति मम हृदयं हृदयं ते अस्तु । मम चित्तं चित्तेनान्वेहि । मम वाचमेकमना जुषस्व । बृहस्पतिस्त्वा नियुनक्तु मह्यं मामेवानुसंगृहस्व । मयि चित्तानि सन्तु ते । मयि सामीच्यमस्तु ते । मह्यं वाचं नियच्छतात् । इति । प्राणानां ग्रन्थिरसि । स मा विस्रस इति नाभिदेशम् । भूर्भुवःस्वःसुप्रजाः प्रजया भूयासम् । सुवीरो वीरैः सुवर्चा वर्चसा सुपोषा पोषैः सुमेधाः मेधया सुब्रह्मा ब्रह्मचारिभिः । इत्येनमभिमन्त्र्य भूर्ऋक्षु त्वा अग्नौ पृथिव्यां वाचि ब्रह्मणि ददेऽसौ । भुवो यजुष्षु त्वा वायावन्तरिक्षे प्राणे ब्रह्मणि ददेऽसौ । स्वस्सामसु त्वा सूर्ये दिवि चक्षुषि ब्रह्मणि ददेऽसौ । विष्णुतस्ते प्रियोऽसान्यसौ । अनलस्य ते प्रियोऽसान्यसौ । इदं वत्स्यावः । प्राण आयुषि वत्स्यावः । प्राण आयुषि वसासौ इति च । अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति अग्निरायुष्मान् इति पञ्चभिः पर्यायैः । आयुष्टे विश्वतोदधाद् इति दक्षिणे कर्णे जपित्वा । आयुर्दा अग्न इत्युत्तरे । अग्नौ पृथिव्यां प्रतितिष्ठ वायावन्तरिक्षे सूर्ये दिवि याँ स्वस्तिमग्निर्वायु-

रादित्यश्चन्द्रमा आपोऽनुसञ्चरन्ति तां स्वस्तिमनुसञ्चरासौ प्राणस्य ब्रह्मचार्य-भूरसौ इत्युभयत्रानुषजति ।

मेधां म इन्द्रो दधातु मेधां देवी सरस्वती
मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजौ

इति तस्य मुखेन मुखं सन्निधाय जपति । अथैनं परिददाति कशकाय त्वा परिददामि । अन्तकाय त्वा परिददामि । अघोराय त्वा परिददामि । यमाय त्वा परिददामि । गदाय त्वा परिददामि । मखाय त्वा परिददामि । वशिन्यै त्वा परिददामि । पृथिव्यै त्वा सवैश्वानरायै परिददामि । अद्भ्यस्त्वा परिददामि । ओषधीभ्यस्त्वा परिददामि । वनस्पतिभ्यस्त्वा परिददामि । विश्वेभ्यस्त्वा भूतेभ्यः परिददामि । सर्वेभ्यस्त्वा देवेभ्यः परिददामि । सर्वाभ्यस्त्वा देवताभ्यः परिददामि । अत्र सावित्रीं वाचयति यदि पुरस्तादुपेतो भवति । यद्यनुपेतस्त्र्यहे पर्यपेते । सद्यः पुष्करसादिः । अप्रेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन् प्राङ्मुख उपविशति राष्ट्रभृदस्या-चार्यासन्दी मा त्वद्योषम् इति । आदित्यायाञ्जलिं कृत्वा आचार्यम् उपसंगृह्य दक्षिणतः कुमार उपविश्य अधीहि भोः इत्युक्त्वा । अथासौ सावित्रीं भो अनुब्रूहि इति । गणानां त्वा गणपतिँ हवामह इत्येनमभिमन्त्र्य अथास्मै पच्छोऽग्रेऽन्वाहाथार्धर्चशोऽथ सन्तताम् । भूः तत् सवितुर्वरेण्यम् । भुवः भर्गो देवस्य धीमहि । स्वः धियो यो नः प्रचोदयात् । भूर्भुवः तत् सवि-तुर्वरेण्यं भर्गो देवस्य धीमहि । स्वः धियो यो नः प्रचोदयात् । भूर्भुवः स्वः तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् इति ३ अथ सप्त पालाशीः समिध आर्द्रा अप्रच्छिन्नाग्राः प्रादेशमात्रा घृताक्ता अभ्याधापयति । अग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिध्यस एवं मां मेधया प्रज्ञया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा इत्येकाम् । अग्नये समिधौ इति द्वे । अग्नये समिध इति चतस्रः । अथ परिषिञ्चति यथा पुरस्ताद् अन्वमंस्थाः मासावीः इति मन्त्रान्तान् सन्नमयति । अथ देवता उपतिष्ठते अग्ने व्रतपते व्रतं चरिष्यामि इत्यग्निं वायो व्रतपत इति वायुम् आदित्य व्रतपत इत्यादित्यं व्रतानां व्रतपत इति व्रतपतिम् । अत्र गुरवे वरं ददाति । उदायुषा इत्युत्थाप्य सूर्यैष ते पुत्रस्तं ते परिददामि

इति परिदाय तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदश्शतम् । जीवेम शरदश्शतम् । नन्दाम शरदश्शतम् । मोदाम शरदश्शतम् । भवाम शरदश्शतम् । शृणवाम शरदश्शतम् । प्रब्रवाम शरदश्शतम् । अजीताः स्याम शरदश्शतम् । ज्योक् च सूर्यं दृशे इत्यादित्यमुपतिष्ठते । अग्निष्ट आयुः प्रतरां कृणोतु । अग्निष्टे पुष्टिं प्रतरां दधातु । इन्द्रो मरुद्भिरिह ते ददातु । आदित्यस्ते वसुभिरादधातु । इति दण्डं प्रदायामत्रं प्रयच्छति । अथाह भिक्षाचर्यं चर इति । स मातरमेवाग्रे भिक्षेत । अतोऽन्येषु रातिकुलेष्वाहृत्य भैक्षमिति प्राह । यस्य ते प्रथमवास्यं हरामस्तं त्वा विश्वे अवन्तु देवाः । तं त्वा भ्रातरः सुवृधो वर्धमानमनुजायन्तां बहवस्सुजातम् इति प्रथमवास्यमस्यादत्ते । उपस्थितेऽन्न ओदनस्यापूपानां सक्तूनां समवदाय सर्पिर्मिश्रस्य जुहोति । अग्नये स्वाहा । सोमाय स्वाहा । अग्नयेऽन्नादाय स्वाहा । अग्नयेऽन्नपतये स्वाहा । प्रजापतये स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा । सर्वाभ्यो देवताभ्यः स्वाहा । अग्नये स्विष्टकृते स्वाहा इति । सर्वत्रैवमनादिष्टदेवतममुष्मै स्वाहा अमुष्मै स्वाहेति । यथादैवतमादिष्ट-दैवतम् । एतेषामेवासां समवदाय प्रागग्रेषु दर्भेषु बलिं करोति वास्तुपतये स्वाहा इति । त्रिवृता अन्नेन ब्राह्मणान् परिविष्य पुण्याहं स्वस्त्ययनमृद्धिं वाचयित्वा त्र्यहव्रतं चरत्यक्षारलवणमशमीधान्यं भुञ्जानः अधश्शायी अमृण्मयपायी अशूद्रोच्छिष्टमधुमांसाशी अदिवास्वापी उभौ कालौ भिक्षा-चर्यमुदकुम्भमित्याहरन्नहरहः काष्ठकलाम् । उभौ कालौ सायं सायं वा समिधोऽभ्यादधाति । यथाह तद्वसवो गौर्यम् इति प्रदक्षिणमग्निं परिमृज्य परिषिञ्चति । यथा पुरस्ताद्व्याहृतीभिः समिधोऽभ्यादधागि एकैकशः सम-स्ताभिश्च । एषा ते अग्न समित्तया वर्धस्व चाप्यायस्व वर्धिषिमहि च वयमा च प्यासिषीमहि स्वाहा । मेधां म इन्द्रो दधातु मेधां देवी सरस्वती । मेधां मे अश्विनावुधावाधत्तां पुष्करस्रजौ स्वाहा । अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः । दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषतां स्वाहा । आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या । ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषन्तां स्वाहा इति । तथैव परिमृज्य परिषिञ्चति यथा पुरस्तात् । यत्ते अग्ने तेज इत्येतैः मन्त्रैः उपतिष्ठते मयि मेधां मयि प्रजाम् इति च । त्र्यहे पर्यपेते तथैव त्रिवृतान्नेन ब्राह्मणान् परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा व्रतं विसृजते अग्ने व्रतपते

व्रतमचारिषम् इत्येतैर्मन्त्रैः । एतद् व्रतमेवात ऊर्ध्वम् आचार्यकुलवास्य श्नात्यक्षारलवणमशमीधान्यमिति । दण्डी जटी मेखली शिखाजटो वा स्यात् । काषायमजिनं वा वस्ते न स्त्रियमुपैत्यष्टाचत्वारिंशद्वर्षाणि द्वादश यावद्ग्रहणं वा न त्वेवाव्रतः स्यात् । काण्डोपाकरणे काण्डविसर्गे च सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषं स्वाहा इति काण्डर्षिद्वितीयम् इमं मे वरुण तत्त्वायामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि प्रजापते यदस्य कर्मणोऽत्यरीरिचम् इति च । अथैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् ४ उपनयनं मन्त्रान्त आगन्त्रासमगन्महि अयसप्त चत्वारि

इत्याग्निवेश्यगृह्यसूत्रे प्रथमप्रश्ने प्रथमोऽध्यायः

## द्वितीयोऽध्यायः

श्रवणापक्षस्य ओषधीषु जातासु हस्तेन पौर्णमास्यां वाध्यायोपाकर्म । अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा पञ्च काण्डऋषीन् जुहोति प्रजापतये काण्डऋषये स्वाहा । सोमाय काण्डऋषये स्वाहा । अग्नये काण्डऋषये स्वाहा । विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा । स्वयम्भुवे काण्डऋषये स्वाहा इति । काण्डनामानि वा सावित्रीमृग्वेदं यजुर्वेदं सामवेदम् अथर्ववेदं सदसस्पतिमिति हुत्वा त्र्यहमेकाहं वा क्षम्य यथाध्यायमध्येतव्यमिति वदन्ति । अथातः काण्डान्युच्यन्ते पौरोडाशिकं याजमानं होतारं हौत्रं पितृमेधमिति सब्राह्मणानि सानुब्राह्मणानि प्राजापत्यानि । आध्वर्यवं ग्रहदाक्षिणानि समिष्टयजूंषि अवभृथयजूंषि वाजपेयश्शुक्रियाणि सवा इति सब्राह्मणानि सानुब्राह्मणानि सौम्यानि । आग्न्याधेयं पुनराधेयम् अग्निहोत्रमग्न्युपस्थानं सावित्रं नाचिकेतं चातुर्होत्रीयं वैश्वसृजमारुणकेतुकमाग्निकमिति सब्राह्मणानि सानुब्राह्मणान्याग्नेयानि । राजसूयं पशुबन्धा इष्टयो नक्षत्रेष्टयो वा दिवश्श्येनयोऽपाघाः सात्रायण उपहोमाः सूक्तान्यौपानुवाक्यायाज्याश्वमेधपुरुषमेधसौत्रामण्यच्छिद्राणि पशुहौत्रम् उपनिषद इति सब्राह्मणानि सानुब्राह्मणानि वैश्वदेवानि । स्वायंभुवं स्वाङ्काङ्के पठितो विधिरिति स्वयंभूश्चात्र दैवतं सर्वभूतपतिरिति । अथ कारीरिव्रतं चतूरात्रमक्षारलवणमशमीधान्यं भूमौ भुञ्जीत पशुवदिति । अथ कारीरिर्णां मारुतं देवा वसव्या अग्ने मारुतमिति देवाश्शर्मण्या इत्याद्यौषध्यनुवाकमधीयानो नात्र भुञ्जीत पशुवदिति । अथ

कारीराव्रतम् युञ्जानः प्रथममारभ्य ओषध्यनुवाकं प्रथममधीयानो नात्र भूमौ भुञ्जीत पशुवदिति यदि वा क्रममधीयानः १ तैषीपक्षस्य रोहिण्यां पौर्णमास्यां वोत्सर्गः । सगणाः प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य यत्रापः सुखाः सुखावगाहास्तदवगाह्याघमर्षणेन त्रीन् प्राणायामान् धारयित्वा सपवित्रैः पाणिभिः आपो हि ष्ठा मयोभुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन मार्जयन्ते । स्नात्वा दर्भानन्योन्यस्मै सम्प्रयच्छन्तो दित्सन्त इवान्योन्यम् । ततः शुचौ समे देशे प्राचीनप्रवणे प्रागग्रैर्दर्भैरुदगपवर्गाण्यासनानि कल्पयन्ति । ब्रह्मणे प्रजापतयेऽग्नये वायवे सोमाय सूर्याय चन्द्रमसे नक्षत्रेभ्य इन्द्राय राज्ञे यमाय राज्ञे वरुणाय राज्ञे सोमाय राज्ञे वैश्रवणाय राज्ञे वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः साध्येभ्यो ऋभुभ्यो भृगुभ्यो मरुद्भ्योऽथर्वभ्योऽङ्गिरोभ्य इति देवगणानाम् । विश्वामित्रो जमदग्निर्भरद्वाजो गौतमोऽत्रिर्वसिष्ठः काश्यप इत्येते सप्त ऋषयः । निवीतिन उत्तरत उदीचीनप्रवण उदगग्रैर्दर्भैः प्रागपवर्गाण्यासनानि कल्पयन्ति विश्वामित्राय जमदग्नये भरद्वाजाय गौतमायात्रये वसिष्ठाय काश्यपाय । वसिष्ठकाश्यपयोरन्तराळे अरुन्धत्यै कल्पयन्ति । दक्षिणत एकवेद्यन्ते अगस्त्याय कल्पयन्ति । उत्तरतः कृष्णद्वैपायनाय जतुकर्णाय तरुक्षाय तृणविन्दवे वर्मिणे वरूथिने वाजिने श्रवसे सत्रश्रवसे सुश्रवसे स्तुतश्रवसे सोमशुष्मायणाय सनत्वानाय बृहदुक्थाय वामदेवाय वाजराज्ञाय हरितराज्ञाय उदमायाय गौतमाय ऋणंजयाय ऋतंजयाय कृतंजयाय धनंजयाय सत्यंजयाय वभ्रवे त्रिवर्णाय त्रिवर्षाय त्रिधातवे पराशराय विष्णवे रुद्राय स्कन्दाय काशीश्वराय जराय धर्माय अर्थाय कामाय क्रोधाय वसिष्ठाय इन्द्राय त्वष्ट्रे कर्त्रे धर्त्रे धात्रे विधात्रे मृत्यवे सवित्रे सावित्र्यै ऋग्वेदाय यजुर्वेदाय सामवेदायाथर्ववेदायेतिहासपुराणेभ्य इति । दक्षिणतः प्राचीनावीतिनो दक्षिणाप्रवणे दक्षिणाग्रैर्दर्भैः प्रत्यगपवर्गाण्यासनानि कल्पयन्ति । वैशम्पायनाय फलिङ्गवे तित्तिरायोख्याय आत्रेयाय पदकाराय कौण्डिन्याय वृत्तिकाराय सूत्रकारेभ्यः सत्याषाढाय प्रवचनकर्तृभ्य आचार्येभ्यो ऋषिभ्यो वानप्रस्थेभ्य ऊर्ध्वरेतोभ्य एकपत्नीभ्य इति । स्वं स्वं पितृभ्यः पितामहेभ्यः मातृभ्यः पितामहीभ्यः प्रपितामहीभ्यः मातामहेभ्यो मातुः पितामहेभ्यो मातुः प्रपितामहेभ्यो मातामहीभ्यो मातुः पितामहीभ्यो मातुः प्रपितामहीभ्यः कल्पयाम्यमुं कल्पयाम्यमुं कल्पयामीत्यासनेन अमुं तर्पयामि अमुं तर्पयामीत्युदकेन अमुष्मै नमोऽमुष्मै

नम इति गन्धपुष्पधूपदीपैः अमुष्मै स्वाहा अमुष्मै स्वाहेत्यन्नेन अमुं तर्पयाम्यमुं तर्पयाम्यमुं तर्पयामीति फलोदकेनामुष्मै नमोऽमुष्मै नमोऽमुष्मै नम इत्युपस्थायापरेण वेदिं स्थण्डिलं कल्पयित्वाग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा पञ्च काण्डऋृषीन् जुहोति । काण्डनामानि वा सावित्रीमृग्वेदं यजुर्वेदं सामवेदमथर्ववेदं सदसस्पतिमिति हुत्वा प्रथमोत्तमानुवाकावधीते काण्डादीन् वा सर्वान् । जयादि प्रतिपद्यते । स्विष्टकृदन्तं हुत्वा त्र्यहमेकाहं वा क्षम्य यथाध्यायमध्येतव्यमिति वदन्ति । काण्डात्काण्डात् प्ररोहन्ती इति द्वाभ्याम् उदकान्ते दूर्वी रोपयेत् । उदधिमूर्मिमन्तं कृत्वा प्राचीमुदीचीं वा दिशम् आतमितोराजिं धावन्ति । प्रत्येत्यापूपैः सक्तुभिरोदनेन ब्राह्मणांश्च तर्पयन्ति । एवं पारायणसमाप्तौ काण्डादिदूर्वारोपणान्तमुदधिधावनवर्जं नित्यमेवाद्भिर्देवानृषीन् पितृंश्च तर्पयन्ति तर्पयन्ति २ अथातोऽवान्तरदीक्षां व्याख्यास्यामः । उदगयनापूर्यमाणपक्षे पुण्ये नक्षत्रे केशान् वापयित्वा स्नात्वाशित्वा अग्निमौदुम्बरीश्चतस्रः समिधोऽहतं वासो दर्भानाज्यं च उदकुम्भमित्येतान् समादाय बहिर्ग्रामाद् उत्तरां दिशमुपनिष्क्रम्याछदिर्दर्शेऽग्निमुपसमाधाय परिस्तीर्य मदन्तीरधिश्रित्य पूर्वां शान्तिं कुत्वाथ परिषिच्याभ्यज्य समिधोऽभ्यादधाति पृथिवी समित् इत्येताभिश्चतसृभिः । अथ परिषिच्य अग्ने व्रतपते शुक्रियेभ्यो व्रतं चरिष्यामि इति देवता उपस्थाप्याहतेन वाससा शिरः समुखमभिवेष्टयति चितः स्थ परिचितः परित्वा गिर्वणो गिर इमा भवन्तु विश्वतः । वृद्धायुमनुवृद्धयो जुष्टा भवन्तु जुष्टयः । इन्द्रस्य स्यूरसि इन्द्रस्य ध्रुवमसि ऐन्द्रमसि इन्द्राय त्वा इत्युत्तरां शान्तिं कृत्वा वाचो यम्य ग्रामं प्रविशति । तिष्ठन्नासीनो वा जागरणम् । अथ श्वोभूते एतामेव दिशमुपनिष्क्रम्याछदिर्दर्शेऽग्निमुपसमाधाय परिस्तीर्य मदन्तीरधिश्रित्य पूर्वां शान्तिं कृत्वा वयः सुपर्णा इति विसृज्य वास आदित्यमुपतिष्ठते उदूयं तमसस्परि उदुत्यं चित्रं तच्चक्षुर्देवहितं य उदगाद् इति । एताननुवीक्षयन्त्यग्निमादित्यमश्मानमुदकुम्भं हिरण्यं गां भूमिमिति । उत्तरां शान्तिं कृत्वा संवत्सरं व्रतं चरति द्वादशरात्रमेकाहं वा । अष्टम्यां पर्वणि कालस्नानम् । अथ यद्यमेध्यं पश्येद् अबद्धं मनो दरिद्रम् इति अथ यद्यभिवर्षेयुः उन्दतीर्बलं धत्त इति जपति । अधश्शय्या गुरुशुश्रूषा । शुक्रियाण्यधीयीत । एतामेव दिशमुपनिष्क्रम्याछदिर्दर्शेऽग्निमुपसमाधाय परिस्तीर्य मदन्तीरधिश्रित्य पूर्वो शान्तिं कृत्वा द्यौः समिद् इत्येताभिश्चतसृभिः औदुम्बरीः समिध आधायाथ

परिषिच्य आदित्य व्रतपते शुक्रियेभ्यो व्रतमचारिषम् इत्येताभिर्देवता उपस्थाय गुरवे गां ददाति । उत्तरां शान्तिं कृत्वा व्रतसमाप्तो भवति ३ श्रवणापक्षस्य तैषीपक्षस्य अथातोऽवान्तरदीक्षा त्रीणि

इत्याग्निवेश्यगृह्यसूत्रे प्रथमप्रश्ने द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

वेदमधीत्य स्नास्यन्नुपकल्पयते एरकां चोपबर्हणं च नापितं च क्षुरं च पालाशीं च समिधं दारूणि चोपस्तरणं वृकलांश्च दन्तधावनं च शीताश्चोष्णाश्चापः सर्वसुरभिपिष्टं चन्दनं चाहतं वासः सान्तरं च प्रावारं वादरमणिं स्वर्णोपहितं सूत्रम् च प्रवर्तौ चाज्यं च दर्वी च मालां चादर्शं चाञ्जनं च दण्डं च छत्रं चोपानहौ चानडुहं चर्म सर्वलोहितमित्येतेऽस्य सम्भारा उपक्लृप्ता भवन्ति । स्नानस्य मीमांसा । रोहिण्यां स्नायादित्येकम् । प्राजापत्यं वा एतन्नक्षत्रं तदस्य प्राजापत्ये एव नक्षत्रे स्नातं भवति अथो सर्वान् रोहान् रोहति इति । तिष्ये स्नायादित्येकम् । बार्हस्पत्यं वा एतन्नक्षत्रं तदस्य बार्हस्पत्य एव नक्षत्रे स्नातं भवति अथो बृहस्पतिप्रसूतोऽसानि इति । उत्तरयोः फल्गुन्योः स्नाया-दित्येकम् । भगस्य वा एतन्नक्षत्रं तदस्य भग्य एव नक्षत्रे स्नातं भवति अथो भग्योऽसानि इति । हस्ते स्नायादित्येकम् । सावित्रं वा एतन्नक्षत्रं तदस्य सावित्र एव नक्षत्रे स्नातं भवति अथो सवितृप्रसूतोऽसानि इति । चित्रायां स्नायादित्येकम् । ऐन्द्रं वा एतन्नक्षत्रं तदस्यैन्द्र एव नक्षत्रे स्नातं भवति अथो चित्रोऽसानि इति । विशाखायोः स्नायादित्येकम् । ऐन्द्राग्नं वा एतन्नक्षत्रं तदस्यैन्द्राग्न एव नक्षत्रे स्नातं भवति अथो विशाखोऽसानीति प्रजया पशुभिः इति । एतेषाम् एकतमस्मिन् नक्षत्रे १ पुरादित्यस्योदयाद् व्रजं प्रपद्येत । नैनमेतदहरादित्योऽभितपेत् । तदहःस्नातानां मुखं वा एतत्तेजसा यशसा तपति । अन्तर्लोम्ना चर्मणा व्रजमभिनिघ्नते तम् । पूर्वार्धे व्रजस्याग्निमुपस-माधाय अथाहरेदेतान् सम्भारान् सकृदेव सर्वान् यत् सह सर्वाणि मानुषाणि इत्येततस्माद् ब्राह्मणात् । परिस्तीर्योत्तरतः पालाशीं समिधमुपसाद्य दक्षिणतो नापितस्तिष्ठति । आमध्यन्दिनं भिक्षां दद्यात् । अपीह गां पचेद् वशा चेत् स्याद् अत्रैताम् । पालाशीं समिधमाज्येनाक्त्वा मध्यन्दिनेऽभ्यादधाति इमं स्तोममर्हते जातवेदसे रधमिव सम्महेमा मनीषया । भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव स्वाहा इति अथापरेणाग्निमुदीची-

प्रतिषेवणामेरकामास्तृणाति । तस्यामुदीचीनशिरा निपद्यते त्र्यायुषं कश्यपस्यागस्त्यस्य त्र्यायुषं जमदग्नेस्त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् इति । उद्यमानमनुमन्त्रयते शिवा मे भव शङ्करा इति । क्षुरमनुमन्त्रयते क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिंसीः इति उप्यमानमनुमन्त्रयते यत्क्षुरेण वृश्चयसि वप्ता वपसि केशश्मश्रु वर्चया मे मुखं मा म आयुः प्रमोषीः इति । श्मश्रूण्यग्रे वप्त्वाथोपपक्षावथ केशान् यथोपपादमङ्गानि । तद्धयेषा जरसा पूर्वा आयुषे प्रयान्ति । पूर्वायुषेऽन्नादा भवन्ति । यस्मादेवं विद्वांसो लोमानि वपन्ते तस्मान्नु हेत्यु विद्वान् काममेव लोमानि वापयेत् । कामं नु नखानि निकृत्य लोमानि वापयेत् । स यदि लोमानि वापयिष्यमाणो भवति तानि ब्रह्मचारिणे प्रयच्छन्नाह इमानि प्राचीं हृत्वा गोष्ठे वा दर्भस्तम्बे वा निधत्ताद् इति । तानि स निदधाति २ अथापरेणाग्निं प्रागुपविश्य मेखलां विस्रंसयति इमं विष्यामि वरुनस्य पाशम् इति । स यस्तत्र रातिः स्यात् तस्मै प्रयच्छन्नाह इमां प्राचीं हृत्वा न्यग्रोधे वौदुम्बरे वा निधत्ताद् इति । तामु स तत्र निदधाति इदमहममुष्यामुष्यायणस्य पाप्मानमपगूहाम्युत्तरस्य द्विषद्ध इति वृकलैः प्रधाव्य दन्तान् प्रधावते । अन्नाद्याय व्यूहध्वे भगो राजा यमागमत् । स मे मुखं प्रसर्पतु आयुषे च भगाय च इति । अथोभयीरपः सन्निषिञ्चति उष्णासु शीता आनयति देवमानुषस्य व्यावृत्त्या इति तासामञ्जलिना त्रिरभिषिञ्चति आपो हि ष्ठा मयोभुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः षोढा विहितो वै पुरुष इत्येतस्माद् ब्राह्मणात् । निधाय एतद्वासः स्वा मा तनूराविश इति सान्तरं वासः परिधत्ते । अथैतस्य सर्वसुरभिषः समुदायुत्याञ्जलिना त्रिः परिषिञ्चति नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो वा अभिग्राहिणीः इति । एवं चन्दनस्य । एवमेवात ऊर्ध्वं निधाय एतद्वासः स्वा मा तनूराविश इत्यहतं वासः परिधत्ते । एवमासङ्ग्यमेवमुष्णीषमेवमेवात ऊर्ध्वम् । अथैनं बादरमणिं सुवर्णोपहितं मूत्रे प्रोत्य दर्व्यामादाय दर्वीदण्डसूत्रेण पर्यस्य जुहोति ३ इयमोषधे त्रायमाणा सहमाना सहस्वती । सा मा पितुरिव नामाग्रहं सा मा करोतु सोमवर्चसं करोतु सूर्यवर्चसं ब्रह्मवर्चसिनमन्नादं करोतु स्वाहा इति । अथैनमुदपात्रे परिप्लावयति विश्वा उत त्वया वयम् इति । अपाशोऽसि इत्युक्त्वाद्क्षणया परिहरति । वध्यं हि प्रत्यञ्चं प्रतिमुञ्चन्ति व्यावृत्त्यै इत्येतस्माद् ब्राह्मणात् । अथैतौ प्रवर्तौ सूत्रे प्रोत्य दर्व्यायाधाय दर्वीदण्डे सूत्रेण पर्यस्य जुहोति आयुष्यं

वर्चस्यं रायस्पोषमुद्भिदम् । इदं हिरगयं वर्चसे जैत्र्यायाविशतादिमं रयिं स्वाहा इति । द्वितोयां जुहोति शुनमिवाहं हिरगयस्य पितुरिव नामाग्रहम् । तं मा करोतु सोमवर्चसं करोतु सूर्यवर्चसं ब्रह्मवर्चसिनमन्नादं करोतु स्वाहा इति । तृतीयां जुहोति उच्चैर्वाजि पृतनासाहं सभासाहं धनञ्जयम् । सर्वाः समृद्धीर्ऋद्धय हिरगये याः समाहिताः स्वाहा इति । चतुर्थी जुहोति विराजं च स्वराजं च अभिश्रीर्या च नो गृहे । श्री राष्ट्रस्य या मुखे तया मा संसृज स्वाहा इति । पञ्चमीं जुहोति यशो मा कुरु ब्राह्मगोषु यशो राजसु मा कुरु । यशो विश्येषु शूद्रेष्वहमस्मि यशस्तपाः स्वाहा इति । अथैनावुदपात्रे परिप्लावयति विश्वा उत त्वया वयम् इति । अपाशोऽसि इत्युक्त्वान्यतरं प्रवर्तं प्रक्षाल्य दक्षिणे कर्णे आमूहति ४ आयुष्यं वर्चस्यम् इत्येताभिः पञ्चभिः सहानुकरोति ऋतुभिस्त्वार्तवैः संवत्सरस्य धायसा तैस्त्वा सहानुकरोमि इति । एवमेवोचरम् । अपाशोऽसि इत्युक्त्वाद्दगयैव स्रजं परिहरति शुभिके शिर आरोह शोभयन्ती मुखं मम । मुखं हि मम शोभय भूयांसं च भगं कुरु । यां मे जहार जमदग्निः श्रद्धायै रागायान्यै । इमां तां मतिमुञ्चेऽहमायुषे च भगाय च इति । आदर्शे समवेक्षते यन्मे मनः परागतमात्मानमादर्शे परि-पश्यति । इदं तत्पुनराददेऽहमायुषे च भगाय च इति । अथाञ्जनेनारुक्ते यदाञ्जनं त्रैककुदं जातं हिमवत उपरि । तेन मां चायुष्यं वर्चस्यं मे अस्तु इति । दगडमादत्ते सखा मे गोपाय इति । छत्रमादत्ते द्यौरसि सुपर्णो-ऽन्तरिक्षान्मा गोपाय इति । अथोपानहावुपमुञ्चते द्यौरसि इति दक्षिणां पृथिव्यसि इत्युत्तराम् । दिशमुपनिष्क्रम्य दिशमुपतिष्ठते देवीष्षडुर्वीरुरुगाः कृगोत विश्वे देवास इह वीरयध्वम् इति। मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् इति चन्द्रमसमुपस्थायैव दिशो यत्र कामयते तदेति ५ वेदमधीत्य पुरादित्यस्योदयाद् अथापरेगाग्निंप्रागुपविश्य इयमोषधे त्रायमागा आयुष्यं वर्चस्यमित्येताभिः पञ्चभिरिति ।

इत्याग्निवेश्यगृह्यसूत्रे प्रथमप्रश्ने तृतीयोऽध्यायः

अथ चतुर्थोऽध्यायः

इतरत् समावर्तनम् । अथेतरत् तूष्णीमेव तीर्थे स्नात्वोदेति । अथास्मायार्योपवेशनमाहार्योदकमाहारयति । तत् प्रतीक्षते आ मा गात्तेजसा वर्चसा यशसा संसृज पयसा च इति । तदुपस्पृश्य प्राक् सेक्तवा इत्याह ।

तस्मादन्यदाहारयति । तेनास्य पादौ प्रक्षाळ्याथास्मै मध्वाहारयति । तत् प्रतीक्षते । यन्मधुनो मधव्यं प्रियं परममन्नादो रूपं तेनाहं मधुनो मधव्येन प्रियेण परेणान्नादोऽसानि इति प्रतिगृह्णाति । प्रियः प्रजानामधिपतिः पशूनाम् इति ब्राह्मणम् प्रियः पशूनामधिपतिः प्रजानाम् इति राजन्यम् । तदश्नाति ब्रह्म त्वाश्नातु ब्रह्म त्वाश्नातु इति । अथास्मै दध्याहारयति । तदश्नाति ब्रह्म त्वाश्नातु ब्रह्म त्वाश्नातु इति । अस्मा ओदनमाहारयति । तदश्नाति ब्रह्म त्वाश्नातु ब्रह्म त्वाश्नातु इति । अथास्मै मन्थमाहारयति । तदश्नाति ब्रह्म त्वाश्नातु ब्रह्म त्वाश्नातु इति । अथास्मै गामुपाकरोति तामुद्रासृजत कुरुतेति वा । अथास्मै तदहं पुत्रो वा भ्रातरो वान्तेवासी वोपनयेतेयं वा सैव सहते। यदि वा रथं लभते रथन्तरमसि इति दक्षिणं चक्रमभिमृशति बृहदसि इत्युत्तरं वामदेव्यमसि इति मध्यमम् । आरुह्य प्रवर्तमानमनुमन्त्रयते अयं वामश्विना रथो मा दुःखे मा सुखे रिषद् इति । स यदि शब्दं कुर्यात् प्रतिबुध्य यज्ञोपवीतं कृत्वा अप आचम्य भूमिमभिमृशति मयि धृतिं मयि विधृतिं मयि स्वधृतिं मयि रन्तिं मयि रमतिं मयि पुष्टिं पुष्टिपतिर्दधातु इति १ इतरदेकम्

इत्याग्निवेश्यगृह्यसूत्रे प्रथमप्रश्ने चतुर्थोऽध्यायः

## अथ पञ्चमोऽध्यायः

अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेष्यम् । समर्यमा संभगो नो निनीयात् सञ्जास्पत्यं सुयममस्तु देवाः । अयं कूर्चः । मयि गृह्णाम्यग्रे अग्निं रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । मयि प्रजां मयि वर्चो दधाम्यरिष्टाः स्याम तनुवा सुवीराः । यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्याँ आविवेश । तमात्मन् परिगृह्णीमहे वयं मा सो अस्माँ अवहाय परागात् । भूर्भुवःस्वः । प्रजापतिः स्त्रियां यशो मुष्कयोरदधात् सपम् । कामस्य तृप्तिमानन्दं तस्याग्ने भाजयेह मा । मोदः प्रमोद आनन्दो मुष्कयोर्निहितः सपः । सृत्वेव कामस्य तृप्याणि दक्षिणानां प्रतिग्रहे । मनसश्चित्तमाकूतिं वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य यशः श्रीः श्रयतां मयि । यथाहमस्या अतृपं स्त्रियै पुमान् यथा स्त्री तृप्यति पुंसि प्रिये प्रिया । एवं भगस्य तृप्याणि यज्ञस्य काम्यः प्रियाम् । ददामीत्यग्निर्वदति । तथेति वायुराह तत् । हन्तेति सत्यं चन्द्रमाः । आदित्यः सत्यमोमिति । आपस्तत् सत्यमाभरन् । यशो यज्ञस्य दक्षिणाम् । असौ मे कामः समृध्यताम् । आपो हि ष्ठा

मयोभुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जनः इत्येतेनानुवाकेन । या अकृन्तन्नवयन् या अतन्वत याश्च देवीरन्ता-नभितोऽददन्त । तास्त्वा देवीर्जरसा संध्ययन्त्वायुष्मतीदं परिधत्स्व वासः । परिधत्त धत्त वाससैनां शतायुषीं कृणुत दीर्घमायुः । बृहस्पतिः प्रायच्छद्वास एतत् सोमाय राज्ञे परिधातवा उ । जरां गच्छासि परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावती । शतं च जीव शरदः सुवर्चा रायश्च पोषमुप-संव्ययस्व । परीदं वासो अधिधाः स्वस्तयेऽभूरापीनामभिशस्तिपावती । शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासु जीवती । अनया सह मया कर्माणि कर्तव्यानि । प्रजाश्चोत्पादयितव्याः । तदर्थमेनां परिणेष्ये । इन्द्राय नमः । अग्नये नमः । यमाय नमः । निर्ऋतये नमः । वरुणाय नमः । वायवे नमः । सोमाय नमः । ईशानाय नमः । ब्रह्मणे नमः । अद्भ्यो नमः अग्नये नमः । आत्मने नमः । अदितेऽनुमन्यस्व । अनुम-तेऽनुमन्यस्व । सरस्वतेऽनुमन्यस्व । देवसवितः प्रसुव । अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान् प्रजया पशुभि-र्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा । प्रजापतये स्वाहा । इन्द्राय स्वाहा । अग्नये स्वाहा । सोमाय स्वाहा । भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । भूर्भुवःस्वः स्वाहा या तिरश्ची निपद्यसेऽहं विधरणी इति । तां त्वा घृतस्य धारया जुहोमि वैश्वकर्मणि स्वाहा । यानूची निपद्यसेऽहं विधरणी इति । तां त्वा घृतस्य धारया अग्नौ संराधन्यै देव्यै स्वाहा । प्रसाधन्यै देव्यै स्वाहा १ युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम् । त्वं भिषग् भेषजस्यासि कर्ता त्वया गा अश्वान् पुरुषान् सनेमि स्वाहा । विरूपाक्षाय स्वाहा । दन्तान् जये स्वाहा । विरूपाक्षमहं यजे निजङ्घं शबळोदरम् । यो मायं परिबाधते श्रियै पुष्ट्यै च तस्मै स्वाहा । परिबाध मा विबाधिष्ठा मा विबाध विबाधिथाः निर्ऋत्यै त्वा पुत्रमाहुः स नः कर्माणि साधय स्वाहा । सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधाप-यासिषं स्वाहा । यावन्तो वेदास्त्वयि जातवेदः स्त्रियं चोद्घ्नन्ति पुरुषस्य कर्म तेभ्य एतद्धूयते भागधेयं ते मा तृप्तास्तर्पयन्तु कामैः स्वाहा । आकूत्यै त्वा कामाय त्वा समृधे त्वा । पुरो दधे अमृतत्वाय जीवसे स्वाहा । आकूतिमस्यावसे । काममस्य समृद्ध्यै । इन्द्रस्य युञ्जते धियः स्वाहा । आकूतिं देवीं मनसः पुरो दधे । यज्ञस्य माता सुहवा मे अस्तु । यदिच्छामि

मनसा स कामः । विदेयमेनद्धृदये निविष्टं स्वाहा । इष्टेभ्यः स्वाहा । वषट्निष्टेभ्यः स्वाहा । भेषजं दुरिष्ठ्यै स्वाहा । निष्कृत्यै स्वाहा । दौराध्यै स्वाहा । देवीभ्यस्तनूभ्यः स्वाहा । ऋद्ध्यै स्वाहा । समृद्ध्यै स्वाहा । चित्ताय स्वाहा । चित्तये स्वाहा । आकूताय स्वाहा । आकूत्यै स्वाहा । विज्ञाताय स्वाहा । विज्ञानाय स्वाहा । मनसे स्वाहा । शक्वरीभ्यः स्वाहा । दर्शाय स्वाहा । पूर्णमासाय स्वाहा । बृहते स्वाहा । रथन्तराय स्वाहा । प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु । तस्मै विशः सयनमन्त सर्वाः स उग्रः स हि हव्यो बभूव स्वाहा । अग्निर्भूतानामधिपतिः स मावतु स्वाहा । पितरःपितामहाः इन्द्रो ज्येष्ठानामधिपतिः स मावतु स्वाहा । यमः पृथिव्या अधिपतिः स मावतु स्वाहा । वायुरन्तरिक्षस्याधिपतिः स मावतु स्वाहा । सूर्यो दिवोऽधिपतिः स मावतु स्वाहा । चन्द्रमा नक्षत्राणामधिपतिः स मावतु स्वाहा । बृहस्पतिर्ब्रह्मणोऽधिपतिः स मावतु स्वाहा । मित्रः सत्यानामधिपतिः स मावतु स्वाहा । वरुणोऽपामधिपतिः स मावतु स्वाहा । समुद्रः स्रोत्यानामधिपतिः स मायतु स्वाहा । अन्नँ साम्राज्यानामधिपति तन्मावतु स्वाहा । सोम ओषधीनामधिपतिः स मावतु स्वाहा । सविता प्रसवानामधिपतिः स मावतु स्वाहा । रुद्रः पशूना-मधिपतिः स मावतु स्वाहा । त्वष्टा रूपाणामधिपतिः स मावतु स्वाहा । विष्णुः पर्वतानामधिपतिः स मावतु स्वाहा । मरुतो गणानामधिपतयस्ते मावन्तु स्वाहा । पितरः पितामहाः परेऽवरे ततास्ततामहा इह मावत । अस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्यां स्वाहा । ऋताषाड़तधामाग्निर्गन्धर्वस्तस्यौषधयोऽपसरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा । ताभ्यः स्वाहा । सँहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा । ताभ्यः स्वाहा । सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा । ताभ्यः स्वाहा । भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसः स्तवा नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा । ताभ्यः स्वाहा । प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरसो बह्नयो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा । ताभ्यः स्वाहा । इषिरो विश्वव्यचा वातो

गन्धर्वस्तस्यापोऽप्सरसो मुदा नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा । ताभ्यः स्वाहा । अग्निरेतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयँ राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात् स्वाहा । इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्यो-पस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुद्ध्यतामियं स्वाहा । मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा २ स्तनन्धयतस्ते पुत्रान् सविताभिरक्षतु । आ वाससः परिधानाद् बृहस्पति-र्विश्वेदेवा अभिरक्षन्तु पश्चात् स्वाहा । अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाघम् । शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशं स्वाहा । ब्राह्मणं देवकृतं कल्पमानं तेन हन्ये निषदः पिशाचात् । क्रव्यादो मृत्युरधरान् पातयामि दीर्घमायुस्तव जीवन्तु पुत्रान् स्वाहा । शन्नो देवीरभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । हस्तेन हस्तं गृभ्णामि सौभगत्वाय मया पत्या जरदष्टिर्यथासत् । भगो अर्यमा सविता पुरन्धिस्ते त्वा देवा अदुर्मह्यं पत्नीम् । अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । यां पूषन् शिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्रयातै यस्यामुशन्तः प्रहरेम शेफम् । सोमोऽददाद् गन्धर्वाय गन्धर्वोऽग्नयेऽददात् । पशूंश्च मह्यं पुत्रांश्च ददा-त्वग्निरथो त्वा असावहम् । सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुर्योऽहं मनुष्यजाः । सरस्वति प्रेदमव सुभगे वाजि-नीवति । तां त्वा विश्वस्य भूतस्य प्रगायामस्यग्रतः । आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव । प्रमृणीहि दुरस्यून् सहस्व पृतनायतः । विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः । ३ इमान् लाजानावपामि समृद्धिकरणान्मम मम तुभ्यं च संवननं तदग्निरनुमन्यताम् । भगेन त्वा संसृजामि मासरेन सुरामिव । इयं नार्युपब्रूते अग्नौ लाजानावपन्ती । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा । इमं मे वरुण श्रुधी इवमद्या च मृडय । त्वामवस्युराचके स्वाहा । तत्वा यामि ब्रह्मणा वन्दमान-स्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह वोध्युरुशंस मा न आयुः प्रमोषीः स्वाहा । त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाँसि प्रमुमुग्ध्यस्मत् स्वाहा । स

त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि स्वाहा । त्वमग्ने अयास्ययासन्मनसा हितः । अयासन् हव्यमूहिषेऽयानो धेहि भेषजं स्वाहा । प्रजापते न त्वदेतान्पन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयँ स्याम पतयो रयीणां स्वाहा । यन्म आत्मनो मिन्दाभूदग्निस्तत्पुन-राहार्जातवेदा विचर्षणिः स्वाहा । पुनरग्निश्चक्षुरदात् पुनरिन्द्रो बृहस्पतिः । पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः स्वाहा । अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मधु । अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथं स्वाहा । पुरुषसम्मितो यज्ञो यज्ञः पुरुषसम्मितः । अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथं स्वाहा । यत्पाकत्रा मनसा दीनदक्षान यज्ञस्य मन्वते मर्त्तासः । अग्निष्टद्धोता क्रतुविद्विजानन् यजिष्ठो देवाँ क्रतुशो यजाति स्वाहा । पाहि नो अग्न एनसे स्वाहा । पाहि नो विश्ववेदसे स्वाहा । यज्ञं पाहि विभावसो स्वाहा । सर्वं पाहि शतक्रतो स्वाहा । भूरग्नये च पृथिव्यै च महते च स्वाहा । भुवो वायवे चान्तरिक्षाय च महते च स्वाहा । सुवरादित्याय च दिवे च महते च स्वाहा । भूर्भुवः स्वश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा । नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवःस्वर्महरों स्वाहा । ओं स्वाहा । भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । भूर्भुवःस्वः स्वाहा । यदस्य कर्मणो ऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत् स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुते सर्वहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे स्वाहा अदितेऽन्वमंस्थाः । अनुमतेऽन्वमंस्थाः । सरस्वतेऽन्वमंस्थाः । देव सवितः प्रासावीः । अग्ने व्रतपते व्रतम् चरिष्यामि तच्छकेयं तन्मे राध्यताम् । वायो व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । आदित्य व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । व्रतानां व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । अमूहमस्मि सा त्वं सा त्वमस्यमूहम् ऋगहमस्मि सा त्वं द्यौरहं पृथिवी त्वम् । मम हृदये हृदयं ते अस्तु । मम चित्ते चित्तमस्तु ते । मम वाचमेकमनाः शृणु । मामेवानुव्रता सहचर्या मया भव । चाक्रवाकं संवननं यन्नदीभ्य उदाहृतम् । यद्देवगन्धर्वो वित्तः संवननं तेन संवनिनौ स्वः । एकमिषे विष्णुस्त्वान्वेतु द्वे ऊर्जे विष्णुस्त्वान्वेतु त्रीणि व्रताय विष्णुस्त्वान्वेतु चत्वारि मायोभवाय विष्णुस्त्वान्वेतु पञ्च पशुभ्यो विष्णुस्त्वान्धेतु षड्

रायस्पोषाय विष्णुस्त्वान्वेतु सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वान्वेतु । सखायौ सप्तपदावभूव सख्यं ते गमेयं सख्यात्ते मा योषं सख्यान्मे मां योष्ठाः । सप्तऋषयः प्रथमां कृत्तिकानामरुन्धतीम् । ध्रुवतां ये ह निन्युः । षट् कृत्तिका मुख्ययोगं वहन्तीयमस्माकं भ्राजत्वष्टमी । ध्रुवं नमस्यामि मनसा ध्रुवेण ध्रुवं नो सख्यं दीर्घमायुश्च भूयात् । अद्रुग्धावस्मिंश्च परे च लोके ध्रुवं प्रविष्टौ स्याम शरणं सुखार्तौ । शन्न एधि द्विपदे शं चतुष्पदे । इह गावो निषीदन्त्विहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो अधिपूषा निषीदतु ४ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पतिघ्नी तनूस्तामितो नाशयामसि स्वाहा । वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि यास्यै पुत्रघ्नी तनूस्तामितो नाशयामसि स्वाहा । आदित्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पशुघ्नी तनूस्तामितो नाशयामसि स्वाहा । सर्व प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पतिघ्नी पुत्रघ्नी पशुघ्नी निन्दिता तनूस्तामितो नाशयामसि स्वाहा । अग्ने व्रतपते व्रतमचारिषम् इत्यादि व्रतानां व्रतपते व्रतमचारिषम् इत्यन्तम् । आवाभ्यां दम्पतिभ्यां स्वस्ति भवन्तो ब्रुवन्तु । युवाभ्यां दम्पतिभ्यां स्वस्ति । तशिने त्वाभिमृशामि हस्तेनाविद्विषाणिना । यथा न विद्वषेमहि न हि ये च कदाचन । ऋषभेण स्कन्दामि व्यस्य योनिं पतिरेतो गृहाण । पुमांस्त्री जायतां गर्भो अन्तः । आ ते योनिं गर्भ एतु पुमांसं गर्भमाधत्स्व । यन्तुभ्यं शिमिवाससि पुमांस्ते पुत्रो नारितं पुमाननुजायताम् । स संवधतां गर्भो दशमे मासि सूतवे ५ अनृक्षराऋजवःसन्तुपन्था युक्तोव-हजानवेद स्तनन्धयतस्तेपुत्रान् इमाल्लाँजानावपामि अग्नेप्रायश्चित्ते पञ्च ।

इत्याग्निवेश्यगृह्यसूत्रे प्रथमप्रश्ने पञ्चमोऽध्यायः

अथ षष्ठोऽध्यायः

अथ समावृत्ते भार्यामुपयच्छेत । प्रजानन्तुं मा व्यवच्छेत्सीः । इति गुरुशासनात् सर्वाङ्गिनीं मनोज्ञां यवीयसीं ब्रह्मचारिणीं कन्याम् असगोत्रां मातुरसपिण्डाम् अनुक्तामगर्हितां नक्षत्रनदीवृक्षाभिधानासंयुक्ताम् । अथ दूतान् प्रहिणोति अनृक्षरा ऋजव इति । वधूमन्तं याचयति अमुष्मै अमुक-गोत्राय अमूममुकगोत्रीं धर्मप्रजार्थं वधूं ददातु इति । तथेत्युक्ते वधूम् । आपूर्यमाणपक्षे पुण्ये नक्षत्रे शोभनान्यगाराणि कल्पयित्वा बद्धकौतुकः

कृतमङ्गलस्वस्त्ययनः पदातिर्वधूगृहं गत्वा गृहीतमधुपर्कः उद्धननाद्यस-म्भारसम्भरणान् कृत्वा लाजानश्मानमहतं वासश्च संभृत्य ब्रह्मप्रवेशना-द्यापरिधानान्तं करोति । एतस्मिन् काले वधूं बद्धकौतुकां कृतपुण्यानिनीं यज्ञोपवीतिनीमाचान्तामग्नेरुत्तरेण परेण च गत्वा दक्षिणतः प्राचीं तिष्ठन्तीं वरोऽग्नेरुत्तरेण पूर्वेण च गत्वा पुरस्तात् प्रत्यक् तिष्ठन् सपवित्रेन पाणिना व्याहृतिभिः प्रजापतिः स्त्रियाम् इति षड्भिरेनां दक्षिणत उदङ्मुखस्तिष्ठन् अमूम् अमुकगोत्रीम् अमुष्मै अमुकगोत्राय तुभ्यं प्रजासहत्वकर्मभ्यः प्रतिपादयामि इति वधूमताद्भिर्दत्तां प्रतिगृह्णाति स्त्रीधनं च । आपो हि ष्ठा मयोभुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्ये-तेनानुवाकेन मार्जयित्वा यथाप्रपन्नमपरेणाग्निमुपवेश्याथैनामहतं चासः परि-धापयति पूर्वं निधाय या अकृन्तन्नवयन् इति तिसृभिः । परीदं वास इत्येतया अभिमन्त्रयते । अथैनामाचान्तां दक्षिणतः प्राचीमुपवेश्य तस्यामन्वारब्धायां गन्धादिनाग्निमलङ्कृत्य परिषिञ्चति अदितेऽनुमन्यस्व इति दक्षिणतः प्राचीनम् अनुमतेऽनुमन्यस्व इति पश्चादुदीचीनं सरस्वतेऽनुमन्यस्व इति उत्तरतः प्राचीनं देव सवितः प्रसुव इति सर्वतःप्रदक्षिणं परिषिच्य ऊर्ध्वे समिधावनूयाजार्थे चादधाति । इध्मादेवोद्धृत्य दक्षिणं परिधिमग्निं चान्तरेण उत्तरं परिधिं चाग्निं चान्तरेन प्रणीताप्रणयनेऽनूयाजार्थं चादधाति । अयं त इध्मम् अक्त्वाभ्या-दधाति । अप उपस्पृश्य इध्मस्य मूलमुपसंस्पृश्य दर्व्या जुहोति प्रजापतये स्वाहा इत्युदञ्चम् इन्द्राय स्वाहा इति प्राञ्चम् आघाराचाघार्य । आज्यभागौ जुहोति अग्नये स्वाहा इति उत्तरतः सोमाय स्वाहा इति दक्षिणतः । मध्ये व्याहृतिभिर्हुत्वा या तिरश्ची निपद्यसेऽहम् इति त्रयोदशहुतीर्जुहोति १ अथाष्टौ समृद्धिहोमान् जुहोति इष्टेभ्यः स्वाहा इति । अथ जयाञ्जुहोति चित्तं च चित्तिश्च इत्येवं वा जुहोति । नानास्रुवाहुतीः चित्ताय स्वाहा चित्तये स्वाहा इत्येवम् । अथाभ्यातानाञ्जुहोति अग्निर्भूतानामधिपतिः स मावतु स्वाहा इति । अथ प्राचीनावीतं कृत्वाधिवदते पितरः पितामहा इति । उपवीती भूयो भवति । स एवमेतान् सप्तदशाभ्यातानान् साधिवादान् जुहोति । अथ स्वाहाकृताः षड् राष्ट्रभृतो जुहोति । ऋताषाडृतधामा इति । अग्निरेतु प्रथम इति षट् प्रधानाहुतीर्जुहोति । शन्नो देवीरभिष्टय इत्युभौ मार्जयते । अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णात्यभीवलोमानि देवस्य त्वा इति । अथोपोत्थापयति भगो अर्यमा इत्येताभिः पञ्चभिः । अत्रासौशब्दप्रथमया नाम

गृह्णीयात् । उत्तरेणोत्तरार्धपरिधिसन्धिपश्यानं निधाय दक्षिणेन पादेन वधूमा-स्थापयति आतिष्ठेममश्मानम् इति । विश्वा उत त्वया वयम् इति प्रदक्षिणमग्निं परिक्रामतः । अथास्या अञ्जलावुपस्तीर्य द्विर्लाजानावपति । त्रिः पञ्चाव-त्तिनाम् । इमान् लाजानावपामि इति । अभिघार्य दर्व्या संसृजति भगेन त्वा संसृजामि इति । अथ जुहोति इयं नारी इति २ एवं द्वितीयमास्थाप्य परीत्य जुहोति । तथा तृतीयम् । यथायतनमुपवेश्य अनूयाजसमिधमादाय दर्व्या वारुणयौ चाग्निवारुणयौ मेषजवनस्पतिं प्राजापत्यं सौविष्टकृतं च हुत्वा पुरस्तात् स्विष्टकृतं प्रायश्चित्तं जुहोति यन्म आत्मन इति पञ्च । पाहि नो अग्न एनस इति चैषोऽनुवाकः । अत्र महाव्याहृतिभिर्हुत्वा भूरग्नये च पृथिव्यै च महते च स्वाहा इति अत्रैव प्रणवं जुहुयाद् व्याहृतिभिः समस्ताभिश्च । अथ मध्यमं परिधिमक्त्वा दक्षिणार्धे च अप उपस्पृश्य उत्तरार्धे च परिस्तरणे-भ्योऽर्धमर्धमादाय दर्व्यामग्रयनक्ति मध्यं च आज्यस्थाल्यां मूलमनक्ति । पुन-रपि दर्व्यामग्रं मध्यं च आज्यस्थाल्यां मूलमनक्ति । पुनरपि आज्यस्थाल्यां मूलं मध्यं चाग्रं च दर्व्याम् । अथैकं तृणं निधायाप उपस्पृश्य शिष्टमग्नौ प्रहरेत् । नात्यग्रं प्रहरेत् यदत्यग्रं प्रहरेद् इति ब्राह्मणम् । त्रिरुद्यत्य तृणम-प्यनुप्रहरेत् । अङ्गुलिं त्रिरुद्यम्य प्राणस्थानं चक्षवादि संमिश्य परिधीनादाय मध्यमं प्रथमं प्रहरेत् । युगपद् दक्षिणमुत्तरं च । ऊर्ध्वे समिधौ प्रहरति । उत्तरार्धमङ्गारेषूपोहति । संस्रावेणाभिजुहुयात् । अथ परिषिञ्चति । यथा पुरस्ताद् अन्वमंस्थाः प्रासावीः इति मन्त्रान्तान् सन्नमति । प्रणीताप्रणय-नमादायाग्रेणाग्निं परिहृत्य दक्षिणेनाग्निं चापरेणाग्निं चाश्मनो देशे निधाय यथाशक्ति दक्षिणां ब्रह्मणे दत्त्वा प्रागादि प्रतिदिशं तूष्णीं मार्जयते । किञ्चिदवसिच्य हस्तेन मार्जयेत् । आपो हि ष्ठा मयोभुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येते-नानुवाकेन कयानश्चित्र आभुवद् इति तिसृभिः प्राजापत्यं पवित्रम् इति द्वाभ्याम् । एतस्मिन् काले ब्रह्मा यथाप्रपन्नमुपनिष्क्रामणमिति । प्रायश्चित्तादि आ ब्रह्मण उपनिष्क्रामणात् सर्वदर्वीहोमानामेष समानम् । अत्र गुरवे वरं ददाति । अथ देवतामुपतिष्ठते अग्ने व्रतपते व्रतं चरिष्यामि इत्येतैः । अमूहमस्मि इत्यथास्या दक्षिणे कर्णे जपति । अथास्या दक्षिणेन हस्तेन दक्षिणमंस-मुपर्युपरि अवमृश्य हृदयदेशमभिमृशति मम हृदये हृदयं ते अस्तु इति द्वाभ्याम् । अथापरेणाग्निमिदंविष्णुक्रमात् प्रक्रामति एकमिषे विष्णुस्त्वान्वेतु इति ।

मनाग् दक्षिणं पूर्वे पादं प्रहरति । सव्येनानुनिष्क्रामति । अत्रैव सप्तमं पदं विक्रमते । नाग्निमति प्रच्यवते । सखायौ सप्तपदावभूव इति सप्तमे पदे जपति । अथापरेणाग्निमुदङ्मुखस्तिष्ठन् सप्तऋषीनुपनिष्ठते सप्त ऋषयः प्रथमां कृत्तिकानाम् इति । अथ ध्रुवमुपतिष्ठते ध्रुवं नमस्यामि इति । मुहूर्तमुपविश्य औपासनाग्निमाहवनीयाकारे कुण्डे निधायात्र सदस्या आशीर्यादं कुर्यन्ति । अथ व्रजं प्रपद्यते । अथास्या दक्षिणेन हस्तेन दक्षिणं पाणिं परिगृह्य दक्षिणां द्वारेयीमभिमृशति शन्न एधि द्विपदे शं चतुष्पद इति । एवमुत्तराम् । अगारं प्रविश्यानडुहे चर्मण्युत्तरे लोम्न्युपविशति इह गावो निषीदन्तु इति । ज्ञातिसम्भाषावासाते । ब्रह्मचारिणावलंकुर्वणौ त्र्यहं व्रतं चरेयातामक्षार-लवणमशमीधान्यं भुञ्जानावधःशायिनावसंवर्तमानौ सहचर्याताम् । सायं-प्रातरौपासने जुहोति व्रीहिभिर्यवैर्वा । सायं प्रथममग्निमुपसमाधाय परिस्तीर्य प्रक्षाळ्य स्थालीं निष्टप्य सम्मृज्य एकमुष्टिं व्रीहीनोप्य पर्यग्नि कृत्वा गन्धपुष्प-ैरग्निमलंकृत्य इन्द्रायाग्नये यमाय निर्ऋृत्यै वरुणाय वायवे सोमायेशानायेति प्रागादि प्रतिदिशं पश्चादात्मानमलंकृत्य अप उपस्पृश्य सपवित्रपाणिः अदि-तेऽनुमन्यस्व इति परिषिच्य समिधमभ्याधाय प्रज्वलयित्वा हस्तेन व्रीहीन् जुहुयाद् अग्नये स्वाहा प्रजापतये स्वाहा इति सायं सूर्याय स्वाहा प्रजापतये स्वाहा इति प्रातः । अदितेऽन्वमंस्था इति परिषिच्य कनीयस्तस्य पूर्वं हुत्वोत्तरं भूयो जुहुयाद् इति ब्राह्मणम् । एवमौपासने जुहोति । अथापरं पत्नीं भोजयेत् । तस्मान्नित्यो धार्योऽनुगतो मन्थ्यः श्रोत्रियागाराद्वाहार्यः । प्रायश्चित्तं जुहोति अयाश्चाग्नेरनभिशस्तीश्च सत्यमित्वमया असि । अयसा मनसा धृतोऽयसा हव्यमूहिषेऽयानो धेहि भेषजं स्वाहा इति त्र्यहे पर्यपेते निश्यग्निप्रतिष्ठापनादि प्रसिद्धं दार्विहोमिकमा राष्ट्रभृद्यो विवाहप्रकृतिं नयेल्लाजादिसम्भारवर्जं प्रतितद्मार्जनवामःपरिधानवर्जम् एवमेष सर्वेषां विवाहप्रकृतिम् । आकालं प्रायश्चित्तं जुहोति अग्ने प्रायश्चित्त इति चतसृभिः । वारुण्यादि समानम् । व्रतविसर्गः । अथ व्रतं विमृजते अग्ने व्रतपते व्रतमचारिषम् इत्येतैः । अथ पुण्याहं वाचयित्वा आवाभ्यां दम्पतिभ्यां स्वस्ति भवन्तो ब्रुवन्तु इति । युवाभ्यां दम्पतिभ्यां स्वस्ति इति प्रतिवचनम् । अथास्या उपस्थमभिमृशति शिवेन त्वाभिमृशामि इति । प्रतिसंविशति ऋषभेण स्कन्दामि इति । रत्यन्तं कृत्वा जपेत् आ ते योनिं गर्भ एतु इति तिसृभिः । एवमेव मासि मास्यृतु-बेललायां संतिष्ठते भार्योपयमनम् ३ अथसमावृत्तेभार्यामुपयच्छेत अथाष्टौ-

समृद्धिहोमाञ्जुहोति एवंद्वितीयमास्थाप्य त्रीणि
इत्याग्निवेश्यगृह्यसूत्रे प्रथमप्रश्ने षष्ठोऽध्यायः

अथ सप्तमोऽध्यायः

अथातः स्थागरमलङ्कारं वक्ष्यामः । आदर्शं चाञ्जनं चाहतं वासः सर्वसुरभितं व्रीहीन् दृषदुपले इत्येतेऽस्य सम्भारा उपक्लृप्ता भवन्ति । पाणिग्रहणादूर्ध्वं श्वोभूते श्वश्रूर्वा श्वशुरो वा स्यालो वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्युक्ष्य शुचि शुक्लमनार्द्रमाच्छाद्य सुप्रक्षाळितपाणिपादावप आचम्य पवित्रपाणी स्थण्डिलस्यापरार्धे दम्पती उपविशत । पूर्वार्धे व्रीहीनवकीर्य दृषदुपले प्रतिष्ठाप्याहतेन वाससा परिवेष्टयति । गन्धपुष्पधूपदीपैः यवाक्षततण्डुलैरभ्यर्च्य पुरस्ताद् दशहोतारं सगृहं जपति चित्तिः स्रुग् इति चतुर्होतारं दक्षिणतः पृथिवी इति पञ्चहोतारं पश्चाद् अग्निर्होता इति षड्ढोतारमुत्तरतः सूर्यं ते चक्षुः इति सप्तहोतारमुपरिष्टाद् महाहविर्होता इति । एतस्मिन् काले वरस्य भगिन्यपरेण दृषदुपलाभ्यां प्राङुपविश्य सर्वसुरभितं पिष्ट्वा देवताभ्यो निवेद्याञ्जनेनाङ्क्ते । आदर्शमवेक्षत्वा शेषेण दुहितरमलङ्कृत्य मुखे अग्निर्यजुर्भिः सेनेन्द्रस्य इति पश्चाज्ञामातरम् । यच्चात्र स्त्रिय आहुस्तत् कुर्वन्ति । सा प्रिया भवति । प्रियो हैव भवति इति ब्राह्मणम् १ अथ वैश्वदेवस्यान्नसावौपासनेऽग्नौ जुहुयात् । गृह्येऽग्नौ वा । अग्नये स्वाहा इति सायम् । सूर्याय स्वाहा इति प्रातः । सोमाय धन्वन्तरयेऽनुपतये प्रजापतये विश्वेभ्यो देवेभ्यः सर्वाभ्यो देवताभ्योऽग्नये स्विष्टकृते स्वाहा इति । अथ बलिहरणं यथादिशं हरेत् ब्रह्मणे ब्रह्मपुरुषेभ्य इन्द्रायेन्द्रपुरुषेभ्योऽग्नये यमाय यमपुरुषेभ्यो निर्ऋत्यै वरुणाय वरुणपुरुषेभ्यो वायवे सोमाय सोमपुरुषेभ्य ईशानाय इति । अथ गृहदेवताभ्यो बलिं हरति । उलूखलमुसलाभ्याम् इति उलूखलमुसले दृषदुपलाभ्याम् इति दृषदुपले उदधान्या इत्युदधान्याम् ओषधिवनस्पतिभ्याम् इति द्वारे अन्तरिक्षे दिवाचारिभ्य इति दिवा नक्तंचारिभ्य इति नक्तम् । दक्षिणतः प्राचीनावीती पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः स्वधा पितृभ्य इति । शेषं दक्षिणा निनयेत् २ अथातः पञ्चदश्यां प्रातर्होमं हुत्वा इध्माबर्हिश्च सम्भृत्य उक्तलक्षणेनेध्ममिध्मप्रव्रश्चनं च योक्त्रेण सन्नह्य यत्र भुक्तं मन्यते तन्निदधात्यग्निमन्वादधाति । अपरेणाग्निं प्राचीनाग्राश्चतस्रः समिध आदधाति

। तावुभाभ्यां हताभ्यामादाययाग्नावादधाति । तूष्णीमुपस्थायापरे समिधावादधाति । श्वो यज्ञाय रमतां देवताभ्यो यज्ञाय त्वा गृह्णामि देवयज्याया इत्युपस्थायापकालहोमं हुत्वा अग्निं परिस्तीर्य तां रात्रिमनश्नन्नपरेणाग्निमुदक्च्छिराः संविशति । श्वोभूते यथोदितं स्नानं कृत्वा प्रातर्होमं च प्रागादिप्रतिदिशं दर्भैः परिस्तृणाति प्रागुदगग्रैः । दक्षिणानुत्तरान् करोत्युत्तरान् अधरान् । ततःप्रभृति सम्भारसम्भरणान् कृत्वा व्रीहीन् चरुस्थालीं जुहूं च मेक्षणं च सम्भृत्य ब्रह्मप्रवेशनाद्या प्रणीताभ्यः कृत्वा प्रोक्षणीं च संस्कृत्य व्रीहीन् निर्वपति अपरेणाग्निं तिरःपवित्रं जुह्वाः । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि अग्नीषोमाभ्याम् इति पौर्णमास्याम् अग्नये जुष्टं निर्वपामि इन्द्राग्निभ्याम् इत्यमाचास्यायां त्रीन् मुष्टीन् यजुषा तूष्णीं चतुर्थम् । पत्न्यवहन्ति । त्रिष्फलीकृत्य त्रिः प्रक्षाळ्य तिरःपवित्रं स्थाल्यामावपति । तस्मिन्नग्नौ श्रपयित्वा दर्वीनिष्टपनकाले जुहूं च निष्टप्य निदधाति । आज्यं च संस्कृत्याभिघार्य चरुमुद्वास्याभिघारयति । परिधानप्रभृति व्याहृतिपर्यन्तं कृत्वा हविषा जुहोति । आग्नेयमग्नीषोमीयं सौविष्टकृतम् इति पौर्णमास्याम् । आग्नेयमैन्द्राग्नं सौविष्टकृतम् इत्यमावास्यायाम् । आज्येन जुहूमुपस्तीर्य द्विरवद्यति सकृदभिघारयति । त्रिः पञ्चावत्तिनाम् । सौविष्टकृतं सकृदुपस्तृणाति सकृदवद्यति । द्विः पञ्चावत्तिनाम् । द्विरभिघारयति । अवत्ते स्विष्टकृति पार्वणहोमौ जुहोति ऋषभं वाजिनं वयं पूर्णमासं यजामहे । स नो दोहतां सुवीर्यं रायस्पोषँ सहस्रिणं प्राणाय सुराधसे पूर्णमासाय स्वाहा पूर्णा पश्चादुत पूर्णा इति पौर्णमास्याम् । अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना । सा नो दोहतां सुवीर्यं रायस्पोषँ सहस्रिणमपानाय सुराधसेऽमावास्यायै स्वाहा यत्ते देवा अदधुर्भागधेयम् इत्यमावास्यायाम् । उत्तरार्धपूर्वार्धेऽसंसक्तामितराभ्यामाहुतिभ्यां जुहोति । मेक्षणं चानुइप्रहृत्याप उपस्पृश्य जुहूमद्भिः पूरयित्वा प्राचीनावीत्यवाचीनपाणिः दक्षिणापवर्गं सकृदन्तरपरिधिसंक्षाळनं निनयति वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सं शतधारमेतम् । तस्मिन्नेष पितरं पितामहं प्रपितामहं स्वर्गे लोकेऽबिभरत् पिन्वमानं स्वाहा इति । निर्णिज्य स्रुवं च निष्टप्य बहिःपरिध्यपां पूर्णां स्रुचं जुहोत्यु त्तरापवर्गम् इमं समुद्रं शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये । घृतं दुहानामदितिं जनायाग्ने मा हिंसीः परमे व्योमन् स्वाहा इति । इध्मसन्नहनमप उपस्पृश्य जुहुयात् ।

वारुणयादिजयप्रभृति सिद्धमा धेनुवरप्रदानात् । पुरस्तात् स्विष्टकृतमिध्म-प्रव्रश्चनं प्रक्षिपेत् । सन्तिष्ठते दर्शपूर्णमासः सन्तिष्ठते दर्शपूर्णमासः ३
व्रीह्याग्रयणेन वा यक्ष्यमाणो भवति आश्वयुज्यां पौर्णमास्यां कार्त्तिक्यां शातभिषज्यां वा । अन्वाधानकाले यज्ञाय रमतां देवताभ्यो यज्ञाय त्वा गृह्णामि देवयज्याया इत्युपस्थाय सम्भारसम्भरणकाले नवधान्यं संभृत्याकूपतोयेन पोषितं निर्वपणकाल इन्द्राग्निभ्यां जुष्टं निर्वपामि विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां जुष्टं निर्वपामि इति होमकाल ऐन्द्राग्नं वैश्वदेवं द्यावापृथिव्यं सौविष्टकृतम् इति । वरप्रदानकाले प्रथमजं वत्सं दक्षिणां ददाति । शेषं प्रसिद्धं स्थालीपाकवत् । हुतशेषमन्नं प्राश्नाति भद्रान्नः श्रेयः समनैष्ट देवा इति । एवमेव संवत्सरस्यर्तुषु तदृतुफलमिश्रेणान्नेन प्रत्यृतु होतव्यम् । प्रधानकाले मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्च इषश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्च इति षडृतुद्वन्द्वं यजेत । स्विष्टकृत्प्रभृतिवत् शेषं च
४ अथातःस्थागरमलङ्कारं अथवैश्वदेवस्य अथातःपञ्चदश्यां व्रीह्याग्रयणेन चत्वारि

इत्याग्निवेश्यगृह्यसूत्रे प्रथमप्रश्ने सप्तमोऽध्यायः

प्रथमः प्रश्नः समाप्तः

## अथ द्वितीयः प्रश्नः

### प्रथमोऽध्यायः

अथातः पुंसवनम् । तृतीयमास्यापूर्यमाणपक्षे पुण्ये नक्षत्रेऽग्निमुपसमाधाय परिस्तीर्य व्याहृतिपर्यन्तं कृत्वा धाता ददातु नो रयिम् इति चतस्रो धात्रीर्जुहोति । इमं मे वरुण तत्वायामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि प्रजापते यदस्य कर्मणोऽत्यरीरिचम् इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति । यथा पुरस्ताद् ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिम् इति वाचयित्वा स्नातां प्रयतवस्त्रामलङ्कृतां ब्राह्मणसम्भाषाम् पत्नीम् अपरेणाग्निं मण्डलाकारे प्राचीमुपवेश्य वृषासि इति दक्षिणे पाणौ यवमादधाति आण्डौ स्थ इत्यभितो यवसर्षपौ धान्यमाषौ वा । श्वापृतद् इति दधिद्रप्सं तदैनां प्राशयति । आचान्ताया उद्रमभिमृशति आभिष्ट्वाहं दशभिरभिमृशामि दशमास्याय सूतवे इति । न्यग्रोधशृङ्गं वा घृतेन कोशकारीं वा प्रैयङ्गवेण संयावेन यूपशकलं वोत्तरपूर्वस्याभिष्टेरग्निं वा निर्मथ्य मूर्मपधानाय इति तस्या

दक्षिणे नासिकाच्छिद्रे प्रणयेत् । यदि गर्भः स्रवेदार्द्रेणास्याः पाणिना त्रिरूर्ध्वं नाभेरुन्मार्ष्टि । पराञ्चं त्वा नार्वाञ्चं त्वष्टा बध्नातु बन्धने । स ऋतूनुपशेष्वा दश मासो अवीरहा इति १ अथातः सीमन्तोन्नयनम् । प्रथमगर्भायाश्चतुर्थे मास्यापूर्यमाणपक्षे पुण्ये नक्षत्रे अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा धाता ददातु नो रयिम् इति चतस्रो धात्रीर्जुहोति । इमं मे वरुण तत्वायामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि प्रजापते यदस्य कर्मणोऽत्यरीरिचम् इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति । यथा पुरस्ताद् ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा स्नातां प्रयतवस्त्रामलङ्कृतां ब्राह्मनसम्भाषामपरेणाग्निं मण्डलाकारे प्राङ्मुखमुपवेश्य त्रैण्या शलल्या शलालुद्रप्समुपसंगृह्य पुरस्तात् प्रत्यङ् तिष्ठन् व्याहृतिभी राकामहं यास्ते राक इति द्वाभ्यामूर्ध्वं सीमन्तमुन्नीयाभिमन्त्रयते सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः । विवृत्तचक्रा आसीनास्तीरे तुभ्यं गङ्गे । विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः इति २ विजननकाले क्षिप्रं सुवनम् । शिरस्त उदकुम्भं निधाय पत्तस्तूर्यन्तीम् अथास्या उदरमभिमृशति । यथैव वायुः पवते यथा समुद्र एजति । एवं ते गर्भ एजतु सह जरायुणापसर्पतु इत्यद्भिर्मार्ष्टि । जाते अश्मनि परशुं निधायोपरिष्टाद्धिरण्यं तेषूपरिष्टात् कुमारं धारयति । अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामासि जीव त्वं शरदः शतम् । अङ्गादङ्गात् सम्भवसि हृदयादधि जायसे आत्मा वै पुत्रनामासि स जीव शरदः शतम् इति । यद्यपरा न पतेत् तदञ्जलिना उदकमादाय मूर्धानमस्या विसिञ्चेत् तिलदेऽवपद्यस्व न मांसमसि नो दलमवपद्यस्व स्वस्त्या इति । उपनिर्हरन्त्यौपासनाग्निमतिहरन्ति सूतकाग्निम् । स एष उत्तपनीय एव । नास्मिन् किञ्चन कर्म क्रियतेऽन्यत्रोद्धूपनात् । अथैनं कणैः सर्षपमिश्रैर्धूपयति । शण्डो मर्क उपवीरः शाण्डिकेर उलूखलः । च्यवनो नश्यतादितः स्वाहा । आलिखविलिखन्ननिमिषन् किं वदन्त उपश्रुति स्वाहा । अर्यम्णः कुम्भिशत्रुं पात्रपाणिं निपुणिं स्वाहा । आन्त्रमुखं सर्षपाणिरुणो नश्यतादितः स्वाहा । केशिनी स्वलोमिनी खजापोजोपका-शिनी अपेत नश्यतादितः स्वाहा । कौवेरिका विश्ववासा रक्षोराजेन प्रेषिताः । ग्रामं सजानयो यन्तीप्सन्तोऽपरिजाकृतान् स्वाहा । एतान् घ्नतैतान् बध्नीतेत्ययं ब्रह्मणो दूतः । तानग्निः पर्यसरत् तानिन्द्रस्तान् बृहस्पतिः । तानहं वेद ब्राह्मणान् प्रमृशतः कूटदन्तान् विकेशान् लम्बनस्तनान् स्वाहा ।

नक्तंचारिण उरस्पेशान् शूलहस्तान कपालपान् स्वाहा ।पूर्व एषां पितेत्युच्चैःश्राव्यकर्णकः । माता जघन्या गच्छन्ती ग्रामे मिथुनमिच्छन्ती स्वाहा । नक्तंचारिणी स्वसा सन्धिना प्रेक्षते कुलम् । या स्वपत्सु जागर्ति तस्यै विजातायां मनः स्वाहा । तासां त्वं कृष्णवर्त्मने क्लोमानं हृदयं यकृत् । अग्ने अक्षीणि निर्दह स्वाहा इति प्रतिमन्त्रमङ्गारेष्वावपति । ततः पाणिं प्रक्षाळ्य भूमिमालभते यत्ते सुसीमे हृदयं दिवि दन्द्रमसि श्रितम् । तस्यामृतस्य नो धेहि माहं पौत्रमघं रुदम् । वेदसे भूमि हृदयं दिवि चन्द्रमसि श्रितम् । तस्यामृतस्य नो धेहि माहं पौत्रमघं रुदम् इति ३ अथातो मेधाजननम् । अथ दर्भेण हिरण्यं प्रवध्य तदन्तर्धाय प्राञ्चं धार्यमाणं घृतं प्राशयति भूत्र्यृचस्त्वयि जुहोमि स्वाहा । भुवो यजूँषि जुहोमि स्वाहा । स्वः सामानि त्वयि जुहोमि स्वाहा । भूर्भुवःस्वः अथर्वाङ्गिरसस्त्वयि जुहोमि स्वाहा इति । अथैन-मुष्णशीताभिरद्भिः स्नापयति क्षेत्रियै त्वा निर्ऋत्यै त्वा द्रुहो मुञ्चामि वरुणस्य पाशात् । अनागसं ब्रह्मणे त्वा करोमि शिवे ते द्यावापृथिवी उभे इमे । शं ते अग्निः सहाद्भिरस्तु शं द्यावापृथिवी सहौषधीभिः । शमन्तरिक्षं सह वातेन ते शं ते चतस्त्रः प्रदिशो भवन्तु । सूर्यमृतं तमसो ग्राह्या यद् देवा अमुञ्चन्नसृजन् व्येनसः । एवमहमिमं क्षेत्रियाज्यामि शंसाद् द्रुहो मुञ्चामि वरुणस्य पाशाद् इति । अथैनं मातुरुपस्थ आदधाति या देवीश्चतस्त्रः प्रदिशो वातपत्नीरभि सूर्यो विचष्टे । तासां त्वा जरस आदधामि प्रयक्ष्म एतु निर्ऋतिं पराचैः इति । आधायाभिमन्त्रयत्रे मा ते पुत्रं रक्षो हिंसीर्मा धेनुरतिधारिणी । प्रिया धनस्य भूया एधमाना स्वे वशे इति । प्रक्षाळ्य दक्षिणं स्तनमाधापयति अयं कुमारो जरां धयति सर्वमायुरेति । यस्मै त्वँ स्तन प्रप्यायायुः कीर्तिर्वर्चो यशो बलम् इति । एवं सव्यं स्तनं च । नामयति न रुदति यत्र वयं वदामसि । यत्र चाभिमृशाम इति मातापितरौ कुमारमभिमृशतः । आपो गृहेषु जाग्रत । यथा देवेषु जाग्रत । एवमस्यै सुपुत्रायै जाग्रत इति सम्पूर्य मातुः शिरःस्थाने अपिहितमुदकुम्भं निदधाति । प्रतिदिवसं कर्णैरुद्धूपनं कर्तव्यम् ४ द्वादश्यां मातापुत्रयोः स्नानानन्तरं गृहमलङ्करोति । सूतकाग्निमुद्रास्यौपासनाग्निं निधाय जातस्य कुमारस्य नाम धास्यावः इति मातापितरौ सङ्कल्पं कुरुतः । अनन्तरमौपासनाग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा धाता ददातु नो रयिम् इति चतस्त्र आहुतीः सीमन्तवद् हुत्वा अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतां दाशुषे पयः स्वाहा । अनुमत्या इदम् ।

अन्विदनुमते त्वं मन्यासै शं च नः कृधि । क्रत्वे दक्षाय नो हिनु प्रण आयूँषि तारिषः स्वाहा । अनुमत्या इदम् । अनुमन्यतामनुमन्यमाना प्रजावन्तँ रयिमक्षीयमाणम् । तस्यै वयँ हेडसि मापि भूम सा नो देवी सुहवा शर्म यच्छतु स्वाहा । अनुमत्या इदम् । यस्यामिदं प्रदिशि यद् विरोचतेऽनुमतिं प्रतिभूषन्त्यायवः । यस्या उपस्थ उर्वन्तरिक्षँ सा नो देवी सुहवा शर्म यच्छतु स्वाहा । अनुमत्या इदम् । राकामहँ सुहवाँ सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरँ शतदायमुक्थ्यं स्वाहा । राकाया इदम् । यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषँ सुभगा रराणा स्वाहा । राकाया इदम् । सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवी दिदिड्ढि नः स्वाहा । सिनीवाल्या इदम् । या सुपाणिः स्वङ्गुरिः सुषूमा बहुमूवरी । तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन स्वाहा । सिनीवाल्या इदम् । कुहूमहँ सुभगां विद्मनापसमस्मिन् यज्ञे सुहवां जोहवीमि । सा नो ददातु श्रवणं पितृणां तस्यास्ते देवि हविषा विधेम स्वाहा । कुह्वा इदम् । इति द्वादश त्रयोदश वाहुतीर्हुत्वा इमं मे वरुण तत्वा यामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि प्रजायते यदस्य कर्मणोऽत्यरीरिचम् इति च । अत्रैके जयाभ्यातानान राष्ट्रभृत इत्युपजुह्वति । यथा पुरस्तात् ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धि-मिति वाचयित्वा पुत्रस्य नाम दद्यात् । द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्टानान्तम् । यत्र वा स्वित्युपसर्गः स्यात् तद्धि प्रतिष्ठितम् इति विज्ञायते । पिता मातेत्यग्रेऽभिव्याहरेयाताम् । विज्ञायते च मम नाम प्रथमं जातवेद इति । द्वे नामनी कुर्यात् । विज्ञायते च तस्माद् द्विनामा ब्राह्मणोऽर्धुक इति । नक्षत्रनाम द्वितीयं स्यात् । अन्यतरद् गुह्यं स्यात् । अन्यतरेणैन-मामन्त्रयेरन् । सोमयाजी तृतीयं नाम कुर्वीत इति विज्ञायते । प्रवासादेत्य आगतं वा पुत्रमभिमृशति सोमस्य त्वा द्युम्नेनाभिमृशाम्यग्नेस्तेजसा सूर्यस्य वर्चसा इति । पशूनां त्वा हिङ्कारेणाभिजिघ्राम्यसौ । आयुषे वर्चसे हुतम् इति मूर्ध्यभिघ्रायाथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति अग्निरायुष्मान् इति पञ्चभिः पर्यायैः । आयुष्टे विश्वतो दधद् इति दक्षिणे कर्णे जपति यथा पुरस्तात् । ५ अथातःपुंसवनम् अथातःसीमन्तोन्नयनं विजनन-काले अथातो मेधाजननं द्वादश्यां पञ्च ।

इत्याग्निवेश्यगृह्यसूत्रे द्वितीयप्रश्ने प्रथमोऽध्यायः

अथ द्वितीयोऽध्यायः

संवत्सरे संवत्सरे षट्सु षट्सु मासेषु चतुर्षु चतुर्षु मासि मासि वा जन्मनक्षत्रे क्रियेत । अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जुहोति अग्निर्मूर्धा भुव इति द्वाभ्याम् । अथ नक्षत्रदेवताभ्याम् ऋग्भ्यां जुहोति यथालिङ्गम् अनु नोऽद्यानुमतिः अन्विदनुमते इति द्वाभ्याम् । अवत्ते स्विष्टकृत्यथाज्याहुतीरुपजुहोति । नक्षत्रदेवताभ्यो हुत्वा चन्द्रमसे स्वाहा । प्रतीदृश्यायै स्वाहा । अहोरात्रेभ्यः स्वाहा । अर्धमासेभ्यः स्वाहा । मासेभ्यः स्वाहा इति मासि मासि वा ऋतुभ्यः स्वाहा इत्यृतावृतौ संवत्सराय स्वाहा इति संवत्सरे । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् । आयुरसि इति प्रागन्नप्राशनादाज्यशेषं प्राशयति । आचामति जठरमभिमृशति यत इन्द्र भयामहे ततो नो अभयं कृधि स्वस्तिदा विशस्पतिः इति द्वाभ्याम् । एतदायुष्यमायुष्यम् १ अत ऊर्ध्वं संवत्सरे संवत्सरे जन्मनक्षत्रे क्रियेत । अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जुहोति अग्निर्मूर्धा भुव इति द्वाभ्याम् । अथ नक्षत्रदेवताभ्यामृग्भ्यां जुहोति यथालिङ्गं नवो नवो भवति जायमान इत्येतेनानुवाकेन । प्रत्यृचं द्वाभ्यां द्वाभ्यामाग्नेयमपोद्धृत्यानुमतीं जुहोति । अवत्ते स्विष्टकृत्स्यथाज्याहुतीरुपजुहोति नक्षत्रदेवताभ्यो हुत्वा चन्द्रमा वा अकामयत इत्येतेनानुवाकेन स्वाहाकारैः । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् । आयुरसि इति हुतशेषमन्नं प्राशयति । आचामति जठरमभिमृशति यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः इति द्वाभ्याम् । एतदायुष्यमायुष्यम् २ अत ऊर्ध्वं चतुर्थे मास्युपनिष्क्रामणं षष्ठेऽष्टमे वा हस्ते तिष्यपुनर्वस्वनूराधाश्विरेवत्यामेकतमस्मिन् नक्षत्रे कृतस्वस्त्ययनमपदातिं शिशुं मात्रा छत्रिणं चतुष्पथे नयेत् । यच्चात्र स्त्रिय आहुस्तत् कुर्वन्ति ३ अथ षष्ठे मास्यन्नप्राशनम् । आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति इमं मे वरुण तत्वा यामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि प्रजापते यदस्य कर्मणोऽत्यरीरिचम् इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति । यथा पुरस्ताद् ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा अथैनं दधि मधु घृतमिति त्रिवृत् प्राशयति भूस्त्वयि ददामि भुवस्त्वयि ददामि स्वस्त्वयि ददामि भूर्भुवःस्व-

स्त्वयि ददामि इति । अथैनमन्नं प्राशयति अपां त्वौषधीनां रसं प्राशयामि । शिवास्त आप ओषधयो भवन्तु । अनमीवास्त आप ओषधयो भवन्तु इति ४ तृतीये वर्षे चौळकर्म । आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति इमं मे वरुण तत्वा यामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि प्रजापते यदस्य कर्मणोऽत्यरीरिचम् इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति । यथा पुरस्ताद् ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा अपरेणाग्निं प्राङ्मुखः कुमार उपविशति । उत्तरतो माता ब्रह्मचारी वा आनडुहं शकृत्पिण्डं धारयति येनास्य केशान् प्रतिगृह्णाति । अथोष्णाः शीताभिरपः संसृजति । शीतासूष्णा आनीय आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे इति दक्षिणं गोदानमनक्ति । ओषधे त्रायस्वैनम् ऊर्ध्वाग्रमोषधीरन्तर्दधाति । स्वधिते मैनँ हिंसीः इति क्षुरेणाभिनिदधाति । देवश्रूरेतानि प्रवपे इति प्रवपति । एवमितरान् प्रद-क्षिणम् । येनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्योजेमं रय्या वर्चसा सँसृजाथ इति पश्चात् येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चापुषेऽवपत् तेनदेऽहं वपाम्यसौ इत्युत्तरतः यथा ज्योक् सुमना असाः । ज्योक् च सूर्यं दृशे इति पुरस्ताद् उप्त्वा यथोदितं चौळं कारयति । यथऋषि वा । सन्नयस्य केशान् यत्र पूषा बहस्पतिः सविता सोमो अग्निः । तेभ्यो निधानं बहुधा व्यैच्छन्नन्तरा द्यावापृथिवी अपः सुवः इति गोष्ठौदुम्बरे दर्भस्तम्बे वा निखनति योऽस्य रातिर्भवति । यथाश्रद्धं ब्राह्मणाय ददाति । सर्पिष्मन्तमोदनं नापिताय प्रयच्छति । इत्येवं विहितं षोडशे वर्षे गोदानकर्म सशिखं वापयते । शिखामात्रमतिशिनष्टि इत्येकेषाम् । अग्निगोदानो वा भवति । गुरवे गां ददाति ५ संवत्सरेसंवत्सरे अतऊर्ध्वं चतुर्थेमास्युपनिष्क्रामणम् अथषष्ठे मास्यन्नप्रशनं तृतीयेवर्षे पञ्च ।

इत्याग्निवेश्यगृह्यसूत्रे द्वितीयप्रश्ने द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

अथ शुचौ समे देशेऽग्न्यायतने शकलेन त्रिः समुद्धत्य शकलं निरस्याप उपस्पृश्याग्निमद्भिरवोक्ष्योद्धन्ति । यदेवास्यामेध्यं तदपहन्त्यपोऽवोक्षति शान्त्या इति ब्राह्मणम् । पञ्चप्रस्थं शुचि शुक्लं सिकतमनार्द्रं विविच्य स्थण्डिलं कृत्वा समचतुरश्रमरत्निमात्रम् उदक्प्राक्प्रवणं प्रादेशमात्रं व्रीहि-

भिर्दक्षिणतः प्राचीं लेखां लिखति एवं मध्यममेवमुत्तरतः । व्रीहिभिः पश्चादुदीचीं लेखां लिखति एवं मध्यममेवं पुरस्तात् । व्रीहीनपोह्याप उपस्पृश्याद्भिरवोक्ष्य ॐ भूर्भुवःस्वरों प्रतिष्ठ इत्यग्निमुपसमाधाय बर्हिररत्निमात्रं षट्त्रिंशदङ्गुलं तिस्रः शम्याः परिधयो मध्यमाङ्गुल्यानामिकया कनिष्ठिकयेति स्थविष्ठो मध्यमोऽणीयान् दक्षिणतोऽणिष्ठो ह्रसिष्ठ उत्तरतः समिद्द्वादशा-ङ्गुष्ठमष्टादश याज्ञिकं काष्ठं प्रोक्षणीमाज्यस्थालीं प्राजापत्यभाजनं प्रस्थचतुर्भागं पूर्णप्रस्थद्विभागं प्रणीताप्रणयनं प्रस्थचरुस्थालीं वदानप्रमाणमङ्गुष्ठपर्वोक्तम् आहुतिप्रमाणं चतुरङ्गुलं दर्वीप्रभाणमेकविंशतिमङ्गुष्ठं तस्याश्चतुर्दशाङ्गुष्ठं पूर्वभागं तस्य द्व्यङ्गुष्ठमुन्नतं पञ्चाङ्गुष्ठं बिलमेवं स्रुक् प्रादेशमात्रं पवित्रमेव-मुपवेषणमिति होमप्रमाणनिर्देशो व्याख्यातः १ अथातो नान्दीमुखेभ्यः पितृभ्यः पूर्वेद्युः कर्म व्याख्यास्यामः । आपूर्यमाणपक्षे पुण्ये नक्षत्रे श्वः करिष्यामीति श्वो भूते वान्नं संस्कृत्य शुचीन् श्रोत्रियान् ब्राह्मणानामन्त्रयते । शुचि शुक्लमनार्द्रमाच्छाद्य यज्ञोपवीत्यप आचम्य चतुर्वारं शुक्लान् वलीन् हरति दधितण्डुलसुरभिशुक्लाः सुमनस इति अग्न्यायतने प्रागग्रान् दर्भान् संस्तीर्य तेष्वष्टौ बलीन् ददाति अग्नये सोमाय प्रजापतये विश्वेभ्यो देवेभ्यः ऋषिभ्यो भूतेभ्यः पितृभ्यः सर्वाभ्यो देवताभ्यो नमः इति । हविष्यमन्नं ब्राह्मणेभ्यः प्रदापयति । दध्ना माषमत्स्यमांसभक्ष्याशनमित्यपरम् । अथ चतुष्टयमादाय व्रीहियवपुष्यसर्षपाणीति सह तैरेवोदकुम्भमादाय ॐ मनः समाधीयतां प्रसीदन् भवन्तः इत्युक्त्वा सप्रणवनान्दीमुखाः पितरः प्रीयन्ताम् इत्येवं यथार्थयितरे प्रतिब्रूयुः । अस्य कर्मणः पुण्याहं वक्ष्यामः । स्थण्डि-लाद्युपनान्दिं कृत्वापआदिशिखान्तिकं करोति । पुनःकल्पनाद्यानमस्कारं कृत्वान्वाहार्यादिप्रणवादिकं करोति । अन्यत्र जातकर्मनामकरणयोः पूर्वेद्युः सन्तिष्ठते नान्दीश्राद्धः सन्तिष्ठते नान्दीश्राद्धः २

तत्र तत्र विनिर्दिष्टं पुण्याहादिविवाचनम्
कर्माङ्गं च विशुद्ध्यर्थं विस्तरेण मयोच्यते

पुण्याहं वाचयिष्यन् हि शुक्लाम्बरधरः शुचिः
पवित्रपाणिराचान्तः ततः कर्म समारभेत्

श्रोत्रियान् क्षाळितपदानाचान्तांश्च द्विजोत्तमान्
दर्भोपक्लृप्तासनेषु शुचीन् युग्मान् प्रवेशयेत्

उपविश्य नवं कुम्भमद्भिः प्रक्षाळय पूरयेत्
शुभाननमकल्माषमाढकापूरितं ततः

अर्चयेद् गन्धपुष्पाद्यैरक्षतैश्च फलान्वितैः
सादयित्वाथ दर्भेषु सकूर्चं पिहिताननम्

अर्चयेत्तु ततः सम्यगुपविष्टान् द्विजोत्तमान्
आपो गन्धाः सुमनस इति दद्याज्जलादिकम्

शिवा आपः सन्त्विति च सुमन्धाः पान्त्वितीति च
सौमनस्यमिति ब्रूयुरस्त्वन्तमितरे द्विजाः

शिवं कर्मेति चेत्युक्त्वा ब्राह्मणानां ददौ जलम्
आपः स्वस्ति शिवं कर्मेत्यस्त्वन्तमितरे द्विजाः

भोज्यं दद्यात् ततस्तेभ्यो अन्वाहार्य इति द्विजः
ओदनं तण्डुलं वापि स्वन्वाहार्योऽस्त्वितीतरे

गृह्णीयुर्दक्षिणां दद्याद् दक्षिणा इति च द्विजाः
स्वस्त्यादि दक्षिणाः पान्तु बहु देयमितीतरे

अस्त्वन्तं प्रतिगृह्णीयुर्दद्यादक्षतमक्षतम्
इत्यक्षतं चारिष्टं चेत्यस्त्वन्तं ब्रूयुरर्चिताः

वाचयेत्तु करस्थाना नामे भुक्तवतः श्रिते
उत्तिष्ठेयुस्ततः पश्चान्मनः समाधीयतामिति

समाहितमनसः स्मः प्रसीदन्तु भवन्त्विति

प्रसन्नाः स्म इति ब्रूयुः शान्तिपुष्टीति चोच्यते

तुष्टिऋृद्धी अविघ्नमस्त्विति आयुष्यमिति चोच्यते आरोग्यं शिवं कर्मास्तु इत्यूचुर्ब्राह्मणा निशम् । सप्रणवम् अस्तु इति ब्रूयुः । प्रजापतिः प्रीयताम् । प्रीयतां भगवान् प्रजापतिः । एवं तत्तत्कर्मणि विहिता वाच्याः । पुण्याहं भवन्तो ब्रुवन्तु । ओं पुण्याहम् इति ओं पुरमस्वामिनाम्निः स्वस्तिं भवन्तो ब्रुवन्तु । ओं स्वस्ति । ओं ऋृद्धिं भवन्तो ब्रुवन्तु । ओं ऋृद्ध्यताम् । ओं त्रिः । पुण्याहसमृद्धिरस्तु शिवं कर्मास्तु । एवं प्रतिवचनम् । नान्दीमुखाः पितरः प्रीयन्ताम् । भगवन्तो नान्दीमुखाः पितरः इति प्रतिवचनम् । आपोहिष्ठादिभिर्मन्त्रैः प्रणीताप्रोक्षणवद् आत्मानं प्रोक्षयेत् । पुण्याहं समाप्तम् ४ अथ कौतुकं व्याख्यास्यामः परमस्वामिशर्मणः कुमारस्य कौतुकबन्धं करिष्य इति सङ्कल्प्य तण्डुलमुदकुम्भं वराहविषाणं च कण्टकिनं च शङ्खमादर्शमञ्जनं कौतुकतन्तुं चादाय एकत्र निधाय निशायां गृहं सभाच्छादनविधा नाद्यैरलङ्कृत्य गोमयेनोपलिप्य व्रीहिभिः स्थण्डिलं कृत्वा स्थण्डलोत्तरे कुम्भं निधाय कुम्भस्य दक्षिणतः सम्भारान् निधाय सुप्रक्षाळितपाणिपादान् चतुरो ब्राह्मणान प्रतिदिशमुपवेश्य दर्भेष्वासीनः कर्मोपक्रमं करोति । संस्कार्यं कुमारमात्मनो दक्षिणत उपवेश्य आपो हि ष्ठा मयोभुव इति तिसृभिः स्वहृदयं प्रोक्ष्य ब्राह्मणैः सहैताननुवाकान् जपति कृणुष्व पाजः प्रसितिं न पृथ्वीम् इन्द्रं वो विश्वतस्परि हवामहे आशुःशिशान इति । ममाग्ने वर्चो विहवेष्वस्तु अग्नेर्मन्वे प्रथमस्य प्रचेतसः इन्द्रो दधीचो अस्थभिः चक्षुषो हेते मनसो हेते भ्रातृव्यं पातयामसि इत्यन्तम् । एताननुवाकान् जपित्वा मातुलः कुमारस्य समीप उपविश्य त्रीणि शलल्यादिशङ्खपर्य-न्तान्यादाय कुमारस्य दक्षिणं बाहुमन्ववहृत्य त्रिः प्रदक्षिणमावर्तयते । अथाञ्जनमादाय दक्षिणेनाङ्क्ते । आदर्शमादाय मुखं दर्शयति । तन्तुमादाय रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रयिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम् विश्वेत्ताते सवनेषु प्रवाच्या या चकर्थ मघवन्निन्द्र सुन्वते । पारावतं यत्पुरुसंभृतं वस्वपावृणोः शरभाय ऋृषिबन्धवे इति तन्तुं प्रबध्य बृहत्साम क्षत्रभृद् वृद्धवृष्णियं त्रिष्टुभौजः शुभितमुग्रवीरम् । इन्द्रस्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष इति रक्षां करोति । अथ तण्डुलमादाय वसवस्त्वा रुद्रैः पुरस्तात् पान्तु सर्पिर्ग्रीवी

पीवर्यस्य जाया आशिषमेवैतामाशास्ते पूर्णपात्रे नवो नवो भवति जायमानः त्रियम्बकं यजामहे विष्णो त्वन्नो अन्तमः विष्णोर्नुकं वीर्याणि प्रवोचम् इत्येवमादिऋग्यजुर्भिः रक्षां करोति । एवं स्त्र्यापः सव्यं बाहुमनु पर्यावृत्य प्रदक्षिणमावर्तयते । यत्र नान्दीश्राद्धं तत्र कौतुकमित्याह भगवानाग्निवेश्यः ५ अथशुचौसमेदेशे अथातोनान्दीमुखेभ्यः तत्रतत्र अथवैभवतिश्रद्धया अथकौतुकं पञ्च ।

इत्याग्निवेश्यगृह्यसूत्रे द्वितीयप्रश्ने तृतीयोऽध्यायः

## अथ चतुर्थोऽध्यायः

शालां करिष्यन्नुदगयन आपूर्यमाणपक्षे रोहिण्यां मृगशिरसि तिष्य उत्तरयोः फल्गुन्योर्हस्ते चित्रायां विशाखयोरेतेषु स्नायात् । यत्रापस्तद् गत्वाग्नि-मुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति इमं मे वरुण तत्त्वा यामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि प्रजापते यदस्य कर्मणोऽत्यरीरिचम् इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति । यथा पुरस्ताद् ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वाहतं वासः परिधायाप उपस्पृश्य देवस्य त्वा इत्यग्निमादाय परिलिखितम् इति त्रिः प्रदक्षिणं परिलिख्य यथार्थम् अवटान् खात्वाभ्यन्तरे पांसून् करोति । हैव ध्रुवां निमि-नोमि शालां क्षेमे तिष्ठतु घृतमुक्षमाणाम् । तां त्वा शाले सर्ववीराः सुवीरा अरिष्टवीरा अनुसञ्चरेम इति दक्षिणां द्वारस्थूणामुच्छ्रयति । हैव ध्रुवा प्रतितिष्ठ शालेऽश्ववती गोमती सूनृतावती । ऊर्जस्वती पयसा पिन्वमानोच्छ्रयस्व महते सौभगाय इत्युत्तराम् । आ त्वा कुमारस्तरुण आवत्सो जगतः सह । आ त्वा हिरण्मयः कुम्भ आदध्नः कलशीरयन् इति सम्मितेऽभिमृशति । एवमेव स्थूणावुच्छ्रयति । एवमभिमृशति । ऋतेन स्थूणावधिरोह वंशोग्रो विराजन्नपसेध शत्रून् । अथास्मभ्यं सहवीरां रयिं दा इति पृष्ठवंशणरोपय-ति । मा नः सपत्नी शरणा स्योना देवीर्देवेभिर्विमितास्यग्रे । तृणं वसाना सुमना स्त्वं शन्न एधि द्विपदे शं चतुष्पदे इति छन्नामभिमृशति । ततो रुराळे वास्तुशमं निशायामन्तरागारेऽग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति वास्तोष्पते वास्तोष्पते इति द्वे १ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान् प्रति नो जुषस्व स्वाहा । अपैतु मृत्युरमृतं न आगन् वैवस्वतो नो अभयं कृणोतु । पर्णं

वनस्पतेरिवाभिः नः श्रीयताँ रयिः सचतां नः शचीपतिः स्वाहा । परं मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृष्वते ते ब्रवीमि मा नः प्रजाँ रीरिषो मोत वीरान् स्वाहा । इमं मे वरुण तत्त्वा यामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि प्रजापते यदस्य कर्मणोऽत्यरीरिचम् इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति इत्याह भगवानाग्निवेश्यः २ अथ तटाककल्पं व्याख्यास्यामः नाभ्यर्च्य यूपमुपतिष्ठते । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् इति । अथ प्रदक्षिणमावृत्य प्रत्यगधिश्रित्य जघनेन यूपं स्थण्डिलं कृत्वाग्निमुपसमाधाय संपरिस्तीर्याग्निमुखात् कृत्वा जुहोति इमं मे वरुण तत्त्वा यामि इति द्वाभ्याम् । ओषधिवनस्पतिभ्यां पक्वाज्जुहोति या जाता ओषधय इति द्वाभ्याम् । अथ प्रासादात् पक्वाज्जुहोति वास्तोष्पते वास्तोष्पत इति द्वाभ्याम् । अथाज्याहुतीरुपजुहोति । ब्रह्मणे स्वाहा । रुद्राय स्वाहा । यमाय स्वाहा । वरुणाय स्वाहा । निर्ऋत्यै स्वाहा । श्रियै स्वाहा । यशस्कराय स्वाहा । अह्ने स्वाहा । रात्र्यै स्वाहा । सूर्याय स्वाहा । चन्द्रमसे स्वाहा । नक्षत्रेभ्यः स्वाहा इति द्वादशाहुतीर्जुहोति । कूप्याभ्यः स्वाहा अद्भ्यः स्वाहा इत्येतमभ्यनुवाकम् । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् । पायसतिलचूर्णं पयोमिश्रं सलक्षणं सम्पूर्णं बलिं कृत्वा बलीन् संप्रकीर्य यमसूक्तं पुरुषसूक्तं वाचयित्वोर्मिमन्तम् उदधिं कृत्वा स्नात्वाचम्याहतं वासः परिधाय दक्षिणां ददाति । हिरण्यं धान्यं ब्राह्मणेभ्यो ददाति । नृत्तगीतवाद्यादीनि घोषयित्वा सर्वलोकमलङ्कृत्य विष्णुलोकं गच्छतीत्याह भगवानाग्निवेश्यः ३ अथ कूश्माण्डैर्जुहुयाद् याऽपूत इव मन्येत यथा स्तेनो यथा भ्रूणहैवमेष भवति योऽयोनौ रेतः सिञ्चति । अत्र स्वप्नान्तरे रेतः पतेदपिवा स्त्रीकामो वा । अमावास्यायां पौर्णमास्यां वा केशश्मश्रुलोमनखानि वापयित्वा स्नातः शुद्धवासा ब्रह्मचारिकल्पेन व्रतमुपैति वत्सरं मासं चतुर्विं शतिमहोरात्रं द्वादशरात्रं षड्रात्रं त्रिरात्रं वा । न मांसमश्नीयान्न स्त्रियमुपेयान्नोपर्यासीत जुगुप्सेतानृतात् । पयोभक्ष इति प्रथमः कल्पः । यावकं वोपयुञ्जानः कृच्छ्रं द्वादशराशं चरेत् । भिक्षेद्वा । यवागूं राजन्यो वैश्य आमिक्षाम् । पूर्वाह्णे पाकयज्ञिधर्मेणाग्निं प्रणीयोपसमाधाय यद्देवा देवहेळनं यददीव्यन्नृणमहं बभूव आयुष्टे विश्वतो दधद् इत्येतैस्त्रिभिरनु-वाकैः प्रत्यृचमाज्येन हुत्वा सिंहे व्याघ्र उत या पृदाकौ इति चतस्र आहुतीः

अग्नेऽभ्यावर्तिन् अग्ने अङ्गिरः पुनरूर्जा सह रय्या इति चतस्र आहुतीर्हुत्वा समित्पाणिः यजमान आयतनेऽवस्थाय वैश्वानराय प्रतिवेदयाम इति द्वादशर्चेन सूक्तेनोपस्थाय यन्मे मनसा वाचा कृतमेनः कदाचन । सर्वस्मात् तस्मान्मेळितो मोग्धि त्वँ हि वेत्थ यथातथं स्वाहा इति समिधमाधाय वरं ददाति । जयाप्रभृति सिद्धमा धेनुवरप्रदानात् । एकस्मिन्नेवाग्नौ परिचर्य अथाग्न्याधेये यद्देवा देवहेळनम् यददीव्यन्नृणमहं बभूव आयुष्टे विश्वतो दधद् इति पूर्णाहुतिं हुत्वाग्निहोत्रमारप्स्यमानो दशहोतारं हुत्वा दर्शपूर्णमासा-वारप्स्यमानश्चतुर्होतारं हुत्वा चातुर्मास्यमारप्स्यमानः पञ्चहोतारं हुत्वा पशुबन्धं षड्ढोतारं सोमे सप्तहोतारम् । कर्मादिष्वेतैर्जुहुयादिति विज्ञायत इति हि ब्राह्मणम् इति ब्राह्मणम् ४ अथातः पूतकामोऽग्नीनाधास्यमानो वान्यत्तु महत् कर्म समारभेद्वा । पूर्वपक्षे पुण्ये नक्षत्रे पूर्वकालमुपोष्योपव्युषसि ग्रामात् प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य कृतशौचः कृताचमनो यथोदितं स्नानं कृत्वा नदीषु वा शुद्धजलाशये वा गृहं प्रत्येत्य शुचिः शुक्लमनार्द्रमाच्छाद्या-ग्निमुपसमाधाय दर्शवत् कृत्वा निर्वपणकाले देवस्य त्वा इत्यनुद्रुत्य गणाय जुष्टं निर्वपामि इति त्रीन् मुष्टीन् यजुषा तूष्णीं चतुर्थम् । आज्येन श्रपयति । आ अग्निमुखात् कृत्वा घृतान्नेन जुहुयात् । क्ष्मापवित्रः सहस्राक्षो मृगारां-होमुचौ गणौ । पावमान्यं च कूश्माण्ड्यो वैश्वानर्य ऋचश्चायः प्रत्यृचं जुहुयात् । इमं मे वरुण तत्त्वा यामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि प्रजापते यदस्य कर्मणोऽत्यरीरिचम् इत्याहुतीर्जुहुयात् । जयाप्रभृति सिद्धमा धेनु-वरप्रदानात् । अत्र गुरवे मां दत्त्वा पत्नीभिः सह कृतमङ्गळश्चतुष्पथं गत्वा गोमयेन गोचर्यमात्रं चतुरश्रं स्थण्डिलमुपलिप्य पात्रं निधाय परिस्तीर्याद्भिः पूरयस्यवेक्षमाणः पाप्मानो विधत्वायति सिंहे मे मन्युः इत्यान्तादनुवाकम् । अथ पात्रमादाय प्राङ्मुखस्तिष्ठन् अपेहि पाप्मन् पुनरपनाशिनो भवा नः पाप्मन् सुकृतस्य लोके पाप्मन् धेह्यविहृतो यो नः पाप्मन्न जहाति तमु त्वा जहि नो वयम् । अन्यत्रास्मिन्निविशतात् सहस्राक्षो अमर्त्यः । यो नो द्वेष्टि स ऋृष्यन्ति यमु द्विष्मस्तमु जहि इति पृष्ठतो निधायाप उपस्पृश्य प्रदक्षि-णमावर्तयेत् । एवमेव सप्ताहं सवनत्रयम्

कुर्यान्मौनी हविष्याशी निगृहीतेन्द्रियक्रियः
मुच्यते सर्वपापेभ्यो महतः पातकादपि

वृद्धत्वे यौवने बाल्ये वा कृतः पापसञ्चयः
पूर्वजन्मसु वा जातस्तस्मादपि विमुच्यते

भोजानान्ते द्विजातीनां पायसान्नेन सर्पिषा
गोभूतिलहिरण्यानि भुक्तवद्भ्यः प्रदापयेत्

एवं कृत्वा सर्वान् लोकान् जयतीत्याह भगवानाग्निवेश्यः ५

अथ शताभिषेकं व्याख्यास्यामः । सहस्रमासं पर्यवसितमिति चेच्छत-संवत्सर उदगयनापूर्यमाणे पुण्ये नक्षत्रे ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनम् ऋद्धिमिति वाचयित्वा अथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वोपोत्थायाग्रेणाग्निं प्रतिदिशं व्रीहितण्डुलैः सर्वासु दिक्षु चतुरश्रं स्थण्डिलं कृत्वा फलैः पुष्पैस्तण्डुलैरक्षतैर्यवैस्तिलैः संप्रकीर्य प्रादेशमात्रे समे प्राचीनाग्रे कूर्चे कृत्वा प्रागग्रैः कूर्चैः स्थण्डिलं निधायाथ स्वर्णं रजतं ताम्रं मृण्मयं वा पञ्चविंशतिं कलशान् सूत्रेण परिवेष्टयित्वा स्थण्डिलेषु निधाय संपरिस्तीर्य जलपवित्रं निधाय सर्वगन्धैः फलैः पुष्पैस्तिलैः संयुक्ते जलपवित्र उदकमा-नयति । कूर्चं निधायाक्षतगन्धपुष्पधूपदीपाद्यैः कलशानलङ्कृत्य सर्वासां दिशां कलशेष्वावाहयति । अथास्य मध्ये ब्रह्माणमावाहयामि । प्रजापति-मावाहयामि । परमेष्ठिनमावाहयामि । हिरण्यगर्भमावाहयामि । स्वयंभुवमावाहयामि । इति आवाह्य पुरस्तादनुक्रमेण इन्द्रादीन् कलशे-ष्वावाहयामीत्यावाह्य परिधानप्रभृत्याग्निमुखात् कृत्वा दैवतमर्चयित्वा अर्घ्यपाद्यादिभिराराध्य यथाविध्ययैनं स्नापयति । आपो हि ष्ठा मयोभुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जनः इत्येतेनानुवाकेन मार्जयित्वैतैरेव नामधेयैः अमुष्मै नमोऽमुष्मै नम इति तर्पयति । गन्धपुष्पाक्षतधूपान् दद्याद् अहतेन वाससा प्रच्छाद्य । द्वदशकलशं वरुणसूक्तं शेषतादन्तः शापधेत्रिकोदकेन यदिवा परेपरेतीतः इति चतसृभि-रनुच्छन्दसम् अग्निरायुष्मान् इति पञ्चभिः पर्यायैः । अथैतैः अभिषेचनं करोति । अथ प्रक्षाळितपाणिपाद आचम्य अहतेन वाससा परिधत्ते । एवमेवोर्ध्वं सर्वगन्धैः चन्दनागरुसंयुतं सर्वाननुलेप्य अथादित्या मुदीक्षयति आ सत्येन इति । अथैनम् उपतिष्ठते उदूयं तमसस्परि उदुत्यं चित्रं तच्चक्षुर्देवहितं य

उदगात् इति । एरकामास्तीर्य तस्यां प्राङ्मुख उपविश्याथाज्याहुतीरुपजुहोति ब्रह्म जज्ञानम् इति षड्भिः । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् । ऋथाग्रेणाग्निं दर्भस्तम्बे हुतशेषं निधाय ऋायुष्टे विश्वतो दधदयमग्निर्वरेरायः ऋायुर्दा ऋग्ने इति द्वाभ्याम् ऋथाज्यशेषे हिरणयं निधाय इन्द्राय त्वा तेजस्वते तेजस्वन्तम् इति चतसृभिः ऋनुच्छन्दसैश्चार्धर्चैः ऋाज्यशेषे प्रतिच्छायां दर्शयति । ममाग्न ऋायुषे वर्चसे कृधि इत्यनेन ब्राह्मणाय ददाति । ऋायुरसि विश्वा-युरसि । सर्वायुरसि सर्वमायुरसि । यतो वासो मनोजवाः इत्यन्तैश्चतसृभि-रनुच्छन्दसैरनुब्राह्मणैराशीर्वाचनमाह । त्रिवृतान्नेन ब्राह्मणान् भोजयित्वाशिषो वाचयित्वा ब्राह्मणेन प्रीयताम् इति । ऋथाशामायुष ग्रामं प्रदक्षिणं करोति । ऋथाच्छादनविशेषैरुपसर्जनैश्चामरैस्तालवृन्तैर्वहति। ऋथ शङ्खैर्गेयादिनि-र्घोषयुक्तैश्च रयवाहनमारोप्य स्वस्तिसूक्तं जपेत् स्वस्ति नोऽमिमीत इत्यादि स्वस्ति सम्बाधेष्वभयं नो ऋस्तु इति समानम् । ऋथ द्वारबलिं करोति । ऋथ गेहान्तरं गत्वा ब्राह्मणान् सम्पूज्याशिषो वाचयित्वाथ बालानामाहुः । सहस्रमायुः सहस्रमासस्तरुणेन्दुं दर्शयित्वाथ पुत्रपौत्रैः ब्राह्मणः सायुज्यं सलोकतां प्राप्नोति इत्याह भगवानाग्निवेश्यः ६ ऋथ ब्राह्मणस्य महापात-कादिपतितकर्माणि भवन्ति चेदत्र सपिराडः किं कुर्यादिति ।

निन्दितेऽह्नि सायाह्ने सपिराडाः सह तिष्ठन्ति
चतुष्पथे तथा कार्यं गोमयेनोपलेपनम्
निन्दितं चैव शीतोष्णमुदकुम्भं प्रतिष्ठिपेत्

ऋस्यदासी ततः पश्चादद्भिः कुम्भं प्रपूरयेत्
उत्तिष्ठन्तः सपिराडास्तमिदं वचनमब्रुवन्

सम्भाषणं च संयानं सभाशयनमेव च
ऋशनं च तथा तेन न च कुर्यादितः परम्

इति वाचं विसृज्यैव कुर्यात् कुम्भं प्रदक्षिणम्
ताडयेद् वामपादस्य पार्ष्ण्या तत् तस्य सन्निधौ

अनवेक्षमाणास्ते सर्वे गत्वा पश्चाद् यथोदितम्
प्रायश्चित्तं यथाशास्त्रं विविधं चाथ चेत् कृतम्

एवं पूतस्ततः पश्चात् स्नात्वा शुद्धे जलाशये
पुण्याहं वाचयित्वा तु प्रविशेच्च चतुष्पथम्

गोमयेनोपलिप्याथ नवकुम्भं प्रतिष्ठिपेत्
दासेराद्भिः प्रपूर्याथ सपिण्डान् पर्युपासयेत्

स्वस्तिवाक्यं ततः कृत्वा कुम्भं कुर्यात् प्रदक्षिणम्
उदं पीत्वाथ कुम्भस्थं स्वगेहं तु प्रवेक्षयेत्

ब्राह्मणान् भोजयित्वाथ सपिण्डैः सह भोजयेत्

एवं हि शुद्धात्मानं पितृपितामहप्रपितामहा अस्य कुलवृद्धाश्चाशिषो वाचयित्वा अत ऊर्ध्वं सर्वान् कामान् स हि कुर्यादिति कुर्यादिति ७ अथ शुभाशुभनिमित्तानां वायसानां बलिविधिं व्याख्यास्यामः । ग्रामात् प्राचीमुदीचीं दिशमुपनिष्क्रम्य गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य प्रोक्ष्य लक्षणमुल्लिख्याद्भिरवोक्ष्य प्रदक्षिणं वायसानामासनं कल्पयति । अङ्कतेभ्यः कल्पयामि । कङ्कतेभ्यः कल्पयामि । कद्रुपुत्रेभ्यः कल्पयामि । वासेभ्यः कल्पयामि । ब्रह्मपुत्रेभ्यः कल्प्लयामि । अथैतानावाहयति । न कपिलान् न कोकिलान् नारिष्टान् न महारिष्टान् वायसमात्रकान् । आयान्तु शकुनाः शीघ्रं वायसा बलिभोजिनः । अङ्कतानामाहयामि । कङ्कतानावाहयामि । कद्रुपुत्रानावाहयामि । वायसानावाहयामि । ब्रह्मपुत्रानावाहयामि इत्यावाह्य आपो हि ष्ठा मयोभुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन मार्जयित्वा अमुष्मै नमोऽमुष्मै नम इति गन्धपुष्पधूपदीपैरभ्यर्च्य अमुष्मै स्वाहामुष्मै स्वाहा इति पायसोदनेन पिण्डं प्रदक्षिणं दद्यात् । अमुष्मै नमोऽमुष्मै नम इत्युपस्थाय

सत्याः स्थ सत्यं वदत सत्ये रमत वायसाः

तत्सत्यमिह नो ब्रूयान्न मिथ्याबलिमश्नीयात्
इत्याह

अथैनं मातृघातेन पितृघातेन वा पुनः
तद् दुष्कृतं प्रतिगृह्णीयाद् यो मिथ्याबलिमश्नीयात्

कपिलानां शतं हुत्वा ब्राह्मणानां विशेषतः
दुष्कृतं प्रतिगृह्णीयाद् यो मिथ्याबलिमश्नीयात्
इति ब्रूयात्

भावाय पूर्वं गृह्णीयादभावाय तु दक्षिणम्
नास्तीत्यपरं चैव भविष्यत्यपि वोत्तरम्

मध्ये सर्वार्थलाभाय इत्याह । एवं ज्ञात्वा सर्वकर्माण्यारभेत् सर्वकर्माण्यारभेदिति ८ अथ यज्ञोपवीतविधिं व्याख्यास्यामः । आपूर्यमाणपक्षे पुण्ये नक्षत्रे ब्राह्मणकन्या ब्राह्मणविधवा वा सुप्रक्षाळितपाणिपादा शुचिः शुक्लमनार्द्रमाच्छाद्य यत्र कार्पासस्तिष्ठति तत्र गत्वा पकफलं परिगृह्य गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य तन्मध्ये यन्त्रं प्रतिष्ठाप्य प्राङ्मुखी उदङ्मुखी वा उपविश्य उपर्युपरि तन्तुं तत्य न कदाचन नीचं करोति । ब्राह्मणाय ददाति । अथ ब्राह्मणो हिरण्येन परिक्रीय वा धान्येन वा धनेन वा सुप्रक्षाळितपाणिपाद अप आचम्य पवित्रपाणिः प्राङ्मुख उदङ्मुखो वोपविश्य दक्षिणहस्ताङ्गुलीभिः श्लिष्टाभिः षडधिकेन नवत्या परिगण्य त्रिगुणीकृतमथाद्भिर्मार्जयति आपो हि ष्ठा मयो भुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन । ब्राह्मणानाहूय प्रागेकः स्थित्वा प्रत्यग् द्वौ स्थित्वा दक्षिणहस्तं परिव्राजेन भूर्भुवःस्वः इति सूत्रं कृत्वा त्रिगुणीकृत्य याज्ञिके वृक्षे विसृजति । तृणेन ताडयति । हस्तेन हस्तं सूत्रमादाय जानुभ्यां परिवेष्टयति भूरग्निं च पृथिवीं च मां च । त्रींश्च लोकान् संवत्सरं च । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद् ध्रुवा सीद इति अथ द्वितीयं भुवो वायुं चान्तरिक्षं च मां च । त्रींश्च लोकान् संवत्सरं च । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद् ध्रुवा सीद

इति अथ तृतीयं स्वरादित्यं च दिवं च मां च । त्रींश्च लोकान् संवत्सरं च । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद् ध्रुवा सीद इति अथ ग्रन्थिं कृत्वा भूर्भुवःस्वश्चन्द्रमसं च दिशश्च मां च । त्रींश्च लोकान् संवत्सरं च प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद् ध्रुवा सीद इति । अथ यज्ञोपवीती भवति यज्ञस्योपवीतेन उपव्ययामि दीर्घायुष्ट्वाय सुप्रजास्त्वाय सुवीर्याय सर्वेषां वेदानामाधिपत्याय श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय इति । आचान्तः सर्वकर्मार्हो भवति सर्वकर्मार्हो भवति ९ अथ देवताराधनं व्याख्यास्यामः । शुचि शुक्लमनार्द्रमाच्छाद्य पवित्रपाणिराचान्तः सन्ध्या-मुपास्याथ कृताग्निकार्यो देवमावाहयेत्

मण्डले स्थण्डिले वाप्सु हृदि दीप्ते च पावके
तथैव प्रतिमायां वा हरिमावाह्य पूजयेत्
हृदयाभ्यन्तरे पद्मं मनसा चिन्तयेद् बुधः

पद्मस्य कर्णिकामध्ये तस्य ज्योतिर्व्यवस्थितम्
ज्योतिर्मध्ये महाविष्णुः शङ्खचक्रगदाधरः

एवं द्वादशनामभिरावाह्य केशवायेति
चन्दनादि प्रदीपान्तैः पूजयेच्च ततः परम्
मण्डळे च तथा सर्वं स्थण्डिले च तथैव च

तथैव पावके दीप्ते हरिमावाह्य पूजयेत्

अथ चेत् प्रतिमां कुर्वन् स्वर्णमयेन वा लोहमयेन वा अशक्तौ शिलामयेन वा शङ्खचक्रगदाधरं चतुर्भुजं कृत्वा अगारे वा विमाने वा प्रतिष्ठाप्य आपो हि ष्ठा मयोभुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेनाभिषेकं करोति । अथ देवमावाहयामि इति केशवादिनामभिरावाह्य अथ वस्त्रं प्रदाय युवं वस्त्राणि इति अथ गन्धं प्रदाय गन्धद्वाराम् इति अथ पुष्पं प्रदाय योऽपां पुष्पं वेद इति अथ धूपं प्रदाय धूरसि इति अथ दीपं प्रदाय उद्दीप्यस्व इति तच्छेषेणानुलेपनं करोति । अर्हणीयमुद-

कम् इत्यथार्घ्यं पाद्यमुदकम् इति पाद्यं दद्याद् आचमनीयमुदकम् इत्याचमनीयम् । अथ चरुं श्रपयति । आढकेन आढकार्धेन वा प्रस्थेन वाज्येन वा पयसि श्रपयति । अथान्नं भवति । प्रदाय सत्यं त्वर्त्तेन परिषिञ्चामि इति ऋतं त्वा सत्येन परिषिञ्चामि इति परिषेचनं करोति । अथान्नमभिमृश्य अहमस्मि प्रथमजा ऋतस्य इति दशर्चेन सूक्तेन अमृतोपस्तरणमसि इति उपस्तरणं करोति । अथ प्राणाहुतिः । प्राणे निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । प्राणाय स्वाहा इति प्राणाय अपाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । अपानाय स्वाहा इत्यपानाय व्याने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । व्यानाय स्वाहा इति व्यानाय उदाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । उदानाय स्वाहा इत्युदानाय समाने निविष्टोऽमृतं जुहोमि शिवो मा विशाप्रदाहाय समानाय स्वाहा इति समानाय एवं पञ्चविधां प्राणाहुतिं करोति । अथ देवमुपस्थाय केशवादिद्वादशनामभिः विष्णोर्नुकं वीर्याणि प्रवोचम् इति जपति । अथावरणं करोति अमृतापिधानमसि इत्यप आनीय पिधाय योऽपामायतनं वेद । आयतनवान् भवति इत्याचमनीयं करोति । अथ ताम्बूलं प्रदाय देवमुद्रासयति । क्षीरार्णवे वा मेरौ वा आदित्यमण्डले वा केशवमुद्वास्य नैवेद्यमप्सु निधाय चतुर्थांशं ब्राह्मणाय ददाति इत्याह भगवानाग्निवेश्यः १० अथातो रविकल्पं व्याख्यास्यामः । आयुष्कामस्य वा तेजस्कामस्य वा यशस्कामस्य वा भूतिकामस्य वा पुत्रकामस्य वा रूपकामस्य वा भवति । न नक्तमश्नीयात् मृच्छयश्च मैथुनवर्जम् । शुचि शुक्लमनार्द्रमाच्छाद्य प्रयतः शुचिर्भवति । अथ श्वोभूते आदित्यवारे आदित्येऽभ्युदितमात्रे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य मध्ये स्वर्णमथवा रजतं वा पद्मं निधाय अथवा भूमौ विलिखेदष्टपत्रं सकर्णिकम्

पूर्वपत्रे न्यसेत् सूर्यमाग्नेय्यां च दिवाकरम्
न्यस्य याम्ये विवस्वन्तं नैर्ऋत्यां तु भगं न्यसेत्

वरुणं पश्चिमे पत्रे वायव्ये चेन्द्रमेव च
सवितारमथैशान्यामादित्यं चोत्तरे न्यसेत्

सकर्णिकापूर्वपत्रे न्यसेदर्कं सवाजिनम्
सहस्रांशुं दक्षिणे च मार्ताण्डं पश्चिमे दिशि

उत्तरे तु रविं देवं तन्मध्ये भास्करं न्यसेत्

एवं द्वादशादित्यान् यथाक्रमं विन्यस्य मध्ये सर्वादित्यरूपं विन्यस्याथाद्भिर्मार्जयते आपो हि ष्ठा मयो भुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन । अथ रक्तचन्दनेन रक्तपुष्पेण रक्तवर्ण आचार्यः अमुष्मै नमोऽमुष्मै नमः इति गन्धपुष्पधूपदीपैरभ्यर्च्य पाद्यमुदकं नमस्कारं कृत्वा अमुष्मै नमोऽमुष्मै नम इति अथ दैवतानुद्वासयति । द्वादशनामभिर्यथा पूर्वमावाहनं करोति तथोद्वासनम् । गुरवे यथाशक्ति दक्षिणां दद्यात् । एवं संवत्सरस्यार्कवारेषु पूजां कृत्वा ब्राह्मणान् भोजयित्वा आयुष्कामी दीर्घमायुरवाप्नुयात् । तेजस्कामी तेजस्वी यशस्कामी यशस्वी भूतिकामी भूतिमान् भवति पुत्रकामी पुत्रं लभते । सर्वकामी सर्वं लभते । इत्याह भगवानाग्निवेश्यः ११

प्रणवं चाग्निदैवत्यं परब्रह्मस्वरूपिणम्
छन्दस्तु देवी गायत्री ऋषिर्ब्रह्मेति कीर्तितः

प्रणवं नमस्करोमि सर्वदेवतामयं शृणु विष्णुमब्रवीदिति प्रणवं त्र्यक्षरेण अकारोकारमकाराक्षरेण । अकारोऽग्निः उकारः सूर्यः मकारश्चन्द्रः । अकारो ब्रह्मा उकारो विष्णुः मकार ईश्वरः । अकारो नपुंसकः उकारः पुल्लिँङ्गः मकारः स्त्रीलिङ्गः । अकारो मिश्रवर्णः उकारो रक्तवर्णः मकारः श्वेतवर्णः । उपमारहिताः अउमकारात्मकाः कालत्रयात्मकाः लोकत्रयात्मकाः ऋग्यजुस्सामात्मकाः अवस्थात्रयात्मकाः प्रणवोच्चारणेन महदैश्वर्यदायकाः मूलाधारानाहतभ्रूमध्ये स्थिताः अकारोकारमकाराः उदात्तानुदात्तस्वरिताः वक्ष्याम्य् तिरहस्यमिति । ऋग्वेदे प्रणवं यजुर्वेदे प्रणवं सामवेदे प्रणवं त्रिः ब्रूयात् । तस्योत्तरा भूयसे निर्वचनाय १२ अथशालांकरिष्यन् वास्तोष्पते अथतटाककल्पंव्याख्यास्यामः अथकूश्माण्डैर्जुहुयाद् अथातःपूतकामः अथशताभिषेकम् अथब्राह्मणस्यमहापातकादि अथशुभाशुभनिमित्तानाम् अथयज्ञोपवीत-

विधिम् अथदेवताराधनम् अथातोरविकल्पंव्याख्यास्यामः प्रणवंचाग्निदैवत्यं द्वादश

इत्याग्निवेश्यगृह्यसूत्रे द्वितीयप्रश्ने चतुर्थोऽध्यायः

अथ पञ्चमोऽध्यायः

अथातो ग्रहातिथ्यबलिकर्मोपहारान् व्याख्यास्यामः
अश्रद्दधानमहुतमजपं त्यक्तमङ्गलम्
ग्रहा नयन्ति सुव्यक्तं पुरुषं यमसादनम्

ग्रहाणामुग्रचेष्टानां नक्षत्रपथचारिणाम्
उपहारान् प्रवक्ष्यामि शान्त्यर्थं तु यथाविधि

मासि मास्यृतावृतावयने चन्द्रग्रहे सूर्यग्रहे जन्मनक्षत्रे विषुवे शुभाशुभे वा तद्ग्रहाणामातिथ्यं संवत्सरादपि प्रयुञ्जानः सर्वान् कामानवाप्नोतीति । उक्त-मेकाग्निविधानं कृत्वा

भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ
सोमपुत्रगुरू चैव तावुभौ पीतकौ स्मृतौ

कृष्णं शनैश्चरं विद्याद् राहुकेतू तथैव च
ग्रहवर्णानि पुष्पाणि प्राज्ञस्तत्रोपकल्पयेत्

बलिं चैवोपहारं च गन्धमाल्यं तथैव च
यथाक्रमेणोपहरेत् सर्वेषामनुपूर्वशः । इति

अर्कसमिधमादित्याय पालाशं सोमाय खादिरमङ्गारकाय अपामार्गं बुधाय अश्वत्थं बृहस्पतये औदुम्बरं शुक्राय शमीं शनैश्चराय राहोः दूर्वां केतोः कुशमिति । मध्ये वृत्तमादित्याय आग्नेय्यां चतुरश्रं सोमाय दक्षिणे त्रिकोण-मङ्गारकाय ईशान्यां बाणाकारं बुधाय उत्तरे दीर्घचतुरश्रं बृहस्पतये प्राक् पञ्चकोणं शुक्राय पश्चिमे धनुराकारं शनैश्चराय निर्ऋत्यां शूर्पाकारं राहवे वायव्यां ध्वजाकारं केतुभ्यः । परिधानप्रभृत्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति

। आ सत्येन अग्निं दूतं वृणीमहे एषामीशे इत्यादित्याय । आप्यायस्व अप्सु मे सोमो अब्रवीत् गौरी मिमाय इति सोमाय । अग्निर्मूर्धा स्योना पृथिवि क्षेत्रस्य पतिना इत्यङ्गारकाय । उद्बुध्यस्व इदं विष्णुः विष्णो रराटमसि इति बुधाय । बृहस्पते अति इन्द्र मरुत्वः ब्रह्म जज्ञानम् इति बृहस्पतये । प्र वः शुक्राय इन्द्राणीम् इन्द्रम् वो विश्वतस्परि इति शुक्राय । शन्नो देवीः प्रजापते न त्वत् इमं यम प्रस्तरमा हि सीद इति शनैश्चराय । कया नश्चित्र आभुवत् आ यं गौः यत्ते देवी निर्ऋतिरावबन्ध इति राहवे । केतुं कृण्वन् ब्रह्मा देवानां सचित्र चित्रं चितयन्तमस्मै इति केतवे । घृतान्वक्तानां समिधामष्टसहस्र-मष्टशतमष्टाविंशतिं वा प्रत्यृचं हविषा जुहुयात् । प्रत्यृचमाज्येन जुहुयात् । हविष्यान्नमादित्याय घृतपायसं सोमाय गुळौदनमङ्गारकाय क्षीरौदनं बुधाय दध्योदनं बृहस्पतये घृतौदनं शुक्राय तिलमिश्रपिष्टमाषौदनं शनैश्चराय राहोर्मासौदनं केतोश्चित्रौदनम् इत्युपहारः सर्वेषामलाभे हविष्यम् । अर्यमणं सोमं राजानम् इति स्विष्टकृतं जुहोति । जयाप्रभृति सिद्धमा धेनुवरप्रदानात् । अग्रेणाग्निं ग्रहानभ्यर्चयति । आपो हि ष्ठा मयो भुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेना-नुवाकेन मार्जयित्वा स्वेन स्वेन मन्त्रेण गन्धपुष्पधूपदीपैरभ्यर्च्य बलिमुपहृत्य नमस्कृत्य प्रवाह्य जघनेनाग्निं प्राङ्मुख उपविश्य अद्भिर्मार्जयते आपो हि ष्ठा मयो भुव इत्यादिभिः । अथ दक्षिणां ददाति । कपिलां धेनुमादित्याय शङ्खं सोमाय रक्तमनड्वाहमङ्गारकाय काञ्चनं बुधाय वासो बृहस्पतये रजतं शुक्राय कृष्णां गां शनैश्चराय राहोश्छागं केतोः कुञ्जरमिति । सर्वेषामलाभे हिरण्यं वा येन वा तुष्यत्याचार्यः

यथा समुत्थितं यन्त्रं यन्त्रेण प्रतिहन्यते
एवं समुत्थितं घोरं शीघ्रं शान्तिं नयेत् सदा

यथा शस्त्रप्रहाराणां कवचं भवति वारणम्
एवं दैवोपघातानां शान्तिर्भवति वारणम्

अहिंसकास्य दान्तस्य धर्मार्जितधनस्य च
नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः

ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः
पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः

देवता ग्रहरूपेण दर्शयन्ति शुभाशुभम्

दर्शयन्ति शुभाशुभमिति १ अथ यद्यकाले स्थूणा विरोहेत् व कपोतो वागारमध्येऽधिपतेद् गौर्वा गां धयेत् गौरात्मानं प्रत्यङ्ग धयेत् अनड्वान्वा समुल्लिखेत् अनग्नौ वा धूमो जायेत अनग्नौ वा दीप्येत मधु वा जायेत निर्यासं वोपजायेत छत्राकं वोपजायेत मण्डूको वा भूमौ ददृशे श्वानः प्रसूते वा गृहपतिं जायां वोपतपति अन्येषु चाद्भुतोत्पातेषु । अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा जुहोति वास्तोष्पते इति द्वे । वास्तोष्पते शं नः इन्द्राग्नी कया नश्चित्र आ भुवत् को अद्य युङ्क्ते भवतं नः समनसौ इति । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् । अपरेणाग्निं शमीपर्णेषु हुतशेषं निदधाति शं नो देवीरभिष्टय इति । स्थालीसंक्षाळनमाज्यशेषमुदकशेषं च पात्र्यां समानीयैतेषूत्पातेषु निनयेत् । प्रोक्षयेद्वा तच्छंयोरा वृणीमहे इति । अन्नं संस्कृत्य ब्राह्मणान् सम्पूज्याशिषो वाचयति शिवं शिवम् इति । अद्भुतो व्याख्यातः २ आहुतानुकृतिरायुष्यहोमचरुः संवत्सरे संवत्सरे षट्सु षट्सु मासेषु चतुर्षु चतुर्षु मासेषु मासि मासि वा जन्मनक्षत्रे क्रियेत । अथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा व्रीहीन् निर्वपति अग्नय आयुष्मते वो जुष्टं निर्वपामि इति । तूष्णीं वा । अथ धान्यान् निर्वपति प्राणाय वो जुष्टं निर्वपामि इति । तूष्णीं वा । तानभ्युक्ष्यावहत्य त्रिष्फलीकृत्य त्रिः प्रक्षाळ्य निदधाति । अथ तिरःपवित्रं स्थाल्यामपः पयो वानीयाधिश्रित्य तिरःपवित्रं तण्डुलानावपति । अथाज्यमधिश्रित्योभयं पर्यग्नि कृत्वा मेक्षणं च स्रुवं च संमार्ष्टि। अथैतं चरुं श्रपयित्वाभिघार्योदञ्चमुद्वास्य प्रतिष्ठितमभिघारयति । स एष एव सर्वेषां स्थालीपाकानां चरुकल्पः । परिधानप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जुहोति आयुष्टे विश्वतो दधद् इति पुरोनुवाक्यामनूच्य आयुर्दा अग्ने हविषो जुषाणः इति याज्यया जुहोति । आज्याहुतीरुपजुहोति । अथान्तरेणाग्निं चाज्यस्थालीं चरुस्थालीं निदधाति । सहस्रसंपाताभिहुतं करोति । यो ब्रह्मा ब्रह्मण उज्जहार प्राणेश्वरः कृत्तिवासाः पिनाकी । ईशानो देवः स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन स्वाहा । विभ्राजमानः सरिरस्य

मध्याद्रोचमानो घर्मरुचिर्य आगात् । स मृत्युपाशादपनुद्य घोरादिहायुषे नो घृतमत्तु देवः स्वाहा । ब्रह्मज्योतिर्ब्रह्मपत्नीषु गर्भं यमादधात् पुरुरूपं जयन्तम् । सुवर्णरम्भग्रहमर्कमर्चं तमायुषे वर्धयामो घृतेन स्वाहा । श्रियं लक्ष्मी-मौपलामम्बिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः तां विद्यां ब्रह्मयोनिं सरूपामिहायुषे तर्पयामो घृतेन स्वाहा । दाक्षायण्यः सर्वयोन्यः सयोन्यः सहस्रशो विश्वरूपा विरूपाः । ससूनवः सपतयः सयूथ्या आयुषेणो घृतमिदं जुषन्तां स्वाहा । दिव्या गणा बहुरूपाः पुराणा आयुश्छिदो नः प्रमन्थन्तु वीरान् । तेभ्यो जुहोमि बहुधा घृतेन मा नः प्रजाँ रीरिषो मोत वीरान् स्वाहा । एकःपुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः । यमप्येति भुवनँ सांपराये स नो हविर्घृतमिहायुषेऽत्तु देवः स्वाहा । वसून् रुद्रानादित्यान् मरुतोऽथ साध्यान् ऋभून् यक्षान् गन्धर्वांश्चँ पितृंश्च विश्वान् । भृगून् सर्पाँश्चा-ङ्गिरसोऽथ सर्वान् घृतं हुत्वा स्वायुष्या महयाम शश्वत् स्वाहा । इति षड्विंशतिशतं कृत्वा तदाहुतीनामष्टसहस्रं संपद्यते । इतरस्मात् पक्वात् सौविष्टकृतं जुहोति । हव्यवाहमभिमातिषाहम् इति पुरोनुवाक्यामनूच्य स्विष्टमग्न इति याज्यया जुहोति । जयाप्रभृति सिद्धमा धेनुवरप्रदानात् । अथाग्रेणाग्निं दूर्वास्तम्बे हुतशेषं निदधाति मा नो महान्तं मा नस्तोक इति द्वाभ्याम् । अपरेणाग्निं प्राङ्मुख उपविश्य वाग्यतः स्थालीपाकं सगणः प्राश्नाति आयुरसि विश्वायुरसि सर्वायुरसि सर्वमायुरसि सर्वं म आयुर्भूयात् सर्वमायुर्गेषम् इति । प्राश्याचम्य जठरमभिमृशति यत इन्द्र भयामहे स्वस्तिदा विशस्पतिः इति द्वाभ्याम् । कुमाराणां ग्रहगृहीतानामायुष्येण घृतसूक्तेनाहरहः स्वस्त्ययनार्थं स्वाध्यायमधीयीत । एतैरेव मन्त्रैराहुतीर्जुहुयात् । एतैरेव मन्त्रैर्बलिं हरेत् । अगतो हैव भवति । तदेतदृद्धमयनं भूतोपसृष्टानां राष्ट्रभृतः पञ्चशोडाय सर्पाहुतिर्गन्धर्वाहुतिरिति । अगतो हैव भवति । तदेतदृद्धमयनं हुताहुतानुकृतयोऽन्ये होमा आश्रमानुकृतयः संश्रया इति ३ अथातोऽपमृत्यु-ञ्जयकल्पं व्याख्यास्यामः । पुण्ये नक्षत्रे जन्मनक्षत्रे जन्मवारे वा कृष्णाष्टम्यां चतुर्दश्यां वा देवालये नदीतीरे गोष्ठे पुण्यतमे स्थले वा स्वगृहे वा गोमयेनोपलिप्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा अथ देवयजनो-ल्लेखनप्रभृत्याग्निमुखात् कृत्वा ओं भूर्भुवःस्वः स्वाहा इति प्रायश्चित्तं हुत्वा श्वेतदूर्वाः पालाशसमिधोऽष्टसहस्रमष्टशतमष्टाविंशतिं वा दधिमधुघृतपयांसि समुदायुत्य त्रियम्बकं यजामहे इति मन्त्रेण हुत्वाथ अपैतु मृत्युः परं मृत्यो मा

नो महान्तं मा नस्तोके त्रियम्बकम् ये ते सहस्त्रम् इति हुत्वा स्विष्टकृत-मवदायाथाज्याहुतीश्चोपजुहोति नक्षत्रे राशौ जातस्य शर्मणः मृत्युर्नश्य-त्वायुर्वर्धतां भूः स्वाहा पूर्ववत् शर्मणः मृत्युर्नश्यत्वायुर्वर्धतां भुवः स्वाहा पूर्ववत् शर्मणः मृत्युर्नश्यत्वायुर्वर्धतां स्वः स्वाहा पूर्ववत् शर्मणः मृत्युर्नश्यत्वायुर्वर्धतां भूर्भुवःस्वः स्वाहा इति । अथ स्विष्टकृतं हव्यवाह-मभिमातिषाहम् इति पुरोनुवाक्यामनूच्य स्विष्टमग्न इति याज्यया जुहोति । जयाभ्यातानान् राष्ट्रभृतः इति हुत्वा तन्त्रशेषं समाप्य दर्भस्तम्बे हुतशेषं निदधाति तच्छंयोरा वृणीमहे इति । अथ दक्षिणां दद्यात् । यथाचार्यस्तुष्टः प्रसन्नहृदयो भवेत् तथा दद्यात् । शेषेभ्योऽपि यथाशक्ति दत्त्वा ब्राह्मणान् भोजयेत् ४ अथ जयानामेव होमो जयाहे नाष्टचं तु कल्पयते । वाधःस्त्रुवं च स्त्रुचश्च वाधक एवैनं वैभीतकमिध्ममभ्यज्याबाधकेन स्त्रुवेणोपसृज्य बाधकायां स्त्रुचि चतुर्गृहीतेन जुहोति । चतुष्पादः पशवः । पशूनेवावरुन्धे । चित्तं च चित्तिश्चाकूतं चाकूतिश्च विज्ञानं च विज्ञातं च मनश्च शक्वरीश्च दर्शश्च पूर्णमासश्च बृहच्च रथन्तरं च प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव स्वाहा इति । अथ वैभीतकमिध्ममिति । देवासुराः संयत्ता आसन् स इन्द्रः प्रजापतिमुपाधावत् तस्मा एताञ्जयान् प्रायच्छत् तानजुहोत् ततो वै देवा असुरानजयन् यदजयन् तज्जयानां जयत्वं स्पर्धमानेनैते होतव्या जयत्येव तां पृतनाम् इति । ब्राह्मणमह्नैव भवति येन कर्मणेर्त्सेत् तत्र होतव्या इति स यत्कर्मेर्त्सेदिदं मे समृद्ध्यत इति ५ प्रजार्थिहोमं व्याख्यास्यामः । नदीतीरेऽश्वत्थच्छायायां वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य प्राच्यां दिशि ब्रह्माणं प्रतिष्ठाप्य पार्श्वयोर्धातारं विधातारं च दक्षिणतो धातारं वामतो विधातारं कृष्णवर्णं धातारं श्वेतवर्णं विधातारं चतुर्मुखं चित्रवर्णं ततस्तानर्चयेत् । पूर्वं ब्रह्माणमावाहयेत् । परमेष्ठिनमावाहयेत् । हिरण्य-गर्भमावाहयेत् इत्यावाह्य प्रनवेन आपो हि ष्ठा मयोभुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेना-नुवाकेन मार्जयित्वा शुद्धान्नं ब्रह्मणे मुद्गान्नं धात्रे पीतान्नं विधात्रे । यजमानस्यथैनां स्त्रियमाहूय तत्त्वमसि ज्योतिरसि विश्वेशानं गता नामदा इति अमावास्यायां पौर्णमास्यामयनद्वये च व्यतीपाते विषुवे तिष्यरोहिण्यां श्रवणायां तस्या जन्मनि ऋतुस्नातायाम् अहतं वासः परिधाप्य हिरण्य-

माचार्याय दत्त्वाक्लिष्टानि वासांसि परिधायाचम्य गन्धशुक्लपुष्पैरलङ्कृत्य अथ देवयजनोल्लेखनप्रभृत्यग्निमुपसमाधाय संपरिस्तीर्य सप्त ते अग्ने समिधः सप्त जिह्वा सप्तऋषयः सप्त धाम प्रियाणि इति स्त्रीषु दक्षिणोपविश्य परिधानप्रभृत्याग्निमुखात् कृत्वा पक्वात् पुरुषसूक्तेन जुहुयात् । जुहोति याज्यां पुरोनुवाक्यामिति द्वौ द्वौ । प्रत्यृचमथाज्याहुतीरुपजुहोति । सावित्र्याष्टोत्तर-सहस्रं जुहुयात् । अप उपस्पृश्य सुदर्शनेनाष्टसहस्रम् अग्निबीजेनाष्टसहस्रं सप्रणवं जुहोति । अष्टसहस्रं सप्रणवमष्टशतमष्टाविंशतिं वा । मध्यमं जुहोत्यष्टशतमिति कीर्तितम् । स्विष्टकृतात् प्रभृति सिद्धमा धेनुवरप्रदानात् । अथैनं सम्पातं मूर्ध्नि जुहोति । प्रणवेन नमस्कारान्तं यज्ञवास्तु कुर्वीत । तदस्य गर्भिणी भवति । एवमुत्पादितपुत्रा न लुप्यन्ते कदाचन न लुप्यन्ते कदाचनेति । अथ विष्णुं द्वादश्यां भगवन्तमर्चयित्वा सुदर्शनेनाष्टसहस्रं जप्त्वा त्रिः पर्यायम् आवश्यकः पुत्रो भवतीत्याह पुत्रो भवतीत्याह । शैवोक्तेषु कालेषु नदीषु वा शुद्धजलाशये वा मध्यमेन च पलाशपर्णेन वाष्टसहस्रेणा-ष्टशतेन वाष्टाविंशत्या वा आपो हि ष्ठा मयोभुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेनाभिषेचनं कृत्वा गायत्र्याष्टसहस्रेणाभिषेचनं करोति । पुरुषसूक्तेन च सहस्रशीर्षा पुरुष इत्येतेनानुवाकेन । पुत्रो भवतीत्याह भगवानाग्निवेश्यः ६ अथ विष्णुबलिः । अष्टमे मासि पूर्वपक्षे पुण्ये नक्षत्रे द्वादश्यां सप्तम्यां रोहिण्यां श्रवणायां वा ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा अथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा उपोत्थायाग्रेणाग्निं दैवतमावा-हयामि ओं भूः पुरुषमावाहयामि ओं भुवः पुरुषमावाहयामि ओं स्वः पुरुष-मावाहयामि ओं भूर्भुवःस्वः पुरुषमावाहयामि इत्यावाह्य परिधानप्रभृत्या-ग्निमुखात् कृत्वा दैवतमर्चयित्वा आपो हि ष्ठा मयोभुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेना-नुवाकेन मार्जयित्वाथाद्भिस्तर्पयते केशवं नारायणं माधवं गोविन्दं विष्णुं मधुसूदनं त्रिविक्रमं वामनं श्रीधरं हृषीकेशं पद्मनाभं दामोदरं तर्पयामि इति । एतैरेव नामभिः गन्धपुष्पधूपदीपैः अमुष्मै नमोऽमुष्मै नम इति । अथ वैष्णवाहुतीर्जुहोति विष्णोर्नुकं तदस्य प्रियं प्र तद्विष्णुः परो मात्रया विचक्रमे त्रिर्देव इति । जयाप्रभृति सिद्धमाधेनुवरप्रदानात् । गुळपायसं घृतमिश्रम-थान्नस्य बलि मुपहरति अमुष्मै स्वाहामुष्मै स्वाहा इति द्वादशभिर्यथालिङ्गम्

। वैष्णवीभिः ऋग्यजुःसामाथर्वभिः स्तुतिभिः स्तुवन्ति । व्याहृतीभिः पुरुषमुद्वासयति पुरुषमुद्वासयामि इति । अन्नशेषं पत्नीं प्राशयति पुमांसं जनयतीति विज्ञायते ७ अथ शूलगवः संवत्सरे संवत्सरे मार्गशीर्षपौर्णमास्यां क्रियेत । अपि वार्द्रायाम् अरण्येऽग्निमुपसमाधाय संपरिस्तीर्या प्रणीताभ्यः कृत्वा बर्हिरादाय गामुपाकरोति ईशानाय त्वा जुष्टमुपाकरोमि इति । तूष्णीमित्येके । तामत्रैव प्रतीचीनशिरसीम् उदीचीनपदीं सञ्ज्ञपयति । तस्यै संज्ञप्ताया अद्भिरभिषेकम् । प्राणानाप्याय्य तूष्णीं वपामुत्खिद्य हृदयमुद्धारयति । प्रज्ञातानि चावदानानि । तान्ये तेष्वेव शूलेषूपनीक्ष्यैतस्मिन्नेवाग्नौ श्रपयन्ति । अथैतानि शूलेभ्योऽपरिक्षिप्य पुनः कुम्भ्यां निश्रपयन्ति । अथैतानि अभिघारितान्युद्वास्य प्रतिष्ठितमभिघारयति । परिधानप्रभृत्याग्निमुखात् कृत्वा दैवतमावाहयति आ त्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः । वाताजितैर्मघवद्भिर्मनोजवैरायाहि शीध्रं मम हव्याय शर्वोम् इति । अथ स्रुवेणोषस्तीर्णाभिघारितां जुहोति । सहस्राणि सहस्रश इति पुरोनुवाक्यामनूच्य ईशानं त्वा भुवनानामभिश्रियम् इति याज्यया जुहोति । अथाज्याहुतीरुपजुहोति । अत्रैतान्यवदानानीडासूने प्रच्छिद्यौदनं मांसं यूषमित्याज्येन समुदायुत्य मेक्षणेनोपघातं पूर्वार्धे जुहोति । भवाय देवाय स्वाहा शर्वाय देवाय स्वाहा ईशानाय देवाय स्वाहा पशुपतये देवाय स्वाहा रुद्राय देवाय स्वाहा उग्राय देवाय स्वाहा भीमाय देवाय स्वाहा महते देवाय स्वाहा इति । अथ मध्ये भवस्य देवस्य पत्न्यै स्वाहा शर्वस्य देवस्य पत्न्यै स्वाहा ईशानस्य देवस्य पत्न्यै स्वाहा पशुपतेर्देवस्य पत्न्यै स्वाहा रुद्रस्य देवस्य पत्न्यै स्वाहा उग्रस्य देवस्य पत्न्यै स्वाहा भीमस्य देवस्य पत्न्यै स्वाहा महतो देवस्य पत्न्यै स्वाहा इति । अथापरार्धे जुहोति । भवस्य देवस्य सुताय स्वाहा शर्वस्य देवस्य सुताय स्वाहा ईशानस्य देवस्य सुताय स्वाहा पशुपतेर्देवस्य सुताय स्वाहा रुद्रस्य देवस्य सुताय स्वाहा उग्रस्य देवस्य सुताय स्वाहा भीमस्य देवस्य सुताय स्वाहा महतो देवस्य सुताय स्वाहा इति । अथाज्याहुतीर्जुहोति । नमस्ते रुद्र मन्यव इत्यान्तादनुवाकस्य । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् । अथापरेणाग्निमर्कपर्णेषु हुतशेषं निदधाति यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु इति । स्थालीसंक्षाळनमाज्यशेषमुदकशेषं च पात्र्यां समानीय वेतसशाखयावोक्ष्य त्रिः प्रदक्षिणं गाः पर्येति आ गावो अग्मन्नुत

भद्रमक्रन् इत्येतेन सूक्तेन । महत् स्वस्त्ययनमाचक्षते । अथ यदि गां न लभते मेषमजं वालभते । ईशानस्थालीपाकं वा श्रपयति यद् गवा कार्यम् । स शूलगवो व्याख्यातः । एवमेवाष्टम्यां प्रदोषे क्रियेतैतावदेव नाना । नात्रोपाकरणं पशोः ८ अथातो गृहकर्मणो गृहवृद्धिमिच्छन् मासि मासि ऋतावृतौ संवत्सरे संवत्सरे पूर्वपक्षे पुण्ये नक्षत्रे गृहशान्तिमारभेत । अपामार्गपालाशशिरीषौदुम्बरसदाभद्रा अमृततृणमिन्द्रवल्लीभिर्बद्ध्वा गृहान् परिसंमार्ष्टि । परिसमूह्यापोऽभ्युक्ष्य पञ्चगव्येन दर्भमुष्टिना सम्प्रोक्ष्य सर्षपान् संप्रकीर्याग्निमुखात् कृत्वा मध्ये वास्तोष्पते वास्तोष्पते इति द्वे आहुती हुत्वा सावित्र्या सहस्रं जुहुयात् । ततो दक्षिणपुरस्तात् ततो दक्षिणपश्चात् तत उत्तरपश्चात् मध्ये वा । जयाप्रभृति सिद्धमा धेनुवरप्रदानात् । गां वासो हिरण्यं दक्षिणां ददाति ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा । एवं प्रयुञ्जान आन्तं महान्तं पोषं पुष्यति । बहवः पुत्रा अस्य भवन्ति । न च बालाः प्रमीयन्ते । नाग्निर्दहति । न दंष्ट्रिणः खादयेयुः । न तस्कराः सपत्ना रक्षांसि पिशाचा अपि बाधन्ते । यदि गावः प्रतप्येरन् गवां मध्ये आहुतिसहस्रं जुहुयात् । एतेनैव कल्पेनाश्वोष्ट्रखराजाविकम- हिषहस्तिकुलमन्यतरद् द्विपदां चतुष्पदां च व्याख्यातम् ९ वृष्टिकामस्य सम्भारान् । कृष्णं वासः कृष्णाश्वः कृष्णतूषं कृष्णोरभ्रः कृष्णाजिनं च कृष्णव्रीहयश्च कृष्णमधु चामा च कुम्भी खर्जूरसक्तवः करीरसक्तवश्च वर्षाभूणां स्रजस्त्रीणि च पुष्करपर्णानि दशसहस्रं वैतससमिधामित्येतेऽस्य संभारा उपक्लृप्ता भवन्ति । अग्निमुपसमाधाय यस्मिन् काले पश्चाद्वातो वाति तस्मिन् काले कृष्णं वासः कृष्णतूषम् परिधत्ते मारुतमसि मरुताम् ओजोऽपां धारां भिन्धि रमयत मरुतः श्येनमायिनं मनोजवसं वृषणँ सुवृक्तिम् । येन शर्ध उग्रमवसृष्टमेति तदश्विना परिधत्तं स्वस्ति । अग्रेणाग्निं कृष्णमश्वं कृष्णमभ्रं पुरस्तात् प्रत्यञ्चं धारयन्तो दक्षिणत आमां कुम्भीं निमिञ्चन्ति वर्षाभूणां स्रजः पश्चात् स्थापयन्ति । संपरिस्तीर्य निर्वपान् कृत्वा देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां वरुणाय जुष्टं निर्वपामि इति त्रीन् मुष्टीन् यजुषा तूष्णीं चतुर्थम् । पत्न्यवहन्ति । त्रिष्फलीकृत्य त्रिः प्रक्षाल्य तिरःपवित्रं स्थाल्याम् अप आनीयाधिश्रित्य पर्यग्नि कृत्वाभिघार्य चरुमुद्वास्याभिघारयति । परिधानप्रभृत्याग्निमुखात् कृत्वा तस्मिन् खर्जूरसक्तूंश्च करीरसक्तूंश्च कृष्ण- मधुषा संयौति मान्दा वाशाश्शुन्ध्यूरजिरा ज्योतिष्मतीस्तमस्वरीरुन्दतीः

सुफेनाः इति । त्रीन् पिण्डान् कृत्वैतेषु पुष्करपर्णेषूपनिनह्य कृष्णमुरभ्रमनुलेपनं करोति । यच्चिद्धि ते यत् किञ्चेदं कितवासः इमं मे वरुण तत्त्वा यामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि अव ते हेड उदुत्तमं त्रियम्बकं यजामहे इत्येतैर्दशभिर्मन्त्रैः शतशोऽभ्यस्य प्रतिमन्त्रं समिधो जुहुयात् । एतैर्मन्त्रैरेव-मभ्यस्य हविषो जुहुयात् । तथैवाभ्यस्याज्यस्य जुहुयात् । जयाप्रभृति सि-द्धमा धेनुवरप्रदानात् । गुरवे गां ददाति । कृष्णमश्वमद्भिरभ्युक्षति दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन । पृथिवीं यद्व्युन्दन्ति आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः । विपर्जन्याः सृजन्ति रोदसी अनु धन्वना यन्ति वृष्टयः इति । सयति कृष्णोऽश्वोद्भिरभ्युक्ष्य उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः न वो दस्रा उप दस्यन्ति धेनवः शुभं यातामनुरथा अवृत्सत इति । सयेति कृष्णोरभ्री रद्भिरभ्युक्ष्य आधूनुते वर्षति यदि शकृ-त्करोति वा वर्षति यदि पलायते वोपविशति वा न वर्षति इति । आमां कुम्भीमद्भिः संपूरयति । सृजा वृष्टिं दिव आद्भिः समुद्रं पृण । अब्जा असि प्रथमजा बलमसि समुद्रियम् उन्नम्भय पृथिवीं भिन्धि दिव्यं नभः । उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम् । स यद्यामां कुम्भीमद्भिः सम्पूर्णां भिद्यते वर्षति यदि धारयते न वर्षति । अपां पूर्णां स्रुचं वर्षाह्वया जुहोति उन्नम्भय पृथिवीम् इति । अथ यदि न वर्षेदेतेषामेव कृष्णव्रीहीणां स्थालीपाकं श्रपयित्वा सप्ताहं सवनत्रयहोमं कुर्यात् । सन्तिष्ठते वृष्टिकामः सन्तिष्ठते वृष्टिकामः १० अथ भूतबलिं व्याख्यास्यामः । वृष्टिकामोऽधिकारी कृष्णं वासः कृष्णा गौः कृष्णयोरभ्री कृष्णा व्रीहयश्च कृष्णमधु चामा च कुम्भी खर्जूरसक्तवश्च सर्पिश्च त्रीणि पुष्करपर्णानीत्येतेऽस्य सम्भारा उपक्लृप्ता भवन्ति । यद् भूतेभ्यो बलिं हरति तद् भूतयज्ञः सन्तिष्ठते इति ब्राह्मणम् । संवत्सरे संवत्सरे षट्सु षट्सु मासेषु यदामावास्यां शुष्यो भवति यदा वृष्टेरुदघातं विन्देदथ भूतबलिं दद्यात् । तटाकं गत्वा शुचौ देशे उद्धत्यमानम् इत्युद्धत्य शन्नो देवीः इत्यवोक्ष्य देवयजनं परिगृह्य परिलिखितम् इति परिलिखति । यस्मिन् काले पश्चाद् वातो वाति तस्मिन् काले ब्राह्मणो मारुतमसि मरुतामोज इति कृष्णं वासः परिधाय अप उपस्पृश्य यज्ञोपवीतं धृत्वाप आचम्य उदपात्रमादाय पश्चाद् भूतं प्रतिष्ठाप्यार्चयति । व्याहृतिपर्यन्तं कृत्वाष्टौ वात-नामानि जुहोति पुरो वातो वर्षञ्जिन्वरावृत् स्वाहा इति । अथ कृष्णव्रीहीणां चरूणां जुहोति मित्रावरुणाभ्यां स्वाहा अग्नये धामच्छदे स्वाहा मरुद्भ्यः स्वाहा

सूर्याय स्वाहा अग्नये स्विष्टकृते स्वाहा इति । वारुरायादिस्विष्टकृदन्तं हुत्वाथ कंसे वा शरावे वान्नशेषं खर्जूरसक्तुं समवदाय सर्पिषा मधुना वा संयौति । मान्दा वाशा इति द्वाभ्याम् । अपरेणाग्निं त्रिषु पुष्करपर्णेषु निर्वपेद् देवा वसव्या इति । तिसृभिरन्नशेषस्यार्धं निवेदयति देवस्य त्वा इति । तत उदकं गत्वावशिष्टस्य त्रीन् पिराडान् अप्सु जुहोति । उद्नो दत्तोदधिं भिन्त इति त्रिभिः स्वाहाकारान्तैः । अथाञ्जलिनाप उपहत्योत्क्षिपेत् उदीरयथा मरुत इति द्वाभ्याम् । अथ वास्तुदेवं गत्वा । ये वास्तुदैवताः क्रूररक्षोभूतगणाश्च ये । तेभ्यो बलिं वृष्टिकामो हरामि शान्ताः शान्तिं कुर्वन्तु । नमः सर्वेभ्यो नमो भूतेभ्यो नमो इत्यामां कुम्भीं चाद्भिः पूरयित्वा उन्नम्भय पृथिवीम् इति कृष्णां गां च । ये देवा दिवि भागा इत्यथ देवता उपतिष्ठते । यन्तु नदयो वर्षन्तु पर्जन्या इति पर्जन्यान् उपतिष्ठते पुरयाहं वाचयित्वा ब्राह्मणान् भोजयित्वा । यदि वर्षेत् तावत्येव होतव्यं यदि न वर्षेत् श्वोभूते हविर्निर्वपेत् इति ब्राह्मणम् ११ अथ बीजनिवापनं व्याख्यास्यामः । रोहिरायां तिष्यमूयोः विशाखयोर्मघासु श्रवणायां रेवत्यां मित्रावरुणयोर्मरुत उत्तरास्वे-कस्मिन् नक्षत्रे बीजानादाय दत्वाधिवासं करोति । एषु नक्षत्रेषु एकस्मिन् नक्षत्रे क्षेत्रं गत्वा पूर्वायां दिशि गन्धादिभिराराध्य शिरीषपर्णैरवकीर्य गन्धशेषैरात्मान-मुपलिप्य कर्षकाय गन्धादि दत्त्वा बीजानि वपेद् या जाता ओषधय इत्येतेनानुवाकेन । अथालक्षानात् पूर्वं चरूर्जं श्रपयित्वाथ पुरयाहं वाचयि-त्वा अद्भिर्मार्जयित्वा आपो हि ष्ठा मयोभुव इति तिसृभिः हिररायवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेनाथ पिराडं ददाति क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु अथ दक्षिणापुरस्तात् ततो दक्षिणापश्चात् ततः पुरस्तादुत्तरतः पश्चाद् अथ मध्ये यथोदितं लवनं करोति । तेन धान्येन पश्चादाग्रयणं करोति । १२ अथातोग्रहातिथ्यबलिकर्मोपहारान् अथयद्यगारे-स्थूणाविरोहेद् आहुतानुकृतिः अथातोऽपमृत्युञ्जयकल्पं व्याख्यास्यामः अथ जयानामेव प्रजार्थिहोमम् अथविष्णुबलिः अथशूलगवः अथातोगृहकर्मणो वृष्टिकामस्य अथभूतबलिम् अथबीजनिवापनं द्वादश ।

इत्याग्निवेश्यगृह्यसूत्रे द्वितीयप्रश्ने पञ्चमोऽध्यायः

## अथ षष्ठोऽध्यायः

अथात आचमनविधिं व्याख्यास्यामः । प्राङ्मुख उदङ्मुखो वा द्वौ पाणी प्रक्षाळ्य बद्धशिखो यज्ञोपवीती जले वाथ स्थले वान्तर्जानु नविवराङ्गुळीभिः गोकर्णाकृतिवत् करं कृत्वा तिष्ठन् न प्रणतो न हसन्न जल्पन् न व्रजन् नोष्णाभिर्न विवर्णाभिर्न बुद्बुदाभिः न चलो जलं माषमग्नमात्रं पिबेत् । ब्राह्मणस्य दक्षिणे हस्ते पञ्च तीर्थानि पञ्च दैवतानि भवन्ति । अङ्गुलीमध्ये दैवं तीर्थं अङ्गुल्यग्रे आर्षं तीर्थम् अङ्गुष्ठतर्जन्योर्मध्ये पैतृकं तीर्थम् अङ्गुष्ठमूलस्योत्तरतो रेखासु ब्राह्मं तीर्थम् मध्ये अग्नितीर्थम् । अङ्गुष्ठे अग्निः प्रदेशिन्यां वायुः मध्ये प्रजापतिः अनामिकायां ब्रह्मा कनिष्ठिकायामिन्द्रः । अथ त्रिराचामेत् प्रणवेन । प्रथमं यत् पिबति तेन ऋग्वेदं प्रीणाति । द्वितीयं यत् पिबति तेन यजुर्वेदं प्रीणाति । तृतीयं यत् पिबति तेन सामवेदं प्रीणाति । प्रथमं यत् परिमृजति तेनाथर्ववेदं प्रीणाति । द्वितीयं यत् परिमृजति तेन इतिहासं प्रीणाति । यद् उपस्पृशति तेनाग्निं यत् पादावभ्युक्षते तेन विष्णुं सह्यं पितृन् चिरस्या ऋषीन् तेन चन्द्रादित्यौ यन्नासिके तेन प्राणापानौ यच्छ्रोत्रं तेन दिशो यद्बाहू तेन इन्द्रं यन्नाभिं तेन पृथिवीं यद् हृदयं तेन रुद्रं यच्छिरस्तेन सप्तर्षीन् प्रीणाति । अङ्गुष्ठाना-मिकाभ्यां तु चक्षुषी समुपस्पृशेत् प्रदेशिन्यङ्गुष्ठाभ्यां तु नासिके अङ्गुष्ठ-कनिष्ठिकाभ्यां श्रोत्रे मध्यमाङ्गुष्ठाभ्यां बाह्वोः अङ्गुष्ठेन नाभौ अङ्गुल्यग्रेण हृदि सर्वेषामङ्गुलीतलानां तु शिरसि इति सर्वान् कामान् समर्धयन्तु इति । अथ ऊर्ध्वं स्नानविधिं व्याख्यास्यामः । स्नानार्थं मृदमुत्खनति

मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम्
त्वया हतेन पापेन जिवामि शरदः शतम्

मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् । इति

अप आनयति
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्
ईश्वरीँ सर्वभूतानां तामिहोपह्वये श्रियम्

इति पिण्डीकरोति १ अथ हस्तपादौ प्रक्षाळ्य कमण्डलुं मृत्पिण्डं च संगृह्य

तीर्थं च गत्वा त्रिः पादौ प्रज्ञाळयते । त्रिरात्मानम् । अथ हैके ब्रुवते श्मशानमापो देवगृहं गोष्ठं यत्र च ब्राह्मणाः नप्रज्ञाळ्य पादौ तत्र न प्रवेष्टव्यम् इति । अथापोऽभिप्रपद्यते हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ।

यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः
यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम्
तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः । इति

अथाञ्जलिना अप उपहरति सुमित्रा न आप ओषधयः सन्तु इति । तां दिशं निरुज्ञति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः इति । अथाप उपस्पृश्य त्रिः प्रदज्ञिणमुदकमावर्तते यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात् इति । अप्सु निमज्ज्योन्मज्ज्य नाप्सुमतः प्रयमणं विद्यते । न वाससः पत्पूलनं नोपस्पर्शनं यद्यवरुद्धाः स्युस्तेन तेनो- पतिष्ठते । नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः इत्युत्तीर्याचम्य आचान्तः पुनराचामेत् आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिः ब्रह्म पूता पुनातु माम् । यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहा इति । पवित्रे कृत्वाद्भिर्मार्जयते । आपो हि ष्ठा मयो भुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन मार्जयित्वा- न्तर्जलगतोऽघमर्षणेन त्रीन् प्राणायामान् धारयित्वोत्तीर्य वासः पीडयित्वा प्रज्ञालितोपवातान्यक्लिष्टानि वासांसि परिधायाप आचम्य दर्भेष्वासीनो दर्भान् धारयमाणः सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वो वा दशावरमिति । अथादित्यमुपतिष्ठते उद्वयं तमसस्परि उदुत्यं चित्रं तच्चज्ञुर्देवहितं य उदकात् इति । अथाप्युदाहरन्ति प्रणवो व्याहृतयः सावित्री चेत्येते पञ्च ब्रह्मयज्ञा अह- रहः ब्राह्मणं किल्बिषात् पावयन्ति । पूतः पञ्चभिर्ब्रह्मयज्ञैरथोत्तरं देवतास्तर्पय- तीति २ अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः सर्पा इत्येतानि प्राग्द्वाराणि दैवतानि सनज्ञत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि । वसून् तर्पयामि । पितरोऽर्यमा भगः सविता त्वष्टा वायुरिन्द्राग्नी इत्येतानि दज्ञि- णद्वाराणि दैवतानि सनज्ञत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि । रुद्रान् तर्पयामि । मित्र इन्द्रो महापितर आपो विश्वेदेवा ब्रह्मा विष्णुरित्येतानि

प्रत्यग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि । आदित्यान् तर्पयामि । वसवो वरुणोऽज एकपाद् अहिर्बुध्न्यः पूषा अश्विनौ यम इत्येतानि उदग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि । विश्वान् देवान् तर्पयामि । साध्यान् तर्पयामि । ब्रह्माणं तर्पयामि । प्रजापतिं तर्पयामि । परमेष्ठिनं तर्पयामि । ओं भूर्भुवःस्वः पुरुषं तर्पयामि । ओं भूस्तर्पयामि । ओं भुवस्तर्पयामि । ओं स्वस्तर्पयामि । ओं महस्तर्पयामि । ओं जनस्तर्पयामि । ओं तपस्तर्पयामि । ओं सत्यं तर्पयामि । ओं भवं देवं तर्पयामि । शर्वं देवं तर्पयामि । ईशानं देवं तर्पयामि । पशुपतिं देवं तर्पयामि । रुद्रं देवं तर्पयामि । उग्रं देवं तर्पयामि । भीमं देवं तर्पयामि । महान्तं देवं तर्पयामि । भवस्य देवस्य पत्नीं तर्पयामि । शर्वस्य देवस्य पत्नीं तर्पयामि । ईशानस्य देवस्य पत्नीं तर्पयामि । पशुपतेर्देवस्य पत्नीं तर्पयामि । रुद्रस्य देवस्य पत्नीं तर्पयामि । उग्रस्य देवस्य पत्नीं तर्पयामि । भीमस्य देवस्य पत्नीं तर्पयामि । महतो देवस्य पत्नीं तर्पयामि । भवस्य देवस्य सुतं तर्पयामि । शर्वस्य देवस्य सुतं तर्पयामि । ईशानस्य देवस्य सुतं तर्पयामि । पशुपतेर्देवस्य सुतं तर्पयामि रुद्रस्य देवस्य सुतं तर्पयामि । उग्रस्य देवस्य सुतं तर्पयामि । भीमस्य देवस्य सुतं तर्पयामि । महतो देवस्य सुतं तर्पयामि । रुद्रांश्च तर्पयामि । रुद्रपार्षदांश्च तर्पयामि । रुद्रपार्षदीश्च तर्पयामि । सनत्कुमारं तर्पयामि । स्कन्दं तर्पयामि । इन्द्रं तर्पयामि । षष्ठीं तर्पयामि । विशाखं तर्पयामि । स्कन्दपार्षदांश्च तर्पयामि । स्कन्दपार्षदीश्च तर्पयामि । विघ्नं तर्पयामि । विनायकं तर्पयामि । वीरं तर्पयामि । शूरं तर्पयामि । गणपतिं तर्पयामि । वरदं तर्पयामि । हस्तिमुखं तर्पयामि । विघ्नपार्षदांश्च तर्पयामि । विघ्नपार्षदीश्च तर्पयामि । वैवस्वतं तर्पयामि । यमं तर्पयामि । मृत्युं तर्पयामि । वैवस्वतपार्षदान् तर्पयामि । वैवस्वतपार्षदीस्तर्पयामि । विष्णुं तर्पयामि । श्रियं देवीं तर्पयामि । पुष्टिं तर्पयामि । सरस्वतीं तर्पयामि । विष्णुपार्षदांस्तर्पयामि । विष्णुपार्षदीस्तर्पयामि । विद्यां तर्पयामि । मित्रं तर्पयामि । धन्वन्तरं तर्पयामि । धन्वन्तरपार्षदांस्तर्पयामि । अथ निवीती । ऋृषींस्तर्पयामि । परमऋृषींस्तर्पयामि । ब्रह्मर्षींस्तर्पयामि । राज-ऋृषींस्तर्पयामि । देवऋृषींस्तर्पयामि । श्रुतऋृषींस्तर्पयामि । तपर्षींस्तर्पयामि । सप्तर्षींस्तर्पयामि । काण्डर्षींस्तर्पयामि । ऋृषिकांस्तर्पयामि । ऋृषि-

पुत्रीस्तर्पयामि । ऋषिपुत्रांस्तर्पयामि । बोधायनं तर्पयामि । आपस्तम्बं तर्पयामि । सूत्रकारं तर्पयामि । सत्याषाढं तर्पयामि । हिरण्यकेशिनं तर्पयामि । व्यासं तर्पयामि । प्रणवं तर्पयामि । व्याहृतीस्तर्पयामि । सावित्रीं तर्पयामि । छन्दांसि तर्पयामि । ऋग्वेदं तर्पयामि । यजुर्वेदं तर्पयामि । सामवेदं तर्पयामि । अथर्ववेदं तर्पयामि । इतिहासपुराणांस्तर्पयामि । सर्वदेवजनांस्तर्पयामि । सर्वभूतानि तर्पयामि । अथर्वाणं तर्पयामि । प्राचीनावीती । पितॄन् स्वधा नमस्तर्पयामि । पितामहान् स्वधा नमस्तर्पयामि । प्रपितामहान् स्वधा नमस्तर्पयामि । मातॄः स्वधा नमस्तर्पयामि । पितामहीः स्वधा नमस्तर्पयामि । प्रपितामहीः स्वधा नमस्तर्पयामि । मातामहान् स्वधा नमस्तर्पयामि । मातुः पितामहान् स्वधा नमस्तर्पयामि । मातुः प्रपितामहान् स्वधा नमस्तर्पयामि । मातामहीः स्वधा नमस्तर्पयामि । मातुः पितामहीः स्वधा नमस्तर्पयामि । मातुः प्रपितामहीः स्वधा नमस्तर्पयामि । आचार्यान् स्वधा नमस्तर्पयामि । आचार्यपत्नीः स्वधा नमस्तर्पयामि । गुरून् स्वधा नमस्तर्पयामि । गुरुपत्नीः स्वधा नमस्तर्पयामि । सखीन् स्वधा नमस्तर्पयामि । सखिपत्नीः स्वधा नमस्तर्पयामि । ज्ञातीन् स्वधा नमस्तर्पयामि । ज्ञातपत्नीः स्वधा नमस्तर्पयामि । अमात्यान् स्वधा नमस्तर्पयामि । अमात्यपत्नीः स्वधा नमस्तर्पयामि । सर्वान् स्वधा नमस्तर्पयामि । अनुतीर्थम् अप उत्सिञ्चन्ति ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थ तर्पयत मे पितॄन् तृप्यत तृप्यत इति ॥ नार्द्रवासा नैकवस्त्रो दैवतानि कर्माण्यनुसंचरेत् । पितृसंयुक्तानि चेत्येकेषामेकेषाम् ३ अथातः स्वाध्यायविधिं व्याख्यास्यामः । प्राङ्मुखो वा उदङ्मुखो वा ग्रामान्निष्क्रम्य अप आप्लुत्य यज्ञोपवीत्याचान्तोऽक्लिन्नवासा दर्भाणां महदुपस्तीर्य प्राक्कूलानां तेषु प्राङ्मुख उपविश्योपस्थानं कृत्वा दक्षिणोत्तरौ पाणी सन्धाय पवित्रवन्तौ विज्ञायतेऽपां वा एष ओषधीनां रसो यद् दर्भाः सरसमेव ब्रह्म करोति द्यावापृथिव्योः सन्धिमीक्षमाणः सम्मील्य वा यथा वा युक्तमात्मानं मन्येत तथा युक्तोऽधीयीत स्वाध्यायम् । ओंपूर्वा व्याहृतयः । सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वामिति तृतीयम् । अथ स्वाध्यायमधीयीत ऋचो यजूंषि सामान्यथर्वाङ्गिरसो ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीति । यदृचोऽधीते पयसः कूल्या अस्य पितॄन् स्वधा उपक्षरन्ति यद्यजूंषि घृतस्य कूल्या यत्सामानि मध्वः कूल्या यदथर्वाङ्गिरसः सोमस्य

कूल्या यद् ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृतस्य कूल्याः । स यावन्मन्येत तावदधीत्यैतया परिदधाति नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यो नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि इति । अत ऊर्ध्वं देवयज्ञः सर्वेषामुपदिश्यते । यत्रात्माविरोधेन प्रतिनियतानामोषधीनां कोद्रवचीनराजमाषममूरकुलत्थ-वरकवर्जं निर्वपाणि यवानां तण्डुलानां प्रातः पत्नीं दद्यात् । स्वयं वाथ श्रपयेत् । सुसंमृष्टगृहद्वारोपलेपनः प्रतिनियतः सायंप्रातः अन्यदावश्यकान् कुर्यात् अग्नये जातवेदसे स्वाहा इत्यग्नौ तूष्णीं द्वितीयम् । उदुत्यं जातवेदसम् इत्यादित्यमुपतिष्ठते । ब्रह्मणे नम इति ब्रह्मस्थले बलिं हरेत् । सोमाय इत्युदकुम्भे वायव इति वास्तुगृहे गृहपतय इति गृहद्वारि प्रजापतय इति गर्गगृहे विश्वेभ्यो देवेभ्यः इति देवगृहे शन्नो देवीः इत्यभ्रिण्यादिक्षु तत्पुरुषेभ्य इति प्रतिदिशं गृहेभ्य इत्यन्तरिक्षे सर्वतः पशूनां पतये नमो देवेभ्य इति प्रागुदीच्यां ब्रह्मस्थले वा स्वधा पितृभ्य इति दक्षिणे निदधाति । अनेन वा पूर्वोक्तेन वासबलिहरणेन वा बलिम् ४ वैश्वदेवं हुत्वा आगोदोहमात्रक्षणमाकाङ्क्षे दतिथीन् । श्रोत्रियो वेदव्रती यतिर्धर्मनैष्ठिकः समानवृत्तिः

मनस्वत्याहुतिस्तस्य प्रायश्चित्तं विधीयते
द्व्यहं त्र्यहं वा विच्छिन्ने प्रमादादकृतेषु च

तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्यजेत्
दशाहं द्वादशाहं वा विच्छिन्नेषु तु सर्वशः

चतस्रोऽभ्यावर्तनीर्हुत्वा कार्यस्तान्तुमतश्चरुः
यस्य स्त्री वानुपेतो वा गृहेष्वग्निबलिं हरेत्

कूश्माण्ड्यस्तत्र होतव्यो हुत्वा यज्ञसमृद्धये
प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते

पञ्चानां महतामेषां स यज्ञैः सह गच्छति
प्रवासे कुरुते चैनान् यदन्नमुपपद्यते

न चेदुत्पद्यते चान्नमद्भिरेना समाविशेत्
अद्भिरेव व्रतं कुर्याद्यथालाभमनुव्रतम्

देवानां देवयज्ञेन द्विजो गच्छति साम्यताम्
पितॄणां पितृयज्ञेन भूतानां यज्ञभूतिकैः

मनोर्मनुष्ययज्ञेन ब्रह्मणो ब्रह्मयज्ञतः
एतेषां साम्यतां गत्वा दैवतानां शतं समाः

आनन्दं ब्रह्म गच्छन्ति ध्रुवं शाश्वतमव्ययम् । इति

अथास्यातिथिर्भवति गुरोः समानवृत्तिर्वैखानसो यदि स्नातको वा राजा वा धर्मयुक्तः । तेषामभ्युत्थायासनं पाद्यमर्हणमर्घ्यं प्रयच्छति । यास्तत्र ओषधयः सन्ति ता देयाः । अन्यां वा प्रक्रियां प्रकुर्वीत । ओषधिविभागस्तु विभववता कार्यः । अभावे भूमिरुदकं तृणानि कल्या वागिति एतानि वै सतोऽगारे न क्षीयन्ते कदाचन इति । तानेतान् परं ब्रह्मेत्याचक्षते । तेषां ग्रहणे द्वादशरात्रं व्रतं चरेद् अक्षारलवणभोजनम् अधश्शयनं ब्रह्मचर्यम् । त्रिरात्रोपोचित्तः उत्क्षेपणौ परौ गृह्णीयात् । बलिहरणं व्याख्यातम् ५ अथ मधुपर्कं व्याख्यास्यामः । चत्वारि पात्राणि कांस्यतुर्याणि दधि मधु घृतं कूर्चत्रयं च वाससी कुण्डलयुग्मं च दर्भेषु सादयित्वा दर्भैरपिदधाति । तिरःपवित्रं प्रोक्षणीः संस्कृत्येमानि प्रोक्ष्य पवित्रान्तर्हिते पात्रेऽप आनीयोत्पूय अर्हणीयार्थान्निधायैवमेव पाद्यमेवमेवाचमनीयकं कंसे तिरःपवित्रं दधि मधु घृतमानीय पुनराहारं त्रिरुत्पूय मधुपर्कार्थान्निधायाचार्यश्वशुरपितृव्यमातुल-स्नातकातिथिराजभ्यो दद्यात् । विवाहे वराय । अथाद्यः कर्मणि च दद्याद् अयं कूर्च इति कूर्चम् । तस्मिन् प्राङ्मुख उपविशति राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् इति । अथास्मै कूर्चाभ्यां परिगृह्यार्हणीयं दद्याद् अर्हणीयमुदकम् इति । तदभिमन्त्रयते आ मा गात्तेजसा वर्चसा यशसा संसृज पयसा च इति । तदञ्जलिनोऽअसंगृह्य प्राक् सेक्तवा इत्युक्त्वा प्राञ्चं विसृजति । एवमेव पाद्यं दद्यात् पाद्यमुदकम् इति । तदभिमन्त्रयते यशोऽसि यशो मयि धेहि राष्ट्रमसि राष्ट्रं मयि धेहि इति । तेनास्य पादावन्यः प्रक्षाळयति । अवनेक्तुः

पाणिं संमृशति मयि महो मयि भर्गो मयि यशः इति । उपस्पृश्य मयीन्द्रियं वीर्यम् इत्यात्मानं प्रत्यभिमृशति । आचमनीयमुदकम् इति । तेनाचामति अमृतोपस्तरणमसि इति । आचम्य अथास्मै मधुपर्कं दद्याद् अयं मधुपर्क इति । तदभिमन्त्रयते स मावतु स मा पातु स मा जुषताम् इति । वाससी कुण्डले च दद्यात् । स्वामा तनूराविश इत्यहतं वासः परिधायैवमासंग्यं कुण्डले च गृह्य यज्ञोपवीतं कृत्वाप आचम्य मधुपर्कं गृह्णाति श्रीरस्येहि मयि श्रयस्व इति । तदङ्गुष्ठेन महानाम्श्यग्रचोपसंगृह्यावजिघ्रति ग्राणेमं ते बलिं हरामि श्रैष्ठ्यं म आधिपत्यं गमय इति । अप उपस्पृश्य अङ्गुळीभिः समुदायुत्याचामति प्रिय-तमो नामासि देवयादुर्मह्यं त्वा श्रियै यशसे गृह्णामि इति । सोमोऽसि सोमपं मा कुरु इति द्वितीयम् । अन्नमस्यन्नादं मा कुरु इति तृतीयम् । पीत्वोच्छिष्टं निधाय अमृतापिधानमसि इत्याचमनीयेनाचम्य उपवीतं गामभिमन्त्रयते जहि मे पाप्मानमुपवेत्तुश्च इति । तामुद्वा सृजत कुरुतेति वा ब्रूयात् । यद्युत्सृजति तामभिमन्त्रयते गौर्धेनुर्भव्या इति द्वाभ्याम् । तस्यामुत्सृष्टायां मेषमजं वालभते । आरण्येन वा मांसेन । न त्वेवामांसोऽर्घ्यः स्यात् । अशक्तौ वा यवसक्तुमिश्रमोदनं यथालाभं दद्यात् ६

पञ्च यज्ञान् ततः कृत्वा ब्रह्मयज्ञाद्यनुक्रमात्
देवयज्ञं ततः कृत्वा पितृयज्ञं ततः परम्

भूतयज्ञं च कृत्वा तु यज्ञं मानुष्यमेव च
कृत्वैवं पञ्चधा यज्ञान् यथाशास्त्रानुसारतः

गोमयं मण्डलं कृत्वा गृहद्वारे तु देशतः
पतिताय शुनादिभ्यः पिण्डान् सम्यङ् निवेदयेत्

देवविहितां पूजां कृत्वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य क्षत्रियस्य त्रिकोणमुपलिप्य वैश्यस्य वृत्तमुपलिप्य भोजनं कुरुते ।

ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशन एव च
मण्डलेनोपजीवन्ति तस्मात् कुर्वीत मण्डलम्

यातुधानाः पिशाचाश्च यक्षराक्षसकिन्नराः
घ्नन्ति वै बलमन्नस्य मराडलेन विवर्जितम् । इति

वचनात् प्रयत्नतो मराडलं कृत्वार्द्रपादः प्राङ्मुख उपविश्य भूमौ सव्यं पादं प्रतिष्ठाप्याधोमुखो वाग्यतः पर्णमयं वा कांस्यमयं वा पात्रं सव्येन हस्तेन संस्पृष्ट्वा स्नेहलवणव्यञ्जनाद्यन्नेनाज्येनाकूरो दातव्यः । ततो भोक्तव्यमित्याहुः । उदक्यादिभिर्न दर्शितमन्नम् । दर्शनमात्रे श्रा मस्तकादा हृदयाद्वा दक्षिणं पाणिमुद्धरेत् । श्राज्येनाभिघारयति । श्रथोदकेन प्रदक्षिणं परिषिञ्चति । ऋतं त्वा सत्येन परिषिञ्चामि इति सायम् । सत्यं त्वर्त्तेन परिषिञ्चामि इति प्रातः । पाणिं प्रक्षाळ्यान्नसूक्तेनान्नमभिमृशति श्रहमस्मि प्रथमजा ऋतस्य इति दशर्चेन सूक्तेन । श्रथ श्रप श्राचामयति श्रमृतोपस्तरणमसि इति । श्रथ प्राणाहुतीर्जुहोति प्राणे निविष्टोऽमृतं जुहोमि शिवो मा विशाप्रदाहाय प्राणाय स्वाहा इति प्राणाय । श्रपाने निविष्टोऽमृतं जुहोमि शिवो मा विशाप्रदाहाय श्रपानाय स्वाहा इत्यपानाय । व्याने निविष्टोऽमृतं जुहोमि शिवो मा विशा-प्रदाहाय व्यानाय स्वाहा इति व्यानाय । उदाने निविष्टोऽमृतं जुहोमि शिवो मा विशाप्रदाहाय उदानाय स्वाहा इत्युदानाय । समाने निविष्टोऽमृतं जुहोमि शिवो मा विशाप्रदाहाय समानाय स्वाहा इति समानाय । प्राणाय स्वाहा श्रपानाय स्वाहा व्यानाय स्वाहा उदानाय स्वाहा समानाय स्वाहा इति वा । एता श्राहुतीर्हुत्वा यथाकामं भुङ्क्ते मूलफलादिव्यञ्जनानि न दन्तेन खादेत् पादोद्धृतानि सर्वाणि स्नेहद्रव्याणि व्यञ्जनानि । पुनः पुनः पानेनास्ति दोषः । दध्ना हविर्मिश्रेन त्रिवृतान्नेन यथाकर्म हुत्वाथाप श्राचम्य श्रमृतापिधानमसि इत्याचान्तः पुनराचम्य प्राणानां ग्रन्थिरसि स मा विस्रस इति नाभिदेश-मभिमृशति । एवं भोजने भोजने कुर्वन् श्रहोरात्रोपवासफलमश्नुते । यदि शयनमिच्छेन्नोदक्च्छिरा न वंशवशो न द्वाराय पादाभ्यां न पर्वणे नोत्सवेषु न भसि च न ग्रहायतनभूतायतनाग्न्यायतनेषु न नग्नो नाशुचिः न सन्ध्ययोर्न विशीर्नखट्वायां न श्मशानायतनमहावृक्षच्छायासु नान्यत् प्रमादमस्तीति मन्यते । प्राक्च्छिरा दक्षिणशिरा वा संविशेदिति ७ श्रथापराह्णे ताम्रमयं वा मृगमयं वा कमराडलुमादाय ग्रामात् प्राचीमुदिचीं वा दिशमुपनिष्क्रम्य तीर्थे गत्वोदकं गृहीत्वा शुचौ देशे शौचार्थे मृदं परिगृह्य नसिक्तं नपुरीषं नोषरं नवल्मीकं नशर्करामिश्रं नशाड्वलमिश्रं कर्णस्थब्रह्ममूत्रः पवित्रमसि इति

तृणैरवकीर्य तेषु मूत्रपुरीषं विसृजति । न चित्यां न नद्यां न शाड्वलोपवनदिव्यच्छायासु न पथि न भस्मनि न क्षेत्रमध्ये कृष्णे न गोमये न श्मशानमहावृक्षवल्मीकच्छायासु । दिवासन्ध्ययोरुदङ्मुखः रात्रौ चेद् दक्षिणामुखः । शिश्नं गृहीत्वोत्थाय यथा गन्धलेपक्षयकरं तथातन्द्रितः शौचं कुर्यात् । एकया च कमण्डलुमुपस्पृश्य प्रक्षाळ्य पाणिपादौ चाचम्य ओंकारं मनसा ध्यात्वा शुचिर्भवेत् । अथास्तंगतेऽर्के अद्भिर्मार्जयते दधिक्राविष्णोऽकारिपम् इति । अथापोऽश्नाति अग्निश्च मा मन्युश्च इत्येतेनानुवाकेन । अप आचम्याद्भिर्मार्जयते आपो हि ष्ठा मयोभुव इति तिसृभिः । तूष्णीं प्रदक्षिणमुदकेन प्रवर्तयेत् । अथाञ्जलिनोदकमादायोत्थायादित्याभिमुखस्तिष्ठन् प्रणवेन व्याहृतीभिः सह गायत्र्याभिमन्त्र्य त्रिरूर्ध्वं प्रक्षिपेत् । ततः प्रदक्षिणं कुर्यात् । अथोपविश्याद्भिस्तर्पयते धातारं तर्पयामि । अर्यमणं तर्पयामि । मित्रं तर्पयामि । वरुणं तर्पयामि । अंशुमन्तं तर्पयामि । भगं तर्पयामि । इन्द्रं तर्पयामि । विवस्वन्तं तर्पयामि । पूषणं तर्पयामि । पर्जन्यं तर्पयामि । त्वष्टारं तर्पयामि । विष्णुं तर्पयामि इति । अथोदकसमीपे दर्भैरवकीर्योपविश्य पवित्रपाणिः प्रत्यङ्मुख उपविश्य गायत्रीं मनसावाहयेत् । आयातु वरदा देव्यक्षरं ब्रह्मसम्मितम् । गायत्री छन्दसां मातेदं ब्रह्म जुषस्व नः । ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुः अभिभूरों गायत्रीमावाहयामि । सावित्रीमावाहयामि । सरस्वतीमावाहयामि । इत्यावाह्य ओं भूः ओं भुवः ओं सुवः ओं महः ओं जनः ओं तपः ओं सत्यं ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् इत्येतमनुवाकं त्रिरभ्यस्य त्रीन् प्राणायामान् धारयित्वा नक्षत्राणामुदयात् पूर्वं प्रणवेन व्याहृतीभिः सह सावित्रीं सहस्रकृत्व आवर्तयेत् शतकृत्वो वा दशावरं वा । अथ देवीमुद्वासयेत् उत्तमे शिखरे इति । अथोत्थाय वारुणीं दिशमुपतिष्ठते यच्चिद्धि ते विशो यथा इति तिसृभिः इमं मे वरुण श्रुधी हवम् इति द्वाभ्याम् । दक्षिणं बाहुमनुपर्यावृत्य दक्षिणां दिशमुपतिष्ठते यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च । औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमः । इति । एवमेव उत्तरां दिशमुपतिष्ठते ऋतँ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः । इति । एवमेव पर्यावृत्य प्रत्यङ्मुखः स्थित्वा यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे

वाजिनीवति मुखमङ्ग्धि सरस्वति इति मुखमभिमृशति । पिशङ्गभृष्टिमंभृणं पिशाचमिन्द्र संवृणु । सर्वं रक्षो निबर्हय इति स्कन्धमभिमृशति । त्रीणि प्रदक्षिणानि कृत्वाभिवादनं करोति । एवं प्रातःसन्ध्यामुपास्यापोशनकाले सूर्यश्च मामन्युश्च इत्येतेनानुवाकेनाभिमन्त्र्य प्राश्नाति । प्राङ्मुखस्तिष्ठन् सावित्रीं जपेत् । प्राचीं दिशमुपतिष्ठते मित्रस्य चर्षणीधृत इति तिसृभिः । प्रसिद्धं स्नानं कृत्वा मध्याह्ने सन्ध्यामुपास्य आपः पुनन्तु पृथिवीम् इत्यपोऽश्नाति । अथोदकमादाय आ सत्येन इत्यभिमन्त्र्योर्ध्वं प्रक्षिप्यादित्यमुपतिष्ठते उद्वयं तमसस्परि उदुत्यं चित्रम् इति तिसृभिः तच्चक्षुर्देवहितं य उदगात् इति द्वाभ्यां च । दिशोपस्थानमेव । स्नानविधियुक्तेन वा सन्तिष्ठते सन्ध्योपासनः सन्तिष्ठते इति ८ अथातआचमनविधिंव्याख्यास्यामः अथहस्तपादौप्रक्षाळ्य अग्निः प्रजापतिः अथातःस्वाध्यायविधिं वैश्वदेवंहुत्वा अथमधुपर्कंव्याख्यास्यामः पञ्चयज्ञान् अथापराह्णे अष्टौ

इत्याग्निवेश्यगृह्यसूत्रे द्वितीयप्रश्ने षष्ठोऽध्यायः

## अथ सप्तमोऽध्यायः

पुनरुपनयनं व्याख्यास्यामः । अगुरोरुच्छिष्टभक्षी मधुमांसभक्षी भवति । सन्ध्याकार्य उदकुम्भेऽग्निकार्ये चिरलोपी भवति । अगुरोः --------स्--प्रेतमनुगच्छेद् दहेद्वा । उभयत्र दशाहानि कुलान्यन्नवेजञ्च ब्रह्मचर्यक्षतिर्भवति । एतैश्चान्यैश्च निमित्तानि भवन्ति चेत् पूर्वपक्षे पुण्ये नक्षत्रे गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य यमनियमयन्त्रैः व्रतोपवासैश्च प्रायश्चित्तं कृत्वा अग्निमुपसमाधाय सम्परिस्तीर्या दण्डप्रदानात् पूर्ववदुपनयनं कृत्वा सावित्रीं वाचयति

भिक्षां न कुर्वन्नश्नाति न च श्मश्रूणि वापनम्
शिरोमुण्डं न कुर्वन्न वाससः परिधापनम्

नालङ्कारं ततः कुर्वन् ब्रह्मसूत्रस्य धारणम्
मेखलाधारणं चैव न चैवाम्बरधारणम्

न चाभिमन्त्रणं कुर्वन् नाजिनस्य च धारणम्

न प्रदानं च दराडस्य न भैक्षाचरणं तथा

वाससो ग्रहणं नास्ति व्रतोपनयनं तथा
एवं हि विधिवत् कृत्वा पूतो भवति मानवः

पुनःसंस्कारं कृत्वा पूतो भवति । तदहरेव सावित्रीव्रतं कृत्वा तदहरेव विसृजेद् इत्याह १ यः पाणिग्रहादिरग्निस्तमौपासन इत्याचक्षते । तस्मिन् गृह्याणि कर्माणि क्रियन्ते । तस्यौपासनेनाग्निहोत्रित्वं यथा पार्वणेन चरूणां दर्शपूर्णमासयाजित्वम् । तस्मान्नित्यो धार्योऽनुगतो मन्थ्यः श्रोत्रियागाराद्वा-हार्यः । उपवासश्चानुगते भार्यायाः पत्युर्वा । एताश्चाहुतीर्जुहुयात् मित्राय स्वाहा वरुणाय स्वाहा सोमाय स्वाहा सूर्याय स्वाहा अग्नये स्वाहा अग्नये तपस्वते जनद्वते पावकवते स्वाहा अग्नये शुचये स्वाहा अग्नये ज्योतिष्मते स्वाहा अग्नये व्रतपतये स्वाहा इति व्याहृतीभिर्विहृताभिः समस्ताभिश्च । अथ यदि द्व्यहं त्र्यहं वा सायंप्रातर्विच्छिन्नो भवति अग्नये तन्तुमते जुहुयात् । यदि स्थालीपाकस्यातिपातनं भवति अग्नये पथिकृते अग्नये वैश्वानराय वा जुहुयात् । अस्यापि व्याख्यातावाग्रयणपिराडपितृयज्ञौ । द्वादशाहानि विच्छिन्नः पुनराधेयः प्रतिसंख्याय वा होमान् जुहुयात् । पुनराधानं वक्ष्यामः । परिश्रिते उद्धत्यावोक्ष्य सिकतोपोप्त उदुम्बरशाखाभिः प्लक्षशाखाभिः पालाशशा-खाभिर्वा प्रच्छाद्य याज्ञिकात् काष्ठादग्निं मथित्वा श्रोत्रियागाराद्वाहृत्य सते कृत्वा प्रज्वलयित्वा शाखाम् अपोह्य ओं भूर्भुवःस्वरों प्रतिष्ठ इति न्युप्योपसमादधाति । व्याहृतिपर्यन्तं कृत्वा तिस्रस्तन्तुमतीर्जुहोति तन्तुं तन्वन् उद्बुध्यस्वाग्ने त्रयस्त्रिँशत्तन्तवः इति । अथ चतस्रोऽभ्यावर्तनीर्जुहोति अग्नेऽभ्यावर्तिन् अग्ने अङ्गिरः पुनरूर्जा सह रय्या इति । एतां प्राजापत्यां मनस्वतीं साप्तपतीं च हुत्वा द्वे मिन्दाहुती जुहोति यन्म आत्मनो मिन्दाभूत् पुनरग्निश्चक्षुरदात् इति । प्रायश्चित्तीयां जुहोति अयाश्चाग्नेरनभिशस्तीश्च सत्य-मित्वमया असि । अयसा मनसा घृतोऽयसा हव्यमूहिषे अयानो धेहि भेषजं स्वाहा इति । दशहोतारं मनसानुद्रुत्य सगृहं हुत्वा इमं मे वरुण तत्त्वा यामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि प्रजापते यदस्य कर्मणोऽत्यरीरिचम् इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति । यथा पुरस्ताद् ब्राह्मणानन्नेन परिविष्य पुरायाहं स्वस्त्ययनमृद्धिमिति वाचयित्वा प्रसिद्ध

आग्नेयः स्थालीपाकः । अत्र गुरवे वरं ददाति वाससी धेनुमनड्वाहं वा । यदि प्रवसेद् ओं भूर्भुवःस्वः इति उपस्थाय प्रवसेत् । यदि प्रयायाद् व्याख्यातमात्मन्यरणयोः समारोपणमुपावरोहणं च । समिधि वा समारोप- नमुपावरोहणं च । समिधि वा समारोपयेदरणीकल्पेन । यत्र वासस्तस्मिन् श्रोत्रियागारादग्निमाहृत्य आजुह्वानः उद्बुध्यस्व इति द्वाभ्यामवधाय परिस्तीर्य यस्यां समारूढतामादधाति । व्याख्यातो होमकल्पः । २ अथ गृहस्थस्य द्वे भार्ये । अग्निमुपसमाधाय संपरिस्तीर्याज्यं बिलाप्य उत्पूय स्रुक्स्रुवौ निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वान्वारब्धायां पत्न्यां यजमानो जुहोति नमस्तर्षे गद । अव्यवायै त्वा स्वधायै त्वा । मा न इन्द्राभितस्त्वदृष्वारिष्टासः । एवा ब्रह्मन् तवेदस्तु स्वाहा इति । अथैनमग्निं समारोपयते अयं ते योनिर्ऋत्विय इति । समारोप्य पूर्वाग्नौ समिधमाधाय आजुह्वानः उद्बुध्यस्व इति द्वाभ्यां संपरिस्तीर्याज्यं विलाप्योत्पूय स्रुक्स्रुवौ निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वान्वारब्धयोः पत्न्योः यजमानो जुहोति यो ब्रह्मा ब्रह्मण उज्जहार इत्येतेन सूक्तेनैकैकशश्चतुर्गृहीतं गृहीत्वा । आ प्रणीताभ्यः कृत्वा चतुश्शरावमोदनं श्रपयित्वाभिघार्योदञ्चमुद्वास्य प्रतिष्ठितमभिघारयति । परिधानप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जुहोति । समितं संकल्पेथाम् इति पुरोनुवाक्यामनूच्य अग्ने पुरीष्याधिपा भवा त्वन्न इति याज्यया जुहोति । अधाज्याहुतीरुपजुहोति पुरीष्यस्त्वमग्ने इत्यान्तादनुवाकस्य । स्विष्टकृत् प्रभृति सिद्धमा धेनुवरप्रदानात् । सन्तिष्ठते औपासनतन्त्रः सन्तिष्ठते औपासनतन्त्रः ३ अथ गृह्यप्रायश्चित्तानि जुहोति अनुगतेऽग्नौ कालातिक्रमे होमयोः दर्शपूर्णमासयोश्च आग्रयणमकृत्वा नवान्नप्राशनेऽकृतसीमन्तायां प्रसूतायां भार्यायां स्त्रीषु गोषु च यमळजनने परागमने रजस्वलागमने दिवामैथुने कुमारस्याजातसंस्कारे मन्त्रविपर्यासे कर्मविपर्यासे ब्रह्मचारिणो व्रतविपर्यासे मेखलाच्छेदने दण्डभिन्ने यज्ञोपवीतस्याधारणे सन्ध्यालोपे अग्निकार्यलोपे उदकुम्भलोपे इत्येतैश्चान्यैश्च कल्पदृष्टमग्निमुपसमाधाय संपरिस्तीर्य घृतं चतुर्गृहीतं गृहीत्वा पाहि नो अग्न एनसे स्वाहा इति । पुरस्ताच्चोपरिष्टाच्च महाव्याहृतीभिर्हुत्वा एतदेवास्य प्रायश्चित्तमविच्छिन्नकरणं सन्ततं भवतीति । उपनयनाग्निर्विवाहाग्निः सूतकाग्निः श्मशानाग्निरा चतुरहादा दशाहादा सञ्चयनादुद्वातः स्यात् अपहता असुरा रक्षांसि पिशाचा ये क्षयन्ति पृथिवीमनु । अन्यत्रेतो गच्छन्तु यत्रैषां गतं मनः इत्यद्भिरवोक्ष्य

क्षिप्रं भस्मसमारोपणम् । अयं ते योनिर्ऋत्विय इति श्रोत्रियागारादग्निमाहृत्य आजुह्वानः उद्बुध्यस्व इति द्वाभ्यामवधाय परिस्तीर्य परिषिच्य प्रायश्चित्तं जुहोति अयाश्चाग्नेः पञ्चहोतारं ब्राह्मण एकहोतारं मनस्वतीमिन्दाहुतीव्याहृतीभिः । अथापिवा चतुरहःसद्यस्कालं ब्रह्मचर्यं विच्छिनत्ति सारस्वतेन होमेन मनस्वतीमिन्दाहुतीमहाव्याहृतीनां सप्रणवं जुहुयात् ४ अथ ब्रह्मचार्यवकीर्णी भवति योऽयोनौ रेतःपातेन वा सन्ध्यालोपेन वोदकुम्भलोपेनाग्निकार्यलोपेन वा । अन्यानि निमित्तानि भवन्ति चेच्छुक्लमनार्द्रमाच्छाद्य कृतोपवासः कृतनियमयन्त्रोऽमावास्यायां रात्र्यामग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा द्विराज्यस्योपघातं जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि कामकामाय स्वाहा इति । पुनर्मामैत्विन्द्रियम् इत्येतमनुवाकमष्टशतमाज्यस्य जुहुयात् । यद्देवा देवहेळनम् इत्येतमनुवाकं प्रत्यृचमाज्यस्य जुहुयात् । वारुण्यादिजयाप्रभृति सिद्धमा धेनुवरप्रदानात् । गुरवे गां ददाति । अथ स्वप्ने शुक्लं पतेद् वासांसि विसृज्यान्यत् परिदधाति । उपव्युषसि ग्रामात् प्राचीमुदीचीं दिशमुपनिष्क्रम्य नदीषु स्नायात् ।

समुद्रगानदीस्नानात् त्रिरात्रं फलमश्नुते
समुद्रगानदीस्नानात् पक्षोपोषणमेव च

सरित्पतेस्त्वमावास्यामनन्तमयने विषौ

इत्येवं स्नानं यथाविधि तथा करोति । पुनर्मामैत्विन्द्रियम् इत्येतेनानुवाकेन जप्त्वा पूतो भवतीत्याह भगवानाग्निवेश्यः ५ अथर्तुस्नानाद् भर्तुर्मुखे नान्वीक्षमाणा प्रयत्नाद्वाहर्मुखं दर्शयेत् न तदहः संवेशनं कुर्यात् । यदि संवेशयेत्

तदहर्जायते पुत्रः सोऽल्पायुर्धनवर्जितः
पञ्चम्यां तु श्रमेद्या वा वन्ध्यां नारीं प्रसूयते

षष्ठ्यां तु या श्रमेत् साध्वी पुत्रपौत्रवती भवेत्

सप्तम्यां तु तथा नारी अष्टम्यां षरामुखोपमः

परिप्रिया नवम्यां तु दशम्यामुत्तमः सुतः
एकादश्यां तु दुष्टात्मा द्वादश्यां तु धनेश्वरः

त्रयोदश्यां तु दौर्भाग्या चतुर्दश्यघवान् सुतः
लभेत् पतिव्रतां नारीं पञ्चदश्यां तथैव च

षोडश्यां लभते पुत्रं ब्रह्मकीर्त्तिं नतादृशम्
तदूर्ध्वोपयमं नास्ति कामभोगैव केवलम्

तस्मात् सर्वप्रयत्नेन षोडश्यन्तं प्रतिश्रमेत्
शुक्लोत्कर्षे लभेत् पुत्रं शोणितस्य स्त्रियं लभेत्

निन्दितेऽहनि संवेशं न कुर्यात्तु प्रयत्नतः
यदि प्रमादात् कुर्याच्चेज्जपेत् तां वैष्णवीमृचम्

केशवादीनि नामानि जपेत्तु विविधानि च
अग्न्यगारे ततो गत्वा हुत्वा पूर्णाहुतिं ततः

एवं जन्मत्रयं वापि श्रवणं च न संविशेत्
पर्वद्वये च तत्कुर्यात् श्राद्धं दत्त्वा न वाहनि

सोमवारेऽर्कवारे च भौमवारे शनैश्चरे
विषुवे अयने चैव व्यतीपाते च सङ्क्रमे

एतान्यन्यानि निन्द्यानि दिवसानि न संविशेत्
विष्टिरष्टम्यथान्ये च पद्मच्छिद्रास्तथैव च

षोडशे द्वादशे वापि पञ्चदश्यां तथैव च
चतुर्दश्यां नवम्यां च षष्ठ्यामष्टम एव च

एतान्यन्यतमं वीक्ष्य शौचं कुर्याद्यथोदितम्
अभिवीक्ष्य सुनक्षत्रं पुण्यं चैव ग्रहोदयम्

प्रक्षाळ्य पाणिपादौ द्वावाचम्य मनसा हरिम्
ध्यात्वा नारायणं देवं शङ्खचक्रगदाधरम्

अस्या दक्षिणहस्तेन भगं चैव प्रदर्शयेत्
शिवेन त्वाभिमृशामीति शिश्नं योनौ प्रवेशयेत्

एकया ऋषभेणेति ऋचा सम्यगनीक्षणः

यथा रत्यन्तं कृत्वा तथा शौचं कृत्वा पश्चाज्जपेदृचः सम्यक् आते योनिम् इति । य एवं ज्ञात्वाभिमृशति स सत्पुत्रं लभते बुधः । एवमेव मासि मासि ऋतुवेळायां कृत्वा पुत्रं चारुबुद्धिमन्तं बलिष्टं लभते बलिष्ठं लभत इत्याह भगवानाग्निवेश्यः ६

ब्रह्मकूर्चं प्रवक्ष्यामि कायशोधनमुत्तमम्
वेदादिजयहोमं च मन्त्रहीनमसंस्कृतम्

शुद्रान्नभोजने चैव वेदानां विक्रयेषु च
काकश्वानावलीढे चोत्कण्ठके मृगपक्षिणाम्

पञ्चमम्लेच्छसंस्पर्शे पञ्चगव्यं विशोधनम्
नीलवर्ण्यास्तु गोमूत्रं कृष्णागोमयमुद्धरेत्

ताम्रवर्णीपयश्चैव श्वेताया दधिरेव च
कपिलाया घृतं ग्राह्यं महापातकनाशनम्

अलाभे सर्ववर्णानां कपिलादेकात्तु ग्राह्यकम्
गोमूत्रैकपलं दद्यादङ्गुष्ठार्धं तु गोमयम्

क्षीरं सप्तपलं दद्याद् दधि त्रिपलमेव च
घृतमेकपलं दद्यात् तथैव च कुशोदकम्

सावित्र्या ग्राह्य गोमूत्रं गन्धद्वारेति गोमयम्
आप्यायस्वेति च क्षीरं दधिक्राव्णा इति वै दधि

आज्यं शुक्रमसीत्येवं देवस्य त्वा कुशोदकम्
आपो हि ष्ठा मयोभुव इत्यालोडय्य मा नस्तोके

इत्यभिमन्त्र्य प्रणवेनोद्धृत्य प्रणवेन निर्मथ्य प्रणवेनैव पिबेत् । अग्नये सोमाय इरावती इदं विष्णुर्विचक्रमे मा नस्तोके प्रजापते गायत्रीं च हुत्वा मध्यमेन पलाशपर्णेन पद्मपत्रेण तत् पिबेत्

यत् त्वगस्थिगतं पापं देहे तिष्ठति मामके
ब्रह्मकूर्चोदकात् सर्वे दहत्यग्निरिवेन्धनम् । इति ७

अथातो नैमित्तिकानि प्रायश्चित्तानि व्याख्यास्यामः । सर्वत्र वैष्णवर्चं जपेत् विष्णोर्नुकं वीर्याणि प्रवोचम् इति । अथ कर्मान्तरे यदि क्षुधेद्वा निष्ठीवेद्वा सहस्रशीर्षा पुरुष इति जपति । अप उपस्पृश्याङ्गुष्ठानामिकाभ्यां दक्षिण-कर्णमुपस्पृशेत् यदि मूत्रं कुर्यात् पादौ प्रक्षाळ्याचम्य ओंकारं मनसा ध्यात्वा शुचिर्भूत्वा पुरुष एवेदँ सर्वम् इति द्वे ऋचौ जपेत् । यदि मेहेत् पूर्ववच्छौचं कृत्वा त्रिपादूर्ध्व उदैत्पुरुष इति तिस्र ऋचो जपेत् । यद्यशुचिस्पर्शे शुद्धजलाशये स्नात्वाम आचम्य तस्माद्यज्ञात्सर्वहुत इति चतस्र ऋचो जपेत् । यदि चण्डालपतितादिदर्शे अप आचम्य आदित्यमभिवीक्ष्य ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः । पद्भ्याँ शूद्रो अजायत । चन्द्रमा मनसो जातः । चक्षोः सूर्यो अजायत इति तिस्र ऋचो जपेत् । यदि होमो मध्ये विच्छिन्नः स्याद् वेदाहमेतं पुरुषं महान्तम् इति तिस्र ऋचो जपेत् । द्वे मिन्दाहुती हुत्वा पुनः शेषं समापयेत् । यदि पात्राणि शुनाद्यवलीढे दारुमयान्यग्नौ प्रक्षिपेत् मृण्मयानि चाप्सु प्रक्षिपेत् लोहमयानि भस्मना शुध्यन्ति । अन्यानि नवानि पात्राणि संगृह्य विष्णो त्वन्नो अन्तमः

विष्णोर्नुकं वीर्याणि प्रवोचम् इति द्वे ऋचौ जपेत् । यन्म आत्मनो मिन्दाभूत् पुनरग्निश्चक्षुरदात् इमं मे वरुण तत्त्वा यामि त्वन्नो अग्ने इति षडाहुतीर्जुहुयात् । यद्यग्निमुदक्याद्यवलीढे अग्निमुद्वास्य पूर्ववत् शौचं कृत्वा अग्निं मथित्वा लौकिकं वाहृत्य स्रुक्स्रुवौ निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा पूर्णाहुतिं हुत्वा पूर्ववत् संस्कारं करोति । यद्यरण्यशुचिर्भवेद् अन्यामाहृत्यैव चतुर्गृहीतं गृहीत्वा पुरुषसूक्तेन मनसानुद्रुत्य जुहोति । यदि सूतको मृतको भवेत् तन्मध्ये होमं न करोति स्थालीपाकं च तान्याहानि । व्यतीपाते तद्द्रव्यं ब्राह्मणाय ददातीत्याह भगवानाग्निवेश्यः ८ अथातो गृह्याणि प्रायश्चित्तानि स्मर्यन्ते तानि वक्ष्यामः । शेषाणि वैतानिकानि । य आहिताग्नेर्धर्मस्स धर्मो य आहिताग्नेः लोकस्स औषासनिकस्य इति शाट्यायनीयं ब्राह्मणं भवति । तत्र ये पुरोडाशास्त इह चरवः । पयोदधिपृषदाज्यानाम् आज्यवत् संस्कारो न दध्नोऽधिश्रयणं प्रत्यसनं प्रतिवेषणम् अग्नि रौद्रराक्षसपैतृकनैर्ऋतच्छेदन-भेदननिरसनात्माभिमर्शनानि च कृत्वा अप उपस्पृशेत् । सर्वत्र स्कन्ने भिन्ने क्षामे दग्धे विपर्यासेऽन्तरिते च द्वे मिन्दाहुती जुहुयात् यन्म आत्मनो मिन्दाभूत् पुनरग्निश्चक्षुरदाद् इति । स्कन्ने सन्त्वा सिञ्चामि इति स्कन्नमभिमन्त्र्या-पोह्यावसिच्य भूः इत्युपस्थाय अस्कान्द्यौः पृथिवीम् इति द्वे आहुती जुहुयात् । आज्यं चेद् देवाञ्जनवनस्पतिमंहस इति चानुमन्त्र्य किञ्चिच्च दद्यात् । अथ भिन्ने भूमिर्भूम्ना इति भिन्नमभिमन्त्र्य उन्नम्भय पृथिवीम् इत्यपोह्यावसिच्य त्रयस्त्रिंशत्तन्तव इत्येतया जुहुयात् । अग्नौ प्रक्षिपेद् दारुमयाणि । अथ क्षामे निर्ऋत्यै त्वा इति दग्धमभिमन्त्र्य किञ्चित् त्वं पराची त्वमवाची त्वं रक्षाँसि गच्छ इति दक्षिणापरमुत्तरापरं वा दिशं प्रतिनिरस्य अग्नी रक्षाँसि सेधति इति तिस्र आज्याहुतीर्जुहुयात् । हविषामभिगमनस्यैकदेशं चेदुद्धृत्य तत्कृत्वैतया जुहुयात् । एतेनाश्रृतदुःश्रृतौ व्याख्यातौ । अपोऽभ्यवहरेत् । रुद्राय त्वा इत्यश्रृतमभिमन्त्र्य यमाय त्वा इति दुःश्रृतमथ परिस्तरणदाहे अग्नये क्षामवते नमो नमः क्षामवन्मा मा हिंसीः मा मे गृहं मा मे धनं मा मे पशून् इत्यभिमन्त्र्य अग्नये क्षामवते स्वाहा इति जुहुयात् । इन्द्रं वो विश्वतस्परि इति पुनः परिस्तिर्य इन्द्राय स्वाहा इति जुहुयात् । अथ परिधिदाहे प्रदाव्यायाग्नये नमो नमः प्रदाव्याय इति । समानमत ऊर्ध्वम् अग्नेः समिदसि इति पश्चार्धं यमस्य समिदसि इति दक्षिणार्धम् सोमस्य समिदसि इत्युत्तरार्धम् । इन्धानास्त्वा शतं हि मा इति द्वे आहुती जुहुयात् । जुष्टेऽन्यं परिदध्यात् गन्धर्वोऽसि इति

प्रतिमन्त्रम् । अथ विपर्यासे त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि प्रजापते इति चतस्र आहुतीर्जुहुयात् । एता एवान्तरिते मनो ज्योतिः पञ्चमीमन्तरितं च कुर्यात् । संस्थिते चेत् किञ्चिच्च दद्यात् । उत्तरस्मिन् काल आगते होमश्चेद् अनिवृत्तः पूर्वस्य सेयं कालातिपत्तिस्तस्यां प्रायश्चित्तं मनो ज्योतिः इति पूर्वस्य जुहुयात् । तथापरस्य जुहुयात् । एवं प्रतिहोमम् आ दशरात्रात् प्राणायामः । एकादशीप्रभृत्या विंशतिरात्रादुपवासस्त्रिंशद्रात्रादत ऊर्ध्वं प्राजापत्यं विहितम् । एकादशीप्रभृति तिस्रस्तन्तुमतीर्द्वादशाहानि विच्छिन्नः पुनराधेय इत्युक्तमेवं वा । अथ पर्वण्यतीते मनो ज्योतिः अयाश्चाग्ने यदस्मिन् स्वस्ति न इन्द्र इति चतस्र आहुतीर्हुत्वाग्नये पथिकृते स्थालीपाकं कुर्यात् प्रागष्टमात् । अत ऊर्ध्वं सोपवासः कार्यः द्वे त्रिषु च तिस्र इत्येवमतीतेषु प्रायश्चित्तं पार्वणवद्धोमः पितृयज्ञेऽतीते पक्षद्वये चोपवासः कार्य इति सिद्धम् । अथ महायज्ञानाम् एकस्मिन्नहनि मनो ज्योतिः इति द्वयोस्त्रिषु चतुर्षु पञ्चसु वा षट्सु प्रभृतीति तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेत् इमं मे वरुण तत्त्वा यामि यत्किञ्च अव ते हेड इत्या नवरात्रात् । अत ऊर्ध्वमा दशरात्राच्चतस्रोऽभ्यावर्तिनीर्जुहुयात् । सर्वेषामन्ततो व्याहृतीभिरिति सिद्धम् ९ अत ऊर्ध्वं वानप्रस्थविधिं व्याख्यास्यामः । अनवद्यं गृहधर्मं चरित्वा यज्ञान् यजति । पुत्रमुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं विधाय गुणवति पुत्रे कुडुम्बभारं नियोज्य उत्तरायणे पूर्वपक्षे पुण्ये नक्षत्रे कुशचीरचर्मवल्कलवासा जटी कृष्णाजिनोत्तरीयः कृतप्रस्थानलिङ्गोऽग्निमात्मसमारोपणं कृत्वा सपत्नीको वाप्यपत्नीको वा वनमाश्रयेत् । श्रमणमग्निमाधाय वेणुश्यामाकनीवारादिभिरारण्यमूलफलैरोषधीभिः सायंप्रातरग्निं परिचरेत् । फालाकृष्टाभिः देवब्राह्मणपितृभूतमनुष्ययज्ञानहरहर्हुत्वारण्योर्वा काले शक्तितः शरीरं परिशोषयेद् यमनियममन्त्रोपवासादिभिः । जीर्णपर्णाहारः दन्तोलूखलिकः शैलकुट्टो ये काल आगच्छेयुस्तेभ्योऽपि दद्यात् । स्थण्डिलशायी ऊर्ध्वरेताः अतिथिप्रियः अमत्सरी विवादपैशुन्यमृषावादवर्जी सदाशुचिः ग्रामस्य छर्दिं न दर्शेदरण्यवासग्नियोऽभयदायी सर्वभूतानां परैरभिमृष्टान्याश्रमान्तरहितानि नाभ्यवहरेदेकाग्निपरायणः अप्रमादी सबीजां प्रोषितां भूमिं नाक्रमेत् । तपोधिकाय यज्ञाधिकाय वयोधिकाय फलोदकं दद्यात् । एवं मृगैः सह चरित्वापरिस्पन्द्यसहवासी स्वकालं व्यपोह्य स्वर्गलोकं गमिष्यतीति । अथवा तृतीयमायुर्भागं वानप्रस्थव्रतं चरित्वा चतुर्थमायुर्भागं परिव्रजेद्वा १० अथातः

संन्यासविधिं व्याख्यास्यामः। उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे पूर्वकालमुपोष्य संभारानुपकल्पयते । कापायवाससी प्लक्षपवित्रपादुकासनवैणवदण्डशिक्यकमण्डल्वलावुपात्रं कुशबन्धमित्येवमादिसंभारानुपकल्पयते । अग्निमारोप्य वनाद् ग्रामं प्रविश्य केशश्मश्रूणि वापयित्वा नदीषु स्नायात् शुद्धे जलाशये वा । अप आचम्य नदीतीरे देवगृहे वा ब्राह्मणानभिगम्याक्रोधनोऽद्वेषणः सर्वकर्माणि संन्यसेत् । न वेद संन्यसेत् । वेदसंन्यासाच्छूद्रो भवति । तस्माद् वेदं न संन्यसेत् । ब्राह्मणसन्निधौ मन्त्रमुक्त्वापः पिबेत् संन्यस्तं मया इति । गृहस्थेनोपनीतान् वैणवान्तान् संभारान् परिगृह्य सवितृमण्डलमुद्वीक्षमाणः संन्यस्तं मया इति त्रिरुचैः प्रब्रूयात् । अथ ब्राह्मणं निवीतं बहुयाजिनमभिगम्य दण्डान्दातवा इत्युक्त्वा दण्डान् परिगृह्य कृतनामानिकृतोऽनुज्ञातो यतेर्धर्मान् सम्यक् परिचरेत् नित्यशिखी नित्ययज्ञोपवीती नित्यसन्ध्योपासी नित्यप्रातःस्नायी नित्यं भैक्षाशी नित्यं यमनियमयन्त्रव्रतोपवासी नित्यमीश्वरोपासी नित्यं गोदेवगृहवासी अपगतभयकामक्रोधलोभमोहमदमात्सर्यः इति । एवमादिधर्मं चरित्वा स्वर्गलोकं गमिष्यति । अथवा ब्राह्मणेषु क्षीयमाणेषु पूर्ववच्छौचं कृत्वा सर्वकर्माणि संन्यस्य प्रैषणमपोऽश्नाति । ईश्वरमेवोपास्य पूतो भवतीत्याह भगवानाग्निवेश्यः ११ पुनरुपनयनंव्याख्यास्यामः यःपाणिग्रहादिरग्निः अथगृहस्थस्यद्वेभार्ये अथगृह्यप्रायश्चित्तानिजुहोति अथब्रह्मचार्यवकीर्णी भवति अथर्तुस्नानात् ब्रह्मकूर्चं प्रवक्ष्यामि अथातोनैमित्तिकानि अथातोगृह्याणिप्रायश्चित्तानि अतऊर्ध्वंवानप्रस्थविधिम् अथातःसंन्यासविधिम् एकादश ।

इत्याग्निवेश्यगृह्यसूत्रे द्वितीयप्रश्ने सप्तमोऽध्यायः

द्वितीयः प्रश्नः समाप्तः

## अथ तृतीयः प्रश्नः

### प्रथमोऽध्यायः

अमावास्यायामपराह्णे मासिकम् अपरपक्षस्य वायुक्ष्वहस्सु पितृभ्योऽन्नं संस्कृत्य दक्षिणाग्रान् दर्भानासनानि कल्पयित्वा ब्राह्मणान् शुचीन् मन्त्रवतः समाङ्गानयुग्मानामन्त्रयते । योनिगोत्रमन्त्रसम्बन्धान् अर्थापेक्षो न भोजयेत् । अग्निमुपसमाधाय दक्षिणाप्रागग्रैर्दर्भैः परिस्तीर्य एकपवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्य संस्कृत्य ततः अपसव्यं परिषिञ्चति । औदुम्बरमि-

ध्ममभ्याधाय औदुम्बर्या दर्व्या जुहोति । आज्यभागान्तं कृत्वा प्राचीनावीती पितृनावाहयति आयात पितरः सौम्या गम्भीरैः पथिभिः पूर्व्यैः प्रजामस्मभ्यं ददतो रयिं च दीर्घायुत्वं च शतशारदं च इति । एतामेव दिशमभ्यपः प्रसिञ्चति आपो देवीः प्रहिणुताग्निमेते यज्ञं पितरो नो जुषन्ताम् । आसीनामूर्जमुत ये भजन्ते ते नो रयिं सर्ववीरान् नियच्छतात् इति । व्याहृतिपर्यन्तं कृत्वा प्राचीनावीती जुहोति सोमाय पितृमते स्वधा नमः स्वाहा । यमायाङ्गिरस्वते पितृमते स्वधा नमः स्वाहा । याः प्राचीः संभवन्त्याप उत्तरतश्च याः । अद्भिर्विश्वस्य भुवनस्य भर्त्रीभिरन्तरन्यं पितुर्दधे स्वधा नमः स्वाहा । अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या । दिवा दिग्भिरनन्ताभिरूतिभिरन्तरन्यं पितामहाद्दधे स्वधा नमः स्वाहा । अन्तर्दध ऋतुभिः सर्वैरहोरात्रैः ससन्धिभिः । अर्धमासैश्च मासैश्चान्तरन्यं प्रपितामहाद्दधे स्वधा नमः स्वाहा । अथ नामधेयैर्जुहोति अमुष्मै स्वधा नमोऽमुष्मै स्वधा नम इति । यन्मे माता प्रलुलोभ चरत्यननुव्रता तन्मे रेतः पिता वृङ्क्तामाभुरन्योऽवपद्यतां स्वधा नमः स्वाहा । एवं द्वितीयम् । तथा तृतीयम् । यन्मे पितामही यन्मे प्रपितामही इति मन्त्रं सन्नमति १ ये चेह पितरो ये च नेह याँश्च विद्म याँ उच न प्रविद्म । अग्ने तान् वेत्थ यदि ते जातवेदस्तया प्रत्तं स्वधया मदन्ति कामैः स्वधा नमः स्वाहा । यद्वः क्रव्यादङ्गमदहल्लोकाननयन् प्रणयन् जातवेदाः । तद्वोऽहं पुनरावेदयाम्यरिष्टाः सर्वैरङ्गैः संभवन्तु पितरः स्वधा नमः स्वाहा । वहाज्यं जातवेदः पितृभ्यो यत्रैतान् वेत्थ निहितान् पराके । आज्यमस्य कूल्या उप तां क्षरन्तु सत्या एषामाशिषः सन्तु कामैः स्वधा नमः स्वाहा । एवं द्वितीयं तथा तृतीयम् । पितामहेभ्यः प्रपितामहेभ्य इति मन्त्रं सन्नमति । एवमन्नस्य जुहोति । वहान्नम् इति मन्त्रं सन्नमति । अथ सौविष्टकृतीं जुहोति अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नम इति । दक्षिणार्धपूर्वार्धे हुत्वानुप्रहृत्य दर्वीमथान्नमभिमृशति पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा पितृणां क्षेष्ठा अमुत्रामुष्मिन् लोके पृथिवीं समन्तस्समेऽग्निरुपद्रष्टा दत्तस्याप्रमादाय ऋचस्ते महिमा । पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा पितामहानां क्षेष्ठा अमुत्रामुष्मिन् लोकेऽन्तरिक्षं समन्तस्समे वायुरुपश्रोता दत्तस्याप्रमादाय यजूंषि ते महिमा । पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राण-

पानयोर्जुहोम्यक्षितमसि मा प्रपितामहानां क्षेष्ठा अमुत्रामुष्मिन् लोके द्यौः समन्तस्समे आदित्योऽनुख्याता दत्तस्याप्रमादाय सामानि ते महिमा इति । ब्राह्मणानुपस्पर्शयति । भुक्तवतोऽनुवृत्त्या शेषम् अनुज्ञाप्य २ उदकुम्भं दर्भमुष्टिं चादाय दक्षिणाग्रान् दर्भान् परिस्तीर्य तेष्ववाचीनपाणिर्दक्षिणापवर्गांस्त्री-नुदपात्रानुपरि निनयति मार्जयन्तां पितरः सौम्यासः मार्जयन्तां पितामहाः सौम्यासः मार्जयन्तां प्रपितामहाः सौम्यासः इति । असाववनेनिङ्क्ष्व असा-ववनेनिङ्क्ष्व इति वा तेष्ववाचीनपाणिर्दक्षिणापवर्गान् त्रीन् पिण्डान् ददाति । एतत्ते तत असौ इति पित्रे पिण्डं ददाति एतत्ते पितामह असौ इति पितामहाय एतत्ते प्रपितामह असौ इति प्रपितामहाय । तूष्णीं चतुर्थम् । स कृताकृतो वा । यदि नामधेयानि न विद्यात् स्वधा पितृभ्यः पृथिवीषद्भ्य इति पित्रे पिण्डं ददाति । स्वधा पितामहेभ्योऽन्तरिक्षसद्भ्य इति पितामहाय । स्वधा प्रपितामहेभ्यो दिविषद्भ्य इति प्रपितामहाय । अत्राञ्जनाभ्यञ्जने वासश्चानुपिण्डं ददाति । आङ्क्ष्वासावाङ्क्ष्वासौ इति त्रिराञ्जनम् । अभ्यङ्क्ष्वासाव-भ्यङ्क्ष्वासौ इति त्रिरभ्यञ्जनम् । एतानि वः पितरो वासांस्यतो नोऽन्यत् पितरो मा योढुम् एतानि वः पितामहा वासांस्यतो नोऽन्यत् पितामहा मा योढुम् एतानि वः प्रपितामहा वासांस्यतो नोऽन्यत् प्रपितामहा मा योढुम् इति दशामूर्णास्तुकां वा छित्त्वा न्यस्यति पूर्वे वयसि स्वं लोम छित्त्वा उत्तरे । अथ पात्रं संक्षिप्य निनयति पुत्रान् पौत्रानभितर्पयन्तीरापो मधुमतीरिमाः । स्वधां पितृभ्योऽमृतं दुहाना आपो देवीरुभयाँस्तर्पयन्तु इति । न्युब्जपात्रं पाणी व्यत्यस्य नमो वः पितरो रसाय इति षड्भिर्नमस्कारैरुपतिष्ठते । उदकान्तं गत्वा त्रिरुदकाञ्जलिदानेनोदकाञ्जलीन् ददाति एष ते तत पितुर्मधुमाँ ऊर्मिः सरस्वान् यावानग्निश्च पृथिवी च तावत्यस्य मात्रा तावानस्य महिमा तावन्तमेनं भूतं ददामि यथाग्निरक्षितोऽनुपदस्त एवं मे तताय पित्रेऽक्षि-तोऽनुपदस्तः स्वधा भवतां त्वँ स्वधामक्षितं तैः सहोपजीवासौ ऋचस्ते महिमा एष ते पितामह पितुर्मधुमाँ ऊर्मिः सरस्वान् यावान् वायुश्चान्तरिक्षं च तावत्यस्य मात्रा तावानस्य महिमा तावन्तमेनं भूतं ददामि यथा वायुरक्षितोऽनुपदस्त एवं मे पितामहाय पित्रेऽक्षितोऽनुपदस्तः स्वधा भवतां त्वँ स्वधामक्षितं तैः सहोपजीवासौ यजूँषि ते महिमा । एष ते प्रपितामह पितुर्मधुमाँ ऊर्मिः सरस्वान् यावानादित्यश्च द्यौश्च तावत्यस्य मात्रा तावानस्य महिमा तावन्तमेनं भूतं ददामि यथादित्योऽक्षितोऽनुपदस्तः एवं मे प्रपितामहाय

पित्रेऽक्षितोऽनुपदस्तः स्वधा भवतां त्यँ स्वधामक्षितं तैः सहोपजीवासौ सामानि ते महिमा इति । प्रत्येत्य प्रतिष्ठितमुदपात्रेणाप उपप्रवर्तयति परायात पितरः सौम्या गम्भीरैः पथिभिः पूर्व्यैः प्रजामस्मभ्यं ददतो रयिम् । अथ मासि पुनरायात नो गृहान् हविरत्तुं सुप्रजसः सुवीराः इति । एतेन अर्घ्यावर्ष व्याख्याततन्त्रम् । मांसं नियतं मांसाभावे शाकम् ३ अमावास्यायामपराह्णे येचेहपितरः उदकुम्भंदर्भमुष्टिं त्रीणि

इत्याग्निवेश्यगृह्यसूत्रे तृतीयप्रश्ने प्रथमोऽध्यायः

## अथ द्वितीयोऽध्यायः

अष्टकां करिष्यमाण उपकल्पयते उक्षाणं वा वेहतं व्रीहीनन्नं मधुश्च सर्पिश्च । प्रसिद्धं शौचम् । अनूराधायामग्निमुपसमाधाय परिस्तीर्यापरेणाग्निं व्रीहीनेक-पवित्रोऽथ निर्वपति इममपूपं चतुश्शरावं विर्वपामि क्लेशापहं पितृणां संपराये । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पितृभ्यस्त्वा जुष्टं निर्वपामि इति पितृभ्यस्त्वा पितृभ्यस्त्वा इत्येवं चतुश्शरावं निर्वपति । प्रोक्ष्य तूष्णीं हविष्कृता वाचं विसृज्य यथा पुरोडाशमेवमेवैतमपूपं पदकपाल-मधिश्रयति । एककपालं वा । शृते तस्मिन्नाज्यं दधि विलाप्योत्पूयाथ परिषिञ्चति अदितेऽनुमन्यस्व इति दक्षिणतःप्राचीनम् अनुमतेऽनुमन्यस्व इति पश्चादुदीचीनं सरस्वतेऽनुमन्यस्व इति उत्तरतःप्राचीनं देव सवितः प्रसुव इति सर्वतः प्रदक्षिणं परिषिच्याघारावाघार्य आज्यभागौ जुहोति । आज्येन प्राय-श्चित्तं जुहोति या तिरश्ची निपद्यसेऽहं मर्यादा विधरणी इति । तां त्वा घृतस्य धारया जुहोमि वैश्वकर्मणीं कामैः स्वधा नमः स्वाहा इति । अथैतस्यापूपस्य मध्यादवदायोपस्तीर्णाभिघारितमौदुम्बर्या दर्व्या जुहोति । अपूपं जुहोति घृत-वन्तमद्य स्वधावन्तं पितृणां तर्पणाय वह हव्यं पितृभ्य आहुतीर्जुहोमि कामैः स्वधा नमः स्वाहा इति अथ पुरस्ताद्दक्षिणतोऽवदाय पश्चादर्षीयो जुहोति इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा । वधूर्जजान नवगज्ञनित्री त्रय एनां महिमानः सचन्ते कामैः स्वधा नमः स्वाहा इति । तृतीयां जुहोति औलूखला ग्रावाणो घोषमक्रत अपः पितृभ्यः कृणवन्तः परिवत्सरीणाम् । एकाष्टके सुप्रजा वीरवन्तो वयँ स्याम पतयो रयीणाम् कामैः स्वधा नमः स्वाहा इति । चतुर्थीं जुहोति यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायती । संवत्सरस्य या नी पत्नी सा नो अस्तु सुमङ्गला कामैः स्वधा

नमः स्वाहा इति । पञ्चमीं जुहोति प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयँ स्याम पतयो रयीणां कामैः स्वधा नमः स्वाहा इति । षष्ठीं जुहोति यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यून-मिहाकरम् । अग्निष्टत् स्विष्टकृद्विद्वान् सर्वँ स्विष्टं सुहुतं करोतु मे अग्नये स्विष्टकृत सुहुतहुते सर्वहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे कामैः स्वधा नमः स्वाहा इति । दर्वीं प्रक्षाळ्य निधाय तथैव परिमृज्य परिषिच्य पिण्डावृतैतान् पिण्डान् दत्त्वात्रैतमपूपं घृतवन्तं मधुमन्तं श्रद्धाभिमर्शने-नाभिमृशति २ पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा पितृणां क्षेष्ठा अमुत्रामुष्मिन् लोके पृथिवी समन्तस्समेऽग्निरुपद्रष्टा दत्तस्याप्रमादाय ऋचस्ते महिमा । पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा पितामहानां क्षेष्ठा अमुत्रामुष्मिन् लोकेऽन्तरिक्षं समन्तस्समे वायुरुपश्रोता दत्तस्याप्रमादाय यजूँषि ते महिमा । पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा प्रपितामहानां क्षेष्ठा अमुत्रामुष्मिन् लोके द्यौः समन्तस्समे आदित्योऽनुख्याता दत्तस्याप्रमादाय सामानि ते महिमा इत्येतेन । ब्राह्मणान् विद्यावतः परिविशति । परिविश्योदकाय गत्वोदकाञ्जलि-दानेनोदकाञ्जलीन् ददाति एष ते तत पितुर्मधुमाँ ऊर्मिस्सरस्वान् यावानग्निश्च पृथिवी च तावत्यस्य मात्रा तावानस्य महिमा तावन्तमेनं भूतं ददामि यथाग्निरक्षितोऽनुपदस्तः एवं मे तताय पित्रेऽक्षितोऽनुपदस्तः स्वधा भवतां त्वँ स्वधामक्षितं तैः सहोपजीवासावृचस्ते महिमा ३ एष ते पितामह पितुर्मधुमाँ ऊर्मिस्सरस्वान् यावान् वायुश्चान्तरिक्षं च तावत्यस्य मात्रा तावानस्य महिमा तावन्तमेनं भूतं ददामि यया वायुरक्षितोऽनुपदस्त एवं मे पितामहाय पित्रेऽक्षितोऽनुपदस्तः स्वधा भवतां त्वँ स्वधामक्षितं तैः सहोपजीवासौ यजूँषि ते महिमा । एष ते प्रपितामह पितुर्मधुमाँ ऊर्मिस्सरस्वान् यावानादित्यश्च द्यौश्च तावत्यस्य मात्रा तावानस्य महिमा तावन्तमेनं भूतं ददामि यथादित्योऽक्षितोऽनुपदस्त एवं मे प्रपितामहाय पित्रेऽक्षितोऽनुपदस्तः स्वधा भवतां त्वँ स्वधामक्षितं तैः सहोपजीवासौ सामानि ते महिमा इति । एतावदेतत् तदहःकर्म भवति । एतद्धस्म वै तद्विद्वांसः पूर्व ऋषय एवमष्टक्य-मपूपं चतुश्शरावमेवमकल्पयंस्तेन वैते पितॄनतर्पयंस्त एनांस्तृप्ताः प्रजया

पशुभिरतर्पयंस्ततो ह पितृभिर्मित्रमकुर्वत मित्रं ह्येषां सर्वाणि भूतान्यासन् । स यो ह वा एवं विद्वान् ऐतमष्टक्यमपूपं चतुश्शरावमेवं कल्पयति । तेन वै स पितृंस्तर्पयति येन तृप्ताः प्रजया पशुभिस्तर्पयन्ति । अतो ह पितृभिर्मित्रं कुरुते । मित्रं ह्यस्य सर्वाणि भूतानि भवन्ति । य एवं विद्वान् एतमष्टक्यमपूपं चतुश्शरावमेवं कल्पयति ४ श्वो ज्येष्ठायामग्निमुपसमाधाय संपरिस्तीर्य तथैव परिषिच्याघारावाघार्याज्यभागौ जुहोति । प्रायश्चित्तीयां हुत्वोपाकरणीयां जुहोति इमां पितृभ्यो गामुपाकरोत्यूर्जस्वतीं स्वधावतीं तन्मे जुषन्तां पितरः परेताः । सा मे पितृन् संपराये धिनोतु कामैः स्वाहा इति । अथैभ्यो गामृपाकरोति पितृभ्यस्त्वा जुष्टामुपाकरोमि इति । अथैनां प्रोक्षति पितृभ्य-स्त्वा जुष्टां प्रोक्षामि इति । तामत्रैव प्रतीचीनशिरसं दक्षिणापदीं संज्ञपयन्ति । तस्यै संज्ञप्ताया अद्भिः प्राणान् आप्याययति तूष्णीम् । अथास्यै वपामुद्धृत्य विशालयोपतृणत्ति तूष्णीमेव अथास्यै हृदयमुद्धारयन्ति प्रज्ञाते च मतस्ने । तान्येतेष्वेव शूलेषु संप्रणीन्द्यैतस्मिन्नेवाग्नौ श्रपयन्ति । शृतेषु त्रेधा वपां विच्छिद्योदुम्बरदर्व्या उपस्तीर्णाभिघारितां जुहोति वह वपां जातवेदः पितृभ्यो यत्रैतान् वेत्थ निहितान् पराके । मेदसः कूल्या उप तान् क्षरन्तु सत्या एषामा-शिषः सन्तु कामैः स्वधा नमः स्वाहा इति । अथैतस्य मांसस्योपस्तरणा-भिघारितौदुम्बर्या दर्व्योपघातं जुहोति ५ एकाष्टकां पश्यत दोहमानामन्नं मांसवद् घृतवत् स्वधावत् । तद् ब्राह्मणैरतिपूतमनन्तमक्षय्यं स्फीतिं गच्छतु कामैः स्वधा नमः स्वाहा इति । द्वितीयां जुहोति एकाष्टका तपसा तप्यमाना संवत्सरस्य पत्नी दुदुहे प्रपीना । तां दोहमुपजीवाथ पितरः सहस्रधा मुच्यमानां कामैः स्वधा नमः स्वाहा इति । तृतीयां जुहोति एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून् व्यसहन्त देवा हन्तासुरा-णामभवच्छचीभिः कामैः स्वधा नमः स्वाहा इति । चतुर्थीं जुहोति औलूखला ग्रावाण इति । पञ्चमीं जुहोति यां जनाः प्रतिनन्दन्ति इति । षष्ठीं जुहोति प्रजापते इति । सप्तमीं जुहोति यदस्य कर्मणोऽत्यरीरिचम् इति । दर्वीं प्रक्षाळ्य निधाय तथैव परिषिच्य पिण्डावृतैतान् पिण्डान् दत्त्वा श्रद्धाभिमर्शनेनाभिमृशति पृथिवी ते पात्रम् इत्येतेन । ब्राह्मणान् विद्यावतः परिविशति । परिविश्योदकाय गत्वोदकाञ्जलिदानेनोदकाञ्जलिं ददाति एष ते तत पितुः इति । एतावदेवैतदहःकर्म भवति । एतद्धस्म वैतद्विद्वांसः पूर्व आचार्या एवमष्टक्यां गामेवमकल्पयंस्तया वैते पितृनतर्पयंस्त एनांस्तृप्ताः

प्रजया पशुभिरतर्पयन् ततो ह पितृभिर्मित्रमकुर्वत मित्रं ह्येषां सर्वाणि भूतान्यासन् । स यो ह वा एवं विद्वानेतामष्टक्यां गामेवं कल्पयति । तेन वै स पितृंस्तर्पयति । ते येन तृप्ताः प्रजया पशुभिस्तर्पयन्ति । अतो ह पितृभिर्मित्रं कुरुते मित्रं ह्यस्य सर्वाणि भूतानि भवन्ति । य एवं विद्वानेतामष्टक्यां गामेवं कल्पयति ६ तृतीयेऽह्नि भूयोऽथ श्राद्धमन्नं च धनं च कल्पयित्वाग्निमुपसमाधाय परिस्तीर्य तथैव परिषिच्याघारावाघार्याज्यभागौ हुत्वाज्येन प्रायश्चित्तीयां हुत्वाथैतस्यान्नस्योपस्तीर्णाभिघारितौदुम्बर्या दर्व्या जुहोति वहान्नं जातवेदः पितृभ्यो यत्रैतान्वेत्थ निहितान् पराके । अन्नस्य कूल्या उप तान् क्षरन्तु सत्या एषामाशिषः सन्तु कामैः स्वधा नमः स्वाहा इति । द्वितीयां जुहोति संवत्सरस्य प्रतिमां यां त्वा रात्र्युपासते । प्रजां सुवीरां कृत्वा विश्वमायुर्व्यश्नुवत् कामैः स्वधा नमः स्वाहा इति । तृतीयां जुहोति यां जनाः प्रतिनन्दन्ति इति । चतुर्थीं जुहोति प्रजापते इति । पञ्चमीं जुहोति यदस्य कर्मणोऽत्यरीरिचम् इति अनुप्रहृत्य दर्वीं तथैव परिषिच्य पिण्डावृतैतान् पिण्डान दत्त्वा श्रद्धाभिमर्शनेनाभिमृशति पृथिवी ते पात्रम् इत्येतेन । ब्राह्मणान् विद्यावतः परिविशति । परिविश्योदकाय गत्वोदकाञ्जलिदानेनोदकाञ्जलिं ददाति । एष ते तत इति । एतावदेवैतदहःकर्म भवति । एतद्धस्म वैतद्विद्वांसः पूर्वे श्रोत्रिया एवमष्टक्यमन्नमेवमकल्पयंस्तेन वैते पितृनतर्पयंस्त एनांस्तृप्ताः प्रजया पशुभिरतर्पयन् ततो ह पितृभिर्मित्रमकुर्वत मित्रं ह्येषां सर्वाणि भूतान्यासन् स यो ह वा एवं विद्वानेतमष्टक्यमन्नमेवं कल्पयति । तेन वै स पितृंस्तर्पयति । ते येन तृप्ताः प्रजया पशुभिस्तर्पयन्ति । अतो ह पितृभिर्मित्रं कुरुते मित्रं ह्यस्य सर्वाणि भूतानि भवन्ति । य एवं विद्वान् तृतीयेऽह्नि यथाश्रद्धमन्नं च धनं च ददाति ततो वै तस्यापरिमितान्नधनाः पशवो भवन्ति । य एवं विद्वान् तृतीयेऽह्नि यथाश्रद्धमन्नं धनं च न ददाति तस्यापरिमितान्नधना न वै पशवो भवन्ति ७ अष्टकांकरिष्यमाणः अथपुरस्ताद्दक्षिणतोऽवदाय पृथिवीतेपात्रं एषतेपितामहपितुः श्वोज्येष्ठायाम् एकाष्टकां तृतीयेऽह्नि सप्त

इत्याग्निवेश्यगृह्यसूत्रे तृतीयप्रश्ने द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

अथातः श्राद्धशेषं वक्ष्यामः । पूर्वेद्युः सायमौपासनं हुत्वा प्राणासायम्य

संकल्प्य श्वः पितृभ्यो मासिश्राद्धं करिष्य इति वा श्वो यज्ञशर्मणः नक्षत्रश्राद्धं करिष्य इति वा श्वो यज्ञशर्मणः त्रिपक्षश्राद्धं करिष्य इति वा श्वो यज्ञशर्मणः षण्मासश्राद्धं करिष्य इति वा श्वो यज्ञशर्मणः संवत्सरश्राद्धं करिष्य इति वा श्वो यज्ञशर्मणः सपिण्डीकरणश्राद्धं करिष्य इति वा संकल्प्य ब्राह्मणान् शुचीन् श्रोत्रियान् दरिद्रान् वेदज्ञान् समाङ्गान् अगोत्रानसमानार्षेयान् क्षणं करोति । द्वौ विश्वेदेवेभ्यः त्रयः पितृणाम् । सपिण्डीश्राद्धं चेदेकोऽधिकम् । प्रेत-श्राद्धेष्वेकमेव वरयेत् । श्वः पितृभ्यो मासिश्राद्धं भवितव्यं तस्य भवता प्रसादः करणीय इति एवमेव श्वः पितृभ्योऽष्टकाश्राद्धं भवितव्यं तस्य भवता प्रसादः करणीय इति श्वः पितृभ्यो नित्यश्राद्धम् एकोद्दिष्टं नक्षत्रश्राद्धमिति सर्वत्रोक्त्वा गन्धादिभिराराध्य तिलपिष्टादिभिर्भक्ष्यद्रव्यैर्यथावकाशोऽस्ति तथाराध्य ताम्बूलादि दद्यात् । श्वोभूते प्रातरौपासनं हुत्वावटौ खनति । प्रेतश्राद्धेष्वेक-मेव खनति । सपिण्डीकरणे त्रीन् खात्वा अवटे तिलदर्भान् प्रकीर्य ब्राह्म-णानाहूय क्षणं करोति । उत्तरेऽवटे विश्वेदेवयोः पादान् प्रक्षाळ्य मध्यमे पितॄणां दक्षिणे प्रतस्य पादौ प्रक्षाळ्य तानाराध्य ताम्बूलं दद्यात् । पादप्र-क्षाळनक्रमेण सर्वं कुर्यात् प्राचीनावीती । अपराह्णे ब्राह्मणभोजनार्थमौपासने स्थालीपाकं कुर्यात् । पितॄणामावाहनकाले प्राचीनावीती दक्षिणाभिमुखः स्थित्वा आवाह्य ब्राह्मणानाहूय यथोक्तं दिङ्मुखमुपवेशयति । यथाविधि हुत्वा यत्र यत्रोक्तेषु पिण्डावृतैतान् पिण्डान् ददाति । पात्रसादनकाले एकस्मिन् पात्रे आ प आगन्तु पितरो देवयानान् समुद्रान् सलिलान् सवर्णान् । अस्मिन् यज्ञे सर्वकामान् लभन्तेऽक्षीयमाणमुपदुह्यन्ताम् इमां पितृभ्यो वोऽर्घ्यं गृह्णामि इति पितृभ्यः पितामहेभ्यो वोऽर्घ्यं गृह्णामि इति पितामहेभ्यः प्रपितामहेभ्यो वोऽर्घ्यं गृह्णामि इति प्रपितामहेभ्यः अथान्यस्मिन् पात्रे प्रेताय ते गृह्णामि इति प्रेताय अप आनयति । तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः स्वध एहि पितॄनिमान् लोकान् प्रीणयाहि नः स्वधा नमः इति तिलानावपति । पितामहान् प्रपितामहान् इमान् लोकान् प्रीणयाहि नः स्वधा नमः इति च । प्रेताय इमान् लोकान् इति च १ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधु नक्तमुतोषसि मधुम-त्पार्थिवँ रजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु न इति मध्वानयति । कुशलवमादाय सोमास्य त्विषिरसि तवेव मे त्विषिर्भूयादमृतमसि मृत्योर्मा पाहि दिद्योन्मा पाह्यवेष्टा

दन्तशूका इति मथित्वा निरस्तं नमुचेः शिरःइति फेनं निरस्य दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य शन्नो देवीः इत्यवोक्ष्य गन्धादिभिरलङ्कृत्य स्वधां यत्र गुप्तं मन्यते तत्र निदधाति । पूर्ववत् पादप्रक्षाळनं कृत्वा यथोदङ्मुखानुपवेश्य विश्वेदेवान् क्षणं करोति विश्वेदेवाः क्षणः कर्तव्य इति । प्रतिवचनम् ओं तथा इत्युक्त्वा प्राप्नोतु भवान् इत्याह प्राप्नवानि इतीतरे प्रत्याहुः । मासिश्राद्धे क्षणः कर्तव्य इति मासि अष्टकाश्राद्धे क्षणः कर्तव्य इत्यष्टकासु नित्यश्राद्धे क्षणः कर्तव्य इति नित्यश्राद्धे एकोद्दिष्टश्राद्धे क्षणः कर्तव्य इत्येकोद्दिष्टे नक्षत्रश्राद्धे क्षणः कर्तव्य इति नक्षत्रे त्रिपक्षश्राद्धे क्षणः कर्तव्य इति त्रिपक्षे षण्मासश्राद्धे क्षणः कर्तव्य इति षण्मासे संवत्सरश्राद्धे क्षणः कर्तव्य इति संवत्सरे सपिण्डीकरणश्राद्धे क्षणः कर्तव्य इति सपिण्डीकरणे प्रतिवचनम् ओं तथा इत्युक्त्वा प्राप्नोतु भवान् इत्याह प्राप्नवानि इतीतरे प्रत्याहुः । तेभ्यो गन्धादिभिराराध्य स्वधापात्रमाराध्य वस्त्रयुग्मं कुण्डलमङ्गुलीयकं च दत्त्वाथान्नमभिमृशति पृथिवी ते पात्रम् इति । भुञ्जानान् समीक्षते प्राणे निविष्टोऽमृतं जुहोमि इति । ब्रह्मणि म आत्मामृतत्वाय इति । पितृलिङ्गैः ऋग्यजुर्भिः श्रावयेत् । आचान्तेभ्यस्तिलोदकं प्रदाय पवित्रं पितृहस्ते निधाय स्वधामानयति पितृभ्यो हस्ते स्वधास्तु इति । अस्तु स्वधा इति प्रतिवचनम् । एवं पितामहायैवम् प्रपितामहायैवं प्रेताय । तथैव शुद्धोदकं प्रदाय अस्तु शुद्धोदकम् इति प्रतिवचनम् । यथाशक्ति दक्षिणां दत्त्वा प्रदक्षिणं कृत्वा अन्नशेषैः किं क्रियताम् इति इष्टैः सहोपभुज्यताम् इति प्रतिवचनम् । प्रत्येत्य शेषं सगणः प्राश्नाति । यदि नित्यश्राद्धं कुर्वन् शशं वा मृगं वा कूर्मं वोपाकरोति श्रपयित्वा हिरण्येन परिक्रीय वा यथाष्टकासु द्वितीयेऽह्नि तथा करोति । एकोद्दिष्टवत् त्रिपक्षश्राद्धं कुर्वन्ति । त्रिपक्षवत् षण्मासश्राद्धं कुर्वन्ति । षण्मासवत् संवत्सरश्राद्धं कुर्वन्ति । एवमा संवत्सरात् प्रेतस्य दहननक्षत्रेष्वेवमेवं कुर्वन्ति २ अथातः श्राद्धशेषंवक्ष्यामो मधुवाताऋतायते इति द्वे ।

इत्याग्निवेश्यगृह्यसूत्रे तृतीयप्रश्ने तृतीयोऽध्यायः

## अथ चतुर्थोऽध्यायः

अथातो दहनविधिः । आहिताग्नेरनाहिताग्नेः स्त्रियाश्चैव मरणसंशये शुचौ समे देशे गोमयेनोपलिप्य अवोक्ष्य सिकताभिरवकीर्य तासु दक्षिणाग्रान् दर्भान् संस्तीर्य तेषु दक्षिणाशिरसमेनं निधायास्वधायुक्ता ब्रह्माण्यभिश्रावयेत् आयुषः

प्राणँ सन्तनु इति । अथ प्राणेषूत्क्रान्तेषु प्राचीनावीत्यवाचीनपाणिः हिरण्य-शकलमास्ये प्रत्यस्याङ्गुष्ठबन्धं प्रबध्य ग्राम्येणालङ्कारेणालङ्कृत्य पत्तोदशेना-हतेन वाससा प्रच्छाद्य सायमाहुतिं हुत्वा मातराहुतिं हुत्वा पौर्णमा-स्येनेष्ट्वामावास्येनेष्ट्वाथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा प्रागुदेत्य समिद्वत्याहवनीये जुहोति मृत्योरधिष्ठानाय स्वाहा इति । चतुरो ब्राह्मणान् बाहयित्वा ग्रामाभिमुखेन चतुष्पथे निधाय मुखं दर्शयित्वा श्मशानाभिमुखेन वाहयित्वा श्मशानं निर्हृत्य सहाग्निभिः प्रेतं तत्रैनं निधाय दहनं जोषयेत् दक्षिणाप्रत्यक्प्रवणमभङ्गुरमनिरिणमसुषिरं समं वा । अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः । अहोभिर-द्भिरक्तुभिर्व्यक्तैर्यमो ददात्ववसानमस्मै इति हरिण्या पलाशशाखयौदु-म्बरशाखया वा सतं सम्मृज्य दक्षिणतः शाखां निरस्य अप उपस्पृश्या-द्भिरवोक्ष्य हिरण्यशकलमवधाय अपसर्पत प्रेता ये के चेह पूर्वजाः स्वस्ति नः कुरुत माश्रुपातः पुनरागमत् इति दक्षिणापवर्गाः स्फ्येन परशुना वा तिस्रः कर्षूः खात्वाद्भिरवोक्ष्य तिलतण्डुलानां मुष्टिं पूरयित्वा यमाय पितृपतये पितृभ्यः स्वधा नम इति प्रथमायां निवपति । एवं द्वितीयायां तथा तृतीयायाम् । शेषांस्तिलतण्डुलान् यद्याहिताग्निर्भवति तस्य कृष्णाजिनं छित्त्वा दक्षिणा-ग्रीवमधरलोमास्तृणाति । एतस्मिन् काले स्नात्वोदकेनौषधीभिश्च कुम्भं पूरयित्वा तेन दशहोत्रा पत्तोग्रात् स्नापयेत् । अथाहतं वासः परिधाप्यालङ्कृत्य ततश्चितामारोप्याथ सप्तप्राणायतनेषु सप्त हिरण्यशकलान् प्रत्यस्यालाभ आज्यबिन्दून्वा मुखे प्रथममास्ये दधितण्डुलांश्च तिलांश्च जुहोति इदं त आत्मनः शरीरमयं त आत्मनस्त आत्मानं शरीराद् ब्रह्म निर्भिनद्मि भूर्भुवःस्वरसौ स्वर्गाय लोकाय स्वाहा इति । दशहोतारं चित्तिः स्रुग् इत्यादि ग्रहवर्जमेवमेवाग्रे नासिकाच्छिद्रयोर्द्विर्जपेत् । आसीदिति सर्वेषु होतृपदेष्वनुषजत्यन्यत्र षड्ढ ोतृपदेभ्यः । आस्तामिति द्विवचनादिषु । चतुर्होतारं पृथिवी होता इति मुखे सृक्किकटयोर्द्विः पञ्चहोतारम् अग्निर्होता इति कर्णयोर्द्विःषड्ढोतारं सूर्यम् त इति कीकसासु द्विस्सप्तहोतारं महाहविर्होता इति १ अथाज्यानि गृह्णीते दर्शपूर्णमासवत् तूष्णीं जुह्वां घृतं दध्युपभृति दधि मधु घृतमिति ध्रुवायां पयोऽग्निहोत्रहवण्याम् । अपिवाज्यमेव सर्वासु । अत्र पात्राण्युपचिनोति । यानि पात्राण्यासेचनवन्ति तानि सम्पूरयित्वाभ्युन्नतीतराण्यरिक्तताया इति विज्ञायते । तस्य दक्षिणहस्ते जुहूं स्फ्यं चादधाति । सव्य उपभृतमुरसि

ध्रुवामुपवेषमरणीं च मुखेऽग्निहोत्रहवणीं नासिकयोः स्रुवावाज्यस्रुवौ वा कर्णयोः प्राशित्रहरणं भित्त्वैकैकम् । हन्वोरुलूखलमुसले दत्सु ग्रावाणो भवन्ति । शिरसि कपालानि । ललाट एककपालमुदरे ड्ष्टिसंयवनीं पात्रीं नाभ्यामाज्यस्थालीं पत्त उपावहरणीयं कूर्चं शिरस्त उपसादनीयं कूर्चं पार्श्वयोः शूर्पं छित्त्वैकैकं वा घ्राणयोः सान्नाय्यकुम्भ्यौ यदि सन्नयन् भवति अराडयोर्दृषदुपले शिश्ने वृषरवं शम्यां च पृष्ठयोरग्निहोत्रस्थालीमन्वा-हार्यस्थालीम् इडापात्रं वेदं शिखायाम् । अथवावशिष्टान्यन्तरेण सक्थिनी निवपति । तस्य कृष्णाजिनशेषेण दक्षिणाग्रीवमुत्तरलोम्ना प्रच्छाद्य बान्धवाः सिग्वातेनोपवीजयन्ति । त्रयः सिग्वाता भवन्ति ग्रामे पथि चितायां च । वातास्ते वान्तु पथि पुरयगन्धा मनःशुभा गात्रशुभा अनुलोमाः । त्वचस्सुखा मांससुखा अस्थिसौख्या वहन्तु त्वा मरुतः सुकृतां यत्र लोकाः इति २ यद्याहिताग्निर्भवति अप नः शोशुचदघम् इत्यङ्गुष्ठबन्धं विसृज्य पत्नयुदकु-म्भमादायाध्वर्युर्वा शीर्षन्नधिनिधाय त्रिरपसलैः परिषिञ्चन् पर्येति । किञ्चित् परशुना प्रहरति । अथ धारामनुमन्त्रयते इमा आपो मधुमत्योऽस्मिंस्ते लोक उपदुह्यन्ताम् इति । द्वितीयं परिगतायां पश्चात् प्रहरति इमा आपो मधुमत्योऽन्तरिक्षे ते लोक उपदुह्यन्ताम् इति । तृतीयं परिगतायां पश्चात् प्रहरति इमा आपो मधुमत्यः स्वर्गे ते लोक उपदुह्यन्ताम् इति । भिनत्ति कृम्भम् । यदि पुरस्तात् पतति पापीयान् भवति यदि पश्चात् पतति वसीयान् भवति इति । अथ कपालशेषा अपः प्रेतस्य प्राणस्थानेषु निनयति दिवि जाता अप्सु जाता इति । आर्द्रा ओषधीरालभ्योत्तिष्ठति । गां पश्यति । ब्राह्मणान् पश्यति । हिररयमालभते । अत्र गुरवे वरं ददाति ३ अथास्मा अध्वर्युर्दक्षिणपूर्वस्यां दिश्याहवनीयमादीपयति नैर्ऋत्यामन्वाहार्यपचनं वा-यव्यां गार्हपत्यमुत्तरतः सभ्यावसक्थ्यौ । संभारैः अग्निर्यजुर्भिः पत्नीभिः सेनेन्द्रस्य इत्येतैः उपोषयेत् । ग्रहैः वाचस्पते विधे नामन् वाचस्पते वाचो वीर्येण सोमः सोमस्य वाचस्पतेऽच्छिद्रया वाचा वाचस्पते हृदिधे नामन् इत्येतैः ऋतुमुखीयेन वाग्घोता इत्येतेन ब्राह्मण एकहोता इति चोपस्थानम् । आहवनीय एकेषां कपालः । सन्तपनाग्निना वाजसनेयिनः समामनन्ति । तमभिनिवर्तते यं घर्मोऽग्निरभिजिहर्त्ति यां गतिं यान्ति युधि युद्धशूरा विधृतपापा विरजा विशोकास्तां गतिं याहि सुरभिर्नाकपृष्ठः स्वधा नम इति । यद्यनाहिताग्निर्भवति यां गतिं यान्ति युधि युद्धशुरास्तनुत्यजो मोक्षविदो

मनीषिनः सुकृतिनोऽग्निहोत्रहविष्ठास्तां गतिं याहि सुरभिर्नाकपृष्ठः स्वधा नम इति । ततो यज्ञोपवीती सं त्वा सिञ्चामि यजुषा इति शान्तिं कृत्वा ज्योतिष्मत्या आदित्यमुपतिष्ठते उद्वयं तमसस्परि उदुत्यं चित्रम् इति । पुत्रभ्रातृसपिण्डाः संविशन्ति । अनवेक्षमाणास्तीर्थमायान्ति । राजपुरुषो वा तानसगोत्रो वा पर्णशाखया शमीशाखयौदुम्बरशाखया वारयति मा तरत इति । न पुनरागमिष्यामह इत्युक्त्वातुरव्यञ्जनानि कृत्वा केशान संप्रकीर्य पांसूनोप्यैकवाससोऽहतवाससो वा दक्षिणामुखाः सकृदुन्मज्ज्योत्तीर्य सव्यं जानुं भूमौ निधाय वासः पीडयित्वोत्थायाञ्जलिनोदकमादाय तिलमिश्रा अपस्तं प्रति असावेतत्त उदकम् इति एवं द्वितीयं तृतीयं च कृत्वा अथाप्रतीक्षा ग्राममायान्ति । कनिष्ठप्रथमाः पिपीलिका यान्ति । निवेशनद्वारे निम्बपत्रं प्राश्याप आचम्य गोमयं हिरण्यमपोऽग्निं सर्षपांस्तैर्लामित्युपस्पृश्य शिरः प्राणान् संमृश्याश्मानमाक्रम्य गृहं प्रविश्य यत् स्त्रिय आहुस्तत् कुर्वन्ति । यत्र प्राणा उत्क्रान्ता भवन्ति तस्मिन् गोमयेनोपलिप्य वत्सं प्रतिष्ठाप्य तिलतण्डुलान्युदकमिश्राणि संप्रकीर्य स्वस्त्यस्तु गृहाणां शेषे शिवमास्ताम् इति पवनं कृत्वापक्वाशी स्त्रिया अत ऊर्ध्वं ब्रह्मचर्यमा दशरात्रात् । सायंप्रातः सकृदुदकमुत्सिच्य दशमेऽहनि त्रिरुदकमुत्सिच्य दशम्यां विकृताहारम् ४
अथातोऽस्थिसंचयनं व्याख्यास्यामः । अनिवृत्तेऽग्नौकरणे द्व्यहे त्र्यहे चतुरहे पञ्चाहे सप्ताहे वा नवकुम्भमादाय श्मशानं नीत्वा पालाशशङ्कुना शमीशङ्कुनौदुम्बरशङ्कुना वाङ्गुष्ठोपकनिष्ठिकाभ्यां वा सर्वाभिरङ्गुलीभिर्वास्थीनि समुदायुत्य क्षीरेण प्लावयित्वा घृतं निनयेद् इदं त आत्मनः शरीरमयं त आत्मा आत्मनस्त आत्मानं शरीराद् ब्रह्म निर्भिनद्मि भूर्भुवःस्वरसौ स्वर्गाय लोकाय स्वाहा इति । अथ यदि न दहेयुरुल्मुकमादाय पुनर्दहेद् अस्मात्त्वमधिजातोऽस्ययं त्वदधिजायताम् । अग्नये वैश्वानराय स्वर्गाय लोकाय स्वाहा इति । अथास्थ्यादाय नदीतीरेषु वा समुद्रतीरेषु वापाहरेयुः । अपि वा गजसम्मितं पुरुषसम्मितं वा गर्तं खात्वास्थिकुम्भमवधाय पुनरभ्यज्य पुरीषेण पूरयेत् यवदेव तद् भवति तावत् स्वर्गे लोके महीयते इति ५
अथातोदहनविधिः अथाज्यानिगृह्णीते यद्याहिताग्निर्भवति अथास्मा अध्वर्युः अथातोऽस्थिसंचयनं पञ्च ।

इत्याग्निवेश्यगृह्यसूत्रे तृतीयप्रश्ने चतुर्थोऽध्यायः

## अथ पञ्चमोऽध्यायः

अथ यद्याहिताग्निर्निर्मारं गच्छति उपतपता वा जरया वा अग्निष्ठ एवास्य यजमानायतने शयनं कल्पयेयुर्जघनेन वा गार्हपत्यम् । तदस्मै भक्षानाहरन्ति यावदलं भक्षाय मन्यते । स यद्युहागदो भवति पुनरेति । यद्यु वै प्रैति न पयः समासिञ्चति । अथेदमग्निहोत्रं सायमुपक्रमं प्रातरपवर्गमाचार्या ब्रुवते । तत्रोदाहरन्ति । स यदि सायंहुतेऽग्निहोत्रे प्रेयात् प्रतिकृष्य प्रातरग्निहोत्रं जुहुयात् । अथ यदि प्रातरग्निहोत्रे हुते कुशलम् । अथेमौ दर्शपूर्णमासौ पौर्णमास्यमावास्यासंस्थावाचार्या ब्रुवते । तत्रोदाहरन्ति । स यदि पौर्णमास्यां वृत्तायां प्रेयात् प्रतिकृष्यामावास्यां यजेतेति । अथ यद्यमावास्यायां वृत्तायां कुशलम् । अथ यस्योभे पर्वणी अतिपन्ने स्याताम् अतिपन्नप्रायश्चित्तं कुर्वीत । अथ यद्यार्तस्याग्निहोत्रं विच्छिद्येत यद्यस्य पुत्रो वान्तेवासी वालं कर्मणयः स्यात् सोऽरणयोरग्निं समारोप्योदवसाय मथित्वाग्नीन्विहृत्याग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपति । शरावं दक्षिणां ददाति । सा प्रसिद्धेष्टिः सन्तिष्ठते । दिवि प्रक्रान्ते प्रेयात् तूष्णीमेतत् तन्त्रम् संस्थाप्यापोभक्षानभ्यवहरेयुः । अपोभक्षानभ्यवहरन्ति इति विज्ञायते । अथैनमादायान्तरेण वेद्युत्करावुदङ्मुखमुपनिर्हृत्याथैनं परिश्रयन्ति । तस्य दक्षिणा द्वारं कुर्वन्ति । अथास्य केशश्मश्रूणि वापयित्वा लोमानि संहृत्य नखानि निकृन्तयीत । अथास्य दक्षिणं कुक्षिमुपाकृष्य निस्पुरीषं कृत्वाद्भिः प्रक्षाळ्य सर्पिषान्त्राणि पूरयित्वा दर्भैः संसीव्यति । तदु तथा न कुर्यात् क्षोधुका अस्य प्रजा भवन्ति इति विज्ञायते । अपिवा सपुरीषमेवाप्लाव्याच्छाद्यालङ्कृत्याथैनमादायान्तरेण वेद्युत्करौ प्रपाद्य जघनेन गार्हपत्यमुपसादयन्त्यत्र हविर्निरुप्यत इति । अथैनम् आदायान्तर्वेदि प्राक्च्छिरसमासादयन्त्यत्र हविरासाद्यत इति । अथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा प्रागुदेत्य समिद्वत्याहवनीयेऽधास्य दक्षिणं बाहुमन्वारभ्य जुहोति १ परेयुवांसं प्रवतो महीरनु बहुभ्यः पन्थामनपस्पशानम् । वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्यत स्वाहा इति । एतेनैव गार्हपत्ये जुहोति । तूष्णीमन्वाहार्यपचने हुत्वाथैनमादायान्तरेण वेद्युत्करौ प्रपाद्य जघनेन गार्हपत्यमासन्द्यां कृष्णाजिने दक्षिणाशिरसं संवेश्य शिरस्तो नळदमालां प्रतिमुच्य पत्तोदशेनाहतेन वाससा प्रोर्णोति इदं त्वा वस्त्रं प्रथमं न्वागन् इति अथैतदपोहति अपैतदूह यदिहाबिभः पुरा । इष्टापूर्तमनुसंपश्य दक्षिणां यथा ते दत्तं

बहुधा विबन्धुषु इति । तदस्य पुत्रो वान्तेवासी वा पत्नी वा परिदधीत । तदु हाजरसमेव वसीताहश्शेषं वा । अथ त्रीञ्छकलानुपकल्पयते । अथ यदि न शकला भवन्ति अन्तर्वेदि परागवहतानां कृष्णानां व्रीहीणाम् अन्वाहार्यपचने त्रीन् चरून् श्रपयत्येकं वा । गार्हपत्य आमिक्षां श्रपयति । अथैनान् संभारानुपकल्पयते दधि च सर्पिर्मिश्रमाज्यं चोदकुम्भं च दर्भांश्च परिस्तरणीयान् हिरण्यं चाजं च शासं चेडसूनं च कुम्भीं च प्रच्यावनीं सिकताश्च शुल्बे च तिस्रः पर्णशाखाश्च । कथमु खल्वेनं दहेयुः इति । यो बहुयाजी स्यात् तं पूर्वाग्निना दहेयुरित्येतदेकम् । अजस्रैरेनं दहेयुरित्येतदेकम् । निर्मन्थ्यैरेनं दहेयुरित्येतदेकम् । अपिवा तिस्र उलपराजीरादीप्य यत्राग्नयः संगच्छेरन् तत्रोल्मुकमादाय तेनैनं दहेयुरित्येतदेकमपरम् २ अथातोऽनुस्त-रणीकल्पः । आनयन्त्येतां कृष्णां कूटां जरतीं मूर्खां तज्जघन्यामनुस्तरणीं प्रतिबद्धाम् । सव्यप्रतिबद्धा भवति इति विज्ञायते । एतस्मिन् काले-ऽस्यामात्याः प्रकीर्णकेशास्तिसृभिरङ्गुलीभिः उपहत्य पांसूनंसेष्वावपन्ते खल्वघं नास्य खल्वो एवाघम् इति । अथास्य भार्याः कनिष्ठप्रथमाः प्रकीर्णकेश्यो व्रजेयुः पांसूनंसेष्वावपमानाः खल्वघं नास्य खल्वो एवाघम् इति । एतस्मिन् काले गार्हपत्ये पालाशं काष्ठमातप्याथोल्मुकप्रथमाः प्रतिपद्यन्ते । स्वधितिरथाग्नयोऽथ पात्राणि दध्याज्यं दर्भा राजगवीति । अथैनमेतयासन्द्या तल्पेन वा कटेन वा संवेष्ट्य दासाः प्रवयसो वा वहेयुः । अथैनमनसा वहन्ति इत्येकेषाम् । अनश्चेद् युञ्ज्याद् इमौ युनज्मि ते वह्नी असुनीथाय वोढवे । याभ्यां यमस्य सादनं सुकृतां चापि गच्छतात् इति समारोप्याग्नीन् हरन्ति । समारोप्य वान्तरेण वा कृत्वाग्नीन् हरन्ति ३ अथैनमाददते । आदीयमानमनुमन्त्रयते पूषा त्वेतश्च्यावयतु प्रविद्वाननष्ट-पशुर्भुवनस्य गोपाः । स त्वैतेभ्यः परिददात् पितृभ्योऽग्निर्देवेभ्यः सुविदत्रेभ्यः इति । तृतीयमेतस्याध्वनो गत्वा निदधति । अथैतेषां शकलानामेकमशस्त्रेण प्लक्ष्णोति । अथ यदि न शकला भवन्ति चरुं मेक्षणेन प्रयौति । अथवा एक एव स भवति चरोस्तृतीयं मेक्षणेन प्रयौति । लोष्टानुपसंहृत्य तेषूपमृज्य कनिष्ठप्रथमाः प्रकीर्णकेशास्त्रिरपसलैः परियन्ति सिग्भिरुपवातयन्तः । एवममात्या एवं स्त्रियः संयम्य केशान् यथेतं त्रिः पुनः परियन्ति । अथैनमाददते । आदीयमानमनुमन्त्रयते पूषेमा आशा अनुवेद सर्वाः सो अस्माँ अभयतमेन नेषत् । स्वस्तिदा अघृणिः सर्ववीरोऽप्रयुच्छन् पुर एतु प्रविद्वान्

इति । अर्धमेतस्याध्वनो गत्वा निदधति । अथैतेषां शकलानामेकमशस्त्रेण प्लक्षणोति । अथ यदि न शकला भवन्ति चरुं मेक्षणेन प्रयौति । लोष्टानुपसंहृत्य तेषूपमृज्य कनिष्ठप्रथमाः प्रकीर्णकेशास्त्रिरपसलैः परियन्ति सिग्भिरुपवातयन्तः । एवममात्या एवं स्त्रियः संयम्य केशान् यथेतं त्रिः पुनः परियन्ति । अथैनमाददते । आदीयमानमनुमन्त्रयते आयुर्विश्वायुः परिपासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात् । यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु इति । समस्तमेतस्याध्वनो गत्वा निदधति । अथैतेषां शकलानामेकमशस्त्रेण प्लक्षणोति । अथ यदि शकला न भवन्ति चरुं मेक्षणेन प्रयौति । यद्यु वा एक एव भवति चरोरवशिष्टं मेक्षणेन प्रयौति । लोष्टानुपसंहृत्य तेषूपमृज्य कनिष्ठप्रथमाः प्रकीर्णकेशाः त्रिरपसलैः परियन्ति सिग्भिरुपवातयन्तः । एवममात्या एवं स्त्रियः संयम्य केशान् यथेतं त्रिः पुनः परियन्ति । अथैतां चरुस्थालीं सुभिन्नां भिनत्ति यथास्यै कपालेषूदकं न तिष्ठेदिति । यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति ४ अथास्यावकाशं जोषयते । पश्चादुदकमनूषरमनुपहतमस्रुतहार्यमनिरिणमभङ्गुरमवल्मीकमजागर्तिबहुलौषधि यत्र क्षीरिणो वृक्षा ओषधयो व्यतिषक्ताः स्युः यस्माद् दक्षिणाप्रतीच्य आपः शनैः प्रतिष्ठेरन् ताः प्रदक्षिणमभिपर्यावृत्य महानदीमभ्युपेत्य प्राच्यः संपद्येरन् । दक्षिणाप्रत्यक्प्रवणमित्येकेषाम् । अपिवा या समा सुभूमिः । तस्माद्वीरुध उद्धारयन्ति । काळां च पृश्नोपर्णीं च तिल्वकां चापाघां चापामार्गं च शुण्ठीं च बहुपुत्रीं च विस्रंसिनीकां च राजक्षपर्णीं च याश्चान्या क्षीरिण्य ओषधयो भवन्ति । अथैनमुद्धत्यावोक्ष्य हिरण्येन परिक्रीय पर्णशाखयापोहति अपेत वीत वि च सर्पतात इति । दारुचितां कुर्वन्ति दक्षिणाप्राचीम् एषा हि पितृणां प्राची दिग् इति विज्ञायते । जघनेन चितां दक्षिणाप्राचीं विहारं कल्पयित्वा दर्भैरग्निं प्रेतं चितां च परिस्तीर्य दक्षिणेन विहारं दक्षिणाग्रान् दर्भान् संस्तीर्य तेष्वेकैकशो न्यञ्चि पात्राणि सादयति । एकपवित्रेण प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्य प्रेतं चितां चाज्यं निरुप्याधिश्रित्य पर्यग्निकृत्वोद्वास्योत्पूय तूष्णीं दर्भैः पात्राणि संमृज्य तूष्णीं तूष्णीं दार्शपूर्णमासिकाज्यानि गृहीत्वा ५ अथास्य राजगवीमुपाकरोति भुवनस्य पते इति । तस्यां निपद्यमानायां सव्यानि जानून्युपनिघ्नते पुरुषस्य सयावर्यपेदघानि मृज्महे । यथा नो अत्र नापरः पुरा जरस आयति इति । तामत्रैव शस्त्राद् घ्नन्ति । अथैतस्यै प्राणान् विस्रस्यमानाननुमन्त्रयते पुरुषस्य सयावरि

वि ते प्राणमसिस्त्रसम् । शरीरेण महीमिहि स्वध एहि पितृनुप प्रजया-स्मानिहावह इति । उपोत्थाय पांसूनमवमृशन्ते मैवं मांस्ता प्रियेऽहं देवी सती पितृलोकं यदैषि । विश्ववारा नभसा सं व्ययन्त्युभौ नो लोकौ पयसा-भ्याववृत्स्व इति । अथैनं संशास्ति अङ्गादङ्गादनस्थिकानि पिशितानि प्रच्छिद्यासंश्रावयन्तोऽप्रच्यावयन्त एकोल्मुकेन श्रपयन्तः प्रज्ञातां वपां निधत्त प्रज्ञातं हृदयं प्रज्ञातां जिह्वां प्रज्ञातं चर्म सशीर्षवालपादं प्रज्ञाते च मतस्ने प्रज्ञातं मेद इति । अथास्य भार्यामुपसंवेशयति इयं नारी पतिलोकं वृणाना निपद्यत उप त्वा मर्त्यप्रेतम् । विश्वं पुराणमनु पालयन्ती तस्यै प्रजां द्रविणं चेह धेहि इति । तां पतिहितः सव्ये पाणौ गृहीत्वोत्थापयति उदीर्ष्व नार्यभि जीवलोक-मितासुमेतमुपशेष एहि । हस्तग्राभस्य दिधिषोस्त्वमेतत् पत्युर्जनित्वमभि संबभूव इति । अथास्य स्वर्णेन हस्तौ निमृजते स्वर्णं हस्तादाददाना मृतस्य श्रियै ब्रह्मणे तेजसे बलाय । अत्रैव त्वमिह वयं सुशेवा विश्वा स्पृधो अभि-मातीर्जयेम इति ब्राह्मणस्य धनुर्हस्तादाददाना मृतस्य श्रियै क्षत्रायौजसे बलाय । अत्रैव त्वमिह वयं सुशेवा विश्वा स्पृधो अभिमातीर्जयेम इति राजन्यस्य मणिं हस्तादाददाना मृतस्य श्रियै विशे पुष्टयै बलाय । अत्रैव त्वमिह वयं सुशेवा विश्वा स्पृधो अभिमातीर्जयेम इति वैश्यस्य । यद्यात्र स्त्रिय आहुस्त-त्कुर्वन्ति । अथैनमेतयासन्द्या सह चितावादधाति । अपकृष्य रज्जूरा-सन्दीमपविध्यन्ति । कृष्णाजिने चैव रज्जुषु चोत्तानः शेते । तस्य प्राणेषु हिरण्यशकलान् प्रत्यस्यति । नाना चतुर्गृहीताभ्यामक्षणोर्जुहोति चित्रं दे-वानामुदगादनीकम् इत्यर्धर्चाभ्यां जुहोतीति विज्ञायते ६ कथमु खल्वस्य पात्राणि युञ्ज्यादिति । दध्ना सर्पिर्मिश्रेण पूरयित्वा मुखेऽग्निहोत्रहवणीं नासि-कयोः स्रुवौ अक्षणोः हिरण्यशकलौ आज्यस्रुवौ वा कर्णयोः प्राशित्रहरणं भित्त्वैकैकं हन्वोरुलूखलमुसले शिरसि कपालानि ललाटे एककपालं शिरस्तः प्रणीताप्रणयनं चमसं निदधाति इममग्ने चमसं मा विजीह्वरः प्रियो देवानामुत सौम्यानाम् । एष यश्चमसो देवपानस्तस्मिन् देवा अमृता मादय-न्ताम् इति । दक्षिणे हस्ते जुहूं सव्ये उपभृतमुरसि ध्रुवामुपवेषमरणीं च दक्षिणे अंसे मेक्षणं सव्ये पिष्टोद्वपनीं पृष्ठे स्फ्यमुदरे दारुपात्रीं कुक्षौ चमसौ सान्नाय्यपिधानं चेडोपवहनं च वङ्क्षणयोः सान्नाय्यकुम्भ्यौ पादयोरग्निहो-त्रस्थालीमन्वाहार्यस्थालीं चोर्वोरुलूखलमुसले अण्डयोर्दृषदुपले शिश्ने वृ-षारवं शम्यां च पार्श्वयोः शूर्पं छित्त्वैकैकं शिरस्त उपसादनीयं कूर्चं निदधाति

। पत्त उपावहरणीयं कूर्चम् । अथावशिष्टान्यन्तरेण सक्थिनी निवपेयुः । अपो मृण्मयान्यभ्यवहरेयुः । अपो मृण्मयान्यभ्यवहरन्ति इति विज्ञायते । अत्रैवोपनिदध्युः । ब्राह्मणेभ्योऽयस्मयानि लोहमयानि च दद्युः । तेषां या-न्यासेचनवन्ति तानि दध्ना सर्पिर्मिश्रेण पूरयेत् । संस्पृशेदितराणि । अरिक्तानि भवन्ति इति विज्ञायते । अत्रैवाध्यस्यन्त्युपवाजिनं खारीं नल्वम् । अथास्याक्षिणामुद्धृत्य पाण्योरादध्यात् मित्रावरुणाभ्यां त्वा इति । अथास्य मतस्नामुल्लिख्य पाण्योरादध्यात् श्यामशबळाभ्यां त्वा इति । दक्षिणे दक्षिणं सव्ये सव्यं हृदये हृदयमास्ये जिह्वां यथाङ्गमङ्गैरितराणि संप्रच्छाद्य वपयास्य मुखं प्रच्छादयति । मेदसा स्रुचौ प्रोर्णोति इति विज्ञायते । अथैनं चर्मणा सशीर्षवालपादेनोत्तरलोम्ना प्रर्णोति अग्नेर्वर्म परिगोभिर्व्ययस्व संप्रोर्णुष्व मेदसा पीवसा च । नेत्वा धृष्णुर्हरसा जर्हृषाणो दधद्विधक्ष्यन् पर्यङ्खयातै इति ७ अथ यद्यनुस्तरणीं नानुस्तरिष्यन्तो भवन्त्युत्सृजेद्वैनाम् । ब्राह्मणेभ्यो वा दद्यात् । दत्त्वात्रैव श्रेयसे भवन्ति इति विज्ञायते । अथ यद्युत्स्रक्ष्यन् भवति तामपसलैः पर्याणयति अपश्याम युवतिमाचरन्तीम् इति तिसृभिस्त्रिः पर्याणीयोत्तरतः प्रतिष्ठितामनुमन्त्रयते ये जीवा ये च मृता इत्येतया । अथास्याः कर्णलोमान्युत्पाट्य पाण्योरेवादध्यात् श्यामशवळाभ्यां त्वा इति । दक्षिणे दक्षिणं सव्ये सव्यम् । अथैनामुत्सृजति माता रुद्राणां दुहिता वसूनां स्वसा-तित्यानाम् अमृतस्य नाभिः । प्रणुवोचं चिकितुषे जनाय मागामनागामदितिं वधिष्ट । पिबतूदकं तृणान्यत्तु । ओमुत्सृजत इति । अथैनमुपोषयति पुरस्तादाहवनीयेन दक्षिणतोऽन्वाहार्यपचनेन पश्चाद् गार्हपत्येनोत्तरतः सभ्यावसक्थ्याभ्याम् । अत्राप्युत्प्रेक्षा भवन्ति । तं यद्याहवनीयः प्रथमम-भ्युज्ज्वलेद् देवलोकमभ्यजैषीदित्येनं जानीयात् । अथ यद्यन्वाहार्यपचनः पितृलोकम् । अथ यदि गार्हपत्यः स्वर्गलोकम् । अथ यदि सभ्यावसक्थौ सप्तर्षीणां लोकम् । अथ यदि सर्व एव सहाभ्युज्ज्वलेद् ब्रह्मलोकमभ्यजैषीद् इत्येनं जानीयात् । यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति ८ अथयद्याहिताग्निः परेयुवांसम् अथातोऽनुस्तरणीकल्पः अथैनमाददतेआदीयमानमनुमन्त्रयते अथास्यावकाशंजोषयते अथास्यराजगवीमुपाकरोति कथमुखल्वस्यपात्रा-णियुञ्ज्यात् अथयद्यनुस्तरणीम् अष्टौ ।

इत्याग्निवेश्यगृह्यसूत्रे तृतीयप्रश्ने पञ्चमोऽध्यायः

## अथ षष्ठोऽध्यायः

अथैनमादीपयते । आदीप्यमानमनुमन्त्रयते मैनमग्ने विदहो माभिशोचो मास्य त्वचं चिक्षिपो मा शरीरम् । यदा शृतं करवो जातवेदोऽथेमेनं प्रहिणुतात् पितृभ्यः इति । प्रज्वलितमनुमन्त्रयते शृतं यदा करसि जातवेदोऽथेमेनं परिदत्तात् पितृभ्यः । यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति इति । अत्र षड्ढोतारं व्याचष्टे सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा । अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः इति । अत्रैनमजं चित्यन्तेऽबलेन शुल्बेन बध्नाति अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः । यास्ते शिवास्तनुवो जातवेदस्ताभिर्वहेमं सुकृतां यत्र लोकाः इति । स यद्यहो द्रवति नैनमावर्तयति । प्रागु हैक उपोषणात् । उदकुम्भेन त्रिरपसलैः परियन्ति वारुणीभिः । तत्प्रच्छाद्येन पर्णमयेन स्रुवेणोपघातं जुहोति य एतस्य पथो गोप्तारस्तेभ्यः स्वाहा इति नव स्रुवाहुतीः । अथान्यां जुहोति अयं वै त्वमस्मादधि त्वमेतदयं वै तदस्य योनिरसि । वैश्वानरः पुत्रः पित्रे लोककुज्जातवेदो वहेमं सुकृतां यत्र लोकाः स्वाहा इति । अत्रैव स्रुवमनु प्रहरति । अत्रैतान्यवदानानीडमूने प्रच्छा-द्यौदुम्बर्या दर्व्योपघातं जुहोति अग्नये रयिमते स्वाहा इति । अत्रैव दर्वीम-नुप्रहरति जघनेन चिताम् । अथैनं नवर्चेन याम्येन सूक्तेनोपतिष्ठते प्रकेतुना बृहता भात्यग्निः इति । आसीनः पराचानुशंसति । जघनेन दहनं तिस्रो दक्षिणाः कर्षूः कुर्वन्ति । अथैना अद्भिरनुप्लाव्य सिकताभिरवकीर्य संगाहन्ते यवीयान् यवीयान् पूर्वः संगाहन्ते । अश्मन्वती रेवतीः संरभध्वमुत्तिष्ठत प्रतरता सखायः । अत्रा जहाम ये असन्नशेवाः शिवान् वयमभि वाजानुत्तरेम इति । जघनेन कर्षूः पर्णशाखे निहत्याबलेन शुल्बेन बद्ध्वा विनिसर्पन्ति यद्वै देवस्य सवितुः पवित्रं सहस्रधारं विततमन्तरिक्षे । येनापुनादिन्द्रम-नार्तमार्त्यै तेनाहं मां सर्वतनुं पुनामि इति । जघन्यो व्युदस्यति या राष्ट्रात् पन्नादपयन्ति शाखा अभिमृता नृपतिमिच्छमानाः । धातुस्ताः सर्वाः पवनेन पूताः प्रजयास्मान् रय्या वर्चसा संसृजाथ इति । यत्रापस्तद्यन्त्यनवेक्षमाणाः । अपः सचेला दक्षिणामुखाः समृत्तिकाः प्लवन्ते धाता पुनातु सविता पुनातु इति । नामग्राहं त्रिरुदकमुत्सिच्योत्तीर्याचम्यादित्यमुपतिष्ठते उद्वयं तमसस्परि इति । अथ गृहानायान्ति । यच्चात्र स्त्रिय आहुस्तत् कुर्वन्ति १ एतस्मिन् कालेऽस्यामात्याः प्रकीर्णकेशाः केशश्मश्रूणि वापयन्ते ये सन्निधाने भवन्ति ।

विकल्प इतरेषु । वापयेरन् निवर्तयेरन्वा । श्रुतवता तु वप्तव्यमेवासन्निधानेऽपीति मतं बोधायनस्य कल्पे । न समावृत्ता वपेरन्नन्यत्र विहारादित्येके । मातरि पितर्याचार्य इति त्रिरात्रं क्षारलवणवर्जितभोजनमधःशयनं ब्रह्मचर्यं त्र्यहं षडहं द्वादशाहं संवत्सरं यावद्ग्रहणं द्वादशाहापरार्धम् परमगुरुष्वेवमघोदकम् इतरेषु त्रिरात्रम् यावज्जीवं प्रेतपत्नी । अथ यद्याहिताग्निरन्यत्र प्रेयादादीप्यमानैराहूयमानैर्वसीरन् यावदस्य शरीरमग्निभिः समागमयेरन् । अथैतदभिवान्यायै पयो दोहयित्वा गार्हपत्ये ऽभिविष्यन्दयित्वाहवनीयेऽभिविष्यन्दयेत् । अधस्तात् समिधमाहरन्त्युपरिष्टाद्धि देवेभ्यो हरन्ति इति विज्ञायते । अथैनमादायान्तरेण वेद्युत्करावुदगुपनिर्हृत्य प्रसिद्धमुपोषेयुः । अथ यद्याहिताग्निरन्यत्र प्रेयादुदकान्ते त्रीनग्न्यगारानालिख्य सकृत् प्रविश्य निमील्य निगृह्य स्कन्दक्षिणान्तानादित्यमुदीक्षेत् । परिकुर्वीत च । अनेनैव त्रिर्विदेशस्थे । अथ यदि दग्धः स्यादस्थीन्याहृत्यान्तर्वेदि शरीराणां कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुः । अथ यद्यस्थीनि न विन्देत त्रयाणां षष्टिशतानां पर्णत्सरूणामेव कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुः । आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च इति विज्ञायते । पुरुषाहुतिर्ह्यस्य प्रियतमा इत्येतामनुख्यातां दहनस्य ब्रुवते । अथाप्युदाहरन्ति शरीरदायादा ह वाग्नयो भवन्ति इति । तदपि दाशतये विज्ञायते शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः इति २ अथातः संचयनम् । एकस्यां व्युष्टायां तिसृषु वा पञ्चसु वा सप्तसु वा नधस्वेकादशसु वायुग्मेष्वहस्सु अर्धमासेषु मासेषु ऋतुषु संवत्सरेषु वा सम्पाद्य सञ्चिनुयुरिति । स उपकल्पयते सतं च क्षीरं चाज्यं च उदकुम्भं च दर्भांश्च परिस्तरणीयान् नीललोहिते सूत्रे बृहतीफलं चाश्मानं चापामार्गं च वैतसशाखां च सिकताश्च शुल्बे च तिस्रश्च पर्णशाखाश्च । अत एव दहनादङ्गारान्निर्वर्त्य तिस्रो अवसर्जनीया जुहोति अवसृज पुनरग्ने पितृभ्यः संगच्छस्व पितृभिः यत्ते कृष्णः शकुन आतुतोद इति । एतस्मिन् सते क्षीरं चोदकुम्भं च निक्षिप्य वैतसशाखयावोक्ष्य सम्पादयत्यप्रकाथयन् शरीराणि यं ते अग्निममन्थाम इति षड्भिः । प्रथमां वोत्तमां द्विरभ्यावर्तयेयुः । अथैतदादहनमुदकुम्भैः स्ववोक्षितमवोक्ष्य या अस्य स्त्रीणां मुख्या सा सव्ये पाणौ बृहतीफलं नीललोहिताभ्यां मूत्राभ्यां

विश्रथ्याश्मानमन्वास्थायापामार्गेण सकृदुपमृज्यानन्वीक्षमाणा पत्तः शिरस्तो वास्थीनि गृह्णाति उत्तिष्ठातस्तनुवं संभरस्व मेह गात्रमवहा मा शरीरम् । यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवः सविता दधातु इति । इदं त एकम् इति द्वितीयम् । पर ऊत एकम् इति तृतीयम् । तृतीयेन ज्योतिषा संविशस्व इति चतुर्थम् । संवेशनस्तनुवै चारुरेधि इति पञ्चमम् । प्रियो देवानां परमे सधस्थे इति षष्ठम् । अथैनं सुसञ्चितं संचित्य पिण्डीकरोति । तं तथा करोति यथास्य कपोतः छायायां नोपविशेदिति । अथैनम् अपरिमितैः क्षुद्रमिश्रैरश्मभिः परिचिनोति न तेन परिचिनुयाद् यथास्य कपोतः छायायामुपविशेत् । अथैतान्यस्थीन्यद्भिः प्रक्षाळ्य कुम्भे वा सते वा कृत्वोपोत्तिष्ठति उत्तिष्ठ प्रेहि प्रद्रवौकः कृणुष्व परमे व्योमन् । यमेन त्वं यम्या संविदानोत्तमं नाकमधिरोहेमम् इति । संप्रवेशं कुम्भं निधाय अथातो हविर्यज्ञियं निवपनम् यं कामयेतानन्तलोकः स्यात् इति । तमस्या उद्धते सिकतोपोप्ते परिश्रिते निदधाति पृथिव्यास्त्वा अक्षित्या अपामोषधीनां रसे स्वर्गे लोके नाकस्य त्वा पृष्ठे ब्रध्नस्य त्वा विष्टपे सादयाम्यमुमसौ इति । अनन्तलोको हवै भवति इति विज्ञायते । जघनेन कुम्भं तिस्रो दक्षिणाः कर्षूः कुर्वन्ति । तत् पुरस्ताद् व्याख्यातम् । जघनेन कर्षूः पर्णशाखे निहत्याबलेन शुल्बेन बद्ध्वा विनिसर्पन्ति । तत् पुरस्तात् व्याख्यातम् । यत्रापस्तद्यन्त्यन-वेक्षमाणाः । अपः सचेला दक्षिणामुखाः समृत्तिकाः प्लवन्ते धाता पुनातु सविता पुनातु इति । नामग्राहं त्रिरुदकमुत्सिच्योत्तीर्याचम्याथादित्यमुपतिष्ठते उद्वयं तमसस्परि इति । अथ गृहानायान्ति । यश्चात्र स्त्रिय आहुस्तत् कुर्वन्ति
३ अथ यदि पुनर्धक्ष्यन्तो भवन्ति पुरस्तादेवावशेषयेयुर्जुहूं चारणीं च कृष्णाजिनं दृषदुपले शम्यामिति । अथ यद्यनुहृताः स्युर्यस्यकस्यचिदश्वत्थस्यारणी गृहीत्वा मथित्वाग्निमुपसमाधाय परिस्तीर्य कृष्णाजिने शम्यायां दृषदुपले युक्त्वास्थीन्येवाञ्जनं पिष्ट्वा पुराणेन सर्पिषा समुदायुत्य जुह्वा प्रसेकं जुहोति अस्मात्त्वमधिजातोऽस्मयं त्वदधिजायताम् । अग्नये वैश्वानराय स्वर्गाय लोकाय स्वाहा इति । अत्रैवानुप्रहरति जुहूं चारणीं च कृष्णाजिनं दृषदुपले शम्यामिति । अत्राप्युत्प्रेक्षा भवन्ति । तं यदि ज्वालोर्ध्वमभ्युज्ज्वलेद् देवलोकमभ्यजैषीदित्येनं जानीयाद् अथ यदि मुहूर्तमुदेत्य वा भ्रमेदन्तरिक्षमभ्यजैषीदित्येनं जानीयाद् अथ यदीमामनुविनमेदिहैवेत्येनं जानीयात् । यश्चात्र स्त्रिय आहुस्तत् कुर्वन्ति । न चास्यात ऊर्ध्वं श्मशानं

कर्तुमाद्रियेत । कृतीर्वास्य दहने वपेदपस्याभिर्वा परिचिनुयात् । तमभ्येवादित्यस्तपति अभि वा वातः पवते स नादित्यस्य सकाशान्न वायोर्नापां स्पर्शाच्छिद्यते । यमेवं निदध्युर्य उ चैनमेवं विदुरेवमु हाहीना हायना वाश्वत्थं निदध्युस्तं हो एवं चक्रे तस्यो हेमेऽहीना हायना श्रेयसी श्रेयसी ह्यस्मै वस्यसी वस्यसी प्रजा भवति । यमेवं निदध्युर्य उ चैनमेवं विदुरेतां ह कौषीतकिर्विदांचकार । तस्यो हेमे कौषीतकिनः श्रेयसी श्रेयसी ह्यस्मै व्युच्छन्ती व्युच्छन्त्यस्मै वस्यसी वस्यसी प्रजा भवति यमेवं निदध्युर्य उ चैनमेवं विदुर्य उ चैनमेवं विदुः ४ अथैनमादीपयते आदीप्यमानमनुमन्त्रयते एतस्मिन्काले अस्यामात्या अथातः संचयनम् अथयदिपुनर्धद्दयन्तः चत्वारि ।

इत्याग्निवेश्यगृह्यसूत्रे तृतीयप्रश्ने षष्ठोऽध्यायः

## अथ सप्तमोऽध्यायः

अथ गृहानेष्यन्नुपकल्पयते वारणं स्रुचं च स्रुवं च वारणान् परिधीन् कुशमयं बर्हिः पर्णमयमिध्मं रोहितं चर्मानडुहं नवं च सर्पिराञ्जनं चाश्मानं चानड्वाहं च शमीशाखां च कुशतरुणकानि च दर्भस्तम्भं चाजं च यवांश्च इति । अथान्तरेण ग्रामं च श्मशानं च तद्र्धाग्निमुपसमाधाय कृशमयं बर्हिस्तीर्त्वा वारणान् परिधीन् परिधाय पर्णमयमिध्ममभ्यज्य स्वाहाकारेणाभ्याधायाथैतद्रोहितं चर्मानडुहं जघनेनाग्निं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तदारोहन्ति यावन्तोऽस्य ज्ञातयो भवन्ति आरोहतायुर्जरसं गृणाना अनुपूर्वं यतमानाय तिष्ट । इह त्वष्टा सुजनिमा सुरत्नो दिर्घमायुः करतु जीवसे व इति । अथैनाननुपूर्वं कल्पयन्ति यथाहान्यनुपूर्वं भवन्ति यथर्तव ऋतुभिर्यन्ति क्लृप्ताः । यथा न पूर्वमपरो जहात्येवा धातरायूँषि कल्पयैषाम् इति । अथ वारणेन स्रुवेण वारणयां स्रुचि चतुर्गृहीत्वा जुहोति न हि ते अग्ने तनुवै क्रूरं चकार मर्त्यः । कपिर्बभस्ति ते जनं पुनर्जरायुगौरिव । अप नः शोशुचदघमग्ने शुशुध्या रयिम् । अप नः शोशुचदघं मृत्यवे स्वाहा इति । अथ वारणेन स्रुवेणोपघातं जुहोति अप नः शोशुचदघम् इति द्वादश स्रुवाहुतीः । अथोपोत्थाय अनुड्वाहमन्वारभन्ते अनड्वाहमन्वारभामहे स्वस्तये । स न इन्द्र इव देवेभ्यो वह्निः संपारणो भव इति । प्राञ्चो यान्ति इमे जीवा विमृतैराववर्तिन्नभूद् भद्रा देवहूतिं नो अद्य । प्राञ्चो गामानृतये हसाय द्राघीय आयुः प्रतरां दधानाः । मृत्योः पदं योपयन्तो यदैम द्राघीय आयुः प्रतरां

दधानाः । आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवथ यज्ञियासः इति १ अथान्तरेनाग्निं च ग्रामं चाश्मानमवदधाति इमं जीवेभ्यः परिधिं दधामि मा नोऽनुगादपरो अर्धमेतम् । शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दद्महे पर्वतेन इति । अथैताः पत्नयो नवेन सर्पिषा संमृशन्ते इमा नारीरविधवाः सुपत्नी- राञ्जनेन सर्पिषा संमृशन्ताम् इति । कुशतरुणकैः त्रैककुदेनाञ्जनेनाङ्क्ते यदाञ्जनं त्रैककुदं जातं हिमवतस्परि । तेनामृतस्य मूलेनारातीर्जम्भयामसि इति । अथैतानि कुशतरुणकानि समुच्चित्य दर्भस्तम्बे निदधाति । यथा त्वमुद्भिनत्स्योषधे पृथिव्या अधि । एवमिम उद्भिन्दन्तु कीर्त्या यशसा ब्रह्म- वर्चसेन इति । प्रत्येत्य गृहानासन्दीं प्रेष्ठनीत्यारोहन्ति अनश्रवो अनमीवाः सुशेवा आरोहन्तु जनयो योनिमग्रे इति । अजं चैतदहः पचन्ते । यवौदनं च । अजं चाश्नाति । अजोऽस्यजास्मदधाद् द्वेषाँसि इति । यवौदनस्य प्राश्नाति । यवोऽसि यवयास्मदघाद् द्वेषाँसि इति । अथास्य श्राद्धं कुर्वन्ति । एकस्यां वा व्युष्टायां तिसृषु वा पञ्चसु वा सप्तसु वा नवसु वैकादशसु वायुग्मेष्वहस्सु अर्धमासेषु वा दद्यात् । काममहरहरेकादशमासान् दद्यात् । न द्वादशमासमभ्यारोहयेत् । संवत्सरे संवत्सरे वा एतस्मिन्नहनि दद्यात् । स एष एवं विहितः । एवमनाहिताग्नेः स्त्रियाः पुल्लिङ्गाः पात्रचयेष्टकाः केशवपनवर्जं पितुर्मातुराचार्यस्य वा क्रियेत । सहस्रदक्षिणो वाप्यन्यत्र । सन्तिष्ठते पितृमेधः सन्तिष्ठते पितृमेधः २ यथो एतदाहिताग्नेर्निर्मारं गच्छतः प्रतिकृष्य प्रातरग्निहोत्रं जुहुयात् प्रतिकृष्यामावास्यां यजेतेति । तयैते कर्मणी अभिसञ्चरेद्यथा वा जीवतः कृते स्याताम् । सो चेदहुते प्रातरग्निहोत्रेऽव्युष्टाया- ममावास्यायां प्रेयात् तदानीमेवास्य तूष्णीं प्रातरग्निहोत्रं यादृक् कीदृक् च होतव्यं तदानीमेवास्य तूष्णीममावास्यायां यादृशीं कीदृशीं वा यजेत । सो चेत् पुनरगदः स्यात् पुनरेवास्य प्रातरग्निहोत्रं काल्यमव्यापन्नं होतव्यम् । पुन- रेवास्याममावास्यायां काल्यामव्यापन्नां यजेतेति । यथो एतन्न पयः समासि- ञ्चत्यामिक्षार्थं पयोऽवशेषयेदित्येवेदमुक्तं भवति । यथो एतदासन्द्या- मित्येवेदमुक्तं भवति । यथो एतदन्तर्वेदि शरीराणां कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुरिति विज्ञायते । पात्रचयनप्रभृति सिद्धमत ऊर्ध्वम् । एतावदेव नाना नात्र गोरालम्भोऽनुस्तरणीकाले कुशतरुणकैः शुष्कमोमयैर्घृतेनेत्यनुस्तृणीयाद् अग्ने- र्वर्म परि गोभिर्व्ययस्व इत्येतदेव पर्णत्सरुषु । अपि वा यथेष्टिकल्पे । अपि

वा तूष्णीमेव सर्वं क्रियेतान्यत्र चैव गोरालम्भादिति । अथ वै भवति । प्रजापतिः प्रजाः सृष्ट्वा वृत्तोऽशयत् । तं देवा ब्राह्मणं रसं तेजस्सम्भृत्य तेनैनमभिषज्यन्निति । चतुर्होतारमित्येवं ब्रूयात् । तस्य सग्रहैः होतृभिर्होमः भर्तुः सूक्तेन भरणं पत्नीभिरुपसंवेशनं दक्षिणाप्रतिग्रहैर्निर्मार्गो हृदयैर्हिरण्यशकलान् सम्भारैश्च पात्रचयो व्योतिष्यतीभिरुपोषणं नारायणाभ्यां ब्राह्मण एकहोता इति चोपस्थानं प्रयासाय स्वाहा इत्याज्याहुतीः चित्तं सन्तानेन इति पिशितहोमो मृत्युसूक्तेनानुशंसनं सौम्यया संगाहनम् ईयुष्ट्यावगाहनं सौर्येणादित्यस्योपस्थानमिति । तानेतान् परं ब्रह्मेत्याचक्षते । तान्न साधारणे श्मशाने प्रयुञ्जीत नानाचार्याय नाश्रोत्रियाय नागुरवे । पथो एतद्धविर्यज्ञियं निवपनं पुनर्दहनं चेति यदहः संचिनुयात् तदहरेवैतत् कुर्यात् । कुम्भान्तमनाहिताग्नेश्च स्त्रियाश्च । निवपनान्तं हविर्यशयाजिनः पुनर्दहनान्तं सोमयाजिनः चित्यन्तमग्निचितः । यदीतरं यदौतरमघोदकमुत्सिच्य दशरात्रमाशौचं कृत्वा शान्तिः । अथ यदि चितिश्चित्यन्ते शौचम् । चित्याः प्राक् कर्षूभ्यः कृत्वा श्वोभूते धुवनेनैव प्रतिपद्यते । सिद्धमत ऊर्ध्वम् ३ अथैतेषामुदकसपिण्डानां वान्धवानां मातुश्च योनिसम्बन्धेभ्यः पितुश्च सप्तमात् पुरुषादाचार्यान्तेवासिनोश्च सपत्नीकानां सापत्यानां सपिण्डानां दशरात्रम् । त्रिरात्रमितरेषाम् । बाले देशान्तरस्थे च सद्यः शौचमित्येके । एवं नित्योदकतर्पणेऽनुस्मरणं स्त्रीयाज्यशिष्याणाम् । न प्राक् चौळात् प्रमीतानां दहनं विद्यते । आपशुयाजिनां गोरालम्भः नासन्नयतामामिक्षा नाग्निचितां चितिः । न स्त्रीणां केशवपनं विद्यते न चितिर्नेष्टका न पुनर्दाहः । दारुवत् स्त्रीणां पात्राणि भवन्ति । बह्वृचां पितृमेधे स्त्रीणामिमान् मन्त्रानपोद्धरेत् । इयं नारी पतिलोकम् उदीर्ष्व नार्यभि जीवलोकं स्वर्णं हस्तादाददाना मृतस्य धनुर्हस्तादाददाना मृतस्य मणिं हस्तादाददाना मृतस्य मैनमग्ने विदहो माभिशोचः मृतं यदा करसि जातवेदः अजो भागस्तपसा तं तपस्व अयं वै त्वमस्मादधि त्वमेतत् इदं त एकं पर ऊत एकं यौ ते श्वानौ यत्ते कृष्णः शकुन आतुतोद उत्तिष्ठ प्रेहि प्रद्रवौकः कृणुष्व अस्मात्त्वमधिजातोऽसि अपेत वीत वि च सर्पतातः उच्छ्वमञ्चस्व पृथिवि मा विवाधिया इति । मृतपत्नीकः क्रतूनाहरिष्यन् जायामुपयम्याग्नीनादध्यात् । विज्ञायते च तस्मादेको द्वे जाये विन्दत इति । मृतपतिकाया औपासनेन पितृमेधः । नह्यस्या अपतित्वात् पुनरग्न्याधेयं विद्यते । विज्ञायते च तस्मान्नैका द्वौ पती विन्दते इति ।

आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेत्यविशेषाद् जायापत्योराहिताग्न्योरि-त्येवेदमुक्तं भवति । तयोर्यः पूर्वो म्रियेत तस्याग्निेत्रेतया यज्ञपात्रैश्च पितृमेधः यः पश्चात् तस्यौपासनेन । सहप्रमीतयोः सहैकः पितृमेधः । औपासनं चोल्मुकार्थं स्यात् । औपासनेनानाहिताग्नेः स्त्रियाश्च निर्मन्थ्येन । उत्तपनी-येनैके समामनन्ति । निर्मन्थ्येन स्त्रीकुमारं दहेयुरित्येकेषाम् । मृतपत्नी-कसमाग्निभिर्जायायां दग्धायामौपासनेन का प्रतिपत्तिरिति । क्रतुं चेदाहरि-ष्यन् स्याद् ब्राह्मोदनिकमेनं कुर्यात् । वनं चेदातिष्ठेद् औपासनमेवोपास्यं स्यात् । अथ चेत् संन्यसेन्नैनमाद्रियेत । नाशुचिः काम्यं तप आतिष्ठेन्न यजेन्न स्वाध्यायमधीयीतान्यत्राग्निहोत्रदर्शपूर्णमासाभ्यां दद्यात् । काममृत्विग्भ्यो दद्यात् । यथो एतद् गृहानेप्यन्नुपकल्पयते इति स्वान् गृहस्थधर्मान् प्रतिपत्स्य-न्नित्येवेदमुक्तं भवति । कथमु खलु प्राचीनावीतिना पितृमेधः कार्यो यज्ञोप-वीतिनेति । प्राचीनावीतिनेत्येवं ब्रूयात् । पितॄणां वा एष मेधो देवानां वा अन्ये मेधा इति । निवीतिनश्चैवेदम् हरेयुश्चितायां चादध्युश्चितायां चादध्युः ४ अथगृहानेष्यन्नुपकल्पयते अथान्तरेणाग्निंचग्रामंच यथोएतदाहिताग्नेः अथैतेषामुदकसपिण्डानां चत्वारि

इत्याग्निवेश्यगृह्यसूत्रे तृतीयप्रश्ने सप्तमोऽध्यायः

## अथाष्टमोऽध्यायः

एकाहं धुनुपुस्त्रीण्यहानि धुनुयुः पञ्चसप्तनवैकादशार्धमासान् धुनुयुः अयुग्मरात्रीरर्धमासान् मासानृतून् संवत्सरं वा संपाद्य धुनुयुरिति । स उपकल्पयते दधि च वाजिनमिश्रं कुम्भीं च शतातृष्णां तिस्रः पालाश्यो मेध्यो रोहितं चर्मानडुहम् आहननार्थमपसलावृत्तरज्जुं परिव्ययणीं च षट्च्छतानीष्टका आममया अपरिमिताश्च लोकंपृणा द्वया धानास्तिलमिश्राश्चातिलभिश्रा-श्चाभिवान्यायै दुग्धमर्धपात्रं समूलं बर्हिर्नलेषिकां भुक्तभोगं च वासः क्षेत्र-वितृणीं चतुरो लोष्टान् पञ्च चरून् पञ्चापूपान् घृतेनैकः क्षीरेणैको दध्नैको मधुनैकः चतुरः स्तम्बान् अर्जुनस्तम्बं दूर्वास्तम्बं काशस्तम्बं कुशस्तम्बं चतुरो नानावृक्ष्यान् परिधीन् पर्णमयवारणवेतसशमीमयान् द्वे द्वे वारणशाखां च क्षेत्रवितृणीं विधृतिं यवमयं सर्वौषधं च सिकताश्च शुल्बञ्च तिस्रश्च पलाशशाखाः । अथान्तरेण वा ग्रामं च श्मशानं चागारं वा विमितं वा कारितं वा भवति । तद्दूधाग्निमुपसमाधायापरेणाग्निं तिस्रः पालाश्यो मेध्यो

निहत्य तासामन्तरेणास्थिकुम्भं निधाय तदुपरिष्टाच्छतातृणामध्युद्यम्य दध्ना वाजिनमिश्रेण पूरयति वैश्वानरे हविरिदं जुहोमि इमं समुद्रं शतधारमुत्सम् इति द्वाभ्याम् । अनुमन्त्रयते द्रपसश्चस्कन्द इति । अथैतत्पुरस्ताद्रोहितेन चर्मणानडुहेनाभिघातं त्रिरपसलैः परियन्ति । अजिनमौ अजिनमौ इति । त्रिस्त्रिरेव रात्रेः परियन्ति त्रिरह्नः । एवममात्या एवं स्त्रियः । तदनु नर्तक्यश्चानुनृत्येयुः । यश्चाहन्यते स्वार्यां वा पल्वले वा समवशमयन्ते । यदेषां समवशमयितं सम्भवति ते न तथा प्रययुर्यदहर्न पुरस्तान्न पश्चाच्चन्द्रमसं पश्येयुः । ते महारात्र उत्थाय प्रययुर्ज्ञात्वा श्मशानकरणम् । अथैते ब्राह्मणाश्चत्वारोऽभ्रिमादायोत्तरतो गत्वा लोष्टानुपसंहरन्तीष्टका वा । अथैतदादहनमुदकुम्भैः स्ववोक्षितमवोक्षति अपेत वीत वि द्च सर्पतातः इति । यथाजीवमुपसर्पे स्यात् न जीवन्तमभिदध्याज्जीवतो ह्येष प्राणानभिनिदध्यात् इति । पर्नशाखया पीडयित्वा अपसलवृत्तया रज्ज्वा परियन्ति प्रेमां मात्रामुपस्नुहि इति । तस्य मात्रा यदि ग्रीवदघ्नं पुरस्तान्नाभिदघ्नं पश्चाद्यदि जानुदघ्नं पुरस्ताद् गुल्फदघ्नं पश्चाद्यदि गुल्फदघ्नं पुरस्तात् समं भूमेः पश्चात् पुरुषमात्रं भवतीति विज्ञायते । उक्तविधाभ्यां समनु स्पन्द्यां लेखां लिखति । अपोद्धत्य स्पन्द्यां कर्षूः खानयन्ति । उच्छ्रयन्त्यस्या दक्षिणतः पश्चाद् भूयसीः कुर्वन्ति १ अथ द्वाभ्याम् आत्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निम् यो नो अग्निः इति । स्वयं चितिं जपति यास्ते अग्ने समिधो यानि धाम इति । श्वेतमश्वमभिमृश्यान्तः शर्करामिमामुपदधाति प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीद इति । अथैतत्पुरस्तादेवौदुम्बरं युगलाङ्गलं कारितं भवति सप्तगवं वा शयोदशगवं वा शुनं वाहाः शुनं नाराः शुनं कृषतु लाङ्गलम् । शुनं वरत्रा बध्यन्तां शुनमुष्ट्रामुदिङ्गय शुनासीरा शुनमस्मासु धत्तम् शुनासीराविमां वाचम् इति द्वाभ्याम् । सीतां प्रत्यवेक्षते सीते वन्दामहे त्वार्वाची सुभगे भव । यथा नः सुभगा ससि यथा नः सुफला ससि इति । अथास्थिकुम्भं सीतायां निदधाति सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे । तेभिरदिते शं भव इति । अथानडुहो विमुञ्चति विमुच्यध्वमघ्निया देवयाना अतारिष्म तमसस्पारमस्य । ज्योतिरापाम सुवरगन्म इति । अत एतेऽध्वर्ययो भवन्ति यदि दक्षिणावान् पितृमेधः । यद्यु वै सत्रियोऽग्निर्यथागवं व्युदञ्चति । यत्रैवानड्वाहस्तद्युगलाङ्गलमिति । अथैनमुपवातयते प्रवाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः । इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः

पृथिवीं रेतसावति इति । अग्निवत्सर्वौषधीर्वपति यथा यमाय हार्म्यमवपन् पञ्च मानवाः । एवं वपामि हार्म्यं यथा साम जीवलोके भूरयः इति । अत्र सिकता निवपति अग्ने तव श्रवो वय इति षड्भिरनुच्छन्दसम् । अथोर्ध्वचित उपदधाति चितस्स्थ परिचित ऊर्ध्वचितः श्रयध्वं पितरो देवता । प्रजापतिर्वः सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीद इति । अथानुव्यूहति आ प्यायस्व इति गायत्र्या ब्राह्मणस्य । सं ते पयाँसि इति त्रिष्टुभा राजन्यस्य यथासुष्टु यथाशर्करमनुव्यूहति । अथ द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निः इति । स्वयं चितिं जपति यास्ते अग्ने समिधो यानि धाम इति । श्वेतमश्वमभिमृश्याभिद्रवणं जपति अपामिदं न्ययनं नमस्त इति द्वे । अथ क्षेत्रवितृणण्यां चतुरो लोष्टानुपदधाति उत्ते तभ्नोमि पृथिवीं त्वत्परीमं लोकं निदधन्मो अहँरिषम् । एताँ स्थूणां पितरो धारयन्तु तेत्रा यमस्सादनात्ते मिनोतु इति पुरस्तादुपदधाति । उपसर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम् । ऊर्णं मृदा युवतिर्दक्षिणावत्येषा त्वा पातु निर्ऋत्या उपस्थे इत्युत्तरतः । उच्छ्मञ्चस्व पृथिवि मा विबाधिथाः सूपायनास्मै भव सूपवञ्चना । माता पुत्रं यथासि चाभ्येनं भूमि वृणु इति पश्चात् । उच्छ्मञ्चमाना पृथिवी हि तिष्ठसि सहस्त्रं मित उप हि श्रयन्ताम् । ते गृहासो मधुश्चुतो विश्वाहास्मै शरणाः सन्त्वत्र इति दक्षिणतः । तया देवतं कृत्वा सूददोहसं करोति । अथैनं तिलमिश्राभिर्धानाभिरुपकिरति एणीर्धाना हरिणीरर्जुनीः सन्तु धेनवः । तिलवत्सा ऊर्जमस्मै दुहाना विश्वाहाः सन्त्वनपस्फुरन्तीः इति । अथैन-मभिवान्यायै दुग्धमर्धपात्रं दक्षिणत उपदधाति एषा ते यमसादने स्वधा निधीयते गृहे । अक्षितिर्नाम ते असौ इति यजमानस्य नाम गृह्णाति । तया देवतं कृत्वा सूददोहसं करोति । दक्षिणतः समूलं बर्हिरुपदधाति इदं पितृभ्यः प्रभरेम बर्हिर्देवेभ्यो जीवन्त उत्तरं भरेम । तत्त्वमारोहासो मेध्यो भवं यमेन त्वं यम्या संविदानः इति । तया देवतं कृत्वा सूददोहसं करोति । अथ नलेषिकामुपदधाति नळं प्लवमारोहैतन्नळेन पथोऽन्विहि । स त्वं नळप्लवो भूत्वा सन्तर प्रतरोत्तर इति । तया देवतं कृत्वा सूददोहसं करोति । अथैनमस्थिकुम्भं भुक्तभोगेन वाससा निर्णिज्य यथाङ्गं चिनोति सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे । तेभ्यः पृथिवि शं भव इति । अत्र षड्ढोतारं व्याचष्टे षड्ढोता सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा । अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः इति

परं भृत्योरनुपरेहि पन्थाम् इति च । अथैनमुपवातयति शं वातः शं हिते घृणिः शमु ते सन्त्वोषधीः । कल्पन्तां मे दिशः शग्माः इति । अथैनान् पञ्च चरून् सापूपानुपदधाति अपूपवान् घृतवांश्चरुरेह सीदतूत्तभ्नुवन् पृथिवीं द्यामुतोपरि । योनिकृतः पथिकृतः सपर्यत ये देवानां घृतभागा इह स्थ एषा ते यमसादने स्वधा निधीयते गृहेऽसौ इति यजमानस्य नाम गृह्णाति । दशाक्षरा तां रक्षस्व तां गोपायस्व तां ते परिददामि । तस्यां त्वामादभन् पितरो देवता प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्व द्ध्रुवा सीद इति पुरस्तादुपदधाति । अपूपवाञ्छृतवान् इति दक्षिणतः अपूपवान् क्षीरवान् इति पश्चात् अपूपवान् दधिवान् इत्युत्तरतः अपूपवान् मधुमान् इति मध्ये शताक्षरा सहस्राक्षरा इति प्रतिदिशमनुषजति । तया देवतं कृत्वा सूददोहसं करोति । अथैनं तिलमिश्राभिर्धानाभिरुपकिरति एतास्ते स्वधा अमृताः करोमि इति । तया देवतं कृत्वा सूददोहसं करोति । अथ चतुरः स्तम्बानुपदधाति २ चरूणामुपरिष्टात् त्वामर्जुनौषधीनां पयो ब्रह्माण इद्विदुः । तासां त्वा मध्यादाददे चरुभ्यो अपि धातवे इति पुरस्ताद् अर्जुनस्तम्बं दूर्वाणां स्तम्बमाहरैतां प्रियतमां मम । इमां दिशं मनुष्याणां भूयिष्ठानुविरोहतु इत्युत्तरतो दूर्वास्तम्बं काशानां स्तम्बमाहर रक्षसामपहत्यै । य एतस्यै दिशः पराभवन्नघायवो यथा ते नाभवान् पुनः इति पश्चात् काशस्तम्बं दर्भाणां स्तम्बमाहर पितृणामोषधीं प्रियाम् । अन्वस्यै मूलं जीवादनुकाण्डमथो फलम् इति दर्भस्तम्बं दक्षिणतः । चतुर्णां स्तम्बानाम् अग्रे मध्यं च चरुमुपदधाति एतैरेव चतुर्भिर्मन्त्रैः । तया देवतं कृत्वा सूददोहसं करोति । अथ चतुरो नानावृक्ष्यान् परिधीन् परिदधाति मा त्वा वृक्षौ संबाधिष्टं मा माता पृथिवि त्वम् । वैवस्वतं हि गच्छासि यमराज्ये विराजसि इति वैतसशमीमयौ पुरस्ताच्चोत्तरतश्च । तया देवतं कृत्वा सूददोहसं करोति । अथ क्लेषीकावित्येके । अथ लोष्टानुपदधाति । पृथिव्यास्त्वा लोके सादयामि । प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीद इति शतं पुरस्तादुपदधाति अन्तरिक्षस्य त्वा लोके सादयामि इति शतमुत्तरतः दिवस्त्वा लोके सादयामि इति शतं पश्चात् दिशां त्वा लोके सादयामि इति शतं दक्षिणतः नाकस्य त्वा पृष्ठे ब्रध्नस्य त्वा विष्टपे सादयामि इति द्विशतं मध्ये । तया देवतं कृत्वा सूददोहसम् करोति । अथ लोकंपृणा उपदधाति लोकं पृणच्छिद्रं पृण इति लोकंपृणाभिः सहस्रं सम्पद्यते । द्विषाहस्रादिष्वेतावदेव पुनः पुनरुपदध्यात् । काठकाग्निचितावपि पञ्चाशीतिशतमुपदध्यात्

। विज्ञायते अग्निं चित्वा सौत्रामरया यजेत मैत्रावरुरयामिक्षया वा इति काठकाग्नीनां ब्राह्मणम् । तया देवतं कृत्वा सूददोहसं करोति । अथैन-मुपवातयति शं वातः शं हिते घृणिः शमु ते सन्त्वोषधीः । कल्पन्तां ते दिशः सर्वाः इति । अथैनमभिमृशति इदमेव मेतोऽपरामार्तिमारामकाञ्चन । तथा तदश्विभ्यां कृतं मित्रेण वरुणेन च इति । पुरस्ताद् वारणशाखां निदधाति वरणो वारयादिदं देवो वनस्पतिः आर्त्यै निर्ऋत्यै द्वेषाच्च वनस्पतिः इति । उत्तरतः क्षेत्रवितृरणीं निदधाति विधृतिरसि विधारयास्मदघाद् द्वेषाँसि इति । पश्चाच्छमीशाखां निदधाति शमि शमयास्मदघाद् द्वेषाँसि इति । दक्षिणतो यवान् निदधाति यव यवयास्मदघाद् द्वेषाँसि इति । अथैनमुपतिष्ठते पृथिवीं गच्छान्तरिक्षं गच्छ दिवं गच्छ दिशो गच्छ स्वर्गच्छ स्वर्गच्छ दिशो गच्छ दिवं गच्छान्तरिक्षं गच्छ पृथिवीं गच्छापो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः इति । जघनेन चितां तिस्रो दक्षिणाप्राचीः कर्षूः कुर्वन्तीति । तत् पुरस्ताद् व्याख्यातम् । जघनेन कर्षूः पर्णशाखे निहत्याबलेन शुल्बेन बद्ध्वा विनिसर्पन्तीति । तत् पुरस्तात् व्याख्यातम् । यत्रापस्तद्यन्त्य-नवेक्षमाणाः । अपः सचेला दक्षिणामुखाः समृत्तिका आप्लवन्ते धाता पुनातु सविता पुनातु इति । नामग्राहं त्रिरुदकमुत्सिच्योचीर्याचम्यादित्यमुपतिष्ठते उद्वयं तमसस्परि इति । अथ गृहानायान्ति । यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति । अत्र शानिं कुर्वन्ति सौत्रामरयाः प्रत्याम्नायो भवतीति । अत्रामिक्षया कुर्यात् । सन्तिष्ठते लोष्टचितिः सन्तिष्ठते लोष्टचितिः ३ एकाहंधुनुयुः अथद्वाभ्यामा-त्मन्यग्निंगृह्णीते चरूणामुपरिष्टात् त्रीणि ।

इत्याग्निवेश्यगृह्यसूत्रे तृतीयप्रश्ने अष्टमोऽध्यायः

## अथ नवमोऽध्यायः

अथ यदि नष्टाग्निरपहृताग्निर्वा यजमानः प्रेयाद् यद्यस्य पुत्रो वान्तेवासी बालंकर्मरयः स्यात् । प्राचीनावीतं कृत्वोद्धत्यावोक्ष्य यजमानायतने प्रेतं निधाय गार्हपत्यस्यायतने अरणीं निधाय प्रेतस्य दक्षिणं बाहुमन्वारभ्य मन्थति येऽस्याग्नयो जुह्वतो मांसकामाः संकल्पयन्ते यजमानं जायन्तु ते हविषे स्वादिताय स्वर्गं लोकमिमं प्रेतं नयन्तु इति । तूष्णीं विहृत्य द्वादशगृहीतेन स्रुचं पूरयित्वा पुरुषसूक्तेन मनसानुद्रुत्याहवनीये जुहोति । एतेनैव गार्हपत्ये जुहोति । तूष्णीमन्वाहार्यपचने हुत्वा ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्येत ।

यथो एतत्परोक्षं प्रेतस्य यजमानस्यास्थीन्याहृत्य संस्कुर्यात् । कथमत्राहरणं विद्यत इति । शिरस्तः प्रथमं गृहीत्वाथोरस्तोऽथ जठरतोऽथोरुबाहुभ्यामथ पत्त इति त्रयस्त्रिंशतमस्थीनि गृह्णातीति विज्ञायते त्रयस्त्रिंशत् पुरुषः इति । अथैतान्यस्थीन्यद्भिः प्रक्षाळ्य कृष्णाजिनं दक्षिणाग्रीवमुत्तरलोमास्तीर्य तस्मिन्नस्थीनि संभरति इन्द्रो दधीचो अस्थभिः इत्येतेनानुवाकेन । तया देवतं करोति तया देवतयाङ्गिरस्वद्ध्रुवा सीद इति । अथ सूददोहसं करोति ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वारोचने दिवः इति । दीर्घवंशे विग्रथ्याक्षारलवणाशिनो मृण्मयभाजने आहरन्ति । तानि ग्राममर्यादायां निधायाग्नीनाहरेयुः । यद्यतिहरेयुरग्नयो लौकिकाः सम्पद्येरन् । विज्ञायते च प्रवसन् यजमानोऽग्निभ्यः परिदाय गृहानेति । यतो ग्राममर्यादां नातिव्रजन्ति । तस्माद् ग्राममर्यादां नातिहरेत् इति १ अथ यद्यात्मनि समारूढेष्वग्निषु अरण्योर्वा यजमानः प्रेयाद् यद्यस्य पुत्रो वान्तेवासी वालंकर्मण्यः स्यात् । प्राचीनावीतं कृत्वोद्धत्यावोक्ष्य यजमानायतने प्रेतं निधाय गार्हपत्यस्यायतने लौकिकमग्निमुपसमाधाय प्रेतस्य प्रदक्षिणं बाहुमन्वारभ्य जपति उपावरोह जातवेद इमं प्रेतं स्वर्गाय लोकाय नय प्रजानन् । आयुः प्रजां रयिमस्मासु धेहि प्रेताहुतीश्चास्य जुषस्व सर्वाः इति । अपि वारण्योरुपावरोह्य मन्थेदिति । तूष्णीं विहृत्य द्वादशगृहीतेन स्रुचं पूरयित्वा दुर्गां मनस्वतीं महाव्याहृतीर्हुत्वा तद्यमो राजा इति द्वाभ्यां पूर्णाहुतिं हुत्वा यद्यर्थिनो विन्देरन् तेभ्यो धेनुं ददाति । अथ परोक्षगतप्रेतस्य यजमानस्य दिगेव प्रज्ञायते । तां दिशं विहारं कल्पयित्वा असावेहि इति नामग्राहमाहूय पर्णत्सरूणामेव कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रच्छाद्य प्रसिद्धमुपोषेयुः । यद्येवं कृतेऽग्निभिस्तीर्य यजमानः पुनरागच्छेत् कथं तत्र कुर्यादिति २ अथ याज्ञिकात् काष्ठादग्निं मथित्वा अग्निमुपसमाधाय परिस्तीर्याग्निमुखात् कृत्वा पक्वाज्जुहोति हिरण्यगर्भः समवर्तताग्रे इति द्वाभ्याम् । अथाज्याहुतीरुपजुहोति सहस्रशीर्षा पुरुषः इत्येतेनानुवाकेन स्वाहाकारैः । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् । अपरेणाग्निं सौवर्णेन पात्रेण नवेन वा मृण्मयेन कृष्णाजिनेन वा दृतिभूतेन घृतेनापाभिः पूरयित्वा जीवपितुश्चेत् पिताभिमन्त्रयते विष्णुर्योनिं कल्पयतु इति । अथैनं प्रवेशयति यां पूषन् शिवतमामेरयस्व इति । स गर्भो भूत्वा कृष्णाजिने दृतिभूते रात्रिं वसति । व्युष्टायां जघनार्धादात्मानं प्रतिकृष्य जायेत । जातस्य

जातकर्मप्रभृति संस्कारान् कारयित्वा दशरात्रव्रतं चरेत् । तथैव जाययाग्नीनाधाय व्रात्येन पशुनेष्ट्वा गिरिं गत्वाग्नये कामायेष्टिं निर्वपेदायुष्मतीं शतकृष्णलाम् । दिशामवेष्टचा यजेत । अत ऊर्ध्वं ईप्सितैर्यज्ञक्रतुभिर्यजेतेति विज्ञायते ।

हिरण्यगर्भः सम्भूतो ब्राह्मणस्तीर्णनिर्णयः
प्रत्युत्थानं न कस्यापि कुर्याद् देवसमस्तु सः
इति विज्ञायते

तस्मात् प्रोषिते यजमाने चतुर्विंशतिवर्षाणि परिपाल्याग्निहोत्रं संस्कुर्यादिति स यद्यश्रुतः स्यात् । अथाग्रयणेष्टिपशुचातुर्मास्याध्वराणामसमाप्ते व्रतान्तराळे प्रमीयेत यद्यस्य पुत्रो वान्तेवासी वा शेषांश्चैकतन्त्रं समाप्नुयात् । यद्देवत्यं पशुमालभेत तद्देवत्यं पुरोडाशमामिक्षां वा यजेत । अथ वै भवति तमसो वा एष तमः प्रविशति सह तेनाहिताग्निमन्यैरग्निभिः संस्कुर्याद् इति । अथाप्युदाहरन्ति शरीरदायादा ह वाप्नयो भवन्ति इति । मरणे क्षेयोऽस्ति । य एवं विद्वानुदगयने प्रमीयते सौर्येण पथा स्वर्गं लोकमेत्यथ यो दक्षिणे प्रमीयते चान्द्रमसेन पथा पितृलोकमेति इति विज्ञायते । ता सूर्याचन्द्रमसा विश्वभृत्तमा महद् इत्याहुतीभिरेवैनं रात्रावपरपक्षे दक्षिणायनेन यदुदगयने आपूर्यमाणपक्षे दिवा क्रत्वन्ते श्रेयो मरणमित्युपदिशन्ति । अन्येषु नियमभूतेषु सत्रेषु दीक्षितप्रमीतवदेकाहेऽहीने च कुर्यादिति ३ अथयदिनष्टाग्निः अथय-द्यात्मनिसमारूढेषु अथयाज्ञिकात्काष्टात् त्रीणि

इत्याग्निवेश्यगृह्यसूत्रे तृतीयप्रश्ने नवमोऽध्यायः

### अथ दशमोऽध्यायः

अथ हैके तूष्णीमितरेषाम् इत्यत्रोदाहरन्ति
भार्यासंज्ञिता नारी पुरुषो ब्राह्मणसंज्ञकः
त एते होतृसंस्कारा इतरेऽमन्त्रसंस्कृताः । इति

ताननु व्याख्यास्यामः । अनुपेत उन्मत्तो जळोऽन्धो मूको बधिरः कुष्ठी किलासी कुब्जः पङ्गुर्हीनाङ्गोऽधिकाङ्गः सहाञ्जगतो ब्राह्मणोऽनाथो राज-

न्योऽनग्निर्गृहस्थो वैश्यस्य स्त्रियामुत्पन्नपुत्राः कन्या विधवा बन्ध्या चेति । तेषां प्राणेषूत्क्रान्तेषु तूष्णीं स्नापयेत् । श्मशानं नीत्वा दहनं जोषयेदमन्त्रेण । शाखया संभृज्य सम्प्रकीर्य तिलतण्डुलान् सम्प्रकीर्य चितां कल्पयित्वा चितायां प्रेतं निधायाज्येनास्ये निनयेत् इदं त आत्मनः शरीरम् अयं त आत्मा आत्मनस्त आत्मानं शरीराद् ब्रह्म निर्भिनत्ति भूर्भुवस्वरसौ स्वर्गाय लोकाय स्वाहा इति । मन्त्रेण सिग्वातेनोपवीजयन्ति । तूष्णीमुदकुम्भेनापसव्यं परिषिञ्चति । उत्तपनेनाग्निना संयोजयेत् अस्मात्त्वमधिजातोऽसि अयं त्वदधिजायताम् । अग्नये वैश्वानराय स्वर्गाय लोकाय स्वाहा इति । तीर्थेऽभिषिञ्चेत् १ अथ गर्भिण्यास्तैष्यां कृतायाम् अत ऊर्ध्वं स्त्रियेत भर्ता श्मशानं नीत्वा दहनं जोषयेत् । चितां कल्पयित्वापरेण चितायाः प्रेतं निधाय नाभेः सव्यस्योपरिष्टाद् लेख्येन हिरण्यगर्भः समवर्तताग्रे इत्यवलेखनम् । कुमारं दृश्यमानमनुमन्त्रयते जीवतान्मम पुत्र इति । अथ कुमारं स्नापयेयुः । हिरण्यमन्तर्धाय जीवता ग्राममायान्ति । यस्ते स्तनः शशयः इति स्तनं प्रदाय तस्मिन्नुदर आज्याहुतीर्जुहोति शतायुधाय शतवीर्याय इत्येताभिः पञ्चभिः प्रयासाय स्वाहा इत्येतेनानुवाकेन । प्राणाय स्वाहा व्यानाय स्वाहा इत्येतेनानुवाकेनाव्रणं कुर्यात् । प्रेतं चितामारोप्य विधिना दाहयेत् । अष्टकाधेनुं तिलधेनुं भूमिधेनुं वा दद्यात् । अथ नराणामशुचिर्भवेद् ब्राह्मणक्षत्रियवैश्यानां सूतके प्रेतके वान्येष्वशुचिर्मृतिः पञ्चगव्येन सुरभिमत्या अब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिरग्निर्मूर्धेत्यान्तादनुवाकस्य शतरुद्रीयं प्रोक्षयित्वा यथाशक्ति दक्षिणां दत्त्वा पैतृमेधिककर्म प्रतिपद्यत इति २ अथ गृहस्थो बहुजायां विन्देत दासामन्यतमा म्रियेताग्निनैव पैतृमेधिकम् कर्म प्रतिपद्येत । अथ ऊर्ध्वं दशरात्रं व्रतं चरेत् । अधःशयनं ब्रह्मचर्यम् अनङ्गवेषमनक्ताशनं नासपिण्डान्योन्यस्पर्शनमन्योन्यान्नभोजनमित्येवमादि व्रतं चरेत् । अन्येष्वघाहेषु च । एकादश एकोद्दिष्टं कुर्वन्ति । इतराभिः पत्नीभिरग्निमन्वाधाय तस्मिन् गृह्याणि कर्माणि क्रियन्ते । गृहस्थो बहुजायां विन्देदौपासनं तन्त्रं न कृत्वा तस्यां वा म्रियेत प्रसिद्धं तत्र कल्पेन तन्त्रं कृत्वाग्निना दाहयेत् । अत ऊर्ध्वमितराभिः पत्नीभिरग्निमन्वाधाय तस्मिन् गृह्याणि कर्माणि क्रियन्ते । तासामपरा म्रियेत पूर्वाग्निमुपसमाधाय संपरिस्तीर्य स्रुक्स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा अन्वारब्धायां पत्न्यां यजमानो जुहोति नमस्तर्षे गद । अव्यधायै त्वा स्वधायै त्वा । मा न इन्द्राभितस्त्वदृष्वारिष्टासः । एवाब्रह्मन् तवेदस्तु

स्वाहा इति । अथैनमग्निं समारोप्य अयं ते योनिर्ऋत्विय इति अपराग्नौ समि- धमभ्यादधाति आजुह्वानः उद्बुध्यस्व इति द्वाभ्याम् । सम्परिस्तीर्याज्यं विला- प्योत्पूय स्रुक्स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वान्वारब्धप्रेतस्य दक्षिणं बाहुमन्वारभ्य जुहोति यो ब्रह्मा ब्रह्मण उज्जहार इत्येतेन सूक्तेन । एकैकशश्चतुर्गृहीतं गृहीत्वा प्रणीताभ्यः कृत्वा चतुश्शरावमोदनं श्रपयित्वा अभिघार्योदञ्चमुद्वास्याधिष्ठितमभिघारयति । परिधानप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जुहोति समितं सङ्कल्पेथाम् इति पुरोनुवाक्यामनूच्य अग्ने पुरीष्याधिपा भवा त्वन्न इति याज्यया जुहोति । श्वभ्रे काष्ठेऽथाज्याहुतीरुपजुहोति पुरीष्य- स्त्वमग्न इत्यान्तानानुवाकस्य । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् । गुरवे गां ददाति । विधिना दाहयेत् । दशरात्रादत ऊर्ध्वं इतराभिः पत्नीभिरग्निमन्वाधाय तस्मिन् गृह्याणि क्रियन्ते ३

प्रणम्य वन्दनं कायैः सदाख्यं परमेश्वरम्
पतीनां प्रेतसंस्कारविधिं वक्ष्ये विशेषतः

विप्रो गृहस्थः शुद्धात्मा यतिसंस्कारमाचरेत्
शिक्ये शरीरमारोप्य गन्धमाल्यैरलङ्कृतम्

तुषाग्निमत्र चोद्वास्य संस्कर्तानुहरेद्यतिम्
घोषितं जयशब्देन दुन्दुभीनां रवैरपि

प्राचीमुदीचीं वा गत्वा शुद्धं देशं समाश्रयेत्
खात्वा व्याहृतिभिर्देशं दण्डायामप्रमाणकम्

सप्तव्याहृतिभिः प्रोक्ष्य तत्र दारुचितिं क्रियात्
याज्ञिकैस्तु यथाशक्ति काष्ठैरन्यैरथापि वा

ततः शरीरं प्रक्षिप्य सावित्र्या शुद्धमानसः
विष्णो इव्यं रक्षस्वेति हविस्तस्यां निधापयेत्

पवित्रं तेति मन्त्रेण पवित्रं स्थापयेन्मुखे

त्रिदण्डं दक्षिणे पाणाविदंविष्णवादिना न्यसेत्

सव्ये शिक्यं यदस्येति स्वाहान्तेन निधापयेत्
सावित्र्या तूदरे पात्रं गुह्यस्थाने कमण्डलुम्

भूमिर्भूम्ना ममाग्नेति स्थापयेत् कौपनं ततः
---अध्येन क्षिप्तसर्वसाधनसंयुतम्

शरीररं होतृभिः कर्ता सग्रहैरुपतिष्ठते
तुषाग्निना दहेद् देहं यातवातह सह भविष्यति

अथाप्युदाहरन्त्येयं वेदार्थनिपुणा बुधाः
विषेकादिश्मशानान्ता विधयो ब्राह्मणाश्रयाः

तस्मिन् यतेश्च संस्कारं मन्त्रवत् कुरुते गृही
आत्मन्यग्निं समारोप्य यः प्रेतमवदह्यति

तस्य पुत्रो विधानेन ह्यवरोप्याग्निना दहेत्
अपि होतृविधानेन गायत्र्या प्रणवेन च

सन्निकृष्टे तु संन्यस्ते पितर्युपरते सुतः
दहनं तस्य कर्तव्यं श्राद्धं पिण्डोदकक्रिया

आदावेव विकल्पेन ब्रह्मचारी यतिर्भवेत्
तत्र श्राद्धं गृहस्थस्य कर्तव्यं सन्निधौ भवेत्

यतिं वहन् दहन् स्पर्शन् स्नानमात्रेण शुध्यति
अश्वमेधफलं सर्वे प्राप्नुवन्ति पृथक् सुतैः

कर्मनिष्टे तु संन्यस्ते पितर्युपरतेऽस्य तैः
दाहस्तस्य न कर्तव्यः श्राद्धं पिण्डोदकक्रिया

सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च
न तस्य दहनं कार्यं नाशौचं नोदकं ततः ४

अथातः पुनःसंस्कारं व्याख्यास्यामः । त्रीणि षष्टिशतानि पलाशवृन्तानां तैः कृष्णाजिने पुरुषाकृतिं कृत्वा यदि शरीरं नश्येयुः पुनः संस्कारं कुर्वन्ति । अहरहरञ्जलिनैकोत्तरवृद्धिरा त्र्यहात् तस्याग्निभिर्दहेयुः इति विज्ञायते । पलाशवल्कैः कुशैर्वा सन्धिषु संवेष्टयति । चत्वारिंशता शिरः दशभिर्ग्रीवां विंशत्योरस्त्रिंशतोदरं पञ्चाशता पञ्चाशतैकैकं बाहुं तेषामेव पञ्चभिः पञ्चभि-रङ्गुलीरुपकल्पयते । सप्तत्या सप्तत्यैकैकं पादं तेषामेव पञ्चभिः पञ्चभिरङ्गुली-रुपकल्पयते । अष्टाभिः शिश्नं द्वादशभिर्वृषणम् । तान् स्नापयित्वालङ्कृत्य अहतेन वाससा प्रच्छाद्यान्तर्वेद्यां निधाय बान्धवाः पर्युपविश्याभिमन्त्रयन्ते यमस्यासौ यमस्य स इमे यमग्नय इति । एतदादिकर्म प्रतिपद्यन्ते ५ अथ-हैकेतूष्णीम् अथगर्भिण्यास्तैष्यांकृतायाम् अथगृहस्थोबहुवायांविन्देत प्रणम्य-वन्दनं अथातःपुनःसंस्कारं पञ्च ।

इत्याग्निवेश्यगृह्यसूत्रे तृतीयप्रश्ने दशमोऽध्यायः

अथ एकादशोऽध्यायः

अथातो मृतबलिं व्याख्यास्यामः केशश्मश्रूणि वापयित्वा स्नात्वोदकं क्रियेत । प्राग्दक्षिणायतने चतुरश्रं गोमयेनोपलिप्य त्रिरश्मानं मध्ये निधाय सकृदुल्लिख्याद्भिरभ्युक्ष्य दक्षिणाग्रान् दर्भान् संस्तीर्य सकृत्तिलमिश्रं चरुम-वद्यति मुष्टिप्रमाणं कुक्कुटाण्डप्रमाणं वा । प्रकीर्णकेशः सव्यं जानुं भूमौ निधायाश्मनि पिण्डं दद्यात् । एतत्तेऽमुष्मै पिण्डं दद्यात् । आञ्जनाभ्यञ्जने वासश्च दद्यात् । पात्रेणोदकं प्रदक्षिणं निनयेत् । अत्र प्रेताः काकादभिहरन्ति । एवं सायंप्रातः कृत्वा दशम्यां विकृताहारं सायं बलिं दत्त्वाव्युष्टकाले उपनिनीय ब्राह्मणान् हीनाङ्गानतिरिक्ताङ्गान् कुष्ठीन् कुनस्वीन् श्यावदन्तान् रोगीन् वृषळीपतीन् उन्मत्तान् पापीन् वर्जयित्वा शुचीन् श्रोत्रियान् सुवृत्तान् अध्ययनसम्पन्नान् गृहस्थान् दरिद्रान् क्रियापूर्वान् पात्रभूतान् सद्योऽधिगम्यान् असगोत्रसम्बन्धयुक्तान् आयन्त्र्य कर्मसु व्याख्यातान् एतत्ते पिता समनसो यत् किञ्चित् प्रेतायानुमतः श्वोभूते मे पितुरेकोद्दिष्टश्राद्धं भुञ्जतां भवन्त इति । भुज्यते इति प्रतिवचनम् १ एकादश्यामेकोद्दिष्टं कुर्वन्ति । अव्युष्टे काले ब्राह्मैणमाहूय

किञ्चिद्दत्त्वा निवेद्यानुमन्त्रयते श्वोभूतेऽन्नं संस्कृत्य लुप्तश्मश्रुलोमनखाय ब्राह्मणाय दन्तकाष्ठं दत्त्वा धनधान्यपात्रं संस्पृष्ट्वा देशे पात्राणीत्यादि दत्त्वा ब्राह्मणमुदङ्मुखमुपवेशयेत् । तिलमिश्रेणोदकार्थं दद्यादन्यत्र प्राचमनात् । एकपवित्रान्तर्हिते पात्रेऽप आनीय पवित्रेणोत्पूय तिलानोप्य दर्भेषु सादयित्वा दर्भैरपिदधाति । ब्राह्मणाय गन्धादि दत्त्वा पिण्डं निवपामि इत्याह । पिण्डं निवप इति प्रतिवचनम् । अथ दर्भेषु पिण्डं निदध्यात् अयमोदनः कामदुघोऽस्त्वनन्तोऽक्षीयमाणः सुरभिः सर्वकामैः । स त्वोपतिष्ठत्वजरो नित्यभूतः स्वधां दुहानाममृतांस्तर्पयन्त्वसौ इति । एकं पिण्डं दत्त्वा तिलोदकैः प्रसव्यं परिषिञ्चति ऊर्जस्वतीः स्वधया वन्दमानास्तास्ते श्रयन्तीः स्योना ऊर्जं वहन्तीः स्वधामक्षितोदकाः क्षीरमुदकं घृतं मधु पयः कीलालं परिस्रुतम् इति । अञ्जनादिना पिण्डमलङ्कृत्य ब्राह्मणं सम्पूज्याङ्गुष्ठमूलमुपसंगृह्य भुङ्क्ष्व इत्याह भुज्यत इत्युक्त्वा अथ भुञ्जाने सर्वेषामुच्छिष्टं निधायाचान्ते बर्हीष्यवकीर्य न्युब्जपात्रं स्वदितम् इति ब्राह्मणो ब्रूयात् । अथ पवित्रं निधायान्युब्जेतनप्रमाण स्वधास्त्वित्युच्चैः इत्युक्त्वा अस्तु स्वधा इति प्रतिवचनम् । यज्ञोपवीत्यवोक्ष्य दक्षिणां दत्त्वोत्थाप्य अन्नशेषैः किं क्रियताम् इत्याह । इष्टैः सहोपभुज्यताम् इति प्रतिवचनम् । प्रदक्षिणीकृत्य प्रत्येत्य पिण्डं त्याज्याप्सु स्नात्वा देवागारं प्रविश्य अदक्षिणं कृत्वाञ्जलिं कृत्वालङ्कृत्य गृहानेत्य पुण्याहादीनि वाचयित्वा अन्नशेषं सगणः प्राश्नाति । पश्यति पुत्रं पश्यति पौत्रं न च शूद्रोच्छिष्टं जायत इति कुशहारीतः २ संवत्सरे सपिण्डीकरणं कुर्यात् । प्राचीनावीत्यग्निमुपसमाधाय दक्षिणाप्रागग्रैर्दर्भैः परिस्तीर्य तेषु चत्वार्युदपात्राणि निधाय एकपवित्रेण प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्य तेषामेकं दक्षिणतः प्रेतपात्रं निधायार्धोदकपात्रमानीय पवित्रेणोत्पूय तिलानोप्य दर्भेषु सादयित्वा दर्भैरपिदधाति । इतरेषु त्रिष्वप आनयति ऊर्जस्वतीः स्वधया वन्दमाना इति । दक्षिण आञ्जनाभ्यञ्जनमुदकुम्भं निधाय दक्षिणतो ब्राह्मणान् सुप्रक्षाळितपाणिपादान् दर्भेष्वासनेषु विश्वान् देवान् प्राङ्मुखानुपवेश्य इतरानुदङ्मुखानुपवेश्य प्राप्नोतु भवान् इत्याह प्राप्नवानि इतीतरे प्रत्याहुः । तेभ्यो धूपदीपवर्जं पूजां कृत्वा ततोऽपसव्यं परिषिञ्चति । औदुम्बरमिध्ममभ्याधायौदुम्बर्या दर्व्या जुहोति । होमार्हेणाज्येन सोमाय पितृमत इत्यादिषड्भिर्मन्त्रैर्हुत्वाथ नामधेयैर्जुहोति अमुष्मै स्वधा नमोऽमुष्मै स्वधा नम इत्यष्टाबाहुतयः । एता अष्टौ जुहोति । एवमन्नस्य हुत्वा अग्नये कव्यवाहनाय

स्विष्टकृते स्वधा नमः स्वाहा इति दक्षिणार्धपूर्वार्धे हुत्वानुप्रहृत्य दर्वीमपसव्यं परिषिच्य दक्षिणतो दक्षिणाग्रान् दर्भान् संस्तीर्य तेष्वेकं प्रेतपिण्डं निदध्यात् अयमोदनः कामदुघ इति । ऊर्जस्वतीः स्वधया वन्दमाना इति तिलोद-कैरपसव्यं परिषिच्य पिण्डावृतैतान् पिण्डान् दत्त्वा श्रद्धाभिमर्शनेनाभि-मृश्यैतेन ब्राह्मणान् विद्यावतः परिविशति भुङ्क्ष्वेति । भुञ्जानान् समीक्षते प्राणे निविष्टोऽमृतं जुहोमि ब्रह्मणि म आत्मामृतत्वाय इति । पितृलिङ्गैः ऋग्यजुर्भिः श्रावयेत् । आचान्तेभ्यस्तिलोदकं प्रदाय स्वधास्तु इति वाचयि-त्वा अस्तु स्वधा इति प्रतिवचनम् । यथाशक्ति दक्षिणां दत्त्वा ततः प्रेतपात्रं पितृपात्रेषु निनयेत् समानी च आकूतिः इत्यावर्त्य । ततः प्रेतपिण्डं पितृ-पिण्ढेषु निदध्यात् संगच्छध्वं संवदध्वं समानो मन्त्रः समितिः इति द्वाभ्याम् । तानुपतिष्ठते ये समानाः ये सजाताः इति द्वाभ्याम् । अत्र पैतृकमनुवाकं जपति उशन्तस्त्वा हवामह इति । ऊर्ध्वं पितुः क्रिया स्यात् । सर्वतः शेषं समवदायाश्नीयात् । सिद्धमेतत् सपिण्डीकरणम् ३ अथातो नारायणब्लिं व्याख्यास्यामः । दक्षिणोत्तरायणेऽपरपक्षस्य द्वादश्यां क्रियेत । श्रुतवृत्तस-म्पन्नान् द्वादश षड्वा ब्राह्मणानामन्त्रयते । देवगृहे नदीतीरे वाथ देवयज-नोल्लेखनप्रभृत्यप्रप्ष्ह हअस भ्यांत्र प्रणीताभ्यः कृत्वा उपोत्थायाग्रेणाग्निं देव-मावाहयामि ओं भूः पुरुषमावाहयामि ओं भुवः पुरुषमावाहयामि ओं स्वः पुरुषमावाहयामि ओं भूर्भुवःस्वः पुरुषमावाहयामि ओम् इत्यावाह्य परि-धानप्रभृत्याग्निमुखात् कृत्वा दैवतमर्चयित्वा आपो हि ष्ठा मयो भुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन मार्जयित्वा सहस्रशीर्षा पुरुष इत्येतेनानुवाकेनाक्षतगन्ध-पुष्पधूपदीपैरष्टाक्षरेण वा दद्यात् । पश्चिमां दिशमुपवेश्य प्रधानाहुतीर्जुहोति विष्णोर्नुकं वीर्याणि प्रवोचम् इति पुरोनुवाक्यामनूच्य परो मात्रया इति याज्यया जुहोति । अथाज्याहुतीरुपजुहोति केशवाय स्वाहा इति द्वादश स्रुवाहुतीः । गुळपायसं घृतमिश्रं देवस्य त्वा इति महाविष्णवे हविर्निवेदयति । केशवाय इति द्वादशभिर्नमस्कारैर्ब्राह्मणानाहूय सदर्भोपक्लृप्तेष्वासनेषु उदङ्मुखानुपवेश्य वासोऽङ्गुळीयं च दक्षिणां दद्यात् । त्रिवृतान्नेन ब्राह्मणान् परितोषयति । स्वस्ति वाचयित्वानुज्ञाप्य वाचं यच्छेत् । आज्यं तिलं हविः समुदायुत्येडापात्रमानीय हस्तेन जुहुयात् पितृभ्यः स्वधा नमो विष्णवे स्वाहा । पितामहेभ्यः स्वधा नमो विष्णवे स्वाहा । प्रपितामहेभ्यः स्वधा नमो

विष्णवे स्वाहा । मातृभ्यः स्वधा नमो विष्णवे स्वाहा । पितामहीभ्यः स्वधा नमो विष्णवे स्वाहा । प्रपितामहीभ्यः स्वधा नमो विष्णवे स्वाहा । मातामहेभ्यः स्वधा नमो विष्णवे स्वाहा । मातुः पितामहेभ्यः स्वधा नमो विष्णवे स्वाहा । मातुः प्रपितामहेभ्यः स्वधा नमो विष्णवे स्वाहा । मातामहीभ्यः स्वधा नमो विष्णवे स्वाहा । मातुः पितामहीभ्यः स्वधा नमो विष्णवे स्वाहा । मातुः प्रपितामहीभ्यः स्वधा नमो विष्णवे स्वाहा । आचार्येभ्यः स्वधा नमो विष्णवे स्वाहा । आचार्यपत्नीभ्यः स्वधा नमो विष्णवे स्वाहा । गुरुभ्यः स्वधा नमो विष्णवे स्वाहा । गुरुपत्नीभ्यः स्वधा नमो विष्णवे स्वाहा । सखिभ्यः स्वधा नमो विष्णवे स्वाहा । सखिपत्नीभ्यः स्वधा नमो विष्णवे स्वाहा । ज्ञातिभ्यः स्वधा नमो विष्णवे स्वाहा । ज्ञातिपत्नीभ्यः स्वधा नमो विष्णवे स्वाहा । अमात्येभ्यः स्वधा नमो विष्णवे स्वाहा । अमात्यपत्नीभ्यः स्वधा नमो विष्णवे स्वाहा । सर्वेभ्यः स्वधा नमो विष्णवे स्वाहा । सर्वाभ्यः स्वधा नमो विष्णवे स्वाहा । अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमो विष्णवे स्वाहा इति । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् । दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य तेषु बलिं ददाति विश्वेभ्यो देवेभ्यो नमः साध्येभ्यो देवेभ्यो नमः सर्वेभ्यो देवेभ्यो नमः सर्वाभ्यो देवताभ्यो नमः असाविदं ते नमो ब्राह्मणेभ्यो नमः नमो ब्रह्मप्रियाय नमः । यस्तु सर्वान् समधिगच्छति पितृभ्यो नारायणाय बलिं ददाति । उपर्युक्तं प्रेतविधानम् । एवमेव शस्त्रविपरज्जुजलदर्वीकरमारुततरुपाषाणो-च्छासनादिष्वात्मनिहतस्य वा गोब्राह्मणविधवापतितेष्वापतितस्य वा शरीर-संस्कारान् वर्जयेत् । देशान्तरमृते संग्रामहते व्याघ्रहते शरीरमानीय विधिना दाहयेत् । यद्येकाङ्गं दर्शयेद् द्विरङ्गं वा पृथिवीं शरीरं सक्त्वार्धयितः कुर्यात् । मधुसर्पिषाभ्यज्य विधिना दाहयेत् । अथ यदि जीवेत् पुनरागच्छेदिति ४ अथातोमृतबलिम् एकादश्यामेकोद्दिष्टंकुर्वन्ति संवत्सरेसपिण्डीकरणं कुर्यात् अथातोनारायणबलिं चत्वारि

इत्याग्निवेश्यगृह्यसूत्रे तृतीयप्रश्ने एकादशोऽध्यायः

## अथ द्वादशोऽध्यायः

भुक्त्वा श्राद्धं ततो विद्वान् यथाशास्त्रमगर्हितम्
छर्दयेत्तु ततः सम्यक् कुशवारिजलं पिबेत्

पुनर्जलाशये स्नात्वा मानस्तोकत्रृचं जपेत्
गायत्र्यष्टशतं जप्त्वा प्राणायामांस्तु षोडश

भुक्तं चेन्मासिकश्राद्धं प्राजापत्येन शुध्यति
अष्टकां हि ततो भुक्त्वा पूर्वोकेन विशुध्यति

एकोद्दिष्टं ततो भुक्त्वा तत्र चान्द्रायणं चरेत्
अतिकृच्छ्रं चरेद् विद्वान् भुक्त्वा नक्षत्रभोजनम्

कृच्छ्रातिकृच्छ्रं षण्मासे त्रिपक्षे तप्तमेव च
तथा संवत्सरे श्राद्धे सपिण्डे तु तथैव च

बलिं नारायणं भुक्त्वा कृच्छ्रमेकं चरेद् बुधः
अशक्तौ तु तथा सर्वं कृच्छ्रमेकं चरेद् बुधः

अथवापि त्रिरात्रं स्यादेकाहं वापि दुर्बलम्
तस्मात् सर्वप्रयत्नेन श्राद्धगेहं न गच्छति

दातारं तारयेत् पक्वात् त्वामदाता तु ग्रन्थिनम्
तस्मात् सर्वप्रयत्नेन आमश्राद्धं प्रतिग्रहेत्

सर्वाण्यादाय द्रव्याणि नयेद् ब्राह्मणसन्निधौ
सर्वाणीमानि गृह्णीष्व मे पितुः पुष्टिकाङ्क्षया

भगवन्ननुगृह्णीष्व पिण्डं देयं हि मद्गृहे
निवपेत् पिण्डमित्युक्त्वा निवपेयमितीतरः

ब्राह्मणेनाभ्यनुज्ञातो गत्वा तु स्वगृहं प्रति
दत्त्वा पिण्डं यथाशास्त्रमुदकस्याञ्जलिं तथा

स्वधामादाय तद् गत्वा ब्राह्मणस्याञ्जलौ नयेत्

स्वधास्त्विति ततः पश्चात् स्वधा मास्त्वादिनाब्रवीत्

एवमुक्ते ततो दत्त्वा दक्षिणां ब्राह्मणस्य तु
प्रदक्षिणं हि कृत्वा तु कृताञ्जलिपुटं तथा

द्रव्यप्रदानात् पूर्वं हि हुत्वा होमं यथाविधि
स्वगृहं प्राप्य तद् गत्वा सपिण्डैः सह भोजयेत् १

अथ सर्वप्रायश्चित्तानि जुहोति । पलाशशकलमौदुम्बरशकलं वान्यानि याज्ञिकशकलानि वाष्टौ गृह्णीयात् । पञ्च महायज्ञान् कृत्वाग्निं परिस्तीर्याज्यं विलाप्योत्पूय समन्तं परिषेचनं करोति । पुरस्तादोपरिष्टाश्च व्याहृतिभिर्विहृताभिः समस्ताभिश्च हुत्वा शकलानाज्येनाभ्यज्य एकैकशो जुहुयात् देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । अन्यकृतस्यैनसोऽवयजनमसि स्वाहा । यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि स्वाहा । यद्विद्वाँसश्चाविद्वाँसश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । एनस एनसोऽवयजनमसि स्वाहा इति । तथैव परिषिच्य एवमेवाहरहः सायं प्रातः शकलहोमं हुत्वा सर्वस्मात् किल्बिषात् पूतो भवति सर्वस्मात् किल्बिषात् पूतो भवतीत्याह भगवानाग्निवेश्यः २ भुक्त्वाश्राद्धम् अथसर्वप्रायश्चित्तानि द्वे

इत्याग्निवेश्यगृह्यसूत्रे तृतीयप्रश्ने द्वादशोऽध्यायः
तृतीयः प्रश्नः समाप्तः
समाप्तं चाग्निवेश्यगृह्यसूत्रम्
शुभं भूयात्

# अथ शाङ्खायनगृह्यसूत्रम्

अथ प्रथमोऽध्यायः

अथातः पाकयज्ञान्व्याख्यास्यामः १ अभिसमावर्त्स्यमानो यत्रान्त्यां समिध- मभ्यादध्यात्तमग्निमिन्धीत २ वैवाह्यं वा ३ दायाद्यकाल एके ४ प्रेते वा गृहपतौ स्वयं ज्यायान् ५ वैशाख्याममावास्यायामन्यस्यां वा ६ कामतो नक्षत्र एके ७ पुरुपशुविट्कुलाम्बरीषबहुयाजिनामन्यतमस्मादग्निमिन्धीत ८ सायंप्रातरेके ९ सायमाहुतिसंस्कारोऽध्वर्युप्रत्यय इत्याचार्याः १० प्रातः पूर्णाहुतिं जुहुयाद्वैष्णव्यर्चा तूष्णीं वा ११ तस्य प्रादुष्करणहवनकाला- वग्निहोत्रेण व्याख्यातौ १२ यज्ञोपवीतीत्यादि च संभवत्सर्वं कल्पैकत्वात् १३ तदप्याहुः १४

पाकसंस्था हविःसंस्थाः सोमसंस्थास्तथापराः
एकविँशतिरित्येता यज्ञसंस्थाः प्रकीर्तिताः १५ १

कर्मापवर्गे ब्राह्मणभोजनं १ वाग्रूपवयःश्रुतशीलवृत्तानि गुणाः २ श्रुतं तु सर्वानत्येति ३ न श्रुतमतीयात् ४

अधिदैवमथाध्यात्ममधियज्ञमिति त्रयम्
मन्त्रेषु ब्राह्मणे चैव श्रुतमित्यभिधीयते ५

क्रियावन्तमधीयानं श्रुतवृद्धं तपस्विनम्
भोजयेत्तं सकृद्यस्तु न तं भूयः क्षुदश्नुते ६

यां तितर्पयिषेत्कांचिद्देवतां सर्वकर्मसु
तस्या उद्दिश्य मनसा दद्यादेवंविधाय वै ७

नैवंविधे हविर्न्यस्तं न गच्छेद्देवतां क्वचित्
निधिरेष मनुष्याणां देवानां पात्रमुच्यते ८ २

अथ दर्शपूर्णमासा उपोष्य १ प्रातर्यत्रैतन्महावृक्षाग्राणि सूर्य आतपति स होमकालः स्वस्त्ययनतमः सर्वासामावृतामन्यत्र निर्देशात् २ सुमनाः शुचिः शुचौ वरूथ्यदेशे पूर्णविघनं चरुं श्रपयित्वा दर्शपूर्णमासदेवताभ्यो यथाविभागं स्थालीपाकस्य जुहोति ३ स्थालीपाकेषु च ग्रहणासादनप्रोक्षणानि मन्त्रदेवताभ्योऽवदानधर्माश्च ५ पूर्वं तु दर्शपूर्णमासाभ्यामन्वारम्भणीयदेवताभ्यो जुहुयाद् ६ आ पौर्णमासाद्दर्शस्यानतीतः काल आ दर्शात्पौर्णमासस्य ७ प्रातराहुतिं चैके सायमाहुतिकालेऽत्ययान्मन्यन्ते ८ नियतस्त्वेव कालोऽग्निहोत्रे प्रायश्चित्तदर्शनाद्भिन्नकालस्य ९ नित्याहुत्योर्व्रीहियवतण्डुलानामन्यतमद्धविः कुर्वीताभावेऽन्यदप्रतिषिद्धं ११ तण्डुलाँश्चेत्प्रक्षाल्यैक १२ इतरेषामसंस्कारः १३ सायमग्नये प्रातः सूर्याय १४ प्रजापतये चानूभयोस्तूष्णीं १५ प्राक् प्रागाहुतेः समिधमेके १६ यथोक्तं पर्युक्षणम् १७ ३

उत्थाय प्रातराचम्याहरहः स्वाध्यायमधीयीताद्या नो देव सवितरिति द्वे अपेहि मनसस्पत इति सूक्तमृतं च सत्यं चेति सूक्तमादित्या अव हि ख्यतेति सूक्तशेष इन्द्र श्रेष्ठानीत्येका हँसः शुचिषदित्येका नमो महद्भ्य इत्येका यत इन्द्र भयामह इत्येकाध स्वप्नस्येत्येका यो मे राजन्नित्येका ममाग्ने वर्च इति सूक्तं स्वस्ति नो मिमीतामिति च पञ्च ४

चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति १ पञ्चसु बहिःशालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इत्युपलिप्त उद्धतावोक्षितेऽग्निं प्रणीय ३ निर्मथ्यैके विवाह ४ उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्यै पाणिं गृह्णीयाद् ५ या लक्षणसंपन्ना स्याद् ६ यस्या अभ्यात्ममङ्गानि स्युः ७ समाः केशान्ता ८ आवर्तावपि यस्यै स्यातां प्रदक्षिणौ ग्रीवायां ९ षड् वीराञ्जनयिष्यतीति विद्यात् १० ५

जायामुपग्रहीष्यमाणोऽनृक्षरा इति वरकान्गच्छतोऽनुमन्त्रयतेऽभिगमने पुष्पफलयवानादायोदकुम्भं चायमहं भो३ इति त्रिः प्रोच्योदिते प्राङ्मुखा गृह्याः प्रत्यङ्मुखा आवहमाना गोत्रनामान्यनुकीर्तयन्तः कन्यां वरयन्त्युभयतो रुचिते पूर्णपात्रीमभिमृशन्ति पुष्पाक्षतफलयवहिरण्यमिश्राम् अनाधृष्टमस्यनाधृष्यं

देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यम् अञ्जसा सत्यमुपगेषं सुविते मा धा इत्या नः प्रजामिति कन्याया आचार्य उत्थाय मूर्धनि करोति प्रजां त्वयि दधामि पशूँस्त्वयि दधामि तेजो ब्रह्मवर्चसं त्वयि दधामीति ६

प्रतिश्रुते जुहोति १ चतुरश्रं गोमयेन स्थण्डिलमुपलिप्य २ पूर्वयोर्विदि-शोर्दक्षिणां प्राचीं पित्र्य ३ उत्तरां दैवे ४ प्राचीमेवैक ५ उदक्संस्थां मध्ये लेखां लिखित्वा ६ तस्यै दक्षिणत उपरिष्टादूर्ध्वामेकां मध्य एकामुत्तरत एकां ७ ता अभ्युक्ष्य ८ अग्निं प्रणयामि मनसा शिवेनायमस्तु संगमनो वसूनाम् । मा नो हिँसी स्थविरं मा कुमारं शं नो भव द्विपदे शं चतुष्पद इत्यग्निं प्रणीय ९ तूष्णीं वा १० प्रदक्षिणमग्नेः समन्तात्पाणिना सोदकेन त्रिः प्रमार्ष्टि तत्समूहनमित्याचक्षते ११ सकृदपसव्यं पित्र्ये १२ ७

अथ परिस्तरणं १ प्रागग्रैः कुशैः परिस्तृणाति त्रिवृत्पञ्चवृद्वा २ पुरस्ता-त्प्रथममथ पश्चादथ पश्चान् ३ मूलान्यग्रैः प्रच्छादयति ४ सर्वाश्चावृतो दक्षिणतःप्रवृत्तय उदक्संस्था भवन्ति ५ दक्षिणतो ब्रह्माणं प्रतिष्ठाप्य भूर्भुवः स्वरिति ६ सुमनोभिरलंकृत्योत्तरतः प्रणीताः प्रणीय को वः प्रणयतीति ७ सव्येन कुशानादाय दक्षिणेनापनौति ९ दक्षिणं जान्वाच्य १० सव्यं पित्र्ये ११ नाज्याहुतिषु नित्यं परिस्तरणं १२ नित्याहुतिषु चेति माण्डूकेयः १३ कुशतरुणे अविषमे अविच्छिन्नाग्रे अनन्तर्गर्भे प्रादेशेन मापयित्वा कुशेन च्छिनत्ति पवित्रे स्थ इति १४ द्वे त्रीणि वा भवन्ति १५ प्रागग्रे धारय-न्वैष्णव्यावित्यभ्युक्ष्य १६ कुशतरुणाभ्यां प्रदक्षिणमग्निं त्रिः पर्युक्ष्य १७ महीनां पयोऽसीत्याज्यस्थालीमादायेषे त्वेत्यधिश्रित्योर्जे त्वेत्युदगुद्वास्योदगग्रे पवित्रे धारयन्नङ्गुष्ठाभ्यां चोपकनिष्ठिकाभ्यां चोभयतः प्रतिगृह्योर्ध्वाग्रे प्रह्वे कृत्वाज्ये प्रत्यस्यति सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरित्याज्यसंस्कारः सर्वत्र २२ नासंस्कृतेन जुहुयात् २३ स्रुवे चापः सवितुर्व इति २४ ताः प्रणीताः प्रोक्षणीश्च २५ ८

स्रुवः पात्रम् १ अर्थलक्षणग्रहणं २ सव्येन कुशानादाय दक्षिणेन मूले स्रुवं विष्णोर्हस्तोऽसीति ३ स्रुवेणाज्याहुतीर्जुहोत्युत्तरपश्चार्धादग्नेरारभ्याविच्छिन्नं दक्षिणतो जुहोति त्वमग्ने प्रमतिरिति ५ दक्षिणपश्चार्धादग्नेरारभ्याविच्छिन्न-

मुत्तरतो जुहोति यस्येमे हिमवन्त इत्याग्नेयमुत्तरमाज्यभागं सौम्यं दक्षिणं ७ मध्येऽन्या आहुतयोऽग्निर्जनिता स मेऽमूं जायां ददातु स्वाहा सोमो जनिमान्त्स मामुया जनिमन्तं करोतु स्वाहा पूषा ज्ञातिमान्त्स मामुष्यै पित्रा मात्रा भ्रातृभिर्ज्ञातिमन्तं करोतु स्वाहेति ६ नाज्याहुतिषु नित्यावाज्यभागौ स्विष्टकृच्च १० नित्याहुतिषु चेति माण्डूकेयो महाव्याहृतिसर्वप्रायश्चित्तप्राजापत्यान्तरम् एतदावापस्थानम् १२ आज्ये हविषि सव्ये पाणौ ये कुशास्तान्दक्षिणेनाग्रे संगृह्य मूले सव्येन तेषामग्रं स्रुवे समनक्ति मध्यमाज्यस्थाल्यां मूलं चाथ चेत्स्थालीपाकेषु स्रुच्यग्रं मध्यं स्रुवे मूलमाज्यस्थाल्यां १४ताननुप्रहृत्या-ग्नेर्वासोऽसीति १५ तिस्रः समिधोऽभ्याधाय १६ यथोक्तं पर्युक्षणम् १७ अनाम्नातमन्त्रास्वादिष्टदेवतास्वमुष्यै स्वाहामुष्यै स्वाहेति जुहुयात् स्वा-हाकारेण शुद्धेन १८ व्याख्यातः प्रतिश्रुते होमकल्पः १९ ९

प्रकृतिर्भूतिकर्मणां १ सर्वासां चाज्याहुतीनां २ शाखापशूनां ३ चरुपा-कयज्ञानां च ४ त एतेऽप्रयाजा अननुयाजा अनिळा अनिगदा असामिधेनीकाश्च च सर्वे पाकयज्ञा भवन्ति ५ तदपि श्लोकाः ६

हुतोऽग्निहोत्रहोमेनाहुतो बलिकर्मणा
प्रहुतः पितृकर्मणा प्राशितो ब्राह्मणे हुतः ७

अनूर्ध्वज्ञुर्व्यूळ्हजानुर्जुहुयात्सर्वदा हविः
न हि बाह्यहुतं देवाः प्रतिगृह्णन्ति कर्हिचित् ८

रौद्रं तु राक्षसं पित्र्यमासुरं चाभिचारिकम्
उक्त्वा मन्त्रं स्पृशेदप आलभ्यात्मानमेव च ९ १०

अथैतां रात्रीं श्वस्तृतीयां वा कन्यां वक्ष्यन्तीति १ तस्यां रात्र्यामतीते निशाकाले सर्वौषधिफलोत्तमैः सुरभिमिश्रैः सशिरस्कां कन्यामाप्लाव्य २ रक्तमहतं वा वासः परिधाय ३ पश्चादग्नेः कन्यामुपवेश्यान्वारब्धायां महाव्याहृतिभिर्हु-त्वाज्याहुतीर्जुहोत्यग्नये सोमाय प्रजापतये मित्राय वरुणायेन्द्रायेन्द्राण्यै ग-न्धर्वाय भगाय पूष्णे त्वष्ट्रे बृहस्पतये राज्ञे प्रत्यानीकायेति ४ चतस्रोऽष्टौ

वाविधवाः शाकपिराडीभिः सुरयान्नेन च तर्पयित्वा चतुरानर्तनं कुर्युरेता एव देवताः पुँसो वैश्रवणमीशानं चातो ब्राह्मणभोजनम् ६ ११

स्नातं कृतमङ्गलं वरमविधवाः सुभगा युवत्यः कुमार्यै वेश्म प्रपादयन्ति १ तासामप्रतिकूलः स्यादन्यत्राभन्दयपातकेभ्यस् २ ताभिरनुज्ञातोऽथास्यै वासः प्रयच्छति रैभ्यासीदिति ३ चित्तिरा उपबर्हणमित्याञ्जनकोशमादत्ते ४ समञ्जन्तु विश्वे देवा इति समञ्जनीया ५ यथेयं शचीं वावातां सुपुत्रां च यथादितिम्। अविधवां चापालामेवं त्वामिह रन्ततादिममिति दन्तिणे पाणौ शललीं त्रिवृतं ददाति ६ रूपंरूपमित्यादर्शं सव्ये ७ रक्तकृष्णमाविकं न्तौमं वा त्रिमणिं प्रतिसरं ज्ञातयोऽस्या बध्नन्ति नीललोहितमिति ८ मधुमती-रोषधीरिति मधूकानि बध्नाति ९ विवाहे गामर्हयित्वा गृहेषु गां ते माधुप-र्किक्यौ १० पश्चादग्नेः कन्यामुपवेश्यान्वारब्धायां महाव्याहृतिभिस्तिस्रो जु-होति ११ समस्ताभिश्चतुर्थीं प्रतीयेतैतस्यां चोदनायाम् १२ एवमनादेशे सर्वेषु भूतिकर्मसु पुरस्ताच्चोपरिष्टाच्चैताभिरेव जुहुयात् १३ १२

सम्राज्ञी श्वशुरे भवेति पिता भ्राता वास्यग्रेण मूर्धनि जुहोति स्रुवेण वा तिष्ठन्नासीनायाः प्राङ्मुख्याः प्रत्यङ्मुखो १ गृभ्णामि ते सौभगत्वाय हस्तमिति दन्तिणेन पाणिना दन्तिणं पाणिं गृह्णाति साङ्गुष्ठमुत्तानेनोत्तानं तिष्ठन्नासीनायाः प्राङ्मुख्याः प्रत्यङ्मुखः २ पञ्च चोत्तरा जपित्वा ३ अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहं द्यौरहं पृथिवी त्वमृक् त्वमसि सामाहं सा मामनुव्रता भव तावेह विवहावहै प्रजां प्रजनयावहै पुत्रानविन्दावहै बहूँस्ते सन्तु जरदष्टय इत्युदकुम्भं नवं भूर्भुवः स्वरिति पूरयित्वा ५ पुन्नाम्नो वृन्तस्य सन्तीरान्त्सपलाशान्त्सकुशानोप्य ६ हिरगयमिति चैके ७ तं ब्रह्मचारिणे वाग्यताय प्रदाय ८ प्रागुदीच्यां दिशि ताः स्थेयाः प्रदन्तिणा भवन्त्यश्मानं चोत्तरत उपस्थाप्यैहि सूनरीत्युत्थाप्यैह्यश्मानमातिष्ठाश्मेव त्वं स्थिरा भव। अभितिष्ठ पृतन्यतः सहस्व पृतनायत इति दन्तिणेन प्रपदेनाश्मानमाक्रमय्य १२ प्रदन्तिणमग्निं पर्याणीय १३ तेनैव मन्त्रेण द्वितीयं वसनं प्रदाय १४ लाजाञ्छमीपलाशमिश्रान्पिता भ्राता वा स्यादञ्जलावावपत्युपस्तरणाभि-घारणप्रत्यभिघारणं चाज्येन १६ ताञ्जुहोति १७ १३

इयं नार्युपब्रूते लाजानावपन्तिका । शिवा ज्ञातिभ्यो भूयासं चिरं जीवतु मे पतिः स्वाहेति तिष्ठन्ती जुहोति पतिर्मन्त्रं जपत्यश्मक्रमणाद्येवं द्वितीयम् २ एवं तृतीयं ३ तूष्णीं कामेन चतुर्थं ४ प्रागुदीच्यां दिशि सप्त पदानि प्रक्रमयतीष एकपद्यूर्जे द्विपदी रायस्पोषाय त्रिपद्यायोभव्याय चतुष्पदी पशुभ्यः पञ्चपद्यृतुभ्यः षट्पदी सखा सप्तपदी भवेति ६ तान्यद्भिः शमयत्यापोहिष्ठीयाभिस्तिसृभिः स्थेयाभिरद्भिर्मार्जयित्वा ८ मूर्धन्यभिषिच्य ९ गां ददानीत्याह १० ब्राह्मणेभ्यः किंचिद्दद्यात्सर्वत्र स्थालीपाकादिषु कर्मसु ११ सूर्यां विदुषे वाधूयं १२ गौर्ब्राह्मणस्य वरो १३ ग्रामो राजन्यस्याश्वो वैश्यस्याधिरथं शतं दुहितृमते १६ याज्ञिकेभ्योऽश्वं ददाति १७ १४

प्र त्वा मुञ्चामीति तृचं गृहात्प्रतिष्ठमानायां १ जीवं रुदन्तीति प्ररुदन्त्याम् २ अथ रथाक्षस्योपाञ्जनं पत्नी कुरुतेऽक्षन्नमीमदन्तेत्येतया सर्पिषा ३ शुची ते चक्रे द्वे ते चक्रे इति चैताभ्यां चक्रयोः पूर्वया पूर्वमुत्तरयोत्तरम् ४ उस्रौ च ५ खे रथस्येत्येतया फलवतो वृक्षस्य शम्यागर्तेष्वेकैकां वयां निखाय ६ नित्या वाभिमन्त्र्याथोस्रौ युञ्जन्ति युक्तस्ते अस्तु दक्षिण इति द्वाभ्यां शुक्रावनड्वाहावित्येतेनार्धर्चेन युक्तावभिमन्त्र्याथ यदि रथाङ्गं विशीर्येत छिद्येत वाहिताग्नेर्गृहान्कन्यां प्रपाद्याभि व्ययस्व खदिरस्येत्येतया प्रतिदध्यात् १० त्वं चिदश्वमिति ग्रन्थिं ११ स्वस्ति नो मिमीतामिति पञ्चर्चं जपति १२ सुकिँशुकमिति रथमारोहन्त्यां १३ मा विदन्परिपन्थिन इति चतुष्पथे १४ ये वध्व इति श्मशाने १५ वनस्पते शतवल्श इति वनस्पतावर्धर्चं जपति १६ सुत्रामाणमिति नावमारोहन्त्याम् १७ अश्मन्वतीति नदीं तरन्त्याम् १८ अपि वा युक्तेनैवोद्व ऊर्मिरित्यगाधेऽप्रेक्षणं चेह प्रियमिति सप्त गृहान्प्राप्तायाः कृताः परिहाप्य २१ १५

आनडुहमित्युक्तं १ तस्मिन्नुपवेश्यान्वारब्धायां पतिश्चतस्रो जुहोत्यग्निना देवेन पृथिवीलोकेन लोकानामृग्वेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा वायुना देवेनान्तरिक्षलोकेन लोकानां यजुर्वेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा सूर्येण देवेन द्यौर्लोकेन लोकानां सामवेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा चन्द्रेण देवेन दिशां लोकेन लोकानां ब्रह्मवेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा ३ भूर्या ते पतिघ्न्यलक्ष्मी देवरघ्नी जारघ्नी तां करोम्यसौ

स्वाहेति वा प्रथमया महाव्याहृत्या प्रथमोपहिता द्वितीयया द्वितीया तृतीयया तृतीया समस्ताभिश्चतुर्थ्यघोरचक्षुरित्याज्यलेपेन चक्षुषी विमृजीत ५ कया नश्चित्र इति तिसृभिः केशान्तानभिमृश्योत त्या दैव्या भिषजेति चतस्रोऽनुद्रुत्यान्ते स्वाहाकारेण मूर्धनि संस्रावम् ७ अत्र हैके कुमारमुत्सङ्गमानयन्त्युभयतः सुजातमा ते योनिमित्येतयापि वा तूष्णीं ९ तस्याञ्जलौ फलानि दत्त्वा पुण्याहं वाचयति १० पुँसवती ह भवतीहैव स्तमिति सूक्तशेषेण गृहान्प्रपादयन्ति १२ १६

दधिक्राव्णो अकारिषमिति दधि सम्पिबेयातां १ वाग्यतावासीयातामा ध्रुवदर्शनाद् २ अस्तमिते ध्रुवं दर्शयति ध्रुवैधि पोष्या मयीति ३ ध्रुवं पश्यामि प्रजां विन्देयेति ब्रूयात् ४ त्रिरात्रं ब्रह्मचर्यं चरेयाताम् ५ अधः शयीयातां ६ दध्योदनं संभुञ्जीयातां पिबतं च तृप्णुतं चेति तृचेन ७ सायम्प्रातर्वैवाह्यमग्निं परिचरेयातामग्नये स्वाहाग्नये स्विष्टकृते स्वाहेति ८ पुमाँसौ मित्रावरुणौ पुमाँसावश्विनावुभौ । पुमानिन्द्रश्चाग्निश्च पुमाँसं वर्धतां मयि स्वाहेति पूर्वां गर्भकामा ९ दशरात्रमविप्रवासः १० १७

अथ चतुर्थीकर्म १ त्रिरात्रे निवृत्ते स्थालीपाकस्य जुहोति २

अग्ने प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि
यास्याः पतिघ्नी तनूस्तामस्या अप जहि

वायो प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि
यास्या अपुत्रिया तनूस्तामस्या अप जहि

सूर्य प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि
यास्या अपशव्या तनूस्तामस्या अप जहि

अर्यमणं नु देवं कन्या अग्निमयक्षत
सेमां देवो अर्यमा प्रेतो मुञ्चातु मामुतः

वरुणं नु देवं कन्या अग्निमयन्नत
सेमां देवो वरुणः प्रेतो मुञ्चातु मामुतः

पूषणं नु देवं कन्या अग्निमयन्नत
सेमां देवः पूषा प्रेतो मुञ्चातु मामुतः ३

प्रजापत इति सप्तमी ४ सौविष्टकृत्यष्टमी ५ १८

अध्याण्डामूलं पेषयित्वर्तुवेलायामुदीर्ष्वातः पतिवतीति द्वाभ्यामन्तेस्वाहाकाराभ्यां नस्तो दक्षिणतो निषिञ्चेद् १ गन्धर्वस्य विश्वावसोर्मुखमसीत्युपस्थं प्रजनयिष्यमाणोऽभिमृशेत् २ समाप्ते अर्थे जपेत् ३ प्राणे ते रेतो दधाम्यसावित्यनुप्राणयाद् ४

यथा भूमिरग्निगर्भा यथा द्यौरिन्द्रेण गर्भिणी ।
वायुर्यथा दिशां गर्भ एवं गर्भं दधामि तेऽसाविति वा ५

आ ते योनिं गर्भ एतु पुमान्बाण इवेषुधिम्
आ वीरो अत्र जायतां पुत्रस्ते दशमास्यः ६

पुमाँसं पुत्रं जनय तं पुमाननु जायताम्
तेषां माता भविष्यसि जातानां जनयासि च ७

पुँसि वै पुरुषे रेतस्तत्स्त्रियामनुषिञ्चतु
तथा तदब्रवीद्धाता तत्प्रजापतिरब्रवीत् ८

प्रजापतिर्व्यदधात्सविता व्यकल्पयत्
स्त्रीषूयमन्यात्स्वादधत्पुमाँसमादधादिह ९

यानि भद्राणि बीजानि पुरुषा जनयन्ति नः
तेभिष्ट्वं पुत्रं जनय सुप्रसूर्धेनुका भव १०

अभिक्रन्द वीळयस्व गर्भमा धेहि साधय
वृषाणं वृषन्ना धेहि प्रजायै त्वा हवामहे ११

यस्य योनिं पतिरेतो गृभाय पुमान्पुत्रो धीयतां गर्भे अन्तः
तं पिपृहि दशमास्योऽन्तरुदरे स जायतां श्रैष्ठ्यतमः स्वानामिति वा १२ १९

तृतीये मासि पुँसवनं १ पुष्येण श्रवणेन वा २ सोमाँशुं पेषयित्वा कुशकण्टकं वा न्यग्रोधस्य वा स्कन्धस्यान्त्यां शुङ्गां यूपस्य वाग्निष्ठाम् ३ संस्थिते वा यज्ञे जुह्वः संस्रावम् ४ अग्निना रयिं तन्नस्तुरीपं समिद्धाग्निर्वनवत्पिशङ्गरूप इति चतसृभिरन्तेस्वाहाकाराभिर्नस्तो दक्षिणतो निषिञ्चेत् ५ २०

चतुर्थे मासि गर्भरक्षणं १ ब्रह्मणाग्निः संविदान इति षट् स्थालीपाकस्य हुत्वाक्षीभ्यां ते नासिकाभ्यामिति प्रत्यृचमाज्यलेपेनाङ्गान्यनुविमृज्य ३ २१

सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनं १ स्नातामहतवाससं पश्चादग्नेरुपवे-श्यान्वारब्धायां महाव्याहृतिभिर्हुत्वा ३ स्थालीपाकं श्रपयित्वा ४ मुद्गौ-दनमित्येके ५ पुंवदुपकरणानि स्युर्नक्षत्रं च ६

धाता ददातु दाशुषे प्राचीं जीवातुमक्षितिम्
वयं देवस्य धीमहि सुमतिं सत्यधर्मणः

धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान
धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवज्जुहोतेति

नेजमेष परापतेति तिस्रः प्रजापत इति षष्ठी ७ त्रिःश्वेतया शलल्या दर्भसूच्या वोदुम्बरशलाटुभिः सह मध्यादूर्ध्वं सीमन्तमुन्नयति भूर्भुवः स्वरित्युत्सङ्गे निधाय ९ त्रिवृति प्रतिमुच्य कण्ठे बध्नात्ययमूर्जावतो वृक्ष ऊर्जीव फलिनी भवेत्यथाह वीणागाथिनो राजानं संगायतेति ११ यो वाप्यन्यो वीरतर इत्युदपात्रेऽक्षतानवनिनीय विष्णुर्योनिं कल्पयतु राकामहमिति इति षळृचेन पाययेद् १३ अथास्या उदरमभिमृशेत् १४ सुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो

गायत्रं चक्षुः छन्दाँस्यङ्गानि यजूँषि नाम साम ते तनूर्मोदमानीं गापयेन् १६ महाहेमवतीं वा १७ ऋषभो दक्षिणा १८ २२

काकातन्या मचकचातन्याः कोशातक्या बृहत्याः कालक्लीतकस्येति मूलानि पेषयित्वोपलेपयेद्देशं यस्मिन्प्रजायेत रक्षसामपहत्यै २३

अथ जातकर्म १ जातं कुमारं त्रिरभ्यवान्यानुप्राणयाद् ऋचा प्राणिहि यजुषा समनिहि साम्नोदनिहीति २ सर्पिर्मधुनी दध्युदके च संनिनीय व्रीहियवौ वा संनिघृष्य त्रिः प्राशयेज्जातरूपेण ३ प्र ते यच्छामि मधुमन्मखाय वेदं प्रसूतं सवित्रा मघोना । आयुष्मान्गुपितो देवताभिः शतं जीव शरदो लोके अस्मिन्नित्यसाविति नामास्य दधाति घोषवदाद्यन्तरन्तस्थं द्व्यक्षरं चतुरक्षरं वापि वा षळक्षरं कृतं कुर्यान्न तद्धितं ४ तदस्य पिता माता च विद्यातां ५ दशम्यां व्यावहारिकं ब्राह्मणजुष्टं ६ गोः कृष्णस्य शुक्लकृष्णानि लोहितानि च रोमाणि मषं कारयित्वैतस्मिन्नेव चतुष्टये संनिनीय चतुः प्राशयेदिति माण्डूकेयो भूर्ऋग्वेदं त्वयि दधाम्यसौ स्वाहा भुवो यजुर्वेदं त्वयि दधाम्यसौ स्वाहा स्वः सामवेदं त्वयि दधाम्यसौ स्वाहा भूर्भुवः स्ववाकोवाक्यमि-तिहासपुराणमों सर्वान्वेदाँस्त्वयि दधाम्यसौ स्वाहेति वा ८ मेधाजननं दक्षिणे कर्णे वागिति त्रिः ९ वाग्देवी मनसा संविदाना प्राणेन वत्सेन सहेन्द्रप्रोक्ता जुषतां त्वा सौमनसाय देवी मही मन्द्रा वाणी वाणीची सलिला स्वयंभूरिति चानुमन्त्रयेत १० शणसूत्रेण विग्रन्थ्य जातरूपं ११ दक्षिणे पाणावपिनह्योत्थानाद् १२ ऊर्ध्वं दशम्या ब्राह्मणेभ्यो दद्याद् १३ अमा वा कुर्वीत १४ २४

दशरात्रे चोत्थानं १ मातापितरौ शिरःस्नातावहतवाससौ २ कुमारश्चैतस्मिन्नेव सूतिकाग्नौ स्थालीपाकं श्रपयित्वा ४ जन्मतिथिं हुत्वा त्रीणि च भानि सदैवतानि ५ तन्मध्ये जुहुयाद्यस्मिञ्जातः स्यात् पूर्वं तु दैवतं सर्वत्र ६ आयुष्टे अद्य गीर्भिरयमग्निर्वरेण्यः । आयुर्नो देहि जीवसे । आयुर्दा अग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमिह रक्षतादिममिति त्वं सोम महे भगमिति दशमी स्थालीपाकस्य ७ नामधेयं प्रकाशं कृत्वा ८ ब्राह्मणान्स्वस्तिवाच्यैवमेव मासिमासि जन्मतिथिं

हुत्वोर्ध्वं संवत्सराद्गृह्येऽग्नौ जुहोति १० २५

अग्नये कृतिकाभ्यः १ प्रजापतये रोहिण्यै २ सोमाय मृगशिरसे ४ रुद्रायार्द्राभ्योऽदितये पुनर्वसुभ्यां ५ बृहस्पतये पुष्याय ६ सर्पेभ्योऽश्लेषाभ्यः ७ पितृभ्यो मघाभ्यो ८ भगाय फल्गुनीभ्याम् ९ अर्यम्णे फल्गुनीभ्यां १० सवित्रे हस्ताय ११ त्वष्ट्रे चित्रायै १२ वायवे स्वातय १३ इन्द्राग्निभ्यां विशाखाभ्यां १४ मित्रायानुराधाया १५ इन्द्राय ज्येष्ठाय १६ निर्ऋत्यै मूलायाद्भ्योऽषाढाभ्यो विश्वेभ्यो देवेभ्योऽषाढाभ्यो ब्रह्मणेऽभिजिते २० विष्णवे श्रवणाय २१ वसुभ्यो धनिष्ठाभ्यो वरुणाय शतभिषजे २३ अजायैकपदे प्रोष्ठपदाभ्योऽहिर्बुध्न्याय प्रोष्ठपदाभ्यः २५ पूष्णे रेवत्या २६ अश्विभ्याम-श्विनीभ्यां २७ यमाय भरणीभ्यः २८ २६

षष्ठे मास्यन्नप्राशनम् १ आजमन्नाद्यकामस् २ तैत्तिरं ब्रह्मवर्चसकामो मात्स्यं जवनकामो घृतौदनं तेजस्कामो दधिमधुघृतमिश्रमन्नं प्राशयेत् ६ अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे । यच्चिद्धि महश्चिदिममग्न आयुषे वर्चसे तिग्ममोजो वरुण सोम राजन् । मातेवास्मा अदितिः शर्म यँसद्विश्वे देवा जरदष्टिर्यथासदिति हुत्वाग्न आयूँषीत्यभिमन्त्र्योदगग्रेषु कुशेषु स्योना पृथिवि भवेत्युपवेश्य ९ महा-व्याहृतिभिः प्राशनं १० शेषं माता प्राश्नीयात् ११ २७

संवत्सरे चूडाकर्म १ तृतीये वा वर्षे २ पञ्चमे क्षत्रियस्य ३ सप्तमे वैश्यस्याग्निमुपसमाधाय ५ व्रीहियवानां तिलमाषाणामिति पात्राणि च पूरयित्वानडुहं च गोमयं कुशभित्तं च केशप्रतिग्रहणायादर्शं नवनीतं लोहक्षुरं चोत्तरत उपस्थाप्य ७ संपृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः । पृञ्चतीर्मधुना पयो मन्द्रा धनस्य सातय इत्युष्णास्वप्सु शीता आसिञ्चत्याप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे । त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषं । यद्देवानां त्र्यायुषं तत्ते करोमि त्र्यायुषमित्यसाविति शीतोष्णाभिरद्भिर्दक्षिणं केशपक्षं त्रिरभ्यनक्ति ९ शलल्यैके विजटान्कृत्वा १० नवनीतेनाभ्यज्यौषधे त्रायस्वैनमिति कुशतरुणमन्तर्दधाति ११ केशान्कुशतरुणं चादर्शेन संस्पृश्य १३ तेजोऽसि स्वधितिष्टे पिता मैनं हिँसीरिति लोहक्षुरमादत्ते १४ येनावप-

त्सविता श्मश्वग्रे क्षुरेण राज्ञो वरुणस्य विद्वान् । येन धाता बृहस्पतिरिन्द्रस्य चावपच्छिरः । तेन ब्रह्माणो वपतेदमद्यायुष्मान्दीर्घायुरयमस्तु वीरोऽसाविति केशाग्राणि छिनत्ति कुशतरुणं चैवं द्वितीयमेवं तृतीयम् १६ एवं द्विरुत्तरतो निकक्षयोः षष्ठसप्तमे गोदानकर्मण्येतदेव गोदानकर्म यच्चूडाकर्म १९ षोळशे वर्षेऽष्टादशे वा २० तृतीये तु प्रवपने गां ददात्यहतं च वासस् २१ तूष्णी-मावृतः कन्यानां २२ प्रागुदीच्यां दिशि बह्वौषधिके देशेऽपां वा समीपे केशान्निखनन्ति २३ नापिताय धान्यपात्राणि नापिताय धान्यपात्राणि २४ २८

इति प्रथमोऽध्यायः

अथ द्वितीयोऽध्यायः

गर्भाष्टमेषु ब्राह्मणमुपनयेतैणेयेनाजिनेन २ गर्भदशमेषु वा ३ गर्भैकादशेषु क्षत्रियं रौरवेण ४ गर्भद्वादशेषु वैश्यं गव्येनाषोळशाद्वर्षाद्ब्राह्मणस्यानतीतः काल ६ आ द्वाविँशात्क्षत्रियस्याचतुर्विँशाद्वैश्यस्यात ऊर्ध्वं पतितसावित्रीका भवन्ति ९ नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्व्यवहरेयुरहतेन वा सर्वा-न्मेखलिनो मौञ्जी मेखला ब्राह्मणस्य १५ धनुर्ज्या क्षत्रियस्योर्णासूत्री वैश्यस्य १७ पालाशो बैल्वो वा दण्डो ब्राह्मणस्य १८ नैयग्रोधः क्षत्रियस्यौदुम्बरो वैश्यस्य २० प्राणसंमितो ब्राह्मणस्य २१ ललाटसंमितः क्षत्रियस्य २२ केशसंमितो वैश्यस्य २३ सर्वे वा सर्वेषां २४ येनाबद्धेनोपनयेताचार्याधीनं तत् २५ परिवाप्योपनेयः स्याद् २६ आप्लुत्यालंकृत्य २७ हुत्वा जघनेनाग्निं तिष्ठतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरस् २८ तिष्ठँस्तिष्ठन्तमुपनयेद् २९

मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समृद्धम्
अनाहनस्यं वसनं चरिष्णु परीदं वाज्यजिनं दधेऽहम् ३० १

इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती न आगात्
प्राणापानाभ्यां बलमाविशन्ती सखा देवी सुभगा मेखलेयमिति

त्रिर्मेखलां प्रदक्षिणं त्रिः परिवेष्टय १ ग्रन्थिरेकस्त्रयोऽपि वापि वा पञ्च २

यज्ञोपवीतं कृत्वा यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामीति ३ अञ्जली पूरयित्वाथैनमाह को नामासीत्यसावहं भो३ इतीतरः ५ समानार्षेय इत्याचार्यः ६ समानार्षेयोऽहं भो३ इतीतरो ७ ब्रह्मचारी भवान्ब्रूहीति ८ ब्रह्मचार्यहं भो३ इतीतरो भूर्भुवः स्वरित्यस्याञ्जलावञ्जलीँस्त्रीनासिच्य १० दक्षिणोत्तराभ्यां पाणिभ्यां पाणी संगृह्य जपति ११ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् उपनयाम्यसाविति १२ गणानां त्वेति गणकामान् १३ आगन्ता मा रिषण्यतेति योधान् १४ महाव्याहृतिभि-र्व्याधितान् १५ २

भगस्ते हस्तमग्रभीत्सविता हस्तमग्रभीत्
पूषा ते हस्तमग्रभीदर्यमा हस्तमग्रभीत्
मित्रस्त्वमसि धर्मणाग्निराचार्यस्तव

असावहं चोभावग्न एतं ते ब्रह्मचारिणं परिददामीन्द्रैतं ते ब्रह्मचारिणं परिद-दाम्यादित्यैतं ते ब्रह्मचारिणं परिददामि विश्वे देवा एतं वो ब्रह्मचारिणं परिददामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय रायस्पोषाय सर्वेषां वेदा-नामाधिपत्याय सुश्लोक्याय स्वस्तये १ ऐन्द्रीमावृतमावर्त आदित्यस्या-वृतमन्वावर्त इति दक्षिणं बाहुमन्वावृत्य २ दक्षिणेन प्रादेशेन दक्षिण-मँसमन्ववहृत्यारिष्यतस्ते हृदयस्य प्रियो भूयासमिति हृदयदेशमभिमृशति ३ तूष्णीं प्रसव्यं पर्यावृत्याथास्योर्ध्वाङ्गुलिं पाणिं हृदये निधाय जपति ४ ३

मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु
मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यमिति १

कामस्य ब्रह्मचर्यस्यासाविति २ तेनैव मन्त्रेण तथैव पर्यावृत्य ३ दक्षिणेन प्रादेशेन दक्षिणमँसमन्वारभ्य जपति ४ ब्रह्मचार्यसि समिधमाधेह्यपोऽशान कर्म कुरु मा दिवा सुषुप्था वाचं यच्छा समिदाधानात् ५ एषा ते अग्ने समिदित्यभ्यादधाति समिधं तूष्णीं वा ६ ४

संवत्सरे सावित्रीमन्वाह १ त्रिरात्रे २ अन्वक्षं वा ३ गायत्रीं ब्राह्मणा-

यानुब्रूयात् ४ त्रिष्टुभं क्षत्रियाय ५ जगतीं वैश्याय ६ सावित्रीं त्वेवोत्तरेणाग्निमुपविशतः ७ प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरोऽधीहि भो ३ इत्युक्त्वाचार्य ओंकारं प्रयुज्याथेतरं वाचयति सावित्रीं भो३ अनुब्रूहीत्यथास्मै सावित्रीमन्वाह तत्सवितुर्वरेण्यमित्येतां पच्छोऽर्धर्चशोऽनवानम् १२ ५

आपो नाम स्थ शिवा नाम स्थोर्जा नाम स्थाजरा नाम स्थाभया नाम स्थामृता नाम स्थ तासां वोऽशीय सुमतौ मा धत्तेत्येवं त्रिरप आचमय्य १ स्वस्ति नो मिमीतामिति पञ्चर्चेन दण्डं प्रयच्छति २ वरो दक्षिणा ३ प्रदक्षिणमग्निं पर्याणीय भिक्षते ग्रामं ४ मातरं त्वेव प्रथमां ५ या वैनं न प्रत्याचक्षीताचार्याय भैक्षं निवेदयित्वानुज्ञातो गुरुणा भुञ्जीताहरहः समिदाधानं भिक्षाचरणमधःशय्या गुरुशुश्रूषेति ब्रह्मचारिणो नित्यानि ८ ६

अथानुवाचनस्य १ अग्नेरुत्तरत उपविशतः २ प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरोऽभिवाद्य पादावाचार्यस्य पाणी प्रक्षाल्य ४ दक्षिणेन जानुनाक्रम्य मूले कुशतरुणान् ५ दक्षिणोत्तराभ्यां पाणिभ्यां मध्ये परिगृह्य ६ तान्त्सव्येनाचार्योऽग्रे संगृह्य दक्षिणेनाद्भिः परिषिञ्चन्नथेतरं वाचयति ७ सावित्रीं भो३ अनु-ब्रूहीतीतरः ८ सावित्रीं तेऽनुब्रवीमीत्याचार्यो गायत्रीं भो३ अनुब्रूहीतीतरो गायत्रीं तेऽनुब्रवीमीत्याचार्यो वैश्वामित्रीं भो३ अनुब्रूहीतीतरो वैश्वानरीं तेऽनुब्रवीमीत्याचार्य ११ ऋषीन्भो३ अनुब्रूहीतीतर ऋषीँस्तेऽनुब्रवीमीत्याचार्यो देवता भो३ अनुब्रूहीतीतरो देवतास्तेऽनुब्रवीमीत्याचार्यश्छन्दाँसि भो३ अनुब्रूहीतीतरश्छन्दाँसि तेऽनुब्रवीमीत्याचार्यः १४ श्रुतिं भो३ अनुब्रूहीतीतरः श्रुतिं तेऽनुब्रवीमीत्याचार्यः १५ स्मृतिं भो३ अनुब्रूहीतीतरः स्मृतिं तेऽनुब्रवीमीत्याचार्यः १६ श्रद्धामेधे भो३ अनुब्रूहीतीतरः श्रद्धामेधे तेऽनुब्रवीमीत्याचार्य १७ एवमेवमृषेर्यस्ययस्य योयो मन्त्रो यद्देवत्यो यच्छन्दाश्च तथातथा तंतं मन्त्रमनुब्रूयाद् १८ अपि वाविदन्नृषिदैवतच्छन्दाँसि तत्सवितुर्वरेण्यमित्येतां पच्छोऽर्धर्चशोऽनवानमित्येषेति समाप्त आहाचार्य १९ एवमेकैकमृषिमनुवाकं वानुब्रूयात् २० क्षुद्रसूक्तेष्वनुवाकं २१ यावद्वा गुरुर्मन्येताद्योत्तमे कामं सूक्ते वानुब्रूयादृषेरनुवाकस्य वैकैकं सूक्तादावित्येषा प्रभृतिरिति कामं सूक्तादावाचार्य इत्येतदृषिस्वाध्याये व्याख्यातं २७ समाप्ते कुशतरुणानादायानडुहेन मूले कुण्डं कृत्वा यथासूक्तं कुशेष्वपो निषिञ्चत्यहःशेषं स्थान-

मुपवासश्च २९ ७

अपराह्णेऽक्षतधाना भिक्षित्वाज्याहुतिधर्मेणाग्नौ पाणिना जुहुयात् सदसस्पति-मद्भुतमिति प्रत्यृचं सूक्तशेषेण १ भक्षैराचार्यं स्वस्तिवाच्य २ ८

अरण्ये समित्पाणिः संध्यामास्ते नित्यं वाग्यत उत्तरापराभिमुखोऽन्वष्टमदेश-मा नक्षत्राणां दर्शनाद् १ अतिक्रान्तायां महाव्याहृतीः सावित्रीं स्वस्त्ययनानि च जपित्वैवं प्रातः प्राङ्मुखस्तिष्ठन्ना मण्डलदर्शनात् ३ ९

उदिते प्राध्ययनम् १ अहरहः सायंप्रातरग्निमुपसमाधाय परिसमुह्य पर्युक्ष्य दक्षिणं जान्वाच्याग्नये समिधमहार्षं बृहते जातवेदसे । स मे श्रद्धां च मेधां च जातवेदाः प्रयच्छतु स्वाहा । एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि स्वाहा । समिद्धो मां समर्धय प्रजया च धनेन च स्वाहा । एषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व । वर्धिषीमहि च वयमा च प्यासिषीमहि स्वाहेत्यथ पर्युक्ष्याग्निः श्रद्धां च मेधां चाविनिपातं स्मृतिं च मे । ईळितो जातवेदा अयं शुनं नः संप्रयच्छत्वित्यग्निमुपतिष्ठते ६ सौ-पर्णव्रतभाषितं दृष्टं वृद्धसंप्रदायानुष्ठितं त्र्यायुषं पञ्चभिर्मन्त्रैः प्रतिमन्त्रं ललाटे हृदये दक्षिणस्कन्धे वामे च ततः पृष्ठे च पञ्चसु भस्मना त्रिपुण्ड्रं करोति ७ स एतेषां वेदानामेकं द्वौ त्रीन्सर्वान्वाधीते य एवं हुत्वाग्निमुपतिष्ठते ८ १०

अथ व्रतादेशनं १ तस्योपनयनेन कल्पो व्याख्यातो न सावित्रीमन्वाह ३ दण्डप्रदानान्तमित्येक ४ उदगयने शुक्लपक्षे ५ अहोरात्रं ब्रह्मचर्यमुपेत्या-चार्योऽमाँसाशी ब्रह्मचारी ६ चतुर्दशीं परिहाप्याष्टमीं चाद्योत्तमे चैके ७ यां वान्यां भप्रशस्तां मन्येत तस्यां शुक्रिये ब्रह्मचर्यमादिशेत् ९ त्रिरात्रं ब्रह्मचर्यं चरेद्द्वादशरात्रं संवत्सरं वा यावद्वा गुरुर्मन्येत १० शाक्वरं तु संवत्सरं ११ व्रातिकमौपनिषदं च १२ पूर्णे काले चरिते ब्रह्मचर्ये शंयोर्बार्हस्पत्यान्ते वेदे-ऽनूक्ते रहस्यं श्रावयिष्यन्कालनियमं चादेशेन प्रतीयेत १३ ११

कृतप्रातराशस्यापराह्णेऽपराजितायां दिशि १ हुत्वाचार्योऽथैनं यास्वेव देव-तासु परीत्तो भवति तास्वेवैनं पृच्छत्यग्नाविन्द्र आदित्ये विश्वेषु च देवेषु चरितं

ते ब्रह्मचर्यं २ चरितं भो३ इति प्रत्युक्ते ३ पश्चादग्नेः पुरस्तादाचार्यस्य प्राङ्मुखे स्थितेऽहतेन वाससाचार्यः प्रदक्षिणं मुखं त्रिः परिवेष्ट्योपरिष्टाद्दशाः कृत्वा यथा न संभ्रश्येत ५ त्रिरात्रं समिदाधानं भिक्षाचरणमधःशय्यां गुरुशुश्रूषां चाकुर्वन्वाग्यतोऽप्रमत्तोऽरण्ये देवकुलेऽग्निहोत्रे वोपवसस्वेत्यत्र हैके तानेव नियमाँस्तिष्ठतो रात्र्यामेवोपदिशन्त्याचार्योऽमाँसाशी ब्रह्मचारी ८ त्रिरात्रे निर्वृत्ते रात्र्यां वा ग्रामान्निष्क्रामन्नैतानीक्षेतानध्यायान् ९ पिशितामं चण्डालं सूतिकां रजस्वलां तेदनीमपहस्तकान् श्मशानं सर्वाणि च शवरूपाणि यान्यास्ये न प्रविशेयुः स्वस्य वासान्निरसन् १० प्रागुदीचीं दिशमुपनिष्क्रम्य शुचौ देशे प्राङ्मुख आचार्य उपविशत्युदित आदित्येऽनुवाचनधर्मेण वाग्य-तायोष्णीषिणेऽन्वाह १२ महानाम्नीष्वेवैष नियमोऽथोत्तरेषु प्रकरणेषु स्वाध्या-यमेव कुर्वत आचार्यस्येतरः शृणोत्युष्णीषं भाजनं दक्षिणां गां ददाति १५ त्वं तमित्युच्चा दिवीति च प्रणवेन वा सर्वम् १६ अत्र हैके वैश्वदेवं चरुं कुर्वते सर्वेषु प्रकरणेषु १७ यथापरीत्तमिति माण्डूकेयः १८ १२

अथातो दण्डनियमा १ नान्तरा गमनं कुर्यादात्मनो दण्डस्याथ चेद्दण्डमेख-लोपवीतानामन्यतमद्विशीर्येत छिद्येत वा तस्य तत्प्रायश्चित्तं यदुद्वाहे रथस्य ३ मेखला चेदसंधेया भवत्यन्यां कृत्वानुमन्त्रयते ४

मेध्यामेध्यविभागज्ञे देवि गोप्त्रि सरस्वति
मेखलेऽस्कन्नमच्छिन्नं संतनुष्व व्रतं मम

त्वमग्ने व्रतभृच्छुचिरग्ने देवानिहावह
उप यज्ञं हविश्च नः

व्रतानि बिभ्रद्व्रतपा अदाभ्यो भवा नो दूतो अजरः सुवीरः

दधद्रत्नानि सुमृळीको अग्ने गोपाय नो जीवसे जातवेद इत्युपवीतं च दण्डे बध्नाति ६ तदप्येतत् ७

यज्ञोपवीतं दण्डं च मेखलामजिनं तथा

जुहुयादप्सु व्रते पूर्णे वारुणयर्चा रसेन वा ८ १३

अथ वैश्वदेवो व्याख्यातो होमकल्पो वैश्वदेवस्य सिद्धस्य सायंप्रातर्गृह्येऽग्नौ जुहुयाद् ३ अग्नये स्वाहा सोमाय स्वाहेन्द्राग्निभ्यां स्वाहा विष्णवे स्वाहा भरद्वाजधन्वन्तरये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा प्रजापतये स्वाहादितये स्वाहानुमतये स्वाहाग्नये स्विष्टकृते स्वाहेति हुत्वैतासां देवतानाम् ४ अथ वास्तुमध्ये बलिं हरेदेताभ्यश्चैव देवताभ्यो नमो ब्रह्मणे ब्राह्मणेभ्यश्च वास्तोष्पते प्रतिजानीह्यस्मानिति वास्तुमध्ये वास्तोष्पतये चाथ दिशां प्रदक्षिणं यथारूपं बलिं हरति ६ नम इन्द्रायैन्द्रेभ्यश्च नमो यमाय याम्येभ्यश्च नमो वरुणाय वारुणेभ्यश्च नमः सोमाय सौम्येभ्यश्च नमो बृहस्पतये बार्हस्पत्येभ्यश्चाथादि-त्यमण्डले नमोऽदितय आदित्येभ्यश्च नमो नक्षत्रेभ्य ऋतुभ्यो मासेभ्योऽर्धमा-सेभ्योऽहोरात्रेभ्यः संवत्सरेभ्यः ८ पूष्णे पथिकृते धात्रे विधात्रे मरुद्भ्यश्चेति देहलीषु ९ विष्णवे दृषदि १० वनस्पतय इत्युलूखल ११ ओषधीभ्य इत्योषधीनां स्थाने १२ पर्जन्यायाद्भ्य इति मणिके १३ नमः श्रियै शय्यायां शिरसि पादतो भद्रकाल्या १४ अनुगुप्ते देशे नमः सर्वानुभूतये १५ अथान्तरिक्षे नक्तंचरेभ्य इति सायमहश्चरेभ्य इति प्रातर्ये देवास इति चाविज्ञाताभ्यो देवताभ्य उत्तरतो धनपतये च १७ प्राचीनावीती दक्षिणतः शेषं निनयति ये अग्निदग्धा इति १८ देवपितृनरेभ्यो दत्त्वा श्रोत्रियं भोजयेद् १९ ब्रह्मचारिणे वा भिक्षां दद्याद् २० अनन्तरं सौवासिनीं गर्भिणीं कुमारान्स्थविराँश्च भोजये-च्छ्वभ्यः श्वपचेभ्यश्च वयोभ्यश्चावपेद्भूमाविति नानवत्तमश्नीयान्नैको न पूर्वं २५ तदप्येतदृचोक्तं मोघमन्नं विन्दते अप्रचेता इति २६ १४

षण्णां चेदर्घ्याणामन्यतम आगच्छेद्गोपशुमजमन्नं वा यत्सामान्यतमं मन्येत तत्कुर्यान् १ नामाँसोऽर्घः स्याद् २ अधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयाद् ३ आचार्यायाग्नेय ४ ऋत्विजे बार्हस्पत्यो वैवाह्याय प्राजापत्यो राज्ञ ऐन्द्रः ७ प्रियाय मैत्रः ८ स्नातकायैन्द्राग्नो यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्यास् १० तदपि भवति १२ १५

मधुपर्के च सोमे च पितृदैवतकर्मणि
अत्रैव पशवो हिँस्या नान्यत्रेत्यब्रवीन्मनुः १

आचार्यश्च पिता चोभौ सखा चानतिथिर्गृहे
ते यद्विदध्युस्तत्कुर्यादिति धर्मो विधीयते २

नैकग्रामीणमतिथिं विप्रोष्यागतमेव च
उपस्थितं गृहे विद्याद्भार्या यत्राग्नयोऽपि वा ३

अग्निहोत्रं बलिवर्दाः काले चातिथिरागतः
बालाश्च कुलवृद्धाश्च निर्दहन्त्यपमानिताः ४

अनड्वानग्निहोत्रं च ब्रह्मचारी च ते त्रयः
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ५

देवताः पुरुषं गृह्या अहरहर्गृहमेधिनम्
भागार्थमुपसर्पन्ति ताभ्यो निर्वप्तुमर्हति ६ १६

तृणान्यप्युञ्छतो नित्यमग्निहोत्रं च जुह्वतः
सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन् १

ओदपात्रात्तु दातव्यमा काष्ठाज्जुहुयादपि
आ सूक्तादानुवाकाद्वा ब्रह्मयज्ञो विधीयते २

नोपवासः प्रवासे स्यात्पत्नी धारयते व्रतम्
पुत्रो भ्राताथवा पत्नी शिष्यो वास्य बलिं हरेत् ३

वैश्वदेवमिमं ये तु सायंप्रातः प्रकुर्वते
ते अर्थैरायुषा कीर्त्या प्रजाभिश्च समृध्नुयुरिति ४ १७

ब्रह्मचारी प्रवत्स्यन्नाचार्यमामन्त्रयते १ प्राणापानयोरित्युपाँश्वोमहं वत्स्यामि भो३ इत्युच्चैः २ प्राणापाना उरुव्यचास्त्वया प्रपद्ये देवाय त्वा गोप्त्रे परिददामि देव सवितरेष ते ब्रह्मचारी तं ते परिददामि तं गोपायस्व तं मा मृध इत्युपाँश्वों स्वस्तीत्युच्चैराचार्यः स्वस्तीत्युच्चैराचार्यः ४ १८

इति द्वितीयोऽध्यायः

अथ तृतीयोऽध्यायः

स्नानं समावर्त्स्यमानस्यानडुहमित्युक्तं तस्मिन्नुपवेश्य केशश्मश्रूणि वापयति लोमनखानि च २ व्रीहियवैस्तिलसर्षपैरपामार्गैः सदापुष्पीभिरित्युद्वाप्या- पोहिष्ठीयेनाभिषिच्यालंकृत्य ५ युवं वस्त्राणीति वाससी परिधायाथास्मै निष्कं बध्नात्यायुष्यं वर्चस्यं ७ ममाग्ने वर्च इति वेष्टनं ८ गृहंगृहमहनेति छत्रम् ९ आरोहतेत्युपानहौ १० दीर्घस्ते अस्त्वङ्कुश इति वैणवं दण्डमादत्ते ११ प्रतिलीनस्तदहरासीत १२ वनस्पते वीड्वङ्गः शास इत्थेति रथमारोहेद् १३ यत्रैनं गवा वा पशुना वा अर्हयेयुस्तत्पूर्वमुपतिष्ठेत १४ गोभ्यो वा समावर्तेत फलवतो वा वृक्षाद् १५ इन्द्र श्रेष्ठानि द्रविणानि धेहि स्योना पृथिवि भवेत्यवरोहतीप्सितमन्नं तदहर्भुञ्जीताचार्याय वस्त्रयुगं दद्यादुष्णीषं मणिकुण्डलं दण्डोपानहं छत्रं च १८ १

अगारं कारयिष्यन्निहान्नाद्याय विशः परिगृह्णामीत्युदुम्बरशाखया त्रिः परिलिख्य मध्ये स्थण्डिले जुहोति १ कोऽसि कस्यासि काय ते ग्रामकामो जुहोमि स्वाहा अस्यां देवानामसि भागधेयमितः प्रजाताः पितरः परेताः विराळजुह्वद्ग्रामकामो न देवानां किंचनान्तरेण स्वाहेति २ स्थूणा- गर्तान्खानयित्वोदमन्थानासिच्य ४ इमां विमिन्वे अमृतस्य शाखां मधोर्धारां प्रतरणीं वसूनाम् । एनां शिशुः क्रन्दत्या कुमार एनां धेनुः क्रन्दतु नित्यव- त्सेत्युदुम्बरशाखां घृतेनाक्तां दक्षिणे द्वार्ये गर्ते निदधाति ५ इमामुच्छ्रयामि भुवनस्य शाखां मधोर्धारां प्रतरणीं वसूनाम् । एनां शिशुः क्रन्दत्या कुमार एनां धेनुः क्रन्दतु पाकवत्सेत्युत्तरत ६ एवं द्वयोर्द्वयोर्दक्षिणतः पश्चादुत्तरतश्च ७ इमामहमस्य वृक्षस्य शाखां घृतमुक्षन्तीममृते मिनोमि एनां शिशुः क्र- न्दत्या कुमार आ स्यन्दन्तां धेनवो नित्यवत्सा इति । स्थूणाराजमुच्छ्रयति

एनं कुमारस्तरुण आ वत्सो भुवनस्परि
एनं परिस्रुतः कुम्भ्या आ दध्नः कलशैर्गमन् ९ २

इहैव स्थूणे प्रतितिष्ठ ध्रुवाश्वावती गोमती सीलमावती
क्षेमे तिष्ठ घृतमुक्षमाणेहैव तिष्ठ निमिता तिल्विला स्थाजिरावती
मध्ये पोषस्य तृम्पतां मा त्वा प्रापन्नघायवः

उपहूता इह गाव उपहूता अजावयः
अथो अन्नस्य कीलाल उपहूतो गृहेषु नः
रथन्तरे प्रतितिष्ठ वामदेव्ये श्रयस्व बृहति स्तभायेति

स्थूणाराजमभिमृशति १ संमितस्य स्थूणाः संमृशति २ सत्यं च श्रद्धा चेति पूर्वे ३ यज्ञश्च दक्षिणा चेति दक्षिणे ४ बलं चौजश्चेत्यपरे ५ ब्रह्म च क्षत्रं चेत्युत्तरे ६ श्री स्तूपो धर्म स्थूणाराजो ७ अहोरात्रे द्वारफलके ८ संवत्सरोऽपिधानम् ९ उक्षा समुद्र इत्यभ्यक्तमश्मानं स्तूपस्याधस्तान्निखनेत् १० ३

वास्तोष्पतीये कर्मणि १ अग्निं दधामि मनसा शिवेनायमस्तु संगमनो वसूनाम् । मा नो हिँसी स्थविरं मा कुमारं शं नो भव द्विपदे शं चतुष्पद इति गृह्यमग्निं बाह्यत उपसमाधाय २ प्रागग्रेषु नवेषु कुशेषूदकुम्भं नवं प्रतिष्ठाप्यारिष्टा अस्माकं वीरा मा परासेचि नो धनमित्यभिमन्त्र्य ४ रथन्तरस्य स्तोत्रियेण पुनरादायं ककुप्कारं तिस्रः पूर्वाह्णे जुहोति ५ वामदेव्यस्य मध्यंदिने ६ बृहतोऽपराह्णे ७ महाव्याहृतयश्चतस्रो वास्तोष्पत इति तिस्रोऽमीवहा वास्तोष्पते वास्तोष्पते ध्रुवा स्थूणा सौविष्टकृती दशमी स्थालीपाकस्य रात्रौ ८ ज्येष्ठं पुत्रमादाय जायां च सहधान्यः प्रपद्येत ९ इन्द्रस्य गृहाः शिवा वसुमन्तो वरूथिनस्तानहं प्रपद्ये सह जायया सह प्रजया सह पशुभिः सह रायस्पोषेण सह यन्मे किंचास्ति तेन १० ४

शग्मंशग्मं शिवंशिवं क्षेमाय वः शान्त्यै प्रपद्येऽभयं नो अस्तु ग्रामो मारण्याय परिददातु विश्व महाय मा परिदेहीति ग्रामान्निष्क्रामन् १ अरण्यं मा ग्रामाय परिददातु मह विश्वाय मा परिदेहीति ग्रामं प्रविशन्नरिक्तः २ गृहान्भद्रान्सुमनसः प्रपद्येऽवीरघ्नो वीरतरः सुवीरान् । इरां वहन्तो घृतमुक्षमाणा अन्येष्वहं सुमनाः संविशेयमिति सदा प्रवचनीयः ३ ५

अनाहिताग्निः प्रवत्स्यन्गृहान्समीक्षते १

इमान्मे मित्रावरुणौ गृहान्गोपायतं युवम्
अविनष्टानविह्रुतान्पूषैनानभिरक्षत्वास्माकं पुनरागमात् २

अपि पन्थामगन्महीति च जपति ३ ६

अथ प्रोष्यायन्गृहान्समीक्षते १

गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि
ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः

येषामध्येति प्रवसन्येषु सौमनसो बहुः
गृहानुप ह्वयामहे ते नो जानन्तु जानतः

उपहूता इह गाव उपहूता अजावयः
अथोऽन्नस्य कीलाल उपहूतो गृहेषु नः २

अयं नो अग्निर्भगवानयं नो भगवत्तरः
अस्योपसद्ये मा रिषामायं श्रैष्ठ्ये दधातु न इति

गृह्यमग्निमुपस्थाय ३ कल्याणीं वाचं प्रब्रूयाद् ४ विराजो दोहोऽसि विराजो दोहमशीय मयि पद्यायै विराजो दोह इति पाद्यप्रतिग्रहणः ५ ७

अनाहिताग्निर्नवं प्राशिष्यन्नाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः स्वाहाकारेण गृह्येऽग्नौ जुहुयात् १ प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्यायेति प्राशनार्थीयमभिमन्त्र्य २ भद्रान्नः श्रेयः समनैष्ट देवा-स्त्वयावसेन समशीमहि त्वा । स नो मयोभूः पितवाविशस्व शं नो भव द्विपदे शं चतुष्पद इत्यद्भिरभ्युत्सिञ्चँस्त्रिः प्राश्नाति ३ अमोऽसि प्राण तदृतं ब्रवीम्यमोऽसि सर्वाङसि प्रविष्टः । स मे जरां रोगमपनुद्य शरीरादमा म एधि मा मृधा न इन्द्रेति हृदयदेशमभिमृशति ४ नाभिरसि मा बिभीथाः प्राणानां ग्रन्थिरसि मा विस्रस इति नाभिं ५ भद्रं कर्णेभिरिति यथालिङ्गम् ६ तच्चक्षुरित्यादित्यमुपस्थाय ७ ८

परि वः सैन्याद्वधाद्व्यावृञ्जन्तु घोषिणयः

समानस्तस्य गोपतेर्गावो अँशो न वो रिषत्

पूषा गा अन्वेतु न इति गाः प्रतिष्ठमाना अनुमन्त्रयेत १ परि पूषेति परिक्रान्तासु २ यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च । ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्य इत्या गावो अग्मन्निति च प्रत्यागतासूत्तमाममा कुर्वन् ४ मयोभूर्वात इति सूक्तेन गोष्ठे गताः ५ ६

या फाल्गुन्या उत्तरामावास्या सा रेवत्या संपद्यते तस्यामङ्कलक्षणानि कारयेद् १ भुवनमसि सहस्रपोषमिन्द्राय त्वा श्रमो ददत् । अक्षतमस्यरिष्टमिळान्नं गोपायनं यावतीनामिदं करिष्यामि भूयसीनामुत्तमां समां क्रियासमिति २ या प्रथमा प्रजायेत तस्याः पीयूषं जुहुयात्संवत्सरीणं पय उस्रियाया इत्येता-भ्यामृग्भ्यां ३ यदि यमौ प्रजायेत महाव्याहृतिभिर्हुत्वा यमसूं दद्यात् ४ १०

अथ वृषोत्सर्गः १ कार्त्तिक्यां पौर्णमास्यां रेवत्यां वाश्वयुज्यस्य २ गवां मध्ये सुसमिद्धमग्निं कृत्वाज्याहुतीर्जुहोति ३ इह रतिरिह रमध्वं स्वाहा इह धृतिरिह स्वधृतिः स्वाहा उपसृजं धरुणं मात्रे धरुणो मातरं धयन्रायस्पोषमस्मासु दीधरत्स्वाहा ४ पूषा गा अन्वेतु न इति पौष्णस्य जुहोति ५ रुद्राञ्जपित्वैकवर्णं द्विवर्णं त्रिवर्णं वा ७ यो वा यूथं छादयति ८ यो वा यूथेन छाद्यते ९ रो-हितो वैव स्यात् १० सर्वाङ्गैरुपेतो यूथे वर्चस्वितमः स्यात् ११ तमलंकृत्य १२ यूथे मुख्याश्चतस्रो वत्सतर्यस्ताश्चालंकृत्यैतं युवानं पतिं वो ददामि तेन क्रीळन्तीश्चरथ प्रियेण । मावश्चात्र जनुषा संविदाना रायस्पोषेण समिषा मदेम स्वाहेति १४ नभ्यस्थेऽनुमन्त्रयते मयोभूरित्यनुवाकशेषेण १५ सर्वासां पयसि पायसं श्रपयित्वा ब्राह्मणान्भोजयेत् १६ ११

ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका अपरपक्षेषु १ तासां प्रथमायां शाकं जुहोति २ इयमेव सा या प्रथमा व्युच्छदन्तरस्यां चरति प्रविष्टा । वधूर्जजान नवकृ-ज्जनित्री त्रय एनां महिमानः सचन्तां स्वाहेति ४ अथ स्विष्टकृतो

यस्यां वैवस्वतो यमः सर्वे देवाः समाहिताः
अष्टका सर्वतोमुखी सा मे कामानतीतृपत्

आहुस्ते ग्रावाणो दन्तानूधः पवमाणः
मासाश्चार्धमासाश्च नमस्ते सुमनामुखि स्वाहेति ५ १२

मध्यमायां मध्यावर्षे च १ महाव्याहृतयश्चतस्रो ये तातृषुरिति चतस्रोऽनुद्रुत्य वपां जुहुयाद् २ वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ सुकृतस्य लोके। मेदसः कुल्या उप तान्स्रवन्तु सत्याः सन्तु यजमानस्य कामाः स्वाहेति वा ३ महाव्याहृतयश्चतस्रो ये तातृषुरिति चतस्रो ऽष्टाहुति स्थालीपाकोऽवदानमिश्रोऽन्तर्हिता गिरयोऽन्तर्हिता पृथिवी मही मे । दिवा दिग्भिश्च सर्वाभिरन्यमन्तः पितुर्दधेऽमुष्यै स्वाहा अन्तर्हिता म ऋतवोऽहोरात्राश्च संधिजाः । मासाश्चार्धमासाश्चान्यमन्तः पितुर्दधेऽमुष्यै स्वाहेति यास्तिष्ठन्ति याः स्रवन्ति या दभ्राः परिसस्रुषीः । अद्भिः सर्वस्य भर्तृभिरन्यमन्तः पितुर्दधेऽमुष्यै स्वाहा यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता । रेतस्तन्मे पिता वृङ्क्तां मातुरन्योऽवपद्यताममुष्यै स्वाहेति वा महाव्याहृतीनां स्थाने चतस्रोऽन्यत्रकरणस्य ५ पायसो वा चरुः ६ श्वोऽन्वष्टक्यं पिण्डपितृयज्ञावृता ७ १३

उत्तमायामपूपाञ्जुहोत्युक्थ्यश्चातिरात्रश्च सद्यःक्रीश्छन्दसा सह । अपूपकृदष्टके नमस्ते सुमनामुखि स्वाहेति २ गोपशुरजपशु स्थालीपाको वापि वा गोग्रासमाहरेद् ४ अपि वारण्ये कक्षमपादहेदेषा मेऽष्टकेति ५ न त्वेव न कुर्वीत न त्वेव न कुर्वीत ६ १४

इति तृतीयोऽध्यायः

अथ चतुर्थोऽध्यायः

मासिमासि पितृभ्यो दद्याद् १ ब्राह्मणान्वेदविदोऽयुग्माँस्त्र्यवरार्धान्पितृवदुपवेश्यायुग्मान्युदपात्राणि तिलैरवकीर्यासावेतत्त इत्यनुदिश्य ब्राह्मणानां पाणिषु निनयेद् ४ अत ऊर्ध्वमलंकृतान् ५ आमन्त्र्याग्नौ कृत्वान्नं चासावेतत्त इत्यनुदिश्य भोजयेद् ७ भुञ्जानेषु महाव्याहृतीः सावित्रीं मधुवातीयाः पितृदेवत्याः पावमानीश्च जपेद् ८ भुक्तवत्सु पिण्डान्दद्यात् ९ पुरस्तादेके १० पिण्डान्पश्चिमेन तत्पत्नीनां किंचिदन्तर्धाय ११ ब्राह्मणेभ्यः शेषं निवेदयेद् १२ अग्नौकरणादि पिण्डपितृयज्ञेन कल्पो व्याख्यातः १३ १

अथात एकोद्दिष्टम् १ एकपवित्रं २ एकार्घ्यम् ३ एकपिराडम् ४ नावाहनं नाग्नौकरणं नात्र विश्वे देवाः स्वदितमिति तृप्तिप्रश्न उपतिष्ठतामित्यक्षय्यस्थाने ५ अभिरम्यतामिति विसर्गः ६ संवत्सरमेवं प्रेते ७ चतुर्थविसर्गश्च ८ २

अथ सपिराडीकरणं १ संवत्सरे पूर्णे त्रिपक्षे वा २ यदहर्वा वृद्धिरापद्येत ३ चत्वार्युदपात्राणि सतिलगन्धोदकानि कृत्वा ४ त्रीणि पितृणामेकं प्रेतस्य ५ प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्याम् ६ एवं पिराडमप्येतत्सपिराडीकरणम् ८ ३

अथात आभ्युदयिकम् १ आपूर्यमाणपक्षे पुरायाहे २ मातृयागं कृत्वा ३ युग्मान्वेदविद उपवेश्य ४ पूर्वाह्णे ५ प्रदक्षिणमुपचारः ६ पितृमन्त्रवर्जं जप ७ ऋजवो दर्भा ८ यवैस्तिलार्थो ९ दधिबदराक्षतमिश्राः पिराडा १० नान्दीमुखान्पितृनावाहयिष्य इत्यावाहने ११ नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने १२ नान्दीमुखान्पितॄन्वाचयिष्य इति वाचने १३ संपन्नमिति तृप्तिप्रश्नः १४ समानमन्यदविरुद्धमिति १५ ४

अथोपाकरणम् १ ओषधीनां प्रादुर्भावे हस्तेन श्रवणेन वाक्षतसक्तूनां धानानां च दधिघृतमिश्राणां प्रत्यृचं वेदेन जुहुयादिति हैक आहुः ३ सूक्तानुवाकाद्याभिरिति वाध्यायार्षेयाद्याभिरिति माराडूकेयोऽथ ह स्माह कौषीतकिरग्निमीळे पुरोहितमित्येका ७ कुषुम्भकस्तदब्रवीदावदँस्त्वं शकुने भद्रमावद गृणाना जमदग्निना धामन्ते विश्वं भुवनमधि श्रितं गन्ता नो यज्ञं यज्ञियाः सुशमि यो नः स्वो अरणः प्रतिचक्ष्व विचक्ष्वाग्ने याहि मरुत्सखा यत्ते राजञ्छृतं हविरिति द्वृचास् ८ तच्छं योरावृणीमह इत्येका ९ हुतशेषाद्धविः प्राश्नन्ति दधिक्राव्णो अकारिषमित्येतयाचम्योपविश्य ११ महाव्याहृतीः सावित्रीं वेदादिप्रभृतीनि स्वस्त्ययनानि च जपित्वाचार्यं स्वस्तिवाच्य १३ तदपि भवति १४

अयातयामतां पूजां सारत्वं छन्दसां तथा
इच्छन्त ऋषयोऽपश्यन्नुपाकर्म तपोबलात् १५

तस्मात्षट्कर्मनित्येनात्मनो मन्त्रसिद्धये
उपाकर्तव्यमित्याहुः कर्मणां सिद्धिमिच्छता १६

उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं भवेत्
अष्टकासु त्वहोरात्रमृत्वन्त्यासु च रात्रिषु १७ ५

माघशुक्लप्रतिपद्यपराजितायां दिशि २ बह्वौषधिके देश ३ उदु त्यं जातवेदसं चित्रं देवानां नमो मित्रस्य सूर्यो नो दिवस्पात्विति सौर्याणि जपित्वा ४ शास इत्था महानसीति प्रदक्षिणं प्रत्यृचं प्रतिदिशं प्रत्यस्य लोष्टान् ५ ऋषीँश्छन्दाँसि देवताः श्रद्धामेधे च तर्पयित्वा प्रतिपुरुषं च पितॄँश्छन्दाँसि विश्रामयन्त्यर्धसप्तमान्मासान् ७ अर्धषष्ठान्वाधीयीरँश्चेदहोरात्रमुपरम्य प्राध्ययनम् ९ ६

अथोपरमम् १ उत्पातेष्वाकालम् २ अन्येष्वद्भुतेषु च ३ विद्युत्स्तनयित्नुवर्षासु त्रिसंध्यम् ४ एकाहं श्राद्धभोजने ५ दशाहमघसूतकेषु च ६ चतुर्दश्यमावास्ययोरष्टकासु च ७ वासरेषु नभ्येषु चाचार्ये चोपरते दशाहं ९ श्रुत्वा त्रिरात्रं १० तत्पूर्वाणां च ११ प्रतिग्रहे श्राद्धवत् १२ सब्रह्मचारिणि १३ प्रेतमनुगत्वा १४ पितृभ्यश्च निधाय पिण्डान् १५ निशां १६ संध्यां १७ पर्वस्वस्तमिते १९ शूद्रसंनिकर्षे २० सामशब्दे २१ श्मशाने २२ ग्रामारण्ये २३ अन्तःशवे ग्रामे २४ अदर्शनीयाद् २५ अश्रवणीयाद् २६ अनिष्टघ्राणे २७ अतिवाते २८ अभ्रे प्रावर्षिणि २९ रथ्यायां ३० वीणाशब्दे च ३१ रथस्थः ३२ शूद्रवच्छुनि ३३ वृक्षारोहणे ३४ अवटारोहणे ३५ अप्सु ३६ क्रन्दत्यार्त्यां ३८ नग्न ३९ उच्छिष्टः ४० संक्रमे ४१ केशश्मश्रूणि वापन आ स्नानाद् ४२ उत्सादने ४३ स्नाने ४४ संवेशने ४५ अभ्यञ्जने ४६ प्रेतस्पर्शिनि सूतिकोदक्ययोश्च शूद्रवद् ४७ अपिहितपाणिः ४८ सेनायाम् ४९ अभुञ्जाने ब्राह्मणे गोषु चातिक्रान्तेष्वधीयीरन् ५१ एतेषां यदि किंचिदकामोत्पातो भवेत्प्राणानायम्यादित्यमीक्षित्वाधीयीत ५२ विद्युत्स्तनयित्नुवर्षवर्जं कल्पे वर्षवदर्धषष्ठेषु ५३ तदप्येतत् ५४ अन्नमापो मूलफलं यच्चान्यच्छ्राद्धिकं भवेत् । प्रतिगृह्याप्यनध्यायः पाण्यास्यो ब्राह्मणः स्मृत इति ५५ ७

न्यायोपेतेभ्यश्च वर्तयेत् १ प्राङ्वोदङ्वासीन आचार्यो दक्षिणत उदङ्मुख इतरो द्वौ वा ३ भूयाँसस्तु यथावकाशं ४ नोच्छ्रितासनोपविष्टो गुरुसमीपे ५ नैकासनस्थो न प्रसारितपादो न बाहुभ्यां जानूपसंगृह्य ८ नोपाश्रितशरीरो ९ नोपस्थकृतपादो १० न पादकुठारिकां कृत्वाधीहि भो३ इत्युक्त्वाचार्य ओंकारं प्रचोदयेद् १२ ओमितीतरः प्रतिपद्यते १३ तत्संततमधीयीताधीत्योपसंगृह्य १५ विरताः स्म भो३ इत्युक्त्वा यथार्थं १६ विसृष्टं विरामस्तावदित्येके १७ नाधीयतामन्तरा गच्छेन् १८ नात्मानं विपरिहरेदधीयानो १९ यदि चेद्दोषः स्यात्त्रिरात्रमुपोष्याहोरात्रं वा सावित्रीमभ्यावर्तयेद्यावच्छक्नुयाद् ब्राह्मणेभ्यः किंचिद्दद्यादहोरात्रमुपरम्य प्राध्ययनम् २० ८

स्नात १ उपस्पर्शनकालेऽवगाह्य देवतास्तर्पयत्यग्निस्तृप्यतु वायुस्तृप्यतु सूर्यस्तृप्यतु विष्णुस्तृप्यतु प्रजापतिस्तृप्यतु विरूपाक्षस्तृप्यतु सहस्राक्षस्तृप्यतु सोमः ब्रह्मा वेदाः देवाः ऋषयः सर्वाणि च छन्दाँसि ओंकारः वषट्कारः महाव्याहृतयः सावित्री यज्ञाः द्यावापृथिवी नक्षत्राणि अन्तरिक्षमहोरात्राणि संख्याः संध्याः समुद्राः नद्यः गिरयः क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसः नागाः वयाँसि सिद्धाः साध्याः विप्राः यक्षाः रक्षाँसि भूतान्येवमन्तानि तृप्यन्तु श्रुतिं तर्पयामि स्मृतिं तर्पयामि धृतिं तर्पयामि रतिं तर्पयामि गतिं तर्पयामि मतिं तर्पयामि श्रद्धामेधे धारणां च गोब्राह्मणं स्थावरजङ्गमानि सर्वभूतानि तृप्यन्त्विति यज्ञोपवीती ९

अथ प्राचीनावीती १ पित्र्यां दिशमीक्षमाणः २ शतर्चिनः माध्यमाः गृत्समदः विश्वामित्रः जमदग्निः वामदेवः अत्रिः भरद्वाजः वसिष्ठः प्रगाथाः पावमानाः क्षुद्रसूक्तमहासूक्ताः सुमन्तुः जैमिनिवैशम्पायनपैलसूत्रभाष्यागार्ग्यबभ्रुबाभ्रव्यमण्डुमाण्डव्याः गार्गी वाचक्नवी वडवा प्रातिथेयी सुलभा मैत्रेयी कहोलं कौषीतकिं महाकौषीतकिं सुयज्ञं शाङ्खायनमाश्वलायनमैतरेयं महैतरेयं भारद्वाजं जातूकर्ण्यं पैङ्ग्यं महापैङ्ग्यं बाष्कलं गार्ग्यं शाकल्यं माण्डूकेयं महादमत्रम् औदवाहिं महौदवाहिं सौयामिं शौनकिं शाकपूणिं गौतमिं ये चान्य आचार्यास्ते सर्वे तृप्यन्त्विति ३ प्रतिपुरुषं पितरः ४ पितृवँशस्तृप्यतु ५ मातृवँशस्तृप्यतु ६ १०

न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनान् १ नादित्यं संधिवेलयोरनाप्तम् ३ अकार्यकारिणं ४ प्रेतस्पर्शिनं ५ सूतिकोदक्याभ्यां न संवदेद् ६ एतैश्चोद्धृततेजाँसि न भुञ्जीत ८ न यातयामैः कार्यं कुर्यान् ९ न सह भुञ्जीत १० न शेषं ११ पितृदेवतातिथिभृत्यानां शेषं भुञ्जीतोञ्छशिलमयाचितप्रतिग्रहः साधुभ्यो याचितो वा याजनं वृत्तिः १३ पूर्वंपूर्वं गरीयोऽसंसिध्यमानायां वैश्यवृत्तिर्वाप्रमत्तः पितृदैवतकार्येष्वृतौ स्वदारगामी १७ न दिवा शयीत १८ न पूर्वापररात्रौ १९ न भूमावनन्तर्हितायामासीत २० नित्योदकी २१ यज्ञोपवीती २२ न विरहयेदाचार्यम् २३ अन्यत्र नियोगाद् २४ अनुज्ञातो वा २५ ११

अहरहराचार्यायाभिवादयेत १ गुरुभ्यश्च २ समेत्य श्रोत्रियस्य ३ प्रोष्य प्रत्येत्याश्रोत्रियस्यासावहं भो३ इत्यात्मनो नामादिश्य व्यत्यस्य पाणी ५ असावित्यस्य पाणी संगृह्याशिषमाशास्ते ६ नावृतो यज्ञं गच्छेद् ७ अधर्माच्च जुगुप्सेत ८ न जनसमवायं गच्छेन् ९ नोपर्युद्दिशेत्समेत्यानाक्रोशकोऽपिशुनः कुलंकुलो नेतिहेतिः स्यान् ११ नैकश्चरेन् १२ न नग्नो १३ नापिहितपाणिर् १४ देवायतनानि प्रदक्षिणं १५ न धावेन् १६ न निष्ठीवेन् १७ न कण्डूयेन् १८ मूत्रपुरीषे नावेक्षेतावगुण्ठ्यासीत २० नानन्तर्हितायां २१ यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा २२ नादित्यमभिमुखो न जघनेनाहरुदङ्मुखो नक्तं दक्षिणामुखो न चाप्सु श्लेष्म न च समीपे २६ न वृक्षमारोहेन् २७ न कूपमवेक्षेत २८ न धुवनं गच्छेन् २९ न त्वेव तु श्मशानं ३० सवस्त्रोऽहरहराप्लवेद् ३१ आप्लुत्याव्युदकोऽन्यद्वस्त्रमाच्छादयेत् ३२ १२

रोहिण्यां कृषिकर्माणि कारयेत् १ पुरस्तात्कर्मणां प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीबलिं हरेद् २ द्यावापृथिवीययर्चा नमो द्यावापृथिवीभ्यामिति चोपस्थानं ३ प्रथमप्रयोगे सीरस्य ब्राह्मणः सीरं स्पृशेच्छुनं नः फाला इत्येतामनुब्रुवन् ४ क्षेत्रस्य पतिनेति प्रदक्षिणं प्रत्यृचं प्रतिदिशमुपस्थानम् ५ १३

उदकं तरिष्यन्स्वस्त्ययनं करोत्युदकाञ्जलीँस्त्रीनप्सु जुहोति । समुद्राय वैणवे नमो वरुणाय धर्मपतये नमो नमः सर्वाभ्यो नदीभ्यः २ सर्वासां पित्रे विश्वकर्मणे दत्तं हविर्जुषतामिति जपित्वा ३ प्रतीपं स्रवन्तीभ्य उन्नीयं स्थावराभ्यस् ४ तरँश्चेद्भयं शङ्केद्वासिष्ठं सूक्तं जपेत्समुद्रज्येष्ठा इत्येतत्प्लवम् ५ १४

श्रवणं श्रविष्ठीयायां पौर्णमास्यामक्षतसक्तूनां स्थालीपाकस्य वा जुहोति १ विष्णवे स्वाहा श्रवणाय स्वाहा श्रावण्यै पौर्णमास्यै स्वाहा वर्षाभ्यः स्वाहेति २ गृह्यमग्निं बाह्यत उपसमाधाय लाजानक्षतसक्तूँश्च सर्पिषा संनिनीय जुहोति ३ दिव्यानां सर्पाणामधिपतये स्वाहा दिव्येभ्यः सर्पेभ्यः स्वाहेत्युत्तरे-णाग्निं प्रागग्रेषु नवेषु कुशेषूदकुम्भं नवं प्रतिष्ठाप्य ५ दिव्यानां सर्पाणाम-धिपतिरवनेनिक्तां दिव्याः सर्पा अवनेनिजतामित्यपो निनयति ६ दिव्यानां सर्पाणामधिपतिः प्रलिखतां दिव्याः सर्पाः प्रलिखन्तामिति फणेन चेष्टयति ७ दिव्यानां सर्पाणामधिपतिः प्रलिम्पतां दिव्याः सर्पाः प्रलिम्पन्तामिति वर्णकस्य मात्रा निनयति ८ दिव्यानां सर्पाणामधिपतिराबध्नीतां दिव्याः सर्पा आबध्नतामिति सुमनस उपहरति ९ दिव्यानां सर्पाणामधिपतिरा-च्छादयतां दिव्याः सर्पा आच्छादयन्तामिति सूत्रतन्तुमुपहरति १० दिव्यानां सर्पाणामधिपतिराङ्क्तां दिव्याः सर्पा आञ्जतामिति कुशतरुणेनोपघातमाञ्जनस्य करोति ११ दिव्यानां सर्पाणामधिपतिरीक्षतां दिव्याः सर्पा ईक्षन्तामित्या-दर्शेनेक्षयति १२ दिव्यानां सर्पाणामधिपत एष ते बलिर्दिव्याः सर्पा एष वो बलिरिति बलिमुपहरत्येवमान्तरिक्षाणां १४ दिश्यानां १५ पार्थिवाना-मिति १६ त्रिस्त्रिरुच्चैस्तरामुच्चैस्तरां पूर्वं १७ नीचैस्तरांनीचैस्तरामुत्तरम् १८ एवमहरहरक्षतसक्तूनां दर्वेणोपघातमा प्रत्यवरोहणाद्रात्रौ वाग्यतः सोदकं बलिं हरेद् १९ वाग्यता चैनमुपसादयेद् २० य उपक्रमः स उत्सर्गः २१ सुत्रामाणमिति शय्यामारोहेत् २२ १५

आश्वयुज्यां पौर्णमास्यामैन्द्रः पायसोऽश्विभ्यां स्वाहाश्वयुग्भ्यां स्वाहाश्वयुज्यै पौर्णमास्यै स्वाहा शरदे स्वाह पशुपतये स्वाहा पिङ्गलाय स्वाहेत्याज्यस्य हुत्वाथ पृषातकस्या गावो अग्मन्नित्येतेन सूक्तेन प्रत्यृचं जुहुयान् ३ मातृभिर्वत्सान्त्संसृजन्ति तां रात्रीम् ४ अथ ब्राह्मणभोजनम् ५ १६

आग्रहायण्यां प्रत्यवरोहेद् १ रोहिण्यां प्रोष्ठपदासु वा २ प्रातः शमीपला-शमधूकेषीकापामार्गाणां शिरीषोदुम्बरकुशतरुणबदरीणां च पूर्णमुष्टिमादाय सीतालोष्टं चोदपात्रेऽवधाय ४ महाव्याहृतीः सावित्रीं चोद्द्रुत्याप नः शोशु चदघमित्येतेन सूक्तेन तस्मिन्निमज्ज्यनिमज्ज्य प्रदक्षिणं शरण्येभ्यः पाप्मान-मपहत्योत्तरतो निनयेन् ५ मधुपर्को दक्षिणा ६ १७

ग्रीष्मो हेमन्त उत वा वसन्तः शरद्वर्षाः सुकृतं नो अस्तु
तेषामृतूनां शतशारदानां निवात एषामभये स्याम स्वाहा

अप श्वेत पदा जहि पूर्वेण चापरेण च
सप्त च वारुणीरिमाः सर्वाश्च राजबान्धवीः स्वाहा

श्वेताय वैदार्वाय स्वाहा विदार्वाय स्वाहा तक्षकाय वैशालेयाय स्वाहा विशालाय स्वाहेत्याज्यस्य हुत्वा १ सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिधीयताम्। सुवर्षाः सन्तु नो वर्षाः शरदः शं भवन्तु न इति २ शं नो मित्र इति पलाशशाखया विमृज्य ३ समुद्रादूर्मिरित्यभ्युक्ष्य ४ स्योना पृथिवि भवेति स्रस्तरमास्तीर्य ५ ज्येष्ठदक्षिणाः पार्श्वैः संविशन्ति ६ प्रति ब्रह्मन्प्रतितिष्ठामि क्षत्र इति दक्षिणैः ७ प्रत्यश्वेषु प्रतितिष्ठामि गोष्विति सव्यैः ८ प्रति पशुषु प्रतितिष्ठामि पुष्टाविति दक्षिणैः ९ प्रति प्रजायां प्रतितिष्ठाम्यन्न इति सव्यैः १० उदीर्ध्वं जीव इत्युत्थानं ११ स्रस्तरे तां रात्रीं शेरते १२ यथासुखमत ऊर्ध्वम् १३ १८

चैत्र्यां पौर्णमास्यां १ कर्कन्धुपर्णानि मिथुनानां च यथोपपादं पिष्टस्य कृत्वैन्द्राग्नस्तुण्डिलो रौद्रा गोलका ४ लोकतो नक्षत्राण्यन्वाकृतयश्च लोकतो नक्षत्राण्यन्वाकृतयश्च ५ १९

इति चतुर्थोऽध्यायः

अथ पञ्चमोऽध्यायः

परिशिष्टम्

अथ प्रवत्स्यन्नात्मन्नरण्योः समिधि वाग्निं समारोहयत्येहि मे प्राणानारोहेति सकृत्सकृन्मन्त्रेण द्विर्द्विस्तूष्णीम् २ अयं ते योनिरिति वारणी प्रतितपति ३ समिधं वानस्तमिते च मन्थनं ५ वैश्वदेवकाले चोपलिप्त उद्धतावोक्षिते लौकिकमग्निमाहृत्योपावरोहेत्युपावरोहणम् ७ अनुगतेऽग्नौ सर्वप्रायश्चित्ताहुती हुत्वा पाहि नो अग्न एधसे स्वाहा पाहि नो विश्ववेदसे स्वाहा यज्ञं पाहि विभावसो स्वाहा सर्वं पाहि शतक्रतो स्वाहेति ८ व्रतहाना उपोष्याज्यस्य हुत्वा त्वमग्ने व्रतपा इति ९ १

अथ पुष्करिणीकूपतडागानां १ शुद्धपक्षे पुण्ये वा तिथौ २ पयसा यवमयं चरुं श्रपयित्वा ३ त्वं नो अग्न इति द्वाभ्यामव ते हेळ इमं मे वरुणोदुत्तमं वरुणेमां धियं शिक्षमाणस्य ४ गृह्योऽपगृह्यो मयोभूराखरो निखरो निःसरो निकामः सपत्नदूषण इति वारुण्या दिक्प्रभृति प्रदक्षिणं जुहुयान् ५ मध्ये पयसा जुहोति विश्वतश्चक्षुरिदं विष्णुरिति ६ यत्किं चेदमिति मज्जयित्वा ७ धेनुर्दक्षिणा वस्त्रयुग्मं चातो ब्राह्मणभोजनम् ८ २

अथारामेऽग्निमुपसमाधाय १ स्थालीपाकं श्रपयित्वा २ विष्णवे स्वाहेन्द्राग्निभ्यां स्वाहा विश्वकर्मणे स्वाहेति यान्वो नर इति प्रत्यृचं जुहुयाद् ३ वनस्पते शतवल्श इत्यभिमन्त्र्य ४ हिरण्यं दक्षिणा ५ ३

यदि पार्वणस्त्वकृतोऽन्यतरस्ततश्चरुरग्नये वैश्वानराय स्वाहाग्नये तन्तुमते स्वाहेति २ होमातिक्रमे ३ सायं दोषावस्तर्नमः स्वाहा ४ प्रातः प्रातर्वस्तर्नमः स्वाहेति ५ यावन्तो होमास्तावतीर्हुत्वा पूर्ववद्धोमः ६ ४

कपोतोलूकाभ्यामुपवेशने १ देवाः कपोत इति प्रत्यृचं जुहुयाद् २ दुःस्वप्नदर्शने चारिष्टदर्शने च ३ निशायां काकशब्दक्रान्ते चान्येषु चाद्भुतेषु च ५ पयसा चरुं श्रपयित्वा ६ सरूपवत्साया गोः पयसि ७ न त्वेव तु कृष्णाया ७ रात्रीसूक्तेन प्रत्यृचं जुहुयाद् ८ हुतशेषं महाव्याहृतिभिः प्राश्य १० भद्रं कर्णेभिरिति कर्णौ ११ शतमिन्नु शरदो अन्ति देवा इत्यात्मानमभिमन्त्र्य १२ ब्राह्मणेभ्यः किंचिद्दद्यात् १३ ५

व्याधौ समुत्थित १ इमा रुद्राय तवसे कपर्दिन इति प्रत्यृचं गावेधुकं चरुं जुहुयात् २ ६

अकृतसीमन्तोन्नयने चेत्प्रजायेताकृतजातकर्मासीत् २ ततोऽतीते दशाह उत्सङ्गे मातुः कुमारकं स्थापयित्वा ३ महाव्याहृतिभिर्हुत्वा पूर्ववद्धोमः ४ ७

स्थूणाविरोहणे १ स्थालीपाकं श्रपयित्वाया विष्ठा जनयन्कर्वराणि पिशङ्गरूपः सुभरो वयोधा इति द्वाभ्यां चरुं जुहुयाद् २ यदि प्रणीताचरुराज्यस्थाल्यन्यदपि मृन्मयं भिन्नं स्त्रवेत् ३ सर्वप्रायश्चित्ताहुतीर्हुत्वा य ऋते चिदि-

ति तृचेन भिन्नमनुमन्त्रयते ४ यद्यसमाप्ते होमे पवित्रे नश्येते ५ सर्वप्रायश्चित्तं हुत्वाप्स्वग्न इति पुनरुत्पादयेत् ६ ८

अथ सपिण्डीकरणं १ चत्वार्युदपात्राणि पूरयित्वा पितुः प्रभृति २ तद्वत्पिण्डान्कल्पयित्वा ३

ये समानाः समनसः पितरो यमराज्ये
तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पतां

ये समानाः समनसो जीवा जीवेषु मामकाः
तेषां श्रीर्मयि कल्पतामस्मिँल्लोके शतं समाः

समानो मन्त्र इति द्वाभ्यामाद्यं पिण्डं त्रिषु विभजेत् ४ तथैवार्घपात्राणि ५ एवं मातुर्भ्रातुर्भार्यायाः पूर्वमारिण्या एभिः पिण्डैः प्रक्षिप्य ६ ९

यदि गृहे मधूका मधु कुर्वन्त्युपोष्यौदुम्बरीः समिधोऽष्टशतं दधिमधुघृताक्ता मा नस्तोक इति द्वाभ्यां जुहुयाच्छं न इन्द्राग्नी इति च सूक्तं जपेत्सर्वेषु च कर्मसु प्रतिश्रुतादिषु ३ प्रादेशमात्रीः पालाशीः समिधः सप्तदश हुत्वा पश्चात्स्रुवग्रहणं ४ दर्शपूर्णमासयोः पञ्चदश ५ मध्यावर्षेऽष्टके तिस्रो वा भवन्ति पितृयज्ञवद्धोमः ६ १०

यदि गृहे वल्मीकसंभूतिर्गृहोत्सर्गोऽथ त्रिरात्रमुपोष्य महाशान्तिं कुर्यान्महाशान्तिं कुर्यात् ११

इति पञ्चमोऽध्यायः

अथ षष्ठोऽध्यायः

अथातो ब्रह्माणं ब्रह्मऋषिं ब्रह्मयोनिमिन्द्रं प्रजापतिं वसिष्ठं वामदेवं कहोलं कौषीतकिं महाकौषीतकिं सुयज्ञं शाङ्खायनमाश्वलायनमैतरेयं महैतरेयं कात्यायनं शाटचायनं शाकल्यं बभ्रुं बाभ्रव्यं मण्डुं माण्डव्यं सर्वानेव पूर्वाचार्यान्नमस्य स्वाध्यायारण्यकस्य नियमानुदाहरिष्यामोऽहोरात्रं ब्रह्मचर्यमु-

पेत्याचार्योऽमाँसाश्यामपिशितं चराडालं सूतिकां रजस्वलां तेदन्यपहस्त-कदर्शनान्यनध्यायकानि ३ शवरूपाणां च ४ यान्यास्ये न प्रविशेयुर्वान्त-कृतश्मश्रुकर्म ६ माँसाशनश्राद्धसूतकभोजनेषु ७ ग्रामाध्ययनानन्तर्हि-तान्यहानि ८ त्रिरात्रोऽनवक्लृप्तः ९ पराभिमृष्ट १० उपपर्वणामह्न उत्तरार्धानि चाग्निविद्युत्स्तनयित्नुवर्षामहाभ्रप्रादुर्भावाच्च १२ वाते च शर्कराकर्षिणि यावत्कालम् १३ १

ऊर्ध्वमाषाढ्याश्चतुरो मासान्नाधीयीतात्यन्तं शक्वर्य इति नियमाः २ प्रा-ग्ज्योतिषमपराजितायां दिशि पुरायमुपगम्य देशम् ३ अनुदित उदकग्रहणं ४ मराडलप्रवेशश्चाञ्जनगन्धिमित्येतयर्चा ५ मराडलं तु प्राग्द्वारमुदग्द्वारं वाजना-ग्रीयमसंप्रमाणमसंबाधम् ६ आवामदेव्यमुत्तरशान्तिः ७ पुनःप्राध्येषणं च ८ बहिर्मराडलस्थाभिराचम्य ९ प्राधीयीरन्कृतशान्तयः १० शान्तिपात्रोपघाते प्रोक्षणं प्रायश्चित्तिः ११ प्रोक्षणं तु हिररायवता पाणिना दर्भपिञ्जूलवता वेति भाषिकम् १२ २

अथ प्रविश्य मराडलं १ प्राङ्मुख आचार्य उपविशत्युदङ्मुखा दक्षिणत इतरे यथाप्रधानम् २ असंभवे सर्वतोमुखाः ३ प्रतीक्षेरन्नुदयमादित्यस्य ४ विज्ञाय चैनं दीधितिमन्तम् ५ अधीहि भो३ इति दक्षिणैर्दक्षिणं सव्यैः सव्यं दक्षिणोत्तरैः पाणिभिरुपसंगृह्य पादावाचार्यस्य निर्णिक्तावथाधाय शान्तिपात्रे दूर्वाका-राडवतीष्वप्स्वपिन्वमानैः पाणिभिः प्राधीयीरन् ७ एष विधिर्यदि तु ग्लायेरन्नेक एषामशून्यं शान्तिभाजनं कुर्याद् ८ अध्यायाद्यन्तयोश्च सर्वे ९ तत्सन्ततमव्यवच्छिन्नं भवति १० अथ शान्तिः ११ ओंकारो महाव्याहृतयः सावित्री रथन्तरं बृहद्वामदेव्यं पुनरादायं ककुप्कारमिति बृहद्रथन्तरे १२ दशैताः संपादिता भवन्ति १३ दशदशिनी विराळित्येतद्ब्राह्मणम् १४ ३

अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिँसीरिति सवितारमीक्षन्ते १ युवं सुराममित्येका स्वस्ति नः पथ्यास्विति च तिस्र इति महाव्रतस्य २ शक्वरीणां तु पूर्वं ३ प्रत्यस्मै पिपीषते यो रयिवो रयिन्तमस्त्यमु वो अप्रहणमिति त्रयस्तृचा अस्माअस्मा इदन्धस इत्येवा ह्यसि वीर-युरित्यभितः शक्वरीणाम् ४ अथोपनिषदां ५ यैवं महाव्रतस्य ६ संहितानां

तु पूर्वमृतं वदिष्यामि सत्यं वदिष्यामीति विशेषोऽथ मन्थस्य तत्सवितुर्वृणीमहे तत्सवितुर्वरेण्यमिति पूर्वे चादब्धं मन इत्याधिकारिकाः शान्तयस्तत ९ इत्याह्निकम् १० अथोत्थानकालेऽपकृष्य पापं ११ नित्यां शान्तिं कृत्वोदितः शुक्रियं दध इत्यादित्यमीक्षन्ते १३ ४

तमहमात्मनीत्यात्मानमभिनिहितं त्रिर्हितम् १ उप मा श्रीर्जुषतामुप यशोऽनु मा श्रीर्जुषतामनु यशः २ सेन्द्रः सगणः सबलः सयशः सवीर्य उत्तिष्ठानीत्युत्तिष्ठति ३ श्रीर्मा उत्तिष्ठतु यशो मा उत्तिष्ठत्वित्युत्थायेदमहं द्विषन्तं भ्रातृव्यं पाप्मानमलक्ष्मीं चापधुनोमीति वस्त्रान्तमवधूयाप प्राच इति सूक्तमिन्द्रश्च मृळयाति न इति द्वे यत इन्द्र भयामह इत्येका शास इत्था महानसीति प्राचीं स्वस्तिदा इति दक्षिणां दक्षिणावृतो वि रक्ष इति प्रतीचीं वि न इन्द्रेत्युदीचीं सव्यावृतोऽपेन्द्रेति दक्षिणावृतो दिवमुदीक्षन्ते ६ ५

सविता पश्चातात्तच्चक्षुरित्यादित्यमुपस्थाय १ व्यावर्तमानाश्च प्रत्यायन्त्युपविशन्ति २ यथापः शान्ता इति शान्तिपात्रादप आदाय ३ पृथिव्यामवनिनीय ४ यथा पृथिवीत्यस्याभिकर्षन्त्येवं मयि शाम्यत्विति दक्षिणेऽँसे निलिम्पत्येवं द्वितीयम् ७ एवं तृतीयम् ८ काण्डात्काण्डात्संभवसि काण्डात्काण्डात्प्ररोहसि शिवा नः शाले भवेति दूर्वाकाण्डमादाय मूर्धनि कृत्वाग्निस्तृप्यतु वायुस्तृप्यतु सूर्यस्तृप्यतु विष्णुस्तृप्यतु प्रजापतिस्तृप्यतु विरूपाक्षस्तृप्यतु सहस्राक्षस्तृप्यतु सर्वभूतानि तृप्यन्त्विति १० सुमन्तुजैमिनिवैशम्पायनपैलाद्याचार्याः ११ पितृन्प्रत्यात्मिकान् १२ समुद्रं व इत्यपो निनीय १३ वामदेव्यं जपित्वा १४ यथाकामं विप्रतिष्ठन्ते १५ यथागमप्रज्ञाश्रुतिस्मृतिविभवादनुक्रान्तमानादविवादप्रतिष्ठादभयं शंभवे नो अस्तु नमोऽस्तु देवऋषिपितृमनुष्येभ्यः शिवमायुर्वपुरनामयं शान्तिमरिष्टिमक्षितिमोजस्तेजो यशो बलं ब्रह्मवर्चसं कीर्तिमायुः प्रजां पशून्नमो नमस्कृता वर्धयन्तु दुष्टताद्दुरुपयुक्तान्न्यूनाधिकाच्च सर्वस्मात्स्वस्ति देवऋषिभ्यश्च ब्रह्म सत्यं च पातु मामिति ब्रह्म सत्यं च पातु मामिति १६ ६

इति शाङ्खायनगृह्ये षष्ठोऽध्यायः

समाप्तं चेदं शाङ्खायनगृह्यसूत्रम्

# अथ जैमिनिगृह्यसूत्र

अथातोऽग्निं प्रणेष्यन्प्रागुदक् प्रवणमभ्युक्ष्य स्थण्डिलं लक्षमं कुर्यान्मध्ये प्राचीं रेखामुल्लिख्योदीचीं च संहितां पश्चात्तिस्रो मध्ये प्राच्योऽभ्युक्ष्याग्निं प्रतिष्ठापयेद्भूर्भुवः स्वरिति लक्षणावृदेषा सर्वत्राथातः पाकयज्ञान्व्याख्यास्यामो हुतोऽहुतः प्रहुतः प्राशित इति तेषामेकाग्नौ होमो नित्ये यज्ञोपवीतोदकाचमने दर्शपूर्णमासतन्त्राः स्वतन्त्रा वा दक्षिणतोऽग्नेः पूर्णपात्रमुपनिदधाति स्रुवं चापां पूर्णमुत्तरतोऽग्नेरिध्माबर्हिर्देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रोक्षामीति प्रोक्षितमुपक्लृप्तं भवति सकृद्यजुषा द्विस्तूष्णीं खादिरः पालाशो वेध्मस्तदलाभे विभीतकतिल्वकबाधकनिम्बराजवृक्षशल्मल्यरलुदधित्थकोविदारश्लेष्मातकवर्जं सर्ववनस्पतीनामिध्मः कुशालाभे शूकतृणशरशीर्यबल्बजमुतवनलशुण्ठवर्जं सर्वतृणानि शुक्लाः सुमनसस्तासामलाभे जपारूपकाकुत्थाभण्डीकुरण्डकवर्जं गन्धवत्यो वा सर्ववर्णाश्चतस्र आज्यप्रकृतयो भवन्त्यूधन्यं वा वाह्यं वा दधि वा पयो वा पश्चादग्नेराचमनं त्रिराचामेद्द्विः परिमृजेत्सकृदुपस्पृशेत्पादावभ्युक्ष्य शिरश्च शीर्षण्यान्प्राणानुपस्पृशेदप उपस्पृश्य पश्चादग्नेरुपसमाहितस्योपविश्य दक्षिणेन पाणिना भूमिमारभ्य जपतीदं भूमेर्भजामह इदं भद्रं सुमङ्गलं परा सपत्नान्बाधस्वान्येषां विन्द ते धनमिति वस्वन्तं रात्रिश्चेदिमंस्तोम्येन तृचेनाग्निं परिसमूहेदाद्यया वा त्रिः प्रस्तरमुपसंगृह्य प्रतिदिशं परिस्तृणाति दक्षिणपुरस्तादुपक्रम्याग्रैर्मूलानि छादयन्पश्चाद्वोपस्तीर्योलपराजिभ्यामुपहरेद्दक्षिणोत्तरः सन्धिः १

प्रस्तरात्पवित्रे गृह्णाति प्रादेशमात्रे समे अप्रशीर्णाग्रे अनन्तर्गर्भे अङ्गुष्ठेनोपकनिष्ठिकया च धारयन्ननखेन छिनत्ति पवित्रे स्थो वैष्णव्याविति त्रिरूर्ध्वमद्भिरनुमार्जयेद्विष्णोर्मनसा पूते स्थ इति सकृद्यजुषा द्विस्तूष्णीं पात्रस्योपरिष्टात्पवित्रे धारयन्नाज्यमासिच्योत्तरेणाग्निमङ्गारान्निरूह्य तेष्वधिश्रित्यावद्योत्य दर्भतरुणाभ्यां प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्य प्रत्यूह्याङ्गारानुदगग्राभ्यां पवित्राभ्यां त्रिरुत्पुनात्याज्यं च हविश्च प्रणीताश्च स्रुवं च देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति देवो व इति प्रणीताः पुनराहारमाज्यस्य सकृद्यजुषा द्विस्तूष्णीमुत्तरतोऽग्नेः प्रणीताः प्रणीय

दर्भैः प्रच्छाद्य दक्षिणतोऽग्नेः प्रस्तरं निधाय प्रस्तरस्योपरिष्टात्पवित्रे निधाय विरूपाक्षं जपत्यों तपश्च तेजश्च सत्यं चात्मा च धृतिश्च धर्मश्च सत्त्वं च त्यागश्च ब्रह्मा च ब्रह्म च तानि प्रपद्ये तानि मामवन्तु भूर्भुवः स्वरों महान्त-मात्मानमध्यारोहामि विरूपाक्षोऽसि दन्ताञ्जिस्तस्य ते शय्या पर्णे गृहा अन्त-रिक्षे ते विमितं हिरण्मयं तद्देवानां हृदयान्ययस्मये कुम्भे अन्तः संनिहितानि तानि बलभूश्च बलधा च रक्ष णो मा प्रमदः सत्यं ते द्वादश पुत्रास्ते त्वा संवत्सरेसंवत्सरे कामप्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्यमुपयन्ति त्वं देवानां ब्राह्मणोऽस्यहं मनुष्याणां ब्राह्मणो वै ब्राह्मणमुपधावति तं त्वोपधावामि जपन्तं मा मा प्रतिजाप्सीर्जुह्वन्तं मा मा प्रतिहौषीः कुर्वन्तं मा मा प्रतिकार्षीस्त्वां प्रपद्ये त्वया प्रसूत इदं कर्म करिषामि तन्मे समृध्यतां विरूपाक्षाय दन्ताञ्जये ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठायामोघाय कर्माधिपतये नम इति २

स्रुवं प्रणीतासु प्रणीय निष्टप्य दर्भैः संमृज्य संमार्गानभ्युक्ष्याग्नावाधाय दक्षिणं जान्वाच्यामेध्यं चेत्किंचिदाज्येऽवपद्येत घुणस्त्र्यम्बुका मक्षिका पिपीलिकेत्या पञ्चभ्य उद्धृत्याभ्युक्ष्योत्पूय जुहुयात्परिधीन्परिदधाति मध्यमं स्थवीयसं पश्चाद्दीर्घं मध्यमं दक्षिणतः कनीयसमुत्तरतः संस्पृष्टान्दक्षिणतोऽग्नेरपां कोशं निनयत्यदितेऽनुमन्यस्वेत्यनुमतेऽनुमन्यस्वेति पश्चात्सरस्वतेऽनुमन्यस्वेत्युत्तरतो देव सवितः प्रसुवेति त्रिः प्रदक्षिणमग्निं परिषिञ्चद्देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदत्विति सकृद्यजुषा द्विस्तूष्णीमथेध्ममादाय स्रुवेणाज्यं गृहीत्वाभिघार्या-ग्नावभ्यादधात्ययं त इध्म आत्मा जातवेदस्तेन वर्धस्व चेध्यस्व चेन्द्धि वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहेति मनसाघारौ जुहोति संततमक्ष्णया प्रजापतये स्वाहेत्युत्तरं परिधिसन्धिमन्ववहृत्य स्रुवमिन्द्राय स्वाहेति दक्षिणं परिधिसन्धिमन्ववहृत्याघारौ हुत्वाज्यभागौ जुहोत्यग्नये स्वा-हेत्युत्तरतः सोमाय स्वाहेति दक्षिणतस्तावन्तरेणाहुतिलोको भूः स्वाहा भुवः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहेत्यग्नयेऽग्नीषोमाभ्यामिति पौर्णमास्या-मग्नय इन्द्राग्निभ्यामित्यमावास्यायामुत्तरपूर्वामाहुतिं जुहोत्यनभिजुह्वदाहुत्या-हुतिं प्रत्यक् सौविष्टकृतस्थानान्नित्योऽग्निः पुरस्तात्स्विष्टकृदन्तेऽन्यत्र वपा-होमाज्यहोमाभ्यां न स्विष्टकृतं प्रत्यभिघारयति स्रुवे सकृदाज्यमुपस्तृणाति द्विर्हविषोऽवद्यति सकृदाज्येनाभिघार्य प्रत्यभिघारयत्यङ्गुष्ठेनाङ्गुलिभ्यां च

मांससंहिताभां द्विर्हविषोऽवद्यति द्विराज्येनाभिघार्य प्रत्यभिघारयति जामदग्न्यानां तद्धि पञ्चावत्तं भवत्यङ्गुल्या तृणकूर्चेन वा एषा होमावृत्सर्वत्र ३

सपवित्रं प्रस्तरमादत्ते तस्याग्राणि स्रुवेऽनक्ति दिव्यङ्क्ष्वेति मध्यमाज्येऽन्तरिक्षेऽङ्क्ष्वेति मूलानि हविषि पृथिव्यामङ्क्ष्वेति प्रस्तरात्तृणं निरस्यत्यायुषे त्वेति प्रस्तरमग्नावनुप्रहरत्यग्नयेऽनुमतये स्वाहेति पश्चात्तृणमनुप्रहरति द्विषन्तं मेऽभिधेहि तं चैव प्रदह स्वाहेति घृतेनाक्ताः समिध आदधाति समृद्ध्यै स्वाहेति भूमिमारभ्य शीर्षण्यान्प्राणानुपस्पृशेदप उपस्पृश्य द्वादश प्रायश्चित्ताहुतीर्जुहोत्याकूत्यै स्वाहा १ कामाय स्वाहा २ समृद्ध्यै स्वाहा ३ ऋचा स्तोमं समर्धय गायत्रेण रथंतरं बृहद्गायत्रवर्तनि स्वाहा ४ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यं स्वाहा ५ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा ६ उद्वयं तमसस्परि स्वः पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमं स्वाहा ७ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नोऽस्तु वयं स्याम पतयो रयीणां स्वाहा ८ भूः स्वाहा ९ भुवः स्वाहा १० स्वः स्वाहा ११ भूर्भुवः स्वः स्वाहेत्यथास्तीर्णान्दर्भानानीय प्रणीतानां च स्रुवस्य चोपरिष्टात्कृत्वापस्त्रावयज्ञपति सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठा इति प्रतिदिशमप उत्सिञ्चति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामिति प्राचीनावीती दक्षिणस्यां दिशि मासाः पितरो मार्जयन्तामिति यज्ञोपवीती भूत्वाप उपस्पृश्य प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामित्युदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामित्यूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तामिति समुद्रं वः प्रहिणोमीत्यपो निनीय समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपि गच्छत । अरिष्टा अस्माकं वीराः सन्तु मा परासेचि नः स्वमिति यदप्सु ते सरस्वतीत्यङ्गुष्ठेनोपकानिष्ठिकया चाक्षिणी विमृजेद्यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्धि सरस्वतीति दर्भान्परिधींश्चाग्नावाधाय वामदेव्येन शान्तिं कृत्वा त्रिः पर्युक्षेत्सहविष्कं प्रदक्षिणमन्वमंस्थाः प्रासावीरिति मन्त्रान्संनमयेत्पूर्णपात्रमुपनिहितं सा दक्षिणा यथाश्रद्धदक्षिणाः पाकयज्ञाः पूर्णपात्रं वा ४

पुंसवनं तृतीये मास्यन्यत्र गृष्टेर्घृते चरुं श्रपयित्वा पृषदाज्यं वा स्थाली-पाकवत्संस्कृत्य पुरुषसूक्तेन जुहुयान्माषौ च यवं च पुल्लिङ्गं कृत्वा दधि-द्रप्सेनैनां प्राशयेत्प्रजापतिः पुरुषः परमेष्ठी स मे पुत्रं ददात्वायुष्मन्तं यशस्विनं सह पत्या जीवसूर्भूयासमिति न्यग्रोधशुङ्गं फलाभ्यामुपहितं शुक्लरक्ताभ्यां सूत्राभ्यां ग्रथित्वा कराठे धारयेद्ध्रुवकुमारायेत्याचक्षते वासो दक्षिणा ५

अथातो नान्दीमुखेभ्यः पितृभ्यः पूर्वेद्युर्व्याख्यास्याम आपूर्यमाणपक्षे पुराये नक्षत्रे श्वः करिष्यामीति श्वो भूते वान्नं संस्कृत्य शुचीञ्श्रोत्रियान्ब्राह्मणाननु-मन्त्रयते शुचिः शुक्लमनार्द्रमाच्छाद्य यज्ञोपवीत्यप आचम्य चतुःशुक्लान्बली-न्हरती दधि तराडुलाः सुरभि शुक्लाः सुमनस इत्यग्न्यायतने प्रागग्रान्दर्भा-न्संस्तीर्याग्नये सोमाय प्रजापतये विश्वेभ्यो देवेभ्य ऋषिभ्यो भूतेभ्यः पितृभ्यः सर्वाभ्यो देवताभ्यो नम इति हविष्यमन्नं ब्राह्मणेभ्यः प्रदाय दध्ना माषम-त्स्यमांसभक्ष्याशनैरित्यपरमथ चतुष्टयमादाय व्रीहियवपुष्पसर्षपाणीति सह तैरेवोदकुम्भमादाय मनः समाधीयतां प्रसीदन्तु भवन्त इत्युक्त्वा सप्रणवं ना-न्दीमुखाः पितरः प्रीयन्तामित्येवं यथार्थमितरे प्रतिब्रूयुः ६

सीमन्तोन्नयनं चतुर्थे मासि षष्ठेऽष्टमे वा पूर्वपक्षे पुराये नक्षत्रे हस्तोत्तराभिर्वा कुर्यात्तिलमुद्गमिश्रं स्थालीपाकं श्रपयित्वान्वारब्धायां जुहुयान्महाव्याहृति-भिर्हुत्वा प्राजापत्यया चाथैनां पश्चादग्नेर्भद्रपीथ उपवेश्यैरकायां वाहतोत्तरायां तस्यै त्रिः शुक्लया शलल्या प्राणसंमितं सीमन्तं कुर्याच्छुक्लेना मूर्ध्नः प्राणाय त्वापानाय त्वा व्यानाय त्वेत्यथास्या दक्षिणं केशान्तं स्रग्भिरलंकृत्य तथोत्तरं हिरगयवतीनामपां कांस्यं पूरयित्वा तत्रैनामवेक्षयन्पृच्छेद्धिं भूर्भुवः स्वः किं पश्यसीति परा प्रत्याह प्रजां पशून्सौभाग्यं मह्यं दीर्घमायुः पत्युरिति वासो दक्षिणा हिरगयं वा ७

कुमारे जाते जातकर्म प्राक्स्तनप्राशनाद्व्रीहिं च यवं च जातरूपेणाव-घृष्येदमन्नमिति प्राशयेदिदमन्नमयं रस इदं प्राणेनामृतं सह पृथिवी ते माता द्यौः पिता जीवाहि शरदः शतं पश्याहि शरदः शतमित्यथैनमभिमन्त्रयतेऽङ्गा-दङ्गात्संभवसि हृदयादधि जायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतं पश्याहि शरदः शतमित्यथैनं परिददात्यह्ने त्वा परिददाम्यहस्त्वा रात्र्यै

परिददातु रात्रिस्त्वाहोरात्राभ्यां परिददात्वहोरात्रौ त्वार्धमासेभ्यः परिदत्ता- मर्धमासास्त्वा मासेभ्यः परिददतु मासास्त्वर्तुभ्यः परिददत्वृतवस्त्वा संव- त्सराय परिददतु संवत्सरस्त्वा जरायै मृत्यवे परिददात्विति कोऽसि कतमोऽसीत्याह सं मासं प्रविशासावित्यथास्य गुह्यं नाम ददाति वेदो- ऽसीत्यथास्य मूर्धानमुपजिघ्रत्यश्मा भव परशुर्भव हिरण्यमस्तृतं भव पशूनां त्वा हिंकारेणाभिजिघ्रामीत्येवमेव प्रवासादेत्य पुत्राणां मूर्धानमुपजिघ्रति फलीकर्णमिश्रान्सर्षपान्दशरात्रमग्नौ जुहुयात् शण्डायेति द्वाभ्यां शण्डाय मर्कायोपवीराय शौण्डिकेर उलूखलो मलिम्लुचो दुणाशि च्यवनो नश्यता- दितः स्वाहा । आलिखन्विलिखन्ननिमिषन्किंवदन्त उपश्रुतिरर्यम्णः कुम्भी शत्रुः पात्रपाणिर्निपुणहान्त्रीमुखः सर्षपारुणो नश्यतादितः स्वाहेति दशरात्रं दम्पती सूतकौ भवतस्तस्यान्ते स्नात्वोत्थानम् ८

अथातो नामकर्म पूर्वपक्षे पुण्ये नक्षत्रे द्वादश्यां वा पिता नाम कुर्यादाचार्यो वा तमहतेन वाससा समनुपरिगृह्य पिताङ्केनासीत तस्य नामधेयं दधाद्द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थमनुनक्षत्रमनुदैवतम् अनुनामातद्धितमाका- रान्तं स्त्रियै यथार्थं वा कुमारयज्ञेषु च नक्षत्रं नक्षत्रदैवतं तिथिमिति यजते ऽष्टावन्या जुष्टा देवता यजते ऽग्निधन्वन्तरि प्रजापतिमिन्द्रं वसून्रुद्राना- दित्यान्विश्वान्देवानित्येतासु स्विष्टासु सर्वा देवता अभीष्टा भवन्ति ९

अथातः प्राशनकर्म पूर्वपक्षे पुण्ये नक्षत्रे ब्राह्मणान्भोजयित्वा हविष्यमन्नं प्राशयेदन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे शं चतुष्पद इति १०

तृतीये संवत्सरे जटाः कुर्वीत गर्भतृतीय इत्येक उदगयने पूर्वपक्षे पुण्ये नक्षत्रे ब्राह्मणान्स्वास्तिवाच्यापराह्णेऽग्निं प्रणयित्वा दक्षिणतोऽग्नेश्चत्वारि पूर्णपात्राणि निदध्यात् व्रीहियवानामभितो मध्ये तिलमाषाणामाचान्तोदकेऽन्वारब्धे जुहुयान्महाव्याहृतिभिर्हुत्वा विरूपाक्षेणात्र पञ्चमीं जुहोति सर्वौषधीभि स्फाण्टमुदकमानयन्ति व्रीहियवास्तिलमाषा इत्येतत्सर्वौषधमायमगात्स- विता क्षुरेणेति क्षुरमादत्त आयमगात्सविता क्षुरेण विश्वैर्देवैरनुमतो मरुद्भिः । स नः शिवो भवतु विश्वकर्मा यूयं पात स्वस्तिभिः सदा न इत्युष्णेन वाय

उदकेनेहीत्युदकमादत्त उष्णेन वाय उदकेनेह्यदितिः केशान्वपत्वित्याप उन्दन्तु जीवस इति दक्षिणं केशान्तमभ्युन्द्यादाप उन्दन्तु जीवसे दीर्घायुष्ट्वाय वर्चस इति तस्मिंस्तिस्रो दर्भपिञ्जूलीरुपदधात्येकां वा धारयतु प्रजापतिरिति धारयेद्धारयतु प्रजापतिः पुनःपुनः सुवप्तवा इत्यूर्ध्वं त्रिरादर्शेन स्पृष्ट्वा येन धातेति क्षुरेण छिन्द्याद्येन धाता बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत् । तेन त आयुषे वपामि सुश्लोक्याय स्वस्तय इति येन तत्प्रजापतिर्मरुद्भ्यो गृहमेधिभ्योऽवपत् । तेन त आयुषे वपामि सुश्लोक्याय स्वस्तय इति येन भूयश्चरात्ययं ज्योक्च पश्याति सूर्यम् । तेन त आयुषे वपामि सुश्लोक्याय स्वस्तय इत्येवं पश्चात्तथोत्तरतः प्रतिमन्त्रं केशांश्च दर्भपिञ्जूलीशेषांश्चानडुहे गोमयेऽभूमिस्पृष्टे निदध्याद्ब्राह्मणस्य पुरस्तात्पश्चादितरयोर्वर्णयोर्यत्क्षुरेणेति नापिताय क्षुरं प्रयच्छेद्यत्क्षुरेण मम्ला वप्त्रा वपसि नापिताङ्गानि शुद्धानि कुर्वायुर्वर्चो मा हिंसीर्नापितेति यथैषां गोत्रकल्पः कुलकल्पो वाप्लुते प्रायश्चित्तीर्जुहुयादावृतैव स्त्रियाः कुर्यादमन्त्रं समन्त्रं चेत्पश्चाज्जुहुयादथास्य मूर्धानमारभ्य जपति त्रियायुषं कश्यपस्य जमदग्नेस्त्रियायुषं यद्देवानां त्रियायुषं तत्ते अस्तु त्रियायुषमिति धान्यपल्वले गोष्ठे वा केशान्निखनेत्कुशलीकर्ता पूर्णपात्राणि हरेद्गौर्दक्षिणा ११

सप्तमे ब्राह्मणमुपनयीत पञ्चमे ब्रह्मवर्चसकामं नवमे त्वायुष्काममेकादशे क्षत्रियं द्वादशे वैश्यं नाति षोडशमुपनयीत प्रसृष्टवृषणो ह्येष वृषलीभूतो भवतीति तत एनं स्नातमलंकृतमाक्ताक्षं कृतनापितकृत्यमानयन्ति तमहतेन वाससा परिदधीत परीमं सोमेति यथावर्णं परीमं सोम ब्रह्मणा महे श्रोत्राय दध्मसि । यथेमं जरिमा ण याज्ज्योक् श्रोत्रे अधि जागराज्जीवाहि शरदः शतं पश्याहि शरदः शतमिति परीममिन्द्र ब्रह्मणा महे राष्ट्राय दध्मसि । यथेमं जरिमा ण याज्ज्योग्राष्ट्रे अधि जागराज्जीवाहि शरदः शतं पश्याहि शरदः शतमिति परीमं पोष ब्रह्मणा महे पोषाय दध्मसि । यथेमं जरिमा ण याज्ज्योक् पोषे अधि जागराज्जीवाहि शरदः शतं पश्याहि शरदः शतमित्यथैनं पश्चादग्नेः प्राङ्मुखमुपवेश्य यज्ञोपवीतिनमाचार्य आचामयत्याचान्तमुत्थाप्योत्तरतोऽग्नेः प्राचो दर्भानास्तीर्य तेष्वक्षतमश्मानमत्याधाय तत्रैनं दक्षिणेन पादेनाश्मानमधिष्ठापयेदिममश्मानमारोहाश्मेव त्वं स्थिरो भव द्विषन्तमपबाधस्व मा च त्वा द्विषन्तो वधीदित्यथैनं पश्चादग्नेः प्राङ्मुखमुपवेश्योत्तरत आचार्योऽन्वारब्धे

जुहुयान्महाव्याहृतिभिर्हुत्वा देवाहुतिभिश्च संपातमास्ये भूर्ऋचः स्वाहेति प्रतिमन्त्रं भूर्ऋचः स्वाहा भुवो यजूंषि स्वाहा स्वः सामानि स्वाहेति प्राशितमाचान्तमुत्थाय नमो वातायेत्येनं प्रदक्षिणमग्निं परिणयेन्नमो वाताय नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यो नमो वोऽदृष्टाय बृहते करोमीत्यधिगन्तरधिगच्छ प्रदातः प्रयच्छासावमुष्मै वेदमित्यथैनं पश्चादग्नेः प्राङ्मुखमवस्थाप्य पुरस्तादाचार्यः प्रत्यङ्मुखस्तावञ्जली कुरुत उत्तरत आचार्यस्तमन्योऽद्भिः पूरयेन्निस्त्रावेणेतरस्य पूरणमथैनं संशास्ति ब्रह्मचर्य-मगामुप मा नयस्वेति को नामासीत्यसाविति नामधेयं दद्यात्तत्राचार्यो जपति हिं भूर्भुवः स्वरागन्त्रा समगन्महि प्र सु मर्त्यं युयोतन । अरिष्टाः संचरेमहि स्वस्ति चरतादयमित्यथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं गृह्णातीन्द्रस्ते हस्तमग्रभीद्धाता हस्तमग्रभीत्पूषा हस्तमग्रभीत्सविता हस्तमग्रभीदर्यमा हस्त-मग्रभीन्मित्रस्त्वमसि धर्मणाग्निराचार्यस्तवेति प्राणानां ग्रन्थिरसीति नाभि-देशमारभ्य जपति प्राणानां ग्रन्थिरसि मा विस्त्रसामृत मृत्योरन्तरं कुर्विति दक्षिणमंसमन्ववमृश्य मयि व्रत इति हृदयदेशमारभ्य जपति मयि व्रते हृदयं ते अस्तु मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिस्त्वा नियुनक्तु मयीत्यथैनं परिददात्यग्नये त्वा परिददामि वायवे त्वा परिददामि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि सर्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या इत्यथैनं संशास्ति ब्रह्म-चार्यसि समिध आधेह्यपोऽशान कर्म कुरु मा दिवा स्वाप्सीरित्यग्नये समिधमाहार्षमिति घृतेनाक्ताः समिध आदधात्यग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा वर्चसा तेजसा सन्या मेधया प्रज्ञया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन धनेन समेधिषीय स्वाहा अप्सरासु या मेधा गन्धर्वेषु च यन्मनः । दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषतां स्वाहा भूः स्वाहा भुवः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहेतीयं दुरुक्तादिति मेखलामाबध्नीत इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती म आगात् । प्राणापानाभ्यां बलमाभरन्ती स्वसा देवी सुभगा मेखलेयमृतस्य गोप्त्री तपसः परस्पी घ्नती रक्षः सहमाना अरातीः । सा मा समन्तादभिपर्येहि भद्रे भर्तारस्ते मेखले मा रिषामेति मौञ्जीं ब्राह्मणस्य मौर्वीं राजन्यस्य मुञ्जमिश्रां तामलीं वैश्यस्य मौञ्जीं वा सर्वेषामथ परिधानानि क्षौमं वा शाणं वान्तरं ब्राह्मणस्यैणेयमुत्तरं रौरवं राजन्यस्याजं वैश्यस्यैणेयं वा सर्वेषां स्वस्त्यय-

नोऽसीति दराडं प्रयच्छेत्प्राणसंमितं पालाशं ब्राह्मणस्य बैल्वं ब्रह्मवर्च-सकामस्य नैयग्रोधं राजन्यस्यौदुम्बरं वैश्यस्य पालाशं वा सर्वेषां मातरं प्रथमं भिक्षेताथान्याः सुहृदो भवत्पूर्वया ब्राह्मणो भिक्षेत भवति भिक्षां देहीति भवन्मध्यमया राजन्यो भिक्षां भवति देहीति भवदन्त्यया वैश्यो देहि भिक्षां भवतीति क्षां च हिं च न वर्धयेद्भवत्पूर्वया वा सर्वे प्रायश्चित्तं चेदुत्पद्येत जीवा स्थ जीवयत मेत्येनमप आचामयेज्जीवा स्थ जीवयत मापो नाम स्थामृता नाम स्थ स्वधा नाम स्थ तासां वो भुक्षिषीय सुमतौ मा धत्त शिवा मे भवत नमो वोऽस्तु मा मा हिंसिष्टेति भैक्षमुपन्याहृतमूर्ध्वं त्रिरात्रात्सावित्रीं प्रब्रूयात्तदहर्वा पश्चादग्नेः पच्छोऽर्धर्चशः सर्वामित्यनूच्य वेदमारभ्याग्ने व्रतपत इति घृतेनाक्ताः समिध आदधात्यग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा । वायो व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा । आदित्य व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा । व्रतानां व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहेति तदेतद्व्रतादेशनं सर्वत्र व्रतसमाप्तावग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहेति मन्त्रा-न्संनमयेदथैनं संशास्ति ब्रह्मचार्याचार्याधीनः प्रशान्तोऽधःशायी दराड-मेखलाजिनजटाधारी स्त्र्यनृतमधुमांसगन्धमाल्यवर्जी भवेति त्रिरात्रमक्षारा-लवणाश्यूर्ध्वं त्रिरात्रात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य पलाशं गत्वा व्याहृतिभिरभ्यज्य स्थालीपाकेनेष्ट्वा यज्ञोपवीतं दराडमित्युदस्य प्रत्येयाद्गौ-र्दक्षिणा १२

सायंप्रातरुदकान्ते पूतो भूत्वा सपवित्रोऽद्भिर्मार्जयेतापोहिष्ठीयाभिस्तिसृभि-स्तरत्स मन्दी धावतीति चतसृभिर्वामदेव्यमन्ते शुचौ देशे दर्भेष्वासीनो दर्भा-न्धारयमाणः प्रत्यङ्मुखो वाग्यतः सन्ध्यां मनसा ध्यायेदा नक्षत्राणामुदयादुदितेषु नक्षत्रेषु त्रीन्प्राणायामान्धारयित्वा सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वो वा दशावरमथाग्निमुपतिष्ठतेऽग्ने त्वं नो अन्तम इत्यथ वरुणमुपतिष्ठते त्वं वरुण उत मित्र इत्येतयैवावृता प्रातः प्राङ्मुखस्तिष्ठन्नथादित्यमुपतिष्ठत उद्वयं तमस-स्परीत्यथ मित्रमुपतिष्ठते प्र मित्राय प्रार्यम्ण इति स यदि सूर्याभ्युदितः सूर्याभिनिम्रुक्तो वा तच्छेषं सावित्रीं मनसा ध्यायेत्सैव तत्र प्रायश्चित्तिः १३

श्रावरयामुपाकरणं प्रौष्ठपद्यां वा हस्तेन त्रीन्प्राणायामानायम्याचम्य सर्वे

पुरस्ताज्जपं जपन्ति सह नोऽस्तु सह नो भुनक्तु सह नो वीर्यवदस्तु मा विद्विषामहे सर्वेषां नो वीर्यवदस्त्विवति तेभ्यः सावित्रीं प्रब्रूयाद्यथोपनयने मनसा सामसावित्रीं च सोमं राजानमित्यादितश्छन्दांस्यधीत्य यथार्थमक्षतधानानां दध्नश्च नवाहुतीर्जुहोत्यृषीन्देवांश्छन्दांस्यृचो यजूंषि सामानि १-६ ऋचं सामा यजामहे सदसस्पतिमद्भुतं मेधाकारमिति ७-६ एतासामेव पूर्वाभिः षड्भिः पूर्वं तर्पयेदाचार्यमाचार्यांश्च जैमिनिं तलवकारं सात्यमुग्रं राणायनिं दुर्वाससं च भागुरिं गौरुरिडं गौर्गुलविं भगवन्तमौपमन्यवं कारडिं सावर्णिं गार्ग्यं वार्षगरयं दैवन्त्यमित्येतांस्त्रयोदश धानावन्तं दधिक्राव्ण इत्येताभ्यामभिमन्त्र्य हविःशेषं प्राश्य प्राह्णे प्रधीयत आग्नेये समाप्तेऽज ऐन्द्रे मेषो गौः पावमाने पर्वदक्षिणा स ब्रह्मचारिणश्चोपसमेतान्भोजयेद् सावित्रमहः काङ्क्षन्त उत्सर्गे च पक्षिणीं रात्रिं न मांसमश्नीयान्न श्राद्धं न लोमानि संहारयेन्न स्त्रियमुपेयादृतौ जायामुपेयाद्वर्षाशरदिकमेतद्व्रतमर्धमासमित्येके १४

तैषीमुत्सर्गो वेदेषु यथास्वं विश्रमन्तां छन्दांसि चतुरुत्तराणि शिवेन नो ध्यायन्त्वित्युत्सृज्याध्यायानध्यायै व्रतानि चानुपालयन्तो यथास्वं वेदम-धीयीरन्नत ऊर्ध्वमभ्रेषु नाधीयते १५

गौदानिकव्रातिकौपनिषदाः संवत्सरास्तेषु सायंप्रातरुदकोपस्पर्शनं नानुप-स्पृश्य भोजनं प्रातः सायमुपस्पृश्या समिदाधानादरण्यात्समिधमाहृत्याद-ध्यादादित्यव्रातिकः संवत्सर एकवासा न युक्तमारोहेदादित्यं नान्तर्दधीत छत्रेण महीमासनशयनाभ्यामुपानह्यां च नोर्ध्वं जान्वोरपः प्रस्नायादन्यत्रा-चार्यवचनाद्व्रातिके व्रतपर्वादित्यव्रातिके शुक्रियारण्यौपनिषद उपनिषदं श्रावयेत् १६

द्वादश महानाम्निकाः संवत्सरा नव षट् त्रय इति विकल्पाः संवत्सरमित्येके पित्रा चेच्छ्रुता महानाम्न्यः संवत्सरं ब्रह्मचर्यं चरेच्छुक्लैकवासा व्रतं तु भूयस्तिष्ठेद्दिवाथासीत नक्तं तस्य कृष्णे भोजनाच्छादने भवत इत्येके शुक्लं चैव परिदध्याद्रागदोषान्न कृष्णं सर्वास्वप्सूपस्पृशेदबुक्ताः शक्वर्य इति नावा न प्रस्नायात्प्राणसंशये तूपस्पृशेदुभयत अपि वा गाः पाययेत्पशूक्ताः शक्वर्य इति वर्षं नान्तर्दधीत छत्रेण प्रति वर्षं निष्क्रामेदेवमस्य चरतः कामवर्षी पर्जन्यो

भवति ब्रह्मचर्यान्त एकरात्रमुपोषित अरगयं गत्वा शैवलमिश्राणामपां कांसं पूरयित्वा तमुपवेश्य समनुपरिगृह्य निमीलितं तिस्र स्तोत्रिया उपगायेत्सपुरीषा उपोत्थायाचार्योऽहतेन वाससा मुखमस्य परिणह्येत्प्रदक्षिणमुदपात्रं धार्यं-स्तिष्ठेदहःशेषं रात्रिमासीत वाग्यतः श्वो भूतेऽरगयं गत्वाग्निमुपसमाधाय वत्स-मुपान्वानीय वास उद्वेष्टयेदुद्यम्य कांसमपोऽभिवीक्ष इति वीक्षेत्स्वरभिवीक्ष इत्यादित्यं ज्योतिरभिवीक्ष इत्यग्निं पशुमभिवीक्ष इति वत्सं समन्या यन्तीत्यपः प्रसिच्य वासः कांसं वत्समित्याचार्यायोपहरेत्स्थालीपाकाद्विश्वामित्रेन्द्रौ म-हानाम्नीश्च यजत इत्याचार्यं सपरिषट्कं भोजयेद्गौर्दक्षिणा १७

द्वादश वर्षाणि वेदब्रह्मचर्यं जननात्प्रभृतीत्येके यावदध्ययनं वा सदा साये समिदाधानं सायंप्रातर्भैक्षचरणं द्वे त्रिवृती वर्जयेत्त्रिवृतं च मणिं त्रिगुणे चोपानहौ षोडशे गोदानकरणं तत्केशान्तकरणमित्याचक्षते चौडकरणेन मन्त्रा व्याख्याता उपनयनेन व्रतदेशनं न त्विह नियुक्तमहतं वासः सर्वाणि लोमनखानि वापयेच्छिखावर्जमित्यौद्वाहमनिरुप्तकेशः स्नायाद्वनस्पतेरिति वनस्पतीनां स्नानीयेन त्वचमुन्मृद्नीते वनस्पतेस्त्वगसि शोधनि शोधय मा तां त्वाभिहरे दीर्घायुष्ट्वाय वर्चस इति वनस्पतीनां गन्धोऽसीति स्नात्वानुलेप-नेन कुरुते वनस्पतीनां गन्धोऽसि पुगयगन्ध पुगयं मे गन्धं कुरु देवमनुष्येषु तं त्वाभिहरे दीर्घायुष्ट्वाय वर्चस इति वनस्पतीनां पुष्पमसीति स्रजमाबध्नीते वनस्पतीनां पुष्पमसि पुगयगन्ध पुगयं मे गन्धं कुरु देवमनुष्येषु तं त्वाभिहरे दीर्घायुष्ट्वाय वर्चस इत्यादर्शोऽसीत्यादर्श आत्मानं वीक्षेतादर्शोऽस्या मा दृश्यासन्देवमनुष्या उभये शोभोऽसि शोभासमहं देवमनुष्येषु रोचोऽसि रोचासमहं देवमनुष्येष्वित्यपोद्धृत्य स्रजमादेशयेतोक्ता धर्माः संवत्सरेषु गौर्दक्षिणा १८

वेदमधीत्य व्रतानि चारित्वा ब्राह्मणः स्नास्यन्संभारानुपकल्पयते ऽहतं वास एरकां स्नानमनुलेपनं सुमनस आञ्जनमादर्शमहते वाससी त्रिवृतं मणिं वैणवं दगडं शुक्ले उपानहौ नापित उपक्लृप्त उत्तरत उपतिष्ठत्येरकामास्तीर्याहतेन वाससोदग्दशेन प्रच्छाद्य तत्रैनं प्राङ्मुखमुपवेश्य दगडमप्सु पादयेद्द्विषतां वज्रोऽसीति मेखलां विस्रंसयेदुदुत्तममिति तां चैवाप्सु पादयेत्केशान्तकरणेन मान्त्रा व्याख्याताः परिवापनं च शिरोऽग्रे वपते ततः श्मश्रूणि तत इतरागय-

ङ्गान्यनुपूर्वेण केशश्मश्रुलोमनखान्यश्वत्थस्य मूले निखनेदुदुम्बरस्य वापहतो मे पाप्मेति शीतोष्णाभिरद्भिर्हिरण्यान्तर्हिताभिरेनं स्नापयेच्छिवा नः शंतमा भव सुमृडीका सरस्वति मा ते व्योम संदृशीति रोहिण्यां स्नायात्प्रजापतेर्वा एतन्नक्षत्रं प्रजावान्भूयासमिति मृगशिरसि स्नायात्सोमस्य वा एतन्नक्षत्रं सोमेज्या मोपनमेदिति तिष्ये स्नायाद्बृहस्पतेर्वा एतन्नक्षत्रं ब्रह्म बृहस्पतिर्ब्रह्मवर्चसी भूयासमिति हस्ते स्नायात्सवितुर्वा एतन्नक्षत्रं सवितृप्रसूतो भूयासमित्यनूराधासु स्नायान्मित्रस्य वा एतन्नक्षत्रं मित्राणां प्रियो भूयासमिति श्रवणे स्नायाद्विष्णोर्वा एतन्नक्षत्रं यज्ञो वै विष्णुर्यज्ञो मोपनमेदिति तमहतेन वाससा परिदधीत परीमं सोमेति सव्यमग्रेऽक्ष्यञ्जीत यशसा मेत्यथ दक्षिणं त्रिवृतं मणिं कण्ठे प्रतिमुञ्चते पालाशं स्वस्त्ययनकामः स्वस्त्ययनोऽसीति बैल्वं ब्रह्मवर्चसकामो ब्रह्मवर्चसी भूयासमित्यर्कमन्नाद्यकामोऽर्कवानन्नादो भूयासमिति गन्धर्वोऽसि विश्वावसुः स मा पाहि स मा गोपायेति वैणवं दण्डमुपादत्त उपानहावादधीत नेत्रे स्थो नयतं मामिति दक्षिणमग्रे प्रतिमुञ्चते तस्य व्रतानि भवन्ति नाजातलोम्नयोपहासमिच्छेद्वर्षति न धावेन्नोपानहौ स्वयं हरेन्न फलानि स्वयं प्रचिन्वीत न प्रतिसायं ग्रामान्तरं व्रजेन्नैको वृषलैः सह नोदपानमवेक्षेन्न वृक्षमारोहेन्न संक्रममारोहेन्नानन्तर्धायासीत नापरया द्वारा प्रपन्नमन्नमश्नीयान्न शुक्तं न द्विःपक्वं न पर्युषितमन्यत्र शाकमांसयवपिष्टान्नपृथुकफाणितदधिमधुघृतेभ्यो नानर्मणि हसेन्न नग्नः स्नायाच्छुक्ता वाचो न भाषेत जनवादं कलहांश्च वर्जयेत्त्रयः स्नातका भवन्तीति ह स्माहारुणिर्गौतमो विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति तेषामुत्तमः श्रेष्ठस्तुल्यौ पूर्वौ स्नात्वाचार्यं ब्रूयान्मधुपर्कं मे भवानानयत्वित्याचार्यकल्पो वा तस्मै प्राङ्मुखायासीनाय मधुपर्कमाहरेद्विष्टरपाद्यार्घ्याचमनीयान्येकैकमनुपूर्वेण विष्टरमध्यास्ते पाद्येन पादौ प्रक्षालयते मयि श्रीः श्रयतामिति सव्यं पादमग्रे शूद्रा चेन्मयि पद्या विराड् इत्यथ दक्षिणं मयि वर्च इत्यर्घ्यं प्रतिगृह्णीयादाचमनीयाभिराचामेत्पात्रचमसं विष्टरोपाहतमधस्ताद्विष्टरौ संहिताग्रौ भवत एकविष्टर उत्तरतस्तयोर्मध्ये दधि मधु संनिहिते भवतो दध्ना चेद्दधिमन्थोऽद्भिश्चेदुदमन्थः पयसा चेत्पयस्यस्तं प्रतिगृह्णीयाद्देवस्य त्वेति तं प्रतिगृह्य भूमौ प्रतिष्ठाप्यावघृष्याङ्गुष्ठेनोपकनिष्ठिकया च मह्यं त्वा यशसेऽन्नाद्याय ब्रह्मवर्चसायेति त्रिः प्राश्नीयाच्छेषमुत्तरतः प्रतिगृह्य ब्राह्मणाय दद्यादभ्युक्ष्य वाब्राह्मणाय गर्ते वा निखनेत्परः स्वधितिपाणिर्गां दृष्ट्वाह गौर्गौरिति तामभिमन्त्रयते गौर्धेनुरित्योमुत्सृजतेति ब्रूयात्कर्तव्या चेत्कु-

रुतेति ब्रूयाद्गौर्धेनुर्हव्या माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः । प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट पिबतूदकं तृणान्यत्त्वित्यथ षडर्घ्यार्हा भवन्त्यृत्विगाचार्यः स्नातको राजाभिषिक्तः प्रियः सखा श्रोत्रियश्चेति तेभ्य आतिथ्यं गां कुर्यात्तामतिथय इति प्रोक्षेत् १९

स्नात्वा मातापितरौ परिचरेत्तदधीनः स्यात्ताभ्यामनुज्ञातो जायां विन्देतानग्निकां समानजातीयामसगोत्रां मातुरसपिण्डां ज्यायसः कनीयसीं दूतमनुमन्त्रयते ऽनृक्षरा ऋजवः सन्तु पन्था एभिः सखायो यन्ति नो वरेयम् । समर्यमा सं भगो नोऽनुनीयात्सं जास्पत्यं सुयममस्तु देवा इति पाणिग्रहणेऽग्निमाह्रियमाणमनुमन्त्रयतेऽग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोऽनुमन्यतां यथेथं स्त्री पौत्रमघं न रोदादिति प्रज्वलितमुपतिष्ठत इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि प्रबुध्यतामियमिति पुरस्तादग्नेर्ब्राह्मणो वाग्यतः प्रत्यङ्मुख उदकुम्भं धारयंस्तिष्ठेद्दक्षिणतोऽग्नेः शमीपलाशमिश्रान्लाजाञ्छूर्पे माता धारयेन्मातुरभावे तन्मात्री प्रत्यगग्नेरेरकां तेजनीं वान्यद्वैवंजातीयं संवेष्ट्य निदध्याद्यथा प्रसार्यमाणं पश्चार्धे बर्हिषः प्राप्नोत्यथास्यै वाससी प्रोक्ष्यानुमन्त्र्य ददाति या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तामभितोऽददन्त । तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मतीदं परिधत्स्व वास इति तां ब्रूयादिमामेरकां दक्षिणेन पादेनाभिजहीति प्र मे पतियानः पन्थाः कल्पतामित्यजपत्यां स्वयं जपेत्प्रास्या इति दक्षिणत एरकायां भार्यामुपवेश्योत्तरतः पतिरुभावन्वारभेयातां स्वयमुच्चैर्जुहुयाज्जायायामन्वारब्धायां महाव्याहृतिभिर्हुत्वा या तिरश्चीति सप्तभिर्जुहोति संपातं प्रथमया मूर्धन्यासिञ्चेद्या तिरश्ची निपद्यसेऽहं विधरणी इति । तां त्वा घृतस्य धारया संराधा राधयामसि संराधायै स्वाहा १ मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज प्रजां पश्यन्ती सुमनस्यमाना स्वाहा २ अन्वद्य नोऽनुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनस्तत्करोतु समृध्यतां स्वाहा ३ द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनं धयतस्ते पुत्रान्सविताभिरक्षतु । आ वाससः परिधानाद्बृहस्पतिर्विश्वे देवा अभिरक्षन्तु पश्चात्स्वाहा ४ अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाघम् । शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशं स्वाहा ५ यानि कानि च

पापानि सर्वाङ्गेषु तवाभवन् । पूर्णाहुतिभिराज्यस्य सर्वाणि तान्यशीशमं स्वाहा ६ प्रजापत इत्येका ७ २०

अथास्या दक्षिणेन पाणिना दक्षिणं पाणिं गृह्णाति प्रहस्तं पुंसोऽङ्गुली स्त्रियः साङ्गुष्ठं मिथुनकामो गृह्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासत् । भगोऽर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयोऽग्निष्टे पतिस्तुरीयोऽहं मनुष्यजा इत्युपनयनावृताश्मानमधिष्ठापयेत्स्त्रीवत् उत्तरपुरस्तादग्नेर्भार्यया संप्रेक्ष्यमाणो जपत्यघोरचक्षुरपतिघ्नी म एधि शिवा पशुभ्यः सुमनाः सुवर्चाः । जीव-सूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा । अदुर्मङ्गलीः पतिलोकमाविश शं न एधि द्विपदे शं चतुष्पदे तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्रयातै यस्यामुशन्तः प्रहरेम शेफम् अमोऽहमस्मि सा त्वं सामाहमस्म्यृक्त्वं मनोऽहमस्मि वाक्त्वं द्यौरहं पृथिवी त्वं तावेहि संभवाव सह रेतो दधावहै पुंसे पुत्राय वेत्तवै मामनुव्रता भव सहशय्या मया भवासावित्यथास्या नाम गृहीत्वाग्निं परिक्रमेयातामीर्त्वमस्यूर्क्ते माता नाम सा मामेहि सह प्रजया सह रायस्पोषेणेति तस्यां प्रत्याव्रजितायां भ्रातान्यो वा सुहृदभिघारितान्लाजाञ्छूर्पादञ्जलिनोपघातमञ्जलावावपेदुपस्तीर्णाभिघारितान् कृत्वा तानितराग्नौ जुहुयात्कन्यलेयं नार्यर्यम्णमिति कन्यला पितृभ्यः पति-लोकं यतीयमव दीक्षामयक्षत स्वाहा १ इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा २ अर्यम्णं नु देवं कन्या-ग्निमयक्षत । स इमां देवो अर्यमा प्रेतो मुञ्चातु मामुतः स्वाहेति ३ होमान्तेषु जपति चतुर्विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विष इति तूष्णीं धारिका कामायावपेच्चतुर्थं दक्षिणं शूर्पपुटं काम इत्याचक्षत उत्तर-पुरस्तादग्नेः सप्त पदान्यभ्युत्क्रमयेदेकमिष इति प्रतिमन्त्रमेकमिषे विष्णु-स्त्वान्वेतु । द्वे ऊर्जे विष्णुस्त्वान्वेतु । त्रीणि रायस्पोषाय विष्णुस्त्वान्वेतु । चत्वारि मयोभवाय विष्णुस्त्वान्वेतु । पञ्च प्रजाभ्यो विष्णुस्त्वान्वेतु । षड्तुभ्यो विष्णुस्त्वान्वेतु । सखा सप्तपदी भवेति सप्तमे प्राचीमवस्थाप्यो-दकुम्भेन मार्जयेरन्नापोहिष्ठीयाभिस्तिसृभिः प्रेक्षकाननुमन्त्रयते सुमङ्गलीरियं

वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतनेति प्रेक्षये-द्ध्रुवमरुन्धतीं सप्त ऋषीन्पश्यानीति प्रतिजानानां ध्रुवोऽसीति ध्रुवमुपतिष्ठते ध्रुवोऽसि ध्रुवाहं पतिकुले भूयासममुष्येति पतिनाम गृह्णीयादसावित्यात्मनो ऽरुन्धतीमरुन्धत्यरुद्धाहं पत्या भूयासममुनेति पतिनाम गृह्णीयादसावित्यात्मनः २१

पूषा त्वेत इति प्रस्थितामनुमन्त्रयते पूषा त्वेतो नयतु हस्तगृह्याश्विनौ त्वा प्रवहतां रथेन । गृहान्गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमावदासीति स्वं कुलं प्राप्तां कल्याणशीलाः कल्याणप्रजाः समवजीर्णाः प्रत्यवरोपयन्तीह प्रियं प्रजया ते समृध्यतामस्मिन्गृहे गार्हपत्याय जागृहि । एना पत्या तन्वं संसृजस्वाथाजीव्रो विदथमावदासीति प्रत्यवरोप्यानडुहे चर्मण्युत्तरलोमन्युपवेशयेदिह गावो निषीदन्त्विहाश्वा इह पुरुषाः । इहो सहस्रदक्षिणोऽभि पूषा निषीदत्विति कुमारमुपस्थ आधाय शकलोटानावपेत्फलानि वोत्थाप्य कुमारमन्वारब्धायां जुहुयादिह धृतिरित्यष्टाभिः स्वाहाकारान्तैरिह धृतिरिह स्वधृतिरिह रन्तिरिह रमस्व । मयि धृतिर्मयि स्वधृतिर्मयि रमो मयि रमस्वेति त्रिरात्रमक्षारालवणाशिनौ ब्रह्मचारिणावधः संवेशिनावसंवर्तमानौ सह शयातामूर्ध्वं त्रिरात्रात्संभवो निशायां जायापतिकर्मण्यं प्रायश्चित्तीर्जुहुयादग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै प्रजाघ्नी तनूस्तामस्या अपजहि स्वाहा । वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पशुघ्नी तनूस्तामस्या अपजहि स्वाहा । सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पतिघ्नी तनूस्तामस्या अपजहि स्वाहा । चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै गृहघ्नी तनूस्तामस्या अपजहि स्वाहा । अग्ने वायो सूर्य चन्द्र प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तय स्थ ब्राह्मणो वो नाथकाम उपधावामि यास्यै यशोघ्नी तनूस्तामस्या अपहत स्वाहेति स्थालीपाकादग्निं प्रजापतिं चेष्ट्वा संपातांश्चमस आनीय स्रोतांस्याङ्क्ष्वेत्येनां ब्रूयान्नाभिं प्रथमं ततो यान्यूर्ध्वं ततो यान्यर्वाञ्चयूर्ध्वमर्धरात्रात्संवेशनं विष्णुर्योनिं कल्पयत्वित्येतेन तृचेन

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु

आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते

गर्भं धेहि सिनीवलि गर्भं धेहि सरस्वति
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ

हिरण्ययी अरणी यं निर्मन्थतामश्विनौ
तं ते गर्भं दधाम्यहं दशमे मासि सूतवा

इत्यृतावृतावेवमेव संवेशने हुत्वाचार्याय गां दद्याददर्शने ब्राह्मणेभ्यो गां दद्यात् २२

सायंप्रातर्होमेऽग्नय इति प्रथमामाहुतिं जुहोति प्रजापतय इत्युत्तरामेवं प्रातरग्निस्थाने सूर्यः सायंप्रातरशनस्य बली वर्धयित्वा पूर्वस्मादग्नौ जुहोत्यग्नये स्वाहा सोमाय स्वाहा धन्वन्तरये स्वाहा द्यावापृथिवीभ्यां स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा सर्वाभ्यो देवताभ्यः स्वाहा प्रजापतये स्वाहेति मनसोत्तरां तत एवोत्तरतोऽग्नेर्बलिं हरति ये हर्षणा वेपना स्फातिमाहरा वातस्य भ्राजमनुसंचरन्ति । तेभ्यो बलिमन्नकामो हराम्यन्नं पयस्वद्बहुलं मे अस्त्वित्येवमशनायत्यायस्थाने मृत्योरधिष्ठानाय स्वाहेति शेषस्य बलिहरणं प्रदक्षिणं गृह्याभ्यो देवताभ्यो बलिं नयामि तन्मे जुषन्तां ता मा पान्तु ता मा गोपायन्तु ता मा रक्षन्तु ताभ्यो नमस्ताभ्यः स्वाहेत्युदधाने मध्येऽगारस्योत्तरपूर्वार्धे शयने देहल्यां संवरणे ब्रह्मायतन एतेष्वायतनेषु शेषं धन्वन्तरये निनयेत्सदा गृहेषु स्वस्तिवाचनं सा महाशान्तिरित्याचक्षते २३

नवेन यक्ष्यमाणः पुराणेनाग्रे यजेताग्निधन्वन्तरी प्रजापतिमिन्द्रं तिस्रश्च नवाहुतीर्नवेन यजेत शरदि व्रीहीणां वसन्ते यवानां वर्षासु श्यामाकानामैन्द्राग्नो वैश्वदेवो द्यावापृथिव्यश्चरव एकचरुर्वोक्ते एवोपस्तरणाभिघारणे द्विर्हविषोऽवद्यत्यथ प्राश्नीयाद्भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा । स नो मयोभूः पितो आविशस्व शं तोकाय तनुवे स्योन इत्येतमु त्यं मधुना संयुतं यवं सरस्वत्या अधि मनावचर्कृषुः । इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इति यवस्य प्राश्नीयादग्निः प्रथमः प्राश्नातु स

हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणीरिति श्यामाकस्य प्राश्नीयात् २४

इति जैमिनिसूत्रं पूर्वम्

श्राद्धं करिष्यन्तः स्नाताः शुचिवाससस्तिलैर्वास्त्ववकीर्य सव्यमाचरन्तोऽन्नमुपसाधयेरन्हविष्यैरुपसिच्यैवैवं दद्याद्यद्यद्दद्यात्तत्तद्धविष्यैरुपसिच्यैव हविष्या इति तिलानामाख्या दन्तधावनं स्नानीयानि पाद्यमनीय प्रथमोद्धृतं ब्राह्मणांस्त्र्यवदातानुपवेशयत्या मे गच्छन्तु पितरो भागधेयं विराजाहूताः सलिलात्समुद्रियात् । अक्षीयमाणमुपजीवतैनन्मया प्रत्तं स्वधया मदध्वमित्युपमूललूनान्दर्भान्विष्टरान्प्रसव्यान्कृत्वा ब्राह्मणेभ्यः प्रदद्यादेतत्ते पितरासनमसौ ये च त्वात्रानु तेभ्यश्चासनमित्येवं पितामहायैवं प्रपितामहाय हविष्योदकं तिरः पवित्रं गन्धान्सुमनसश्च दद्यादन्नमवत्त्वा घृतेनाभिघार्य दर्भान्परिस्तरणीयानिति तदादायाग्नौ करिष्यामीति ब्राह्मणाननुज्ञाप्य प्राग्दक्षिणामुखोऽग्निं प्रणयित्वा त्रिर्धून्वन्प्रदक्षिणमग्निं परिस्तृणाति प्राचीनावीती त्रिः प्रसव्यं त्रिः पर्युक्षेत्प्रदक्षिणं प्राचीनावीती त्रिः प्रसव्यमौदुम्बर इध्मः परिधयो भवन्ति मेक्षणं च पवित्रं संस्कृत्यान्नमुत्पूयाग्नौ पवित्रं प्रास्य मेक्षणेन जुहोत्यग्नये कव्यवाहनाय स्वधा नमः स्वाहा सोमाय पितृमते स्वधा नमः स्वाहेति यज्ञोपवीती भूत्वाप उपस्पृश्य यमायाङ्गिरस्वते स्वाहेति मेक्षणमग्नावनुप्रहरति नमस्कारान्कृत्वा यथादैवतं त्रिः पर्युक्षेत्प्रदक्षिणं प्राचीनावीती त्रिः प्रसव्यं सव्यञ्जनमन्नं पात्रेषु वर्धयित्वामासु पक्वमिति क्षीरं घृतं वा सिञ्चत्यामासु पक्वममृतं निविष्टं मया प्रत्तं स्वधया मदध्वमिति वर्धितान्यादिशत्येतद्वः पितरो भागधेयं पात्रेषु दत्तममृतं स्वधावत् । अक्षीयमाणमुपजीवतैनन्मया प्रत्तं स्वधया मदध्वममृता वागमृता वाचो अग्ने वाचोऽमृतत्वं त्रिवृतैकधामा । एभिर्मत्प्रत्तैः स्वधया मदध्वमिहास्मभ्यं वसीयोऽस्तु देवाः अयं यज्ञः परमो यः पितृणां पात्रदेयं पितृदैवत्यमग्ने । वाक्च मनश्च पितरो नः प्रजानीमाश्विभ्यां प्रत्तं स्वधया मदध्वम् । य इह पितरः पार्थिवासो ये अन्तरिक्ष उत ये समुद्रियाः । ये वाचमाप्त्वा अमृता बभूवुस्तेऽस्मिन्सर्वे हविषि मादयन्तामेषा व ऊर्गेषा वः स्वधा चामत्त च पिबत च मा च वः क्षेष्ट । स्वधां वहध्वममृतस्य योनिं यात्र स्वधा पितरस्तां भजध्वम् येह पितर ऊर्ग्देवता च तस्यै जीवेम शरदः शतं वयम् । ज्योतिष्मद्धत्ताजरं म आयुरित्यथैतानि ब्राह्मणेभ्य उपनिक्षिप्य

स्वाङ्गुष्ठेनानुदिशत्यमुष्मै स्वधामुष्मै स्वधेति यन्मेऽप्रकामा इति भुञ्जतोऽनुमन्त्रयते यन्मेऽप्रकामा उत वा प्रकामा समृद्धे ब्राह्मणेऽब्राह्मणे वा । य स्कन्दति निर्ऋतिं वात उग्रां येन नः प्रीयन्ते पितरो देवताश्च । वायुष्टत्सर्वं शुन्धतु तेन शुद्धेन देवता मादयन्तां तस्मिञ्छुद्धे पितरो मादयन्तामित्यक्रान्समुद्र इत्याश्वं गीत्वा संपन्नं पृष्ट्वाथाचामयेद्यज्ञोपवीती भूत्वाभिरमन्तां भवन्त इत्युक्त्वा प्रदक्षिणं कृत्वा यन्मे रामेति गच्छतोऽनुमन्त्रयते यन्मे रामा शकुनिः श्वापदश्च यन्मेऽशुचिर्मन्त्रकृतस्य प्राशत् । वैश्वानरः सविता तत्पुनातु तेन पूतेन देवता मादयन्तां तस्मिन्पूते पितरो मादयन्तामिति १

शेषमनुज्ञाप्य प्रत्येत्य प्राग्दक्षिणायतं चतुरश्रं गोमयेनोपलिप्यापहता असुरा रक्षांसि पिशाचाः पितृषद इति मध्ये रेखां काष्ठेनोल्लिख्य ये रूपानि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुनोत्त्वस्मादित्युल्मुकं दक्षिणतो निदधात्यनुलेखं दर्भानास्तीर्योदपात्रेणाचामयत्याचाम पितरसौ ये च त्वात्रानु ते चाचामन्त्वित्येवं पितामहायैवं प्रपितामहाय तेषु पिण्डान्निदधात्यनुनामापहस्तेनैतत्ते पितरसौ ये च त्वात्रानु तेभ्यश्च स्वधा नम इत्येवं पितामहायैवं प्रपितामहाय नामान्यजानतः पितरेतत्ते पितामहैतत्ते प्रपितामहैतत्त इति बन्ध्वजानत इदं पितृभ्यः पृथिवीषद्ध्य इदं पितामहेभ्योऽन्तरिक्षसद्ध्य इदं प्रपितामेभ्यो दिविषद्ध्य इत्यत्र पितरो मादयध्वं यथाभागमावृषायध्वमित्युदगावृत्या तमितोरासीतामीमदन्त पितरो यथाभागमावृषायिषतेति जपित्वा पूर्ववदाचामय्य नीचीं विस्रंस्य नमस्कारान्कृत्वा यथादैवतमेतद्वः पितर इति वस्त्राण्यादिशत्यूर्णास्तुकां दशाम्बरं वा एतद्वः पितरो वासो गृहान्नः पितरो दत्ताधत्त पितरो गर्भं कुमारं पुष्करस्रजं यथेह पुरुषोऽसदित्यञ्जनाभ्यञ्जने ददात्याङ्क्ष्वासावित्यभ्यङ्क्ष्वासाविति गन्धान्सुमनसश्च दद्यान्नमो वः पितर इति षड्भिर्नमस्कारैरुपतिष्ठते नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरो घोराय नमो वः पितरो बलाय नमो वः पितरो मन्यवे स्वधायै च पितरो नमो व इत्यूर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थ तर्पयत मे पितॄनित्यपः प्रसिच्य मा मे क्षेष्टेत्यभिमन्त्र्य मा मे क्षेष्ट बहु मे पूर्तमस्तु ब्रह्माणो मे जुषन्तामन्नमन्नम् । सहस्रधारममृतोदकं मे पूर्तमस्त्वेतत्परमे व्योमन्देवाश्च पितरश्चैतत्पूर्तं मे अत्रोपजीवन्ताम् । अक्षीयमाणमुपजीवतैनन्मया प्रत्तं स्वधया

मदध्वमिति ये समानाः सुमनस इति प्रदक्षिणं कृत्वा ये समानाः सुमनसो जीवा जीवेषु मामकाः । तेषां श्रीर्मयि कल्पतामस्मिंल्लोके शतं समा इत्यामयावी पिण्डान्प्राश्नीयादन्नाद्यकामो वाग्नौ वा संक्षेपयेदप्सु वाभ्य-वहरेयुरजं गां ब्राह्मणं वा प्राशयेयुः शेषस्य प्राश्नीयान्न चान्नतृप्तिं गच्छेत् २

ऊर्ध्वमाग्रहायण्यास्त्रयोऽपरपक्षास्तेषामेकैकस्मिन्नेकैकाष्टका भवति शाका-ष्टका मांसाष्टकापूपाष्टकेति तत्र शाकमांसापूपानि हवींष्योदनं च तेषां हविषां स्थालीपाकावृताग्नौ जुहुयादष्टकायै स्वाहा एकाष्टकायै स्वाहा अष्टकायै सुराधसे स्वाहा संवत्सराय परिवत्सरायेदावत्सरायेद्वत्सरायावत्सराय कृणुता नमोभिः । त्वया वयं सुमतौ यज्ञियानां ज्योगजीता अहताः स्याम स्वाहेति हुत्वोपतिष्ठत एहि भगैहि भगैहि भगेति मध्यमायां गां कारयेत्तामष्टकायै प्रोक्षेत्तस्यास्त्रीणि सव्यान्युपोद्धरति पार्श्वमपघनीं श्रोणीमिति श्वो भूते श्राद्धम-न्वष्टक्यं तदहर्वा ब्राह्मणान्हविरर्हानुपवेश्य तांस्तर्पयित्वा तस्मादग्नेर्दक्षिणतः षडग्नीन्प्रणीय तेषामेकैकस्मिन्नेकैकां कर्षूं खानयेदायामेन प्रादेशमात्रीं पार्थिवेन त्र्यङ्गुलामवाग्वैकाङ्गुलामिति तासु पिण्डान्निदधात्यनुनामापहस्तेन मज्ञाः पि-तृभ्य उपकर्षति पार्श्वानि स्त्रीणां तत्राध्वर्यवः केचिदधीयते मध्यमं पिण्डं पत्नी प्राश्नीयात्प्रजाकामस्य तथा श्राद्धस्य स्थालीपाकं वा ३

आहिताग्नेः शरीरनाशे त्रीणि षष्टिशतानि पलाशत्सरूणामाहृत्य तैः प्रतिकृतिं कुर्यात्कृष्णाजिने ऽशीत्यर्धं शिरसि दध्याद्ग्रीवायां तु दशैव तु बाह्वोश्चैव शतं दध्यादङ्गुलीषु पुनर्दश उरसि त्रिंशतं दध्याज्जठरे विंशतिं तथोर्वोश्चैव शतं दध्यात् मेढ्रे चापि दशैव तु जानुजंघयोस्त्रिंशतं दध्यात् दश पादाङ्गुलीष्वपि इत्येतावन्तीह पुरुषस्य शरीराणि भवन्तीति विज्ञायते मध्ये शरीरं सती-शरीरमुप्तकेशं निकृत्तनखं प्रक्षालितं चितामारोपयन्त्यत्र पात्राण्यपि चिनोति तस्यामेनमादधाति तस्य नासिकयोः स्रुवौ निदध्यादित्येतेनानुवाकेन य एवंवित्स्यात्स यदोपतापी स्यादिति पूर्वमेव चतुर्गृहीतं गृहीत्वान्यं यथा-संभवमास्ये हिरण्यशकलमाधायाग्नीनुपोह्य सामभिरुपतिष्ठते नाके सुपर्णमिति ग्राम्यं गेयमुदिते धूमे त्वेषस्ते धूम ऋणवतीत्यग्नौ समारूढेऽग्ने मृड महं असीत्येतयोरन्यतरेण पराक्पराग्वा असौ लोक इति ब्राह्मणम् ४

आहिताग्नेश्चेत्पूर्वं जाया म्रियेत तां निर्मन्थ्येन दहेत्सांतपनेन वा श्मशानकृतं स्वकृतमनिरिणमपसलवक्रोदकं कृत्वा यत्र वौषधयो जायन्ते तत्र शरीरं दग्ध्वोदककरणाय यान्त्यनवेक्षमाणा न वाहिनीषु कुर्वन्ति तेषां यो यः पश्चाज्जातः स सोऽग्रं कुर्यादुपकूलमकूले कूपं खात्वा सव्यहस्तस्यानामिकया सकृदुदकं प्रोहति प्रेतस्य नामकरणेन वाहिनीषु चेदुद्ग्रथ्य केशान्निमज्यै-काञ्जलिं दत्त्वोपसंगृह्य केशानुल्मुकस्याग्निमारभेताग्ने शूकाहे पापं मेऽपहतेति शमीमारभेत शम्यसि शमय मे पापमित्यश्मानमारभेताश्मासि स्थिरोऽस्यहं स्थिरो भूयासमिति तूष्णीं गोमयं कृतोदकं दक्षिणामुखमासीनं तमनुगन्तार उपविशन्ति तानितरः कल्याणीभिर्वाग्भिः प्रत्याहोपास्तमनवेलायां ग्रामं प्रविशन्ति तां रात्रिमेकमाषेण वसन्ति शान्त्या वा श्वो भूते क्षीरोदके संसृज्य शरीराण्यवसिञ्चत्यजशृङ्गेण गोशृङ्गेण मृण्मयेन कोशेन वा तृतीयायां गन्धौषधीभिः संसृज्य शमीशाखया पलाशशाखया वासंह्लादयन्कुम्भ्याम-वदध्यात्स्त्री चेद्धट एव दध्याच्चतुष्पथमतीत्य महावृक्षं नदीं वा तीर्थेषु निखनेत्प्रेतस्य तृतीयायां स्नापयन्त्यपामार्गेण मृदा गोमयेन च वासांसि प्रक्षाल्य दशरात्रमासते चतुर्थ्यां भिक्षामावर्तयेरन्तस्य सिद्धमग्नौकरणं कालं च यावदाकांक्षेयुर्भिक्षयानुसंतरेयुरूर्ध्वं दशरात्राच्छ्राद्धं दद्युर्न दद्युरा श्राद्धस्य प्रदानान्नक्षत्रेषु नियमो मघास्वेकतारेषु भरणीषु च पूर्वसमयेषु न रोहिण्यामुत्तरेषु ध्रुवेषु ब्राह्मणान्हविरर्हानुपवेश्य तांस्तर्पयित्वैकवत्पिण्डं दद्यान्न चान्विति ब्रूयात्सर्वैः कामैस्तर्पयेदनुगमनं कृत्वा शेषमनुज्ञाप्य प्रत्येत्य शेषं न प्राश्नी-याद्ब्राह्मणान्स्वस्ति वाच्य प्राश्नीयात् ५ अथातो गृहकर्मणो गृहवृद्धिमि-च्छन्मासिमास्यृतावृतौ संवत्सरेसंवत्सरे वा पूर्वपक्षे पुण्ये नक्षत्रे गृहशान्ति-मारभेतापामार्गपलाशशिरीषार्कौदुम्बरसदाभद्रामृततृणमिन्द्रवल्लीभिर्बद्ध्वा गृहान्परिमार्ज्य परिसमूह्यापोऽभ्युक्ष्य पञ्चगव्यैर्दर्भमुष्टिना संप्रोक्ष्य सिद्धार्थ-कान्संप्रकीर्य वास्तुबलिं कृत्वा वास्तोर्मध्ये वास्तोष्पतिं हुत्वा सावित्र्या सहस्रं जुहुयात्ततो दक्षिणपुरस्तात्ततो दक्षिणपश्चात्तत उत्तरपुरस्तात्तत उत्तरपश्चान्मध्ये वा गौर्वासो हिरण्यं दक्षिणा ब्राह्मणानन्नेन परिविष्यं पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वैवं प्रयुञ्जानोऽनन्तं महान्तं पोषं पुष्यति बहवः पुत्रा भवन्ति न च बालाः प्रमीयन्ते नाग्निर्दहति न दंष्ट्रिणः खादयेयुर्न तस्कराः सपत्ना रक्षांसि पिशाचा अपि बाधन्ते यदि गावः प्रतप्येरन्गवां मध्य आहुतिसहस्रं जुहुया-दित्येतेनैव कल्पेनाश्वोष्ट्रखराजाविकमहिषहस्तिकुलमन्यतरद्द्विपदां चतुष्पदां

च व्याख्यातम् ६

अथातोऽद्भुतशान्तिं व्याख्यास्यामोऽथ यद्यगारे स्थूणा विरोहेत्कपोतो वागारं गच्छेद्गौर्वा गां धयेदनड्वान्वा दिवमुल्लिखेदनग्नौ वा धूमो जायेतानग्नौ वा दीप्येत मधु वा जायेत वल्मीकं वोपजायेत मण्डूको वाम्भृणे वाश्येच्छ्वानो वा गृहे पर्यटेयुरित्येतानन्यांश्च यत इन्द्र भयामहे । सदसस्पतिमद्भुतम् । अधायामुतेसुमुदस्य । सनादग्ने । यद्वा उ विश्पतिः शितः । प्रत्यग्ने । यं रक्षन्ति । प्राजापत्ययर्चा पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्जुहोति एतान्यृक्सामानि गायेत् ७

अथातोऽनश्नत्संहितायाः कल्पं व्याख्यास्यामः शुचिवासाः स्याच्चीरवासा वा हविष्यमन्नमशनमिच्छेदपः फलानि वा ब्राह्मणस्त्वेव प्रत्याहरेत्प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य शुचौ देश उदकान्ते वा गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्युक्ष्याग्निमुपसमाधायाघारावाज्यभागौ हुत्वाज्याहुतीर्जुहोत्यग्नये सोमाय रुद्रायेन्द्राय ब्रह्मणे प्रजापतये बृहस्पतये विश्वेभ्यो देवेभ्यो ऋषिभ्य ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै प्रज्ञायै मेधायै सावित्र्यै सदसस्पतयेऽनुमतये च हुत्वा दर्भेष्वासीनः प्राक्कूलेषूदक्कूलेषु वा दक्षिणेन पाणिना दर्भान्धारयन्नोंपूर्वा व्याहृतीः सावित्रीं च चतुरनुद्रुत्य मनसा सामसावित्रीं च सोमं राजानं ब्रह्मजज्ञानीये चोभे वेदादिमारभेत संततमधीयीत मौनी न चान्तरा विरमेत् अथान्तरा व्याहरेदथान्तरा विरमेत्रीन्प्राणानायम्यातम्याचम्य वृतान्तादेवारभेताप्रतिभायां यावता काळेन वेदमधीयीत तावत्कालमधीयीत यज्ञानीयादृक्तो यजुष्टः सामतस्तदवाप्नुयात्तद्ब्राह्मणं तच्छान्दसं तद्दैवतं साम वा अक्रानित्येतदेव वाभ्यस्येत् तिष्ठन्नासीनः शयानश्चङ्क्रम्यमाणो वा संहितां प्रयुञ्ज्यात्समृद्धिरेवास्य भवत्याद्यं त्रिवर्गं वा सहस्रकृत्व इति जैमिनिश्च वार्यमन्तं वा यथाकामी वा द्वादश संहिता अधीत्य यदनेनानध्यायेष्वधीतं यद्गुरवः कोपिता यान्यकार्यणि कृतानि ताभिः पवते शुद्धमस्य पूतं ब्रह्म भवत्यथापरा द्वादश संहिता अधीत्य ताभिः प्रजापतेर्लोकमवाप्नोत्यथापरा द्वादश संहिता अधीत्य ताभिरुशनसो लोकमवाप्नोत्यनश्नत्संहितासहस्रमधीत्य ब्रह्मभूतो विरजो भवति कामचारी सर्वान्कामानवाप्नोति संवत्सरं भैक्षभक्षः प्रयुञ्जानश्चक्षुर्लभते षण्मासान्या-

वकभक्षश्चतुरो मासानुदकसक्तुभक्षो द्वौ मासौ फलभक्षो मासमब्भक्षो द्वाद-शरात्रं वानश्नन्क्षिप्रमन्तर्धीयते ज्ञातीन्पुनाति सप्तातीतान्सप्तानागतानात्मानं च पञ्चदशं तारयते तामेतां देवनिश्रेणीत्याचक्षत एतया वै देवा देवत्वमगच्छन्नृषय ऋषित्वं तस्य ह वा एतस्य ब्रह्मसत्रस्य त्रिविध एवारम्भो भवति प्रातःसवने माध्यंदिने सवने ब्राह्मे वापररात्रे तस्य ह वा एतस्य द्वावेवानध्यायौ यदा-त्माशुचिर्यद्देशस्तद्वा एतत्प्रजापतिः सप्तऋषिभिः प्रोवाच सप्तऋषयो महाजह्नवे महाजह्नुर्ब्राह्मणेभ्यः ८

अथ ग्रहाणामातिथ्यं बलिकर्मोपरुतं व्याख्यास्यामः

अश्रद्दधानमशुचिकरणमजाप्यं त्यक्तमङ्गलं
सुव्यक्तं ग्रहा नयन्ति पुरुषं यमसादनम्

ग्रहाणां दीप्रचेष्टानां नक्षत्रपथचारिणाम्
ग्रहातिथ्यं प्रवक्ष्यामि शान्तिकर्मणि कारयेत्

भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ
सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ

कृष्णं शनैश्चरं विद्याद्राहुं केतुं तथैव च
ग्रहवर्णानि पुष्पाणि प्राज्ञस्तत्रोपकल्पयेत्

गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्यु-क्ष्याग्निमुपसमाधायाघारावाज्यभागौ हुत्वा ग्रहानावाहयन्त्यादित्यं मध्ये लो-हितं पूर्वदक्षिणतः सोमम् । पूर्वोत्तरतो बुधमुत्तरेण गुरुं पूर्वेण भार्गवम् । प-श्चिमे शनैश्चरं विद्याद्राहुं दक्षिणपश्चिमे पश्चिमोत्तरतः केतुं वृत्तमादित्याय त्रिकोणमङ्गारकस्य चतुरश्रं सोमाय बाणं बुधाय दीर्घचतुरश्रं बृहस्पतये पञ्चकोणं शुक्राय धनुः शनैश्चराय राहोः शूर्पं केतोर्ध्वजमिति

ईश्वरं भास्करं विद्यातुमां सोमं तथैव च
स्कन्दमङ्गारकं चैव बुधो नारायणं स्थितः

बृहस्पतिः स्वयं ब्रह्म शुक्रः शक्रस्तथैव च
यमं शनैश्चरं विद्याद्राहोः कालदूतिनः

केतोश्चित्रगुप्तश्चेत्येते ग्रहदेवताः
अग्निरापो भूमिर्विष्णुरिन्द्राणी प्रजापतिः सर्पो ब्रह्मेत्येते प्रत्यधिदेवताः

जातमर्क कलिङ्गेषु यामुनेषु च चन्द्रमाः
विन्ध्य अङ्गारकदेशो मध्यदेशो बुधः स्मृतः

बृहस्पतिः सिन्धुदेशः शुक्रदेशो घटेषु च
शनैश्चरस्तु सौराष्ट्रो राहुस्तु पूर्वदेशिकः

केतुः पर्वत इत्येते देशानां ग्रहजात इति अर्कसमिधमादित्याय प्रदेशमात्रा-भिघारितानाम्यादिभिर्जुहुयात्खादिरमङ्गारकाय पालाशं सोमायापामार्गं बु-धायाश्वत्थं बृहस्पतय औदुम्बरं शुक्राय शमीं शनैश्चराय राहोर्दूर्वाः केतोः कुशाग्रमित्यष्टाविंशतिमाज्याहुतीर्जुहोत्येताभिः पक्वाग्नेर्जुहोत्यादित्याय इ-लोदनं हविष्यमन्नमङ्गारकाय सोमाय घृतपायसं पयोदनं बृहस्पतये क्षीरोदनं शुक्राय दध्योदनं बुधाय तिलपिष्टमाषोदनं शनैश्चराय राहोर्मांसोदनं केतो-श्चित्रोदनमिति आ सत्येनेत्यादित्याय अग्निर्मूर्धा दिव इत्यङ्गारकाय आप्या-यस्व समेतु इति सोमाय ब्रह्म जज्ञानमिति बुधाय बृहस्पते अति यदर्य इति बृहस्पतये अस्य प्रत्नामनु द्युतमिति शुक्राय शं नो देवीरभिष्टय इति शनैश्चराय कया नश्चित्र आभुवदिति राहोः केतुं कृरावन्नकेतव इति केतोः रक्तां धेनुमा-दित्याय रक्तमनड्वाहमङ्गारकाय सोमाय शङ्खं बुधाय काञ्चनं बृहस्पतये वासः शुक्राय हयं नीलां गां शनैश्चराय राहोः कृष्णायसं केतोः कुञ्जरमिति सर्वेषामपि हिरएयं वा येन वा तुष्यत्याचार्यस्तद्ददाति

यथा समुत्थितं यन्त्रं यन्त्रेण प्रतिहन्यते
तथा ग्रहोपस्पृष्टानां शान्तिर्भवति दारुणम्

नादिशेत्तपसा युक्तं नादिशेद्दिवमाश्रितम्
न च देवान्तकं विप्रं वृत्तान्तां नारीं परिवृताम्

अहिंसकस्य दान्तस्य धर्मजितधनस्य च
नित्यं च नियमस्थस्य सदानुग्रहा ग्रहाः

ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः
पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः ९

इति जैमिनिसूत्रं समाप्तम्

Credits
Sources: Willem Caland, *The Jaiminigṛhyasūtra belonging to the Sāmaveda*, Lahore 1922.
Typescript: Entered by Thomas Zehnder
Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection

# भारद्वाजगृह्यसूत्रम्

उपनयनं व्याख्यास्यामः । स पुरस्तादेव संभारानुपकल्पयते पालाशमिध्मं खादिरमौदुम्बरं वैकङ्कतं वैतद्वृक्षीयामेव दर्वीं करोति त्वग्बिलां मूलदण्डारत्नीं चतुरङ्गुलं बिलं करोति । सादयाचारिकं कर्मेति विज्ञायते । गर्भाष्टमेषु ब्राह्मणमुपनयीत गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यं गर्भनवमेषु ब्राह्मणमित्यपरं वासांसि समामनन्त्यैणेयं ब्राह्मणो वसीत रौरवं राजन्यो बस्ताजिनं वैश्यो यदजिनं धारयेद्ब्रह्मवर्चवृद्धासो धारयेत्क्षत्रं वर्धयेदुभयं धार्यमुभयोर्वृद्ध्या इति विज्ञायते वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे हेमन्ते वा राजन्यं शरदि वैश्यं वर्षासु रथकारं शिशिरे वा सर्वानापूर्यमाणपक्षे पुण्ये नक्षत्रे विशेषेण पुंनामधेय आशितस्य कुमारस्य केशान्वापयित्वा स्नातमलंकृतमहतं वासः परिधाप्य प्राचीनप्रवण उदीचीनप्रवणे समे वा देशे स्थण्डिलमुद्धत्यावोक्ष्याग्निं मथित्वा लौकिकं वाहृत्य न्युप्योपसमादधाति १

प्रागग्रैर्दर्भैरग्निं परिस्तृणात्यपि वोदगग्राः पश्चात्पुरस्ताच्च भवन्ति दक्षिणः पक्ष उपरिष्टाद्भवत्यधस्तादुत्तरो दक्षिणेनाग्निं ब्रह्मायतने दर्भान्संस्तीर्य मयि गृह्णाम्यग्रे अग्निमिति द्वाभ्यामात्मन्यग्निं ध्यात्वोत्तरेणाग्निं पात्रेभ्यः संस्तीर्य यथार्थं द्रव्याणि प्रयुनक्त्यश्मानमहतं वासोऽजिनं मौञ्जीं मेखलां त्रिवृतं ब्राह्मणस्य मौर्वीं राजन्यस्य सौत्रीं वैश्यस्य बैल्वं पालाशं वा दण्डं ब्राह्मणस्य नैयग्रोधं राजन्यस्यौदुम्बरं वैश्यस्यैकविंशतिदारुमिध्मं संनह्यत्याहुतिपरिमाणं वा तस्मिञ्छम्याः परिधीनुपसंनह्यति दर्वीं कूर्चमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं येन चार्थः सकृदेव सर्वाणि यथोपपादं वैतस्मिन्काले ब्रह्मा यज्ञोपवीतं कृत्वाप आचम्यापरेणाग्निमतिक्रम्य दक्षिणतो ब्रह्मायतनात्तृणं निरस्याप उपस्पृश्याग्निमभिमुख उपविशत्यपरेणाग्निं प्राङ्मुख उपविश्य समावप्रछिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कृत्वान्येन नखाच्छित्त्वाद्भिरनुमृज्य २

पवित्रान्तर्हिते पात्रेऽप आनीयोपबिलं पात्रं पूरयित्वोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूय समं प्राणैर्धारयमाणोऽविषिञ्चन्हरत्युत्तरेणाग्निं प्रणीताः सादयित्वा दर्भैरपिदधाति प्रणीतावत्प्रोक्षणीः संस्कृत्य बिलवन्त्युत्तानानि कृत्वा विषा-

येध्मं त्रिः सर्वाभिः प्रोक्षति दर्वीं निष्टप्य संमृज्य पुनर्निष्टप्य निदधाति संमार्गानभ्युक्ष्याग्नावादधाति पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्योत्तरेणाग्निमङ्गारान्निरूह्य तेष्वधिश्रित्यावद्योत्य दर्भतरुणाभ्यां प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्याङ्गारान्प्रत्यूह्योदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय पवित्रे अग्नावाधाय शम्याभिः परिदधात्यपरेणाग्निमुदीचीनकुम्बां शम्यां निदधाति संस्पृष्टे मध्यमया प्राचीनकुम्बे दक्षिणामुत्तरां चापरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्प्राङ्मुख उपविशति यज्ञोपवीतं कृत्वाप आचम्य दक्षिणतः कुमार उपविश्यान्वारभते ३

अथ परिषिञ्चत्यदितेऽनुमन्यस्वेति दक्षिणतोऽनुमतेऽनुमन्यस्वेति पश्चात्सरस्वतेऽनुमन्यस्वेत्युत्तरतो देव सवितः प्रसुवेति समन्तमेवं हुत्वा परिषिञ्चति कृतवन्मन्त्रान्नमतीध्मं त्रेधाभ्यज्य सकृदेवादधात्ययं त इध्म आत्मा जातवेदस्तेन वर्धस्व चेन्द्धि वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहेत्युत्तरं परिधिसंधिमन्ववहृत्य दर्वीं दक्षिणाप्राञ्चमासीनः संततमृजुमाघारमाघारयति प्रजापतिं मनसा ध्यायन्न च स्वाहा करोति दक्षिणं परिधिसंधिमन्ववहृत्येन्द्राय स्वाहेति प्राञ्चमुदञ्चं संततमृजुमाघारमाघार्याज्यभागौ जुहोत्यग्नये मेधपतये स्वाहेत्युत्तरार्धपूर्वार्धे सोमाय मेधपतये स्वाहेति दक्षिणार्धपूर्वार्धे तावन्तरेणेतरा आहुतीर्जुहोति सर्वदर्विहोमाणामेष कल्पो मन्त्रान्ते नित्यः स्वाहाकारोऽमन्त्रास्वमुष्मै स्वाहेति यथादेवतमादिष्टदेवतेऽथानादिष्टदेवतेऽग्नये स्वाहा सोमाय स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहाग्नये स्विष्टकृते स्वाहेति व्याहृतीभिर्जुहोत्येकैकशः समस्ताभिश्च ४

तत एता आहुतीर्जुहोति या तिरश्ची निपद्यसेऽहं विधरणी इति । तां त्वा घृतस्य धारया जुहोमि वैश्वकर्मणीं स्वाहा । यानूची निपद्यसेऽहं संराधनी इति । तां त्वा घृतस्य धारयाग्नौ संराधनीं यजे स्वाहा । संराधन्यै देव्यै स्वाहा । प्रसाधन्यै देव्यै स्वाहा । सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषं स्वाहा । युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम् । त्वं भिषग्भेषजस्यासि कर्ता त्वया गा अश्वान्पुरुषान्सनेम स्वाहा । आयुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमं स्वाहेत्यथ वाससोऽन्तान्संमार्ष्टि या अकृन्तन्न-

वयन्या अतन्वत याश्च देवीरन्तानभितोऽददन्त । तास्त्वा देवीर्जरसे संव्य-यन्त्वायुष्मानिदं परिधत्स्व वास इत्यथैनं परिधापयति परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः । बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधा-तवा उ । जरां गच्छासि परिधत्स्व वासो भवा कृष्टीणामभिशस्तिपावा । शतं च जीव शरदः सुवर्चा रायश्च पोषमुपसंव्ययस्वेति ५

परिहितमभिमन्त्रयते परीदं वासो अधिधाः स्वस्तयेऽभूरापीनामभिशस्तिपावा । शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन्नित्यथास्य प्रथमवास्यमादत्ते यस्य ते प्रथमवास्यं हरामस्तं त्वा विश्वे अवन्तु देवाः । तं वा भ्रातरः सुहृदो वर्धमानमनुजायन्तां बहवः सुजातमित्यथैनं मौञ्ज्या मेखलया त्रिवृता मध्यतः संनह्यति या बृहती दुरिता रराणा शर्म वरूथं पुनती न आगात् । प्राणापानाभ्यां बलमाभरन्ती स्वसा देवानां सुभगा मेखलेयमिति ग्रन्थिं ग्रथ्नाति प्राणानां ग्रन्थिरसि स मा विस्रस इत्यथाजिनमुत्तरं परिधत्ते मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम् । अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहमिति जयाभ्यातानान्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति पूर्णा पश्चादिमं मे वरुन तत्त्वा यामि त्वं नोऽग्ने स त्वं नो अग्ने त्वमग्नेऽयास्ययाश्चाग्नेऽस्यनभिशस्तीश्च यदस्य कर्मणोऽत्यरीरिचं प्रजापत इत्युत्तमां हुत्वा गुरवे वरं ददाति ६

अपरेणाग्निं द्वयान्दर्भान्पूर्वापरानुदगग्रान्स्तृणाति तेषु पूर्वापरावुपतिष्ठेते प्राङ्मुखः प्रत्यङ्मुखस्य हस्तं गृह्णीयादित्येकं प्रत्यङ्मुखः प्राङ्मुखस्येत्यपरमथैनयोः प्रैषकृदञ्जली उदकेन पूरयत्यथास्याञ्जलिनाञ्जलावदुकमानयति शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु न इत्यथास्य दक्षिणेन हस्तेन दक्षिणं हस्तमभीवाङ्गुष्ठमभीव लोमानि गृह्णाति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तेन ते हस्तं गृह्णामि सवित्रा प्रसूतः को नामासीत्यसावितीतरः प्रत्याह तस्य नामाभिपद्य जपत्यसौ सविता ते हस्तमग्रभीदग्निष्ट आचार्यः कस्य ब्रह्मचार्यसि कस्मै त्वा काय त्वा कमुप-नयाम्यागन्ता मा रिषेण्यतः प्रस्थावानो भावस्थातु समन्यवो दृढाश्चिद-मरिष्णवः कृशाश्चिदमरिष्णव आ गन्त संरभावहै प्रेतो मृत्युं नुदावहै न मृत्युश्चरतीह ७

प्राणाय त्वाचार्याय परिददामि कुबेराय त्वा महाराजाय परिददामि तक्षकाय त्वा वैशालेयाय परिददाम्यग्नये त्वा परिददामि वायवे त्वा परिददामि सूर्याय त्वा परिददामि प्रजापतये त्वा परिददामि प्रजापत इमं गोपायामुमिति परिदायाथास्य दक्षिणमंसं प्रति बाहुमन्ववहृत्य नाभिदेशमभिमृशति युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाधियो मनसा देवयन्त इत्यथास्य दक्षिणं कर्णमाजपति भूस्त्वयि दधामि भुवस्त्वयि दधामीत्युत्तरं सुवस्त्वयि दधामीति दक्षिणमपि वोत्तरमेव द्विः सकृदेव दक्षिणमथैनमश्मानमास्थापयत्यातिष्ठेममश्मानमश्मेव त्वं स्थिरो भव प्रमृणीहि दुरस्यून्सहस्व पृतन्यत इति ततः समिधमाधापयत्यग्नये समिधमाहारिषं बृहते जातवेदसे यथा त्वमग्ने समिधा समिध्यस एवं मामायुषा वर्चसा सन्या मेधया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहेत्येकामादधाति तिस्र एके सप्तैके प्रदक्षिणमग्निं परिक्रम्य दक्षिणत उदगावृत्योपविश्योपसंगृह्य पृच्छति ८

सावित्रीं भो अनुब्रूहीति तस्मै सावित्रीं पच्छोऽन्वाह भूस्तत्सवितुर्वरेण्यं भुवो भर्गो देवस्य धीमहि सुवर्धियो यो नः प्रचोदयादित्यथ द्वितीयं द्वे च व्याहृती सावित्रीं चार्धर्चशोऽथ तृतीयं सर्वाश्च व्याहृतीः सावित्रीं चानवानं पुरस्ता-त्प्रत्यङ्मुखायैक आहुस्तां खल्विमां सावित्रीं संवत्सरादेक आहुर्द्वादशरात्रादेके त्रिरात्रादेके सद्य एकेऽथैनं पौरोडाशीयानां प्रथममुपकारयत्यथास्मै दण्डं प्रयच्छन्नाह ब्रह्मचार्यसि समिध आधेह्यपोऽशान कर्म कुरु मा दिवा सुषुप्था भिक्षाचर्यं चराचार्याधीनो वेदमधीष्वेत्यप एवाचार्यकुलेऽश्नीयादित्येकमपरं काममश्नीश्चेति हार्थो भवतीति शाल्मलीमूलो भारद्वाजो वाथास्याष्टा-चत्वारिंशद्वर्षाणि पुराणं वेदब्रह्मचर्यं संप्रदिशन्त्या वेदाध्ययनादित्येक आहुरा गोदानकर्मण इत्येकेऽथैनं दक्षिणे पाणावभिपद्योत्थापयत्युदायुषा स्वायुषेत्या-दित्यमुदीक्षयति तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतं शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदह् शतं ज्योक्च सूर्यं दृश इति ९

ततो भिक्षते यां मन्यत इयं मा न प्रत्याख्यास्यतीति तामाहृत्योपनिधायाचार्याय

प्राह तिस्रो भिद्यतेऽपरिमिता वा त्रिरात्रमक्षारलवणाश्यधःशायी भवत्यथास्य चतुर्थ्यां मेधाजननं कुर्वन्ति यत्रैकमूलः पलाशः प्राचीं वोदीचीं वा दिशं तं परिसमूह्य प्रक्षाल्य प्रदक्षिणमाज्येनाभ्यञ्जञ्जपति सुश्रवः सुश्रवसं मा कुरु यथा त्वं सुश्रवः सुश्रवा असयेवं मां सुश्रवः सुश्रवसं कुरु यथा त्वं सुश्रवो देवानां वेदेषु निधिगोपोऽस्येवमहं ब्राह्मणानां वेदेषु निधिगोपो भूयासमित्यथास्य षोडशवर्षस्य गोदानं कुर्वन्ति तस्य चौडेन कल्पो व्याख्यात एतावन्नाना सर्वान्केशान्वापयते गुरवे गां वरं ददाति न प्राग्गोदानकर्मण स्नानीयमभिहरते न गन्धान्संवत्सरं कृतगोदानो ब्रह्मचर्यं चरत्यग्निगोदानो वा भवति १०

चत्वारि विवाहकरणानि वित्तं रूपं प्रज्ञा बान्धवमिति तानि चेत्सर्वाणि न शक्नुयाद्वित्तमुदस्येत्ततो रूपं प्राज्ञायां च तु बान्धवे च विवदन्ते बान्धव-मुदस्येदित्येक आहुरप्रज्ञेन हि कः संवासोऽथैतदपरं न खल्वियमर्थेभ्य ऊह्यते प्रजननार्थोऽस्यां प्रधानः स योऽलं संलक्षणाय स्यात्स तामावहेत यस्यां प्रशस्ता जायेरन्न स्वपन्तीमुपगृह्णीत न चरन्तीं प्रथममभ्यागच्छंस्तां मङ्गल्यानि परिपृच्छेच्चतुरो लोष्टानाहरेद्वेदिलोष्टं गोमयलोष्टं सीतालोष्टं श्मशानलोष्टमिति तामाहैषामेकमादत्स्वेति सा चेद्वेदिलोष्टमाददीताध्यापकं यायजूकं जनयि-ष्यतीति विद्याद्यदि गोमयलोष्टं बहुपशुं जनयिष्यतीति विद्याद्यदि सीतालोष्टं कृष्टराधिकं जनयिष्यतीति विद्याद्यदि श्मशानलोष्टमादहनशीक्ष्णी परिख्या-तेति विद्यान्नैनामुपगृह्णीताथ खलु बहूनि लक्षणानि भवन्ति श्लोकं तु लाक्षणा उदाहरन्ति यस्यां मनोऽनुरमते चक्षुश्च प्रतिपद्यते । तां विद्यात्पुण्यलक्ष्मीकां किं ज्ञानेन करिष्यतीत्युदगयन उपगृह्णीत विज्ञायत उदगयनं देवानामिति दैवं पुनरिदं कर्म ११

दक्षिणायन इत्यपरं विज्ञायते दक्षिणायनं पितृणामिति पितृसंयुक्तं पुनरिदं कर्म पूर्वपक्ष उपगृह्णीत विज्ञायते पूर्वपक्षो देवानामिति दैवं पुनरिदं कर्मापरपक्ष इत्यपरं विज्ञायतेऽपरपक्षः पितृणामिति पितृसंयुक्तं पुनरिदं कर्म पूर्वाह्ण उपगृह्णीत विज्ञायते पूर्वाह्णो देवानामिति दैवं पुनरिदं कर्म मध्यंदिन उपगृह्णीत विज्ञायते मध्यंदिनमृषीणामित्यृषिसंयुक्तं पुनरिदं कर्माथापि विज्ञायते तस्मान्मध्यंदिने सर्वाणि पुण्यानि संनिपतितानि भवन्तीत्यपराह्ण उपगृह्णीत विज्ञायतेऽपराह्णः पितृणामिति पितृसंयुक्तं पुनरिदं कर्माथापि विज्ञायते

भगस्यापराह्ण इति भगसंयुक्तं पुनरिदं कर्माथापि विज्ञायते तस्मादपराह्णे कुमार्यो भगमिच्छमानाश्चरन्तीति पुण्याह उपगृह्णीतापि वै खलु लोके पुण्याह एव कर्माणि चिकीर्षन्ते तस्मादश्लीलनामंश्चित्रे नावस्येन्न यजेत यथा पापाहे कुरुते तादृगेव तदिति परिचष्ट एव पापाहं विज्ञायते तु खल्वेकेषामिन्वकाभिः प्रसृज्यन्ते ते वराः प्रतिनिन्दिता मघाभिर्गावो गृह्यन्ते फल्गुनीभ्यां व्यूह्यत इति यां कामयेत दुहितरं प्रिया स्यादिति तां निष्ट्यायां दद्यात्प्रियैव भवति नैव तु पुनरागच्छतीति विज्ञायते १२

तत आह स्नापयतैनामिति स्नातायै वाससी प्रयच्छति या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितोऽददन्त । तास्त्वा देवीर्जरसे संव्ययन्त्वा-युष्मतीदं परिधत्स्व वास इत्यथैनां परिधापयति परिधत्त धत्त वाससैनां शतायुषीं कृणुत दीर्घमायुः । बृहस्पतिः प्रयच्छद्वास एतत्सोमाय राज्ञे परिधा-तवा उ । जरां गच्छासि परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावती । शतं च जीव शरदः सुवर्चा रायश्च पोषमुपसंव्ययस्वेति परिहितामभिमन्त्रयते परीदं वासो अधिधाः स्वस्तयेऽभूरापीनामभिशस्तिपावती । शतं च जीव शरदः पुनृचीर्वसूनि चार्या विभजासि जीवतीत्यथास्या अग्रेण ज्ञातिकु-लमग्निमुपसमाधायाघारावाघार्याज्यभागौ जुहोत्यग्नये जनिविदे स्वाहेत्यु-त्तरार्धपूर्वार्धे सोमाय जनिविदे स्वाहेति दक्षिणार्धपूर्वार्धे तत एता आहु-तीर्जुहोति भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहा । या तिरश्ची यानूची संराधन्यै प्रसाधन्यै सदसस्पतिं युक्तो वह जातवेद इति जयाभ्यातानान्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति १३

अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात्स्वाहा । इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुध्यतामियं स्वाहा । मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा । द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनं धयन्तं सविताभिरक्षतु । आ वाससः परिधानाद्बृहस्पतिर्विश्वे देवा अभिरक्षन्तु पश्चात्स्वाहा । अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाघम् ।

शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशं स्वाहेति पूर्णा पश्चादिमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्ययाश्चाग्नेऽस्यनभिशस्तीश्च यदस्य कर्मणोऽत्यरीरिचं प्रजापत इत्युत्तमां हुत्वा गुरवे वरं ददाति १४

अपरेणाग्निं द्व्यान्दर्भान्पूर्वापरानुदगग्रान्स्तृणाति तेषु पूर्वापरावुपतिष्ठेते प्राङ्मुखः प्रत्यङ्मुख्या हस्तं गृह्णीयादित्येकं प्रत्यङ्मुखः प्राङ्मुख्या इत्यपरमथैनयोः प्रैषकृदञ्जली उदकेन पूरयत्यथास्याञ्जलिनाञ्जलावुदकमानयति शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु न इत्यथास्या दक्षिणेन हस्तेन दक्षिणं हस्तमभीवाङ्गुष्ठमभीव लोमानि गृह्णाति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । हस्तेन ते हस्तं गृह्णामि सौभगत्वाय मया पत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरंधिस्ते त्वा देवा अदुर्मह्यं पत्नीम् । अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः शन्तमा प्रजायै । क्षुरपविर्जरिभ्यो जीवसूर्वीरसूः स्योना मह्यं त्वादुर्गार्हपत्याय देवाः । तां नः पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्रयातै यस्यामुशन्तः प्रहरेम शेफम् १५

सोमः प्रथमो विविदे गन्धर्वस्ततोऽपरः
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः

सोमो दददन्धर्वाय गन्धर्वोऽग्नये ददत्
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्

सरस्वति प्रेदमव सुभगे वाजिनीवति
तां त्वा विश्वस्य भूतस्य प्रगायामस्यग्रत

इत्यथैनौ ब्रह्माभिमन्त्रयते समितं संकल्पेथां सं वां सृजामि हृदये । संसृष्टं मनो अस्तु वां संसृष्टः प्राणो अस्तु वामित्यथैनामश्मानमास्थापयत्यातिष्ठेममश्मानमश्मेव त्वं स्थिरा भव । प्रमृणीहि दुरस्यून्सहस्व पृतनायत इति प्रदक्षिणमग्निं परिणयति विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहे-

महि द्विष इत्यथास्या भ्राताञ्जलिनाञ्जलावुपस्तीर्णाभिघारितान्लाजानावपतीयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम । भगेन त्वा संसृजामि मासरेण सुरामिवेत्यथैनां वाचयतीमान्लाजानावपामि समृद्धिकरणान्मम । तुभ्यं च संवननांस्तदग्निरनुमन्यतामियं स्वाहेत्येवमेव त्रिरास्थापयति त्रिः परिणयति त्रिरावपत्यथैनां प्राचीं वोदीचीं वा १६

सप्त पदानि प्रक्रमयत्येकमिषे विष्णुस्त्वान्वेतु द्वे ऊर्जे विष्णुस्त्वान्वेतु त्रीणि व्रताय विष्णुस्त्वान्वेतु चत्वारि मायोभवाय विष्णुस्त्वान्वेतु पञ्च पशुभ्यो विष्णुस्त्वान्वेतु षड्रायस्पोषाय विष्णुस्त्वान्वेतु सप्त सप्तभ्यो होत्राभ्यो विष्णु-स्त्वान्वेत्विति सप्तमे पदे समीक्षमाणो जपति सखा सप्तपदा भव सखायौ सप्तपदावभूव । सख्यं ते गमेयं सख्यात्ते मा योषं सख्यान्मे मा योष्ठा इत्य-थास्या दक्षिणमंसं प्रति बाहुमन्ववहृत्य हृदयदेशमभिमृशति मम हृदये हृदयं ते अस्तु मम चित्ते चित्तमस्तु ते । मम वाचमेकमना शृणु मामेवानुव्रता भव सहचर्या मया भवेत्यथास्या दक्षिणं कर्णमाजपति

मां ते चित्तं प्रविशतु मां चक्षुर्मामु ते मनः
मयि सर्वाणि भूतानि मयि प्रज्ञानमस्तु ते

मधु हे मध्वागाहे जिह्वा मे मधुवादिनी
मुखे मे सारघं मधु दत्सु संवननं कृतम्

चाक्रवाकं संवननं यन्नदीभ्य उदाहृतम्
यद्देवगन्धर्वो वित्तस्तेन संवनिनौ स्वः
मां चैव पश्य सूर्यं च मान्येषु मनः कृथा इति १७

अथास्याः स्वधितिं मूर्ध्नि धारयन्हिरण्यं वोदकुम्भेनावसिञ्चत्यापो हि ष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेनावसिच्य यथार्थं वहन्त्युह्यमानामनुमन्त्रयते ये व-ध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनामनु । पुनस्तान्यज्ञिया देवा नयन्तु यत आगता इत्यथैनां गृहानुह्यानडुहे रोहिते चर्मण्युपवेशयतीह गावो निषीदन्त्विहाश्वा इह

पुरुषाः । इहो सहस्रदक्षिणोऽभि पूषा निषीदत्वित्यथैनामाग्नेयेन स्थालीपाकेन याजयत्यथैतस्य स्थालीपाकस्योपहत्याभिघार्य जुहोत्यग्नये स्वाहाग्नयेऽग्निवते स्वाहाग्नयेऽन्नादाय स्वाहाग्नये स्विष्टकृते स्वाहेति यावज्जीवमेतमग्निं व्रीहिभिर्यवैर्वा सायं प्रातः परिचरत्यग्नये स्वाहेति सायं पूर्वामाहुतिं जुहोति प्रजापतये स्वाहेत्युत्तरां सौरीं पूर्वां प्रातरेके समामनन्त्यौपासनो नित्यो धार्योऽनुगतो मन्थ्यः श्रोत्रियागाराद्वाहार्योऽन्यतरस्य चैतदहरुपवासः १८

अष्टम्यः पर्वाणि चोपवसत्याग्नेयेन स्थालीपाकेन पर्वसु यजते वाग्यत आस्त आ नक्षत्राणामुदयादुदितेषु नक्षत्रेषु वत्समन्वारभ्योत्थापयत्युदायुषा स्वायुषेत्यथैनां ध्रुवमरुन्धतीमन्यानि च नक्षत्राण्यभिवीक्षयति नमो ब्रह्मणे ध्रुवायाच्युतायास्त्वित्येतेनानुवाकेन ध्रुवमुपतिष्ठते ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसि ध्रुवत स्थितम् । त्वं नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यत इति सप्तर्षयः प्रथमां कृत्तिकानामरुन्धतीं ध्रुवतां ये ह निन्युः । षट्कृत्तिका मुख्ययोगं वहन्तीयमस्माकं भ्राजत्वष्टमीत्यरुन्धतीं त्रिरात्रमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणौ भवतोऽथ चतुर्थ्यामपररात्रेऽन्तरागारेऽग्निमुपसमाधाय जयाभ्यातानान्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोत्यग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणास्त्वा नाथकामः प्रपद्ये । यास्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा । वायो प्रायश्चित्त आदित्य प्रायश्चित्ते प्रजापते प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये । यास्यै निन्दिता तनूस्तामितो नाशयामसि स्वाहेति १९

अथैनां तूष्णीं हिंकृत्य वाग्यत उपेत्यामूहमस्मि सा त्वं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेहि संभवाव सह रेतो दधावहै पुंसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेत्यथास्या अपवृत्तार्थोऽपवृत्तार्थायै मुखेन मुखं संनिधाय प्राणित्येतं प्राणमपानिहीति तं सा प्रत्यपानित्यथास्या आचान्तोदकायै पाणी प्रक्षाल्याभिमृशति करद्दधच्छिवेन त्वा पञ्चशाखेन हस्तेनाविद्विषावता साहस्रेण यशस्विनाभिमृशामि सुप्रजास्त्वायेति भसद्देशं यदा मलवद्वासा स्यादथैनां ब्राह्मणप्रतिषिद्धानि व्रतानि संशास्ति यां मलवद्वाससमिति चतुर्थ्यां स्नातां प्रयतवस्त्रां ब्राह्मणसंभाषां सं ते मनसा मन इत्येतेनानुवाकेनोपसंविशति सर्वाण्युपायनानि मन्त्रवन्ति भवन्तीत्याश्मरथ्यो यज्ञादौ यज्ञर्तावित्या-

लेखनः २०

अथास्याः प्रथमगर्भिण्याश्चतुर्थे मासि सीमन्तं कुर्वन्त्यापूर्यमाणपक्षे पुण्ये नक्षत्रे पयसि स्थालीपाकं श्रपयित्वान्तरागारेऽग्निमुपसमाधाय जयाभ्यातानान्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति भूर्भुवः सुवः प्रजापत इति चतस्रस्त्रेण्या शलल्या त्रीणि दर्भपुञ्जीलानि शलालुग्रप्समित्युपनियम्योर्ध्वं सीमन्तमुन्नयति भूर्भुवः सुवो राकामहं यास्ते राके । सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः । वि- वृत्तचक्रा आसीनास्तीरेण यमुने तवेति तीरेणासौ तवेति वा यस्यास्तीरे वसति पुरस्तादग्नेरेतानि निधाय त्रीनोदनानुद्धृत्य सर्पिषोपसिच्योपनिदधात्युदशरावं चतुर्थं तेषामेकैकमवेक्षमाणां पृच्छति किं पश्यसीति पुत्रांश्च पशूंश्चेति प्रत्याह तेषामेकं ब्राह्मणान्भोजयेदेकं ब्राह्मणीरेकं सह कुमारैः सा प्राश्नाति वाग्यत आस्त आ नक्षत्राणामुदयादुदितेषु नक्षत्रेष्विति समानम् २१

अथ पुंसवनं तृतीये मासि चतुर्थादौ वा तिष्येण वा हस्तेन वानुराधैर्वोत्तरैर्वा प्रोष्ठपदैर्न्यग्रोधावरोधमाहृत्यानवस्नातया कुमार्या दृषत्पुत्रे दृषत्पुत्रेण पेषयि- त्वान्तरागारेऽग्निमुपसमाधाय जयाभ्यातानान्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति यस्त्वा हृदा किरिणेति चतस्रोऽपरेणाग्निं प्राचीमुत्तानां निपात्याथास्या दक्षिणे नासिकाछिद्रेऽङ्गुष्ठेनानुनयति पुंसवनमस्यमुष्या इति सा हेत्याह पुमांसमेव जनयत्यथ क्षिप्रंसुवनं यज्ञोपवीतं कृत्वाप आचम्यानाप्रीतेन शरावेणानुस्रो- तसमुदकमाहृत्य पत्तस्तूर्यन्तीं निधाय मूर्धञ्छोष्यन्तीमभिमृशति दशभिस्त्वा- ङ्गुलिभिरभिमृशामि दशमास्याय सूतवा इत्यथैनामद्भिरवोक्षति यथैव वातः पवते यथा समुद्र एजति । एवं कुमार एजतु सह जरायुणावपद्यतामित्यथ यद्यपरा न पतेत्पाणिनोदकमादाय मूर्धन्येनामवसिञ्चेत्तिलदेऽवपद्यस्व न मांस- मसि नो दलमवपद्यस्वासावििति यदि गर्भः स्रंसेदार्द्रेण पाणिना त्रिनूर्ध्वं नाभेरुन्मृजेत्पराञ्चं त्वा नार्वाञ्चं त्वष्टा बध्नातु बन्धनैः । स ऋतूनुपशेष्व दश- मासोऽवीरहेति २२

विजातायाः परिदां करोति दक्षिणार्धेऽगारस्याग्निमुपसमाधाय सर्षपान्फ- लीकरणमिश्रानञ्जलावध्युप्य जुहोति शण्डो मर्क उपवीरस्तुण्डिकेर उलूखलः । च्यवनो नश्यतादितः स्वाहेत्येवं द्वितीयामेवं तृतीयामथापरां केशिनी

श्वलोमिनी खजाबोजोपकाशिनी । अपेत नश्यतादितः स्वाहेत्येवं द्वितीयामेवं तृतीयामथापरामर्यम्णः कुम्भीपात्रः पात्रपाणिर्निपुणिः । अपेत नश्यतादितः स्वाहेत्येवं द्वितीयामेवं तृतीयामथापरां मिश्रवाससः कौबेरका रक्षोराजेन प्रेषिताः । ग्रामं सजानयो गच्छन्तीच्छन्तोऽपरिदाकृतान्स्वाहा । एतान्घ्नतै-तान्गृह्णीतेत्ययं ब्राह्मणो दूतः । तानग्निः पर्यसरत्तानिन्द्रस्तान्बृहस्पतिः । तानहं वेद ब्राह्मणः प्रमृशतः कूटदन्तान्विकेशान्लम्बनस्तनान्स्वाहा । नक्तंचारिण उरस्पेशाञ्छूलहस्तान्कपालपान् । पूर्व एषां पितैत्युच्चैः श्राव्यकर्णकः । माता जघन्या सर्पति ग्रामे विधुरमिच्छन्ती स्वाहा । प्रदोषचारिणी स्वसा संधिना प्रेक्षते कुलम् । या स्वपन्तं बोधयति यस्यै विजातायां मनः । तासां त्वं कृष्णवर्त्मने क्लोमानं हृदयं यकृत् । अग्ने अक्षीणि निर्दह स्वाहेत्येवमेव निष्क्रामति च प्रपद्यामाने चावपताहरहरा निर्दशताया इति २३

सा यदि पुमांसं जनयति तमभिमृशति वृधदिति मध्यमं पलाशपलाशं संवेष्ट्य तेनास्य दक्षिणं कर्णमाजपति भूस्त्वयि दधामीति भुवस्त्वयि दधामीत्युत्तरं सुवस्त्वयि दधामीति दक्षिणमपि वोत्तरमेव द्विः सकृदेव दक्षिणमथै-नमभिमन्त्रयतेऽश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामासि स जीव शरदः शतम् । मेधां ते देवः सविता मेधां देवी सरस्वती । मेधां ते अश्विनावुभावाधत्तां पुष्करस्रजौ । वेदो वै पुत्रनामासि स जीव शरदः शतमित्यथैनं दधि मधु घृतमिति संसृज्य त्रिभिर्दर्भपुञ्जीलैर्हिरण्येन वा त्रिः प्राशयत्यपां त्वौषधीनां रसं प्राशयाम्यायुर्वर्चो यशो मेधां त्वयि दधामि सवित्रा प्रसूतस्त्वष्टा वीरमधात्स मे शतायुरेधि भूर्भुवः सुवरित्यथास्य दक्षिणेन हस्तेन दक्षिणं हस्तमभीवाङ्गुष्ठमभीव लोमानि गृह्णात्यग्निरायुष्मानित्येतैर्मन्त्रैर्नवनीतेन पाणी अभ्यज्य हिरण्यं हस्ते कृत्वा २४

अग्नौ प्रताप्याभिमृशत्यग्नेस्त्वा तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण विश्वेषां त्वा देवानां क्रतुनाभिमृशामि । अङ्गादङ्गात्संभवसि हृदयादधि जायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतमित्यथैनं वात्सप्रेणाभिमृशति दिवस्परी-त्यनुवाकेन यत्र शेते तदभिमृशति वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् । वेदामृतस्य गोप्तारं माहं पौत्रमघं रुदमित्यथैनं मातुरुपस्थ आदधाति मा ते पुत्रं रक्षो वधीन्मा धेनुरत्यासारिणी । प्रिया धनस्य भूया एधमाना स्वे वश

इति स्तनं प्रतिधापयत्ययं कुमारो जरां धयतु दीर्घमायुः । तस्मै त्वं स्तन प्रप्यायायुर्वर्चो यशो बलमिति संविष्टाभ्यां परिदां करोति नामयति न रुदति यत्र वयं वदामसि यत्र चाभिमृशामसीति शिरस्त उदकुम्भं निदधात्यापः सुप्तेषु जाग्रत रक्षांसि निरितो नुदध्वमिति नैतासामपामुदकार्थं कुर्वन्त्यथ यदि चिरं न विजायते स्त्रजमेनां दर्शयेत्परिमुक्तायां क्षिप्रमेवोपनिर्हरेद्यदा यदा सूतिकारोगः स्याद्दक्षिणस्य पदस्तप्तोदकेन पार्ष्णिं क्लेदयित्वा तदा तदा तं देशमवमार्ष्टि यत्रास्या दुःखं भवति धनुर्मटची पुरुषस्य हस्तयोरेकशतं शृणोरङ्ग ते धापयितारस्त्वं रोगस्येशिषे त्वमु रोगस्य सूतिकारोगभैषज्यमस्यमुष्या इति २५

उपनिर्हरन्ति सूतिकाग्निमौपासनमतिहरन्ति स एष उत्तपनार्थो भवति नास्मि-न्किं चन कर्म क्रियते दशम्यां स्नातौ मातापुत्रौ शुच्यगारं कुर्वन्त्युप-निर्हरन्त्यौपासनं सूतिकाग्निमतिहरन्त्यन्तरागारेऽग्निमुपसमाधाय जयाभ्याता-नान्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति धाता ददातु नो रयिमित्यष्टौ दशम्यां पुत्रस्य नाम दधाति द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभि-निष्टानान्तं तद्धि प्रतिष्ठितमिति विज्ञायते पिता मातेत्यग्रेऽभिव्याहरेयातां विज्ञायते मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्र इति द्वे नामनी कुर्याद्विज्ञायते च तस्माद्द्विनामा ब्राह्मणोऽर्धुक इति नक्षत्रनाम द्वितीयं स्यादन्यतरद्गुह्यं स्यादन्यतरेणैनमामन्त्रयेरन् २६

विप्रोष्य हरिणी दूर्वे आदाय गृहानुपोदेति गृहा मा बिभीत मा वेपिढ्वमूर्जं बिभ्रत एमसि । ऊर्जं बिभ्रद्वः सुमनाः सुवर्चा गृहानेमि मनसा मोदमानः । येषां प्रवसन्नध्येति येषु सौमनसो बहुः । गृहानुपह्वयामहे ते नो जानन्तु जानतः । इमे गृहाः प्रति जीवेष्वस्थुरूर्जं बिभ्रतो जगतः सुशेवाः । एह वत्सः क्रन्द-त्वा कुमार आ धेनवो बहुला नित्यवत्साः । उपहूतं गोअश्वमुपहूता अजावयः । अथो अन्नस्य कीलाल उपहूतो गृहेषु मे । ऊर्जं बिभ्रत एमस्यूर्जा वः सं-सृजामि रमध्वं मा बिभीतनेति तृणे प्रास्यति शिवा उपमितः प्रमितश्च सन्त्विति द्वार्ये संमृशति क्षेमाय वः शिवः शान्त्यै प्रपद्य इति प्रपद्यते दक्षिणपू-र्वाभ्यामनुवीक्षतेऽभयं वोऽस्त्वभयं मे अस्त्विति भार्यां संगच्छमानामनुम-न्त्रयते विश्वा उत त्वया वयमित्येतया पुत्रं संगच्छमानमनुमन्त्रयतेऽङ्गा-

दङ्गात्संभवसीति द्वाभ्यामथैनं मूर्धंस्त्रिरवजिघ्रेत्पशूनां त्वा हिंकारेणाभि-जिघ्रामि प्रजापतये त्वा हिंकारेणाभिजिघ्रामि प्रजापतिस्त आयुर्दधातु स मे शतायुरेधि भूर्भुवः सुवरिति सर्वेभ्यः प्राणेभ्यो जातासि सा जीव शरदः शतमिति दुहितुरथैनं षष्ठे मास्यन्नं प्राशयति तस्य स एव प्राशनकल्पो यो मेधाजनन एतावन्नाना भूरित्यग्रे प्राशयति भुव इति द्वितीयं सुवरिति तृतीयम्
२७

अथास्य सांवत्सरिकस्य चौडं कुर्वन्ति यथर्षि यथोपज्ञं वा विज्ञायते च यत्र बाणाः संपतन्ति कुमारा विशिखा इवेति बहुशिखा इवेत्यथान्नं संस्कृत्य ब्राह्मणान्भोजयित्वाशिषो वाचयित्वान्तरागारेऽग्निमुपसमाधाय जयाभ्याता-नान्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति पूर्णा पश्चादिमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्नेऽयास्यनभिशस्तीश्च यदस्य कर्मणोऽत्यरीरिचं प्रजापत इत्युत्तमां हुत्वा गुरवे वरं ददात्यपरेणाग्निं गोमयपिण्डं सर्वबी-जानीत्युपनियम्य सर्वबीजानामग्रं गोमयपिण्डे न्युप्य शीतोष्णा अपः समानीय ताभिरस्य दक्षिणं गोदानमुनत्त्याप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस इति त्रेण्या शलल्या विनीय त्रीणि दर्भपुञ्जीलान्यूर्ध्वाग्राण्युपनियच्छत्योषधे त्रायस्वैनं स्वधिते मैनं हिंसीरिति लोहितायसं क्षुरं तिर्यञ्चं निधाय प्रवपति यदृषीणां त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मेऽस्तु त्र्यायुषम् । येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत्तेन ते वपाम्यसौ दीर्घा-युत्वाय वर्चस इत्येवमेवोत्तरं गोदानं वापयते केशान्वापयित्वा गोमयपिण्डे निदधात्यथैनं गोमयपिण्डं गोष्ठ उदकान्त उदुम्बरमूले दर्भस्तम्बे वा निदधात्यथैनं स्नातमलंकुर्वन्ति २८

इति भारद्वाजसूत्रे प्रथमः प्रश्नः

श्रवणकर्म व्याख्यास्यामः श्रावण्यां पौर्णमास्यामुपकल्पयतेऽक्षतधानाश्चाक्ष-तसक्तूंश्च जात्यं चाञ्जनमस्तमित आदित्येऽन्तरागारेऽग्निमुपसमाधाय जयाभ्या-तानान्राष्ट्रभृत इति हुत्वाक्षतधानानां चाक्षतसक्तूनां च समवदायाभिघार्य जुहोत्याग्नेयाय पाण्डराय पार्थिवानामधिपतये स्वाहेति प्रथमामाहुतिं जुहोति श्वेताय वायव्यायान्तरिक्षाणामधिपतये स्वाहेति द्वितीयामभिभुवे सूर्याय

दिव्यानामधिपतये स्वाहेति तृतीयामुपनिष्क्रम्य स्थण्डिल एवैता आहुती-र्जुहोत्यपि वा समीची नामासि प्राची दिगिति सर्पाहुतीः प्राशनार्था धाना उपकल्प्याक्षतधानाश्चाक्षतसक्तूंश्च जात्यं चाञ्जनं स्थण्डिले न्युप्याभिमन्त्रयते नमोऽस्तु सर्पेभ्य इति तिसृभिस्ततो यावन्तं देशं कामयत इमं सर्पा नागच्छेयुरिति तं संततयोदधारयानुपरिषिञ्चत्यप श्वेत पदा जहि पूर्वेण चापरेण च । सप्त च मानवैरिमास्तिस्रश्च राजबन्धवैः । न वै श्वेतस्याध्याचारेऽहिर्ददंश कां चन । श्वेताय वैदर्व्याय नम इति तत एता धाना असमेत्यावगिरन्ति यावन्तो हविरुच्छिष्टाशा भवन्ति तत एतांश्चतुरो मासान्सर्पेभ्यो बलिं हरन्ति सक्तून्वैवमर्थान्कुर्वन्त्यपि वा यद्यदन्नं क्रियते तस्य तस्य १

तत आग्रहायण्यां पौर्णमास्यामेवमेवैतत्कर्म क्रियते यदन्यद्धानाप्राशना-त्परिषेचनादिति सर्वं तत्क्रियत आग्नेयेन स्थालीपाकेन पर्वसु यजते तस्य पुरस्तात्स्विष्टकृत एता आहुतीर्जुहोतीडायाः पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व । ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानामिह रन्तिरस्तु पुष्ट्यै स्वाहा

यां देवाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम्
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा

पौर्णमासी पूरयन्त्यायात्यपरापरम्
अर्धमासान्विभजन्ती सा नः पूर्णाभिरक्षतु स्वाहा

शिवा पशुभ्यो दारेभ्यः शिवा नक्तं शिवा दिवा
संवत्सरं कल्पयन्ती सा नः कामदुघा भवत्स्वाहा

पूर्णा पश्चात्त्वमग्ने अयासि प्रजापत इति तिस्रस्ततः सौविष्टकृतं जुहोत्यग्नये स्विष्टकृते स्वाहेत्यथ हेमन्तप्रत्यवरोहणं यत्र प्रत्यवरोक्ष्यन्भवति तदुपतिष्ठते प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रति तिष्ठामि गोषु । प्रति प्रजायां प्रति तिष्ठामि भव्ये । स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथा इति २

शालाकर्म व्याख्यास्यामः शालां कारयिष्यमाण आपूर्यमाणपक्षे पुण्ये नक्षत्रे ब्राह्मणानन्नेन परिविष्य परिलिख्येहैव ध्रुवां निमिनोमि शालां क्षेमे तिष्ठतु घृतमुक्षमाणा । तां त्वा शाले सर्ववीराः सुवीरा अरिष्टवीरा अनुसंचरेमेति दक्षिणां द्वारस्थूणामुच्छ्रयतीहैव ध्रुवा प्रतितिष्ठ शालेऽश्ववती गोमती सूनृतावती । ऊर्जस्वती पयस्वती घृतवत्युच्छ्रयस्व महते सौभगायेत्युत्तरामा त्वा कुमारस्तरुण आ वत्सो जगता सह । आ त्वा परिस्रुतः कुम्भ आ दध्नः कलशीरयन्निति संमिते अभिमृशत्येवमेव स्थूणाराजावुच्छ्रयत्येवमभिमृशत्यृतेन स्थूणावधिरोह वंशोग्रो विराजन्नपसेध शत्रून् । अथास्मभ्यं सर्ववीरां रयिं दा इति पृष्ठवंशमधिरोपयति मानस्य पत्नि शरणा स्योना देवेभिर्विमितास्यग्रे । तृणं वसाना सुमना असस्त्वं शं न एधि द्विपदे शं चतुष्पद इति छन्नामभिमृशति ३

अगारप्रवेशं व्याख्यास्याम आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽन्तरागारेऽग्निमुपसमाधाय जयाभ्यातानान्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति वास्तोष्पत इति द्वे वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व स्वाहा । परं मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो देवयानात् । वास्तोष्पते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत विरान्स्वाहेति भूमिमभिमृशति प्रति क्षत्रे प्रति तिष्ठामि राष्ट्र इति द्वाभ्यामिदं श्रेयोऽवसानं यदागां स्योने मे द्यावापृथिवी अभूताम् । अनमीवाः प्रदिशः सन्तु मह्यं गोमद्धनवदश्ववदूर्जस्वत्सुवीरवदिति चैतयाहतं वास आच्छाद्य तद्वास्तु परिमापयेदृतं वृणीष्व मावार्यं मा नो हिंसीः कदाचन । स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथा इत्युदायुषा स्वायुषेत्युपोत्थायोपसमूह्य ब्राह्मणानन्नेन परिवेषयेत् ४

तत्पूर्वं वास्तुशमनमथान्यच्छरणे कृत उदुम्बरपलाशानि ससुषिराणि यवैः सह गोमयं शाड्वलं रासभं मधु चैवात्र सप्तमं तैरगारं वास्तु च परिप्रोक्षेत्पूर्ण उदधिर्भवति प्रज्वलितोऽग्निर्भवति ब्राह्मणमग्रे प्रवेशयति ब्राह्मणमाह प्रविशानीति प्रविशतु भवानायुषा वर्चसा श्रियावृत इति ब्राह्मणानुमतः प्रविशति भूः प्रपद्ये भुवः प्रपद्ये श्रियं प्रपद्ये श्रीर्मा प्रविशत्विति ब्राह्मणमनु प्रविश्य जयाभ्यातानान्राष्ट्रभृत इति हुत्वाग्निं देवानां महयत्यग्निर्देवानामधिपतिः

पुरीष्यो हव्यवाहनः । तं त्वैमि शरणं देव सपुत्रः सह ज्ञानिभिः स्वाहा । सदासभार्यः सामात्यः सायामग्नये स्वाहेत्यग्निं महयित्वाथ राजानमीडते त्वद्दत्तं वै बलं राज्ये त्वत्पूर्तमिह जीवते । हिरण्यवर्ण हर्यक्ष अर्थं मह्यं साधय स्वाहा । कुबेराय स्वाहा महाराजाय स्वाहा वैश्रवणाय स्वाहेति राजानं महयित्वाथेन्द्रं देवानां महयति त्रातारमिन्द्रमिन्द्रं विश्वा अवीवृधन्नितीन्द्रं महयित्वा विश्वान्देवान्महयति विश्वे देवा विश्वे देवा इति द्वाभ्यां विश्वान्देवान्महयित्वा ५

अथ पञ्चेध्मानभ्याधाय जुहोति मेधां मनसि जुहोमि स्वाहा । मनो मेधायां जुहोमि स्वाहा । श्रद्धां तपसि जुहोमि स्वाहा । तपः श्रद्धायां जुहोमि स्वाहा । मृत्योर्मुखं विदधामि स्वाहा । ये देवाः पुरः सदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा । शान्तमिदमवसानं प्रपद्ये स्वाहा । ये देवा दक्षिणासदो ये देवाः पश्चात्सदो ये देवा उत्तरसदो ये देवा उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा । शान्तमिदमवसानं प्रपद्ये स्वाहा । पूर्णा पश्चादिमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्ययाश्चाग्नेऽस्यनभिशस्तीश्च यदस्य कर्मणोऽत्यरीरिचं प्रजापत इत्युत्तमां हुत्वा ब्राह्मणानन्नेन परिवेषयेद्यद्वास्तु ग- र्हितं यत्र वान्यः परिभवेत्तत्रापि सुखमासीत शमयन्वास्त्वृतावृतावेतद्धौम्यस्य वचनमसितस्य तुरङ्गस्य च मुनेः काव्यस्य दाल्भ्यस्य नैतद्विद्वान्पराभवेत् ६

श्वग्रहप्रायश्चित्तं श्वोपस्पृष्टे तद्यज्ञोपवीतं कृत्वाप आचम्यानाप्रीतेन शरावे- णानुस्त्रोतसमुदकमाहृत्याथ सभायां मध्येऽधिदेवनमुद्धत्यावोक्षयाक्षान्न्युप्या- क्षेषु हिरण्यं निधायोपरिष्टात्सभायां व्यूह्य तृणानि तेन कुमारमन्ववहृत्याक्षेषू- त्तानं निपात्य दध्ना लवणोदकमिश्रेणाभ्युक्ष्य जपत्याघ्नन्ति कंसं दक्षिणतः

कुर्कुरः सुकुर्कुरः कुर्कुरो बालबन्धनः
उपरिष्टाद्यदेजायतृतीयस्यामितो दिवि

औलब इत्तमुपाह्वयाथार्जीच्छ्यामः शबलः
अधोराम उलुम्बलः सारमेयो ह धावति समुद्रमिव चाकशत्

बिभ्रन्निष्कं च रुक्मं च शुनामग्रं सुबीरिणः
सुबीरिण सृज सृजैकव्रात्य शुनक सृज छत्

तत्सत्यं यत्त्वेन्द्रोऽब्रवीद्रा स्पाशयस्वेति तास्त्वं स्पाशयित्वागच्छस्तं त्वाब्र-
वीदविदहा इत्यविदं हीति वरं वृणीष्वेति कुमारमेवाहं वरं वृण इत्यब्रवीः
निगृह्य बाहू प्लवसे द्यामिव चाकशत्

बिभ्रन्निष्कं च रुक्मं च शुनामग्रं सुबीरिणः
सुबीरिण सृज सृजैकव्रात्य शुनक सृज छत्

तत्सत्यं यत्ते सरमा माता लोहितः पिता
अमी ये के सरस्यका अवधावति तृतीयस्यामितो दिवि

तेकश्च ससरमतण्डुलः कुलश्च विकुलश्चार्जुनश्च लोहितश्च
उत्सृजेमं शुचीमनस्त्वं पिशङ्गलोहितः

दुला ह नाम वो माता मण्डाकको ह वः पिता
छदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर

सं तक्षा हन्ति चक्री वो न सीसरीदत
छदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर

समश्वा वृषणः पदो न सीसरीदत
श्वानमिच्छादन्न पुरुषं छदिति त्रिः प्रातर्मध्यंदिने सायमगदो हैव भवतीत्याह
ततः कुर्याद्यदि नागदः स्यात् ७

शूलगवं व्याख्यास्याम आपूर्यमाणपक्षे पुण्ये नक्षत्रे पयसि स्थालीपाकं श्रपयित्वा प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य स्थण्डिलं कल्पयित्वाग्निमुपसमाधाय संपरिस्तीर्यापरेणाग्निं द्वे कुटी कृत्वा शूलगवमावाहयत्या त्वा वहन्तु हरयः सुचेतसः श्वेतैरश्वैः सह केतुमद्भिः । वाताजिरैर्मम हव्याय शर्वोमिति दक्षिणस्यां शूलगवमुत्तरस्यां मीढुषीं मध्ये जयन्तं यथोढमुदकानि

प्रदाय त्रीनोदनानुद्धृत्य यथोढमेवोपस्पर्शयत्युपस्पृशतु मीढ्वान्मीढुषे स्वाहोपस्पृशतु मीढुषी मीढुष्यै स्वाहा जयन्तोपस्पृश जयन्ताय स्वाहेति शूलगवस्याग्निमभ्युदाहृत्य जुहोति भवाय देवाय स्वाहा शर्वाय देवाय स्वाहेशानाय देवाय स्वाहोग्राय देवाय स्वाहा भीमाय देवाय स्वाहा रुद्राय देवाय स्वाहा पशुपतये देवाय स्वाहा महते देवाय स्वाहेति ८

पत्न्योदनस्य पत्नीभ्यो जुहोति भवस्य देवस्य पत्न्यै स्वाहा शर्वस्य देवस्य पत्न्यै स्वाहेशानस्य देवस्य पत्न्यै स्वाहोग्रस्य देवस्य पत्न्यै स्वाहा भीमस्य देवस्य पत्न्यै स्वाहा रुद्रस्य देवस्य पत्न्यै स्वाहा पशुपतेर्देवस्य पत्न्यै स्वाहा महतो देवस्य पत्न्यै स्वाहेति जयन्ताय स्वाहेति मध्यमस्य जुहोति सर्वेषामोदनानां सकृत्सकृत्समवदायाभिघार्य जुहोत्यग्नये स्विष्टकृते स्वाहेत्यथोपतिष्ठते स्वस्ति नः पूर्णमुखः परिक्रामत्वित्यथातः पर्णविहारो गृहपोपस्पृश गृहपाय स्वाहा गृहप्युपस्पृश गृहप्यै स्वाहा जयन्तोपस्पृश जयन्ताय स्वाहेति षट् पलाशान्यथापराणि घोषिण उपस्पृशत घोषिभ्यः स्वाहा श्वासिन उपस्पृशत श्वासिभ्यः स्वाहा विचिन्वन्त उपस्पृशत विचिन्वद्भ्यः स्वाहा प्रचिन्वन्त उपस्पृशत प्रचिन्वद्भ्यः स्वाहा समश्नन्त उपस्पृशत समश्नद्भ्यः स्वाहेति दशाथापराणि देवसेना उपस्पृशत देवसेनाभ्यः स्वाहेति दशैवाथापराणि या आख्याता देवसेना याश्चानाख्याताश्च ता उपस्पृशत ताभ्यः स्वाहेति दशैव ९

अथापराणि द्वारपोपस्पृश द्वारपाय स्वाहा द्वारप्युपस्पृश द्वारप्यै स्वाहेति चत्वार्यथ पर्णपुटं कृत्वा तस्मिन्नुपस्तीर्णाभिघारितमोदनपिण्डं समवदाय परोगोष्ठे वृक्ष आसजति निषङ्गिण उपस्पृशत निषङ्गिभ्यः स्वाहेत्यथोपतिष्ठते नमो निषङ्गिण इषुधिमत इत्यप्रतीक्षमेत्याथान्वासारिभ्यो जुहोत्यन्वासारिण उपस्पृशतान्वासारिभ्यः स्वाहेति द्वे पलाशे अथोपतिष्ठते नमस्ते रुद्र मन्यव इत्येतैरेकादशभिरनुवाकैः प्रथमोत्तमाभ्यां वाभित एतमग्निं गा स्थापयति यथा धूममाजिघ्रेयुरित्याज्यशेषमोदनशेषमुदकुम्भशेषमित्येकधा समवनीयोदुम्बरशाखया प्रदक्षिणं गास्त्रिः प्रोक्षति शिवं गोभ्यः शिवं गोपतय इत्यृषभस्य पृष्ठे शेषं निनयत्येतं युवानमित्येताभिः पञ्चभिरथातः क्षैत्रपत्यस्य गवां मार्गेऽनग्नौ क्षेत्रस्य पतिं यजते क्षेत्रस्य पतये स्वाहेति चतुर्षु सप्तसु वा पलाशेषु तं तथावाहयति यथा शूलगवं तूर्णं यजते पाको देव उपतिष्ठते क्षेत्रस्य पतिना

वयमिति द्वाभ्यामथैनं ह्वैत्रपत्यं ये सनाभयो भवन्ति ते प्राश्नन्ति यथा वैषां कुलधर्मो भवति १०

अमावास्यायामपराह्णे मासिश्राद्धमपरपक्षस्य वायुक्ष्वहःसु पितृभ्योऽन्नं संस्कृत्य प्राचीनावीतं कृत्वाग्निमुपसमाधाय दक्षिणाप्रागग्रैर्दर्भैरग्निं परिस्तीर्य दक्षिणपूर्वमवान्तरदेशमभिमुखः पितृनावाहयत्यायात पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः । प्रजामस्मभ्यं ददतो रयिं च दीर्घायुत्वं च शतशारदं च । आयात पितामहाः प्रपितामहाश्चानुगैः सह । असुंगमाः सत्ययुजोऽवृकासः । आ नो हवं पितरोऽद्यागमन्तु । एह गच्छन्तु पितरो हविषे अत्तवा इत्येतामेव दिशमभ्यपः प्रसिञ्चत्यापो देवीः प्रहिणुतेमं यज्ञं पितरो नो जुषन्तां मासीनामूर्जमुत ये भजन्ते ते नो रयिं सर्ववीरां नियच्छन्त्विति परिषिच्य जुहोति याः प्राचीः संभवन्त्याप उत्तरतश्च याः । अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधेऽमुष्मै स्वाहा । अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या । दिवा दिग्भिरनन्ताभिरूतिभिरन्तरन्यं पितामहाद्दधेऽमुष्मै स्वाहा । अन्तर्दध ऋतुभिर्होरात्रैः ससंधिकैः । अर्धमासैश्च मासैश्चान्तरन्यं प्रपितामहाद्दधेऽमुष्मै स्वाहा । यद्वः क्रव्यादङ्गमदहल्लोकानयं प्रणयञ्जातवेदाः । तद्वो अहं पुनरावेशयाम्यरिष्टाः सर्वैरङ्गैः संभवत पितरः स्वधा नमः पितृभ्यः स्वाहेति ११

अथान्नस्य जुहोत्यग्नये पितृमते स्वाहा सोमाय पितृमते स्वाहा यमायाङ्गिरस्वते पितृमते स्वाहा स्वधा नमः पितृभ्यः स्वाहाग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः पितृभ्यः स्वाहेति परिषिच्य दक्षिणतो दर्भमुष्टिं निधाय तस्मिन्दक्षिणापवर्गांस्त्रीनुदकाञ्जलीनुपनिनयत्यसाववनेनिक्ष्वेति पितरमसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहमत्रैव नामादेशमवाचीनपाणिस्तस्मिन्दक्षिणापवर्गांस्त्रीन्पिण्डान्निदधात्येतत्ते ततासौ मधुमदन्नं सरस्वतो यावानग्निश्च पृथिवी च तावत्यस्य मात्रा तावतीं त एतां मात्रां भूतां ददामि यथाग्निरक्षितोऽनुपदस्त एवं मह्यं पित्रेऽक्षितोऽनुपदस्तः स्वधा भवतां त्वं स्वधामक्षितं तैः सहोपजीव यांश्च त्वमत्रान्वसि ये च त्वामनु । एतत्ते पितामहासौ मधुमदन्नं सरस्वतो यावान्वायुश्चान्तरिक्षं च तावत्यस्य मात्रा तावतीं त एतां मात्रां भूतां ददामि यथा वायुरक्षितोऽनुपदस्त एवं मह्यं पितामहायाक्षितोऽनुपदस्तः स्वधा भवतां त्वं स्वधामक्षितं तैः सहोपजीव यांश्च

त्वमत्रान्वसि ये च त्वामनु १२

एतत्ते प्रपितामहासौ मधुमदन्नं सरस्वतो यावानादित्यश्च द्यौश्च तावत्यस्य मात्रा तावतीं त एतां मात्रां भूतां ददामि यथादित्योऽक्षितोऽनुपदस्त एवं मह्यं प्रपितामहायाक्षितोऽनुपदस्तः स्वधा भवतां त्वं स्वधामक्षितं तैः सहोपजीव यांश्च त्वमत्रान्वसि ये च त्वामनु । अत्र पितरो यथाभागं मन्दध्वमित्युक्त्वा पराङावर्तत ओष्मणो व्यावृत उपास्ते व्यावृत्त ऊष्मण्यभिपर्यावर्ततेऽव्यावृत्ते वामीमदन्त पितरः सोम्या इत्यभिपर्यावृत्य नमस्कारैरुपतिष्ठते नमो वः पितरो रसायेति प्रतिपद्याहं तेषां वसिष्ठो भूयासमित्यन्तेनाद्भिः पात्रं प्रक्षाल्य पूरयित्वा प्रसव्यं त्रिः परिषिञ्चति पुत्रान्पौत्रानभितर्पयन्तीरापो भधुमतीरिमाः । स्वधां पितृभ्यो अमृतं दुहाना आपो देवीरुभयांस्तर्पयन्तु । ऊर्जं वहन्तीः क्षीरमुदकं घृतं पयः कीलालं परिस्रुतं नदीरिमा उदन्वतीर्वेतस्विनीः सुतीर्थ्या अमुष्मिन्लोक उप वः क्षरन्तु । ऊर्जस्वतीः पयस्वतीर्मधुना घृतेन स्वधा स्थ तर्पयत मे पितृनित्यप्रतीक्षमेत्य १३

अथान्नमभिमृशति पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा प्राणापानयोर्जुहोम्यक्षितमसि मैषां क्षेष्ठा अमुत्रामुष्मिन्लोके पृथिवी समा तस्याग्निरुपद्रष्टर्चस्ते महिमा । पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा प्राणापानयोर्जुहोम्यक्षितमसि मैषां क्षेष्ठा अमुत्रामुष्मिन्लोके अन्तरिक्षां समं तस्य वायुरुपद्रष्टा सामानि ते महिमा । पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा प्राणापानयोर्जुहोम्यक्षितमसि मैषां क्षेष्ठा अमुत्रामुष्मिन्लोके द्यौः समा तस्यादित्य उपद्रष्टा यजूंषि ते महिमेति ब्राह्मणानन्नेन परिविष्य प्रदिष्टमुदपात्रं चादाय दक्षिणपूर्वमवान्तरदेशं गत्वा प्रदिष्टमुदपात्रेणोपप्रवर्तयति परायात पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः । अथ मासि पुनरायात नो गृहान्हविरत्तुं सुप्रजसः सुवीरा इति सर्वतः समवदाय शेषस्य प्राश्नातीदमन्नं पूर्यतां चापूर्यतां च तन्नः सह देवैरमृतमस्तु प्राणेषु त्वामृतं जुहोमि स्वाहेति १४

अष्टकां व्याख्यास्याम उपरिष्टान्माघ्याः प्राक्फाल्गुन्या यो बहुलस्तस्याष्टमी ज्येष्ठया संपद्यते तामेकाष्टकेत्याचक्षते तस्यां संभारानुपकल्पयते गां प्रश-

स्याष्टकापूपं चतुःशरावं तूष्णीं निर्वपति षट्कपालो भवत्येककपालो वा तस्य दार्विहोमिकः संस्कारस्तमौपासने श्रपयित्वौपासन एव जुहोत्युलूखला ग्रावाणो घोषमक्रत हविः कृण्वन्तः परिवत्सरीणम् । एकाष्टके सुप्रजा वीरवन्तो वयं स्यामः पतयो रयीणां स्वधा नमः पितृभ्यः स्वाहा । अयं चतुःशरावा घृतवानपूपः पयस्वानग्ने रयिमान्पुष्टिमांश्च । प्रतिगृह्णन्तु पितरः संविदानाः स्विष्टः सुहुतोऽयं ममास्तु स्वधा नमः पितृभ्यः स्वाहा । वहापूपं जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके । अपाोपकुल्या उप तान्क्षरन्तु सत्या एषामाशिषः सन्तु कामैः स्वधा नमः पितृभ्यः स्वाहेति पुरस्तात्स्विष्टकृत एता आहुतीर्जुहोति पूर्णा पश्चात्त्वमग्ने अयासि प्रजापत इएइ तिस्रस्ततः सौविष्टकृतं जुहोत्यग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः पितृभ्यः स्वाहेति १५

श्वो भूते पितृभ्यो गामालभतेऽग्निमुपसमाधाय यथा पुरस्तादाज्येन प्रायश्चित्तं हुत्वैकेन बर्हिषैकशूलया च वपाश्रपण्योपाकरोति पितृभ्यस्त्वा जुष्टामुपाकरोमीतीमां पितृभ्यो गामुपाकरोत्यूर्जस्वतीं पयस्वतीं तां मे जुषन्तां पितरः समेताः । मेदस्वती घृतवती स्वधावती सा मे पितृन्सांपरायै धिनोत्वित्युपाकरणीयां हुत्वा पितृभ्यस्त्वा जुष्टां प्रोक्षामीति प्रोक्षितां पर्यग्निकृतां प्रत्यक्शिरसं दक्षिणापदीं संज्ञपयन्ति संज्ञप्ताया अद्भिः प्राणानाप्याय्य तूष्णीमेव वपामुद्धृत्य हृदयमुद्धरति प्रज्ञाते च मतस्ने औदुम्बर्यां वपाश्रपण्यां वपां श्रपयित्वौदुम्बरेषु शूलेषु पृथगितराणि श्रपयित्वौदुम्बर्या दर्व्योपस्तीर्णाभिघारितां वपां जुहोति वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके । मेदसः कुल्या उप तान्क्षरन्तु सत्या एषामाशिषः सन्तु कामैः स्वधा नमः पितृभ्यः स्वाहेति १६

उपस्थितेऽन्ने ओदनस्य मांसानामिति समवदय सर्पिर्मिश्रस्य जुहोत्येकाष्टकां पश्यत दोहमानामन्नं मांसवद्घृतवत्स्वधावत् । तद्ब्राह्मणैरतिपूतमनन्तमक्षय्यं मे अस्तु स्वधा नमः पितृभ्यः स्वाहा । एकाष्टका तपसा तप्यमाना संवत्सरस्य पत्नी दुदुहे प्रपीना । तां दोहमुपजीवाथ पितरः सहस्रधा मुच्यमानां पुरस्तात्स्वधा नमः पितृभ्यः स्वाहा । वहान्नं जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके । अन्नस्य कुल्या उप तान्क्षरन्तु सत्या एषामाशिषः सन्तु कामैः स्वधा नमः पितृभ्यः स्वाहेति पुरस्तात्स्विष्टकृत एतानुपहोमान्जुहोतीयमेव सा

या प्रथमा व्यौच्छदेकाष्टका तपसा तप्यमाना या प्रथमा व्यौच्छत्संवत्सरस्य प्रतिमां प्रजापत इति पञ्च ततः सौविष्टकृतं जुहोत्यग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः पितृभ्यः स्वाहेति श्वो भूते पितृभ्यो मांसशेषेण मासिश्राद्धस्यावृता श्राद्धं करोति १७

वेदमधीत्य स्नात्यन्नुपकल्पयते पालाशीं समिधमुदपात्रं चैरकां चीपबर्हणं च स्नानीयपिण्डं च सार्वसुरभिपिष्टं चन्दनं च सूत्रं सोपधानं मणिं सपाशं बादरं मणिमुत्तरासङ्गं च सान्तरमहते च प्रवर्तौ च स्रजं चाञ्जनं चादर्शोपानहौ दण्डं च छत्रं चाथ नक्षत्राणि तिष्य उत्तरे फल्गुनी हस्तश्चित्रा स्वाति विशाखे इत्येतेषामेकस्मिन्पुरोदयादादित्यस्य व्रजं प्रपद्यत एतदहःस्नातानां ह वा एष एतत्तेजसा तपति तस्मादेनमेतदहर्नाभितपेदन्तर्लोम्ना चर्मणा द्वारमपिधाय पूर्वार्धे व्रजस्याग्निमुपसमाधाय मध्यंदिने पालाशीं समिधमादधातीमं स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया । भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव स्वाहेति तत एतान्संभारान्सकृदेव सर्वानाहृत्य तानुत्तरतोऽग्नेर्निधायापरेणाग्निमुत्तरतःपरिषेवनामेरकामास्तीर्य तस्यामुदक्शिरा निपद्यते १८

दक्षिणतो नापित उपविशति तस्य क्षुरमभिमन्त्रयते शिवो नामासि स्वधितिस्ते पिता । नमस्ते अस्तु मा मा हिंसीरित्यद्भिरुद्यमानमभिमन्त्रयते शिवा मे भवथ संस्पृश इति क्षुरमभिनिधीयमानमभिमन्त्रयते यदृषीणां त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषमिति वपन्तं यत्क्षुरेण मर्चयता सुपेशसा वप्त्रा वपसि वर्चसा मुखं मा न आयुः प्रमोषीरिति श्मश्रूणि वापयित्वोपपक्षौ निवापयतेऽथ केशान्यथोपपादमङ्गान्येवमेवात ऊर्ध्वं वापयते पश्चार्धे व्रजस्योपविश्य मेखलां विस्रस्य परिकर्मणे प्रयच्छतीमां हृत्वा स्तम्ब उपगूहेति तां स हृत्वा स्तम्ब उपगूहतीदमहममुष्यामुष्यायणस्य द्विषन्तं भ्रातृव्यमुपगूहाम्युत्तरोऽसौ द्विषद्भ्य इति तत आप उपशेरत उष्णाश्च शीताश्च शीतासूष्णा आनयति दैवमानुषस्य व्यावृत्या इति विज्ञायते संसृष्टाभिरद्भिरभिषिञ्चत्यापो हि ष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन स्नानीयेन प्रताप्य १९

दन्तान्प्रक्षालयतेऽन्नाद्याय व्यूहध्वं सोमो राजेदमागमत् । स मा प्रविशत्व-न्नाद्येन भगेन च दीर्घायुरहमन्नादो भूयासमिति सार्वसुरभिणा प्रलेप्स्यमानः प्रोक्षति नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणी-रित्यथानुलिम्पेद्यद्वर्चो अपसरासु च गन्धर्वेषु च यद्यशः । दिव्यो यो मानुषो गन्धश्च स माविशतादिहेति समुन्नीय चन्दनेनानुलेप्स्यमान एवं प्रोक्षत्येव-मनुलिम्पेदथाहतमन्तरं परिधत्त आयुरसीति जरामशीयेत्युत्तरं यज्ञोपवीतं कृत्वाप आचम्य जयाभ्यातानान्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति दीक्षा तपो मनसो मातरिश्वा बृहस्पतिर्वाचो अस्याः स योनिः । वेदांसि विद्या मयि सन्तु चारवोऽग्निषोमा यशो अस्मासु धत्तम् । अग्निर्येन विराजति सोमो येन विराजति सूर्यो येन विराजति विराडयेन विराजति तेनाहं विश्वतः परिविराज्यासमिहैकवृत्स्वाहेति २०

अपरेणाग्निं प्राङ्मुख उपविश्य सोपधानं मणिं प्रवयति सपाशं बादरं मणिमुदपात्रेऽवधाय प्रदक्षिणं पर्याप्लावयतीयमोषधे त्रायमाणा सहमाना सहस्वती सा मा हिरण्यवर्चसं ब्रह्मवर्चसिनं मा करोत्वित्युद्धृत्याक्ष्णयैव पर्याहृत्य प्रतिमुञ्चतेऽपाशोऽसीत्युरसि स्थापयत्युरो मे मा संशारीः शिवो मोपशेष्व मह्यं दीर्घायुत्वाय शतशारदायेति हस्तेन बादरं मणिमूर्गसीत्यर्की मणिर्ब्राह्मणस्य पुलको वैश्यस्य राज्ञो गर्दभसुग्रीवोऽर्को मणिर्ब्राह्मणस्य वैश्यस्य पुलको मणिः । राज्ञो गर्दभसुग्रीवो यस्य कस्य कपित्थक इति मणिधारणे गाथा भवति निधायाहतमन्तरं परिधत्त आयुषे त्वेति जराम-शीयेत्युत्तरमहतस्य दशायां प्रवर्तौ प्रबध्य दर्व्यामाधायाज्यस्योपघातं जुहोत्यायुष्यं वर्चस्यं सुवीर्यं रायस्पोषमौद्भिद्यमिदं हिरण्यमायुषे वर्चसे जैत्रियायाविशतान्मां स्वाहा

उच्चैर्वाजि पृतनाजित्सत्रासाहं धनंजयम्
सर्वाः समृद्धीर्ऋद्धयो हिरण्येऽस्मिन्समाहिताः स्वाहा

शुनमडं हिरण्यस्य पितुरिव नामाग्रभैषम्
तं मा हिरण्यवर्चसं पुरुषु प्रियं कुरु स्वाहा

प्रियं मा देवेषु कुरु प्रियं मा ब्राह्मणे कुरु
प्रियं विश्वेषु शूद्रेषु प्रियं राजसु मा कुरु स्वाहा

संराजं च स्वराजं चाभिष्टीर्या च नो गृहे
लक्ष्मी राष्ट्रस्य या मुखे तया मा संसृजामसि स्वाहेति २१

उद्धृत्य प्रक्षाल्य दक्षिणमेवाग्रे प्रतिमुञ्चत आयुष्यं वर्चस्यमित्येतदेव मणिकुण्डलबन्धने विद्यादथ स्रजं प्रतिमुञ्चते

शुभिके शिर आरोह शोभयन्ती मुखं मम ।
मुखं हि मम शोभय भूयांसं च भगं कुरु ॥

यामाहरज्जमदग्निः श्रद्धायै कामायान्यै ।
इमां तां प्रतिमुञ्चेऽहं भगेन सह वर्चसेति

अथाङ्क्ते यदाञ्जनं त्रैककुदं जातं हिमवत उपरि मयि पर्वतवर्चसमित्याद-र्शमवेक्षते यन्मे वर्चः परापतितमात्मानं परिपश्यतः । इदं तत्पुनराददे भगेन सह वर्चसेति वाग्यत आस्त आ नक्षत्राणामुदयादुदितेषु नक्षत्रेषूपानहावुपमुञ्चते द्यौरसीति दक्षिणां पृथिव्यसीत्युत्तरामुपमुच्याभिमन्त्रयते प्रतिष्ठे स्थो देवते मा मा संताप्तमिति दण्डमादत्ते लोके वेदायास्मि द्विषतो वधाय सपत्नाञ्छ्वा-पदान्सरीसृपान्हस्तिनश्चेति छत्रमादत्ते प्रजापतेः शरणमसि ब्रह्मणः छदिरि-त्युपनिष्क्रम्य दिशोऽनुवीक्षते देवीः षडुर्वीरुरु नः कृणोतेति चन्द्रमसमुदीक्षते मा रधाय द्विषते सोम राजन्निति यत्रास्य रातिर्भवति तेन संभाष्य यथर्थमे-तीत्येकमथैतदपरं तूष्णीमेव तीर्थे स्नात्वोदेत्य तूष्णीं पालाशीं समिधमादधाति संवत्सरं न मैथुनं चरति द्वादशरात्रं त्रिरात्रं वा सर्वा स्थितयः २२

अथार्घ्यं जिहीर्षन्नर्घ्यं वेदयते जिहीर्षामीति कुरुतेत्याह कंसे दध्यानीय मध्वानयति ह्रसीयस्यानीय वर्षीयसापिदधाति पूर्वः कूर्चेन प्रतिपद्यतेऽन्व-ङ्पाद्येनान्वङ्ङर्घ्येणान्वङ्ङाचमनीयेनान्वङ्मधुपर्केणानुसंव्रजत्यथास्मा आसनमिति वेदयते तत्प्रतिमन्त्रयते राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषमिति

राजा ब्राह्मणो वा राष्ट्रभृदस्यधिपत्यासन्दी मा त्वद्योषमिति ग्रामणीः सेनानीर्वाथास्मै पाद्यमिति वेदयते तत्प्रतिमन्त्रयत आपः पादावनेजनीर्द्विषन्तं नाशयन्तु मे । अस्मिन्कुले ब्रह्मवर्चस्यसानि मयि महो मयि यशो मयीन्द्रियं वीर्यम् । आ मा गन्यशसा वर्चसा संसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनामिति सव्यं पादं प्रतिगृह्य दक्षिणं प्रतिगृह्णीयाद्दक्षिणं राजा ग्रामणीः सेनानीर्वा २३

अथास्मा अर्घ्यमिति वेदयते तदेतेनैव प्रतिमन्त्र्य विराजो दोहोऽसि विराजो दोहमशीय मयि दोहः पद्यायै विराज इति प्रतिगृह्य निनयति समुद्रं वः प्रहिणोमि स्वां योनिमपिगच्छत । अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पय मत्पय इत्यथास्मा आचमनीयमिति वेदयत आचामत्यमृतोपस्तरणमसीत्याचान्तोदकायाथास्मै मधुपर्क इति वेदयते तत्प्रतिमन्त्रयते यन्मधुनो मधव्यं परममन्नाद्यं रूपं तेनाहं मधुनो मधव्येन परमेणान्नाद्येन रूपेण परमोऽन्नादो मधव्यो भूयासमिति प्रतिगृह्य प्राश्नाति त्रय्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनामिति भूर्भुवः सुवरिति त्रिराचम्याथ रातये प्रयच्छति स्वयं वा सर्वं प्राश्नात्यथास्मा आचमनीयमिति वेदयत आचामत्यमृतापिधानमसीत्याचान्तोदकायाथास्मै गौरिति वेदयते तां प्रतिमन्त्रयते गौरस्यपहतपाप्माप पाप्मानं जहि पाप्मानं मम चामुष्य च जहि द्विषन्तं हनीथा मम द्विषं कुरुतेति २४

अथास्मा अन्नं संस्कृत्य भूतमिति वेदयते तत आह ब्राह्मणांश्चतुरो नानागोत्रान्भोजयतेति तेषु भुक्तवत्स्वन्नमाहरन्ति तदेतेनैव प्रतिमन्त्र्य प्रतिगृह्य प्रत्यवरुह्य प्राश्नाति यथा मधुपर्कं प्रत्यवरुह्यैवात ऊर्ध्वमन्नानि प्राश्नीयादित्येकमथैतदपरमर्ध्येष्वेवैष नियमः स्याद्यथाकामीतरेष्वथ यदि गामुत्सृजेत्तामभिमन्त्रयते गौर्धेनुभव्या माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः । प्र णु वोचं चिकितुषे जनाय मा गामदितिं वधिष्ट । पिबतूदकं तृणान्यत्तु । ओमुत्सृजतेत्यथ सोमप्रवाकाय यत्रास्मै सोमं प्राह तद्यज्ञोपवीतं कृत्वाप आचम्य प्राङ्वोदङ्वा तिष्ठञ्जपत्यासीनो वा भूर्भुवः सुवरायुर्मे प्रावोचो वर्चो मे प्रावोचो यशो मे प्रावोचः श्रियं मे प्रावोच आयुष्मानहं वर्चस्वी यशस्वी श्रीमानपचितिमान्भूयासं भूर्भुवः सुवः सर्वं

भूयासमित्युक्त्वा प्रति वाचष्टे प्रति वां जानीत एतेनैव भूतप्रवाकायों तन्मा ह्वायीत्यन्तेन २५

अथास्मा अन्नं सनिमित्वाभिमन्त्रयतेऽन्नमिव ते दृशे भूयासं वित्तमिव ते दृशे भूयासं श्रीरस्यर्वाच्याविशास्मान्संस्रवन्तु दिशो महीः समागच्छन्तु सूनृताः । सर्वे कामा अभियन्तु मा प्रिया अभिरक्षन्तु मा प्रियाः । यशोऽसि यशोऽहं त्वयि भूयासमसावित्यभिमन्त्र्यार्थं ब्रुवते व्यवजिहीर्षमाणः पण्यस्यावदाय जुहोति यदहं धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानः । तस्मिन्सोमो रुचमादधात्वग्निरीशान इन्द्रो बृहस्पतिश्च स्वाहेत्यथ संवादजयनं संवाद-मेष्यन्नात्तछत्रः सव्येन हस्तेन छत्रं समावृत्य दक्षिणेन फलीकरणमुष्टिं जुहोत्यवजिह्वक निजिह्वकाव त्वा हविषा यजे । तत्सत्यं यदहं वदाम्यधरो मदसौ वदात्स्वाहेति येन संवदते तमभिमन्त्रयत आ ते वाचमास्यां दद आ मनस्यां हृदयादधि । अङ्गादङ्गात्ते वाचमाददे यत्र यत्र ते वाङ्निहिता तां त आददे । तत्सत्यं यदहं वदाम्यधरो मत्पद्यस्वासाविति २६

यद्यस्मै सुभृत्याः प्रव्रजेयुरग्निमुपसमाधायेरड्वानि जुहुयादनु पोऽह्वदनुह्वयो निवृत्तो वो न्यवीवृतत् । ऐन्द्रः परिक्रोशो वः परिक्रोशतु सर्वतः । यदि मामतिमन्यध्वमदेवा देववत्तरम् । इन्द्रः पाशेन सित्वा वो मह्यमित्पुनरान-यादिति वदेद्वा खादिरं शङ्कुं निहत्य नीललोहिताभ्यां सूत्राभ्यामपसव्यैस्त्रिः परिवेष्टयेदावर्तन वर्तयेत्यपि वै यदि दूरगा भवन्तीह हैव वर्तन्ते यं कामयेत नायं मत्पद्येतेति दक्षिणे पाणावभिपद्येत यस्मिन्भूतं च भव्यं च विश्वे देवाः समाहिताः । तेन गृह्णामि त्वामहं मह्यं गृह्णामि त्वामहं ब्रह्मणे त्वा गृह्णामीति न हैवास्मात्पद्यते यं कामयेत नायं मच्छिद्येतेत्यमावास्यां रात्रिं सुप्तं जीवविषणे स्वं मूत्रमानीयापसव्यैस्त्रिः परिषिञ्चन्परीयात्परि त्वा गिरेरमिहं परि भ्रातुः परि ष्वसुः । परि सर्वेभ्यो ज्ञातिभ्यः परिषीतः द्रेष्यसि ॥ शश्वत्परिकुपितेन सं-क्रामेणावछिदा । उलेन परिमीढोऽसि परिमीढोऽस्युलेनेति न हैवास्मात्पद्यते दीर्घसत्त्रमासिष्यमाणः २७

प्रवासमेष्यन्भार्यायाः परिदां करोति स्थूलाढारिका जीवचूर्णानि कारयि-त्वामावास्यायां रात्र्यां सुप्तायामुपस्थं प्रतिवपति सोमावास्य परिघमन्येभ्यः

पुरुषेभ्योऽन्यत्र मदिति यद्यस्यां बहुतयापीच्छन्ति न हैव सिध्यन्ति यदि कामयेत सिध्येयुरिति बभ्रुमूत्रेण पक्षालयस्वेत्येनां ब्रूयात्प्रवासमेष्यन्नामन्त्रयत इदं वत्स्यामः प्राण आयुषि वत्स्याम इत्यथैनमभिमन्त्रयत आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः । मा त्वा के चिन्नयेमुरिन्न पाशिनः । दधन्वेव ता इहि । प्राण आयुषि वसासौ पृथिव्यामग्नौ प्रतितिष्ठ वायावन्तरिक्षे सूर्ये दिवि यां स्वस्तिमग्निर्वायुः सूर्यश्चन्द्रमा आपोऽनुसंचरन्ति तां स्वस्ति-मनुसंचरासौ । प्रच्यवस्व भुवस्पत इति प्रतिपद्य श्येनो भूत्वा परापतेत्यन्तेन यं कामयेत स्वस्त्ययं पुनरागच्छेदिति तमेतेन त्र्यृचेनान्वीक्षेत महि त्रीणा-मवोऽस्त्वितीहैव पुनरागच्छति यं कामयेत नायं पुनरागच्छेदिति तमन्वीक्षेत साकं यक्ष्म प्रपतेत्येतयाथैनमभिमन्त्रयते परमां त्वा परावतमिन्द्रो नयतु वृत्रहा । यतो न पुनरायसि शाश्वतीभ्यः समाभ्य इति न हैव पुनरागच्छति २८

अथ रथारोहणं यदि रथं लभत आपूर्यमाणपक्षे पुण्ये नक्षत्रे योज-यित्वास्थास्यन्पक्षसी अभिमृशति बृहदसीति दक्षिणं रथंतरमसीत्युत्तरं वामदेव्यमसीति मध्यममश्वमास्थाय चक्रे संमाष्टर्यङ्कौ न्यङ्कावभित इत्यनु-वाकशेषेण यदि शमरथो भवति तद्यज्ञोपवीतं कृत्वाप आचम्य भूमि-मभिमृशतीह धृतिरिह स्वधृतिरिह रन्तिरिह रमतिरित्यथ हस्त्यारोहणं यदि हस्तिनं लभत आपूर्यमाणपक्षे पुण्ये नक्षत्रे कल्पयित्वाभ्युपविशतीदम-हममुमामुष्यायणमिन्द्रस्य वज्रेणाभिविशाम्युत्तरोऽहं द्विषद्भ्य इत्यथैनमभिक्रा-मयति वह काल वह श्रियं माभिवहेति समानं शमरथेन यद्यनुपस्तीर्णे स्थण्डिल उपविशेत्तदनुमन्त्रयते नमः पृथिवीषदे रुद्राय वातेषवे रुद्राय नमो रुद्राय पृथिवीषद इति सर्पसृतौ सृजति नमः सर्पसृते रुद्राय वातेषवे रुद्राय नमो रुद्राय सर्पसृत इति शकृद्रीतौ जपति नमः शकृत्सदे रुद्राय वातेषवे रुद्राय नमो रुद्राय शकृत्सद इति यदि नवानि गोमयान्यन्तरातिक्रामेद्गोष्ठमसी-त्युक्त्वातिक्रामेत् २९

यदि चतुष्पथं समया व्रजेत्तदनुमन्त्रयते नमः पृथिवीषदे रुद्राय वातेषवे रुद्राय नमो रुद्राय पृथिवीषद इति यदि श्मशानं समया व्रजेत्तदनुमन्त्रयते नमस्तत्सदे रुद्राय वातेषवे रुद्राय नमो रुद्राय तत्सद इति नदीमुद्रन्वतीं दृष्ट्वा जपति नमोऽप्सुषदे रुद्राय वातेषवे रुद्राय नमो रुद्रायाप्सुषद इति यद्येनं संवर्तवात

आगच्छेत्तदनुमन्त्रयते नमोऽन्तरिक्षसदे रुद्राय वातेषवे रुद्राय नमो रुद्राया-न्तरिक्षसद इति यद्येनं सिचोपसृजेत्तदनुमन्त्रयते सिगसि न सिगसि वज्रो नमस्ते अस्तु मा मा हिंसीरित्यद्भिरभ्युक्षेद्यद्येनं वयोऽभिविक्षिपेत्तदनुमन्त्रयते ये पक्षिणः प्रथयन्ति बिभ्यतो निर्ऋतेः सह । ते मा शिवेन तिग्मेन तेजसोन्दन्तु वर्चसेत्यद्भिरभ्युक्षेद्यद्येनं फलमभिनिपतेत्तदनुमन्त्रयते यदि वृक्षादभ्यपतत्फलं यद्यन्तरिक्षात्तदु वायुरेव । यत्रास्पृक्षत्तनुवं यत्र वास आपो बाधन्तां निर्ऋतिं पराचीरित्यद्भिरभ्युक्षेद्यद्येनमवर्षे प्रुषितमववर्षेत्तदनुमन्त्रयते दिवो नु मा बृहतो अन्तरिक्षादपां स्तोको अभ्यपतच्छिवेन समिन्द्रियेण मनसाहमागां ब्रह्मणा क्लृप्तः सुकृतेनेत्यद्भिरभ्युक्षेत् ३०

चित्र्यं वनस्पतिं दृष्ट्वा जपत्याराते अग्निर्ज्वलत्वारात्परशुरस्तु ते । निवाते त्वाभिवर्षतु जीव वर्षसहस्रं त्वम् । नमस्तेऽस्तु वनस्पते स्वस्ति मेऽस्तु वनस्पत इति प्राङ्मध्यंदिनात्क्षीरिणो वृक्षानुपस्पृशेन्नित्यं न्यग्रोधं च सर्वत्र स्वयंप्रज्वलितेऽग्नौ समिधावादध्यादुद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम । पशूंश्च मह्यमावह जीवनं च दिशो दिशः स्वाहा । मा नो हिंसीर्जातवेदो गामश्वं पुरुषं पशुम् । अहिंसन्नग्न आगहि श्रियं मयि परिपालय स्वाहे-त्याधायोपतिष्ठते नमो अग्निषदे रुद्राय वातेषवे रुद्राय नमो रुद्रायाग्निषद इत्यनुभवं परिभवं परिवादं परिक्षवम् । दुःस्वप्नं दुरुदितं शकुनैस्तद्द्विषद्भ्यो दिशाम्यहम् । अनुभूतं परिभूतं शकुनैर्यदशाकुनम् । मृगस्य सृतमक्ष्णया तद्द्विषद्भ्यो दिशाम्यहम् । परेणैतु पापशकुनिः परेणैतु परिक्षवः । अक्षिस्पन्दो दुःस्वप्न इष्टिरसंपद्यो नो द्वेष्टि तमृच्छत्वित्येतं मन्त्रं जपत्युपबाध उपबाधे च यथालिङ्गं सर्वत्रैवाप उपस्पृशेत् ३१

अथैतान्यद्भुतप्रायश्चित्तानि भवन्ति कुप्त्वां कपोत उपावेक्षीन्मध्वागार उपा-वेक्षीत्स्थूणा व्यरौक्षीद्वल्मीक उदेति सोऽहःक्षान्तः प्रयतवस्त्रो ब्राह्मणसंभा-षोऽस्तमित आदित्येऽन्तरागारेऽग्निमुपसमाधाय जयाभ्यातानान्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति पूर्णा पश्चादिमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्ययाश्चाग्नेऽस्यनभिशस्तीश्च यदस्य कर्मणोऽत्यरीरिचं प्रजापत इत्युत्तमां हुत्वा ब्राह्मणानन्नेन परिवेषयेदथैव पयसि स्थालीपाकः पौत्र्यः पशव्यः स्वर्ग्य आयुष्यः स्वयंभोज्यस्तेन यजेत सर्वेषु पर्वस्वौदुम्ब-

रमिध्ममभ्याधायौदुम्बर्या दर्व्योपस्तीर्णाभिघारितं स्थालीपाकं जुहोति सहस्र-मेतु प्रथमं बभ्रूय यशसा सह । आगत्य बभ्रुः पिङ्गाक्षः सहस्रेणावकाङ्क्षतु स्वाहा । दिशो दिशो जातवेदो मह्यं जीवनमावह । पशूनां विश्वरूपाणां यथाहं सुमते वसानि स्वाहा । देवानां संभृतो रसः प्राजापत्यं यशो महत् । जुहोम्यन्नानां रसमछिद्रा कीर्तिरस्तु मे स्वाहा । अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रोऽधिराजा एषः । स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुया कर्भागधेयम् । मोऽस्माकं मोमुहद्भागधेयं स्वाहेति यथोपदेशं काम्यानि बलयश्च ३२

इति भारद्वाजसूत्रे द्वितीयः प्रश्नः

एकाग्निर्द्वादशाहं विछिन्नः पुनराधेयः स एष औपनायनिकोऽग्निरुक्तस्तस्य परिचर्या समिद्भिर्ब्रह्मचर्ये सायं प्रातर्यथोपदेशं स्नात ओषधीभिर्यथोपपन्नेन वान्नेन स्त्री चैवं भर्तरि प्रमीते पाणिग्रहणादूर्ध्वं पार्वणः पौर्णमा-स्याममावास्यायां वा रोहिण्यां मृगशिरसि पुनर्वस्वोर्वा मध्यंदिन आद-धीतोद्धतेऽवोक्षिते सिकतोपोप्ते परिश्रिते निदधाति याज्ञिकात्काष्ठादग्निं म-थित्वा लौकिकं वाहृत्य प्रणवेनाहरति ब्रह्मा प्रणवेन प्रसौत्यासीनो व्याहृतीभिः प्रणवेनादधाति भूर्भुवः सुवरों पृथिव्यां त्वामृत आदधामि सत्ये त्वामृत आदधाम्यृते त्वामृत आदधाम्यमृते त्वामृत आदधामि विहाय दौष्कृत्यं साधुकृत्यमिति तत एतैः पृथिव्यां त्वामृत आदधामि सत्ये त्वामृत आदधाम्यृते त्वामृत आदधाम्यमृते त्वामृत आदधामीत्याज्येन चौषधीभिश्च शमनी-याभिरहुतीभिस्तिसृभिः शमयति या ते अग्ने पवमाना पशुषु प्रिया तनूर्या पृ-थिव्यां याग्नौ या रथंतरे या गायत्रे छन्दसीदं ते तामवरुन्धे तस्यै ते स्वाहा । या ते अग्ने पावकाप्सु प्रिया तनूर्यान्तरिक्षे या वायौ या वामदेव्ये या त्रैष्टुभे छन्दसीदं ते तामवरुन्धे तस्यै ते स्वाहा । या ते अग्ने सूर्ये शुचिः प्रिया तनूर्या दिवि यादित्ये या बृहति या जागते छन्दसीदं ते तामवरुन्धे तस्यै ते स्वाहेति तिस्र आश्वत्थीः समिधो घृतान्वक्ता आदधात्यग्न आयूंषि पवस इति तिसृभिः समुद्रादूर्मिर्मधुमा ँ उदारदिति तिस्रः शमीमयीः प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीं विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीं तां सवितुर्वरेण्यस्य चित्रामिति शमीमयीं ततस्तूंष्णीमौपासनं हुत्वा यास्ते अग्ने घोरास्तनुवः स्निक्च

स्नीहितिश्चेत्येताभ्यामनुवाकाभ्यामुपस्थाय समानं दार्विहोमिका परिचेष्टा दार्विहोमिकां परिचेष्टां कृत्वा १

आज्यमधिश्रित्योत्पूय स्रुवं च जुहूं च निष्टप्य संमृज्य चतुर्गृहीतेन स्रुचं पूरयित्वा द्वादशगृहीतेन वा पूर्णाहुतिं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इत्येतामनुद्रुत्य स्वाहाकारेण जुहोति हुतायां पूर्णाहुतौ वरं ददाति धेनुं वासोऽनड्वाहं हिरण्यं वा स्रुचि चतुर्गृहीतं गृहीत्वा तिस्रस्तन्तुमतीर्जुहोति तन्तुं तन्वन्नुद्बुध्यस्वाग्ने त्रयस्त्रिंशत्तन्तव इत्यपरं चतुर्गृहीतं गृहीत्वा चतस्रोऽभ्यावर्तिनीर्जुहोत्यग्नेऽभ्यावर्तिन्नग्ने अङ्गिरः पुनरूर्जा सह रय्येत्यपरं चतुर्गृहीतं गृहीत्वानुख्यां जुहोत्यन्वग्निरुषसामग्रमख्यदित्येतयापरं चतुर्गृहीतं गृहीत्वा मनस्वत्या जुहोति मनो ज्योतिर्जुषतामित्येतयापरं चतुर्गृहीतं गृहीत्वा प्राजापत्या जुहोति प्रजापतय इत्येतयापरं चतुर्गृहीतं गृहीत्वा व्याहृतीभिर्जुहोत्येकैकशः समस्ताभिश्च प्रत्येकं चतुर्गृहीतं जुहुयादित्येकं यथा समादिष्टमित्यपरं यथाकामी सर्वदर्विहोमेषु जयाभ्यातानान्राष्ट्रभृत इति हुत्वा २

एतस्मिन्नेवाग्नावोदनं श्रपयित्वा चतस्रोऽन्नाहुतीर्जुहोत्यग्नये स्वाहाग्नये पवमानाय स्वाहाग्नये पावकाय स्वाहाग्नये शुचये स्वाहेति नवेन च सस्ये सस्ये तत्रेमाभ्य आग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः स्विष्टकृत्पञ्चमीभ्यो वा जुहोतीन्द्राग्निभ्यां स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा सोमाय स्वाहा द्यावापृथिवीभ्यां स्वाहाग्नये स्विष्टकृते स्वाहेति पुरस्तात्स्विष्टकृत उपहोमं जुहोति शतायुधाय शतवीर्यायेति पञ्च ततो ब्राह्मणान्भोजयेद्यावज्जीवमेतमग्निं व्रीहिभिर्यवैर्वा सायं प्रातः परिचरत्यग्नये स्वाहेति सायं पूर्वामाहुतिं जुहोति प्रजापतये स्वाहेत्युत्तरां सूर्याय स्वाहेति प्रातः प्रजापतये स्वाहेत्युत्तरामथ यदि प्रयियासेत्प्रवसथकल्पो व्याख्यातः समित्समारोपणोपावरोहणमात्मन्यरण्योर्वा समित्समारोपणमेके समामनन्ति लौकिके चोपावरोहणं व्याख्यातमेकाग्निविधानं संतिष्ठत औपासनकल्पः संतिष्ठत औपासनकल्पः ३

अथातो व्रतादेशविसर्जने व्याख्यास्यामः पर्वण्युदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽग्नेरुपसमाधानाद्याज्यभागान्ते होतृभ्यः स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा स्वयंभुवे स्वाहेति होतृषु सांहितीभ्यो देवताभ्य

उपनिषद्भ्यः स्वाहा वारुणीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा सर्वाभ्यो देवताभ्य उपनिषद्भ्यः स्वाहेत्युपनिषत्सु चतस्रः पालाशीः समिधो घृतान्वक्ता आदधाति याज्ञिकानां वा वृक्षाणामन्यतमस्याग्ने व्रतपते होतृभ्यो व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा । वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते होतृभ्यो व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहेत्युपनिषत्सूपनिषद्भ्यो व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहेति चित्तं च चित्तिश्चेति जयादि प्रतिपद्यते परिषेचनान्तं कृत्वाथैनं संशास्ति ब्रह्मचार्यसि समिध आधेह्य-पोऽशान कर्म कुरु मा दिवा सुषुप्था भिक्षाचर्यं चराचार्याधीनो वेदमधीष्वेति ४

चत्वारिंशतमष्टौ चतुर्विंशतिरेव वा सर्वदैव ब्रह्मचर्यं ग्रहणान्तं वा वर्षाणि द्वादशावरार्ध्यमित्यपरं संवत्सरमेतद्व्रतं चरेत्संवत्सरे पर्यवेतेऽग्नेरुपसमा-धानाद्याज्यभागान्ते यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादिति द्वे मिन्दाहुती जुहोति पूर्ववत्प्रधानाहुतीर्हुत्वा व्रतपतिभ्य आधापयत्यग्ने व्रतपते होतृभ्यो व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा । वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते होतृभ्यो व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहेत्युपनि-षत्सूपनिषद्भ्यो व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहेति चित्तं च चित्तिश्चेति जयादि प्रतिपद्यते परिषेचनान्तं कृत्वाथैनं व्रतान्तेऽध्यापयते श्रावयते वा महा होतार उपनिषद इति संतिष्ठते व्रतादेशविसर्जने संतिष्ठते व्रतादेशविसर्जने ५

अथातोऽवान्तरदीक्षां व्याख्यास्यामः पर्वण्युदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽपराह्णे केशश्मश्रू वापयित्वा प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽछदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववदुपाकृत्य मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वा चतस्र औदुम्बरीः समिधो घृतान्वक्ता आदधाति पृथिवी समिदित्येतैर्मन्त्रैरथ देवता उपतिष्ठतेऽग्ने व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतामित्यथैनं सर्वेषामनुवाकानां प्रभृती-रभिव्याहारयति प्रथमोत्तमयोर्वा जयादि प्रतिपद्यते परिषेचनान्तं कृत्वा मदन्तीरुपस्पृश्योत्तमेनानुवाकेन शान्तिं कृत्वा ततः संमीलयति वाचं च यच्छत्यथास्याहतेन वाससा शिरः संमुखं वेष्टयत्यस्तमित आदित्ये ग्रामं

प्रपादयति वाग्यत एतां रात्रिं तिष्ठत्यास्ते वा श्वो भूते खिलेऽछदिर्दर्शेऽग्नि-मुपसमाधाय संपरिस्तीर्याथास्य षट्त्रयमभिविदर्शयति सप्ततयमित्येकेऽग्नि-मादित्यमुदकुम्भमश्मानं वत्सं महानग्नां हिरण्यं सप्तममपि वादितस्त्रीण्य-मिविदर्शयति तत आदित्यमुपतिष्ठते वयः सुपर्णा इत्येतयात्रैतद्वासो गुरवे दत्त्वाथास्य ब्रह्मचर्यमधि नित्ये न नक्तं भुञ्जीत यदि भुञ्जीतापज्वलितं भुञ्जीत न मृन्मयं प्रति धयीत न स्त्रिया न शूद्रेण सम्भाषेत न चक्रीवन्तमारोहेन्न कूप-मवरोहेन्नोपानहौ न छत्रं धारयीत न समाजमीक्षेत न हर्म्याणि न शरीराणि न शवं नान्तावसायिनम् ६

संवत्सरमेतद्व्रतं चरेत्संवत्सरे पर्यवेते खिलेऽछदिर्दर्शेऽग्नेरुपसमाधानाद्या-ज्यभागान्ते द्वे मिन्दाहुती हुत्वा पूर्ववत्प्रधानाहुतीर्जुहुयान्मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वा तत आवृत्तैः पृथिवी समिदित्येतैर्मन्त्रैश्चतस्र औदुम्बरीः समिध आधायावृत्तैर्देवता उपतिष्ठतेऽथैनं सर्वेषामनुवाकानां प्रभृ-तीरभिव्याहारयति प्रथमोत्तमयोर्वोत्तमेन शान्तिं कृत्वा जयादि प्रतिपद्यते परिषेचनान्तं कृत्वाथैनं संशास्ति ब्रह्मचार्यसीत्याद्यन्तावसायिनमित्यन्तं पूर्ववदादेशः ७

अथात उपाकरणविसर्जने व्याख्यास्यामः श्रवणापक्ष ओषधीषु जातासु हस्तेन पौर्णमास्यां वोपाकर्माग्नेरुपसमाधानाद्याज्यभागान्ते काण्डर्षीन्जुहोति का-ण्डनामानि वा प्रजापतये काण्डर्षये स्वाहेति प्राजापत्यानां प्रजापतये स्वाहेति वा सोमाय काण्डर्षये स्वाहेति सौम्यानां सोमाय स्वाहेति वाग्नये काण्डर्षये स्वाहेत्याग्नेयानामग्नये स्वाहेति वा विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहेति वैश्वदेवानां विश्वेभ्यो देवेभ्यः स्वाहेति वा स्वयंभुवे स्वाहेति सर्वेषां सदसस्पतिर्द्वितीयस्त्रीनादितोऽनुवाकानधीयन्ते काण्डादीन्वा सर्वांस्त्र्यह-मेकाहं वाक्षाम्येताथाधीयीत मासं प्रदोषे नाधीयीत तैषीपक्षस्य रोहिण्यां पौर्णमास्यां वोत्सर्गोऽपि वा माघ्यां सहान्तेवासिभिः प्राचीमुदीचीं वा दिश-मुपनिष्क्रम्य यत्रापः सुखावगाहा अवकिन्यः शंखिन्यस्तत्र गत्वापो हि ष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन मार्जयित्वा ८

अघमर्षणेन त्रीन्प्राणायामान्धारयन्त्यृतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ।
ततो रात्रिरजायत ततः समुद्रो अर्णवः

समुद्रादर्णवादधि संवत्सरो अजायत
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्
दिवं च पृथिवीं चान्तरिक्षमथो सुवरिति

दर्भानन्योऽन्यस्मै प्रदायाथासनानि कल्पयन्ते ब्रह्मणे प्रजापतयेऽग्नये बृहस्पतये वायवे सूर्याय चन्द्रमसे नक्षत्रेभ्य इन्द्राय राज्ञे सोमाय राज्ञे यमाय राज्ञे वरुणाय राज्ञे वैश्रवणाय राज्ञे रुद्राय स्कन्दाय विष्णवेऽश्विभ्यां धन्वन्तरये वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः साध्येभ्य ऋभुभ्यो भृगुभ्यो मरुद्भ्योऽथर्वभ्योऽङ्गिरोभ्य इति गणानाम् ९

विश्वामित्राय जमदग्नये भरद्वाजाय गौतमायात्रये वसिष्ठाय कश्यपायारुन्धत्यै कल्पयामीति दक्षिणतोऽगस्त्याय कल्पयन्त्युत्तरतः कृष्णद्वैपायनाय जातूकर्णाय तरुक्षाय बृहदुक्थाय तृणबिन्दवे सोमश्रवसे सोमशुष्मिणे वाजश्रवसे वाजरत्नाय वर्मिणे वरूथिने सत्ववते हर्यज्वने वामदेवायोदमयायर्णंजयायर्तंजयाय कृतंजयाय धनंजयाय बभ्रवे त्र्यरुणाय त्रिवर्षाय त्रिधातवेऽश्वयज्ञाय पराशराय वसिष्ठायेन्द्राय मृत्यवे कर्त्रे त्वष्ट्रे धात्रे विधात्रे सवित्रे सुश्रवसे सत्यश्रवसे सावित्र्यै छन्दोभ्य ऋग्वेदाय यजुर्वेदाय सामवेदायाथर्वाङ्गिरोभ्य इतिहासपुराणेभ्यः सर्पदेवजनेभ्यः सर्वभूतेभ्यश्च कल्पयामीति १०

दक्षिणतः प्राचीनावीती वैशम्पायनाय फलिङ्गवे तित्तिरय उखायात्रेयाय पदकाराय कौण्डिण्याय वृत्तिकाराय कण्वाय बोधायनाय भरद्वाजाय सूत्रकारायापस्तम्बाय सर्वेभ्यः सूत्रकारेभ्य आचार्येभ्यः ऋषिभ्यो वानप्रस्थेभ्य ऊर्ध्वरेतोभ्य एकपत्नीभ्यश्च कल्पयामीति यथास्वं पितृभ्यश्च कल्पयन्ति मातामहेभ्यश्च पृथक्पृथगित्येतैरेव नामधेयैर्गन्धपुष्पधूपदीपान्नफलोदकैरमष्मै नमोऽमुष्मै नम इति गन्धपुष्पधूपदीपैरमुष्मै स्वाहामुष्मै स्वाहेत्यन्नेनामुं तर्पया-

म्यमुं तर्पयामीति फलोदकेनात्र नमस्यन्ति त्रीनादितोऽनुवाकानधीयन्ते का- ण्डादीन्वा सर्वान्क्राण्डात्काण्डात्प्ररोहन्तीति द्वाभ्यामुदकान्ते दूर्वा रोपय- न्त्यथोदधिं कुर्वन्त्युन्नम्भय पृथिवीमिति हस्तेन संसर्गास्त्रिरुद्धिध्या तमितोराजिं धावन्त्येवं पारायणसमाप्तावनश्नत्पारायणमधीत्यैतत्कुर्वन्त्युदकान्ते दूर्वारो- पणोदधिधावनवर्जं प्रत्येत्य गृहान्ब्राह्मणान्भोजयेदपूपैर्धानाभिः सक्तुभिरोदने- नेत्येवमेवाद्भिरहरहर्देवानृषीन्पितृंश्च तर्पयेत्तर्पयेत् ११

सर्वेषु पाकयज्ञेषु स्त्रियाश्चानुपेतस्य बलिमन्त्रो न विद्यतेऽपि वा स्त्री जुहुयान्मन्त्रवर्जं न चानुपेत उपेतो व्याख्यातो गृहपेधिनो यदशनीयस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्तास्तेषां मन्त्राणामुपयोगे द्वादशाहमधःशय्या ब्रह्मचर्यं क्षारलवणवर्जनं चोत्तमस्यैकरात्रमुपवासः स्त्री वैश्वदेवं निर्वपेद्युक्तो वा स्वयं निर्वपेद्देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां विश्वेभ्यो देवेभ्यो जुष्टं निर्वपामीति त्रिर्यजुषा तूष्णीं चतुर्थं पत्नी प्रयता फलीकरोति पत्न्या उपदिशति प्रक्षालितपाणिपादाधिश्रयीत शृतं वेदयीत भूतमिति भर्तुः प्रति- वेदयते तत्सुभूतं विराडन्नं तन्मा क्षायीति वचनमभिघार्योद्वास्य प्रतिष्ठित- मभिघार्योपरिष्टादद्भिर्मार्जयित्वाधस्ताद्धोमयेन नात्रेध्माबर्हिर्भवति नाघारौ ना- ज्यभागौ व्याहृतीभिश्चतस्रः समिधोऽभ्याधाय परिषिच्य हस्तेन जुहोत्यग्नये स्वाहा सोमाय स्वाहा प्रजापतये स्वाहा धन्वन्तरये स्वाहा ध्रुवाय स्वाहा ध्रुवाय भौमाय स्वाहा ध्रुवक्षितये स्वाहाच्युतक्षितये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा सर्वाभ्यो देवताभ्यः स्वाहाग्नये स्वाहाग्नयेऽमवते स्वाहाग्नयेऽन्नादाय स्वाहाग्नये स्विष्टकृते स्वाहेति व्याहृतीभिर्जुहोत्येकैकशः समस्ताभिश्च मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधिर्हविष्मन्तो नमसा विधेम ते स्वाहा । कामाय स्वाहा मन्यवे स्वाहेत्यथ परिषिञ्चति मन्त्रांश्च संनमति १२

अपरेणाग्निं हस्तेन परिमृज्य धर्माय स्वाहाधर्माय स्वाहा ध्रुवाय स्वाहा क्षयाय स्वाहेत्यन्नं प्राणः प्रजापतिः परमेष्ठिने स्वाहेत्युखायामद्भ्यः स्वाहा वरुणाय स्वाहेत्युदधान्यां रुद्राण्यै स्वाहा रुद्राय स्वाहेति रुद्राण्यां भूः स्वाहेति सर्व- देवताभ्योऽन्तरिक्षाय स्वाहौषधिवनस्पतिभ्यः स्वाहेति मध्येऽगारे कामाय स्वाहेति शयनदेशे वनस्पतिभ्यः स्वाहेति स्थूणादेश ओषधिवनस्पतिभ्यः

स्वाहेति स्थूणाराजयोर्गृह्याभ्यः स्वाहा गृहपतिभ्यः स्वाहावसानेभ्यः स्वाहा-वसानपतिभ्यः स्वाहेत्युत्तरपूर्वे देशे भूतेभ्यः स्वाहेत्युद्धाटे यदेजति जगति यच्च चेष्टति नाम्नो भागो यन्नाम्ने स्वाहेति संवदान्यामथ देहल्यां मरुद्धः स्वाहेति मध्ये धात्रे स्वाहा विधात्रे स्वाहेति द्वयोर्वाहयोर्गृहादुपनिष्क्रम्याह्ने स्वाहा रात्र्यै स्वाहेत्यथोपलब्धे पिङ्गाएयै स्वाहा पिङ्गाएयै स्वाहेति पिङ्गाएयां विष्णवे स्वाहा विष्णवे स्वाहेत्युलूखलमुसलेऽनसे स्वाहेति शकटे सोमाय स्वाहेति धान्ये श्रियै स्वाहा पुष्टयै स्वाहेति धान्यनिचतेऽथ प्रदक्षिणं बलिं निनयति प्राच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहा प्रतीच्यै दिशे स्वाहोदीच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहाग्नेय्यै दिशे स्वाहा नैर्ऋत्यै दिशे स्वाहा वायव्यै दिशे स्वाहैशान्यै दिशे स्वाहा ब्रह्मणे स्वाहा प्रजापतये स्वाहेति मध्ये १३

इन्द्राय स्वाहेन्द्रपुरुषेभ्यः स्वाहेति पुरस्ताद्यमाय स्वाहा यमपुरुषेभ्यः स्वाहेति दक्षिणतो वरुणाय स्वाहा वरुणपुरुषेभ्यः स्वाहेति पश्चात्सोमाय स्वाहा सोमपुरुषेभ्यः स्वाहेत्युत्तरतोऽग्नये स्वाहेति पुरस्ताद्यमाय स्वाहेति दक्षिणतो वरुणाय स्वाहेति पश्चात्सोमाय स्वाहेत्युत्तरतः सप्तर्षिभ्यः स्वाहा सर्वभूतेभ्यः स्वाहेत्युत्तरपूर्वे देशेऽथ दक्षिणतः प्राचीनावीती जुहोति पितृभ्यः स्वधा नमः पितामहेभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधा नमो मातामहेभ्यः स्वधा नमो मातुः पितामहेभ्यः स्वधा नमो मातुः प्रपितामहेभ्यः स्वधा नम इति त्रीननुगेभ्यः स्वधा नम इति मध्येऽप उपस्पृश्योत्तरतो यज्ञोपवीती जुहोत्यृग्वेदाय स्वाहा यजुर्वेदाय स्वाहा सामवेदाय स्वाहाथर्ववेदाय स्वाहाथर्वाङ्गिरोभ्यः स्वाहे-तिहासपुराणेभ्यः स्वाहा सर्वदेवजनेभ्यः स्वाहा सर्वभूतेभ्यः स्वाहेत्यथोर्ध्वं बलिं निनयति ये भूताः प्रचरन्ति दिवा बलिमिच्छन्तो वितुदस्य प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहेति नक्तं बलिमिच्छन्त इति रात्र्यामथार्केणैकपर्णेन बलिम् निनयति येषां न माता पचते येषां रात्र्यां समागमम् । तेषामहं तु भूतानां पिण्डं दास्याम्ययाचितः । भये मेऽभयमस्तु दुर्भिक्षे च सुभिक्षणम् । जननमारके मृत्युजातिप्राये च काल्यतां स्वाहेति पात्रसंक्षालनं निनयति निशि श्रितेभ्यः स्वाहा रुद्राय स्वाहेति वा वैश्वदेवं हुत्वातिथिमाकाङ्क्षेतागोदोहनकालमग्रं वोद्धृत्य निदध्याद्यज्ञो वा एष पञ्चमो यदतिथिः १४

अपरेण गार्हपत्यमुपविश्याधीहि भो इत्युक्त्वा सावित्रीं सहस्रकृत्व आवर्तये- च्छतकृत्वो वा दशवारं वेदादीन्जपेच्छन्दांसि कूश्माण्डानि चाधियीताग्नि- मीले पुरोहितमित्यृग्वेदस्येषे त्वोर्जे त्वेति यजुर्वेदस्याग्न आयाहि वीतय इति सामवेदस्य शन्नो देवीरभिष्टय इत्यथर्ववेदस्याग्निर्मूर्धेति छन्दांसि यद्देवा देव- हेडनमिति कूश्माण्ड्यो यदधीते स ब्रह्मयज्ञो यज्जुहोति स देवयज्ञो यत्पितृभ्यः स्वधा करोति स पितृयज्ञो यद्भूतेभ्यो बलिं हरति स भूतयज्ञो यदतिथिभ्योऽन्नं ददाति स मनुष्ययज्ञ इत्येते वै पञ्च महायज्ञाः सतति सुप्रयुक्ता नयन्ति परमां गतिम् एतेभ्यो यस्य पञ्चभ्यो यज्ञ एकोऽपि हीयते । मनस्वत्याहुतिस्तस्य प्रायश्चित्तं विधीयते । द्व्यहं त्र्यहं वापि प्रमादादकृतेषु तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेद्दशाहं द्वादशाहं वा विछिन्नेषु स्वस्त्ययनेषु तु सर्वशश्चत- स्रोऽभ्यावर्तिनीर्हुत्वा कार्यस्तान्तुमतश्चरुः

यस्य स्त्री वानुपेतो वा गृहेष्वेतान्बलीन्हरेत्
कूश्माण्ड्यस्तत्र होतव्या हुत्वा यज्ञसमृद्धये

प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते
पञ्चानां महतामेषां स यज्ञैः सह गच्छति

प्रवासे कुरुते चैतान्यदन्नमुपपद्यते
न चेदुत्पद्यते त्वन्नमद्भिरेनान्समापयेत्

अड्भिरेव व्रतं कृत्वा यथालाभमनुव्रतः
देवानां देवयज्ञेन द्विजा गच्छन्ति सात्मताम्

पितृणां पितृयज्ञेन भूतियज्ञेन भूतीनाम्
मनोर्मनुष्ययज्ञेन ब्रह्मयज्ञेन ब्रह्मणः

एतेषां सात्मतां गत्वा देवतानां शतं समाः
आनन्दं ब्रह्म गच्छन्ति ध्रुवं शाश्वतमव्ययमिति १५

नान्दीश्राद्धस्य पूर्वपक्षे यथोपदेशं पूर्वेद्युर्वा युग्मान्ब्राह्मणान्भोजयेत्प्रदक्षिण-

मुपचारोऽग्निमिद्ध्वा दूर्वाभिः संस्तीर्य भोजनस्थानेषु च पवित्रे कृत्वा पात्रे निधायोत्पूय यवान्निधाय प्रणीतावदुपचारं हविष्यं च दध्योदनं चासाद्य नान्दीमुखाः पितरः प्रियन्तामित्यपां प्रतिग्रहणं विसर्जनं च पश्चादेवं विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यः पितृभ्यः स्वाहेति हुत्वोपस्तीर्य सर्वं द्विर्द्विरवद्यत्य-भिघार्य वैष्णव्यर्चोपस्पर्शयित्वाचान्तेषु पूर्णपात्रं दत्त्वा गोमयेनोपलिप्य दध्योदनशेषं यवोदकेनावोन्द्य न्युप्य पश्चात्परिषेचनं संपन्नमिति पृष्ट्वेडा देव-हूरित्यनुवाकशेषं जपेद्ब्राह्मणान्भोजयित्वाशिषो वाचयति १६

संवत्सरे सपिण्डीकरणमेकादशे मासि षष्ठे चतुर्थे द्वादशेऽहनि यदि पुण्या-हकाल उपव्यावर्तेत पितॄणामावाहनं सव्यस्य पाणेरङ्गुष्ठेनोपमध्यमया चा-ङ्गुल्यालभ्य पृथिवीं जपेद्ये पार्थिवासः पितरो ये अन्तरिक्षे ये दिवि ये वामृता बभूवुः । तेऽस्मिन्यज्ञेऽमृता मादयन्तामिति चत्वारि पात्राणि सतिलग-न्धोदकेन पूरयित्वैकं प्रेतस्य त्रीणि पितॄणामेकं वा पितॄणां प्रेतपात्रं पितृपात्रे-ष्वासिञ्चति ये समाना ये सजाता इति द्वाभ्यामसौ पितृभिः पितामहेभिः प्रपितामहेभिः सहैतत्ते तिलोदकं तस्मै ते स्वधा नम इति तिलोदकप्रदा-नमग्नौकरणमनुदेशनीयं च यथार्थमूहेदासेचने सपिण्डी व्याख्याता यथाश्रद्धं दक्षिणा भवन्त्यत ऊर्ध्वं मासिश्राद्धेन १७

अथ गृह्यप्रायश्चित्तानि यानि स्मर्यन्ते तानि वक्ष्यामः शेषाणि वैतानिकानि स्युर्होमदेवतायाः समाम्नानात्फलश्रुतेश्च या एवाग्निहोत्रे देवतास्ता औपासने य एवाहिताग्नेर्धर्मः स एव धर्मो य एवाहिताग्नेर्लोकः स एवौपासनिकस्येति शाट्यायनिब्राह्मणं भवति तत्र ये पुरोडाशास्त इह चरवः पयोदधिपृषदा-ज्यानामाज्यवत्संस्कारो न दध्नोऽधिश्रयणं प्रत्यसने परिपेचनमद्भी रौद्रराक्ष-सनैर्ऋतपैतृकछेदनभेदनखननिरसनावघ्राणात्माभिमर्शनानि च कृत्वाप उ-पस्पृशेत्सर्वत्र स्कन्ने भिन्ने क्षामे दग्धे विपर्यासेऽन्तरिते च द्वे मिन्दाहुती जुहोति यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादिति द्वाभ्यामथ स्कन्ने सं त्वा सिञ्चामीति स्कन्नमभिमन्त्र्योन्नम्भय पृथिवीमित्यपोऽभ्यवहृत्य भूरित्युपस्था-यास्कान्द्यौः पृथिवीमित्याहुतिं जुहोत्यथाज्यं चेद्देवाञ्जनमगन्यज्ञ इति चा-नुमन्त्रणं किं चिच्च दद्याद्भिन्ने भूमिर्भूमिमगादिति भिन्नमभिमन्त्र्योन्नम्भय पृथिवीमित्यपोऽभ्यवहृत्य त्रयस्त्रिंशत्तन्तव इत्येतया जुहुयादग्नौप्रक्षेपणं दा-

रुमयेऽथ क्षामे निर्ऋत्यै त्वेति विदग्धमभिमन्त्र्य त्वं पराची त्वमवाची त्वं रक्षांसि गच्छेति दक्षिणापरमुत्तरापरं वा दिशं तं प्रति निरस्यत्यग्नी रक्षांसि सेधतीति तिस्र आज्याहुतीर्जुहुयात् १८

अहविष्य आगमनमन्यस्यैकदेशश्चेदुद्धृत्यैतत्कृत्वैतया जुहुयादेतेनाशृतदुःशृते व्याख्याते अपोऽभ्यवहरेद्यत्र क्व चेन्धनमग्नावादध्यात्स्वाहाकारेणादधातीति विज्ञायते रुद्राय त्वेत्यशृतमभिमन्त्र्य यमाय त्वेति दुःशृतमथ परिस्तरण-दाहेऽग्नये क्षामवते नमो नमः क्षामवान्मा मा हिंसीन्मा मे गृहं मा मे धनं मा मे प्रजां मा मे पशूनित्यभिमन्त्र्याग्नये क्षामवते नमो नम इत्याहुतिं जुहुयादिन्द्रं वो विश्वतः परीति पुनः परिस्तीर्येन्द्राय स्वाहेत्याहुतिं जुहुयादथ परिधिदाहे प्रदाव्यायाग्नये नमो नमः प्रदाव्यायेति समानमत ऊर्ध्वमग्नेः समिदसीति पश्चार्धे यमस्य समिदसीति दक्षिणार्धे सोमस्य समिदसीत्युत्तरार्धमिन्धानास्त्वा शतं हिमा इत्याहुतिं जुहुयाद्दुष्टेऽन्यं परिदध्याद्गन्धर्वोऽसीति प्रतिमन्त्रमथ विपर्यासे त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयासि प्रजापत इति चतस्र आहुतीर्जुहुयादेता एवान्तरिते मनो ज्योतिर्जुषतामिति पञ्चमीमन्तरितं च कुर्यात्संस्थिते चेज्ज्ञा-नीयात्किं चिच्च दद्यात् १९

उत्तरस्मिन्काल आगते होमश्चेति निवृत्तः पूर्वस्य सेयं कालातिपत्तिस्तस्यां प्रायश्चित्तं मनो ज्योतिरिति पूर्वस्य हुत्वापरस्य जुहुयादेवं प्रतिहोममा दशरा-त्रात्प्राणायामश्चैकादशीप्रभृत्या विंशतिरात्रादुपवासश्चा त्रिंशद्रात्रादत ऊर्ध्वमा षष्टिरात्रात्तिस्रो रात्रीरुपवसेदत ऊर्ध्वं प्राजापत्यं विहितमेकादशीप्रभृति तिस्रश्च तन्तुमतीस्तन्तुं तन्वन्नुद्बुध्यस्वाग्ने त्रयस्त्रिंशत्तन्तव इत्युक्तमनुगत इत्यपि वाया-श्चाग्नेऽसीति जुहुयादा त्रिरात्रान्मनो ज्योतिरित्या सप्तरात्रादत ऊर्ध्वमा द्वाद-शरात्रात्तिस्रो रात्रीरुपवसेदत ऊर्ध्वं प्राजापत्यं विहितमेकादशीप्रभृति तिस्रश्च तन्तुमतीरुक्तं द्वादशाहं विछिन्न इत्येकादशीप्रभृत्युपवासः पूर्ववत् २०

अथ पर्वण्यतीते मनो ज्योतिरयाश्चाग्ने यदस्मिन्नग्ने स्वस्ति न इन्द्र इति चतस्र आज्याहुतीर्जुत्वा स्थालीपाकं च कुर्यात्प्रागष्टम्या अत ऊर्ध्वं सोपवासः कार्यो द्वयोर्द्वौ त्रिषु त्रय इत्येवं नैमित्तिकेष्वतीतेषु प्रायश्चित्तं पार्वणवद्धोमः पितृ-यज्ञेऽतीते पक्षात्यये सोपवासः कार्य इति सिद्धं नित्येषु चैवमेव स्यादथ

महायज्ञानां मनो ज्योतिरिरिति द्वयोस्त्रयाणां चतुर्णां पञ्चानां वा षष्ठप्रभृति तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेदिमं मे वरुण तत्त्वा यामि यच्चिद्धि ते यत्किं चेत्या नवरात्रादत ऊर्ध्वमा दशरात्राच्चतस्रोऽभ्यावर्तिनीर्हुत्वा कार्यस्तान्तुमतश्चरुः स्नातकस्यापि होमविछित्तावुक्तं प्राप्ते प्राजापत्ये तस्य विछित्तिस्तस्य तु पुनराधेयं मनो ज्योतिस्तन्तुमतीः पुनस्त्वादित्या रुद्रा इति च पूर्णाहुतिं प्रतीयादेतामग्न्युपघातेषु सर्वत्र स्त्रियाश्चैवं होमाभिगमनस्थालीपाकेषु सर्वेषामन्ततो व्याहृतीरिति सिद्धं नम आचार्येभ्यो नम आचार्येभ्यः २१

इति भारद्वाजसूत्रे तृतीयः प्रश्नः समाप्तः

भारद्वाजीयं गृह्यसूत्रं समाप्तम्

# आपस्तम्बगृह्यसूत्रम्

## अथ प्रथमः पटलः

### प्रथमः खण्डः

अथ कर्माण्याचाराद्यानि गृह्यन्ते १ उदगयनपूर्वपक्षाहःपुण्याहेषु कार्याणि २ यज्ञोपवीतिना ३ प्रदक्षिणम् ४ पुरस्तादुदग्वोपक्रमः ५ तथाऽपवर्गः ६ अपरपक्षे पित्र्याणि ७ प्राचीनावीतिना ८ प्रसव्यम् ९ दक्षिणतोऽपवर्गः १० निमित्तावेक्षाणि नैमित्तिकानि ११ अग्निमिध्वा प्रागग्रैर्दर्भैरग्निं परिस्तृणाति १२ प्रागुदगग्रैर्वा १३ दक्षिणाग्रैः पित्र्येषु १४ दक्षिणाप्रागग्रैर्वा १५ उत्तरेणाग्निं दर्भान्त्संस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति देवसंयुक्तानि १६ सकृदेव मनुष्यसंयुक्तानि १७ एकैकशः पितृसंयुक्तानि १८ पवित्रयोस्संस्कार आयामतः परीमाणं प्रोक्षणीसंस्कारः पात्रप्रोक्ष इति दर्शपूर्णमासवत्तूष्णीम् १९ अपरेणाग्निं पवित्रान्तर्हिते पात्रेऽप आनीयोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूय समं प्राणैर्हृत्वोत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य २० ब्राहमणं दक्षिणतो दर्भेषु निषाद्य २१ आज्यं विलाप्यापरेणाग्निं पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्योदीचोऽङ्गारान्निरूह्य तेष्वधिश्रित्य ज्वलताऽवद्युत्य द्वे दर्भाग्रे प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्याङ्गारान्प्रत्यूह्योदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय पवित्रे अनुप्रहृत्य २२

इत्यापस्तम्बीये गृह्यप्रश्ने प्रथमः खण्डः

### द्वितीयः खण्डः

येन जुहोति तदग्नौ प्रतितप्य दर्भैः संमृज्य पुनः प्रतितप्य प्रोक्ष्य निधाय दर्भानद्भिस्संस्पृश्याग्नौ प्रहरति १ शम्याः परिध्यर्थे विवाहोपनयनसमावर्तनसीमन्तचौलगोदानप्रायश्चित्तेषु २ अग्निं परिषिञ्चत्यदितेऽनुमन्यस्वेति दक्षिणतः प्राचीनमनुमतेऽमुमन्यस्वेति पश्चादुदीचीनं सरस्वतेऽनुमन्यस्वेत्युत्तरतः प्राचीनं देव सवितः प्रसुवेति समन्तम् ३ पैतृकेषु समन्तमेव तूष्णीम् ४ इध्ममाधायाघारावाघारयति दर्शपूर्णमासवत्तृष्णीम् ५ अथाज्यभागौ जुहोत्यग्नये स्वाहेत्युत्तरार्धपूर्वार्धे सोमाय स्वाहेति दक्षिणार्धपूर्वार्धे समं पूर्वेण ६ यथोपदेशं प्रधानाहुतीर्हुत्वा जयाभ्यातानान्राष्ट्रभृतः प्राजापत्यां व्याहृतीर्विहृताः सौविष्टकृतीमित्युपजुहोति यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमि-

हाकरम् । अग्निष्टकृत्स्विष्टकृद्विद्वान्त्सर्वँ स्विष्टं सुहुतं करोतु स्वाहेति ७ पूर्ववत्परिषेचनमन्वमँ स्थाः प्रासावीरिति मन्त्रसन्नामः ८ लौकिकानां पाकयज्ञशब्दः ९ तत्र ब्राह्मणावेक्षो विधिः १० द्विर्जुहोति द्विर्निमार्ष्टि द्विः प्राश्नात्युत्सृत्याचामति निर्लेढीति ११ सर्वऋतवो विवाहस्य शैशिरौ मासौ परिहाप्योत्तमं च नैदाघम् १२ सर्वाणि पुण्योक्तानि नक्षत्राणि १३ तथा मङ्गलानि १४ आवृतश्चास्त्रीभ्यः प्रतीयेरन् १५ इन्वकाभिः प्रसृज्यन्ते ते वराः प्रतिनन्दिताः १६

इत्यापस्तम्बीये गृह्यप्रश्ने द्वितीयः खण्डः

तृतीयः खण्डः

मघाभिर्गावो गृह्यन्ते १ फल्गुनीभ्यां व्यूह्यते २ यां कामयेत दुहितरं प्रिया स्यादिति तां निष्ट्यायां दद्यात् प्रियैव भवति नेव तु पुनरागच्छतीति ब्राह्मणावेक्षो विधिः ३ इन्वकाशब्दो मृगशिरसि ४ निष्ट्याशब्दस्स्वातौ ५ विवाहे गौः ६ गृहेषु गौः ७ तया वरमतिथिवदर्हयेत् ८ योऽस्यापचितस्तमितरया ९ एतावद्गोरालम्भनमतिथिः पितरो विवाहश्च १० सुप्तां रुन्दन्तीं निष्क्रान्तां वरणे परिवर्जयेत् ११ दत्तां गुप्तां द्योतामृषभां शरभां विनतां विकटां मुण्डां मण्डूषिकां साङ्कारिकां रातां पालीं मित्रां स्वनुजां वर्षकारीं च वर्जयेत् १२ नक्षत्रनामा नदीनामा वृक्षनामाच गर्हिताः १३ सर्वाश्च रेफलकारोपान्ता वरणे परिवर्जयेत् १४ शक्तिविषये द्रव्याणि प्रतिच्छन्नान्युपनिधाय ब्रूयादुपस्पृशेति १५ नाना बीजानि संसृष्टानि वेद्याः पांसून् क्षेत्राल्लोष्टं शकृच्छ्मशानलोष्टमिति १६ पूर्वेषामुपस्पर्शने यथालिङ्गमृद्धिः १७ उत्तमं परिचक्षते १८ बन्धुशीललक्षणसम्पन्नामरोगामुपयच्छेत १९ बन्धुशीललक्षणसम्पन्नश्श्रुतवानरोग इति वरसम्पत् २० यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिर्नेतरदाद्रियेतेत्येके २१

इत्यापस्तम्बीये गृह्यपक्षे तृतीयः खण्डः

समाप्तश्च प्रथमः पटलः

अथ द्वितीयः पटलः

चतुर्थः खण्डः

सुहृदस्समवेतान्मन्त्रवतो वरान्प्रहिणुयात् १ तानादितो द्वाभ्यामभिमन्त्रयेत २

स्वयं दृष्ट्वा तृतीयां जपेत् ३ चतुर्थ्या समीक्षेत ४ अङ्गुष्ठेनोप-मध्यमया चाङ्गुल्या दर्भं संगृह्योत्तरेण यजुषा तस्या भ्रुवोरन्तरं संमृज्य प्राचीनं निरस्येत् ५ प्राप्ते निमित्त उत्तरां जपेत् ६ युग्मान्समवेतान् मन्त्रवत उत्तरयाऽद्भः प्रहिणुयात् ७ उत्तरेण यजुषा तस्याश्शिरसि दर्भेणवं निधाय तस्मिन्नुत्तरया दक्षिणं युगच्छिद्रं प्रतिष्ठाप्य छिद्रे सुवर्णमुत्तरयान्तर्धायोत्तराभिः पञ्चभिस्स्नाप-यित्वोत्तरयाऽहतेन वाससाच्छाद्योत्तरया योक्त्रेण सन्नह्यति ८ अथैनामुत्तरया दक्षिणे हस्ते गृहीत्वाग्निमभ्यानीयापरेणाग्निमुदगग्रं कटमास्तीर्य तस्मि-न्नुपविशत उत्तरो वरः ९ अग्नेरुपसमाधानाद्याज्यभागान्तेऽथैनामादितो द्वाभ्या-मभिमन्त्रयेत १० अथास्यै दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानं हस्तं गृह्णीयात् ११ यदि कामयेत स्त्रीरेव जनयेयमित्यङ्गुलीरेव गृह्णीयात् १२ यदि कामयेत पुंस एव जनयेयमित्यङ्गुष्ठमेव सोऽभीवाङ्गुष्ठमभीव लोमानि गृह्णाति १३ गृभ्णामि त इत्येताभिश्चतसृभिः १४ अथैनामुत्तरेणाग्निं दक्षिणेन पदा प्राची-मुदीचीं वा दिशमभि प्रक्रमयत्येकमिष इति १५ सखेति सप्तमे पदे जपति १६

इत्यापस्तम्बीये गृह्यप्रश्ने चतुर्थः खण्डः

## पञ्चमः खण्डः

प्राग्घोमात्प्रदक्षिणमग्निं कृत्वा यथास्थानमुपविश्यान्वारब्धायामुत्तरा आ-हुतीर्जुहोति सोमाय जनिविदे स्वाहेत्येतैः प्रतिमन्त्रम् १ अथैनामुत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयत्यातिष्ठेति २ अथास्या अञ्जलावुपस्तीर्य द्विर्लाजानोप्याभिघारयति ३ तस्यास्तोदर्यो लाजानावपतीत्येके ४ जुहो-ति यं नारीति ५ उत्तराभिस्तिसृभिः प्रदक्षिणमग्निं कृत्वाऽश्मानमास्थापयति यथा पुरस्तात् ६ होमश्चोत्तरया ७ पुनः परिक्रमणम् ८ आस्थापनम् ९ होमश्चोत्तरया १० पुनः परिक्रमणम् ११ जयादि प्रतिपद्यते १२ परिषेचनान्तं कृत्वोत्तराभ्यां योक्त्रं विमुच्य तां ततः प्र वा वाहयेत् प्र वा हारयेत् १३ समोप्यैतमग्निमनुहरन्ति १४ नित्यः १५ धार्यः १६ अनुगतो मन्थ्यः १७ श्रोत्रियागाराद्वाहार्यः १८ उपवासश्चान्य तरस्य भार्यायाः पत्युर्वा १९ अनुगतेऽपि वोत्तरया जुहुयान्नोपवसेत् २० उत्तरा रथस्योत्तम्भनी २१ वाहावुत्तराभ्यां युनक्ति दक्षिणमग्रे २२ आरोहतीमुत्तराभिरभिमन्त्रयते २३ सूत्रे वर्त्मनोर्व्यवस्तृणात्युत्तरया नीलं दक्षिणस्यां लोहितमुत्तरस्याम् २४ ते

उत्तराभिरभियाति २५ तीर्थस्थाणुचतुष्पथव्यतिक्रमे चोत्तरां जपेत् २६
इत्यापस्तम्बीये गृह्यप्रश्ने पञ्चमः खण्डः

षष्ठः खण्डः

नावमुत्तरयाऽनुमन्त्रयते १ न च नाव्याँस्तरती वधूः पश्येत् २ तीर्त्वोत्तरां जपेत् ३ श्मशानादिव्यतिक्रमे भाण्डे रथे वा रिष्टेऽग्नेरुपसमाधानाद्यज्य-भागान्तेऽन्वारब्धायामुत्तरा ग्राहुतीर्हुत्वा जयादि प्रतिपद्यते परिषेचनान्तं करोति ४ क्षीरिणामन्येषां वा लक्षण्यानां वृक्षाणां नदीनां धन्वनां च व्यतिक्रम उत्तरे यथालिङ्गं जपेत् ५ गृहानुत्तरया सङ्काशयति ६ वाहावुत्तराभ्यां विमुञ्चति दक्षिणमग्रे ७ लोहितं चर्माऽऽनडुहं प्राचीनग्रीवमुत्तरलोम मध्येऽगारस्योत्तरयाऽऽस्तीर्य गृहान्प्रपादन्नुत्तरां वाचयति दक्षिणेन पदा ८ न च देहलीमभि तिष्ठति ९ उत्तरपूर्वे देशेऽगारस्याग्नेरुपसमाधानाद्याज्य-भागान्तेऽन्वारब्धायामुत्तरा ग्राहुतीर्हुत्वा जयादि प्रतिपद्यते परिषेचनान्तं कृत्वोत्तरया चर्मण्युपविशत उत्तरो वरः । ग्रथास्याः पुँस्वोर्जीवपुत्रायाः पुत्रमङ्क उत्तरयोपवेश्य तस्मै फलान्युत्तरेण यजुषा प्रदायोत्तरे जपित्वा वाचं यच्छत ग्रा नक्षत्रेभ्यः ११ उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्योत्तराभ्यां यथालिङ्गं ध्रुवमरुन्धतीं च दर्शयति १२
इत्यापस्तम्बीये गृह्यप्रश्ने षष्ठः खण्डः
इति द्वितीयः पटलः

ग्रथ तृतीयः पटलः
सप्तमः खण्डः

ग्रथैनामाग्नेयेन स्थालीपाकेन याजयति १ पत्न्यवहन्ति २ श्रपयित्वाभिघार्य प्राचीनमुदीचीनं वोद्वास्य प्रतिष्ठितमभिघार्याग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायाँ स्थालीपाकाज्जुहोति ३ सकृदुपस्तरणाभिघारणे द्विरवदानम् ४ ग्रग्निर्देवता स्वाहाकारप्रदानः ५ ग्रपि वा सकृदुपहत्य जुहुयात् ६ ग्रग्निस्स्विष्टकृत् द्वितीयः ७ सकृदुपस्तरणावदाने द्विरभिघारणम् ८ मध्यात्पूर्वस्यावदानम् ९ मध्ये होमः १० उत्तरार्धादुत्तरस्य ११ उत्तरार्धपूर्वार्धे होमः १२ लेपयोः प्रस्तरवत्तूष्णीं बर्हिरङ्क्त्वाग्नौ प्रहरति १३ सिद्धमुत्तरं परिषेचनम् १४ तेन सर्पिष्मता ब्राह्मणं भोजयेत् १५ योऽस्या-

पचितस्तस्मा ऋषभं ददाति १६ एवमत ऊर्ध्वं दक्षिणावर्जमुपोषिताभ्यां पर्वसु कार्यः १७ पूर्णपात्रस्तु दक्षिणेत्येके १८ सायं प्रातरत ऊर्ध्वं हस्तेनैते आहुती तण्डुलैर्यवैर्वा जुहुयात् १९ स्थालीपाकवद्दैवतम् २० सौरी पूर्वाहुतिः प्रातरित्येके २१ उभयतः परिषेचनं यथा पुरस्तात् २२ पार्वणेनातोऽन्यानि कर्माणि व्याख्यातान्याचाराद्यानि गृह्यन्ते २३ यथोपदेशं देवताः २४ अग्निं स्विष्टकृतं चान्तरेण २५ अविकृतमातिथ्यम् २६ वैश्वदेवे विश्वे देवाः २७ पौर्णमास्यां पौर्णमासी यस्यां क्रियते २८

इत्यापस्तम्बीये गृह्यप्रश्ने सप्तमः खण्डः

अष्टमः खण्डः

उपाकरणे समापने च ऋषिर्यः प्रज्ञायते १ सदसस्पतिर्द्वितीयः २ स्त्रिया-ऽनुपेतेन क्षारलवणावरान्नसंसृष्टस्य च होमं परिचक्षते ३ यथोपदेशं का-म्यानि बलयश्च ४ सर्वत्र स्वयं प्रज्वलितेऽग्नावुत्तराभ्यां सभिधावादध्यात् ५ आपन्माश्रीः श्रीर्मागादिति वा ६ एतदहर्विजानीयाद्यदहर्भार्यामावहते ७ त्रिरात्रमुभयोरधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जनं च ८ तयोश्शय्यामन्तरेण दण्डो गन्धलिप्तो वाससा सूत्रेण वा परिवीतस्तिष्ठति ९ तं चतुर्थ्यांऽपररात्र उत्तराभ्यामुत्थाप्य प्रक्षाल्य निधायाग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वार-ब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते परिषेचनान्तं कृत्वाऽपरेणाग्निं प्राचीमुपवेश्य तस्याश्शिरस्याज्यशेषाद्व्याहृतिभिरोङ्कारचतुर्थाभिरानीयोत्त-राभ्यां यथालिङ्गं मिथस्समीक्ष्योत्तरयाज्यशेषेण हृदयदेशौ संमृज्योत्तरा-स्तिस्रो जपित्वा शेषं समावेशने जपेत् १० अन्यो वैनामभिमन्त्रयेत ११ यदा मलवद्वासाः स्यादथैनां ब्राह्मणप्रतिषिद्धानि कर्माणि सँशास्ति यां मलवद्वासस मित्येतानि १२ रजसः प्रादुर्भावात्स्नातामृतुसमावेशने उत्तराभिरभिमन्त्रयेत १३

इत्यापस्तम्बीये गृह्यप्रश्ने अष्टमः खण्डः

नवमः खण्डः

चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मां प्रजानिःश्रेयसमृतुगमन इत्युपदिशन्ति १ अर्थप्राध्वस्य परिक्षवे परिकासने चाप उस्पृश्योत्तरे यथालिङ्गं जपेत् २ एवमुत्तरैर्यथालिङ्गं चित्रियं वनस्पतिं शकृद्रीति सिग्वातं शकुनिमिति ३

उभयोर्हृदयसंसर्गेऽप्सुस्त्रिरात्रावरं ब्रह्मचर्यं चरित्वा स्थालीपाकं श्रपयित्वाग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायाँ स्थालीपाकादुत्तरा ग्राहुतीर्हुत्वा जयादि प्रतिपद्यते परिषेचनान्तं कृत्वा तेन सर्पिष्मता युग्मान्द्व्यवरान् ब्राह्मणान्भोजयित्वा सिद्धिं वाचयीत ४ श्वस्तिष्येणेति त्रिस्सप्तैर्यवैः पाठां परिकिरति यदि वारुणयसि वरुणात्त्वा निष्क्रीणामि यदि सौम्यसि सोमात्त्वा निष्क्रीणामि इति ५ श्वोभूते उत्तरयोत्थाप्योत्तराभिस्तिसृभिरभिमन्त्र्योत्तरया प्रतिच्छन्नां हस्तयोराबध्य शय्याकाले बाहुभ्यां भर्तारं परिगृह्णीयादुपधानलिङ्गया ६ वश्यो भवति ७ सपत्नीबाधनञ्च ८ एतेनैव कामेनोत्तरेणानुवाकेन सदादित्यमुपतिष्ठते ९ यद्गमगृहीतामन्यां वा ब्रह्मचर्ययुक्तः पुष्करसंवर्तमूलैरुत्तरैर्यथालिङ्गमङ्गानि संमृश्य प्रतीचीनं निरस्येत् १० वधूवास उत्तराभिरेतद्विदे दद्यात् ११

इत्यापस्तम्बीये गृह्यप्रश्ने नवमः खण्डः

समाप्तस्तृतीयः पटलः

## ग्रथ चतुर्थः पटलः

### दशमः खण्डः

उपनयनं व्याख्यास्यामः १ बर्भाष्टमेषु ब्राह्मणमुपनयीत २ गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम् ३ वसन्तो ग्रीष्मश्शरदित्यृतवो वर्णानुपूर्व्येण ४ ब्राह्मणान्भोजयित्वाशिषो वाचयित्वा कुमारं भोजयित्वाऽनुवाकस्य प्रथमेन यजुषाऽपः संसृज्योष्णाश्शीतास्वानीयोत्तरया शिर उनत्ति ५ त्रींस्त्रीन् दर्भानन्तर्धायोत्तराभिश्चतसृभिः प्रतिमन्त्रं प्रतिदिशं प्रवपति ६ वपन्तमुत्तरयानुमन्त्रयते दक्षिणतो माता ब्रह्मचारी वा ७ ग्रानडुहे शकृत्पिण्डे यवान्निधाय तस्मिन्केशानुपयम्योत्तरयोदुम्बरमूले दर्भस्तम्बे वा निदधाति ८ स्नातमग्नेरुपसमाधानाद्याज्यभागान्ते पालाशीं समिधमुत्तरयाधाप्योत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयत्यातिष्ठेति ९ वासःसद्यःकृत्तोतमुत्तराभ्यामभिमन्त्र्योत्तराभिस्तिसृभिःपरिधाप्य परिहितमुत्तरयानुमन्त्रयते १० मौञ्जीं मेखलां त्रिवृतां त्रिःप्रदक्षिणमुत्तराभ्यां परिवीयाजिनमुत्तरमुत्तरया ११ उत्तरेणाग्निं दर्भान्संस्तीर्य तेष्वेनमुत्तरयावस्थाप्योदकाञ्जलिमस्मा ग्रञ्जलावानीयोत्तरया त्रिः प्रोक्ष्योत्तरैर्दक्षिणे हस्ते गृहीत्वोत्तरैर्देवताभ्यः परीदायोत्तरेण यजुषोपनीय सुप्रजा इति दक्षिणे कर्णे जपति १२

इत्यापस्तम्बीये गृह्यप्रश्ने दशमः खराडः

एकादशः खराडः

ब्रह्मचर्यमागामिति कुमार आह १ प्रष्टं परस्य प्रतिवचनं कुमारस्य २ शेषं परो जपति ३ प्रत्यगाशिषं चैनं वाचयति ४ उक्तमाज्यभागान्तम् ५ अत्रैनमुत्तरा आहुतीर्हावयित्वा जयादि प्रतिपद्यते ६ परिषेचनान्तं कृत्वा-परेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्नुत्तरेण यजुषोपनेतोपविशति ७ पुरस्तात् प्रत्यङ्ङासीनः कुमारो दक्षिणेन पाणिना दक्षिणं पादमन्वारभ्याह सावित्रीं भो अनुब्रूहि इति ८ तस्मा अन्वाह तत्सवितुरिति ९ पच्छोऽर्धर्चशस्ततस्सर्वाम् १० व्याहृतीर्विहृताः पादादिष्वन्तेषु वा तथार्धर्चयोरुत्तमां कृत्स्नायाम् ११ कुमार उत्तरेण मन्त्रेणोत्तरमोष्टमुपस्पृशते १२ कर्णावुत्तरेण १३ दराडमुत्तरेणाऽऽदत्ते १४ पालाशो दराडो ब्राह्मणस्य नैय्यग्रोधस्स्कन्ध-जोऽवाङ्ग्रो राजन्यस्य बादर औदुम्बरो वा वैश्यस्य १५ वार्क्षो दराड इत्य-वर्णसंयोगेनैक उपदिशन्ति १६ स्मृतं च म इत्येतद्वाचयित्वा गुरवे वरं द-त्त्वोदायुषेत्युत्थाप्योत्तरैरादित्यमुपतिष्ठते १७ यं कामयेत नायमाच्छिद्येतेति तमुत्तरया दक्षिणे हस्ते गृह्णीयात् १८ त्र्यहमेतमग्निं धारयन्ति १९ क्षार-लवणवर्जनं च २० परि त्वेति परिमृज्य तस्मिन्नुत्तरैर्मन्त्रैस्समिध आदध्यात् २१ एवमन्यस्मिन्नपि सदाररायादेधानाहृत्य २२ उत्तरया सँशास्ति २३ वासश्चतुर्थीमुत्तरयादत्तेऽन्यत्परिधाप्य २४

इत्यापस्तम्बीये गृह्यप्रश्ने एकादशः खराडः
चतुर्थः पटलः समाप्तः

अथोपाकर्मोत्सर्जनपटलः

अथात उपाकरणोत्सर्जने व्याख्यास्यामः १ श्रवणापक्ष ओषधीषु जातासु हस्तेन पौर्णमास्यां वाऽध्यायोपाकर्म २ अग्नेरुपसमाधानाद्याज्यभागान्ते-ऽन्वारब्धेषु कारडऋषिभ्यो जुहोति सदसस्पतये सावित्र्या ऋग्वेदाय यजु-र्वेदाय सामवेदायाथर्वणवेदायेति हुत्वा उपहोमो वेदाहुतीनामुपरिष्टात्सद-सस्पतिमित्येके ३ परिषेचनान्तं कृत्वा त्रीननुवाकानादितोऽधीयीरन् ४ प्रथमोत्तमावनुवाकौ वा ५ त्र्यहमेकाहं वा क्षम्याधीयीरन् ६ अथोपाक-रणमध्यायः ७ तैषीपक्षस्य रोहिरयां पौर्णमास्यां वोत्सर्गः ८ प्राचीमुदी-

चीं वा सगणो दिशमुपनिष्क्रम्य यत्रापः पुरस्तात्सुखाः सुखावगाहा अव-
किन्यः शङ्खिन्यः तासामन्तं गत्वाऽभिषेकान्कृत्वा सुरभिमत्याब्लिङ्गा-
भिर्वारुणीभिर्हिरण्यवर्णाभिः पावमनीभिरिति मार्जयित्वान्तर्जलगतोऽघम-
र्षणेन त्रीन्प्राणायामान् धारयित्वोत्तीर्याचम्योपोत्थाय दर्भानन्योन्यस्मै सम्प्रदाय
शुचौ देशे प्राक्कूलैर्दर्भैरासनानि कल्पयन्ति ९ ब्रह्मणे प्रजापतये वृहस्पतयेऽग्नये
वायवे सूर्याय चन्द्रमसे नक्षत्रेभ्यः ऋतुभ्यस्संवत्सराय इन्द्राय राज्ञे सोमाय राज्ञे
यमाय राज्ञे वरुणाय राज्ञे वैश्रवणाय राज्ञे वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो
देवेभ्यस्साध्येभ्यो मरुद्य ऋभुभ्यो भृगुभ्योऽङ्गिरोभ्य इति देवगणानाम् १०
अथर्षयः--विश्वामित्रो जमदग्निर्भरद्वाजो गौतमोऽत्रिर्वसिष्ठः कश्यप इत्येते
सप्तर्षयः सप्तर्षिभ्यः कल्पयित्वा दक्षिणतोऽगस्त्याय कल्पयन्ति ११ ततो या-
वदेकवैद्यन्तैः कल्पयन्ति १२ प्राचीनावीतानि कृत्वा दक्षिणतो वैशम्पायनाय
पैङ्ग्ये तित्तिरये उखायात्रेयाय पदाकाराय कौण्डिन्याय वृत्तिकाराय बौधा-
यनाय प्रवचनकाराय आपस्तम्बाय सूत्रकाराय भरद्वाजाय सूत्रकाराय
सत्याषाढाय हिरण्यकेशाय आचार्येभ्य ऊर्ध्वरेतोभ्य एकपत्नीभ्यो वानप्र-
स्थेभ्यः कल्पयामीति १३ अथ यथास्वं पितृभ्यः कल्पयन्ति मातामहेभ्यश्च
पृथक् १४ यज्ञोपवीतानि कृत्वा तेष्वेव देशेषु तथैवानुपूर्व्या तैरेव नाम-
भिर्देवानृषींश्च तर्पयन्ति वैशम्पायनप्रभृतींस्तु मातुः प्रपितामहपर्यन्तान्प्राची-
नावीतिनस्तर्पयन्ति अमुं तर्पयाम्यमुं तर्पयाम्यमुं तर्पयामीति १५ अभिष्यन्ते
वान्योन्यम् १६ यज्ञोपवीतानि कृत्वा त्रीनादितोऽनुवाकानधीयीरन् १७ का-
ण्डादीन्प्रथमोत्तमौ वा १८ काण्डात्काण्डात्प्ररोहन्तीतिद्वाभ्यामुपोदके दूर्वा
रोपयन्ति १९ अपः प्रगाह्योदधिं कुर्वन्ति २० सर्वतः परिवार्योर्मिमन्तः कुर्वन्ति
२१ उद्गाह्या-तमितोराजिं धावन्ति २२ प्रत्येत्याभिदानानि सक्तुभिरोदनेनेति
ब्राह्मणान् भोजयित्वा वाचयति २३ एवं पारायणसमाप्तौ च काण्डादि
दूर्वारोपणोदधिधावनवर्जम् २४ प्रत्येत्य ब्राह्मणभोजनादि कर्म प्रतिपद्यते
२५ एवमेवाद्भिरहरहर्देवानृषीन्पितृंश्च तर्पयेत् २६

इत्युपाकर्मोत्सर्जनपटलः

## अथ पञ्चमः पटलः

### द्वादशः खण्डः

वेदमधीत्य स्नास्यन्प्रागुदयाद्व्रजं प्रविश्यान्तर्लोम्ना चर्मणा द्वारमपिधायास्ते

१ नैनमेतदहरादित्योऽभितपेत् २ मध्यन्दिनेऽग्नेरुपसमाधानाद्याज्यभागान्ते पालाशीं समिधमुत्तरयाधायापरेणाग्निं कट एरकायां वोपविश्योत्तरया क्षुरमभिमन्त्र्योत्तरेण यजुषा वप्त्रे प्रदायापां संसर्जनाद्याकेशनिधानात्समानम् ३ जघनार्धे व्रजस्योपविश्य विस्रस्य मेखलां ब्रह्मचारिणे प्रयच्छति ४ तां स उत्तरेण यजुषोदौम्बरमूले दर्भस्तम्बे वोपगूहति ५ एवं विहिताभिरेवाद्भिरुत्तराभिषड्भिस्स्नात्वोत्तरयोदुम्बरेण दतो धावते ६ स्नानीयोच्छादितस्स्नातः ७ उत्तरेन यजुषाऽहतमन्तरं वासः परिधाय सार्वसुरभिणा चन्दनेनोत्तरैर्देशताभ्यः प्रदायोत्तरयानुलिप्य मणिं सौवर्णं सोपधानं सूत्रोतमुत्तरयोदपात्रे त्रिः प्रदक्षिणं परिप्लाव्योत्तरया ग्रीवास्वाबध्यैवमेव बादरं मणिं मन्त्रवर्जं सव्ये पाणावाबध्याहतमुत्तरं वासो रेवतीस्त्वेति समानम् ८ तस्य दशायां प्रवर्तौ प्रबध्य दर्व्यामाधायाज्येनाभ्यानायन्नुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते ९ परिषेचनान्तं कृत्वताभिरेव दक्षिणे कर्ण आबध्नीतैताभिस्सव्ये १० एवमुत्तरैर्यथालिङ्गं स्रजश्शिरस्याञ्जनमादर्शावेक्षणमुपानहौ छत्रं दण्डमिति ११ वाचं यच्छत्यानक्षत्रेभ्यः १२ उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्योत्तरेणार्धर्चेन दिश उपस्थायोत्तरेण नक्षत्राणि चन्द्रमसमिति १३ रातिना सम्भाष्य यथार्थं गच्छति १४

इत्यापस्तम्बीये गृह्यप्रश्ने द्वादशः खण्डः

## त्रयोदशः खण्डः

अथैतदपरं तूष्णीमेव तीर्थे स्नात्वा तूष्णीं समिधमादधाति १ यत्रास्मा अपचितिं कुर्वन्ति तत्कूर्च उपविशति यथापुरस्तात् २ एवमुत्तराभ्यां यथालिङ्गं राजा स्थपतिश्च ३ आपः पाद्या इति प्राह ४ उत्तरयाऽभिमन्त्र्य दक्षिणं पादं पूर्वं ब्राह्मणाय प्रयच्छेत्सव्यँ शूद्राय ५ प्रक्षालयितारमुपस्पृश्योत्तरेण यजुषात्मानं प्रत्यभिमृशेत् ६ कूर्चाभ्यां परिगृह्य मृन्मयेनार्हणीया आप इति प्राह ७ उत्तरयाऽभिमन्त्र्याञ्जलावेकदेश आनीयमान उत्तरं यजुर्जपेत् ८ शेषं पुरस्तान्निनीयमानमुत्तरयाऽनुमन्त्रयते ९ दधि मध्विति संसृज्य कांस्येन वर्षीयसा पिधाय कूर्चाभ्यां परिगृह्य मधुपर्क इति प्राह १० त्रिवृतमेके घृतं च ११ पाङ्क्तमेके धानास्सक्तूंश्च १२ उत्तराभ्यामभिमन्त्र्य यजुर्भ्यामप आचामति पुरस्तादुपरिष्टाच्चोत्तरया त्रिः प्राश्यानुकम्प्याय प्रयच्छेत् १३ प्रतिगृह्यैव राजा स्थपतिर्वा पुरोहिताय १४ गौरिति गां प्राह १५ उत्तरयाभिमन्त्र्य तस्यै वपाँ

श्रपयित्वोपस्तीर्णाभिघारितां मध्यमेनान्तमेन वा पलाशपर्णेनोत्तरया जुहोति १६ यद्युत्सृजेदुपांशूत्तरां जपित्वोमुत्सृजतेत्युच्चैः १७ अन्नं प्रोक्तमुपांशूत्तरैरभिमन्त्र्य ॐ कल्पयते त्युच्चैः १८ आचार्यायर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्य एतत्कार्यम् १९ सकृत्प्रवक्त्रे चित्राय २०

इत्यापस्तम्बीये गृह्यप्रश्ने त्रयोदशः खगडः

पञ्चमश्च पटलः समाप्तः

अथ षष्ठः पटलः

चतुर्दशः खगडः

सीमन्तोन्नयनं प्रश्ने गर्भे चतुर्थे मासि १ ब्राह्मणान्भोजयित्वाशिषो वाचयित्वाग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते २ परिषेचनान्तं कृत्वापरेणाग्निं प्राचीनमुपवेश्य त्रेगया शलल्या त्रिभिर्दर्भपुञ्जीलैश्शलालुग्लप्सेनेत्यूर्ध्वं सीमन्तमुन्नयति व्याहृतीभिरुत्तराभ्यां च गायतमिति वीणागायिनौ संशास्ति ४ उत्तरयोः पूर्वा साल्वानां ब्राह्मणानामितरा ५ नदीनिर्देशश्च यस्यां वसन्ति ६ यवान्विरूढानाबध्य वाचं यच्छत्यानक्षत्रेभ्यः ७ उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य वत्समन्वारभ्य व्याहृतीश्च जपित्वा वाचं विसृजेत् ८ पुँसवनं व्यक्ते गर्भे तिष्येण ९ न्यग्रोधस्य या प्राच्युदीची वा शाखा ततस्सवृषणां शुङ्गामाहृत्य सीमन्तवदग्नेरुपसमाधानादि १० अनवस्नातया कुमार्या दृषत्पुत्रे दृषत्पुत्रेण पेषयित्वा परिप्लाव्यापेरणाग्निं प्राचीमुत्तानां निपात्योत्तरेण यजुषाऽङ्गुष्ठेन दक्षिणे नासिकाच्छिद्रेऽपि नयति ११ पुमांसं जनयति १२ क्षिप्रं सुवनम् १३ अनाप्रीतेन शरावेणानुस्त्रोतसमुदकमाहृत्य पत्तस्तूर्यन्तीं निधाय मूर्धञ्छोष्यन्तीमुत्तरेण यजुषाऽभिमृश्यैताभिरद्भिरुत्तराभिरवोक्षेत् १४ यदि जरायु न पतेदेवंविहिताभिरेवाद्भिरुत्तराभ्यामवोक्षेत् १५

इत्यापस्तम्बीये गृह्यप्रश्ने चतुर्दशः खगडः

पञ्चदशः खगडः

जातं वात्सप्रेणाभिमृश्योत्तरेण यजुषोपस्थ आधायोत्तराभ्यामाभिमन्त्रणं मूर्धन्यवघ्राणं दक्षिणे कर्णे जापः १ नक्षत्रनाम च निर्दिशति २ तद्रहस्यं भवति ३ मधु घृतमिति संसृज्य तस्मिन् दर्भेण हिरगयं निष्टर्क्यं बध्वावदायोत्तरैर्मन्त्रैः

कुमारं प्राशयित्वोत्तराभिः पञ्चभिस्स्नापयित्वा दधि घृतमिति संसृज्य कांस्येन पृषदाज्यं व्याहृतीभिरोङ्कारचतुर्थाभिः कुमारं प्राशयित्वाद्भिश्शेषं संसृज्य गोष्ठे निनयेत् ४ उत्तरया मातुरुपस्थ आधायोत्तरया दक्षिणं स्तनं प्रतिधाप्योत्तराभ्यां पृथिवीमभिमृश्योत्तरेण यजुषा संविष्टम् ५ उत्तरेण यजुषा शिरस्य उदकुम्भं निधाय सर्षपान्फलीकरणमिश्रानञ्जलिनोत्तरैस्त्रिस्त्रिप्रतिस्वाहाकारं हुत्वा संशास्ति प्रविष्टे प्रविष्ट एव तूष्णीमग्नावावपतेति ६ एवमहरहरानिर्दशतायाः ७ दशम्यामुत्थितायां स्नातायां पुत्रस्य नाम दधाति पिता मातेति ८ द्व्यक्षरं चतुरक्षरं वा नामपूर्वमाख्यातोत्तरं दीर्घाभिनिष्ठानान्तं घोषवदाद्यन्तरन्तस्थम् ९ अपि वा यस्मिन्स्वित्युपसर्गस्स्यात् तद्धि प्रतिष्ठितमिति हि ब्राह्मणम् १० अयुजाक्षरं कुमार्याः ११ प्रवासादेत्य पुत्रस्योत्तराभ्यामभिमन्त्रणं मूर्धन्यवघ्राणं दक्षिणे कर्ण उत्तरान्मन्त्रान् जपेत् १२ कुमारीमुत्तरेण यजुषाऽभिमन्त्रयते १३

इत्यापस्तम्बीये गृह्यप्रश्ने पञ्चदशः खण्डः

षोडशः खण्डः

जन्मनोऽधि षष्ठे मासि ब्राह्मणान्भोजयित्वाशिषो वाचयित्वा दधि मधु घृतमोदनमिति संसृज्योत्तरैर्मन्त्रैः कुमारं प्राशयेत् १ तैत्तिरेण माँसेनेत्येके २ जन्मनोऽधि तृतीये वर्षे चौलं पुनर्वस्वोः ३ ब्राह्मणानां भोजनमुपायनवत् ४ सीमन्तवदग्नेरुपसमाधानादि ५ अपरेणाग्निं प्राञ्चमुपवेश्य त्रेण्या शलल्या त्रिभिर्दर्भपुञ्जीलैः शलालुग्लप्सेनेति तूष्णीं केशान्विनीय यथर्षि शिखा निदधाति ६ यथा वैषां कुलधर्मः स्यात् ७ अपाँ संसर्जनाद्याकेशनिधानात्समानम् ८ क्षुरँ प्रक्षाल्य निदधाति ९ तेन त्र्यहं कर्मनिवृत्तिः १० वरं ददाति ११ एवं गोदानमन्यस्मिन्नपि नक्षत्रे षोडशे वर्षे १२ अग्निगोदानो वा स्यात् १३ संवत्सरं गोदानव्रतमेक उपदिशन्ति १४ एतावन्नाना सर्वान् केशान्वापयते १५ उदकोपस्पर्शनमिति छन्दोगाः १६

इत्यापस्तम्बीये गृह्यप्रश्ने षोडशः खण्डः

षष्ठश्च पटलः समाप्तः

अथ सप्तमः पटलः

सप्तदशः खण्डः

दक्षिणाप्रत्यक्प्रवणमगरावकाशमुद्धत्य पलाशेन शमीमयेन वोदूहेनैतामेव दिशमुत्तरयोदूहति १ एवं त्रिः २ क्लृप्तमुचरयाभिमृश्य प्रदक्षिणं स्थूणा-गर्तान्खानयित्वाऽभ्यन्तरं पाँसूनुदुप्योत्तराभ्यां दक्षिणं द्वारस्थूणामवदधाति ३ एवमितराम् ४ यथाखातमितरा ग्रन्ववधाय वँशमाधीयमानमुत्तरेण य-जुषाऽभिमन्त्रयते ५ सम्मितमुत्तरैर्यथालिङ्गम् ६ पालाशं शमीमयं वेध्म-मादीप्योत्तरयर्चाऽग्निमुद्धृत्योत्तरेण यजुषाऽगारं प्रपाद्योत्तरपूर्वदेशेऽगारस्योत्त-रयाऽग्निं प्रतिष्ठापयति ७ तस्माद्दक्षिणमुदधानायतनं भवति ८ तस्मि-न्विषूचीनाग्रान्दर्भान्संस्तीर्य तेषूत्तरया व्रीहियवान्युप्य तत्रोदधानं प्रतिष्ठा-पयति ९ तस्मिन्नुत्तरेण यजुषा चतुर उदकुम्भानानयति १० दीर्घमुत्तरया-ऽनुमन्त्रयते ११ ग्रग्नेरुपसमाधानाद्याज्यभागान्ते उत्तरा ग्राहुतीर्हुत्वा जयादि प्रतिपद्यते १२ परिषेचनान्तं कृत्वोत्तरेण यजुषोदकुम्भेन त्रिः प्रदक्षिणमन्त-रतोऽगारं निवेशनं वा परिषिच्य ब्राह्मणान्भोजयेदपूपैस्सक्तुभिरोदनेनेति १३

इत्यापस्तम्बीये गृह्यप्रश्ने सप्तदशः खण्डः

## ग्रष्टादशः खण्डः

श्वग्रहगृहीतं कुमारं तपोयुक्तो जालेन प्रच्छाद्य कंसं किङ्किणिं वा ह्रादयन्न-द्वारेण सभां प्रपाद्य सभाया मध्येऽधिदेवनमुद्धत्यावोक्ष्याक्षान्न्युप्याक्षेधूत्तानं निपात्य दध्ना लवणमिश्रेणाञ्जलिनोत्तरैरवोक्षेत्प्रातर्मध्यन्दिने सायम् १ ग्र-गदो भवति २ शङ्खिनं कुमारं तपोयुक्त उत्तराभ्यामभिमन्त्र्योत्तरयोदकुम्भेन शिरस्तोऽवनयेत्प्रातर्मध्यन्दिने सायम् ३ ग्रगदो भवति ४ श्रावण्यां पौर्ण-मास्यामस्तमिते स्थालीपाकः ५ पार्वणवदाज्यभागान्ते स्थालीपाकाद्धुत्वा-ञ्जलिनोत्तरैः प्रतिमन्त्रं किशुकानि जुहोति ६ उत्तराभिस्तिसृभिरारग्वध-मय्यस्समिधः ७ ग्राज्याहुतीरुत्तराः ८ जयादि प्रतिपद्यते ९ परिषेचनान्तं कृत्वा वाग्यतस्संभारानादाय प्राचीमुदीचीं वा दिशमुपनिष्क्रम्यस्थण्डिलं कल्पयित्वा तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो लेखा लिखित्वाऽद्भिरुपनिनीय तासूत्तरया सक्तून्निवपति १० तूष्णीं सम्पुष्का धाना लाजानाञ्जनाभ्यञ्जने स्थगरोशीरमिति ११ उत्तरैरुपस्थायापः परिषिच्याप्रतीक्षस्तूष्णीमेत्या पश्चेत पदेत्याभ्यामुदकुम्भेन त्रिः प्रदक्षिणमन्तरतोऽगारं निवेशनं वा परिषिच्य ब्राह्मणान्भोजयेत् १२

इत्यापस्तम्बीये गृह्यप्रश्नेऽष्टादशः खण्डः

## एकोनविंशः खण्डः

धानाः कुमारान् प्राशयन्ति १ एवमत ऊर्ध्वं यदशनीयस्य सक्तूनां वैतं ब-
लिं हरेदामार्गशीर्ष्याः २ मार्गशीर्ष्यां पौर्णमास्यामस्तमिते स्थालीपाकः ३
अहार्षमिति बलिमन्त्रस्य सन्नामः ४ अत्रैनमुत्सृजति ५ अनाहिताग्नेराग्रयणम्
६ नवानां स्थालीपाकं श्रपयित्वाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थाभ्यो हुत्वा
तण्डुलानां मुखं पूरयित्वा गीर्त्वाचम्यौदनपिण्डं संवृत्त्योत्तरेण यजुषागारस्तूप
उद्विद्धेत् ७ हेमन्तप्रत्यवरोहणम् ८ उत्तरेण यजुषा प्रत्यवरुह्योत्तरैर्दक्षिणैः
पार्श्वैः नवस्वस्तरे संविशन्ति ९ दक्षिणतः पितोत्तरा मौतवमवशिष्टानां ज्येष्ठो-
ज्येष्ठोऽनन्तरः १० संहायोत्तराभ्यां पृथिवीमभिमृशन्ति ११ एवं संवेशनादि
त्रिः १२ ईशानाय स्थालीपाकं श्रपयित्वा क्षैत्रपत्यं च प्राचीमुदीचीं वा दिश-
मुपतिष्क्रम्य स्थण्डिलं कल्पयित्वाऽग्नेरुपसमाधानादि १३ अपरेणाग्निं द्वे कुटी
कृत्वा १४

इत्यापस्तम्बीये गृह्यप्रश्ने एकोनविंशः खण्डः

## विंशः खण्डः

उत्तरया दक्षिणस्यामीशानमावाहयति १ लौकिक्या वाचोत्तरस्यां मीढुषीम्
२ मध्ये जयन्तम् ३ यथोढमुदकानि प्रदाय त्रीनोदनान्कल्पयित्वाग्निमभ्या-
नीयोत्तरैरुपस्पर्शयित्वा उत्तरैर्यथास्वमोदनेभ्यो हुत्वा सर्वतस्समवदायोत्तरेण
यजुषाग्निं स्विष्टकृतम् । उत्तरेण यजुषोपस्थायोत्तरैस्सहोदनानि पर्णान्येकैकेन
द्वे द्वे दत्त्वा देवसेनाभ्यो दशोत्तराभ्यः ५ पूर्ववदुत्तरैः ६ ओनपिण्डं संवृत्य
पर्णपुटेऽवधायोत्तरेण यजुषा वृक्ष आसजति ७ अत्र रुद्रान् जपेत् ८ प्रथमोत्तमौ
वा ९ अभित एतमग्निं गास्स्थापयति यथैता धूमः प्राप्नुयात् १० ता गन्धैर्द-
र्भग्रुमुष्टिनावोक्षति वृषाणमेवाग्रे ११ गवां मर्गेऽनग्नौ क्षेत्रस्य पतिं जयते १२
ईशानवदावाहनम् १३ चतुर्षु सप्तसु वा पर्णेषु नामादेशं दधाति १४ क्षिप्रं
यजेत पाको देवः १५ उत्तराभ्यामुपतिष्ठते १६ स्थालीपाकं ब्राह्मणान्भोजयेत्
१७ क्षैत्रपत्यं प्राश्नन्ति ये सनाभयो भवन्ति १८ यथा वैषां कुलधर्मस्स्यात्
१९

इत्यापस्तम्बीये गृह्यप्रश्ने विंशः खण्डः

## अथाष्टमः पटलः

## एकविंशः खण्डः

मासि श्राद्धस्यापरपक्षे यथोपदेशं कालाः १ शुचीन्मन्त्रवतो यो निगोत्रमन्त्रासम्बन्धानयुग्माँस्त्र्यवराननर्थावेक्षो भोजयेत् २ अन्नस्योत्तराभिर्जुहोति ३ आज्याहुतीरुत्तराः ४ एतद्वा विपरीतम् ५ सर्वमुत्तरैरभिमृशेत् ६ क्लृप्तान्वा प्रतिपूरुषम् ७ उत्तरेण यजुषोपस्पर्शयित्वा ८ भुक्तवतोऽनुव्रज्य प्रदक्षिणीकृत्य द्वैधं दक्षिणाग्रान्दर्भान्संस्तीर्य तेषूत्तरैरपो दत्त्वोत्तरैर्दक्षिणापवर्गान्पिण्डान्दत्त्वा पूर्ववदुत्तरैरपो दत्त्वोत्तरैरुपस्थायोत्तरयोदपात्रेण त्रिः प्रसव्यं परिषिच्य न्युब्ज्य पात्राण्युत्तरं यजुरनवानं त्र्यवरार्ध्य मावर्तयित्वा प्रोक्ष्यपात्राणि द्वन्द्वमभ्युदाहृत्य सर्वतस्समवदायोत्तरेण यजुषाशेषस्य ग्रासवरार्ध्यं प्राश्नीयात् । या माघ्याः हपौर्णमास्या उपरिष्टाद्व्यष्टका तस्यामष्टमी ज्येष्ठया सम्पद्यते तामेकाष्टकेत्याचक्षते १० तस्यास्सायमौपकार्यम् ११ अपूपं चतुश्शरावं श्रपयति १२ अष्टाकपाल इत्येके १३

इत्यापस्तम्बीये गृह्यप्रश्ने एकविंशः खण्डः

## द्वाविंशः खण्डः

पार्वणवदाज्यभागान्तेऽञ्जलिनोत्तरयाऽपूपाञ्जुहोति १ सिद्धश्शेषस्तमष्टधा कृत्वा ब्राह्मणेभ्य उपहरति २ श्वोभूते दर्भेण गामुपाकरोति पितृभ्यस्त्वा जुष्टामुपाकरोमीति ३ तूष्णीं पञ्चाज्याहुतीर्हुत्वा तस्यै वपां श्रपयित्वोपस्तीर्णाभिघारितां मध्यमेनान्तमेन वा पलाशपर्णेनोत्तरया जुहोति ४ माँसोदनमुत्तराभिः ५ पिष्टान्नमुत्तरया ६ आज्याहुतीरुत्तराः ७ स्विष्टकृत्प्रभृति समानमापिण्डनिधानात् ८ अन्वष्टकायामेवैके पिण्डनिधानमुपदिशन्ति ९ अथैतदपरं दध्न एवाञ्जलिना जुहोति ययाऽपूपम् १० अत एव यथार्थं मासं शिष्ट्वा श्वोभूतेऽन्वष्टकाम् ११ तस्या मासिश्राद्धेन कल्पो व्याख्यातः १२ सनिमित्वोत्तरान् जपित्वाऽर्थं ब्रूयात् १३ रथं लब्ध्वा योजयित्वा प्राञ्चमवस्थाप्योत्तरया रथचक्रे अभिमृशति पक्षसी वा १४ उत्तरेण यजुषाऽधिरुह्योत्तरया प्राचीमुदीचीं वा दिशमभिप्रयाय यथार्थं यायात् १५ अश्वमुत्तरैरारोहेत् १६ हस्तिनमुत्तरया १७ ताभ्याँ रेषणे पूर्ववत्पृथिवीमभिमृशेत् १८ संवादमेष्यन्सव्येन पाणिना छत्रं दण्डञ्चादत्ते १९

इत्यापस्तम्बीये गृह्यप्रश्ने द्वाविंशः खण्डः

## त्रयोविंशः खण्डः

दक्षिणेन फलीकरणमुष्टिमुत्तरया हुत्वा गत्वोत्तरां जपेत् १ क्रुद्धमुत्तराभ्या- मभिमन्त्रयेत विक्रोधो भवति २ असंभवेप्सुः परेषां स्थूलाढारिकाजीव- चूर्णानि कारयित्वोत्तरया सुप्तायास्सम्बाध उपवपेत् ३ सिद्ध्यर्थे बभ्रुमूत्रेण प्रक्षालयीत ४ सिद्ध्यर्थे यदस्य गृहे पण्यं स्यात्तत उत्तरया जुहुयात् ५ यं कामयेत नायं मच्छिद्येतेति जीवविषाणे स्वं मूत्रमानीय सुप्तमुत्तराभ्यां त्रिः प्रसव्यं परिषिञ्चेत् ६ येन पथा दासकर्मकराः पलायेरन्तस्मिन्निण्वा- न्युपसमाधायोत्तरा आहुतीर्जुहुयात् । यद्येनं वृक्षात्फलमभिनिपतेद्वयो वाऽभिविक्षिपेदवर्षतर्क्ये वा बिन्दुरभिनिपतेत्तदुत्तरैर्यथालिङ्गं प्रक्षालयीत ८ आगारस्थूणाविरोहणे मधुन उपवेशने कुप्वां कपोतपददर्शनेऽमात्यानां शरीररेषणेऽन्येषु चाद्भुतोत्पातेष्वमावास्यायां निशायां यत्रापां न शृणुयात्त- दग्नेरुपसमाधानाद्याज्यभागान्त उत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते ९ परिषेचनान्तं कृत्वाऽभिमृतेभ्य उत्तरया दक्षिणतोऽश्मानं म्परिधिं दधाति १०

इत्यापस्तम्बीये गृह्यप्रश्ने त्रयोविंशः खण्डः

समाप्तस्तथाऽष्टमश्च पटलः

समाप्तोऽयमापस्तम्बगृह्यसूत्रम्

# वैखानसगृह्यसूत्रम्

अथ निषेकादिसंस्कारान्व्याख्यास्यामः

ऋतुसंगमनगर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्मोत्थाननामकरणान्नप्राशनप्रवासागमनपिण्डवर्धनचौडकोपनयनपारायणव्रतबन्धविसर्गोपाकर्मसमावर्तनपाणिग्रहणानीत्यष्टादश संस्काराः शारीराः यज्ञाश्च द्वाविंशत् ब्रह्मयज्ञो देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चेति पञ्चानामहरहरनुष्ठानं स्थालीपाक आग्रयणमष्टका पिण्डपितृयज्ञो मासिश्राद्धं चैत्र्याश्वयुजीति सप्त पाकयज्ञाः अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणेष्टिश्चातुर्मास्यो निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञाः अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञा इत्येते चत्वारिंशद्भवन्ति निषेकादा जातकात्संस्कृतायां ब्राह्मण्यां ब्राह्मणाज्जातमात्रः पुत्रमात्र उपनीतः सावित्र्यध्ययनाद्ब्राह्मणो वेदमधीत्य शारिरैरा पाणिग्रहणात्संस्कृतः पाकयज्ञैरपि यजन्श्रोत्रियः स्वाध्यायपर आहिताग्निर्हविर्यज्ञैरप्यनूचानः सोमयज्ञैरपि भ्रूणः संस्कारैरेतैरुपेतो नियमयमाभ्यामृषिकल्पः साङ्गचतुर्वेदतपोयोगादृषिः नारायणपरायणो निर्द्वन्द्वो मुनिरिति संस्कारविशेषात्पूर्वात्पूर्वात्परोवरीवानिति विज्ञायते १

अथ चातुराश्रमिणां स्वानविधिरभिषेकदिव्यवायव्याग्नेयगुर्वनुज्ञा इति पञ्चधा भवति नदीतटाककूपानामलाभे पूर्वस्योत्तरमुपतिष्ठते प्राङ्मुख उदङ्मुखो वाक्रम्य जलस्थलेष्वासीनः पाणिपादावा मणिबन्धजानुतो दक्षिणादि प्रत्येकं प्रक्षाल्याकेनावस्त्रावमविच्छिन्नमद्रुतमशब्दमबहिर्जानुहृदयंगममुदकं गोकर्णवत्पाणिं कृत्वा ब्राह्मेण तीर्थेन त्रिराचम्य द्विरङ्गुष्ठमूलेनास्यं परिमाष्टर्यङ्गुष्ठस्याग्निः प्रदेशिन्या वायुर्मध्यमस्य प्रजापतिरनामिकायाः सूर्यः कनिष्ठिकस्येन्द्र इत्यधिदेवता भवन्त्यङ्गुष्ठमध्यमाभ्यां सर्वतीर्थैर्वा मुखं माष्टर्यङ्गुष्ठानामिकाभ्यां चक्षुषी अङ्गुष्ठप्रदेशिनीभ्यां नासिकामङ्गुष्ठकनिष्ठिकाभ्यां श्रोत्रे भुजौ ताभ्यामङ्गुष्ठेन वा हृदयमङ्गुलिभिर्नाभिं चाङ्गुष्ठेन प्रत्यङ्गमपश्च स्पृष्ट्वा जङ्घयोर्वामे पाणावप्यभ्युद्य सर्वाभिर्मूर्धानं स्पृशतीन्द्रोऽहमुभ्याभ्यामिति करावापः पादावस्मिन्कुल इति पादौ च तथा प्रक्षाल्यापः पुनन्त्विति पुनस्तथाचामति ऋग्वेदः

प्रीणातु यजुर्वेदः प्रीणातु सामवेदः प्रीणात्विति त्रिरपः पीत्वाथर्ववेदः प्रीणात्वितिहासवेदः प्रीणातु चन्द्रमाः प्रीणात्विति त्रिधा मुखं मार्ष्टि महेश्वरः प्रीणात्विति मूर्धानमादित्यः प्रीणातु सोमः प्रीणात्विति चक्षुषी दिशः प्रीणन्त्विति श्रोत्रे वायुः प्रीणात्विति नासिकामिन्द्रः प्रीणात्विति भुजौ विष्णुः प्रीणात्विति हृदयमग्निः प्रीणात्विति नाभिं स्पृशतीत्येके २

अथापो नमस्कृत्यावगाह्य यावदमनश्शङ्कमद्भिर्मृदा च गात्रशुद्धिं कृत्वा व-स्त्रमा दशात्सूदितमिति नेनेक्ति गायत्र्या प्रागग्रिकमुदगग्रिकं वास्तृणाति शुष्के तयैव गृह्णीयादिदमापः प्रवहतेत्यभिगम्य हिरण्यशृङ्गमिति जलं प्रणम्य स-मृदोदकेनापः पुनात्वित्यभ्युक्ष्येदमापः शिवा इत्यपो विगाह्य सुस्वातीदं ब्रह्म पुनीमह इति पवित्रं गृहीत्वा ब्रह्म पुनात्वित्यङ्गुल्यां निक्षिप्य शतधारमिति जलं गृहीत्वा पयस्वतीरोषधय इत्याचम्य भूरग्नय इत्युपस्थानमादित्यस्य चित्पति-रिति त्रिभिरनामिकोपान्ताभ्यां समृदोदकेन त्रिः प्रदक्षिणमावर्त्य शिरो माष्टर्या-पोहिरण्यपवमानैः प्रोक्षयत्युद्वयमित्यादिनादित्यमुपस्थाय महाव्याहृत्या ज-लमभिमन्त्र्य कर्णावपिधायाभिमुखमादित्यार्धं निमज्ज्य ऋतं च सत्यं च यासु गन्धा इति त्रिरावर्तयन्नघमर्षणं करोति ततो मन्दं निःश्वस्य धौतं परिधा-यानुपमृज्य वासः प्रातः सूर्यश्चेत्यादिनाचम्यापोहिष्ठादिभिर्ऋग्भिस्तिसृभिः प्रोक्ष्य गायत्र्यापोऽभिमन्त्र्यादित्याभिमुखं विक्षिप्य प्रदक्षिणं करोति प्राणा-याममेकावरं कृत्वाष्टावरां सावित्रीमभ्यस्य मित्रस्येत्यादिभिर्ऋग्भिस्तिसृभि-स्तिष्ठन्सन्ध्यामुपासीत मध्याह्न आपः पुनन्त्वित्याचम्य तथा प्रोक्ष्योद्वयमि-त्यादिभिर्यजुर्भिस्तिष्ठन्नादित्यमुपस्थाय तथा करोति सायमग्निश्चेत्यादिनाचम्य तथा प्रोक्ष्य यच्चिद्धीत्यादिभिः सामभिरुपास्यासीनस्तथा करोत्युदितार्कां प-श्चिमार्कामिति च सन्ध्ये यथादिशं तन्नामादिना दिग्देवताः पितॄन्सापसव्यं ब्रह्माणं चोदङ्मुखो नारायणादीन्नमोऽन्तेनोपतिष्ठेत ३

अथाचम्य कौरुक्षेत्रमिति जलं नमस्कृत्य महाव्याहृत्या जलमभिमन्त्र्य ह-स्तेन तलतीर्थक्रमेण कूप्याभ्यः स्वाहेत्यादिभिस्तर्पयति भूपतिं तर्पयामि भुवन-पतिं तर्पयामि भूतानां पतिं तर्पयामि प्रजापतिं तर्पयामि ब्रह्माणं तर्पयामि नारायणं तर्पयामि महादेवं तर्पयामि स्कन्दं तर्पयामि विनायकं तर्पयामि यथादिशं तन्नामादिना दिग्देवतास्तर्पयतीन्द्रं तर्पयामि यमं तर्पयामि वरुणं

तर्पयामि कुबेरं तर्पयाम्यग्निं तर्पयामि निर्ऋतिं तर्पयामि वायुं तर्पयामीशानं तर्पयाम्यादित्यं तर्पयामि सोमं तर्पयाम्यङ्गारकं तर्पयामि बुधं तर्पयामि बृहस्पतिं तर्पयामि शुक्रं तर्पयामि शनैश्चरं तर्पयामि राहुं तर्पयामि केतुं तर्पयामि ग्रहाँस्तर्पयामि नक्षत्राणि तर्पयामि ताराँस्तर्पयामि विश्वान्देवाँस्तर्पयामि सर्वाश्च देवतास्तर्पयामि वेदाँस्तर्पयामि यज्ञाँस्तर्पयामि छन्दाँसि तर्पयामि स्वगोत्रादिसप्तर्षीस्तर्पयति विश्वामित्रं तर्पयामि जमदग्निं तर्पयामि भरद्वाजं तर्पयामि गौतमं तर्पयाम्यत्रिं तर्पयामि वसिष्ठं तर्पयामि कश्यपं तर्पयामि भृगुं प्राचीनावीती पित्र्याणि करोति ऊर्म्योदकान्त इति पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो ज्ञातिवर्गेभ्यः पितृपत्नीभ्यः पितामहपत्नीभ्यः प्रपितामहपत्नीभ्यो ज्ञातिवर्गपत्नीभ्यः स्वधा नमस्तर्पयामीति तर्पयति अथ निवीती भौमाँस्तर्पयामि भौमदिव्याँस्तर्पयामि नागाँस्तर्पयामि नागदिव्याँस्तर्पयामि यावन्तो जलार्थिनस्तावन्तः प्रतिगृह्णन्त्वित्यपो विसृज्याचम्य ब्रह्मयज्ञं करोति शुद्धे देशे बर्हिरास्तीर्य ब्राह्ममासनमास्थाय पवित्रपाणिर्ब्रह्माञ्जलिं कृत्वा प्राङ्मुखः सावित्रीपूर्व नित्यमिषे त्वोर्जे त्वेत्यादि यथाकामं नैमित्तिकमृतं च सत्यं च देवकृतस्य यन्मे गर्भे तरत्स मन्दी वसोः पवित्रं जातवेदसे विष्णोर्नु कं सहस्रशीर्षैकाक्षरमा त्वाहार्ष त्वमग्ने पवस्वादीन्स्वाधायमधीयीत सौरीभिर्ऋग्भिर्यथाकाममादित्यं चोपतिष्ठेत ४

अशक्तो नित्यं पादौ प्रक्षाल्याचम्य अतो देवादि वैष्णव जप्त्वा दिव्यं वायव्यमाग्नेयं मन्त्रस्नानं वा कृत्वा पूर्ववदाचमनादीनि कुर्याद्दिवश्च्युतैर्गाङ्गेयैराधावैः सातपैर्वर्षैर्वासेचनं दिव्यं गवां पादोद्गतैर्वायुनीतैः पांसुभिः स्पर्शनं वायव्यं भस्मना शुद्धेन सर्वाङ्गमालेपनमाग्नेयमापो हि ष्ठेति मन्त्रेणाग्नेयेन तीर्थेनाभ्युक्षणं मन्त्रस्नानं दक्षिणपाणेर्मध्यतलमाग्नेयं तीर्थं कनिष्ठाङ्गुलिमूलं दैवं सर्वाङ्गुलिमूलाग्रमार्षं प्रदेशिन्यङ्गुष्ठयोर्मध्यं पैतृकमङ्गुष्ठस्य मूलं ब्राह्मं दैवेन तीर्थेनोपवीती दैविकं कार्यमार्षेणार्षं पैतृकेण पित्र्यं सर्वं ब्राह्मेण ब्रह्मतर्पणमाचमनमाग्नेयेन तीर्थेनाभ्युक्षणं करोति दक्षिणहस्तमुद्धत्योपवीतं धारयेदुपवीती वाममुद्धृत्य प्राचीनावीती कण्ठसक्ते निवीती भवति स्नात्वा पुण्येऽहनि संस्कारहोमं जुहुयादिति विज्ञायते ५

अथ पुण्याहं पञ्चावराञ्छ्रोत्रियानाहूयाभिपूजयत्याचार्यः करकं धारास्वित्य-

द्भिरापूर्येदमापः शिवा इत्यपोऽभिमन्त्र्य पुष्पाद्यैः सर्वतीर्थजलमित्यभ्यर्च्य प्रतिवाचकान् प्राङ्मुखानुदङ्मुखात्वा स्थापयित्वोदङ्मुखः सुपुण्याहं करोमीति रुंकल्प्य स्वस्ति सुप्रोक्षितमस्त्विवति स्थानं प्रोक्ष्य प्रजापतिः प्रियतामित्युक्त्वा तैः प्रियतामिति वाचयति शाम्यन्तु घोराणीत्युत्तरान्तं त्रिरपः स्रावयति अतो देवा इत्यग्रं दैविके सं त्वा सिञ्चामीत्यग्रं सूतके शुची वो हव्येत्यग्रं प्रेतके द्रविणोदाः सविता नवो नवो विद्युच्छतं जीवाष्टौ देवा हिरण्यरूप ऋध्याम स्तोममाहार्षं त्वार्यमणं सोमँ राजानमिन्द्रावरुणा श्रिये जातो या गुङ्गुर्यस्त्वा हृदा यस्मै त्वं नर्य प्रजां सुत्रामाणं शतायुधाय दक्षिणावतां भद्रं कर्णेभिः शतमिन्वदितिर्द्यौरित्यृत्विजः सर्वे वदेयुः ६

देवा ऋषयः पितरो ग्रहा देव्य ऋषिपत्न्यः पितृपत्न्यो वेदा यज्ञाश्च सर्वाद्याः प्रियन्तामन्तः प्रतिवचनं पुण्याहं शिवमायुष्यमरोग्यमविघ्नमचलमैश्वर्यं यत्पापं तत्प्रतिहतं यच्छ्रेयः शिवं कर्म शिवः पक्ष इत्यस्त्वन्तास्तथान्तः प्रतिवचनं शिवा ऋतवः सन्तु शिवानि नक्षत्राणि भवन्तु सर्वकर्मसमृद्धिरस्तु सर्वधन-धान्यसंपूर्णमस्त्वित्येकैकमुक्तवन्तः प्रतिवचनं यत्पुण्यं स्वस्ति न ऋध्यास्मेति पूर्वोक्तामितरेऽनुवदन्ति यजमानस्य नक्षत्रनामादि गोत्रनाम सुतान्तं मातृगोत्र-नामान्तात्परं शर्मान्तं नाम प्रणवादि भवन्तो ब्रुवन्तु पुण्याहं स्वस्त्यृद्ध्यन्तं प्रत्येकं त्रिधा त्रिधा यथाविभक्तिवाचितमनुवाचयेयुः आपोहिरण्यपवमानैः प्रोक्षयति पुण्याहे कृते तदहः पुण्यं भवत्यादावन्ते वा पुण्याहेन सर्वाः क्रियाः पुण्याः परिपूर्णा भवन्ति स्वांकृतोऽसीति दक्षिणाकालमुक्तवत्सु घृतात्परी-त्यद्भिर्यथाशक्ति दक्षिणां हस्तेन दक्षिणेन ददाति त्वमग्ने यज्ञानाँ होतेति तदाददीरन्यत्र दक्षिणादानादाने तत्रैवं स्यादिति विज्ञायते ७

अथाग्न्यायतनं प्राक्प्रवणे वोत्तरप्रवणे वा शुद्धे देशे गोमयेनोपलिप्ते शुद्धाभिः सिकताभिः प्राक्पश्चिमं दक्षिणोत्तरं च द्वात्रिंशदङ्गुल्यायतं द्व्यङ्गुलोन्नतं यथा-लाभोन्नतं वा स्थण्डिलमग्न्यायतनं भवति परिस्तरणबर्हिषः प्रतिदिक् पञ्चदश स्थण्डिलप्रमाणाः कुण्डे षट्त्रिंशदङ्गुलास्तथैकाङ्गुलिपरिणाहा व्रणवक्रहीनाः परिधयः पञ्चदशदर्भैर्ग्रथितं चतुरङ्गुलाग्रं द्व्यङ्गुलग्रन्थि हस्तमात्रं प्रोक्षणकूर्चं तथैव द्वादशाङ्गुलमात्रं पवित्रं तत्प्रमाणा याज्ञिकाः समिधः पात्रस्रुवादयो यज्ञे प्रोक्ता दर्भेषु द्वन्द्वं पात्रादिसंभारानुत्तरे दैविके प्रत्येकं दक्षिणतः पैतृके संभरति

नित्यहोमेऽग्निशालायां मृदा चतुर्दिशं द्वात्रिंशदङ्गुल्यायतां चतुरङ्गुलविस्तारां द्व्यङ्गुलोन्नतामूर्ध्ववेदिं चतुरङ्गुलिविस्तारोन्नतां तत्परिगतामधोवेदिं च मध्ये निम्नं षडङ्गुलमग्निकुण्डं कृत्वास्मिन् गृहस्थोऽग्निमौपासनमाधाय नित्यं जुहोति वनस्थस्य श्रामणकाग्नेः कुण्डमाधानविशेषं च धर्मे वक्ष्यामः ८

अथाघारविधानं ब्राह्मं प्राङ्मुखमासीन एतो न्विन्द्रमित्यग्न्यालयं प्रोक्ष्य मयि देवा इत्यादिभिश्चतुर्दिशं दर्भानुक्षयेदुद्धन्यमानमिति मध्यपूर्वापरयमाग्निनिर्ऋतिसोमेशानमरुतो बर्हिषा खनति तथा पूत ह्यातनेति षड्रेखा लिखित्वाष्टाबन्धमिति वक्रितं दर्भं दक्षिणपश्चिमस्यामुत्सृज्य रेखा गायत्र्या प्रोक्ष्य जातवेदो भुवनस्येत्यरणिं गृहीत्वा मथितं लौकिकं वाग्निमादायाहरेत घृतप्रतीक इति प्रज्वाल्यायुर्दा इति प्रणम्योपावरोहेति निधायाग्न आयाह्ययं ते योनिरिति प्रज्वाल्य मयि गृह्णामीत्यभिवन्द्य कर्मणे वामिति करौ प्रक्षालयति इदमापः शिवा इत्यपोऽभिमन्त्र्यादितेऽनुमन्यस्व दक्षिणत वेदिं परिमृजामीति दक्षिणवेदिं नैर्ऋत्याद्यन्तमनुमतेऽनुमन्यस्व पश्चिमतो वेदिं परिमृजामीति तथा पश्चिमवेदिं सरस्वतेऽनुमन्यस्वोत्तरतो वेदिं परिमृजामीत्युत्तरवेदिं वायव्याद्यन्तं देव सवितः प्रसुव पुरस्ताद्वेदिं परिमृजामीति पूर्ववेदिं चाग्नेयाद्यन्तमङ्गुलीरास्तीर्य साधावेन पाणिना कूर्चेन वा परिमृज्य गायत्र्या वेदीः प्रोक्षयति ब्रह्मसोमावृत्विजौ वरयित्वाध्वर्युरों भूपते भुवनपत इति प्रत्येकं प्रेक्ष्य ताभ्यामहं भूपतिरित्युक्ते ब्रह्मन् सोम प्रोक्षिष्यामीत्यन्तं तथोक्त्वा पुनस्ताभ्यां प्रोक्षेत्युक्तस्तथा प्रोक्षयति ९

पात्रादाधावमादाय पवित्रे स्थ इति वेद्यां बर्हिषः स्थापयित्वा तान्परशुरसीति प्रोक्ष्य समिधो मुक्तबन्धाः कृष्णोऽसीति वेदिरसीति वेदिं स्रुवादीन्बर्हिषो बर्हिरसि स्रुग्भ्य इति बर्हिषोऽग्रं दिवे त्वेति मध्यमन्तरिक्षायेति मूलं पृथिव्यै त्वेति प्रोक्षयति पोषाय त्वेत्यपो बर्हिर्बन्धने संस्राव्य स्वधा पितृभ्य इति सापसव्यं दक्षिणतः प्रोक्ष्यापां शेषं पश्चिमस्यामुत्तरान्तमूर्ग्भवेति स्रावयेदुभाभ्यामिति पाणी प्रक्षालयति पूषा त इति बर्हिर्बन्धं विसृज्य मूलादूर्ध्वमादित्यं व्यञ्जनमसीत्यभिमृश्य पश्चिमतो वेद्यधस्तादुत्तराग्रमूर्णाम्रदसमिति दर्भैः परिस्तीर्य स्वासस्थं देवेभ्य इति प्रागग्रं स्वासने चैकं निधाय विष्णोः स्तूपोऽसीति प्राच्यां दक्षिणत इति याम्यामुत्तरत इत्युदीच्यां पश्चिमत

इति प्रतीच्यां प्रागुत्तराग्रं परिस्तृणात्युत्तराग्रमैशान्यामूर्ध्वं कृत्वा गन्धर्वोऽसीति पश्चिमस्यामिन्द्रस्येति याम्यां मित्रावरुणावित्युदीच्यां वेद्यां प्रागुत्तराग्रान्परिधीन्परिदधाति १०

वायव्यामुत्तराग्रमूर्ध्वं करोति सूर्यस्त्वेति प्राच्यामुत्तरान्तमुपरिष्टादित्यूर्ध्वमधस्तान्नागा इत्यधश्च परिषिच्य वीतिहोत्रमित्यग्न्यालये समिधावग्नीशयोर्दिशोरूर्ध्वाग्रे निदधाति परिस्तीर्यमित्यादिनैन्द्राद्यमुदगन्तमार्षेणापो दत्त्वा सृतासीत्यादिभिर्दक्षिणादि तेनैव प्रागन्तमुत्तरान्तं च परिषिच्य तरुणासीत्याग्नेयादीशानान्तं प्रदक्षिणमाग्नेयान्तमद्भिः परिषिञ्चति वानस्पत्योऽसीति प्रणिधी प्रक्षाल्य पृथिव्यापो ग्रहीष्यामीति साक्षतमद्भिरापूर्य वसूनां पवित्रमित्युदगग्रे पवित्रे प्रक्षिप्य दक्षिणेन पाणिनाग्रमितरद्वामेन गृहीत्वा देवो वः सवितेति त्रिरुत्पूय तथा निदधाति ब्रह्मन्नप इति सोमाय इति च ब्रह्मसोमावृत्विजौ प्रत्येकं प्रेक्ष्य ताभ्यां तथा प्रणयेत्युक्तः को व इति प्रणीय वेद्यां दक्षिणोत्तरयोः प्रणिधी निधाय संविशन्तामिति कूर्चेन जलं संस्राव्य गायत्र्या स्रुवं प्रोक्षयेत् ११

भूः स्रुवं गृह्णामीति स्रुवं गृहीत्वा वर्षिष्ठे अधि नाक इति वेद्यधस्तात्समिधौ न्यस्याहीनो निर्वपामीति स्रुवं प्रक्षाल्य निर्दग्धमिति पर्यग्निं कृत्वा निष्टप्तमिति समिधोर्निदध्याददितिरस्यछिद्रेत्याज्यस्थालीं गृहीत्वोत्तरे भूतकृतः स्थोपोढमित्यङ्गारं न्यस्य सगराः स्थेति विन्यस्य महीनामिति पचति पूर्ववत्पवित्रेण त्रिरुत्पूयाज्यस्थाल्याः पृष्ठभस्मेदं विष्णुरिति वेदेन शोधयित्वोद्भवः स्थोदहमिति बर्हिर्दग्ध्वाङ्गारमन्तरितमित्याज्यस्य दर्शयति दक्षिणतोऽङ्गारं गायत्र्या न्यस्य तयैव चरुस्थालीमधिश्रित्य दर्भोल्केन पक्त्वावतारयति पवित्रेणाज्यं पात्रे त्रिरुत्पूय घर्मोऽसीति ग्रन्थिं विसृज्योत्तरपश्चिमे निधायाद्भिः प्रोक्ष्याप्यायन्तामिति पवित्रं जुहोति वीतिहोत्रमिति समिदग्रं घृताक्तं वायव्येऽग्नौ स्थापयित्वा देवस्य त्वेति स्रुवेण होम्यं द्विधा विहरति १२

दक्षिणप्रणिधौ ब्राह्मेण तीर्थेन प्रजापतिपुरोगानादाहयामीत्युत्तरप्रणिधौ दैवेनाग्न्यादीनौपासनयज्ञं यज्ञदैवतविश्वान्देवान्सर्वदेवानावाहयामीत्यन्तं पैतृके वैश्वदेवयज्ञं यज्ञदैवतविश्वान्देवानावाहयामीत्यन्तमावाहयेद्यथावाहनं स्रुवे-

णाज्यमूर्ध्वं नीत्वा जुष्टं निर्वपामीति निर्वापं करोति तृप्यधिद्वयेन द्विधाग्नौ होम्यं दर्शयित्वाग्निर्ज्योतिर्द्वयेन समिदुल्केन द्विधा दहति समिदसि स्वाहेति समिधं जुहोति स्रुवेणाज्यं गृहीत्वामृतमसीति अनुत्तानमन्तरितमित्युत्तानं प्रत्युष्टमित्यनुत्तानं होम्यं प्रदक्षिणमभिमन्त्र्याज्यं गृहीत्वोत्तानं स्वतो दक्षिणतो वामतः प्रणीतायां संधाय चित्पतिस्त्वादिभिस्त्रिभिरेव त्रिधाग्नौ संवपति १३

गायत्र्या समिधः प्रोक्ष्यैकविंशतिराहुतिप्रमाणाः करसंपूर्णा वा समिधो गृहीत्वा मूलाग्राभ्यां घृतं स्पर्शयित्वाभ्यर्च्याक्षताज्यचरुभिरिमा मे अग्न इति मूलमध्याग्राणि स्पृशन्नधो नीत्वोर्ध्वभागे मध्ये च संदधाति दैवेन तीर्थेन दक्षिणस्यामद्भिः प्रागन्तमदितेऽनुमन्यस्वेति पश्चिमस्यामुत्तरान्तमनुमतेऽनुमन्यस्वेत्युत्तरस्यां प्रागन्तं सरस्वतेऽनुमन्यस्वेति देव सवितः प्रसुवेति पूर्वस्यामुदगन्तमाग्नेयाद्यन्तं सर्वतश्च प्रदक्षिणं परिषिञ्चति षष्टिँ शतेत्यभिमन्त्र्यायं त इध्म इतीध्मानसंकुलाञ्छरोऽङ्गारेऽग्नौ जुहुयाद्यस्यै देवतायै हविर्निरुप्यते तां देवतां मनसा ह वै ध्यायन्निर्वपेद्यथा ह वास्य सुषुम्ना ज्योतिष्मती प्राणवती रेतोधा इत्येता हुतं गृहीत्वा रश्मयश्चतस्रः पृश्नौ संदधीरन्स ह वा शुद्धामृतवहा चिनुही दिव्या लोकपावनीत्येताभिश्चन्द्रमसमाप्याययत्यसौ नु राजा सोम आप्यायितो मूलगामी वपायन्यमृतोद्गारी सुरप्रियेत्येताभिरमृतेन तां देवतां तर्पयति १४

स्रुवेणाज्यं स्रावयन्परिधी स्पृष्ट्वा वायव्याद्याग्नेयान्तं प्रजापतये स्वाहेति नैर्ऋत्यादीशानान्तमिन्द्राय स्वाहेत्याघारौ जुहुयाच्चक्षुषी बुद्ध्वाग्नये स्वाहा सोमाय स्वाहेत्याज्यभागावुत्तरदक्षिणयोर्जुहोति युक्तो वहेति पश्चिमादिसौम्यान्तं या तिरश्चीति सौम्यादीन्द्रान्तं सँराधन्ये देव्यै स्वाहेतीन्द्रादियाम्यान्तं प्रसाधन्यै देव्यै स्वाहेति याम्यादिवारुणान्तं स्रावयन् हुत्वा मध्यमास्यमिति बुद्ध्वा तत्र व्याहृतीर्जुहोति तदग्निमुखमिति ब्रह्मवादिनो वदन्ति सत्येनेत्यभिमृश्याज्येन जुहोत्यग्नये स्वाहा सोमाय स्वाहाग्नीषोमाभ्याँ स्वाहा प्रजापतये स्वाहा ब्रह्मणे स्वाहेन्द्राय स्वाहा वसुभ्यः स्वाहा मरुद्भ्यः स्वाहा रुद्रेभ्यः स्वाहा विष्णवे स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहादित्येभ्यः स्वाहाश्विभ्याँ स्वाहा पूष्णे स्वाहा कक्षाय स्वाहा कक्षदैवतसोमाय स्वाहौपासनयज्ञाय स्वाहा यज्ञदैवतविश्वेभ्यो देवेभ्यः स्वाहा सर्वदेवेभ्यः स्वाहेत्यन्तं

हुत्वा दर्व्याभिघार्य चरुं सावित्र्या गृहीत्वा जुह्वा व्याहृतीर्जुहोति अतो देवा इदं विष्णुरित्याज्यं समृद्ध्यै जुहुयात्पैतृके वैश्वदेवयज्ञाय स्वाहा यज्ञदैवतविश्वेभ्यो देवेभ्यः स्वाहेत्यन्तं हुत्वा पक्वं जुहुयादिति सर्वहोमानामादिराघारो विज्ञायते १५

अथ सामान्यतः क्रियाया होममन्त्राः धाता ददातु नो रयिं धाता प्रजाया धाता ददातु नो रयिं प्राचीं धाता ददातु दाशुषेऽनु नोऽद्यानुमतिरन्विदनुमते त्वमा मा वाजस्य समाववर्त्त्यनुमन्यतां यस्यामिदं राकामहँ यास्ते राके सिनीवालि या सुपाणिः कुहूमहुँ कुहूर्देवानामिति धातादि षोडश १६

इमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्ययासन्निति पञ्च वारुणं प्रजापते न त्वत्प्रजापतिर्जयानित्युपांशुयाजे प्राजापत्ये चित्तं च चित्तिश्चाकूतं चाकूतिश्च विज्ञातं चाविज्ञानं च मनश्च शक्वरीश्च दर्शश्च पूर्णमासश्च बृहच्च रथंतरं च स्वाहेति चित्तादि द्वादश जयाः अग्निर्भूतानामधिपतिः स मावत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपां समुद्रः स्रोत्यानामन्नं सम्राज्यानामधिपतिं तन्मावतु सोम ओषधीनँ सविता प्रसवानाँ रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते मावन्तु पितरः पितामहाः परेऽवर इत्यष्टादशाग्निर्भूतादयोऽभ्यातानाः १७

ऋताषाड्तधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नामेति सँहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नामेति सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो नामेति भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तवा नामेति प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नयो नामेति इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसो मुदा नामेति भुवनस्य पत इति परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवो नामेति सुक्षितिः सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो नामेति दूरेहेतिरमृडयो मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवो नामेति चारुः कृपणकाशी कामो गन्धर्वस्तस्याधयोऽप्सरसः शोचयन्तीर्नामेति स नो भुवनस्य पत इति

ऋताषाड़ृतादि भुवनस्य स न इति वर्जयित्वा प्रत्येकं ताभ्योऽन्ता राष्ट्रभृतो द्वादशेति प्राजापत्यादि मूलहोमो बभूवपैतृकयच्छान्ते व्याहृतिः १८

अथान्ते होममन्त्राः यदस्याग्नये स्विष्टकृतेऽग्नयेऽन्नादायाग्नयेऽन्नपतये प्रजापतय इन्द्राय विश्वेभ्यो देवेभ्यः सर्वाभ्यो देवताभ्यः सर्वत्रैवाग्नये स्विष्टकृते वास्तुपत इति स्विष्टाकारो यन्म आत्मनः पुनरग्निश्चक्षुरिति मिन्दाहुती इष्टेभ्य इत्यादि दशान्ते व्याहृतिरित्यृद्धिः आश्रावितं ब्रह्म यदकर्मेति कृतान्तं यत्प्रमत्तो मनो ज्योतिरयाश्चाग्ने यदस्मिन्स्वस्ति नो यत इन्द्र इति विच्छिन्नमधोऽस्येधिषीमहि स्वाहा बैल्वं समिदसि तेजोऽसि तेजो मयि धेहि स्वाहा पालाशं यमस्य धीमहि मृत्योर्मे पाहि स्वाहा नैयग्रोधं सूर्यस्य धीमहि चक्षुर्मे पाहि स्वाहा आश्वत्थं सोमस्य धीमहि चित्तं मे पाहि स्वाहा औदुम्बरं वायोर्धीमहि प्राणान्मे पाहि स्वाहा शमीं ब्रह्मणो धीमहि बुद्धिं मे पाहि स्वाहा खादिरमिति सप्त समिधः सप्त ते अग्ने ऋतुधा नेति पूर्णाहुती अग्निर्भुक्त-मित्युपजुह्वामाज्यं गृहीत्वाग्निर्जीर्णमिति जुह्वा चरुमवदाय हुत्वा समङ्तां बर्हिरिति स्रावयञ्जुहोति ततो वामेन स्रुवं गृहीत्वा दक्षिणेनाज्यपात्रं संगृह्याग्नेरुपरि धारयन्नाज्यशेषमिन्द्राय स्वाहेति जुहुयात् १९

तत्पात्रेणाधावमादाय स्रुवेणान्तरितमग्निस्तृप्यत्वित्युपाग्नि पश्चिमतो वेदिस्तृप्यत्विति वेद्यां द्यौस्तृप्यत्वित्याकाशे पृथिवी तृप्यत्विति भूमौ ब्रह्माद्यास्तृप्यन्तामिति दक्षिणस्यां तर्पयति प्रणीतायां दक्षिणस्यां दैवेनापो गृहीत्वौषधिवनस्पतिगन्धर्वाप्सरसश्चैव तृप्यन्तामित्युत्तरस्यां वेद्यां तर्पयति तथोत्तरस्यां प्रणीतायां सापसव्यमपो गृहीत्वा पैतृकेण दक्षिणतः पितरः पितामहाः प्रपितामहाश्चाक्षय्यमस्तु तृप्यन्तामिति दक्षिणस्यां तर्पयति प्रासावीरित्यन्तैश्चतुर्भिः प्रवाहणं कृत्वा दक्षिणादिप्रणिध्योरुपान्ताङ्गुष्ठानामिकाभिः पवित्रमक्षतं गृहीत्वा पवित्रमसि पूर्णमसि सदसि सर्वमसीति पर्यायतो जुहोत्यक्षितमसीति प्रणिधिमुत्तरां चालयित्वा तदाधावेन प्राच्यां दिशि दक्षिणायां दिशि प्रतीच्यां दिश्युदीच्यां दिश्यूर्ध्वायां दिश्यधोधराधरैरिति यथादिशं परिषिच्य माहं प्रजामिति गृहीत्वा दक्षिणप्रणिधौ स्वल्पमाधावं स्रावयित्वा स्वां योनिमिति दक्षिणप्रणिध्यां जलमुदकपात्रे स्रावयति आपोहिष्ठादिना तदद्भिः प्रोक्ष्य प्रणिधी विसर्जयति २०

पुनर्देवेभ्यो हव्यं वहेत्यग्नेर्दर्शनेन स्रुवं विसृज्य वर्षिष्ठा गह्वरेष्ठोऽग्निमिति वर्षिष्ठसमिधौ जुहुयादूर्ध्वं यज्ञं नयतमित्यूर्ध्वसमिधौ पश्चिमतः परिधिमपनयेत्येवं दक्षिणत उत्तरतश्च परिधीन् पश्चिमतो विष्णोः सदनमसीत्येवं दक्षिणत उत्तरतः प्राच्यामिति च परिस्तरणबर्हिषः सर्वान्परिसमूह्याप्यायन्तामिति जुहोति शुध्यन्तां पितृषदनँ शुध्यन्तां देवसदनमित्यविच्छिन्नमास्तीर्य नैर्ऋते दहेदविच्छिन्नेन ब्रह्मवर्चसायेति भूतिः स्मेति भस्म गृहीत्वा ललाटहृद्बाहुकण्ठादीनादित्यः सोमो नम इत्यूर्ध्वाग्रमालिप्यापो हि ष्ठेति प्रोक्ष्य ओं च मे स्वर इति बालकृतं वेति चाग्निं पूर्ववदादित्यं चोपस्थाय पुनर्वेदिमूलमासाद्याग्निं वैश्वानरसूक्तेनोपस्थाय प्रणामं कुर्यादिति क्रियान्ते होमः ओं च मे खर इति लौकिकाग्निविसर्जनमिति विज्ञायते २१

प्रथमः प्रश्नः समाप्तः

अथ शारीरेषु संस्कारेष्वृतुसंगमनवर्जं नान्दीमुखं कुर्यात् श्वः कर्तास्मीति गर्भाधानादिक्रियां यदहः करोति तदहर्नन्दी भवति तस्या मुखं सर्वदेवपितृदैवत्यं नान्दीमुखमभ्युदयश्राद्धं दैविकवत्करोति पूर्वेद्युरेव पूर्वाह्णे युग्मान्ब्राह्मणान्सुप्रक्षालितपाणिपादाञ्छ्रोत्रियानन्नेन परिवेष्याथेडामभ्युक्ष्याथावनीदमिति मण्डलान्युपलिप्यास्त्वासनमित्यासनानि सदर्भयवानि निधाय तेष्वामीनान्पुष्पःद्यैर्यथोपपादमलंकरोति शुक्लबलिश्वेतसर्षपदधितण्डुलमित्यामनन्ति चतुःशुक्लमेतदादायाग्नेर्दक्षिणतोऽग्नये सोमाय प्रजेशाय विश्वेभ्यो देवेभ्य ऋषिभ्यः पितृभ्यो भूतेभ्यः सर्वाभ्यो देवताभ्यो नम इत्यन्तेन तन्नाम्ना पुष्पादिभिरभ्यर्च्य बलिं ददाति १

चरुमपूपादि च निवेद्योदकुम्भं धारास्वित्यद्भिरापूर्य नमः सुलोमीति पाप्मनोऽपहत्यै सपल्लवं कूर्चं पवित्रमाभरणं तस्मिन्निदधाति प्रतिसरां कुतपस्य दुकूलस्य वा त्रिवृतां पुष्पाद्यपि संभृत्यादाय जुहुयादृचोऽग्ने नयाद्यग्निदेवत्याः सोमो धेन्वादि सौमदैवत्या ब्रह्मजज्ञानादि ब्रह्मदैवत्ये रुद्रमन्यमित्यादि रुद्रदैवत्ये अतो देवादि विष्णुदैवत्या आनोविश्वादि विश्वेदेवदैवत्या यतः स्वमसीत्यादि सप्तर्षिदैवत्या ये भूता इत्यादि भूतदैवत्या व्याहृतीरग्नये कव्यवाहनाय सोमाय पितृमते यमाय चाङ्गिरस्पतये एते य इह पितर उगन्तस्त्वा सा नो ददात्वित्यृचः पितृदैवत्याः पृथिवीगतेभ्यः पितृभ्यो

ऽन्तरिक्षगतेभ्यः पितामहेभ्यो दिविगतेभ्यः प्रपितामहेभ्यः स्वधा नमः स्वाहेति पितृभ्यः पैतृकमुपवीती हुत्वा व्याहृतीः सामान्यतो देवताभ्यस्ताभ्योऽष्टाभ्यो जुहोति पात्रेष्वाज्यभागं स्रुवेणाभिघार्य द्विर्देवशेषं पितृभ्यः प्रागन्तं क्षिप्त्वा तदङ्गुष्ठेन तच्चरुं स्पर्शयति ततो नमस्कृत्या सत्येन रजसेति क्षीरेण दध्ना वा श्वेतमन्नं ब्राह्मणान्भोजयेत् अनुत्थितेभ्यः समूह्योच्छिष्टं शोधयित्वाचान्ताननुमान्य पुण्याहं वाचयित्वा स्वस्तिसूक्तेन तामभिमृश्य स्वस्तिदा विशस्पतिरिति प्रतिसरां बध्नाति नान्दीमुखेभ्यः पितृभ्यः स्वधा नमो नान्दीमुखेभ्यः पितामहेभ्यः स्वधा नमो नान्दीमुखेभ्यः प्रपितामहेभ्यः स्वधा नम इत्युक्ते स्वधास्त्विति प्रतिवदतो देवान्तं विसर्जयति तेनोदकुम्भेनापरेद्युः स्नायान्नान्दीमुखमिति विज्ञायते २

अथ गर्भाधानादिवर्षे पञ्चमे ब्रह्मवर्चसकाममायुष्काममष्टमे नवमे श्रीकामं वसन्ते ब्राह्मणमुपनयीतैकादशे ग्रीष्मे राजन्यं द्वादशे शरदि वैश्यमा षोडशाद्ब्राह्मणमा द्वाविंशात् क्षत्रियमा चतुर्विंशाद्वैश्यमिति वातीते सावित्रीपतिता भवन्ति तेषामुद्दालकप्रायश्चित्तं द्वौ मासौ यावकेन मासं क्षीरेणामिक्षयार्धमासमष्टरात्रं घृतेनायाचितं षड्रात्रं त्रिरात्रमुदकेनोपवासमहोरात्रं वर्तत इत्येतदुद्दालकमनेन वाश्वमेधावभृथस्नानेन वा व्रात्यस्तोमेन वेष्ट्वा पुनर्गर्भाधानादिसंस्कारान्कृत्वा शुद्धा उपनेयाः सावित्रीपतिता भवन्तीति विज्ञायते ३

ब्राह्मणस्य पालाशो बैल्वो वा केशान्तो निर्व्रणोऽनुमृष्टोऽनुद्वेजनो यूपवदवक्रो दण्डः कृष्णमृगस्याजिनं मौञ्जी मेखला क्षत्रियस्य नैयग्रोधो ललाटान्तो दण्डो रौरवमजिनं मौर्वी मेखला वैश्यस्यौदुम्बरो नासिकान्तो दण्डो बास्तवमजिनं शाणी मेखला ओं भूर्भुवः सुवस्तत्सवितुरिति सावित्री ओं भूर्भुवः सुवस्तत्सवितुरापो ज्योती रस इति प्राणायाम ओं भूर्भुवः सुवः स्वाहेति व्याहृतिः अग्नये समिधमिति द्वे अग्नये समिधाविति चत्वार्यग्नये समिध इति समिदाधानमेतानि ब्राह्मणस्य ओं भूर्भुवस्तत्सवितुरिति सावित्री ओं भूर्भुवस्तत्सवितुस्तेजो ज्योती रस इति प्राणायाम ओं भूर्भुवः स्वाहेति व्याहृतिः अग्नये समिधमिति द्वे अग्नये समिधाविति समिदाधानमेतानि क्षत्रियस्य ओं भूस्तत्सवितुरिति सावित्री ओं भूस्तत्सवितुरग्निर्ज्योती रस इति प्राणायाम ओं भूः स्वाहेति व्याहृतिः अग्नये समिधमिति समिदाधानमेतानि वैश्यस्य भवन्ति ४

प्रोष्ठपदहस्तावश्विन्यनूराधापूर्वोत्तरपुनर्वसू मृगशिरो वा यावन्ति पुंनामानि नक्षत्राणि तत्राग्नेर्वायव्यामुपवीताजिनमेखलाहतवस्त्रदण्डशरावाश्मसमिद्द-र्भादिसंभारान्दर्भेषु संभृत्य सं च त्वे जग्मुरिति प्रोक्षयत्यथाज्येनाघारं हुत्वाचान्तं मङ्गलयुक्तं कुमारमासयित्वाग्नेर्नैर्ऋत्यां मस्तके दर्भौ प्रागुत्तराग्रौ विन्यस्य सरोमाणं दर्भमिन्द्र शस्त्रमिति चतुर्भिः प्रदक्षिणं चतुर्दिशं छित्त्वा येनाव-पद्यत्क्षुरेणेति सर्वतो वपति नाधो जत्रोर्गोशकृद्युक्ते शरावे केशान्गृह्णीयात् यत्र मौण्ड्यं शिखाभ्रूवर्जमानखं वपति स्नात्वाचान्तं पुण्याहं वाचयित्वा भुक्त-वन्तमामयति दक्षिणे कुमारमथ परिस्तीर्यायुर्दा अग्न आयुर्दा देवेति प्रधानं पञ्च वारुणं व्याहृतिपर्यन्तं जुहोत्यातिष्ठेति वायव्यामश्म पादाङ्गुष्ठेन दक्षिणेन स्पर्शयति या अकृन्तन्निति वस्त्रमियम् दुरुक्तादिति मेखलां परीदमित्युत्तरीयं यज्ञोपवीतमित्युपवीतं मित्रस्य चक्षुरिति कृष्णाजिनं तस्मै ददाति ५

ततो विधिवदाचमनं कारयित्वा सदस्याननुज्ञाप्य देवस्य त्वेति बाहू आल-भ्योत्तरे प्राङ्मुखः प्राङ्मुखमुपनयीतायुष्टे विश्वत इति दक्षिणपाणिं गृहीत्वो-द्धरत्यग्निष्टे हस्तमग्रभीदिति विसर्जत्यसावपोऽशानेत्याचारं मम हृदय इति तस्य हृदयस्पर्शनं कृत्वा भूर्भुव सुवः सुप्रजा इति प्रशंसति भूर्ऋक्षु त्वेति भुवो यजुःषु त्वेति सुवः सामसु त्वेतीष्टतस्त इत्यनलस्य त इतीदं वत्स्याव इति षड्भिः कर्णे जपित्वा नाम शर्मान्तं कुर्यादग्निरायुष्मानित्यादिकैः पञ्चभि-र्दक्षिणहस्ते कनिष्ठाद्यङ्गुल्यग्राणि पर्यायेण विसृजेदायुर्दा इति दक्षिणे कर्णे प्रतिष्ठ वायाविति वामे च जपति स्वस्ति देवेत्यग्निं प्रदक्षिणं कारयित्वा दक्षिणे निवेश्य राष्ट्रभृदसीति कूर्चं दत्त्वा शं नो देवीरिति प्रोक्ष्य मूलहोमं व्याहृतिपर्यन्तं जुहोत्यदितिस्ते कक्ष्यामिति हुतशेष भोजयित्वा योगे योगे तवस्तरमित्याचमनं ददाति शतमिन्न्वित्यादित्यं नमस्कृत्यागन्त्रा समगन्महीति प्रदक्षिणं कारयि-त्वा शकाय त्वेत्युत्तमाङ्गमभिमृश्याधीहि भो इति तेन प्रार्थितो गुरुरथाह सा-वित्रीं भो इति शिष्यमनुशास्ति गणानां त्वेति गणमुख्यमोजोऽसीति सावित्रीं पावका नः सरस्वतीति सरस्वतीं च प्रणम्य यथोक्तं सावित्रीं पच्छोऽर्धर्चशो व्यस्तां समस्तामध्यापयेत् ६

धातादिपूर्वं सवित्रे काण्डर्षये सदसस्पतिमा देवो यात्वभीवृतं स घा नो वि जनाञ्छ्यावा वि सुपर्णो भगं धियमिति सावित्रव्रतसूक्तमग्ने वायविन्द्रादित्य

व्रतानामिति सावित्रव्रतबन्धं पञ्चभिर्व्याहृत्यन्तं जुहोत्यग्नये समिधमिति द्वे अग्नये समिधाविति चत्वार्यग्नये समिध इति सप्त पालाशाङ्कुराणि घृताक्तानि जुहोति सूर्य एष ते पुत्र इत्यादित्यं दर्शयत्यष्टाभिः समिद्भिर्होमकर्मणि शिष्यं योजयेद्यथा हेति दक्षिणादिप्रदक्षिणं वेदिं परिमृज्य पूर्ववत्परिस्तृणाति व्याहृतीरेषा ते मेधां म इन्द्रो ददात्वप्सरास्वा मां मेधेत्यष्टौ जुहोति यथा हेति तथा परिमृज्य प्रासावीरित्यन्तैश्चतुर्भिः प्रवाहणं कृत्वा भूतिः स्मेति भस्मा-लिप्यापोहि ष्ठेति प्रोक्ष्य यत्ते अग्ने तेजस्तेनेत्यग्निमुद्वयामित्यादित्यं चोपतिष्ठेत नित्यं सायंप्रातरेवं जुहुयाद्यतो ब्रह्मदत्तमिदमिज्यमग्निहोत्रमेतन्मूलास्तदग्नय इति ब्रह्मवादिनो वदन्ति ७

अग्निष्ट आयुरिति दण्डमिन्द्रो मरुद्भिरिति शरावं कठिनं वा भैक्षपात्रं दद्यात् भवति भिक्षां देहीति ब्राह्मणो ब्रूयात्क्षत्रियो भिक्षां भवति देहीति वैश्यो भिक्षां देहि भवतीति मौनव्रतेन ब्राह्मणेभ्यो भैक्षमाममितरेभ्यो गृह्णीयाद्यस्य त इति गुरुर्भैक्षमादाय सुश्रव इति प्रोक्षयति हविषापूपलाजसमायुतेन मिन्दाहुती हुत्वान्तहोमो हूयते मौनव्रतेना सन्ध्यागमात्तिष्ठति तस्मा आश्रमधर्माण्या-चक्षीत चोदितातिक्रमे दण्डेन न हन्याद्दुष्टवाक्यैर्न शपत्यतिक्रमानुरूपं कृच्छ्र-मादिशति गुरुणा शिष्यो रक्षितव्यो यस्माच्छिष्यकृतं दुरितं प्राप्नोत्यव-श्यमकुर्वन्तं शिष्यं त्यजत्यन्यथा त्यागे पत्नीपुत्रशिष्याणां पतति काषायाजि-नयोरन्यतरवासा जटी शिखी वा मेखली दण्डी सूत्राजिनधारी ब्रह्मचारी शुचिरक्षारलवणाशी यथोक्तेषु वर्णेषु ब्रह्मचारिधर्माण्यनुतिष्ठतीति विज्ञायते ८

अथ पारायणव्रतानि चतुर्थे पञ्चमे सप्तमे वा पुण्ये पुंनाम्नि नक्षत्रे शिष्यमा-चान्तं पुण्याहं वाचयित्वाग्निं परिस्तीर्य प्राङ्मुखमुपवेशयति तस्योत्तरे माता ब्रह्मचारी वासीत धातादिपूर्वं सावित्रव्रतसूक्तमग्ने वायविन्द्रादित्य व्रताना-मित्यूहित्वाचारिषं विसर्जयामीति सावित्रव्रतविसर्गं हुत्वा पूर्वाणि सूत्रद-ण्डादीन्यप्सु विसृज्य स्नाताय नवान्युपवीतादीनि पूर्ववद्दत्त्वा तमद्भिरभ्युक्ष्य दक्षिणे निवेश्य धातादिपूर्वं प्रजापतये काण्डर्षये सदसस्पतिं प्रजापते न त्वद्रयीणां पतिं प्रजापते त्वं निधिपास्तवेमे लोकाः प्रजापतिं प्रथमं यो राय इत्यग्न्यादिषु पञ्चसु प्राजापत्यमित्युभयत्रोहित्वा वार्षिकं प्राजापत्यव्रतबन्धं

हुत्वा शिष्येण व्रतं बन्धयति वर्षे वर्षे तथैव व्रतविसर्गं हुत्वा तत्तद्व्रतं विसृज्यान्यद्व्रतं बध्नाति ९

सोमाय काण्डर्षये सदसस्पतिं सोमो धेनुमषाढं त्वं सोम क्रतुभिर्या ते धामानि हविषा त्वमिमा ओषधीर्या ते धामानि दिवीति सूक्तं सौम्यव्रतस्याग्नये काण्डर्षये सदसस्पतिमग्ने नय प्र वः शुक्रायाच्छा गिरोऽग्ने त्वमस्मदग्ने त्वं पारय प्र कारवो मननेति सूक्तमाग्नेयव्रतस्य विश्वेभ्यो देवेभ्यः काण्डर्षये सदसस्पतिमा नो विश्वे शं नो देवा ये सवितुरग्ने याहि द्यौः पितर्विश्वे देवाः शृणुतेति सूक्तं वैश्वदेवव्रतस्य ब्रह्मणे काण्डर्षये सदसस्पतिं ब्रह्म जज्ञानं पिता विराजां ब्रह्म देवानन्तरस्मिन् ब्रह्मन्देवाश्चतस्र इति सूक्तं ब्राह्मव्रतस्य ऋतं च सत्यं च देवकृतस्य यन्मे गभ तरत्स मन्दीति प्राजापत्ये वसोः पवित्रं पवस्व विश्वचर्षण इति सौम्ये जातवेदस इत्याग्नेये विष्णोर्नु कं सहस्रशीर्षा त्वमग्ने रुद्रा त्वाहार्षमिति वैश्वदेवे एकाक्षरं त्वक्षरितेति ब्राह्मे तत्तद्व्रतदैवत्यं स्वाध्यायसूक्तं तत्तत्काण्डं चाधीयीत १०

तथैव धातादिव्रतविसर्गं हुत्वा ब्राह्मव्रतं विसृज्य नवान्युपवीतादीनि पूर्ववद्दत्त्वा प्रवर्ग्यदेवताभ्यः कल्पयामि सांराज्यै कल्पयामि महावीराय कल्पयामि पृथिव्यै कल्पयामि स्वाहेत्युत्तरे सोमाय कल्पयामि पितृभ्यः कल्पयामि पितृभ्यो मन्त्रपतिभ्यः कल्पयामि रुद्राय कल्पयामि रुद्राय रुद्रहोत्रे कल्पयामि स्वाहेति दक्षिणे चाहुतीरेता हुत्वाग्ने व्रतपते शुक्रियव्रतं बन्धयामीति शुक्रियव्रतं षाण्मासिकं त्रैमासिकं वा बध्नीयाच्चितः स्थ परिचितः स्थेत्यादिनानुवाकेन शिरोऽहतेन वाससावेष्टयेद्यथैनमहः सूर्यो नाभितपेन्मुखमस्य तस्माद्रेफायति स्त्रीशूद्राभ्यामनभिभाष्य शुक्रियब्राह्मणारुणनारायणाद्यारण्यकाण्डमधीयीत इति व्रतपारायणं विज्ञायते ११

अथाषाढोपाकर्म कुर्यादापूर्यमाणपक्षे रिक्तापर्वणी वर्जयित्वा बुधवारे तिथिं गृह्णाति तत्राघारं हुत्वाग्निं परिस्तीर्य शिष्यं वापयित्वा स्नातं पुण्याहं वाचयित्वा प्रोक्षणैः प्रोक्ष्याग्निं प्रदक्षिणं कारयित्वा कूर्चं ददात्यासयित्वा दक्षिणे शं नो देवीरिति प्रोक्ष्य प्रधानाः पञ्चाशदाहुतीराज्यचरुभ्यामक्षतधानाभ्यां वा जुहोत्यग्नये पृथिव्यै ऋग्वेदाय यजुर्वेदाय सामवेदायाथर्वणवेदाय वाय-

वेऽन्तरिक्षाय दिवसाय सूर्याय दिग्भ्यश्चन्द्रमसेऽध्यायायानध्यायायाध्या-
यदेवताया अनध्यायदेवतायै श्रद्धायै मेधायै धारणाया आचार्याय छन्दस
ऋषिभ्यः सप्तर्षिभ्यो मुनिभ्यो गुरुभ्योऽहोरात्रेभ्योऽर्धमासेभ्यो मासेभ्य ऋतुभ्यः
संवत्सरेभ्यः परिवत्सरेभ्य इदावत्सरेभ्य इद्वत्सरेभ्यो वत्सरेभ्यो ब्रह्मणे सा-
वित्र्यै प्रजापतय उशनसे त्र्यवनाय बृहस्पतये सोमायाङ्गिरसे दर्भाय शङ्खाय
लिखिताय स्थूलशिरसे वैनतेयाय शिखिन ईश्वरायाधिकृताधिदेवताभ्यः
सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् सनिं मेधामयासिषं स्वाहेति पूर्व-
वत्प्राजापत्यव्रतबन्धं धातादि पञ्च वारुणं मूलहोमं स्विष्टाकारं च हुत्वा
हुतशेषमदितिस्ते कक्ष्यामिति भोजयित्वा योगे योगे तवस्तरमित्याचमनं
ददात्यथ प्राङ्मुखमुदङ्मुखं वा ब्रह्माञ्जलिं कारयित्वा दक्षिणमध्यासीनं वेदान्वेदौ
वेदं वा सूत्रसहितमध्यापयत्यन्तराप्येवमध्यापयितुकामो हुत्वाध्यापयेदर्ध-
पञ्चमानर्धषष्ठान्वा मासानध्यायानुपाकुर्वीतात ऊर्ध्वं शुक्लेषु कामं तु वेदा-
ङ्गानीति वेदोपाकरणमथ श्रावणे पौर्णमास्यामग्निं परिस्तीर्य शिष्यं वापयित्वा
स्नातं पुण्याहं वाचयित्वा पूर्ववद्व्रतबन्धं धातादि पञ्च वारुणं मूलहोमं
स्विष्टाकारं च जुहोत्यध्ययनपारायणायेति श्रावणं तथैव नैष्ठिको याव-
ज्जीवमाश्रमधर्माण्यनु तिष्ठेतोपाकुर्वाणो वेदमधीत्य स्नायादिति विज्ञायते १२

अथ समावर्तनं व्याख्यास्याम उदगयन आपूर्यमाणपक्षे तिष्योत्तरेषु चित्रा-
विशाखयोर्हस्तरोहिण्योर्मृगशिरसि वा नक्षत्रे यत्रापस्तत्रागारे गोष्ठे वाघारं
हुत्वाग्निं परिस्तीर्य तथैव धातादिव्रतविसर्गं हुत्वा वयः सुपर्णा इति
वस्त्रावकुण्ठनं मोचयित्वा शुक्रियव्रतं विसृजतीमँ स्तोमं त्र्यायुषं जमदग्नेरिति
प्रधानं पञ्च वारुणं मूलहोमान्तं हुत्वोद्वयं तमस उदु त्यमित्येताभ्यामादि-
त्यमुपस्थायोदुत्तममित्युत्तरीयमथा वयमिति सूत्रदण्डादीन्यप्सु विसृज्य शिवो
नामासीति क्षुरमुपलेन कर्षयित्वा साक्षतैराधावैः शिवा न इति शिरोऽञ्जयित्वा
गोदानमप उन्दन्त्वोषधे त्रायस्व यत्क्षुरेणेति चतुर्दिशं येनावपदिति सर्वतो
नखान्तं वपति शरावे सानडुहगोशकृति केशादीन्यादायेदमहममुष्येत्युदु-
म्बरदर्भयोर्मूले गोष्ठे वा गूहयेदन्नाद्याय व्यूहध्वमिति दन्तधावनमौदुम्बरेण
काष्ठेन करोति शीतोष्णाभिरद्भिरापो हि ष्ठेत्यादिभिर्ऋग्भिस्तिसृभिः स्नापयित्वा
हिरण्यपवमानाभ्यां प्रोक्षयतीति पूर्वं तथा प्रधानान्हुत्वा पुरोदयादादित्यस्य
ब्राह्मव्रतं विसृज्य शुक्रियव्रतस्य ग्रहणविसर्गावित्येके १३

दिवि श्रयस्वेत्यहते वाससी गन्धाभरणादीनि च प्रोक्ष्य नमो ग्रहायेति गन्धं गृहीत्वा प्राचीनमञ्जलिं कृत्वाप्सरस्स्विति गात्राण्यनुलेपयेत्तेजोवत्सव इति वस्त्रं परिधाय सोमस्य तनूरसीत्युत्तरीयं गृह्णाति पूर्ववन्मेखलादीन्याद-दीताभरणकुण्डलमणीन्बदरेण सुवर्णेन वा कृतानाच्छाद्य दर्भेण बध्नीयात् १४

तदग्नावुपरि धारयन्नायुष्यं वर्चस्यमुच्चैर्वादि शुनमहं प्रियं मेयमोषधीति पञ्च-भिर्जुहुयात्सम्राजं च विराजं चेत्युदकपात्रे परिप्लाव्य ऋतुभिरिष्टार्तवैरि-यमोषधीति ताभ्यां कुण्डलाभ्यां दक्षिणादिकर्णयोरलंकरोति शुभिक इति मणिना कण्ठमामुच्येदं ब्रह्म पुनीमह इत्यङ्गुलीयकं गृहीत्वा यदाञ्जनमिति दक्षिणं चक्षुर्यन्मे मन इति वामं चाञ्जनेनाञ्जयित्वेमाः सुमनस इति स्रजमादाय देवस्य त्वेत्यादर्शमवेक्षेत तेनैव वैणवं दण्डमृजुं गृह्णीयादिन्द्रस्य वज्रोऽसीति वेगवेजमिति त्रिरुन्माष्टर्युपानहावित्युपानहावारुह्य प्रजापतेः शरणं भुवः पुनात्विति द्वाभ्यां छत्रं गृह्णीयाद्यो मे दण्ड इति पुनर्दण्डं प्रमादे सत्याहरेत्ततो वाहनं पूजयित्वा प्रतिष्ठे स्थो देवतानामित्यभिमृश्य रथंतरमसीति रथमश्वोऽसि हयोऽसीत्यश्वमिन्द्रस्य त्वा वज्रेणेति हस्तिनमारुह्यावतरेद-भ्यागतमुत्तमं कन्याप्रदः सँस्रवन्त्विति निरीक्ष्य यशोऽसीत्यावसथे विष्टरं कूर्चं पाद्यमर्घ्यमाचमनीयं मधुपर्कं च संकल्पयति १५

तत्रोपवेश्य राष्ट्रभृदसीति कूर्चं दत्त्वापः पादाविति पादौ सव्यादि प्रक्षालय-ति स धौतपादो विराज इति स्वहस्तेन तद्धस्तं परिमृश्य तेनात्मनो हृदय-मभिमृशति ततो मयि तेज इत्यर्घ्यमाचमनीयं चाददीता मा गन्यशसेति मधुपर्कं दद्याद्देवस्य त्वेति प्रतिगृह्य यन्मधुनो मधव्यमिति प्राश्नीयाद्योगे योग इत्या-चम्याचमेदमृतापिधानमसीति धेनुं बद्ध्वा गौर्धेनुरिति तृणमुष्टिं प्रदाय गौरस्य-पहतेति संस्पृश्य तत्सुभूतमिति विसर्जयति विराज इति पाद्यदानमा मा गन्यशसेत्याचमनममृतोपस्तरणमसीति मधुपर्कदानं पृथिवीति तस्यान्नसं-कल्पनममृतापिधानमसीति मुखवासदानमिति विशेष इत्येके १६

द्यौस्त्वा ददात्विति ब्राह्मणान्भोजयित्वा इन्द्राग्नी मे वर्च इत्येषां प्रणामं कु-र्यात्पुण्याहं वाचयित्वाज्येन व्याहृतीर्हुत्वा बान्धवैः सह धाम भुञ्जीत मधुधाम्नोश्चोदनायां तोयपिष्टौ प्रतिनिधी गृह्णीयाद्यस्मादापो वै सर्वा देवताः

सर्वार्थसाधका इति वेद्यर्थं संभारार्थं पृथिवी वनस्पतयः पश्वर्थमोषधय इति वेदानुशासनं भवति १७

अथ प्राणाग्निहोत्रविधानं स्वयंज्योतिरात्मा यजमानो बुद्धिः पत्नी हृदयपुण्ड-रीकं वेदी रोमाणि दर्भाः प्राणो गार्हपत्योऽपान आहवनीयो व्यानोऽन्वाहार्य उदानः सभ्यः समान आवसथ्य इति पञ्चाग्नयो भवन्ति जिह्वादीन्द्रियाणि यज्ञपात्राणि रसादयो विषया हवींष्यस्य फलमोमर्थावाप्तिस्तदेवमेकाध्व-र्युरात्मयज्ञं संकल्प्यामृतोपस्तरणमसीत्यन्नं प्रोक्ष्यान्नसूक्तेनाभिमृश्योर्जस्करमि-त्याधावं पीत्वाङ्गुष्ठानामिकामध्यमैरादायान्नं प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहोदानाय स्वाहा समानाय स्वाहेति पञ्चाहुतीः पात्रं स्पृशन्नेव हुत्वोर्जस्करमिति पुनश्चाधावं पीत्वाश्नीयादाचम्यापो गृहीत्वादित्याभिमुखमों प्राणानाप्यायस्वेत्युदरमभिमृशेद्दक्षिणेन कराङ्गुष्ठाग्रेणाणोरणीयानिति दक्षिण-पादाङ्गुष्ठे संस्रावयेदेवं सायंप्रातः प्राणाग्निहोत्रं यजेतात्मयाजिनामिदमि-ज्यमग्निहोत्रं यावज्जीवकमिति ब्रह्मवादिनो वदन्ति तदेवं भुक्त्वा गच्छन्तमनृणो ब्रह्मपदमभ्येतीति सामपूर्वं माता पिता गुरुर्वा पैतृकादिकमृणत्रयं जायमानस्य ब्राह्मणस्य सहजातमित्युक्त्वा वारयेदिति विज्ञायते १८

द्वितीयः प्रश्नः समाप्तः

अथातः पाणिग्रहणमष्टौ विवाहा भवन्ति ब्राह्मो दैवः प्राजापत्य आर्ष आसुरो गान्धर्वो राक्षसः पैशाच इति यदभिरूपं वृत्तवयःसंपन्नमाहूयार्हयित्वा कन्या-लंकृता दास्यते स ब्राह्म इति गीयते यदृत्विजो यज्ञस्यात्मनोऽलंकृत्य कन्यां प्रतिपादयति स दैवो युगपद्धर्मानुवर्तिनौ स्यातामिति वाचानुमान्याग्निकार्यं स्वयं कृत्वा यत्कन्यामर्हयित्वा दद्यात्स प्राजापत्यो भवति यद्गोमिथुनेनैकेन द्वाभ्यां वा कन्यां ददाति तमार्षमाचक्षते यत्कन्यामाभरणमारोप्य शक्त्या बन्धु-भ्यो धनं दत्त्वाहरते तमासुरमामनन्ति कामयोगो यदुभयोः स गान्धर्वः प्रसह्य यत्कन्याहरणं स राक्षसः सुप्तां प्रमत्तां वा रहसि यद्गच्छति स पशाचो भवतीत्येतेषां प्रथमे चत्वारस्तोयप्रदानपूर्वकाः शस्ता ब्राह्मणस्य नेतरे जघन्या यस्मात्त्रीन्पूर्वांस्त्रीनपरानार्षीजातः षट् पूर्वान्षडपरान्प्राजापत्येनोढाया जातः सप्त पूर्वान्सप्तापरान्दैवीसुतो दश पूर्वान्दशापरानात्मानं चैकविंशतिकं ब्राह्मीपुत्रः पावयेदिति १

मातुरसपिण्डां पितुरसमानऋषिगोत्रजातां लक्षणसंपन्नां नग्निकां कन्यां वरयित्वा पञ्चाहेषु कुलस्य परिशुद्ध्यै सपिण्डैः श्रोत्रियैः सह भूतं भुञ्जीत यस्मात्स पूतो भवतीति विज्ञायते कनिक्रदादिना कन्यागृह गत्वा प्र सु ग्मन्तेति तामीक्षित्वाभ्रातृघ्नीमिति तयेक्ष्यमाणो गुरुणाग्निमुखे कृते कन्याप्रदो वरगोत्रनाम शर्मान्तं तथैतामस्य सहधर्मचारिणी भवतीति ब्राह्मे विवाहे धर्मप्रजासंपत्त्यर्थं यज्ञापत्त्यर्थं ब्रह्मदेवर्षिपितृतृप्त्यर्थं प्रजासहत्वकर्मभ्यो ददामीत्युदकेन तां दद्यात् तां प्रजापतिः स्त्रियामित्युदकेन हरते वस्त्रगन्धाभरणादीनि संभृत्य कनिक्रदादिना कन्यागृहं सह बान्धवैर्गत्वा तेज आयुः श्रियमिति वस्त्रादिनालंकृत्य प्रजापतिः सोममिति तथाभरणमारोप्याददीतेत्येके २

ततः सह स्नाताया बध्वा नववस्त्रालंकारायाः पुण्याहान्ते पाणिं गृहीत्वा सुमङ्गलीरियं वधूरित्यग्निशालामागत्य प्राङ्मुखमासयित्वा तस्यै शुद्धाम्बरवेषः कूर्चं ददाति ततः परिस्तीर्याग्निरैत्विमामग्निस्त्रायतां मा ते गृहे द्यौस्ते पृष्ठमप्रजस्तां देवकृतमिति पञ्चवारुणान्तं प्रधानाञ्जुहुयादग्नेरपरस्यामास्तीर्णेषु दर्भेष्वश्मानमातिष्ठेति वध्वाः पादाङ्गुष्ठेन दक्षिणेन स्पर्शयति प्रत्यङ्मुख इति पाणिग्रहणं सरस्वतीति विसर्गमघोरचक्षुरित्यासनं च कृत्वेमांल्लाजानित्यभिघार्येयं नारीति तस्या लाजाञ्जलिना जुहोत्युदायुषेत्युत्तिष्ठति प्रत्यङ्मुख इति वधूमुखेक्षणं सरस्वतीति पाणिग्रहणमघोरचक्षुरिति विसर्गमिमांल्लाजानिति लाजपूरणमियं नारीति होममुदायुषेत्यग्निप्रणामं कुर्यादित्येके ३

विश्वा उत त्वयेत्यग्निं प्रदक्षिणं कृत्वातिगाहेमहि द्विष इत्यासित्वा त्रिधैवं लाजहोमं जुहुयात्ततो मूलहोमान्तेऽग्निं पतिघ्नघ्न्यन्तं वायुः निन्दितान्तमादित्यं घोरान्तं गन्धर्वं यशोघ्नघ्न्यन्तं चन्द्रं पुत्रघ्नघ्न्यन्तं हुत्वा व्याहृतिः प्रासावीरित्यन्तैश्चतुर्भिः प्रवाहणं कृत्वा पुनः परिस्तीर्य स्विष्टकृन्मिन्दाहुती विच्छिन्नमृद्धिसप्तसमिद्व्याहृतीश्च जुहुयादग्नेरपरस्यामास्तीर्योदगग्रान्सप्त बर्हिषो वध्वा सह दक्षिणेन पादेनैकमिषे विष्णुरिति द्वे ऊर्ज इति त्रीणि व्रतायेति चत्वारीति पञ्च पशुभ्य इति षड्रायस्पोषायेति सप्त सप्तभ्य इति तान्पर्यायेणाक्रम्य गत्वा सखेति निवर्तेत मम हृदय इति तस्या हृदयमभिमृशति प्रोक्षणैः प्रोक्ष्य पुण्याहं स्वस्तिघोषेणारुन्धतीन्द्राण्यदितिः श्रीरिवेति वध्वा मनुः प्रजापतिः पुरुषोत्तमो महेन्द्र इवेति वरस्य च चत्वारि स्तोमान्यारोपयेयुरिति पाणिग्रहणं ध्रुवदर्शना-

न्तमित्येके ततः प्रभृति गार्हस्थ्यं धर्ममनुतिष्ठतीति विज्ञायते ४

अथ चतुर्थीवासो वैवाहिकमग्निं वध्वा सहादाय संप्रवाहारयन्विति वधूं समं वध्वेत्यग्निं संशास्ति दक्षिणं पादमग्रेऽतिहर देहलिं माधिष्ठा इत्यावसथे प्रविश्य प्राच्यामर्धे समादधीताग्नेरपरस्यामानडुहं चर्म लोहितं कृष्णाजिनं वा प्राचीनग्रीवमुत्तरलोमास्तृणाति तत्र प्राङ्मुखमुदङ्मुखं वा वधूमुपवेश्य पतिरिह गावः प्रजायध्वमिति पश्चान्निषीदेता ज्योतिषां दर्शनाद्वाचंयमावन्यतरानुपेतावासातामुदिते नक्षत्रे प्राचीमुदीचीं वा देवीः षडुर्वीरिति दिशमुपस्थाय मा हास्महि प्रजयेति चन्द्रं सप्तर्षय इति सप्तर्षीन्कृत्तिका नक्षत्राण्यरुन्धतीं च ध्रुवक्षितिरिति ध्रुवं च दृष्ट्वोपतिष्ठेयातां मनोज्ञं तया सह संभाष्याथाग्नेयः स्थालीपाकः प्रजा स्थालीमिति स्थालीमभिमृश्याग्नये जुष्टं निर्वपामीति स्थाल्यां तण्डुलान्निर्वाप्य वाचस्पतये पवस्वेति वध्वा चरुं श्रपयत्यभिघार्योदगुद्वास्य परिस्तीर्याग्निमुपसमाधाय हव्यवाहमिति स्विष्टकृता यजेत हुतशेषेण श्रोत्रियं ब्राह्मणं तर्पयित्वा तस्मा ऋषभं दत्त्वानृणो भवतीति विज्ञायते ५

अत ऊर्ध्वं पर्वणि स्थालीपाकेन यजेत नित्यं यवैर्व्रीहिभिर्वा हस्तेन सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातराहुती अग्नये स्वाहा प्रजापतये स्वाहेति सायमाहुती जुहुयादग्न्यन्तरसंसर्गेऽनुगते वा पत्नी कृच्छ्रं चरति श्रोत्रियागारान्मथित्वा वाग्निमादाय पुनरौपासनमादधीतो दक्याशुष्यादिसंसर्गे च विधानं यज्ञप्रायश्चित्ते वक्ष्यामो वियोगे पक्षस्योपावरोहेति समिधं यावत्कृष्णं तावत्तप्त्वा समारोप्य गच्छेदहरहस्तां प्रज्वाल्य हुत्वा तथान्यां समिधं निदधाति ६

पचने वावसथ्ये चरुमभिघार्य वैश्वदेवं यथा हेति मण्डलं प्रदक्षिणमुपलिप्य परिमृज्याग्नये स्वाहा सोमाय स्वाहेत्युत्तरदक्षिणयोर्मध्ये व्याहृतीर्विश्वेभ्यो देवेभ्यः स्वाहा धन्वन्तरये स्वाहा कुह्वै स्वाहानुमत्यै स्वाहा प्रजापतये स्वाहा द्यावापृथिवीभ्याँ स्वाहा व्याहृतीरिमा मे अग्न इति चरुं सेध्मं जुहुयादग्निहोत्राय स्वाहा वैश्वदेवयज्ञाय स्वाहा ब्रह्मयज्ञाय स्वाहा देवयज्ञाय स्वाहा भूतयज्ञाय स्वाहा मनुष्ययज्ञाय स्वाहा पितृयज्ञाय स्वधा नमः स्वाहा पञ्चमहायज्ञाय स्वाहा व्याहृतीः स्विष्टकृद्व्याहृतीरथ गृहदेवताभ्यो यथादिशं बलिहरणं ब्रह्मणे नमो ब्रह्मपुरुषेभ्यो नमो वास्तोष्पतये नम इति गृहमध्ये इन्द्राय नम

इन्द्रपुरुषेभ्यो नमो यमाय नमो यमपुरुषेभ्यो नमो वरुणाय नमो वरुणपुरुषेभ्यो नमः सोमाय नमः सोमपुरुषेभ्यो नमोऽग्नये नमो निर्ऋृतये नमो वायवे नम ईशानाय नम इति सर्वं दक्षिणे पितृभ्यो ज्ञातिवर्गपत्न्यन्तेभ्यः कृतोपवीती यावन्तोऽन्नार्थिनस्तावद्भ्यो निर्वपामीति निरूप्याकाशे विश्वेभ्यो देवेभ्यो नमो दिवाचरेभ्यो नमो भूतेभ्यो नमो नक्तंचरेभ्यो नम इत्युच्छीर्षके श्रिया इति पादतो भद्रकाल्या इति प्रतिद्वारं पूर्वान्तमुत्तरान्तं वा भुवंगयोर्मरुद्ध्य इति चुल्याः पक्षयोरग्नय इत्युदधान्यामद्भ्य इति पेषरायोरुभयोर्दृषद इत्युलूखलमुसलयो-र्वनस्पतिभ्य इति शूर्प ओषधीभ्य इति वास्तुपृष्ठे शुनां च पतितानां च श्वपचां पापरोगिणाम् । वयसां च क्रिमीणां च भूमावन्नं वपाम्यहमिति बलिशेषं निर्वपति पूर्ववत्प्रवाहणं कृत्वा भूतिः स्मेति भस्मालिप्यापो हि ष्ठेति प्रोक्ष्य य-त्ते अग्ने तेजस्तेनेत्यग्निमुद्वयमित्यादित्यं चोपतिष्ठेत नित्यं सायंप्रातः पत्नी वा पुष्टिकामा बलिं हरेद्वैश्वदेवकाले प्राप्तमतिथिं शक्त्या तर्पयेद्वैश्वानरो ह्येष भवति ७

तदेवं त्रिरात्रम् हविष्याशिनौ ब्रह्मचारिणौ धौतवलव्रतचारिणौ स्यातां ततो-ऽपरस्यां रात्रौ चतुर्थ्यामलंकृत्याग्निमुपसमाधाय नव प्रायश्चित्तानि जुहुयादग्ने वायवादित्यादित्य वायवग्नेऽग्ने वायवादित्य व्याहृतिर्भूर्भनमिति चतुर्भिर्वधू-मूर्ध्न्याज्येन जुहुयादग्निं प्रदक्षिणं कृत्वा प्राच्यामुदीच्यां वा तामुपवेश्याभिष्ट्वा पञ्चशाखेनेति योनिमभिमृश्य सं ना मन इत्युपगच्छेदिमामनुव्रतेत्यालिङ्गनं मधु हे मध्विदमिति मैथुनं कुर्वीत सुप्रजास्त्वायेत्युपगमनं सं ना मन इत्या-लिङ्गनमिमामनुव्रतेति वधूमुखेक्षणमित्येके ८

अथ त्रिरात्रमृतौ मलवद्वासाः स्नानाञ्जनादीनि वर्जयेदेकभक्ता स्यादखर्वेणा-ञ्जलिनायसेन वा पिबेन्न शुल्बेनाश्नाति न ग्रहानीक्षेत न दिवा स्वपे द्यथोक्तं व्रतं कुर्याच्चतुर्थ्यां दन्तधावनं गन्धामलकादिभिः स्नात्वा श्वेतवस्त्रानुलेपना स्त्रीशूद्राभ्यामनभिभाष्यापरमदृष्ट्वा भर्तारं पश्येद्यस्मादृतुस्नाता यादृशं पुरुषं पश्येत्तादृशी प्रजा भवति ऋतुरात्रयो द्वादश भवन्ति षोडशेति चाचक्षते प्रथमास्तिस्रो न गम्याः पुमान्समासु विषमासु स्त्री जायते शालिव्रीहि-यवानामन्नं पयसा प्राश्नीयाद्यस्मादाहारमूला धातवो भवन्ति लक्ष्मी-वटशुङ्गसहदेवीनामन्यतममभिषूय प्रक्षिपेद्दक्षिणे नासापुटे पुत्रकामाया वामे

स्त्रीकामाया न निष्ठीवनं कुर्याच्छोकरोषौ वर्जयति तत एनां यन्मे गर्भादिभिः प्रोक्षणैः प्रोक्ष्य विष्णुर्योनिं कल्पयत्विति तामुपगच्छेत् परिषिच्य वैश्वदेवं वैष्णवं मूलहोमाङ्गहोमौ हुत्वा विष्णुर्योनिं कल्पयत्वित्युपगमनमित्येके ९

अथ गृहीतगर्भालिङ्गानि शरीराटोपः सक्थिसीदनं द्वेषो भर्तुररुचिराहारो लालाप्रकोपः खरता वाचः स्फुरणं योनेरिति गर्भस्य दैवानुबन्धं ज्ञात्वापूर्यमाणपक्षे पुण्ये पुंनाम्नि शुभे नक्षत्र आज्येनाघारं हुत्वा तां मङ्गलयुक्तामुपवेश्य परिषिच्य धातादि पञ्च वारुणं मूलहोमं स्विष्टाकारं च हुत्वा वृषोऽसीति यवान्ददाति पयो दधि घृतं समं गृहीतं त्रिवृदित्यामनन्ति भूस्त्वयि ददामीत्येनां त्रिवृत्प्राशयेदाचान्ताया नाभेरूर्ध्वमाभिष्ट्वाहं पराञ्चेति दर्भेण त्रिरुन्मार्ज्य पुण्याहं कुर्याद्ब्राह्मणानन्नेन तर्पयति १०

अथ गर्भाधानादिचतुर्थे मासि पुंसवनं भवति शुक्लपक्षे शुद्धेऽहनि पूर्वाह्नेऽग्निमुपसमाधाय पूर्ववत्स्विष्टकारान्तं हुत्वा दक्षिणतोऽग्नेरपरस्यामासीनाया वृषोऽसीति सर्षपमिश्रितान्यवानाण्डौ स्थ इति दद्यादलाभे माषधान्यौ प्रतिनिधी स्यातामों भूर्भुवः सुवो राकामहं यास्ते राके सोम एव विश्वा उत त्वयेत्युदरमभिमृशेत्पूर्ववत्त्रिवृत्प्राशनादीनीति विज्ञायते ११

अथ गर्भाधानाद्यष्टमे मासि सीमन्तोन्नयनं कुर्यात्पक्षो दिनं च व्याख्यातं पूर्ववद्धातादि हुत्वा त्रेण्या शलल्या सह शलाटुग्लप्सं साग्रपत्रं कुशाङ्कुरं च दर्भेण त्रिराबध्यों भूर्भुवः सुवरिति गृहीत्वा तस्यास्तथासीनायाः स्रग्गन्धवत्याः सीमन्ते राकामहं यास्ते राक इति स्थापयित्वोन्नयनं कुर्यात्सोम एवेति पुरस्तादिव कुर्यात्पूर्ववत्त्रिवृत्प्राशनं पुण्याहान्तमित्येके १२

अथ विष्णुबलिमुत्तरप्रणिधावग्न्यादीन्देवानों भूः पुरुषमों भुवः पुरुषोँ सुवः पुरुषमों भूर्भुवः सुवः पुरुषं चेत्यावाह्य तथैव निर्वापाद्याघारं हुत्वाग्नेः पूर्वस्यां दर्भासनेषु केशवं नारायणं माधवं गोविन्दं विष्णुं मधुसूदनं त्रिविक्रमं वामनं श्रीधरं हृषीकेशं पद्मनाभं दामोदरमिति नामभिर्देवं विष्णुमावाह्यापोहिरण्यपवमानैः स्नापयित्वा तत्तन्नाम्नार्चयत्यतो देवाद्यैर्विष्णोर्नु कं तदस्य प्रियं प्र तद्विष्णुः परोमात्रया विचक्रमे त्रिर्देव इति द्वादशाहुतीराज्येन हुत्वा पायस-

माज्यसंयुक्तं हविर्देवं निवेद्य द्वादशनामभिरतो देवाद्यैर्विष्णोर्नुकाद्यैराज्यमिश्रं पायसं जुहुयादृग्यजुःसामाथर्वभिर्मन्त्रैर्वैष्णवैर्देवं संस्तूय नमोऽन्तैर्नामभिः प्रणमेत्पायसशेषं पत्नीं प्राशयति १३

अथ जातकर्म व्याख्यास्यामोऽरिष्टांगारं यथोक्तं कृत्वा वृषभोषितं तिल-सर्षपैर्धूपयित्वा तां प्रवेशयेत्तज्ज्ञाः स्त्रियस्तिस्रश्चतस्रो वा परिगृह्यैनां संवाह-येयुः कुक्षौ शिथिले हृदयबन्धं मुक्त्वा सशूले जघने प्रजायत इत्यवधारयेत् गर्भसङ्गेविशल्यां सुवर्चलां वा योनौ निष्पीड्य निदध्याद्धूपयेत्पिण्डी-तकेनाहिकृत्त्या वा योनिं हिरण्यपुष्प्या मूलं हस्तपादयोरादधाति यदा नासाग्रं दृश्यते तदास्य ग्रहस्थितिं ज्ञात्वा शुभाशुभं परीक्षेत यस्मात्तद्गुणान्वितं वर्धयेज्जायमाने मातुरुदकुम्भं दक्षिणतः शिरोभागे स्थापयित्वा ततस्तूर्यन्तीं पादतो निधाय यथैव सोमः पवत इत्युदरमभिमृशेत्कुमारे जाते द्वारवामेऽश्मनि परशुं तस्मिन्हिरण्यं स्थापयित्वाश्मा भवेत्यधरमुत्तरं करोति तस्योपर्यङ्गाद-ङ्गादिति कुमारमेकया स्त्रिया धारयेत्तमद्भिरभ्युक्ष्य तिलदेऽवपद्यस्वेति सतिलमक्षतं मूर्ध्न्याधायौपासनमरण्यां निर्हरति १४

चुल्ल्यां कपालमारोप्य वृषभशकृत्पिण्डैर्जातकाग्निं साधयेत्तमेनमुत्तपनीयमि-त्युदाहरन्ति तेनैव धूपं दद्याद्द्वारस्य दक्षिणतो निधायाङ्गारवर्णे परिस्तीर्य कणसर्षपैर्हस्तेन शण्डे रथोऽयः शण्डो मर्क आलिखन्विलिखन्नर्यम्ण आन्त्री-मुखः केशिनीरेतान्घ्नतैतान्पूर्व एषां मिश्रवाससो नक्तंचारिणो निशीथचारिणी तासां त्वमयं ते योनिर्मम नामेति व्याहृतीश्च हुत्वा प्रक्षाल्य पाणिमवनीमालभ्य यत्ते सुसीम इति मेधायै घृतं करोति वचा पथ्या हिरण्यं मधु सर्पिरिति मेधाजननानि भवन्ति ब्राह्मीघृतं पयो वचाधिकं चामनन्ति सुवर्णे दर्भेण बद्ध्वान्तर्धाय घृतं भूर्ऋच इति प्राङ्मुखं प्राशयति नित्यं सायंप्रातरेवमहरहर्हुत्वा मेधायै पाययेदुष्णशीताभिरद्भिरेनं स्नापयित्वा क्षेत्रियै त्वेति नीत्वा या दैवीरिति मातुरङ्के स्थापयित्वा तासां त्वेति स्तनौ प्रक्षाल्यायं कुमार इति दक्षिणादि पाययेदापो हविष्ष्विति न्यस्तमुदकुम्भं शोधयित्वा नित्यं सायं-प्रातरादधाति तथैव घृतप्राशनान्तं कर्म कृत्वा स्नात्वौपासननिर्हरणादि करो-तीत्येके तृतीये पञ्चमे सप्तमे नवमे चाह्नि शयनादिकं शोधयतीति १५

अथ वास्तुसवनं व्याख्यास्यामो नवे वास्तुन्युषितेऽपि सूतकप्रेतकयोर्वा-पयित्वा मृन्मयानि भाण्डानि पुराणानि त्यक्त्वा नवानि परिगृह्यान्यान्परि-च्छदान्यथोक्तं शोधयित्वा भूमियज्ञेनेष्ट्वा निवसेद्यस्माद्वास्तुसवनेन शुद्धिव-स्तूनामाधारो वास्तुसवनस्य वास्तोष्पते प्रतिजानीहि वास्तोष्पते शग्मयेति द्वाभ्यां यजेत भूमियज्ञाय स्वाहा यज्ञदैवतं प्रसोदर्यै स्वाहेति द्वौ भूमियज्ञदैवत्यौ मेदिनी देवी देवी हिरण्यगर्भिणी समुद्रवती सावित्री शृङ्गे शृङ्गे वायुपरी जलशयनीति पञ्च भूमिदैवत्या व्याहृतीर्हुत्वा पुण्याहमहमग्ने अग्निं गृह्णामीत्य-ग्निष्ठाद्दर्भपूलेनाग्निं गृहीत्वा प्रथमादैन्द्राद्ध्रुवंगादारभ्य वास्तुनः कुड्यमूला-द्बहिरन्तश्च वामं परीत्या ब्रह्मस्थानात्पर्यग्निं कारयित्वापरद्वारेण विसृजेत्तथै-वाणोरणीयानिति पात्रेणान्वपः स्रावयित्वा शिष्टाभिः सर्वत्र प्रोक्षयत्येवं वारु-णाद्ध्रुवंगाद्वा याम्यात्सौम्यादारभ्य पर्यग्न्याधावस्रुती स्याताम् १६

ये ते शतं वरुणोदुत्तममयाश्चाग्न आपः सृजन्तु स्निग्धानीति चत्वारो वरुणदैवत्या विश्वे देवस्य विश्वे अद्येति द्वौ वैश्वदेवावतो देवा इदं विष्णुस्त्रीणि पदा विष्णोः कर्माणि तद्विष्णोः परमं तद्विप्रास इति षड्वैष्णवा द्वावाद्यावित्येके रुद्रमन्यं त्र्यम्बकमिति द्वौ रुद्रदैवत्यौ ब्रह्म जज्ञानं हिरण्यगर्भ इति द्वौ ब्रह्मदैवत्यौ मिश्रवासस एतान्घ्नतैतानिति द्वौ कौबेरौ युवमेतान्यग्नीषोमावान्यं दिव इति त्रयोऽग्नीषोमीया बृहस्पतिर्देवानां बृहस्पतिः सोमं बृहस्पते अति यदुपया-मगृहीत इति चत्वारो बार्हस्पत्याः त्रातारमिन्द्रं महाँ इन्द्रो य ओजसा महाँ इन्द्रो नृवद्ध्रुवस्त्वमिन्द्रेन्द सानसिं प्र ससाहिषेऽस्माकमिन्द्रो भूतस्येन्द्रो द्यौरिन्द्रं प्रणवन्तमिन्द्रो वृत्रमिन्द्रो बभूवेन्द्रोऽस्मानिति त्रयोदशैन्द्राः यमो दाधार नमस्ते निर्ऋतय इति द्वौ याम्यौ मित्रस्य चर्षणीधृतो मित्रो जनान्प्र स मित्रेति त्रयो मैत्राः भूमियज्ञदैवत्यादयो व्याहृत्यन्ता इज्यन्ते तस्माद् द्व्युत्तरं शतमाहुतयो वास्तुसवनस्यान्तहोममिति विज्ञायते १७

अथ दशमे द्वादशे वाह्नि भवत्युत्थानं तथैव जातकाग्निं समारोप्य यावन्त्यस्य कर्माणि तानि सर्वाणि मथित्वास्मिन्नेव कुर्याद्विसृज्य लौकिकाग्नावित्येके स्नात्वागारं यथोक्तं शोधयेत् क्षुरकर्मादिना शुद्धो भूमियज्ञमसगोत्रेण याज-येदित्येके तथा हरणमौपासनस्य धातादि पञ्च वारुणं मूलहोमो भोजनं ब्राह्मणानाम् १८

अथ नामकरणमा चत्वारिंशद्दिवसादा पञ्चाशद्दिनाद्वा पाके नैनां नियुञ्जीत तत्रैव शुभे पुंनाम्नि नक्षत्रे परिस्तीर्याग्निं तथासीनस्याक्षतं कुमारस्य मूर्ध्नि विन्यस्य पञ्च वारुणं प्राजापत्यं स्विष्टाकारं च हुत्वास्य पूर्ववत्त्रिवृत्प्राशनं दीर्घान्तमभिनिष्ठान्तं वा घोषवदाद्यन्तरं द्विप्रतिष्ठितान्तस्थं मृष्टाक्षरपदस्वरं द्विवर्णं चतुर्वर्णं वा नाम शस्यते यथोक्तं मम नाम प्रथममिति गोत्रनामयुक्तं तदर्हं नाम कुर्यात् द्वे नामनी तु नक्षत्रनाम रहस्यमग्न्याधानात्परमाहिताग्न्या-दिस्वकर्मान्तं प्रकाशं नाम भवेदक्षतोदकपुष्पान्नरसगन्धसमैः पाणिभ्यां दक्षि-णेतराभ्यां कुमारस्य शाङ्करिरिवेति कन्याया नन्देवानन्ददायिनीति वदन्पादत आरभ्य क्रमेण देहाङ्गसन्धौ शिरसि च निक्षिपेत्पुण्याहम् १९

अथ वर्षवर्धनं दारकस्य जन्मनक्षत्रं यद्दैवत्यं सास्य देवता प्रधाना भवति तस्मादाघारं हुत्वा तदधिदेवता नक्षत्राणि च जुहुयादग्नये कृत्तिकाभ्यः प्रजापतये रोहिण्यै सोमाय मृगशीर्षाय रुद्रायार्द्राया अदित्यै पुनर्वसूभ्यां बृहस्पतये तिष्याय सर्पेभ्य आश्रेषाभ्यः पितृभ्यो मघाभ्योऽर्यम्णे फल्गुनीभ्यां भगाय फल्गुनीभ्यां सवित्रे हस्ताय त्वष्ट्रे चित्रायै वायवे निष्ट्याया इन्द्राग्निभ्यां विशाखाभ्यां मित्रायानूराधेभ्य इन्द्राय ज्येष्ठायै प्रजापतये मूलायाद्भ्योऽषाढाभ्यो विश्वेभ्यो देवेभ्योऽषाढाभ्यो ब्रह्मणेऽभिजिते विष्णवे श्रोणायै वसुभ्यः श्रविष्ठाभ्यो वरुणाय शतभिषजेऽजायैकपदे प्रोष्ठपदेभ्योऽहये बुध्नियाय प्रोष्ठपदेभ्यः पूष्णे रेवत्या अश्विभ्यामश्वयुग्भ्यां यमायापभरणीभ्यः स्वाहेति व्याहृतिः २०

ऋषभं वैरवणमग्नीषोमीयं वैष्णवं धातादि मूलहोमं यद्देवादि कूश्माण्डहोममा सावित्रव्रतबन्धाज्जुहोत्युपनीतस्य च तत्तद्व्रतसूक्तानि वेदस्नातकस्य यदह्नि विवाहो भवति मासिके वार्षिके चाह्नि तस्मिन्यत्स्त्रिय आहुः पारंपर्यागतं शिष्टाचारं तत्तत्करोति तथाग्निष्टोमादियज्ञानामाधाननक्षत्रे वर्षान्ते करोति तदेवं वर्तमानस्य यद्यष्टमासाधिकाशीतिवर्षाणि रविवर्षेणाधिगान्यधिगच्छेयुः स दृष्टसहस्रचन्द्रो भवति तमेनं क्रियायुक्तं पुण्यकृत्तमं ब्रह्मशरीरमित्याचक्षते तस्मान्नान्दीमुखं कृत्वा शुक्लपक्षे शुद्धेऽहनि पूर्वाह्णे पुर्ववद्धुत्वा तथैव कपिल इवेति वृद्धस्य वृद्धाया वा वदन्नक्षतोदकादीन्मूर्ध्यादध्यात्सर्वदेवताः सहस्रं च ब्राह्मणानामर्चनबलिभ्यामन्नेन तर्पयेत् ग्रामं प्रदक्षिणीकृत्य सायं स्थण्डिले

सहस्त्रं पिष्टेन सोमरूपाणि करोति राजतेन पात्रेण कुमुदपत्रैः सोमस्यार्चनं तस्य दक्षिणे रोहिणीगणं वामे चानावृष्टिगणमर्चयति सहस्रशः सुवर्णरजतमुक्तादीनि शक्त्या वस्त्रतण्डुलापूपानि च दद्यादश्वमेधफलावाप्त्यै वर्षवर्धनमिति विज्ञायते २१

अथ षष्ठे मास्यन्नप्राशनं शुक्लपक्षे दिने शुद्धे तत्राज्येनाघारो धातादि मूलहोमं पूर्ववत्त्रिवृत्प्राशनं प्राङ्मुखं मङ्गलयुक्तं कुमारं विष्टरमारोप्य भूरपामिति पायसमन्नं प्राशयेद्योगे योगे तवस्तरमित्याचमनं ददात्यथ प्रवासागमनं पुष्पापूपदक्षिणादिसंभारान्कुमारं च गृहीत्वा कनिक्रदादिमालयं गुहस्य गच्छेत्प्रदक्षिणमर्चनं प्रणामो गुहस्य तच्छिष्टेन पुष्पादिना गुहस्य शेषमिति तन्नामोहित्वा बालमलंकृत्य शान्तिं वाचयित्वा निवर्तयेत्प्रोक्ष्यागतं सोमस्य त्वेत्यङ्कमारोप्यायुषे वर्चस इति पिता मूर्ध्नि जिघ्रति वृषभं नमस्कृत्य दक्षिणपाणेः साङ्गुष्ठमङ्गुलीर्गृहीत्वा कनिष्ठाद्यग्निरायुष्मानित्यादिकैर्विसर्जनमायुष्टे विश्वतः प्रतिष्ठ वायाविति दक्षिणादिकर्णयोर्जपनमुदङ्मुखं ब्रह्मादिदेवानां गुरूणां च प्रणामं कारयेत् पादोदकं दत्त्वा पूर्ववत्सगुडभक्ष्यस्यान्नस्य सपिण्डैः श्रोत्रियैः सह भोजनं स्वस्तिवाचनं पिण्डवर्धनमिति विज्ञायते २२

अथ वर्षे प्रथमे तृतीये वा चौडकमुत्तरायणे पक्ष आपूर्यमाणे पुंनाम्न्याघारो मूलहोमान्ते मङ्गलयुक्तमग्नेरपरस्यां कुमारमुपवेश्योत्तरे साक्षतं गोशकृच्छरावे गृहीत्वा माता ब्रह्मचारी वा धारयेच्छिवो नामासीति ग्रहणं क्षुरस्य शिवा नो भवथेति शिलायां तीक्ष्णीकरणं गोदानमुनक्त्विति गवादिदक्षिणाकरणमाप उन्दन्त्वित्यपां सेकं शिरस्योषधे त्रायस्वैनमिति साक्षताङ्कुरदर्भौ प्रागुत्तराग्रौ मस्तके स्थापयेत्स्वधिते मैनँ हिंसीरिति क्षुरं निधायोर्ध्वाग्रमोषधीरिति येनावपदिति येन पूषेत्यसावायुषेति पूर्वादिप्रदक्षिणं दर्भं सरोमाणं छित्त्वा ज्योक् च सूर्यं दृश इति चूडां विभजेदृषिक्रमेण स्वस्यैकार्षद्व्यार्षत्र्यार्षपञ्चार्षसप्तार्षाच्चूडा विभजेदनुदितस्यैकामिदमहममुष्येत्युदुम्बरदर्भयोर्मूले गोष्ठे वाच्छादयेत्स्नातं वस्त्रादिनालंकृत्योपवेश्य दक्षिणे पञ्च प्रायश्चित्तादि धातादि पञ्च वारुणं मूलहोमं हुत्वा पुण्याहं कृत्वा नापितायान्नदानं गवादिदक्षिणां गुरवे सुराणां पूजनं तर्पणं ब्राह्मणानामन्नेन करोतीत्यष्टादश संस्काराः शारीराः २३

तृतीयः प्रश्नः समाप्तः

अथ स्थालीपाकमग्नेः पश्चिमतस्तिष्ठन्प्राङ्मुखः प्राणायामं धारयत्येकविंशती-ध्मान्संनह्य दर्भान् दर्वीस्रुक्स्रुवप्रणीताज्यस्थालीचरुस्थालीरग्नेरुत्तरेऽवाङ्मुखं संन्यस्योद्धरेत्यग्निमुद्धार्येन्धनैरिन्धयेद्वेदिं परिमृज्य प्रागाद्युत्तरान्तं दर्भानास्ती-र्येध्मादीनग्निकुण्डं च प्रोक्षयति प्रणीतामासाद्य पवित्रं निधायाद्भिः पूरयति पृथिव्यापो ग्रहीष्यामीति पूर्ववदुत्पूयोत्तरे निधायाज्यस्थालीं गृहीत्वा पूर्वव-दाज्यं संस्कृत्य चतुर्थीवदाग्नेयं चरुं स्थाल्यां पक्त्वाग्निं परिसमूह्य देवस्य त्वेति दर्वीमादाय प्रक्षाल्योत्तराग्रं निधाय परिषिच्येध्मान् गृहीत्वाज्यमनक्त्येकम-नूयाजमपोह्य त्रीन्परिधीनाघारौ च पूर्ववन्निधाय शेषान्पञ्चदशेध्मान्प्राणाया-मेनाग्नौ क्षिपत्याज्येनाघारौ संस्राव्य हुत्वाग्नये सोमायेति जुहोति दर्व्या चरुं गृहीत्वाभिघार्यावदानं गृहीत्वाग्नये स्वाहाग्नये स्विष्टकृते स्वाहेति हुत्वात्रा-नूयाजमग्नौ प्रक्षिप्य प्राजापत्यं जयान्व्याहृतीश्च पाहि नो अग्न एनसे पाहि नो विश्ववेदसे यज्ञं पाहि विभावसो सर्वं पाहि शतक्रतो कामावकीर्णः कामाभि-द्रुग्धः सं मा समुद्रादिति स्विष्टाकारं च जुहोति परिषिच्य प्रणिधिं चालयति भस्मालिप्यात्मानं प्रोक्ष्याग्निं वैश्वानरसूक्तेनोपस्थाय प्राणायामेन दर्भांश्चतुर्दि-शमुत्थाप्याद्भिः प्रोक्ष्य द्वावपोह्यान्यानाप्यायन्तामिति जुहोति द्वावपि गृही-त्वाद्भिः प्रोक्ष्याग्नये स्वाहा सोमाय स्वाहेति हुत्वा त्रीन्परिधीनाघारसमिधौ च जुहुयाद्धार्यं कर्तुमशक्तः समिधि स्वात्मन्यरण्यां वा समारोपयेदिति विज्ञायते १

अथ सति व्रीहिनीवारश्यामाकयवानामाग्रयणे देवताभ्यः स्थाल्यां चरुं पक्त्वा नवेन तण्डुलेन पक्केनापि जुहोत्यग्नये स्वाहेन्द्राग्निभ्याँ स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा सोमाय स्वाहा द्यावापृथिवीभ्याँ स्वाहाग्नये स्विष्टकृते स्वाहेति शतायुधाय ये चत्वार इति पितृभ्यः सोपवीती ग्रीष्मो हेमन्त इदुवत्सराय भद्रान्नः श्रेय इत्यायुष्मा इत्यादिभिस्त्रिभिर्व्याहृत्यन्तं हुत्वा दक्षिणे धरण्यां पितृभ्यो बलिदानमाप्यायन्तामिति तण्डुलैरास्यमभिपूर्याचम्य शिष्टैरन्तर्वंशे परमेष्ठ्यसीति विकिरति तदेवं शालीनयायावरादिवृत्त्यन्तरमाश्रित्य गार्हस्थ्यं धर्ममनुतिष्ठतीति विज्ञायते २

अथाष्टका माघप्रौष्ठपदयोरपरपक्षेऽष्टम्यामष्टकां कुर्यात् सप्तम्यां नवम्यां त्रयोदश्यां वा सायं पूर्वेद्युः स्वाध्यायाचारवतः शुचीनसगोत्रान्ब्राह्मणाना-

हूयाभिपूज्य युग्मान् द्व्यवरान्विश्वेदेवार्थे त्र्यवरानयुग्मान्पित्रर्थे द्वयोरेकैकं वा निमन्त्रयेदपरेद्युरपराह्णे देशे शुचावाधायौपासनाग्निं वैश्वदेवाघारं हुत्वा स्थालीं संक्षाल्य विश्वेभ्यो देवेभ्यो जुष्टमिति स्थाल्यां तण्डुलान्निर्वाप्य सतिलं चरुमपूपान्यपि पचेदग्नेर्दक्षिणस्यां नान्दीमुखवन्मण्डलान्युपलिप्यास्त्वास-नमित्यासनानि सदर्भतिलेष्वासनेष्वासयित्वा वस्त्राद्यैरलंकृत्य ब्राह्मणान्प्र-त्यङ्मुखान्विश्वेदेवानुदगन्तं पुष्पाद्यैः पितृनुदङ्मुखान्प्रागन्तं गन्धाद्यैः पूजयति स्वधा नम इत्युक्त्वा तेषां करे तिलोदकं दत्त्वा प्राप्नोतु भवानिति ब्रूयात् ओं तथा प्राप्नवानीति प्रतिब्रूयुरग्नौ होमं करिष्यामीत्युक्ते कुरुष्वेति तैरनुज्ञा-तोऽग्निं परिषिच्य विश्वे देवस्य विश्वे अद्य प्रजापते न त्वत्सुभूः स्वयंभूः सं ते पयाँसि सोम यास्त इति रौद्रं ब्राह्मं वैष्णवं व्यहृत्यन्तं देवानां सपि-ण्डीकरणवत्पितृणामप्याज्येन हुत्वा हव्यं कव्यमित्यभिघार्य पक्वेनापूपमिश्रेण जुहोति गामुपाकृत्य पशुबन्धवत्संज्ञप्त्वोत्विद्य वपामुद्धृत्य पक्वया तया वह वपामिति होमं चामनन्ति ३

दक्षिणपश्चिमेऽग्नेरेकोद्दिष्टवन्निर्वापस्थानं तद्दक्षिणस्यामवटं चोपकल्प्योद्धन्य-मानमिति दर्भैस्त्रिभिर्दक्षिणान्तं सकृदुल्लिखेत् गायत्र्या प्रोक्ष्य स्थाने निहन्मि सर्वमिति दक्षिणाग्रानयुग्मानुदुम्बरपत्रदर्भांस्तिलैरास्तृणाति पोषाय त्वेति सकूर्चाक्षतं पात्रमुदकेनापूर्य पितरो मे प्रसीदन्त्विति प्रणम्या म आगन्त्विति पितृनावाह्य दक्षिणाभिमुखोऽभ्यर्चयत्या मा वाजस्येति पात्रं प्रमार्ज्याग्निरिन्द्रेति चरुं निर्वपति दर्भेण तमष्टधा विभज्य साज्यं पिण्डान्कृत्वा सव्योत्तरपाणि-भ्यामयमोदन इति पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो ज्ञातिवर्गेभ्यः पितृ-पत्नीभ्यः पितामहपत्नीभ्यः प्रपितामहपत्नीभ्यो ज्ञातिवर्गपत्नीभ्यः पिण्डं निर्व-पामीति निर्वपत्येवं मातुः पित्रादिभ्यः पिण्डदानं केचिद्वदन्त्यञ्जनदन्तधा-वनदधिसक्तुमधुव्यञ्जनेक्षुबदरीफलान्यर्पयेच्छूर्पेणाछाद्योपरि पुष्पतिलाक्षत-दर्भान्न्यसेदूर्जं वहन्तीरिति परितः स्राव्योदकं दत्त्वा मूर्तीनामिति तत्पात्रोद-केनावटं पूरयति चरुशेषेणान्यैश्चान्नाद्यपूपोपदंशैः पूर्ववद्ब्राह्मणान्यथातृप्ति भो-जयेत्तेषु तृप्तेषु पितरस्तृप्ता भवन्ति वाग्यतान्भुञ्जानानृचः पैतृकाः श्रावयेदुच्छिष्टं संशोध्य तत्रान्नं विकिरेदाचान्तेभ्यो मुखवासं निवेद्य रजतं तिलं सुवर्णं वा दक्षिणां पशुकांस्ययानदासशयनासनादीनि परिच्छदांश्च यथाशक्ति ददा-त्यन्नशेषं तेभ्यो दर्शयित्वा यथोक्तं करणीयमाचमनोच्छिष्टशोधनोत्थापन-

विसर्जनादन्यद्विश्वेदेवपूर्वमाचरेदन्यथा रक्षांस्यपहरेयुर्नमो वः पितरः इति पितृनभिवन्द्य पिण्डानुद्वासयेदस्तु तृप्तिरा मा वाजस्येति भुक्तवतस्तान्नमस्कृत्योत्तिष्ठतेत्युत्थाप्य परेत पितर इति प्रवासयति पितृभुक्तं पितृजीर्णमित्यन्तहोमान्तेऽग्निमालये प्रतिष्ठाप्य पञ्च महायज्ञान्करोति दरिद्रो ममेयमष्टकेति कक्षमग्निना दाहयेच्छ्रोत्रियाय पानीयं वा दद्यादिति विज्ञायते ४

अथातोऽमावास्यायां पिण्डपितृयज्ञं यजेत पूर्वेऽहन्यपां मेध्यमिति समूलं बर्हिराहृत्य सकृदेवाच्छिद्य सकृदाच्छिन्नबर्हिषः समाहरत्युपोष्य श्वो भूतेऽपराह्णेऽग्निं प्रणम्य प्राचीनावीत्यध्वर्युर्दक्षिणाग्नेर्दक्षिणपश्चिमस्यां चरुस्थाल्याज्यस्थालीस्रुक्स्रुवेध्ममेक्षणेडापात्रस्फ्यशूर्पोलूखलमुसलादिपात्राण्येकैकशः प्रयुञ्जीत अपहता असुरा इति वेदिं परिमृज्यायात पितर इति दक्षिणाग्निं सकृदाच्छिन्नबर्हिषा परिस्तृणाति पितृभ्यो जुष्टं निर्वपामीति स्थालीं सपवित्रां व्रीहिभिरापूर्य तेनैवाभिमृश्य तथैव ताञ्छूर्पे निरुप्याभिमृशेदन्वाहार्यस्य दक्षिणस्यां पश्चिमस्यां वोत्तरपश्चिमग्रीवं कृष्णाजिनमास्तीर्योर्ध्वमुलूखलं संस्थाप्य व्रीहीन्प्रक्षिप्य पत्न्यवघातं कृत्वा विवेचनवर्जं परावापं सकृत्करोत्यध्वर्युः स्थाल्यां तण्डुलानद्भिः सकृत्परिप्लाव्यान्वाहार्ये जीवतण्डुलमस्विन्नं चरुं श्रपयेद्दक्षिणतः स्थालीं मेक्षणं च दर्भेष्वासाद्यानुत्पूतसर्पिषा पक्वमभिघार्य शुन्धन्तां पितर इति वेद्यां परितः कूर्चेनापः स्रावयेत्सोपवीती दक्षिणाग्नाविध्मान्हुत्वा मेक्षणेन चरुमभिघार्यावदायाग्नये कव्यवाहनाय स्वधा नमः स्वाहा सोमाय पितृमते स्वधा नमः स्वाहा यमाय चाङ्गिरस्पतये स्वधा नमः स्वाहेति जुहोति तदग्नेः सधूममेकमुल्मुकमुद्धृत्यापयन्त्वसुरा इति पश्चिमतो वेद्यां संन्यस्य निर्धूमं तं विसृजेत् ५

यजमानः प्राचीनावीती दक्षिणपूर्वे स्फ्येनैवोल्लेखनं कृत्वा तत्राद्भिः प्रोक्ष्य स्फ्यं निधाय तस्मिन्नूर्म्योदकान्त इत्युदकेन तर्पयित्वा पश्चिमे सकृदाच्छिन्नबर्हिषि पितृन्पितामहान्प्रपितामहानभ्यर्च्यावाचीनपाणिरेतत्ते ततासौ ये च त्वामन्विति प्रत्येकं दक्षिणान्तान्पिण्डान्दद्यादाङ्क्ष्व पितरसावाङ्क्ष्व पितामहासावाङ्क्ष्व प्रपितामहासावित्यभ्यञ्जनमेतानि वः पितर इति कशिपूपबर्हणवासोऽञ्जनं चार्पयेत्पूर्ववदूर्जं वहन्तीरिति पिण्डं परिषिच्य त्रिरुदकाञ्जलिं दत्त्वा तथैव पितृनभिवन्द्य प्रवासयति प्रजापते न त्वदिति गार्हपत्यं

गत्वा यदन्तरिक्षमित्युपतिष्ठेतानाहिताग्निश्चैवमौपासनाग्नौ चरुं श्रपयित्वा जुहुयादौपासनस्य संस्काराभावाद्यदन्तरिक्षमिति मन्त्रेण गार्हपत्यशब्दं विनैवोपस्थानं कुर्यादपां त्वौषधीनामिति मध्यमं पिण्डं दत्त्वाधत्त पितर इति पत्नीं प्राशयेदेषा पुमांसं जनयति द्विपिता चेद्यजमानस्तथैव पिण्डं दत्त्वा यन्मे मातेत्येकस्मिन्पिण्डे तौ द्वावपि ध्यात्वात्र पितरो यथाभागमिति प्रणमेद्ये समाना इति सकृदाच्छिन्नमग्नौ हुत्वा पात्राणि द्वन्द्वमाहरतीति विज्ञायते ६

अथ श्राद्धं मासि मास्यपरपक्षेऽन्यतमेऽहन्यजन्मर्क्षे ब्राह्मणनिमन्त्रणादि सर्वमष्टकावत्तथाज्यचरू हुत्वान्नं पिण्डार्थं पात्रे समवदाय ब्राह्मणान्भोजयित्वा नमो वः पितरो रसायेति पिण्डं प्रथमं पितृभ्यो नमो वः पितरः सोम्यास इति द्वितीयतृतीयौ पितामहप्रपितामहाभ्यां पितृभ्यस्तत्पत्नीभ्यः पिण्डानर्पयतीति विशेषः पितरि जीवति पिण्डा न निर्वाप्यास्तमेवान्नादिना यथेष्टं तर्पयेद्यस्मिन्दिने ज्ञातिर्मृतस्तस्मिन्मासि मासि प्रेतायैकं पिण्डं निरुप्यैकं भोजयेदा संवत्सरान्मासिश्राद्धमष्टकां च न कुर्यादा सपिण्डीकरणादित्येके पितृपूजा प्रेतपूजा भवेत्पितृन्प्रेतं चोद्दिश्य पूजनं सर्वं श्राद्धं भवतीति पिण्डपितृयज्ञः कर्त्तव्य एवेति विज्ञायते ७

अथ चैत्री चैत्र्यां पौर्णमास्यां गृहं शोधयित्वालंकृत्य दम्पती नववस्त्रोत्तरीयपुष्पाद्यैरलंकुर्यातामाघारे कृते देवताभ्यः स्थाल्यां चरुं श्रपयित्वाज्येन ग्रीष्मो हेमन्त ऊर्णं मे पूर्यतां श्रिये जातो वैष्णवं च हुत्वा साज्येन चरुणा मधुश्च स्वाहा माधवश्च स्वाहा शुक्रश्च स्वाहा शुचिश्च स्वाहा नभश्च स्वाहा नभस्यश्च स्वाहेषश्च स्वाहोर्जश्च स्वाहा सहश्च स्वाहा सहस्यश्च स्वाहा तपश्च स्वाहा तपस्यश्च स्वाहर्तुभ्यः स्वाहर्तुदेवताभ्यः स्वाहौषधीभ्यः स्वाहौषधीशाय स्वाहा श्रियै स्वाहा श्रीपतये स्वाहा विष्णवे स्वाहेति जुहोत्यपरेणाग्निं देवीं श्रियं देवं श्रीपतिं च प्राङ्मुखमभ्यर्च्य हविर्निवेदयति चैत्र्याणि पक्वान्यन्नानि ब्राह्मणानन्नसूक्तेन भोजयित्वा सपिण्डैर्युक्तो भुञ्जीत ८

अथाश्वयुजी आश्वयुज्यां पौर्णमास्यां गोष्ठेऽग्निं समाधायाघारं जुहुयादग्नेः प्राच्यां भवं देवमावाह्याभ्यर्च्य तृणानि संभृत्य गाः स्थापयति भवायेति स्थाल्यां निर्वापश्रपणं कृत्वाग्नौ परिषेकं कुर्यात् भवाय शर्वायेशानाय पशुपतय उग्राय

रुद्राय भीमाय महादेवाय स्वाहेति रुद्रमन्यं त्र्यम्बकमित्याज्यहोमान्ते मेन्नणेन चरुमवदायाभिघार्यावदानं संगृह्य पूर्ववज्जुहुयादर्कपत्रैर्देवं चरुं निवेद्याज्य-शेषेण तृणान्यभ्युन्त्य गोभ्यः प्रदाय प्रदन्निणनमस्कारौ करोतीति विज्ञायते ९

अथाग्नौ नित्यहोमान्ते विष्णोर्नित्यार्चा सर्वदेवार्चना भवति अग्निर्वै देवा-नामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवता इति ब्राह्मणं तस्माद्गृहे परमं विष्णुं प्रतिष्ठाप्य सायंप्रातर्होमान्तेऽर्चयति षडङ्गुलादहीनं तद्रूपं कल्पयित्वा पूर्वपन्ने पुराये नन्नत्रे प्रतिष्ठां कुर्यात्तस्मात्पूर्वं तृतीयेऽहन्यौपासनाग्निकुराडं कृत्वा पूर्ववत्प्रोन्नणोल्लेखनादि कर्म कुर्याद्द्वितीयस्यां वेद्यां षट्त्रिंशदङ्गुलप्र-माणैर्दर्भैः कूर्चेन वा परिस्तीर्य परिधीनूर्ध्वसमिधौ निधायोर्ध्ववेद्यां यथा-दिशमिन्द्रादिदिग्देवान्दन्निणे ब्रह्माणमुत्तरे सोमं च पुष्पाद्यैरभ्यर्च्य तथैवाघारं जुहोति दद्धः स्वाहा हनूभ्याँ स्वाहेत्यङ्गहोममतोदेवादींश्च हुत्वा पुरुषसूक्तं जपन्सुवर्णेनान्द्युन्मेषणं करोति नद्यां तटाके जलपूर्णपात्रे वा ये ते शता-द्यैर्वस्त्राणि कुशांश्चास्तीर्य विष्णुसूक्तेन देवं प्राक्शिरः शाययित्वाधिवासयति द्वितीयदिवसे स्नात्वा रात्रौ पूर्ववदाघारं हुत्वाष्टौ कलशानाहृत्य पञ्चगव्यघृत-दधिन्नीरान्नतोदकफलोदककुशोदकरत्नोदकैः पूरयित्वा देवमभ्यर्च्य वसोः पवित्रमग्न आयाहीषे त्वोर्जे त्वा शं नो देवीश्चत्वारि शृङ्गा सोमो धेनुं चत्वारि वागिदं विष्णुरिति कलशैः स्नापयित्वापोहिररायपवमानैर्गन्धतोयैश्च स्नाप-यत्यग्नेरुत्तरस्यां व्रीहिभिर्वेदिं कृत्वा विष्टरं न्यस्य वस्त्रारायास्तीर्य देवमारोप्य वस्त्राद्यैरलंकृत्यार्चयति पुरायाहं कृत्वा स्वस्तिसूक्तेन तामभिमृश्य स्वस्तिदा विशस्पतिरिति प्रतिसरां बद्ध्वा पूर्ववद्देवं शाययीत १०

कालविहीनं कुम्भमुत्पूतैराधावैरापूर्य देवस्य पार्श्वे निधाय प्रणवेनाभिमृश्य कूर्चान्नतसुवर्णरत्नानि प्रन्निपेन्निष्कलं देवं हृदये तथाधावे रुक्माभं रक्ता-स्यनेत्रपाणिपादं श्रीवत्साङ्कं चतुर्भुजं पीताम्बरधरं शङ्खचक्रधरं सौम्यं सकलं ध्यात्वा प्रणमेदग्निं परिषिच्य हौत्रं प्रशंस्य दन्निणप्रणिध्यामों भूः पुरुषमों भुवः पुरुषमोँ सुवः पुरुषमों भूर्भुवः सुवः पुरुषं नारायणं विष्णुं पुरुषं सत्य-मच्युतमनिरुद्धं श्रियं महीमिति नाम्नावाह्य निर्वापं कृत्वाज्येन विष्णु-सूक्तपुरुषसूक्ताभ्यामतोदेवादीञ्छ्रिये जातो मेदिनी देवीति चतुरावर्त्य हुत्वा नाम्ना साज्यं चरुं जुहुयात्प्रभाते स्नात्वा प्रणवेन देवमुत्थाप्य शकुनसूक्तं जप-

न्सह कुम्भेन देवमानीय गृहे वायव्यां देवायतनेऽग्निशालायां वार्चापीठे रत्नं सुवर्णं वा संन्यस्य विष्णुसूक्तपुरुषसूक्ताभ्यां विष्णुं प्रतिष्ठापयामीति प्रतिष्ठाप्य बिम्बस्य मूर्ध्नि नाभौ पादे च सुवर्भुवर्भूरिति हृदये प्रणवं विन्यस्येदं विष्णुरिति देवं ध्यायन्कुम्भस्थमाधावं शक्तियुतं कूर्चेनादाय बिम्बस्य मूर्ध्नि विष्णुमा-वाहयामीति संस्राव्यावाहनं करोति विधिनैवाराध्य हविर्निवेदयति ११

अथ नित्यार्चनमतो देवा इति देवं प्रणम्य निर्माल्यमपोह्योत्पूतैराधावैर्व्याहृत्या वेदिं परिमृज्य पूववद्देवं ध्यात्वा प्र तद्विष्णुरिति कुशपुष्पदर्भान्यतमेनासनं कल्पयित्वा त्रीणि पदेति पाद्यं शं नो देवीरित्याचमनं दद्यादिषे त्वोर्जे त्वेति स्नापयित्वा विष्णोर्नु कमिति वस्त्राभरणैरलंकरोति पूर्ववत् वत्पाद्याचमनं दत्त्वा तद्विष्णोः परमं पदमिति पुष्पं तद्विप्रास इति गन्धं परो मात्रयेति धूपं विष्णोः कर्माणीति दीपं त्रिर्देव इत्यर्घ्यं दत्त्वा पुनराचमनं ददाति तदस्य प्रियमिति हविर्निवेदयेदिदं विष्णुरिति पानीयं तथाचमनं विचक्रमे पृथिवीमिति पुखवासं च दत्त्वा द्वादशाष्टाक्षराभ्यां पुष्पाणि ददाति तं यज्ञपुरुषं ध्यायन्पुरुषसूक्तेन संस्तूय प्रणामं कुर्याद्यज्ञेषु विहीनं तत्संपूर्णं भवतीति श्रुतिर्द्विजातिरतन्द्रितो नित्यं गृहे देवायतने वा भक्त्या भगवन्तं नाराय-णमर्चयेत्तद्विष्णोः परमं पदं गच्छतीति विज्ञायते १२

अथ ग्रहशान्तिं व्याख्यास्यामो ग्रहायत्ता लोकयात्रा तस्मादात्मविरुद्धे प्राप्ते ग्रहान्सम्यक् पूजयत्यादित्यश्चन्द्रोऽङ्गारको बुधो बृहस्पतिः शुक्रः शनैश्चरो राहुः केतुश्चेत्येते नव ग्रहा रक्तासितातिरक्तश्यामपीतसितासितकृष्णधूम्रवर्णाः अन-लाप्पतिगुहहरीन्द्रशचीप्रजापतिशेषयमाधिदैवत्याः मध्याग्नेयदक्षिणैशान्यो-त्तरपूर्वपश्चिमनैर्ऋतवायव्याश्रितास्तस्माच्छुद्धे देशे मनोरमे गोमयेनोपलिप्ते स्वे स्वे स्थाने शालिव्रीहिभिः सिकताभिर्वा चतुरश्रं वृत्तं तुट्याकारं त्रिकोणम-ष्टाश्रमर्धचन्द्राकारं वज्राकारं दण्डाकृति ध्वजाकृतीति क्रमेण पीठान्युपक-ल्प्य तेषु कूर्च निधाय तद्दक्षिणपार्श्वे तदधिदैवतामुद्दिश्य पीठान्युपकल्प्या-हवनीयान्वाहार्यगार्हपत्यावसथ्यमभ्यान्क्रमेणोपकल्प्याग्नीन्साधयित्वार्च-येत्करवीरशङ्खपुष्पोत्पलनन्द्यावर्तचम्पकमल्लिकासितगिरिकर्णिकाकल्हा-रतापिञ्छपुष्पैस्तद्वर्णवर्णैः पुष्पैर्गन्धैः पूर्ववदभ्यर्च्य शुद्धोदनपायसगुडोदन-दध्योदनगौडिकचित्रोदनकृसरमाषोदनकणोदनानि क्रमेण निवेदयेत् १३

तदधिपांस्तदर्हेणाभ्यर्च्याघारं हुत्वार्कपलाशखदिरापामार्गाश्वत्थोदुम्बरशमी- दूर्वाकुशान्यथा क्रमेण सत्येन सोमो धेनुमग्निर्मूर्धोद्बुध्यस्व बृहस्पते अति य- च्छुक्रं ते अन्यच्छं नो देवीः कया नश्चित्रा केतुं कृण्वन्निति क्रमेणाष्टशतं सप्तविंशतिकं वा त्रिमधुराक्ताभिः समिद्भिश्चरुणाज्येन च जुहुयादाहवनीये शशिशुक्रयोरन्वाहार्येऽङ्गारकराह्वोर्गार्हपत्येऽसितकेत्वोरावसथ्ये गुरुबुधयोः सभ्ये सवितुरित्यग्निं दूतं ये ते शतं सुब्रह्मण्य इदं विष्णुरिन्द्रं प्रणवन्तं गन्धद्वारां ब्रह्म जज्ञानं शं नो निधत्तां यमो दाधारेत्यधिदेवेभ्य आज्येन तत्तत्स्थाने जुहुयाद्विष्णोर्नुकादीन् मिन्दाहुत्याश्रावितादीन्हुत्वा पायसकृसरगौडयाद्यैः पू- र्वोक्तचरुभिर्ब्राह्मणान्भोजयित्वा रक्तधेनुमादित्याय शङ्खं सोमाय ताम्रमङ्गा- रकाय हिरण्यं बुधाय शुक्लं वासो बृहस्पतये हयं शुक्राय कृष्णां गां शनैश्चराय राहोश्छागं केतोरायसदण्डमित्यात्मविरुद्धानां तदर्हं दद्यात्सर्वेषामलाभे सुवर्णं जन्मकर्मसांघातिकसामुदायिकवैनाशिकर्क्षसंस्थेषु क्रियाकालविरुद्धेषु ग्रहे- ष्वेतच्छुभर्क्षेष्वारभेतैतेन नवग्रहजा दुःखा व्याधयः शान्तिं यान्ति अन्यथा महत्तरो दोषो भवति ग्रहपूजां पुरस्कृत्य सर्वकर्म समारभेदिति विज्ञायते १४

चतुर्थः प्रश्नः समाप्तः

अथाहिताग्नेः पत्न्या गृहस्थस्य स्त्रिया ब्रह्मचारिणो ऽनारोपितकार्यस्य च दहनविधिं व्याख्यास्यामो यथोक्तैस्त्रैवार्षिकैररिष्टैरायुरात्मीयं परीक्ष्य तृतीये पञ्चमे नवमे वाह्नि मुमूर्षुर्बान्धवान्पञ्चविधानाहूय पूर्वं प्रियं भाषित्वैहिकं संभोगं पारलौकिकं चात्मनो विभजेदुपस्थितेऽहनि शुचौ प्रदेशे सिकतातले दर्भान्प्रा- गग्रानास्तृणाति दक्षिणाग्रानित्येके तत्रासीत शयीत वा दक्षिणशीर्षमस्याध्वर्युः शं नो मित्र इति शान्तिमात्मनः कृत्वायुषः प्राणमिति मुमूर्षोर्दक्षिणे कर्णे जपेत्संज्ञानमिति वामे च प्राप्ते प्रयाणकाले शुक्लमहो मासाः षडुत्तरा- यणमग्निर्ज्योतिरनेन पथा ब्रह्मपदमपुनरावृत्त्याभ्येति धूम्रः कृष्णो रात्रिर्मासाः षड् दक्षिणायनं चान्द्रमसमेतज्ज्योतिः प्राप्य निवर्तत इति गती चोभे विज्ञाय शान्तिं ज्योतिष्मतीं जपतीन्द्रियाणीन्द्रियार्थेषु निरुध्य क्रमेण घण्टावसानिके पदत्रये निविष्टे नानाविधे स्वयंज्योतिषि ब्रह्मण्यद्वितीये तद्यो ऽसौ सोऽह- मित्यात्मोपासनक्रमेण वा समादधीत यस्मात्प्रयाणकाले यं धायति तन्मय एव भवत्यात्मेति ब्रह्मवादिनो वदन्ति तदेवं दैवकृते प्रतिसंहारे गन्धात्मकं भूमेर्गु- णमापः प्रथमं ग्रसन्ति तदास्य भ्रमतीव शरीरं व्यावतिष्ठेतापां गुणोद्रे-

कादिन्धितोऽग्निः प्रविश्य प्राणायतनमर्माणि दारयन्नाडीमुखेभ्यो रसं दहति तदा दह्यमानमिव शरीरं मन्यते ततः कीलालं शुष्यति मुक्तबन्धे श्लेष्मणि पित्तेन सहाग्नौ पतिते स चाग्निरर्थाभावाच्छाम्यति वायुस्तिर्यगूर्ध्वमधश्चैव शरीरं व्यालोलयति तस्मान्मुह्यति तदा स्वैः स्वैः कर्मभिरुन्मुक्ताः पञ्च वायवो विसृजन्त्यात्मनः स्थितिमभिनिष्क्रामतश्चोच्छ्वास ब्रह्ममुक्ताद्दृतेरिव मन्दं मन्दमूष्माणमुदावहति तदा वेगेनोत्थाय वायुमूर्तिर्भ्रमन्निवास्य कण्ठे खुरुखुरायमाणो विश्वमेव विहरञ्जलूकावत्पदात्पदान्तरं विन्दन्नुत्क्रामति धर्माधर्मावूर्ध्वभावोऽधोभावश्च ज्ञानाज्ञाने सुखदुःखे चेश्वरवशात्तेन सह प्रतिष्ठेयाताम् १

अथ वै विगतानिलचेष्टं देहं मृतकमाज्ञाय गेहाद्बहिः शुचौ देशे चित्तिःस्रुगादिना स्नापयित्वाज्याभिषेचनं ग्राम्यालंकरणं बर्हिषा पादकरयोरङ्गुष्ठौ बध्नीयाद्यस्याभोक्ता शकल इत्यहतेन वाससा पादतोदशान्तमाछादयति तथैव शयनमभ्युन्दय गाङ्गेयेति शाययीत नैतदन्ये स्पृशन्त्यनाहिताग्न्यादीनां सर्वौषधिपृक्तेनोदकुम्भन श्मशाने स्नानालंकारौ स्यातामिति विशेष उखास्वग्नीनादाय यज्ञभाण्डानि नवानि मृन्मयानि घटशरावादीन्यौदुम्बराणि समित्परिधिशाखापत्राण्युत्तरबर्हिर्हिरण्यशकलतिलाक्षतदधिमधुक्षीराज्यादीनि संभृत्योत्तरस्यां पूर्वतस्तस्मान्नयस्यति स्नात्वाध्वर्युः पितृमेधविधिनाग्निहोत्रेण यथास्वमग्नौ दक्षिणाभिमुखः प्राचीनावीती परिस्तीर्य सतिलेनाक्षतेन वैश्वदेवं हुत्वा गृहदेवताभ्यो बलिं हरेत् शवस्य भारकाः सपिण्डाः पञ्चसंबन्धिवर्गा वा तदन्ये समानौ द्वौ चत्वारो वा स्नाता दर्भरज्जुसंवीता दर्भाम्बरधराः स्युः पुत्रास्त्र्यष्टिकायोगेनाग्नीनसंकरं गृह्णीयुः कुम्भं च पत्नीतराण्यन्येऽनुनयन्ति पश्चादुत्तारेण मेरोरंह इति मृतकमुद्धृत्य यथाप्रवेशं गृहान्निर्गमय्य हरेयुर्ग्रामान्ते पालाश्या शम्या वा शाखयाप्रदक्षिणमपेत वीतेति त्रिवीधीस्त्रिरपक्रमं दक्षिणान्तं मार्जयित्वाहोभिरद्भिरिति दक्षिणस्यां तामुत्सृजति तत्र तिलाक्षतोदकैः प्रोक्ष्य मेरोरंह इति दक्षिणशीर्षमवतारयेयुरुत्तरत्राप्युद्धारावतारयोरेवमेतेन कुर्वीरंस्तथैवाग्न्यादिसंभारान्निधाय तस्माद्वायव्यां दक्षिणाग्रेषु दर्भेषु त्रिगुणेश्वराणि त्रीणि मृत्पिण्डान्यवाच्यन्तं न्यस्य हव्येन विष्णुं ब्रह्माणं तिलाक्षतोदकैर्दक्षिणाभिमुखोऽभ्यर्चयति तथापसव्यं कव्येन रुद्रं पूजयेत् आधानक्रमेण शवाभिमुखः स्वे स्वेऽग्नौ जुहुयात् धात्रेऽर्यम्णेऽँशाय मित्राय वरुणाय

त्वष्ट्र इन्द्राय पूष्णे भगाय विवस्वते पर्जन्याय विष्णवे स्वाहा व्याहृतीर्ब्रह्मणे स्वाहा व्याहृती रुद्रेभ्योऽपसव्यं होमो मृगव्याधाय शर्वाय भवाय पिनाकिने भवनायेश्वराय स्थाणवे कपालिने निर्ऋतयेऽजायैकपदेऽहये बुध्नियाय स्वाहेति व्याहृतीः २

पूर्ववत्पूजनं मृत्पिण्डानां मृतकस्य चेलोपमार्जनैः सिग्वातं वातास्ते वान्त्विति त्रिः कृत्वा तथा श्मशानेक्षणमुद्धृत्यानु यज्ञभाण्डं नयति मृत्पिण्डं वैष्णवं तेषामप्सु क्षिपति ब्राह्मं तत्रैव पिदधाति रौद्रमादाय गच्छेच्चितोद्देशं वनं नदीतीरं शिलोच्चयं वा प्रत्यग्दक्षिणतश्च प्रवणं गृह्णाति भिन्नच्छिन्नमलवल्मीककेश-कपालास्थितुषाङ्गारोषरेरिणपाषाणवृक्षमूलोद्देशान्वर्जयेत्तत्र चिताप्रमाणं का-यमात्रायामं तदर्धविस्तारं गृहीत्वा पूर्ववच्छाखया सहिरण्यया वा प्रमा-र्ज्योत्सर्जनमभ्युक्षणं च तासु वीधीष्वपसर्पातः सर्पत प्रेता इति तिस्रो नव वा कर्षूर्दक्षिणापवर्गाः स्फ्येन परशुना वा भागावगाढविस्तारं मध्यपूर्वापरतश्च खनति तिलतण्डुलानामपसव्यं मुष्टिभिर्यमाय दहनपतये पितृभ्यः स्वधा नम इति तास्तथा पूरयित्वा शेषान्सर्वतो विकीर्य मध्ये मृत्पिण्डेन सह हिरण्य-शकलमवदधाति दक्षिणाग्रैर्दर्भैस्तत्प्रमाणैरास्तीर्य शङ्कुं तद्विस्तारोच्छ्रयं दक्षि-णाग्राण्येधांसि चिनोति कुरु मध्विति साङ्गं कृष्णाजिनमधोलोम दक्षिणग्रीवं यद्याहिताग्निरास्तृणाति चितापूर्वं मृतकं तथा निधायाग्नींश्च सर्वानथ दक्षि-णामुखः प्राचीनावीती परिस्तीर्य यथास्वमग्नौ जुहोत्यग्नये सोमायेन्द्राय यमाय वरुणाय कुबेराय पृथिव्या अद्भ्यस्तेजसे वायव आकाशायाहङ्काराय बुद्धय इन्द्रियेभ्यः पुरुषाय सूर्याय जीवाय मनसे पञ्चभूताधिपतये परमपुरुषाय सुकृ-ताय धर्माय ध्रुवाय वृषाय स्वाहेति व्याहृतीः शिवं यात्विति मृतकं प्रोक्ष्य चितायां तिलानवकीर्य तत उद्धृत्यावतारयेयुः सप्तसु प्राणमार्गेष्ववा-चीनपाणिर्हिरण्यशकलानि सप्त मधुनाक्तान्या वो वहेति प्रत्यस्यत्याज्या-क्तानीत्येके अलाभे सप्ताज्यबिन्दूनिति विज्ञायते ३

तिलतण्डुलदधिमधुक्षीराणां यथालाभमिश्रमास्ये क्षिपेत्तदास्यं दर्भेण स्पृश-न्द्विश्चतुर्होत्रं जपति पृथिवी होता द्यौरध्वर्यू रुद्रोऽग्नीद्बृहस्पतिरुपवक्तेति चत्वा-र्यासीदन्तानि चतुर्होत्रं तथा नासिकापुटयोर्दशहोत्रं चित्तिः स्रुक् चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतोऽग्निर्विज्ञातमग्निर्वाक्पतिर्होता मन उपवक्ता प्राणो

हविः सामाध्वर्युरित्येतानि दशासीदन्तानि दशहोत्रं तथाच्णोः षड्ढोतारं सूर्यं ते चक्षुर्वातं प्राणो द्यां पृष्ठमन्तरिक्षमात्माङ्गैर्यज्ञं पृथिवीं शरीरैरित्येतानि षडासीदन्तानि षड्ढोतारं तथा कर्णयोः पञ्चहोतारमग्निर्होताश्विनाध्वर्यू त्वष्टाग्नीन्मित्र उपवक्तेति पञ्चास्तामासीदन्तानि पञ्चहोतारं तथा कीकसासु सप्तहोतारं महाहविर्होता सत्यहविरध्वर्युरच्युतपाजा अग्नीदच्युतमना उपवक्तानाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरावयास्य उद्गातेति सप्तास्तामासीदन्तानि सप्तहोत्रं जघनेन दक्षिणाग्रेषु दर्भेषु यज्ञपात्राणि प्रयुनक्त्युत्तरेण प्रोक्षणीं संस्कृत्य मृत्पात्र दारुचितां च प्रोक्ष्याथ दर्शपूर्णमासवत्तूष्णीमाज्यानि गृह्णाति जुह्वां घृतमुपभृति दधि ध्रुवायां मधु क्षीरमग्निहोत्रहवण्यामपि वाज्यमेव सर्वासु यान्यासेचनवन्ति पात्राणि तानि संपूरयत्यभ्युक्ष्येतराणि पात्राण्यत्रावचिनोति तथाग्न आयाहीति जुह्वा घृतदानमिषे त्वोर्जे त्वेत्युपभृतादधि देयमग्निमीड इति ध्रुवया मधु शं न इत्यग्निहोत्रहवण्या क्षीरं तानि तिलाक्षतादीनि तथापोह्य दर्शपूर्णमासानुयोज्यान्यस्मा उपाहरति अग्ने मृतादिति स्फ्यं जुहू दक्षिणे हस्ते निदध्याद्राजसनीत्युपभृतं सव्ये विश्वं दिधुक्षुरिति ध्रुवामुरसि तत्रैवाग्निमश्वत्थादित्यरणिमग्राग्रं या लोका इत्यग्निहोत्रहवणीमास्ये स्यातामित्याज्यस्रुवौ नासिकापुटयोर्वारुणावित्याज्यस्थालीं कण्ठे करावितिप्राशित्रं भित्त्वा वा कर्णयोर्मुहुराराण इत्युलूखलमुसलौ हन्वोर्हार्यमिति ग्रावाणकौ दत्सु यदि तै स्यातां षडष्टकमिति कपालानि शिरःस्थाने ललाट एककपालं विष्णो रराटमिति प्रोच्य पिष्टसंयमनीमुदरे परशुमुदिते मेति छित्त्वा चैकं शूर्पं पार्श्वयोरस्येति सांनाय्यकुम्भं वक्षणे यदि संनयेत्सत्यव्रतेति दृषदुपले अण्डयोः सत्यं बर्हिर्ज्योतिषेत्यग्निहोत्रस्थालीमन्वाहार्यपचनं च पृष्ठयोरिन्द्रसेनेत्युपावहरणीं पादयोर्यन्मनीषिणां मलदेति वेदं कुर्चं चूडिकायां चन्द्रमा प्रसवेतीडापात्रं शिरःस्थाने तत्रैव तथोपसादनिकमेवं यथास्थानमर्पयित्वावशिष्टानि प्रक्षेपण्यादीनि लौकिकसंभारभाण्डानि धेनुर्वहाणामित्यन्तरा सक्थिनी क्षिपेत् स्फ्यादीनि यज्ञपात्राणीममग्ने चमसमिति निर्वपेदित्येके ४

अनाहिताग्नेः स्रुवादीनि धेनुर्वहाणामित्यादधीतेममग्ने चमसमिति कृताञ्जलिः पुरतः स्थित्वा प्रोक्ष्य कृष्णाजिनमादायोर्ध्वलोम्ना तेनाच्छादनं करोति बान्धवाः कनिष्ठप्रथमास्त्रयः सर्वे वा सिग्वातेन पूर्ववत्सव्यापमव्यमुपवीजयन्ति यस्मात्सिग्वातादेष पथि सुखं यातीत्यामनन्ति पत्नी पुत्रो सनाभिरन्यो वा

समानो जलपूर्णकुम्भमादाय शिरस्तः प्रसव्यं सिञ्चन्पर्येति पृष्ठतोऽध्वर्युरास्थितः शिरःस्थं परशुना घटं किञ्चिद्भिनत्ति तां धारामनुमन्त्रयत इमा आपो मधुमत्योऽस्मिंस्ते लोक उपदुह्यन्तामिति द्वितीयं पर्येति मध्यतो भिनत्ति तां धारामनुमन्त्रयत इमा आपो मधुमत्योऽन्तरिक्षे ते लोक उपदुह्यन्तामिति तृतीयं पर्येति तत उपरिष्टाद्भिनत्ति तां धारामनुमन्त्रयत इमा आपो मधुमत्यः स्वर्गे ते लोक उपदुह्यन्तामिति ततः स कुम्भं पृष्ठतः क्षिपति यदि पूर्वतः क्षिपेन्न शर्मणे कुलस्येति ताः कपालावशेषाः प्राणस्थानेषु सर्वेषु भूः पृथिवीमित्यपो नयति प्राचीमुदीचीं वा निष्क्रम्य दिशं शिखां यज्ञोपवीत्यप उपस्पृश्य प्राणायामं कृत्वार्द्रा ओषधीर्वनस्पतिं हिरण्यं वालाभे गां ब्राह्मणान्वेक्षयित्वा देवस्य त्वेति शक्त्या दक्षिणामध्वर्युप्रभृतिभ्यो दद्यादत्र वरं ददात्यथाध्वर्युरग्नी-न्प्रज्वाल्य नियुञ्जीत सव्येन मुक्तशिखः प्राचीनावीत्याग्नेय्यामग्निर्यजुर्भिः सवितेति संभारैः सेनेन्द्रस्य धेनेति पत्नीभिराहवनीयं ददाति वाचस्पते विधे नामन्निति यहैर्वाचस्पते वाचो वीर्येणेत्यृतुमुखीभिर्नैर्ऋत्यामन्वाहार्यं सोमः सोमस्य वाचस्पतेऽच्छिद्रयेति ग्रहैर्वायव्यां गार्हपत्यं वाग्घोतेत्युत्तरस्यां पुरस्ताच्च सभ्यावसथ्यौ दत्त्वा ब्राह्मण एकहोतेति स्थित्वा हृदयं जपत्या-ज्याक्ताभ्यां पाणिभ्यां परावृत्तमुखोऽङ्गुष्ठबन्धौ विमुच्य पादावुपलिम्पत्यैशान्यां कृताञ्जलिरयं घर्म इत्युपतिष्ठेतानाहिताग्नेः सुवर्णघर्म इत्युपस्थानमितरेषां कपालसंतपनाग्निनैकर्चया दहनमित्येके ५

स उपवीती सं त्वा सिञ्चामीति शान्तिं जप्त्वोपतिष्ठेतोद्वयं तमस इत्यादि-त्यमतोऽप्रदक्षिणमनीक्षमाणा ग्रामधर्मेणाधोमुखा निवर्तेरन् श्मशानान्निर्गच्छतो विजने दर्भरज्जु प्रसार्यैको मावतरतेति वारयेन्न पुनरवतरिष्याम इत्यधस्तात्तुल्याः प्रयान्ति विसृज्यान्येऽनुयाता गच्छन्ति तथैव विजनेऽपः प्रपद्यमानान्पूर्वोक्तां शाखां प्रसार्य स्यालो वा सपिण्डो वा राजपुत्रो वा वारयेत्प्रतिमन्त्रेण तोयधिं दक्षिणामुखाः सर्वे प्रकीर्णकेशाः प्रपद्येरन्नप्सु सकृन्नि मज्ज्योत्तीर्याचम्य दक्षि-णामुखा प्राचीनावीतिनो मुक्तशिखाः सर्वे सनाभयो दक्षिणाग्रेषूदुम्बरपर्णेषु तिलाक्षतेषु त्रिरुदकाञ्जलिं तिलमिश्रं प्रेतस्य गोत्रनामपूर्वमास्त्रावयेदसावेतत्त उदकमिति सव्योत्तराभ्यां पाणिभ्यां ददते सर्वे चाप्ता शमिताम्बरवाससा जलमादय कनिष्ठपूर्वं यावदायान्ति यत्तत्र स्त्रिय आहुस्तत्कुर्वन्ति गोमयेन गृहं शोधयित्वोपलिप्योल्कया त्रिर्दग्ध्वा पुष्पतिलाक्षतैः स्वस्त्यस्तु वो गृहाणा-

मिति यस्मिन्देशे प्राणोत्क्रान्तिस्तत्र च विकीर्य द्वारस्य निर्गमनदक्षिणभागे समनुलिप्य पुष्पाद्यवकीर्याश्मवह्निहिरण्यगोमयोदुम्बरपत्रतिलाक्षतानि निधाय धूपदीपादिनोपगतान्तावत्प्रतिगृह्णीयुः तदश्म सपत्रं वस्त्रतोयेनाप्लुत्य धान्याक्षतं सतिलमालभ्य ततो वह्निं सुवर्णं गोमयं च स्पृष्ट्वा तत्र स्थित्वा-नामन्नान्विसृज्य वृद्धाग्रं गृहं प्रविश्य लोकयात्रामासीरन् तदेवमहोरात्रमुपोष्य प्रातः पूर्ववत्पथोपस्थाय चितास्थीन्युपसंहृत्य पयसाज्येन प्रक्षाल्याकृतिं कृत्वा पुष्पादिभिरभ्यर्च्यान्नापूपाद्यैस्तूष्णीं निवेद्यैतेन विधिनाकृतिं दहेद्यस्मात्कुलस्य मङ्गल्यमुत्तरा च गतिर्भवति तदह्नि तं चिन्तयित्वा सतण्डुलं वस्त्रं कांस्यं पानीयं च दद्यात्स एष नग्नप्रतिच्छन्दोऽस्य भवति ६

स्नात्वा गुरवे पानीयार्थं शक्त्या दक्षिणां दत्त्वा सायंप्रातस्त्रिरुदकाञ्जलिं दत्त्वा नित्यमेकैकं वर्धयित्वा तर्पयेत्पूर्ववदपो वाससादायाश्माप्लुत्याभ्यर्च्य बलिं ददाति जलान्तमा दशाहात्ततः प्रभृत्येकभक्ता निरानन्दा अधःशायिनो भवेयुः मातापित्रोर्हतवासाः परिवत्सरं ब्रह्मचारिव्रतं चरेद्यस्माच्चीर्णपितृव्रतो वंशं वर्धयेच्चतुर्थेऽहन्यस्थिसंचयनं कुर्यात्सप्तमेऽहनि चितां पिधाय पैष्टिकमाकारं कृत्वा पुष्पतिलचूर्णलाजधूपदीपाक्षतैः पूजयित्वा बलिं निवेद्य जलं दद्याद्दशमेऽहनि तीर्थस्य विसर्जनमुदकाप्लुतं तदश्म भूमौ तत्रैव तीर्थस्थाने ऽपिधाय बलिस्थाने पायसं प्रस्थतण्डुलैः पक्वं त्रिभिर्मृत्पात्रैर्गृहीत्वा तेनैवाश्मना सह पिदध्यादिति विसर्जनं सायेऽह्न्युच्छिष्टपात्राण्युद्दीप्य तीर्थं विसृज्य स्नात्वैकादश्यामेकोद्दिष्टमन्ये चाचक्षते वानप्रस्थस्य पत्न्याश्च गृहस्थवद्दहनं कुर्यात् ७

यो ह वै धर्माधर्मौ परित्यज्य दक्षिणे देवानदक्षिणे पितॄन्समारोप्य सर्वमात्मनि पश्यन्यतिरात्मयाजिनस्तस्य वेदाग्निरिति ब्रह्मवादिनो वदन्ति तथा योगी देवसायुज्यकः परकायप्रवेशीत्येतेऽप्यनग्नयः शरीरमेतेषां न स्पृश्य काष्ठैर-न्तरीकृत्य रज्जुभिर्बद्ध्वा समुद्रगां नदीं नीत्वा वालुकप्रदेशे श्वभ्रं खनति तत्रासयित्वा वालुकैरेव पिदध्यादत्र गाथा भवन्ति

यथा सन्न्यासिनां कायं ये वहन्ति द्विजातयः
पदे पदे यज्ञफलं लभेरन्ननुपूर्वतः

अनाथानां शवं चैव ये वहन्ति द्विजातयः
तत्संस्कारकृतो ये च ये च श्राद्धानि कुर्वते

तेषामेव फलं प्रोक्तमश्वमेधस्य धर्मतः
मृतानां तु शरीरं यदग्नेर्हविरिति स्मृतम्

तस्मात्पुरायशरीराणि दहन्सद्यः शुचिर्भवेत्
परदेशगतस्यापि सद्यः शौचं विधीयते

इति विज्ञायते ८

अथापद्दाह्यं स्नातको विधुरः कृतचौडो दन्तजातो वा कुमारः कुमारी च विधवा वीरविधवासूतविधवा सूतिका मूढगर्भिणी पतिघ्नी निन्दिता घोरा यशोघ्नी पुत्रघ्नी दीक्षितोज्झितानार्तवा पाषराडमूकबधिरा मन्त्रवर्जिता पापबुद्धिर्दुःशीला स्त्री च दहनमेतेषामापद्दाह्यं चाचक्षते यो वात्मयाजी स्नातकोऽप्राप्तगृहवृत्तो मृतदारो वा म्रियेत तस्य ह वै तद्ब्रह्म विफलं मा भूदिति विशेषार्थी यथाविभवानुरूपं दक्षिणां दत्त्वा तुल्यां कांचित्कन्यां तस्मै दापयित्वा तया सहोषितस्य प्राप्तगृहवृत्तस्य पूर्वोक्तेन विधिना दहनं कुर्यात् तथैव कन्यां च मृतां प्राप्तयौवनां तुल्येन पुंसा प्राप्तगृहवृत्तां दहेत् दन्तजातस्य कृतचौडस्य वा तदेषां तत्राग्नौ व्याहृतीर्हुत्वा सावित्र्या दहनं कुर्यात् सूतिकां मूढगर्भिणीं पुंश्चलीमनार्तवां पाषराडमूकबधिरां मन्त्रवर्जितां पापबुद्धिं दुःशीलां स्त्रियं पुरुषं वा तूष्णीं दावाग्निना दहेदित्यापद्दाह्यं विज्ञायते ९

अथावटाहिकं बालस्य मरणेऽलंकृत्य वाससा पत्रेण वाच्छाद्य केनापि साधारं नयति तत्र श्मशाने दक्षिणोत्तरमवटं तत्प्रमाणं खनति घृतक्षी-राभ्यामवटमभ्युक्ष्य दक्षिणाग्रं दर्भानवकीर्य तत्र साधारमाधाय शवमाज्यमि-श्रैस्तिललाजैरक्षतैर्वास्यं पूरयित्वा पिधायोपरि घृतक्षीराभ्यामुक्षणं बलिदानं वा कृत्वागच्छेन्नास्योदकदानं कुर्यात् त्र्यहं क्षिपेदिति १०

अथादाह्यान्व्याख्यास्यामो न दाह्योऽतुल्यो भवति तुल्योऽपि पापरोगान्वितो रज्जुशस्त्रविषविभ्रमप्रतिषिद्धहतश्चात्मघाती ब्राह्मणादिहीनहतोऽग्निदग्धोऽप्सु

मृतो व्याडहस्तिपशुमत्तहतः स्वकिल्बिषाशनिभूतसंपातभृगुपतनमहौघपरि-
सर्पणमहाध्वगमनप्रवासदुर्गव्याध्युपेक्षाव्यर्थप्रायोपवेशनेषु मृतो न दाह्यो
भवत्या दन्तजननान्नाग्निरा चौडकाद्वेत्या पञ्चमाद्वर्षाद्दारकस्या सप्तमात्कन्याया
नाग्निस्तूष्णीं भूमौ बलिनिर्वपणमित्येके ११

अथाकृतिदहनमन्यथानृणस्येष्टापूर्तं देवाः पितरश्च नाश्नन्ति यस्मात्कुलस्य
मङ्गल्यायाकृतिदहनं धीयते तस्मान्मासे संवत्सरे वा काले पालाशशाखानां
सपत्त्राणां षष्ट्यधिकशतत्रयं दर्भांश्च गृह्णाति शुद्धे देशे गोमयेनोपलिप्ते
तिलाक्षतानवकीर्य यद्याहिताग्निः कृष्णाजिनमास्तीर्य तत्राकृतिं तावतीं करोति
तत्रास्थीनि पालाशदण्डाः पत्त्राणि मांसं सिरा रोमाणि च दर्भा भवन्ति
तस्याङ्गान्युद्दिश्यास्थिगणना शिरश्चत्वारिंशत्कण्ठं दश बाहू शतमङ्गुलयो दश
वक्षस्त्रिंशदुदरं विंशतिर्वृषणे सीवन्यां च सप्त शिश्नं त्रीण्यूरू शतं जानुनी
दश शङ्खे विंशतिरङ्गुलयो दशेति विन्यस्य पत्त्राणि मांसं सिरा रोमाणि च
दर्भैः कृत्वा बध्नीयात्तदेवमाकृतिं पुरुषस्य स्त्रिया वा कृत्वा तस्य तस्याग्नौ
व्याहृतीर्हुत्वा पूर्ववद्दहत्या भस्मसादाकृतिदहनमित्येके १२

अथैकोद्दिष्टं व्याख्यास्यामो दशमे चाह्न्यनशनमत्यये गुरूणां त्रिशुक्लाः
कृशवृत्तयो घृणावन्तः सकलेन्द्रिया मुक्तयोनिदोषा ब्राह्मणाः पात्रमित्यामन-
न्त्येकस्त्रयः पञ्च सप्त नवैकादश वा शक्त्या निमन्त्रिता भवन्त्येकादशदिने
मृतकनिमित्तत्वान्नैमित्तिकमेकोद्दिष्टश्राद्धममन्त्रकमाचक्षीरन् समन्त्रकं संस्कारं
कृत्वा कथममन्त्रकं तस्मात्सपिण्डीकरणवद्धुत्वा श्राद्धमित्येके गृहस्य
पूर्ववच्छोधनं कृत्वा दर्भेण स्थालीं बद्ध्वा तिलोदनं कव्यमिति पाचयेत्ततः
स्नातानुलिप्तानहते वाससी वसानान्स्रक्कुण्डलाङ्गुलीयकधारिणो दक्षिणामु-
खान्प्राचीनावीतिनो दक्षिणाग्रेषु दर्भेषु सतिलेष्वासनेषु दक्षिणतोऽग्नेर्निवेश्य
सापसव्यं वाचंयतः सिकताभिरुदक्प्रागपरमरत्निमात्रं वितस्त्या दक्षिणतो भा-
गोन्नतं स्थानं कल्पयेन्निधायौदुम्बरीं शाखां पूर्ववद्दर्भेणापसव्यं कृत्वा खननं
तिलानामुक्षणमयुग्मानां दक्षिणाग्रं बर्हिषामुदुम्बरपत्त्राणां चास्तरणं तत्र
सतिलाक्षतं पुष्पमेकं निधाय गोत्रनामादिना तस्यार्चनमभिघार्य कव्यस्थालीं
तिलोदनेनाङ्गुलाग्रेषु सूक्ष्मं पिण्डं कृत्वा पवित्रपाणिरवाङ्गुष्ठजानुभ्यां भूमिं
पीडयन्निर्वपति वस्त्रोत्तरीयादिदध्युपदंशबदरप्रभृति भक्ष्यं मुखवासं चार्पयेत्

सतिलाक्षतपवित्रमुदकुम्भं निदध्याच्छूर्पेणाच्छाद्य पिण्डमुपरिष्टात्सतिलाक्षतं पुष्पं दर्भेण निदध्यात्तदीयं वस्त्रं कांस्याद्युपानट्छत्त्रं च सर्वं निवेद्य तेभ्यो दानं पिण्डशेषादि पात्रेषु तेषामभिघार्यार्पयित्वा भुञ्जतामित्यङ्गुष्ठमूलं गृहीत्वा भोजनं पूर्ववदुच्छिष्टमपनीय बहिर्दक्षिणस्यामवटे प्रक्षिप्य सह पिण्डेन तज्जलं स्रावयेत् वायसेभ्यो बलिदानमथवा श्वचण्डालानुपहते देशे विसर्जनं पि-ण्डस्य श्येनकाकादीन्न वारयेद्यस्मात्तद्रुपाः पितर आगच्छन्ति स्नात्वा स्वस्ति-वाचनमन्नाद्यदानमौपासनहरणं वैश्वदेवं च कुर्यात्पूर्ववदेकोद्दिष्टमिति १३

अथ तथा मासि मासि तद्दिने पिण्डनिर्वापो मासे तैलसंपर्कस्तृतीये वा मङ्गलयोगो भवति यस्मादेकोद्दिष्टात्त्रिमासः षण्मासो वत्सर इति वा प्रेताप्यायनकालस्तस्मात्तेषु कालेष्विष्टकाले पितृस्थानगतायेति क्रमेण त्रिभिः पिण्डैस्तस्य पिण्डस्यारोपणं सपिण्डीकरणं कुर्याद्वैश्वदेवाघारं श्रपणं पूर्व-वत्तिलोदनस्य वैश्वदेवं हुत्वा प्राचीनावीती वीतिहोत्रमिति समिधं कव्यमाविध्य दग्ध्वा पृथिवीगतानन्तरिक्षगतान्दिविगतानिति पितृणामावा-हनं जुष्टाकारादिसंवापनान्तं कर्म कुर्यादक्षतादिनार्चयित्वा तिस्रः समिधो-ऽग्नये कव्यवाहनाय स्वधा नमः स्वाहेत्युत्तरस्यां सोमाय पितृमते स्वधा नमः स्वाहेति दक्षिणतो यमाय चाङ्गिरस्पतये स्वधा नमः स्वाहेति मध्ये चक्षुरास्यमिति होमश्च एते य इह पितर उशन्तस्त्वा सा नो ददात्वित्यृचः पितृदैवत्या हुत्वा पृथिवीगतेभ्यः पितृभ्योऽन्तरिक्षगतेभ्यः पितामहेभ्यो दि-विगतेभ्यः प्रपितामहेभ्यो जुहुयात् १४

पूर्ववद्यथोक्तस्थाने निहन्मि सर्वमिति तिलोदुम्बरपत्त्रदर्भानास्तीर्यार्चयित्वा पितृंस्तत्स्थानात्प्रमुखतस्तस्य च स्थानं कृत्वा तथैव तन्नाम्नार्चयत्या मा वाजस्येति पात्रं प्रक्षालयति तत्राग्निरिन्द्रेत्यन्नं निक्षिप्य सतिलं घृतं चतुर्धा कृत्वा पिण्डान्करोत्ययमोदन इति पिण्डांस्त्रीन्प्रधानान्निर्वपति प्रथमं ये मृतास्ते पितर इत्युच्यन्ते तत्पूर्वमृताः पितामहास्तेषां पूर्वमृताः प्रपितामहास्तेभ्यः परे ज्ञातिवर्गा भवन्ति तस्मात्तेषां चतुर्णां पिण्डनिर्वापः क्रमेण भवति तस्य च स्थाने तथैव पिण्डमेकं निरुप्य पितृस्थानगतायेति तत्पिण्डं त्रिधा कृत्वा पिण्डे पिण्डे तथैकैकं भागं निक्षिपति यस्मादेष परिवत्सरान्ते पितृत्वं प्राप्तवांस्तस्माद्यत्नेनैन-मुद्दिश्य पैतृकं कुर्यात्तत्सर्वं जलपिण्डदानादि विनास्य नाम्ना पितृभ्य इति

कुर्यादवाच्यामवटं स्थलवदायतावनतं खनित्वोदकुम्भेनोर्जं वहन्तीरिति तर्पयित्वा मुखवासादिदक्षिणां दत्त्वा शूर्पेणाच्छादयित्वा पितृभुक्तं पितृजीर्ण-मित्युपजुह्वान्तहोमो ब्राह्मणानां तर्पणमन्नेन पूर्ववत् यथैवैतत्स वत्सो गवा-श्वाजमहिषमण्डलेषु यत्र क्वचन गतां गामन्वेष्य तामेव तर्पयति तथैव यथाविधिदत्तजलपिण्डदानादि यत्र वा गतं तमेवानूद्दिश्य प्रीणयति तस्मा-त्प्रयत्नेन पैतृकं कुर्यान्मा स्म नास्तिको भूदिति ब्राह्मणमिति सपिण्डीकरणं तस्माद्द्वितीये तृतीये वाह्नि तेभ्यस्त्रयाणां पिण्डानां क्रमेण निर्वापणमष्टकां करोतीति विज्ञायते १५

पञ्चमः प्रश्नः समाप्तः

अथ निषेकादिसंस्काराणां प्रायश्चित्तं व्याख्यास्यामः स्नात्वा संकल्प्य पुण्याहे विधिवत्संस्कारान्कुर्यात् चतुर्दिशं चतुर्हस्तं गोचर्मेत्युक्तं गोचर्ममात्रोपलिप्ते पूर्ववदग्निं निधायाभिमुखमासीनमग्निं ध्यात्वाधारं जुहुयात् सर्वस्यादावाघारे क्रियालोपे विपर्यासे च व्याहृतीर्महाव्याहृतीर्गायत्रीं सावित्रीं मिन्दाहुती वैष्णवं च द्विरावर्त्य हुत्वा पुनराघारं जुहोति स्थण्डिले परिस्तरणादिसंभारे च प्रमाणवर्जिते हीने मिन्दाहुती सावित्रीं व्याहृतीश्च जुहुयात् ऋत्विजोरभावे दक्षिणोत्तरयोः प्रागग्रं कूर्चं निधाय ब्रह्मसोमौ संकल्पयति सर्वं युग्मं प्राच्यामुदीच्यां वाग्रमन्तं च दैविके करोति सर्वमयुग्मं दक्षिणस्यां पश्चिमस्यां वाग्रमन्तं च पैतृके करोति होमे न्यूनेऽतिरिक्ते च पूर्णाहुती मिन्दाहुती जुहोति विशेषेऽनुक्ते स्रुवेण होतव्यमाज्यं हविर्व्याहृतिर्मन्त्रं प्रायश्चित्ते ऽनुक्ते वैष्णवं प्रायश्चित्तमग्नावाज्ये चरौ वा होमे मक्षिकक्रिमिरोमपिपीलिकादिपतने तद्व्यपोह्य बर्हिषोद्दीप्य प्राजापत्यमाग्नेयमग्न्यायतने गोवराहश्वसर्पमण्डूकमा-र्जाराद्यैर्गमने तत्पदानीदं विष्णुरिति प्रोक्ष्य वैष्णवं रौद्रं च परिस्तरणादिस-म्भाराणां दाहे भेदे च्छेदे नाशे च तत्तत्स्थाने संयोज्य मिन्दाहुती द्विरावर्त्य जुहुयात् आघारे कृते तस्मिन्नग्नौ समुत्सन्नेऽग्निं ध्यात्वा तद्भस्मायं ते योनिरिति समिधमारोप्योद्बुध्यस्वेति लौकिकाग्नौ समिधं निधायोज्ज्वाल्य परिषिच्य मनो ज्योतिरयाश्चाग्ने मिन्दाहुती व्याहृतीश्च जुहुयात् सर्वहोमानामन्ते स्विष्टकृत्प्र-भृत्यन्तहोमे हीने विष्णोर्नुकादिमिन्दाहुत्याश्रावितादीञ्जुहुयात् १

ऋतौ संगमनं निषेकमित्याहुः स्वभार्यायामृतुस्नातायां षोडशाहे संगमने

हीनेऽग्निमाधायाघारं हुत्वा वैष्णवं ब्राह्ममैन्द्रमाग्नेयं दद्यः स्वाहेत्यङ्गहोमं जयानभ्यातानान्राष्ट्रभृतो हुत्वान्तहोमं जुहोति स्नातामलंकृतां भार्यां पूर्ववद्ग-च्छेत् ऋतौ प्रथमे होमं जुहुयात् ऋतावृतौ संगमनं करोति ततः सा भार्या गर्भमाधाय पुत्रं जनयति पुत्रेण पितरः प्रीता भवन्ति तेनैव स्वर्गं गच्छन्ति तस्यां पुत्रहीनायां पुत्रार्थमन्यां विवाहं कुर्यात् यस्य भार्या पतिव्रत पुत्रवती साध्वी स सर्वां सिद्धिमाप्नोति तस्माद्दुष्टामसाध्वीं बान्धवसंनिधौ त्यक्त्वान्या-मुपयच्छेत् गर्भाधानादिसंस्कारेषु नान्दीमुखेऽभ्युदयश्राद्धे हीने दैविकैन सहैकाहे पैतृकवत्कृते च तत्कार्यमशुभं भवति तस्मात्पूर्वद्युर्दैविकवत्कुर्यात् द्वौ विश्वेदेवौ चतुरः पितृन्ब्राह्मणान्वरयित्वा नान्दीमुखाः पितरः प्रियन्तामिति हस्ते यवोदकं दत्त्वाघारान्ते पूर्ववद्धोमं हुत्वान्ते ब्राह्मणान्भोजयेदुद्यन्तं वा ददा-त्यन्यथा नान्दीमुखं कृत्वा पुनः शुभकर्म कुर्यात् जातकर्मोत्थानयोर्नान्दीमुखं वर्जयेदित्येके २

गर्भाधानकालेऽतीते क्रियाहीने विपर्यासे च पूर्ववदाघारान्ते सुवर्णेन गर्भवत्कृत्वा तस्याः कुक्षौ संन्यस्य दर्भेण बन्धयेत्परिषिच्य वैष्णवं ब्राह्मं रौद्रमैन्द्रमाग्नेयं बार्हस्पत्यमङ्गहोमं च हुत्वा पूर्ववद्गर्भाधानं कुर्यात् विष्णु-सूक्तेनोदरमभिमृशति सुवर्णगर्भमादाय ब्राह्मणेभ्यो दत्त्वा तान्भोजयति पुंसव-नसीमन्तयोश्च गर्भाधानवत्प्रायश्चित्तं हुत्वा तौ करोत्यन्तःपुंवद्रूपयुतं सुवर्णगर्भं पुरुषसूक्तेनोदरमभिमृशतीति विशेषो विष्णुबलौ हीने वैष्णवं विष्णुसूक्तं चतुरावर्त्य हुत्वा विष्णुबलिः कर्तव्यो लौकिकाग्नौ गर्भसंस्काराञ्जुहोति पितुरौपासनाग्नावित्येके भर्तुर्मरणे तत्पिता भ्राता सपिण्डो योनिबन्धुर्वा कुर्यात् गर्भिण्याः प्रथमे गर्भे कृता गर्भसंस्कारास्तस्या सर्वगर्भाणां संस्कारा भवन्तीत्येके ३

कुमारस्य कुमार्याश्च जनने सपिण्डनां दशाहमाशौचं विधीयते पुरुषस्य सपिण्डता षष्ठपुरुषावधिः कन्यायास्त्रिपुरुषावधिर्भवति आशौचे सूतके प्रेतके च सन्ध्योपासनादिनित्यकर्माण्यन्यानि दैविकपैतृकाणि स्वाध्यायदानप्रतिग्र-हाणि च वर्जयति कुमारे जाते जातकाग्नौ प्रातर्होमे हीने व्याहृतीश्चतुरावर्त्य हुत्वा सायं द्विगुणं सायं हीने प्रातर्द्विगुणं पूर्ववदा दशाहाज्जुहोत्यतीतेऽप्येवं जातकर्म कुर्यात् जातकाग्नौ समुत्सन्ने तद्भस्म पूर्ववत्समिधमारोप्य लौकिकाग्नौ

निधाय प्रायश्चित्तं हुत्वा तथैव जुहुयात् दशमेऽहनि जातकाग्निमरण्यामिध्मे वा समारोप्य तमेवाग्निं मथित्वाधाय वास्तुहोमोत्थानहोमौ हुत्वाग्निं समारोप्याप्रमादं निदधाति उत्थानस्य कालेऽतीते वैष्णवं ब्राह्मं रौद्रं प्रायश्चित्तं हुत्वा पूर्ववत्कुर्यान्नामकरणस्य वैष्णवं मूलहोमं यद्देवादिदिग्दैवत्यं च हुत्वा नामकरणं करोति ४

नक्षत्रहोमे हीने स्कन्ददैवत्यं नवग्रहदैवत्यं वैष्णवं प्रायश्चित्तमन्नप्राशने कालेऽतीते बालेनैवान्ने भुक्ते च जातकाग्नौ वैष्णवं ब्राह्ममाग्नेयमैन्द्रं सौम्यं बार्हस्पत्यं च हुत्वाष्टमे दशमे द्वादशे वा मासेऽन्नप्राशनं ब्राह्मणभोजनं च कुर्यात्तत्तत्काले प्रवासागमनपिण्डवर्धनयोर्हीने मूलहोमं जुहोति चौडके कालेऽतीते मन्त्रवर्जं कृते च जातकाग्नौ वैष्णवं मूलहोमं ब्राह्मं वारुणमाग्नेयं रौद्रं च हुत्वा यथाशक्ति सुवर्णपशुदानब्राह्मणभोजनानि कृत्वा चौडकं कुर्यात् ५

अथ निषेकादीनां सामान्यप्रायश्चित्तं विष्णोर्नुकादिमिन्दाहुत्याश्रावितादीन्द्विरावर्त्य हुत्वा तत्तत्कर्म कुर्यादिति केचित् अथवाप्युपनयनं यावत्तावत्कालं गर्भाधानादिचौडकान्तेषु हीनेषु तन्त्रयित्वैकहोमे कुर्याच्चेत्पिता चान्द्रायणं पुत्रः प्राजापत्यं चरित्वा ब्राह्मणभोजनसुवर्णपशुदानानि कृत्वा विष्णोर्नुकादिमिन्दाहुत्याश्रावितादीन्रौद्रं मूलहोमं वैष्णवं च द्विरावर्त्य प्रत्येकं हुत्वा तन्त्रयित्वैकहोमे गर्भाधानादीन् कुर्यात् आघारान्ते होमश्चैका भवत्यादावन्ते च प्रत्येकं परिषेकं करोतीति विशेषः ६

ब्राह्मण्यां ब्राह्मणाज्जातमात्रस्य ब्राह्मणस्य प्रथमजन्म स्यादुपनयनसंस्कारे द्वितीयं भवति द्वितीयजन्मन्याचार्यः पिता सावित्री माता द्वाभ्यां जन्मभ्यां द्विजो भवत्यष्टवर्षं ब्राह्मणमुपनयीतेति श्रुतिस्तस्माद्गर्भाधानाद्यष्टमे वर्षे ब्राह्मणस्योपनयनं श्रेष्ठं तदसम्भवे नवमे दशमे वाप्या षोडशात्कुर्यात्षोडशे वर्षेऽतीते पूर्वोक्तमुद्दालकप्रायश्चित्तं गर्भाधानादिसंस्कारं च कृत्वा शुद्धे ब्राह्मणभोजनसुवर्णपशुदानानि कुर्यात्पिता चान्द्रायणं चरित्वा तस्य जातकाग्निमाधायाघारं हुत्वा मिन्दाहुती पूर्णाहुती ब्राह्मं वैष्णवं चाष्टशतमावर्त्य हुत्वा पूर्ववदुपनयनं कुर्यात्पितृभ्रातृज्ञातिसगोत्रमातुलादिषु यः शुचिर्विद्वानुपनयनं करोति अन्यथा मलान्धकारौ तेन याजयति पित्रादिबान्धवालाभेऽन्यं ब्राह्मणमुपनयनार्थं भजेत

व्याधिदुर्भिक्षाद्यैरन्त्यजातौ न्यूने समाश्रिते सुवर्णपशुभूम्यादीन्दत्त्वाग्निमाधाय वैष्णवं यद्देवादीन्ब्राह्ममैन्द्रं वारुणं मूलहोमं व्याहृत्यन्तं हुत्वोपनयनं कुर्यात् ७

उपनयनप्रभृति ब्रह्मचारी पूर्ववत्स्नात्वा सन्ध्यामादित्यं चोपस्थाय तर्पणं ब्रह्मयज्ञं च कृत्वा सायंप्रातरा समावर्तनान्नित्यमग्नौ समिद्भिर्जुहुयात् नित्य-स्नानविहीने पूर्ववत्स्नात्वा जुम्बकाय स्वाहेति निमज्ज्य नारायणं ध्या-यन्सुजुग्बकेनाघमर्षणसूक्तेनाघमर्षणं कृत्वा वैष्णवमन्त्राञ्जपति सन्ध्योपासन-विहीने स्नात्वा दश प्राणायामान्कृत्वाष्टशतं सावित्रीमधीत्य सन्ध्यामुपास्य वैष्णवान्सौरमन्त्रांश्च जपति पुनःसन्ध्यागमादनशनं कृत्वा सन्ध्यामुपासीतेत्येके तर्पणहीने द्विगुणं तर्पयति ब्रह्मयज्ञविहीने पुरुषसूक्तपूर्वं यजुः संहितां स्वाध्यायं करोति प्रातःसमिद्धोमे हीने सायं द्विगुणं सायं हीने प्रातर्द्विगुणं दिनत्रये स्नानादौ हीने पूर्ववत्स्नानजपं कृत्वा सौरमाग्नेयं च हुत्वा समिद्भिर्जुहुयात्सप्तरात्रौ हीने नित्यकर्मण्यवकीर्णो भवति ८

अथावकीर्णप्रायश्चित्तं सप्तरात्रं स्नानसन्ध्योपासनस्वाध्यायसमिद्धोमभैक्षाच-र्यादिहीने मेखलोपवीताजिनदण्डधारणादिब्रह्मचर्यवर्जिते च पादकृच्छ्रमुप-वासं वा कृत्वाग्निमाधाय परिस्तीर्य परिषिच्याज्येन पाहि नो अग्न एनसे पाहि नो विश्ववेदसे यज्ञं पाहि सर्वं पाहि कामावकीर्णः कामाभिद्रुग्धः सं मा सिञ्चन्त्विति हुत्वा पुनरूर्जा सह रय्या पाहि चतसृभिः स्वाहेत्यतो देवा इदं विष्णुरिति जुहुयात् पितृज्येष्ठयोरन्येषामुच्छिष्टभोजने मधुमत्स्यमांससूतक-प्रेतकान्नाद्यभोज्यभोजने च पुनरुपनयनं करोति ९

अथातः पुनरुपनयनं पादकृच्छ्रमुपवासं वा कृत्वाग्निमाधायाघारान्ते व्याहृत्या पलाशसमिधो हुत्वाज्येन विष्णुसूक्तं मिन्दाहुत्याश्रावितादीन् पूर्णाहुती व्याहृतीश्च हुत्वा पूर्ववदुपनयनं करोति वपनमेखलाजिनदण्डधारणव्रतभैक्ष-चरणानि पुनःसंस्कारे वर्ज्यन्तेऽथवा सावित्रीमष्टशतमावर्त्याभिमृश्य तयैव घृतं प्राश्नीयाद्गुरोरुच्छिष्टं वा भुञ्जीत ततः पूतो भवति १०

पारायणव्रतबन्धविसर्गे च कालेऽतीते हीनेऽप्युपनयनाग्निमाधायाघारान्ते तत्तद्व्रतसूक्तं वैष्णव चतुरावर्त्य हुत्वा वेदव्रतानां बन्धं विसर्गं च कुर्यात्

उपाकर्मणि चतुर्वदादिमन्त्रान्ब्राह्ममार्षं चतुरावर्त्य हुत्वोपाकर्म कुर्वीत श्रावणहोमं हुत्वान्ते सावित्र्या सहस्रसमिधो जुहोति श्रावणे चोपा-कर्मवत्प्रायश्चित्तं विधीयते प्राजापत्यादिवेदव्रतान्याचरन्वेदानधीयीतानधी-यानः सर्वकर्मबहिष्कार्यो भवत्यशक्तोऽपि यत्किञ्चिच्छाखामधीयीत समाव-र्तनं कृत्वा स्नातको व्याहृत्याग्नावाज्यमा पाणिग्रहणान्नित्यं जुहोति समा-वर्तनक्रियाहीने पाणिग्रहणे कृते चान्द्रायणं चरित्वाग्निमाधाय सावित्रीं वैष्णवं ब्राह्ममार्षमाग्नेयं शतमावर्त्य हुत्वा समावर्तनं कृत्वा पुनर्विवाहं करोति पुनर्विवाहे पूर्ववत्सर्वं कुर्यात् ११

ब्राह्मणो ब्राह्मणीं नग्निकां गौरीं वा कन्यां क्षत्रियः क्षत्रियां वैश्यो वैश्यां वरयेदष्टवर्षादा दशमान्नग्निका रजस्यप्राप्ते दशवर्षादा द्वादशाद्गौरीत्यामनन्ति समावर्तनं कृत्वा विवाहकालेऽतीते क्रियाहीनेऽप्युपनयनाग्नावाघारं हुत्वा ब्राह्मं वैष्णवमाग्नेयं शतमावर्त्य हुत्वाग्न्यर्थं पुत्रार्थं च ब्रह्मादिषु चतुर्षु पूर्वालाभे परेण ब्राह्मणो विवाहं कुर्यादासुरादिष्वसत्पुत्रा जायन्ते तस्मादासुरेण गान्धर्वेण विवाहे कृते चान्द्रायणं चरित्वाग्निमाधाय ब्राह्मं त्रयस्त्रिंशद्वैष्णवं सावि-त्रीमाग्नेयं शतमावर्त्य हुत्वा ब्रह्मादिष्वेकेन पुनर्विवाहं कुर्यादासुराद्द्विगुणं गान्धर्वे गान्धर्वाद्द्विगुणं राक्षसे राक्षसाद्द्विगुणं पैशाचे प्रायश्चित्तं करोत्या-सुराद्यैः शस्तैः क्षत्रियवैश्यौ विवाहं कुर्यातां पूर्वेषामलाभे परेण ब्राह्मणेना-सुरगान्धर्वौ च विधिना कर्तव्यावित्येके होमं हुत्वा राक्षसपैशाचौ चेत्य-परेऽन्यथा कन्यागमनप्रायश्चित्तं करोति १२

रजःप्राप्तौ कन्यां विवाहे कृते कृच्छ्रं चरित्वाग्निमाधाय वैष्णवं सावित्रीं शतमावर्त्य हुत्वा तां पुनर्विवाहं कुरुते विवाहे होमकाले कन्याया रजस्युत्पन्ने तां स्नापयित्वान्यद्वस्त्रं परिधाप्य पुण्याहं कृत्वा प्रोक्षणैः प्रोक्ष्य मिन्दाहुत्या-श्चावितादीन्व्याहृतीश्च हुत्वा कर्म प्रवर्तेत तत्क्रियापरिसमाप्ते सा वधूरशु-चिर्भवति ज्येष्ठे तिष्ठत्यनुजेन विवाहे कृते परिवेत्तानुजश्चान्द्रायणं चरित्वा परिवित्तिं ज्येष्ठं विवाहं कारयित्वा पूर्ववत्प्रायश्चित्तं हुत्वा पुनर्विवाहं कुर्यात् १३

परदेशगते ज्येष्ठे द्वादशवर्षेऽतीते मृतस्येवाकृतिदहनादि कर्म कृत्वा प्रायश्चित्तं

हुत्वा विवाहं कुरुते तस्मिन्पुनरागतेऽनुजः पूर्ववत्प्रायश्चित्तं हुत्वा विवाहं करोति ब्रह्महत्याद्यैः पतिते ज्येष्ठे बान्धवसन्निधौ वारिपूर्णघटत्यागेनैव तं त्यक्त्वा चान्द्रायणं चरित्वा विवाहं कुरुते विवाहान्ते वधूगृहाद्विवाहाग्नि-मौपासनं वधूं च स्वगृहमानीयोत्तरस्यां यथोक्तेऽग्निकुण्डे पूर्ववद्बर्हिषा खनित्वा प्रादेशमात्राः प्रागन्ताश्चोत्तरान्तास्तिस्रस्तिस्रो लेखाः षडुल्लिखित्वा प्रोक्ष्य हिरण्यशकलं व्रीहीन्वा निधाय तत्राग्निं निदधाति सोऽग्निर्नित्यं धार्य-श्चतुर्थेऽहन्याग्नेयस्थालीपाकं वैश्वदेवं च कुर्यादित्येके १४

पाणिग्रहणप्रभृति गृहस्थोऽपि नित्यं स्नानं सान्ध्योपासनं ब्रह्मयज्ञं च कृत्वा नित्यमग्न्याधानाद्विवाहाग्नावौपासने परिस्तीर्य परिषिच्य सायंप्रातर्व्रीहिभिर-ग्निहोत्रहविषा वा होमं जुहुयात् सायंहोमे हीने प्रातरग्नये स्वाहा वैश्वानराय स्वाहेति प्रातर्होमे हीने सायमग्नये स्वाहा पथिकृते स्वाहेति प्रायश्चित्ताहुतीर्हुत्वा पूर्ववदा त्र्यहाज्जुहोत्यौपासनेऽजस्रे वर्तमाने त्र्यहे होमे विच्छिन्ने पतिरेको-पवासं कृत्वा तत्पुनराधानं करोति सद्योऽनुगते क्षिप्रं त्र्यहाभ्यन्तरेऽग्निं ध्यात्वा तद्भस्मायं ते योनिरिति समिधमारोप्योद्बुध्यस्वेति लौकिकाग्नौ समिधं निधाय पूर्ववत्प्रायश्चित्तं हुत्वा नित्यं जुहुयात् अनुगते त्र्यहेऽतीतेऽन्याग्निनापि संसर्गे च पत्नी प्राजापत्यं पादकृच्छ्रं वा पतिरेकोपवासं कृत्वा पुनराधानं कुर्यात् १५

अथातः पुनराधानं पूर्ववदरण्यां मथितं व्याहृत्या श्रोत्रियागारादाहृतं वाग्निमाधाय पूर्ववदाघारं जुहुयादग्निं परिषिच्योत्पूतमाज्यं स्रुवेणादाय स्रुचि चतुर्गृहीतं गृहीत्वा पूर्णाहुती जुहोति तथा चतुर्गृहीतं गृहीत्वा तन्तुं तन्वन्नुद्बुध्यस्वाग्ने त्रयस्त्रिंशत्तन्तव इति तन्तुमतीस्तिस्रोऽग्नेऽभ्यावर्तिन्नग्नेऽङ्गिरः पुनरूर्जा सह रय्येत्यभ्यावर्तिनीश्चतस्रो मनो ज्योतिरिति मनस्वतीं प्रजापति-र्जयानिति प्राजापत्यमन्वग्निरुषसामित्यनुख्यामयाश्चाग्नेऽसीति प्रायश्चित्तीया-मुद्वयं तमस इति ज्योतिष्मतीमायुर्दा अग्न इत्यायुर्दां मिन्दाहुती व्याहृतीश्च प्रत्येकं चतुर्गृहीतं गृहीत्वा पुनराधानं हुत्वा पूर्ववदौपासनं जुहोत्यौपासनं धार्यं कर्तुमशक्तोऽध्वानं गमिष्यन्वाप्ययं ते योनिरित्यरण्यां समारोप्य पुनर्जातवेद इत्यहरहर्मथित्वा जुहुयात् अथवा या ते अग्न इत्यात्मन्युपावरोहेति समिधं वा समारोप्य तेनैव लौकिकाग्नावरोप्य जुहुयात् समारोपणे कृते होमे विच्छिन्ने पूर्ववत्प्रायश्चित्तमा द्वादशाहाज्जुहोति द्वादशाहे विच्छिन्ने पुनराधानं करोति मासे

विच्छिन्ने प्राजापत्यं षरामासे चान्द्रायणं संवत्सरे प्राजापत्यं तप्तकृच्छ्रं चान्द्रायणं चरित्वा तद्द्रव्यं ब्राह्मरोभ्यो दत्त्वा पुनराधानं कुर्यादग्नौ त्यक्ते भ्रूणहा भवति पर्वणि पर्वणि स्थालीपाकः प्रसिद्ध एवमौपासनं हुत्वा पञ्च महायज्ञान्करोति १६

ब्रह्मयज्ञो देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चेति पञ्च महायज्ञाः सावित्रीपूर्वं नित्यमिषे त्वोर्जे त्वेति यथाकामं नैमित्तिके सावित्रीपूर्वैर्द्वादशसूक्तैरग्निमीडे पुरोहितमिषे त्वोर्जे त्वाग्न आयाहि शं नो देवीरिति चतुर्वेदादिमन्त्रैर्वा स्वाध्यायो ब्रह्मयज्ञः पक्वेनान्नेन वैश्वदेवेन देवेभ्यो होमो देवयज्ञः पितृभ्यो बलिहरणं पितृयज्ञो भूतेभ्यो बलिदानं भूतयज्ञोऽतिथिभ्योऽभ्यागतेभ्योऽन्नप्रदानं मनुष्ययज्ञो गृहस्थो यत्पक्वं भुञ्जीत पक्वेन तेन भोक्ष्यन्नभोक्ष्यन्वापि स्वगृहे तस्मिन्नौपासनाग्नौ लौकिकाग्नौ वा सायप्रातर्वैश्वदेवं जुहुयात् रात्रावमन्त्रकं बलिहरणं पत्नी वा करोत्येकाहे वैश्वदेवहोमे हीने मनो ज्योतिरिति प्रायश्चित्तं हुत्वा वैश्वदेवं जुहुयात् १७

त्र्यहे होमे हीने तन्तुं तन्वन्नित्यादि तन्तुमतीर्वैष्णवं जुहुयाद्द्वादशाहेऽग्ना-वौपासने स्थालीपाकं कृत्वा पूर्ववदवकीर्णप्रायश्चित्तं जुहोति प्रवासेऽध्वनि परस्य गेहे च भोक्ष्यन्लौकिकाग्नाविन्धनाभावे भस्मापोह्याङ्गारेऽङ्गाराभावे जले वा जुहोत्यन्नाभावे जलेनैव वैश्वदेवं कुर्याद्वैश्वदेवान्ते यत्नेनातिथिमभ्यागतं च भोजयति तयोरागतयोर्भोजने हीने वैश्वदेववत्प्रायश्चित्तं करोति पाणिग्रहणप्रभृति गृहस्थधर्माण्यनुतिष्ठेत चतुर्थीव्रतक्रियाहीने संगमने कृते चान्द्रायणं चरि-त्वाग्निमौपासनमाधाय वैष्णवं ब्राह्ममार्षमाग्नेयं बार्हस्पत्यं च हुत्वा पुनश्चतु-र्थीहोमं कुर्यादौपासने स्थालीपाकादीन्पाकयज्ञसंस्थाञ्जुहोति १८

अथातः पाकयज्ञसंस्थानां प्रायश्चित्तं द्वाविंशद्यज्ञेषु पञ्चमहायज्ञानुष्ठानं प्रथमो यज्ञः तस्य प्रायश्चित्तं पूर्वमेवोक्तं पर्वणि स्थालीपाके हीने पादकृच्छ्रमुपवासं वा कृत्वाग्निं प्रणम्य प्राणायामं कृत्वाग्निदैवत्यं पथिकृद्दैवत्यं च स्थाल्यां द्वौ चरू पक्त्वाग्निं परिस्तीर्य परिषिच्याज्येनाग्नेयं सौम्यं स्विष्टाकारं मिन्दाहुती वैष्णवं व्याहृत्यन्तं हुत्वा पूर्ववत्स्थालीपाकं द्विगुणं जुहुयात् आग्रयणहोमे हीने नवान्ने भुक्ते पादकृच्छ्रमुपवासं वा कृत्वा स्थाल्यामैन्द्राग्नं चरुं श्रपयित्वा

पक्वेनाज्यमिश्रेणाग्नेयमैन्द्रं वैश्वदेवं स्विष्टाकारं पूर्णाहुती वैष्णवं च हुत्वा पूर्ववदाग्रयणं कृत्वा ब्राह्मणान्भोजयित्वा नवान्नं भुञ्जीत यथोक्तकालेऽष्टकाहोमं हुत्वा पितृभ्यः पिराडं निरुप्य ब्राह्मणान्भोजयेदथवाष्टकेति ब्राह्मणान्भोजयेदुद्यन्तं वा ददात्यष्टकाहीने वैश्वदेवपैतृकौ द्वौ चरू पक्त्वाज्यपक्वाभ्यां वैश्वदेवं वैष्णवं रौद्रं याम्यं पैतृकहोमं च त्रिरावर्त्य पूर्ववदष्टकां कुर्यात् १९

पिराडपितृयज्ञे मासिश्राद्धे च हीनेऽष्टकावत्प्रायश्चित्तं जुहोति चैत्रीयज्ञविहीने चरुं पक्त्वाज्येन चरुणा सौम्यं श्रीदैवत्यं विष्णुसूक्तं मिन्दाहुत्याश्राविता-दीन्हुत्वा पूर्ववच्चैत्र्या यजेताश्वयुजीयज्ञविहीने चरुं पक्त्वाज्यचरुभ्यां रुद्रसूक्तं मिन्दाहुत्याश्रावितादीन्हुत्वा पूर्ववदाश्वयुज्या यजेत प्रातर्होमान्ते विष्णोर्नित्यार्चने हीने सायं द्विगुणं सायं हीने प्रातर्द्विगुणमर्चनं हविर्निवेदनं च कुर्यादा द्वादशाहाद्द्वादशाहेऽतीते पुरुषसूक्तविष्णुसूक्ताभ्यां हुत्वा पूर्ववदभ्यर्च्य हविर्निवेदयति २०

षष्ठः प्रश्नः समाप्तः

अथ मृतसंस्कारप्रायश्चित्तं जातकसंस्कारो मृतसंस्कारश्चेति द्वौ संस्कारौ भवतः पूर्वेणेमं लोकं परेण परलोकं जयति मृतसंस्कारः शरीरस्य दहनमित्याहुः निर्दोषशरीराहुतिरग्नेः प्रियतमा भवति तयाहुत्या स मृतको देवलोकं गच्छति मातापित्रोः त्रोऽन्यो भ्राता सपिराडः सगोत्रः पितुर्मातुश्च योनिबन्धुर्गुरुशिष्यर्त्विजो वा पत्न्याः पतिः सुतः पत्युर्भ्राता सपिराडः सगोत्रः पितुर्मातुश्च योनिबन्धुर्वा पुत्रस्य पित्रादयो मृतस्य शरीरं दाहयति मृतस्य संस्कारे कृते संस्कर्तुः सर्वसंपत्समृद्धिः स्यादन्यथा भ्रूणहत्यामवाप्नोति तस्माद्ब्रह्ममेधेन पितृमेधेन वा विधानेन पूर्ववदग्निर्यजुर्भिः सेनेन्द्रस्य वाचस्पते विधे नामन्वाचस्पते वाचो वीर्येण सोमः सोमस्य वाचस्पतेऽच्छिद्रया वाग्घोतेति सप्तभिर्मन्त्रैराहिताग्नेः शरीरं पञ्चाग्निभिस्त्रेताग्निभिर्वा दाहयति अग्निर्यजुर्भिः सेनेन्द्रस्येति द्वाभ्यामौपासनाग्निना गृहस्थमनाहिताग्निं तदपनयनाग्निना ब्रह्मचारिणं च दाहयेत् अस्मात्त्वमधि भूः पृथिवीं गच्छतु भुवोऽन्तरिक्षं गच्छतु सुवर्दिवं गच्छत्विति चतुर्भिर्मन्त्रैरित्येके १

आहिताग्निरनाहिताग्निश्च पूर्वं पत्न्या मरणे स्वकीयाग्नेरर्धमादाय तदग्निना

तैर्मन्त्रैस्तां दाहयित्वान्यामुपयम्य पुनरग्निमादधीत सहमरणे सहैकचितायां दम्पती दाहयति कृतचौडमनुपनीतं जातकाग्निना लौकिकाग्निना वास्मात्त्वमधीत्येकर्चया दाहयेत् जातदन्तस्य पितृमेधवत्तूष्णीं दहनं कुर्यादजातदन्तं भूम्यामवटेऽपिदधाति अथवा कृतचौडौ कन्याकुमारौ जातदन्तं कुमारं मृतदारं विधवामितरांश्च तूष्णीं मृतकं स्नापयित्वा शाखया श्मशानं पूर्ववदपेत वीतेति संमृज्य चितायां प्रेतमारोप्य हिरण्यशकलतिलतण्डुलान्या वो वहेत्यास्ये निदधाति आज्यमस्मात्त्वमधीति व्याहृतीश्च हुत्वा वातास्ते वान्त्विति सिग्वातं कृत्वेमा आपो मधुमत्य इत्यादिभिरुदकुम्भं परीत्योत्क्षिप्य कपालशेषोदकं भूः पृथिवीमित्यास्ये दत्त्वा कपालसंतपनाग्निनास्मात्त्वमधीत्येकर्चया सावित्र्या वा दाहयति २

शवेऽन्याशौचयुक्ते श्वकुक्कुटसूतिकारजस्वलाद्यस्पृश्यस्पर्शने च मृतकं पञ्चगव्यैः कुशतोयैश्च स्नापयित्वा प्रोक्षणैः प्रोक्ष्य विधिवद्दहनं करोति देशान्तरे मृते दहनविहीने श्वकाकाद्यैः शवे जीर्णे तदस्थीन्यादाय काषायतोयैः पञ्चगव्यैः कुशतोयैश्च प्रक्षाल्याकृतिं कृत्वा तस्याग्नौ वैश्वदेवं याम्यं पैतृकं व्याहृतीश्च प्रायश्चित्तं हुत्वा विधिवद्दहनं कुर्यादमन्त्रकं शवे दग्धे तदस्थीन्यादाय पयसाज्येन प्रक्षाल्याकृतिं कृत्वा पूर्ववत्प्रायश्चित्तं हुत्वा समन्त्रकं दाहयति तदस्थ्नामप्यलाभे दशाहादूर्ध्वं पालाशपर्णैर्विधानेनाकृतिं कृत्वा प्रायश्चित्तान्ते तदग्निना दाहयेत्कर्तुरेवाशौचं भवति त्र्यहं बलिनिर्वापणमाशौचं चेति केचित्सूतिकां मृतामुदक्यां च दावाग्निना मन्त्रहीनं दाहयित्वा दशाहेऽतीते तदस्थिभिः पालाशपर्णैर्वाकृतिं कृत्वा दहनं करोत्यथवा तदह्न्येव काषायतोयैः पञ्चगव्यैः कुशतोयैश्च स्नापयित्वा पुण्याहं कृत्वा प्रोक्षणैः प्रोक्ष्य विधिवद्दहनं कुर्यादित्येके ३

सगर्भाया मरणे स्पन्दमानेनोदरेण जीवन्तं गर्भमालक्ष्य भर्ता पुत्रोऽन्यो बन्धुर्वा वैद्यकुशलाभ्यां नाभ्युपस्थयोरन्तरे गर्भं परिहरन्हिरण्यगर्भ इति शस्त्रेणोत्पाटयति शस्त्रस्पर्शनाद्गर्भस्य मरणे पतितो भवति जीवन्तमपत्यमुन्मुच्य स्नापयित्वादाय धात्रीं लोकमातरमभ्यर्च्य तस्यान्यां मातरं कल्पयति प्रेतायाः कुक्षावाज्येन प्राणाय स्वाहापानाय स्वाहेति हुत्वा निर्व्रणं कृत्वा तां स्नापयित्वा विधिवद्दहनं करोति कुमारस्य जातकाग्नौ पूर्ववज्जातकं कुर्यात्

सूतकप्रेतकयोरेकाहसंनिपाते तन्त्रयित्वा वास्तुहोमं हुत्वा पृथगेवोत्थानहोमं पिण्डनिर्वापं च करोति ब्राह्मणाद्यैश्चण्डालान्तैरद्भिः सर्पेण दंष्ट्रिनाशनि-पातेनाग्निना पशुना वा पापमरणे तस्याशौचवाक्तोदकम्पनाश्रुशवभरणानुगम-नदहनोदकबलिपिण्डदानादि कस्यचिन्नैव कुर्यादेतानि कर्तुश्चान्द्रायणं तप्त-कृच्छ्रं प्रायश्चित्तं भवति पापमृतस्य शरीरं दावाग्निना शूद्रैर्दाहयित्वा दशा-हेऽतीते नारायणबलिं कुर्यादथवा पालाशपर्णैरेवाकृतिदहनं करोति शवस्य दहनकालेऽतीते क्रियाहीने विपर्यासे च प्रेतकर्मणि सर्वत्र तिलैरेव वैश्वदेवं याम्यं पैतृकं व्याहृतीश्च प्रायश्चित्तं जुहोति शवस्य दहनार्थं होमे हुते तदग्नावुत्सन्ने पूर्ववद्भस्म समिधमारोप्य लौकिकाग्नौ निधाय प्रायश्चित्तं हुत्वा तेनाग्निना दहनं कुर्यात् ४

उपनयनादूर्ध्वं ब्राह्मणस्य मरणे सपिण्डानां दशाहमाशौचं विधीयते दन्त-जननादूर्ध्वं त्र्यहं नामकरणादूर्ध्वमेकाहं जननादूर्ध्वं मद्यः शौचं स्त्रियाश्च मरणे विवाहादूर्ध्वं दशाहमष्टवर्षादूर्ध्वं त्र्यहं चौडकादूर्ध्वमेकाहं पूर्वं सद्यः शौचं मातापित्रोर्भ्रातॄणां च सर्वत्र दशाहमेव गर्भे मृते गर्भिण्यास्तन्मासतुल्यैर-होभिराशौचं सूतके चान्यसूतके प्राप्ते प्रेतके चान्यप्रेतके प्राप्ते पूर्वाशौचेन शुद्धिः स्यादितरस्य प्राप्तेऽपरस्यैवाहोभिः शुद्धिर्भवति असपिण्डशवस्य स्नानालंकरणे कृते त्र्यहं दिवसं वा वहने कृते स्नात्वा दश प्राणायामान्कृत्वा नक्षत्रदर्शनात्पूर्वं ग्रामाद्बहिरासीत तावदेवाशौचं रात्रौ सूर्योदयात्पूर्वमासीतान्यथा तद्ग्रामे प्रविष्टे शवभर्तुरेकाहं तद्गृहे प्रविष्टे त्र्यहं तत्र भोजने कृते दशाहं भवति ५

प्रेतं ज्ञातिमज्ञातिं वानुगम्य स्नात्वाग्निं स्पृष्ट्वा घृतं प्राश्नीयात् आत्मनः पितुर्मातुश्च योनिबन्धूनां च मरणे विज्ञाते सचेलस्नानं करोति द्वितीयेऽहनि पुनर्दहनप्रभृति तदश्मन्युदकं दत्त्वा दक्षिणाग्रं कूर्चं निधाय तन्नाम्ना प्रेतमावाह्य तैलमञ्जनं स्नानं वासोदकं दत्त्वा पाद्याचमनगन्धपुष्पधूपदीपाक्षताचमनैरभ्यर्च्य सायंप्रातर्बलिं दत्त्वोदकं ददाति प्रातर्बलौ हीने सायं द्विगुणं सायं हीने प्रातर्द्विगुणमेवमा दशाहात्करोति श्वकुक्कुटसूतिकोदक्यान्त्यजैरश्मनि स्पृष्टे पञ्चगव्यैः प्रक्षाल्य बलिं दद्यात् सप्तमेऽहनि नवे मृत्पात्रे चितास्थीन्यादाय पुण्यनद्यां समुद्रे वा प्रक्षिपति अन्तर्दशाहेऽमावास्या यदि भवेत्तस्यामेव शेषान्बलीन्दत्त्वा बलिकर्म समापयति द्विचन्द्रदर्शने महान्दोषो भवेत् दशमेऽहन्येकदा बलिं दत्त्वाश्मानं

विसृजेत् ६

जातदन्तस्य चौडकात्पूर्वं मरणे त्र्यहं भूमौ तूष्णीं बलिनिर्वापणमित्येके दहनप्रभृत्याहिताग्नेर्मरणप्रभृत्यनाहिताग्नेरेकादशेऽहन्येकोद्दिष्टं कुर्यात् एकोद्दिष्टनिमित्तश्राद्धे तन्नाम्ना प्रेतनिमित्तं भुङ्क्ष्वेति ब्राह्मणं वरयित्वा प्रेताय स्वधेति पाणौ तिलोदकं दत्त्वा होमं पिण्डदानं च कृत्वान्नादि सकृत्सकृद्दत्वा भोजयेदुद्यन्तं वा ददातीति केचित् निमित्तश्राद्धे मासेऽतीते हीने च प्राजापत्यं चरित्वा प्रायश्चित्तं हुत्वा पूर्ववदेकोद्दिष्टं कुर्यात्सपिण्डीकरणात्पूर्वं मासि मासि तन्मरणदिने पिण्डं निरुप्यैकं भोजयति द्वादशे षष्ठे तृतीये वा मासे शुभकार्ये प्राप्ते द्वादशाहे वा सपिण्डीकरणं कुर्यात् ७

पूर्वेद्युर्द्वौ विश्वेदेवार्थं त्रीन्पित्रर्थमेकं प्रेतार्थं सपिण्डीकरणश्राद्धे भोक्ष्यतामिति वरयित्वा स्वाहा स्वधेति तेषां करे तिलोदकं दत्त्वा पितृभ्यः स्वधेति पात्रं तिलोदकैः पूरयित्वा पितृनावाह्य तन्नाम्ना प्रेताय स्वधेत्यन्यत्पात्रं पूरयित्वा प्रेतमावाह्य तथा होमं हुत्वा पिण्डं निरुप्य विश्वेदेवाभ्यां द्विर्द्विर्दत्त्वा पितृभ्यः प्रेताय सकृत्सकृद्दत्त्वा तान्भोजयति पितृपिण्डैः प्रेतपिण्डं समारोप्य पितृपात्रोदकैः प्रेतपात्रोदकं संयोजयति सपिण्डीकरणे हीने कृतं शुभकार्यं विनश्यति तस्मात्प्रायश्चित्तं हुत्वा सपिण्डीकरणं कृत्वा भिन्नेऽहनि विष्णुसूक्तं मिन्दाहुत्याश्रावितादीन्हुत्वा पुनः शुभकर्म कुर्यात् अष्टकाहीने तद्वंशविनाशो भवेद्यत्नेनाष्टकं करोति यथोक्तजलदानपिण्डनिर्वापब्राह्मणभोजनेषु श्रद्धया कृतेषु सर्वसम्पत्समृद्धिर्वंशविवर्धनं च भवेदिति विज्ञायते ८

गृहस्थस्यौपासने विच्छिन्ने यदि प्राणोत्क्रान्तिर्वृद्धानुज्ञातस्तत्पुत्रः श्रोत्रियागारादग्निमाहृत्य संस्कृतायां भुवि व्याहृतिभिः संस्थाप्योपतिष्ठेत जुष्टो दमूना इत्यथैनं परिसमूह्य परिस्तीर्य पर्युक्ष्याज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा सप्त व्याहृतीर्हुत्वा पुनरपि पूर्ववद्गृहीत्वा पूर्वं देवाः प्राणापानाविति द्वाभ्यां मा त्वा वृक्षौ संबाधिष्टां मा त्वा वृक्षौ संबाधेथामिति द्वाभ्यामग्नेऽभ्यावर्तिन्नग्ने अङ्गिर इति द्वाभ्यां पुनरूर्जा सह रय्येति द्वाभ्यामयाश्चाग्ने ब्राह्मण एकहोतेति द्वाभ्यां क्रमेण चतुर्गृहीतानि हुत्वा पुनश्चतुगृहीतं गृहीत्वा महाव्याहृतीश्च जुहुयादेवमग्निमुत्पाद्य पूर्वोक्तेन विधिना दहनं कुर्यात् ९

सप्तमः प्रश्नः समाप्तः
समाप्तं गृह्यसूत्रम्

अथ वर्णाश्रमधर्मं १ ब्राह्मणक्षत्रियवैश्यशूद्रा मुखबाहूरुपादेषु जाताश्चत्वारो वर्णा २ यस्माद्ब्राह्मणोऽस्य मुखमासीदिति श्रुतिः ३ पूर्वेषां त्रयाणां निषेकाद्याः संस्कारा विधीयन्ते ४ तेषां द्विजन्मनां वेदाधिकारस्तस्माद्ब्राह्मणस्याध्ययनाध्यापनयजनयाजनदानप्रतिग्रहाणि षट्कर्माणि भवन्ति ५ क्षत्रियवैश्ययोर्यजनाध्ययनदानानि ६ क्षत्रियस्य प्रजापालयदुष्टनिग्रहयुद्धाः वैश्यस्य पाशुपाल्यकुसीदवाणिज्यानि ७ शूद्रस्य द्विजन्मनां शुश्रूषा कृषिश्चैव ८ ब्राह्मणस्याश्रमाश्चत्वारः क्षत्रियस्याद्यास्त्रयो वैश्यस्य ९ द्वावेव तदाश्रमिणश्चत्वारो ब्रह्मचारी गृहस्थो वानप्रस्थो भिक्षुः १० इति उप-नीतो ब्रह्मचारी मेखलोपवीताजिनदण्डधारी स्नात्वा तर्पणं ब्रह्मयज्ञं सायंप्रातः सन्ध्योपासनसमिद्धोमौ च कुर्वन्गुरोः पादावुपसंगृह्य नित्याभिवन्दी व्रतेनाध्ययनं करोति १३ स्थिते गुरौ स्थेयादुत्थिते पूर्वमुत्थाय व्रजन्तमनुगच्छेदासीने शयाने च नियुक्तो नीचैरन्वासनशयने कुर्याद् १४ अनुक्तो यत्किञ्चित्कर्म नाचरति १५ अनुक्तोऽपि स्वाध्यायनित्यकर्माण्याचरेद् १६ १

उष्णाम्बुस्नानदन्तधावनाञ्जनानुलेपनगन्धपुष्पोपानट्छत्रदिवास्वापरेतःस्कन्दस्त्रीदर्शनस्पर्शनमैथुनानि कामक्रोधलोभमोहमदमात्सर्यहिंसादीनि वर्जयित्वा सदा शुश्रूषुर्गुरोः प्रियहितकर्माणि कुर्वीत १ अद्वेषी वाक्चित्तानुकूलः प्रियं सत्यं वदति ३ आर्तोऽप्यसत्याप्रियं निन्दं नाचक्षीत ४ मधुमांसमत्स्यरसशुक्ताद्यभोज्यभोजनवर्जी भैक्षाचरणं कृत्वा गुरुणानुज्ञातो भैक्षान्नमश्नीयाद् ५ गुरुवृद्धदीक्षितानामाख्यां न ब्रूयाद् ६ गुर्वभावे तत्पुत्रे च गुरुवत्कर्माचरति ७ ब्रह्मचारिणश्चतुर्विधा गायत्रो ब्राह्मः प्राजापत्यो नैष्ठिकेति ९ गायत्रोपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीमधीत्या सावित्रव्रतसमाप्तेरत्र व्रतचारी १० ब्राह्मः सावित्रव्रतादूर्ध्वमनभिशस्तापतितानां गृहस्थानां गृहेषु भैक्षाचरणं वेदव्रतचरणं च कृत्वा द्वादश समा विंशति समा वा गुरुकुले स्थित्वा वेदान्वेदौ वेदं वा सूत्रसहितमध्ययनं कृत्वा गार्हस्थ्यानुसरणं कुर्यात् १४प्राजापत्यः स्नात्वा नित्यकर्मब्रह्मचर्यशीलो नारायणपरायणो वेदवेदाङ्गार्थान्विचार्य दारसंग्रहणं करोतिप्राजापत्ये त्रिसंवत्सरा-

दूर्ध्वं न तिष्ठेदित्यृषयो वदन्ति १६  २

नैष्ठिकः काषायं धातुवस्त्रमजिनं वल्कलं वा परिधाय जटी शिखी वा मेखली दण्डी सूत्राजिनधारी ब्रह्मचारी शुचिरक्षारलवणाशी यावदात्मनो विप्रयोगस्तावद्गुरुकुले स्थित्वा निवेदितभैक्षभोजी भवति ३ दारान्संगृह्य गृहस्थोऽपि स्नानादिनियमाचारो नित्यमौपासनं कृत्वा पाकयज्ञयाजी वैश्वदेवहोमान्ते गृहागतं गुरुं स्नातकं च प्रत्युत्थायाभिवन्द्यासनपाद्याचमनानि प्रदाय घृतदधिक्षीरमिश्रं मधुपर्कं च दत्त्वान्नाद्यैर्यथाशक्ति भोजयति ७ भिक्षून्ब्रह्मचारिणोऽतिथीन्वेदविदः श्रोत्रियान्पितृव्याचार्यर्त्विङ्मातुलश्वशुरादीनभ्यागतान्बालवृद्धानानाथार्ताध्वश्रान्तांश्च यथार्थं पूजयति ९ अशक्तोऽप्यग्रं भिक्षां वा सोदकं दत्त्वा शेषं भुञ्जीत १० दयासत्यशौचाचारयुतः स्वाध्यायतर्पणाभ्यामृषीन्यज्ञबलिहोमजलपुष्पाद्यैर्देवान्श्राद्धैः पुत्रैश्च पितृन्बलिना भूतानन्नाद्यैर्मनुष्यांश्च नित्यमर्चयेद् १२ ऋणत्रयेण मुक्तोऽनृणो भवति १३ गृहस्थाश्चतुर्विधा वार्तावृत्तिः शालीनवृत्तिर्यायावरो घोराचारिकश्चेति वार्तावृत्तिः कृषिगोरक्ष्यवाणिज्योपजीवी १४ शालीनवृत्तिर्नियमैर्युतः पाकयज्ञैरिष्ट्वाग्नीनाधाय पक्षे पक्षे दर्शपूर्णमासयाजी चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी षट्सु षट्सु मासेषु पशुबन्धयाजी पतिसंवत्सरं सोमयाजी च १५  ३

यायावरो हविर्यज्ञैः सोमयज्ञैश्च यजते याजयत्यधीतेऽध्यापयति ददाति प्रतिगृह्णाति षट्कर्मनिरतो नित्यमग्निपरिचरणमतिथिभ्योऽभ्यागतेभ्योऽन्नाद्यं च कुरुते २ घोराचारिको नियमैर्युक्तो यजते न याजयत्यधीते नाध्यापयति ददाति न प्रतिगृह्णात्युञ्छवृत्तिमुपजीवति नारायणपरायणः सायंप्रातरग्निहोत्रं हुत्वा मार्गशीर्षज्येष्ठमासयोरसिधाराव्रतं वनौषधिभिरग्निपरिचरणं करोति ७ गृहस्थः सपत्नीकः पञ्चाग्निभिस्त्रेताग्निभिर्वा गृहाद्वनाश्रमं यास्यन्नाहिताग्निरनाहिताग्निश्चौपासनमरण्यामारोप्य गृहे मथित्वा श्रामणकीयविधानेनाधायाघारं हुत्वा श्रामणकाग्निमादाय तृतीयमाश्रमं गच्छेत् १० पूर्ववदग्नचालयप्रोक्षणोल्लेखनादि कर्म कुर्यात् ११ तृतीयामपि वेदिं परिमृज्य षडङ्गुलाग्रेर्दर्भैर्ग्रथितेऽधस्त्रिधा कृतं रज्जुवद्मूले बद्धं षट्त्रिंशदङ्गुलप्रमाणं परिस्तरणकूर्चं कृत्वा मध्यवेद्यां परिस्तृणाति श्रामणकं १४ श्रामणकयज्ञं यज्ञदैवतविश्वान्देवानित्यन्तमावाह्याज्यं निरूप्य श्रामणकाय स्वाहा श्रामणकयज्ञाय स्वाहा

यज्ञदैवतविश्वेभ्यो देवेभ्यः स्वाहेत्यन्तं हुत्वा चरुं जुहुयादित्याघारविशेषः १७ श्रामणकाग्नेश्चोर्ध्ववेदिर्द्वात्रिंशदङ्गुल्यायता चतुरङ्गुलिविस्तारोन्नता १८ ४
मध्यमा तत्परिगता पञ्चाङ्गुलिविस्तारा चतुरङ्गुलोत्सेधा १ अधस्तादूर्ध्ववेदिविस्तारोन्नता तृतीया वेदिः २ द्वादशाङ्गुलं मध्ये निम्नं त्रिवेदिसहितं कुण्डं कृत्वाधाय वनस्थो नित्यमौपासनवत्सायंप्रातराहुतीर्हुत्वा महाव्याहृतिभिः श्रामणकाग्निं जुहुयाद् ४ अपत्नीको दारैरग्निभिर्विना वनं गच्छेत् ५ वानप्रस्थाः सपत्नीका अपत्नीकाश्चेति ६ सपत्नीकाश्चतुर्विधा । औदुम्बरो वैरिञ्चो वालखिल्यः फेनपश्चेति ७ औदुम्बरोऽकृष्टफलावाप्यौषधिभोजी मूलफलाशी वावणहिङ्गुलशुनमधुमत्स्यमांसपूत्यन्नधान्याम्लपरस्पर्शनपरपाकवर्जी देवर्षिपितृमनुष्यपूजी वनचरो ग्रामबहिष्कृतः सायंप्रातरग्निहोत्रं हुत्वा श्रामणकाग्निहोमं वैश्वदेवहोमं कुर्वंस्तपः समाचरति ११ श्रामणकाग्निमेकमेवाधाय जुहोतीत्येके १२ वैरिञ्चः प्रातर्यां दिशं प्रेक्षते तां दिशं गत्वा तत्र प्रियङ्गुयवश्यामाकनीवारादिभिर्लब्धैः स्वकीयानतिथींश्च पोषयित्वाग्निहोत्रश्रामणकवैश्वदेवहोमी नारायणपरायणस्तपःशीलो भवति १४ वालखिल्यो जटाधरश्चीरवल्कलवसनोऽर्काग्निः कार्त्तिक्यां पौर्णमास्यां पुष्कलं भुक्तमुत्सृज्यान्यथा शेषान्मासानुपजीव्य तपः कुर्यात् १७ अस्य सूर्य एवाग्निर्भवतीत्यामनन्ति १८ ५

फेनप उद्दण्डक उन्मत्तको निरोधकः शीर्णपतितपत्राहारी चान्द्रायणव्रतं चरन्पृथिवीशायी नारायणं ध्यायन्मोक्षमेव प्रार्थयते २ अपत्नीका बहुविधाः ३ कालाशिका उद्दण्डसंवृत्ता अश्मकुट्टा उदग्रफलिनो दन्तोलूखलिका उञ्छवृत्तिकाः संदर्शनवृत्तिकाः कपोतवृत्तिका मृगचारिका हस्तादायिनः शैलफलकादिनोऽर्कदग्धाशिनो बैल्वाशिनः कुसुमाशिनः पाण्डुपत्राशिनः कालान्तरभोजिन एककालिकाश्चतुष्कालिकाः कण्टकशायिनो वीरासनशायिनः पञ्चाग्निमध्यशायिनो धूमाशिनःपाषाणशायिनोऽभ्यवगाहिन उदकुम्भवासिनो मौनिनश्चावाक्शिरसः सूर्यप्रतिमुखा ऊर्ध्वबाहुका एकपादस्थिताश्चेति विविधाचारा भवन्तीति विज्ञायते ११ अथ भिक्षुका मोक्षार्थिनः कुटीचका बहूदका हंसाः परमहंसाश्चेति चतुर्विधा भवन्ति १२ तत्र कुटीचका गौतमभारद्वाजयाज्ञवल्क्यहारीतप्रभृतीनामाश्रमेष्वष्टौ ग्रासांश्चरन्तो योगमार्गतत्त्वज्ञा मोक्षमेव प्रार्थयन्ते १५ ६

बहूदकास्त्रिदण्डकमण्डलुकाषायधातुवस्त्रग्रहणवेषधारिणो ब्रह्मर्षिगृहेषु चान्येषु साधुवृत्तेषु मांसलवणपर्युषितान्नं वर्जयन्तः सप्तागारेषु भैक्षं कृत्वा मोक्षमेव प्रार्थयन्ते १ हंसा नाम ग्रामे चैकरात्रं नगरे पञ्चरात्रं वसन्तस्तदुपरि न वसन्तो गोमूत्रगोमयाहारिणो वा मासोपवासिनो वा नित्यचान्द्रायणव्रतिनो नित्यमुत्थानमेव प्रार्थयन्ते ३ परमहंसा नाम वृक्षैकमूले शून्यागारे श्मशाने वा वासिनः साम्बरा दिगम्बरा वा ४ न तेषां धर्माधर्मौ सत्यानृते शुद्धयश-ुद्ध्यादि द्वैतं ५ सर्वसमाः सर्वात्मनः समलोष्टकाञ्चनाः सर्ववर्णेषु भैक्षाचरणं कुर्वन्ति ६ ब्राह्मणानां चातुराश्रम्यं क्षत्रियाणां त्रयाश्रम्यं वैश्यानां द्व्याश्रम्यं विहितं ७ तत्फलं हि सकामं निष्कामं चेति द्विविधं भवति ८ सकामं नामेह संसारेऽभिवृद्धिं ज्ञात्वा पुत्रलाभाद्यभिकाङ्क्षणमन्यत्स्वर्गादिफलकाङ्क्षणं वा १० निष्कामं नाम किञ्चिदनभिकाङ्क्ष्य यथाविहितानुष्ठानमिति ११ तत्र निष्कामं द्विविधं भवति प्रवृत्तिर्निवृत्तिश्चेति १२ प्रवृत्तिर्नाम संसारमनादृत्य सङ्ख्यज्ञानं समाश्रित्य प्राणायामासनप्रत्याहारधारणायुक्तो वायुजयं कृत्वा-णिमाद्यैश्वर्यप्रापणम् १५ ७

तत्पुनरपि तपःक्षयाज्जन्मप्रापकत्वाद्व्याधिबाहुल्याच्च नाद्रियन्ते परमर्षयो १ निवृत्तिर्नाम लोकानामनित्यत्वं ज्ञात्वा परमात्मनोऽन्यन्न किञ्चिदस्तीति संसारमनादृत्य च्छित्वा भार्यामयं पाशं जितेन्द्रियो भूत्वा शरीरं विहाय क्षे-त्रज्ञपरमात्मनोर्योगं कृत्वातीन्द्रियं सर्वजगद्बीजमशेषविशेषं नित्यानन्दममृत-रसपानवत्सर्वदा तृप्तिकरं परं ज्योतिः प्रवेशकमिति विज्ञायते ६ निवृत्त्या-चारभेदाद्धि योगिनस्त्रिविधा भवन्ति सारङ्गा एकार्ष्या विसरगाश्चेति ७ अनिरोधका निरोधका मार्गगा विमार्गगाश्चेति चतुर्विधा सारङ्गा ८ दूरगा अदूरगा भ्रूमध्यगा असंभक्ताः संभक्ताश्चेत्येकार्ष्याः पञ्चधा भवन्ति ९ न स-ङ्ख्यावन्तो विसरगास् १० तत्र सारङ्गाः सारं क्षेत्रज्ञस्तं गच्छन्तीति सारङ्गा-स्तेष्वनिरोधका अहं विष्णुरिति ध्यात्वा ये चरन्ति तेषांप्राणायामादयो न सन्ति १२ ये तु निरोधकास्तेषां प्राणायामप्रत्याहारधारणादयः षोडश कलाः सन्ति १३ ये मार्गगास्तेषां षडेव प्राणायामादयो १४ ये विमार्गगास्तेषां यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयश्चेत्यष्टाङ्गान्कल्पयन्तो ध्येयमप्यन्यथा कुर्वन्ति १७ ८

अथैकार्ष्या १ एक एवर्षिर्येषां ते एकार्ष्यास् २ तेषु ये दूरगास्तेषामयं मार्गः ३ पिङ्गलया नाडिकयादित्यमण्डलमनुप्रविश्य तत्रस्थेन पुरुषेण संयुज्य ततश्चन्द्रमण्डलं तत्रस्थेन पुरुषेण ततो विद्युतं तत्रस्थेन पुरुषेण पुनः क्रमेण वैकुण्ठसायुज्यं यन्ति ४ येऽदूरगास्तेषामयं धर्मः ५ क्षेत्रज्ञपरमात्मनोर्योगं क्षेत्रज्ञद्वारेण कारयित्वा तत्रैव समस्तविनाशं ध्यात्वाकाशवत्सत्तामात्रोऽहमिति ध्यायन्ति ६ भ्रूमध्यगाः क्षेत्रज्ञपरमात्मनोर्योगे सत्त्वरूपाग्निद्वारेण भ्रूमध्यं नीत्वा पञ्चभ्योऽङ्गुष्ठादिभ्यः स्थानेभ्य आकर्षणं पुनः पिङ्गलाद्वारेण निष्क्रमणं प्रलयान्तं क्षेत्रज्ञयोगान्तं वा कुर्वन्ति ९ असंभक्ता नाम मनसा ध्यानं कुर्वन्ति १० तत्प्रतिपादनागमं श्रोत्रेण शृण्वन्ति ११ चक्षुषा देवताकारं पश्यन्ति १२ घ्राणेन गन्धमनुभवन्ति । पाणिना देवतां नमस्कुर्वन्ति १३ संभक्ता नाम ब्रह्मणः सर्वव्यापकत्वाद्युक्तमयुक्तं योऽसौ परमात्मा तत्स व्याप्याकाशवत्तिष्ठति १४ तस्माद्ब्रह्मणोऽन्यन्न कुत्रचिदात्मानं प्रतिपद्यतेऽसौ १५ भ्रूमध्यगतस्यापि संशयान्निष्प्रमाणमेवेत्युक्तम् १६ ९

तस्माद्ब्रह्मव्यतिरिक्तमन्यन्नोपपद्यते विविधसरणाद्विविधदर्शनात्कुपथगामित्वाद्विसरगाः १ पुरा प्रजापतिरुपदेशगूहनार्थं विसरगपक्षं दृष्टवान् २ तं दृष्ट्वा मुनयोऽपि मोहं जग्मुः किं पुनर्मनुष्याः ३ विसरगपशूनामहंकारयुक्तानां जन्मान्तरेषु मुक्तिर्नास्मिञ्जन्मनि ४ तस्माद्विसरगपक्षो नानुष्ठेयो ५ केचिद्विसरगाः कायक्लेशात्केचिन्मन्त्रजपात्केचिद्येन केनचिद्ध्यानेन केचिद्येन केन चिदक्षरेण केचिद्वायुजयादन्ये परमात्मना क्षेत्रजं संयोज्य ध्यायन्त्येते परमात्मसंयोगमेव नेच्छन्ति ७ हृदिस्थ एव पुरुष इति वदन्ति ८ केचिन्न किञ्चिद्ध्यानमिति यथोक्तानुष्ठानं योगमिति ज्ञात्वा मुक्तिमिच्छन्ति ९ तेषां विसरगपशूनां जन्मान्तरेषु मुक्तिर्नास्मिञ्जन्मनि १० तस्मिन्नेव जन्मनि मोक्षकाङ्क्षिणा विसरगपक्षो नानुष्ठेयः ११ सगुणे ब्रह्मणि बुद्धिं निवेश्य पश्चान्निर्गुणं ब्रह्माश्रित्य यत्नं कुर्यादिति विज्ञायते १५ १०

अथ वनस्थस्य श्रामणकविधानम् १ गृहस्थः सोमयाजी पुत्रं पौत्रं च दृ-ष्ट्वा तत्पुत्रादीन्गृहे संस्थाप्य मौण्ड्यं कृत्वा प्राजापत्यं कृच्छ्रं चरेत् २ वसन्ते शुक्लपक्षे पुण्यक्षेत्रे पत्न्या सार्धं वनाश्रमं याति ३ पूर्वस्मिन्दिवसे कृतस्नानः संकल्प्य कुशोदकं पीत्वोपवासं कुर्याद् ४ औपासनहोमं हुत्वाग्निमयं ते

योनिरित्यरगयामारोपयेद् ५ दर्शपूर्णमासविधानेन दर्भादीन्संगृह्यपूर्वव-त्परिस्तरणकूर्चान्परिधीन्समिधो वेणुदगडोपवीतकमगडलुवल्कलादीन्संभरति ७ पूर्वोक्तविधिनाग्निकुगडं कुर्याद् ८ अपरस्मिन्दिवसे वैश्वानरसूक्तेनाग्निं मथित्वा प्रज्वाल्याग्न आयाह्युपावरोहेत्यग्निं निधाय पूर्ववच्छ्रामणकाग्नयाघारं जुहोति ९ प्रणम्याग्निं परिषिच्याग्ने प्रायश्चित्ते त्वमिति पञ्चप्रायश्चित्तं हुत्वा-पोहिरगयपवमानैरात्मानं प्रोन्दय ब्रह्मदैवत्यं वैष्णवं पञ्चवारुणं च प्रधानान्व्या-हृत्यन्तं यजेत् १२ अग्नेः प्रतीच्यां द्वौ कुशौ पूर्वाग्रौ न्यस्योर्ध्वेऽश्मानं निधाय तत्सवितुर्वरेगयमिति दन्निणपादाङ्गुष्ठाग्रेणाश्मानमधितिष्ठेत्तेजोवत्सव इति वल्कलमजिनं चीरं वा परिधाय पूर्ववन्मेखलादींस्त्रीरायुपवीतान्युत्तरीयं कृ-ष्णाजिनं चाददाति १७ ११

आचम्य स्वस्ति देवेत्यग्निं प्रदन्निणं प्रणामं च कृत्वासीत १ शं नो देवीरिति स्वमूर्ध्नि प्रोन्दय जयानभ्यातानान्राष्ट्रभृतो व्याहृतीश्च हुत्वाज्यशेषं प्राणायामेन प्राश्नीयाद् २ योगे योग इति द्विराचम्य शतमिन्नु शरद इति प्रणाममागन्त्रा समगन्महीति प्रदन्निणं चादित्यस्य कुर्वीत ४ राष्ट्रभृदसीत्यूर्ध्वाग्रं कूर्चं गृ-ह्णीयात् ५ ओं भूस्तत्सवितुरों भुवो भर्गो देवस्यों सुवर्धियो यो न इति पच्छो व्यस्तामों भूर्भुवस्तत्सवितुरों सुवर्धियो यो न इत्यर्धर्चामों भूर्भुवः सुवस्त-त्सवितुरिति समस्तां च सावित्रीं जप्त्वा वनाश्रमं प्रविश्य ब्रह्मचर्यव्रतं सं-कल्पयेत् १० तत्पत्नी च तथा ब्रह्मचारिणी स्यात् ११ स्वयमेवाग्निं प्रद-न्निणीकृत्याज्येन प्राजापत्यं धातादीन्मिन्दाहुती विच्छिन्नमैन्द्रं वैश्वदेवं वै-श्णवं बाह्यं विष्णोर्नुकादीन्प्राजापत्यसूक्तं तद्व्रतबन्धं च पुनः प्रधानान्हुत्वा-प्राजापत्यव्रतं बध्नाति १४ स्थित्वा देवस्य त्वा यो मे दगड इति द्वाभ्यां पञ्चसप्तनवान्यतमैः पर्वभिर्युक्तं केशान्तायतं वाप्यवक्रं वैष्णवं द्विदगडमाद-दाति १५ येन देवा इति कमगडलुमृद्ग्रहिरायौ पूर्ववदुपानट्छत्रे च गृह्णाति १७ अग्नीन्गार्हपत्यादींश्चोज्ज्वाल्याग्निहोत्रं हुत्वाहवनीये प्राजापत्यं विष्णुसूक्तं च सर्वत्राग्नये स्वाहा सोमाय स्वाहा विष्णवे स्वाहेति हुत्वाग्नीनरगया-मारोपयति २० १२

वनेऽद्रौ विविक्ते नदीतीरे वनाश्रमं प्रकल्प्य यथोक्तमग्निकुगडानि कुर्यात् १ पत्नया सहाग्नीनादाय पात्रादिसंभारयुक्तो वनाश्रमं समाश्रयति २ अग्नया-

यतने प्रोद्दय खनित्वा लेखाः षडुल्लिख्य सुवर्णशकलं व्रीहींश्च निधाय श्रामणकाग्निं निदध्यात् ३ वन्यानेव पार्थिवान्वानस्पत्यान्कुलीरोद्धाताञ्छ-णान्पुराणान्कुशदर्भानूर्णास्तुकां प्लक्षाग्रं सुगन्धितेजनं गुग्गुलुं हिरण्यशक-लान्सूर्यकान्तं च संभरति ६ वानप्रस्थानृत्विजो वृत्वाग्निं मथित्वा गार्हप-त्यादींस्त्रेताग्नीन्पञ्चाग्नीन्वाग्न्याधेयक्रमेणाधायाहुती द्वे द्वे हुत्वा नित्यं द्विकालं वन्यैरेव जुहोति ८ वनाश्रमी मुनिः स्नानशौचस्वाध्यायतपोदानेज्योपवा-सोपस्थनिग्रहव्रतमौनानीति नियमान्दशैतान्सत्यानृशंस्यार्जवक्षमादमप्रीति-प्रसादमार्दवाहिंसामाधुर्याणीति यमान्दशामूंश्च समाचरति १२ भक्त्या वि-ष्णुं ध्यायन्नग्निहोत्रश्रामणकाग्निहोमौ द्विकालं नोत्सृजन्ग्राम्याशनं त्यक्त्वा व-न्यौषधीः फलं मूलं शाकं वा नित्याशनं संकल्प्य तिरोधा भूरिति । ग्राहृ-त्यापराह्णे स्वयं पत्नी वा हविष्यमास्रावितं पचति १५ वैश्वदेवान्तेऽतिथीन-भ्यागतान्प्राशयित्वा मितं प्राश्नाति १६ १३

रात्रौ नाश्नीयाद् १ अधस्ताद्दर्भांस्तृणानि पर्णानि वास्तीर्य सुव्रतः सुव्रतां प-त्नीं विनैकः शयीत २ सास्य शुश्रूषां करोत्येनां नोपगच्छेत् । मातृवन्नि-ष्कामः प्रेक्षेतोर्ध्वरेता जितेन्द्रियो ३ दर्शपूर्णमासौ चातुर्मास्यं नक्षत्रेष्टिमा-ग्रयणेष्टिं च वन्यौषधीभिः पूर्ववद्यजेद् अनुक्रमान् ४ मूलैः फलैः पत्रैः पु-ष्पैर्वा तत्तत्कालेन पक्वैः स्वयमेव संशीर्णैः प्राणं प्रवर्तयन्नुत्तरोत्तरेऽप्यधिकं त-पःसंयोगं फलादिविशिष्टमाचरेद् ६ अथवाहिताग्निः सर्वानग्नीनरण्यामा-रोप्य सर्वैः संवापमन्त्रैः पार्थिवान्वानस्पत्यांश्च सर्वान्समूह्यनिर्मन्थ्यैतेन वि-धिनामग्न्याधेयविधानेन च मन्त्रैः सर्वैः सभ्याग्न्यायतने श्रामणकाग्निमा-धायाहरेत् ९ सभ्यस्य भेदः श्रामणकाग्निरित्याहुः १० अपत्नीकश्च भिक्षुव-दग्नौ होमं हुत्वारण्यादिपात्राणि च प्रक्षिप्य पुत्रे भार्यां निधाय तथाग्नीनात्म-न्यारोप्य वल्कलोपवीतादीन्भिक्षापात्रं च संगृह्यानग्निरदारो गत्वा वने निव-सेत् १२ तपसां श्रमणमेतन्मूलं तस्मादेतद्विधानमेनमग्निं च श्रामणकमि-त्याह विखनाः १५ संन्यासक्रमं सप्तत्यूर्ध्वं वृद्धोऽनपत्यो विधुरो वा ज-न्ममृत्युजरादीन्विचिन्त्य योगार्थी यदा स्यात्तद् १६ अथवा पुत्रे भार्यां नि-क्षिप्य परमात्मनि बुद्धिं निवेश्य वनात्संन्यासं कुर्यात् १८ १४

मुण्डितो विधिना स्नात्वा ग्रामाद्बाह्येप्राजापत्यं चरित्वा पूर्वाह्णे त्रिदण्डं शि-

क्यं काषायं कमराडलुमप्पवित्रं मृद्ग्रहणीं भिक्षापात्रं च संभृत्य त्रिवृतं प्राश्योपवासं कृत्वा दिनेऽपरे प्रातः स्नात्वाग्निहोत्रं वैश्वदेवं च हुत्वा वैश्वानरं द्वादशकपालं निर्वपेत् ३ गार्हपत्याग्नावाज्यं संस्कृत्याहवनीये पूर्णाहुती पुरुषसूक्तं च हुत्वाग्नये सोमाय ध्रुवाय ध्रुवकरणाय परमात्मने नारायणाय स्वाहेति जुहोति ६ स्रुचि स्रुवेण चतुर्गृहीतं गृहीत्वा सर्वाग्निष्वों स्वाहेति जुहुयाद् ७ अग्निहोत्रहवणीमाहवनीये मृच्छिलामयेभ्योऽन्यानि पात्राणी गार्हपत्ये प्रक्षिपति ८ गृहस्थोऽनाहिताग्निरौपासने वनस्थश्च श्रामणकाग्नौ होमं हुत्वा पात्राणि प्रक्षिपेत् ९ पच्छोऽर्धर्चशो व्यस्तां समस्तां च सावित्रीं जप्त्वा भिक्षाश्रमं प्रविशामीति तं प्रविशति ११ अन्तर्वेद्यां स्थित्वा गार्हपत्यादीन्या ते अग्ने यज्ञियेति प्रत्येकं त्रिराघ्राय भवतं नः समनसावित्यात्मन्यारोपयेत् १३ भूर्भुवः सुवः संन्यस्तं मयेति त्रिरुपांशूच्चैश्च प्रैषमुक्त्वा दक्षिणहस्तेन सकृज्जलं पीत्वाचम्य तथैवोक्त्वा त्रिर्जलाञ्जलिं विसृजेन् १५ मेखलां चत्वार्युपवीतान्येकं वोपवीतं कृष्णाजिनमुत्तरीयं च पूर्ववद्ददाति १७ देवस्य त्वा यो मे दराडः सखा मे गोपायेति त्रिभिस्त्रिदराडं यदस्य पारे रजस इति शिक्यं येन देवाः पवित्रेणेत्यप्पवित्रं येन देवा ज्योतिषेति कमराडलुमृद्ग्रहरायावाददीत २० १५

स्नात्वाघमर्षणसूक्तेनाघमर्षणं कुर्यात् १ आचम्य षोडश प्राणायामान्कृत्वा सहस्रं शतं वा सावित्रीं जप्त्वा तथा भिक्षापात्रमलाबु दारवं मृन्मयं वा गृह्णाति २ प्रणवाद्यादिभिः पृथक् पृथक्सप्तव्याहृतिभिस्तर्पयामीति देवेभ्यो जलेऽद्भिस्तर्पयित्वाद्याभिश्चतसृभिः स्वधेति पितृभ्यस्तर्पयेत् ४ उद्वयं तमस इत्यादित्यमुपतिष्ठेत ५ जलाञ्जलिं विसृज्याभयं सर्वभूतेभ्यो दद्याद् ६ अध्यात्मरतो यतिर्भिक्षाशी नियमयमांश्च समाचरन्संयतेन्द्रियो ध्यानयोगेन परमात्मानमीक्षते ८ धर्म्यं सदाचारम् ९ निवीती दक्षिणे कर्णे यज्ञोपवीतं कृत्वोत्कटिकमासीनोऽहन्युदङ्मुखो रात्रौ दक्षिणामुखस्तृणैरन्तरिते मूत्रपुरीषे विसृजेन् १० नद्यां गोष्ठे पथि छायायां भस्मन्यप्सु कुशे दर्भे वा नाचरेत् ११ गोविप्रोदकाग्निवाय्वर्कतारेन्दून्नपश्यन्कुर्यात् १२ वामहस्तेन लिङ्गं संगृह्योत्थायोदकस्य पार्श्वे तथासीनो ब्रह्मचारी गृहस्थोऽपि शिश्ने द्विर्हस्तयोश्च द्विर्द्विर्गुदे षट्कृत्वो मृदं दत्त्वोद्धृतैरेव जलैः शौचं कुर्यात् १५ करं वामं दश कृत्वः करावुभौ च तथा मृदाद्भिः प्रक्षालयेत् १६ वनस्थस्य भिक्षोश्चैतद्द्वि-

गुणं भवति १७रात्रौ यथोक्तार्धं वा १८ १६

रेतोविसर्गे मूत्रवच्छौचं कर्तव्यं रेतसस्त्रिरित्येके १ सोपवीती प्राङ्मुख उदङ्मुखो वान्यत्रासित्वा मृदाम्बुना पूर्ववत्पादौ पाणी च प्रक्षाल्याचम्य मन्त्रेणाचमति ३ ब्राह्मणो हृद्गाभिः क्षत्रियः कण्ठगाभिर्वैश्यस्तालुगाभिरद्भिराचामेत ४ आत्मानं प्रोक्ष्य प्रत्यर्कमपो विसृज्यार्कं पर्येति ५ उदकस्याग्नेर्वामपार्श्वं प्राणानायम्य प्रत्येकमोंकारादिसप्तव्याहृतिपूर्वां गायत्रीमन्ते सशिरस्कां त्रिर्जपेत्स प्राणायामस्त्रीनेकं वा प्राणायामं कृत्वा पूतः ७ शतं दशाष्टौ वा सावित्रीं जप्त्वा सायंप्रातः सन्ध्यामुपास्य नैशिकमाह्निकं चैनोऽपमृज्यते ९ द्विजातिः सन्ध्योपासनहीनः शूद्रसमो भवति १० ब्रह्मचारी स्वनाम संकीर्त्याभिवादयेदहं भो इति ११ श्रोत्रे च संस्पृश्य गुरोः पादं दक्षिणं दक्षिणेन पाणिना वामं वामेन व्यत्यस्य जान्वोरापादमुपसंगृह्णन्नानतशीर्षोऽभिवादयति १३ आयुष्मान्भव सौम्येत्येनं शंसेद् । अनाशीर्वादी नाभिवन्द्यो १४ माता पिता गुरुर्विद्वांसश्च प्रत्यहमभिवादनीयाः १५ अन्ये बान्धवा विप्रोष्य प्रत्यागत्याभिवन्द्याः १६ ज्येष्ठो भ्राता पितृव्यो मातुलः श्वशुरश्च पितृवत्पितृष्वसा मातृष्वसा ज्येष्ठभार्या भगिनी ज्येष्ठा च मातृवत्पूजितव्याः १८ सर्वेषां माता श्रेयसी गुरुश्च श्रेयान् १९ १७

परस्त्रियं युवतिमस्पृशन्भूमावभिवादयेद् । वन्द्यानां वन्दनादायुर्ज्ञानबलारोग्यशुभानि भवन्ति १ यज्ञोपवीतमेखलाजिनदण्डान्परेण धृतान्न धारयेत् २ उपाकृत्यानालस्यः शुचिः प्रणवाद्यं वेदमधीयानोऽमावास्यायां पौर्णमास्यां चतुर्दश्योः प्रतिपदोरष्टम्योश्च नाधीयीत ३ नित्यजपे होमे चानध्यायो नास्ति ४ मार्जारनकुलमण्डूकश्वसर्पगर्दभवराहपश्वादिष्वन्तरागतेष्वहोरात्रं सूतकप्रेतकयोराशौचे तावत्कालं तिस्रोऽष्टकासु गुरौ प्रेते च त्रिरात्रमनध्यायः स्यात् ८ तद्भार्यापुत्रयोः स्वशिष्यस्य चोपरमे मनुष्ययज्ञे श्राद्धभोजने चैकाहमनध्यायः स्यादापदार्त्योरप्रायत्ये ९ वृक्षनौयानशयनेष्वारूढः प्रसारितपादो मूत्रपुरीषरेतोविसर्गे ग्रामेऽन्तःशवे सत्यभक्ष्यान्नभोजने छर्दने श्मशानदेशे सन्ध्यास्तनिते भूकम्पे दिग्दाहेऽशन्युल्कानिपाते रुधिरोपलपांसुवर्षे सूर्येन्दुराहुग्रहणे च तत्तत्काले नाधीयीत १३ परत्रेह श्रेयस्करो वेदस्तदध्येतव्यो १४ अन्ते विसृज्य प्रणवं ब्रवीति १५ लौकिकाग्नौ समिधौ हुत्वा भिक्षान्नं मेधाप्रदं

शुद्धं मौनी भुञ्जीत १६ १८

पौषे माघे वा मासे ग्रामाद्बहिर्जलान्ते पूर्ववद्व्रतविसर्गहोमं हुत्वा स्वाध्या-
यमुत्सृज्य पक्षे शुक्ले वेदं कृष्णे वेदाङ्गं च यावदन्तं समधीत्य गुरोर्दक्षिणां
दत्त्वा समावर्ती स्यात् ३ मध्याह्ने शुद्धे जले मृदाद्भिः पादौ हस्तौ च धाव-
यित्वाचम्याङ्गानि संशोध्यापः पुनन्त्विति जले निमज्जेद् ४ आचान्तो वै-
ष्णवैर्मन्त्रैर्विष्णुं हिरण्यशृङ्गमिति वरुणं च प्रणम्याघमर्षणसूक्तेनाघमर्षणं
कृत्वेदमापः शिवा इति स्नायाद् ६ आश्रमिणश्चत्वारः स्नानं नित्यमेवं पूर्वो-
क्तेन विधिना काम्यं नैमित्तिकं च कुर्वन्ति ८ धौतवस्त्रेणाच्छाद्य पूर्ववदा-
चम्य प्रोक्ष्यासीनस्तिष्ठन्वा कृतप्राणायामः सावित्रीं जप्त्वादित्यमुपतिष्ठेत ९
दक्षिणपाणिना तीर्थेन ब्राह्मेण भूपत्यादीन्दैवेन नारायणादीन्कूप्यादींश्चार्षेण
विश्वामित्रादीन्पैतृकेण पित्रादीनद्भिस्तर्पयित्वा ब्रह्मयज्ञं करिष्यन्नित्यमिषे त्वोर्जे
त्वेति यथाकामं यजुःसंहितामाद्यां स्त्रीननुवाकान्स्वाध्यायं कुर्वीत १३
नैमित्तिकमृतं च सत्यं चेत्यादिसूक्तानि चतुर्वेदादिमन्त्रान्वाप्यधीयीत १४
सर्वयज्ञानामादिर्ब्रह्मयज्ञः १५ तस्मादुपनयनप्रभृत्येव द्विजैः कर्तव्यो १६
नद्यां तीर्थे देवखाते सरसि तटाके वा सामान्ये स्नानं कुर्यात् १८ १९

परस्योदके मृत्पिण्डान्पञ्चोद्धृत्य स्नायात् १ कूपे तत्तीरे त्रिः कुम्भेनाभिषिञ्चेद्
। उच्छिष्टो नग्नो वा न स्नायात्तथा न शयीत २ आतुरोऽप्सु नावगाहेत ३
आतुरस्य स्नाने नैमित्तिके दश कृत्वो द्वादश कृत्वो वा तमनातुरो जलेऽव-
गाह्याचम्य स्पृशेत्ततः स पूतो भवति ४ द्विकालं होमान्ते पादौ प्रक्षाल्या-
चम्यासने प्राङ्मुखः प्रत्यङ्मुखः वा स्थित्वा चतुरश्रोपलिप्ते मण्डले शुद्धं पात्रं
न्यसेत् ६ तत्रान्नं प्रक्षिप्य तत्पूजयति ७ द्वौ पादावेकं वा भूमौ निधाय प्रसन्न
ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति सत्यं त्वर्तेन परिषिञ्चामीति
प्रातर् ८ अमृतोपस्तरणमसीत्याधावं पीत्वा विधिना प्राणाहुतीर्हुत्वान्नम-
निन्दन्नश्नाति १० भुक्त्वामृतापिधानमसीत्यपः पीत्वाचम्याचामेद् ११ एक-
वासाः शयानस्तिष्ठन्नस्नानजपहोमीशुष्कपाद उदङ्मुखो वा नाश्नाति १२
भिन्नपात्रेऽन्नं पर्युषितं शयनासनोत्सङ्गस्थं वा न भुञ्जीत १३ अञ्जलिनापो न
पिबेद् १४ उच्छिष्टाशुच्याशौचिपतिततैः स्पृष्टं सूतकप्रेतके चान्नं नाश्नी-
यात् १५ २०

तिलसक्तुदधिलाजं च रात्रावभक्ष्यम् १ अन्नं पर्युषितमाज्येन दध्ना वा युक्तं भोज्यम् २ क्रिमिकेशकीटयुतं गवाघ्रातं पक्षिजग्धं च भस्माद्भिः प्रोक्षितं शुद्धं ३ श्वकाकाद्युपहते बह्वन्ने तस्मिन्पुरुषाशनमात्रं तत्रैवोद्धृत्य व्यपोह्य पवमानः सुवर्जन इति भस्मजलैः प्रोक्ष्य दर्भोल्कया स्पर्शयित्वा गृह्णीयात् ५ प्रसूतेऽन्तर्दशाहे गोक्षीरं सदैकशफोष्ट्रस्त्रीणां पयश्च पलाण्डुकवकलशुन-गृञ्जनविड्जमनुक्तं मत्स्यमांसं च वर्जनीयम् ७ यज्ञशिष्टं मांसं भक्षणीयम् ८ उदक्यास्पृष्टं शूद्रानुलोमैः स्पृष्टं तेषामन्नं च वर्जयेत् ९ स्वधर्मानुवर्तिनां शूद्रानुलोमानामामं क्षुधितस्य संग्राह्यम् १० सर्वेषां प्रतिलोमान्तरालव्रा-त्यानामामं पक्वं च क्षुधितोऽपि यत्नान्न गृह्णीयात् ११ तैः स्पृष्टिसंमिश्रं परप-क्वं च संत्यजति १२ नित्यं श्रुतिस्मृत्युदितं कर्म कुर्वन्मनोवाक्कायकर्मभिः शनैर्धर्मं समाचरति १३ २१

गृहस्थाश्रमी द्वे यज्ञोपवीते वैणवं दण्डं कमण्डलुं च धारयेत् १ स्नात्वा सभार्यो गृह्याग्नौ गार्ह्याणि कर्माणि श्रौताग्निषु श्रौतानि कुर्यात् २ सायं च होमान्तेऽतिथीनभ्यागतान्प्राशयित्वा मितं प्राश्य पत्न्या शयीत ३ आर्द्रपा-दः प्रत्यगुत्तरशिराश्च स्वपिति ४ ऋतुरात्रिषु स्वभार्यामुपगच्छेद् ५ आदौ त्रिरात्रमृतुमतीगमनसहासनशयनानि वर्जयेत् ६ परदारान्न संगच्छेत् । परदारगमनादायुः श्रीर्ब्रह्मवर्चसं विनश्यति ७ भार्यया सह नाश्नाति । अश्नन्तीं तां जृम्भमाणां नग्नां च नावलोकयेत् ८ असत्यवादं वर्जयति । असत्यात्परं पापं सत्यात्परो धर्मश्च नास्ति ९ सर्वप्राणिहितोऽद्रोहेणैव जीवे-च्छुद्धार्थवान्कुसूलधान्यः कुम्भीधान्योऽश्वस्तनिको वा स्यात् १० द्विजातिः पतितान्त्यजातान्न स्पृशेद् ११ उदयेऽस्तमये च सूर्यं नेक्षेत १२ देवगुरु-विप्रघृतक्षीरदधिमृत्तोयसमिद्दर्भाग्निवनस्पतीन्प्रदक्षिणं गच्छेत् १३ स्नातक-राजगुरुश्रेष्ठरोगिभारभृदन्तर्वत्नीनां पन्था देयो १४ वातार्करश्मिभिः पन्थानः शु-ध्यन्ति १५ परस्यासनशयनान्यदत्तानि नोपयुञ्जीतादत्तेषूपयुक्तेषु स्व-पुण्यचतुर्थांशो जहाति १६ अन्योपयुक्तानि वस्त्रमाल्योपानट्छत्त्राणि नैव धारयेद् १७ अग्नौ पादं न तापयेन्नैनं मुखेन धमेन्न पादेन स्पृशेदधः पादतो न कुर्याद् १९ २२

अग्नावग्निं । जलं वा देवालयेऽग्नौ जले च मूत्रपुरीषपूयशोणितरेतःश्लेष्मोच्छिष्टाङ्गनिष्पेषान्न प्रक्षिपेत् १ नग्नां परस्त्रियं विण्मूत्रे च न पश्येद् २ उच्छिष्टो देवार्कचन्द्रग्रहर्क्षतारा नेक्षेत ३ देवगुरुस्नातकदीक्षितराजगोश्रेष्ठानां छायां नाक्रमति । इन्द्रधनुः परस्मै न दर्शयेन्न वदेत् ४ स्वपन्तं नावबोधयेद् । एकोऽध्वानं न गच्छेत् ५ परक्षेत्रे चरन्तीं गां धयन्तं वत्सं च न वारयेन्नैवाचक्षीत । जीर्णमलवासा न स्यात् ६ अक्षैः क्रीडां प्रेतधूमं बालातापं च वर्जयेत् ७ केशरोमतुषाङ्गारकपालास्थिविण्मूत्रपूयशोणितरेतःश्लेष्मोच्छिष्टान्नाधितिष्ठेत् ८ अमेध्यलिप्तेऽङ्गे यावत्तल्लेपगन्धमनःशङ्का न स्यात्तावन्मृत्तोयैः शोधयेत् ९ पतितान्त्यजमूर्खाधार्मिकवैरिभिः सार्धं न वसेद् १० उच्छिष्टोऽशुचिर्वा देवगोविप्राग्नीन्न स्पृशेत् ११ देवान्वेदान्राजगुरुमातापितॄन्विद्वद्ब्राह्मणान्नावमन्येत न निन्देद् १२ अवमन्ता निन्दकश्च विनश्यति १३ सर्वभूतकुत्सां ताडनं च न कुर्वीत १४ गुरुणा मातापितृभ्यां तत्पित्राद्यैर्भ्रातृपितृभ्रातृमातुलाचार्यर्त्विगाद्यैर्विवादं नाचरेत् १५ सर्वशुद्धिषु पुरुषस्यार्थशुद्धिः स्त्रीशुद्धिरन्नशुद्धिश्च श्रेष्ठतमा स्यात् १६ २३

द्रव्येषु रत्नसौवर्णरजतमयान्यद्भिःशोधयत्यग्नौ वा स्पर्शयति १ ताम्रत्रपुसीसायसाद्यान्यम्लवारिभिर्दारुदन्तजातानि तक्षणाद्धावनाद्वा यज्ञपात्राणि दक्षिणपाणिना मार्जनात्क्षालनाद्वा संशोध्यानि ३ चर्ममयसंहतानि वस्त्राणि शाकमूलफलानि च प्रोक्षयेदल्पानि क्षालयेत् ४ घृतादीनि द्रव्याण्युत्पूयोल्कया दर्शयेत् ५ कौशेयाविकान्यूषैरंशुतट्टानि श्रीफलैः शङ्खशुक्तिगोशृङ्गाणि सर्षपैः सवारिभिर्मृन्मयानि पुनर्दाहेन गृहं मार्जनोपलेपनाप्सेकैर्भूमिं खननादन्यमृत्पूरणगोवासकाद्यैर्मार्जनाद्यैश्च शोधयेद् ८ गोतृप्तिकरं भूगतं तोयं दोषविहीनं सुपूतम् ९ वाक्शस्तं वारिनिर्णिक्तमदृष्टं १० योषिदास्यं कारुहस्तः प्रसारितपण्यं च सर्वदा शुद्धं शकुन्युच्छिष्टं फलमनिन्द्यं ११ मशकमक्षिकानिलीनं तद्विप्रुषश्च न दूष्याणि १२ वाय्वग्निसूर्यरश्मिभिः स्पृष्टं च मेध्यम् १३ आतुरे बाले पचनालये च शौचं न विचारणीयं यथाशक्ति स्याद् । विण्मूत्राभ्यां बह्वापो न दूष्याः १४ परस्याचामतस्तोयबिन्दुभिर्भूमौ निपत्योद्गतैः पादस्पृष्टैराचामयन्नाशुचिः स्यात् १५ २४

वानप्रस्थो नित्यस्वाध्यायी कुशेध्मादीनग्न्यर्थं शाकमूलफलान्यशनार्थं च

शुचौ जातान्याहरेद् १ अन्याधीनमन्योत्सृष्टमशुचौ जातं गोरसं च वर्जयेत् २ धान्यधनसंचयं न कुर्वीत ३ वस्त्रं नाच्छादयेत् । मधूक्ते तोयं मांसोक्ते पैष्टिकं गृह्णाति ४ सर्वभूतेषु दयालुः समः क्षान्तः शुचिर्निरसूयकः सुखे निःस्पृहो मङ्गल्यवाणीर्ष्याकार्पण्यवर्जी मत्स्यादीन्दंशकान्सीरकृष्टजातानि कन्दमूलफलशाकादीनि च त्यजञ्जटाश्मश्रुरोमनखानि धारयंस्त्रिकालस्नायी धराशयो वन्यैरेव चरुपुरोडाशान्निर्वपेत् ८ पलाण्ड्वादीन्निर्यासं श्वेतवृन्ताकं सुनिषण्णकं श्लेष्मातकं व्रजकलिं चित्रकं शिग्रुं भूस्तृणं कोविदारं मूलकं चवर्जयति १० मुनेः सर्वं मांसं गोमांसतुल्यं धान्याम्लं सुरासमं भवति ११ पूर्वसंचिताशनं पूर्वाणि वसनान्याश्वयुजे मासि त्यजति १२ वेदवेदान्तेन ध्यानयोगी तपः समाचरति १३ २५

अपत्नीकोऽनग्निरदारोऽनिकेतनो वृक्षमूले वसन्वनस्थाश्रमेषु गृहस्थानां गृहेषु वा भिक्षां भिक्षित्वाम्बुपार्श्वे शुद्धे पर्णे प्राणयात्रामात्रमन्नं भिक्षुवदश्नाति १ शरीरं शोषयन्नुत्तरमुत्तरं तीव्रं तपः कुर्यात् २ भिक्षुः स्नात्वा नित्यं प्रणवेनात्मानं तर्पयेत् ३तेनैव नमस्कुर्यात् ४ षडवरान्प्राणायामान्कृत्वा शतावरां सावित्रीं जप्त्वा सन्ध्यामुपासीत ५ अप्पवित्रेणोत्पूताभिरद्भिराचामेत् ६ काषायधारणं सर्वत्यागं मैथुनवर्जनमस्तैन्यादीनप्याचरेत् ७ असहायोऽनग्निरनिकेतनो निःसंशयी संमानावमानसमो विवादक्रोधलोभमोहानृतवर्जी ग्रामाद्बहि-र्विविक्ते मठे देवालये वृक्षमूले वा निवसेत् ९ चातुर्मासादन्यत्रैकाहादूर्ध्वमे-कस्मिन्देशे न वसेद् १० वर्षाः शरच्चातुर्मास्यमेकत्रैव वसेत् ११ त्रिदण्डे काषायाप्पवित्रादीन्योजयित्वा कण्ठे वामहस्तेन धारयन्दक्षिणेन भिक्षापात्रं गृहीत्वैककाले विप्राणां शुद्धानां गृहेषु वैश्वदेवान्ते भिक्षां चरेत् १३ भूमौ वीक्ष्य जन्तून्परिहरन्पादं न्यसेद् १४ अधोमुखस्तिष्ठन्भिक्षामालिप्सेत १५ गोदोहनकालमात्रं तदर्धं वा स्थित्वा व्रजेद् १६ अलाभेऽप्यवमानेऽप्यविषादी लब्धे संमानेऽप्यसंतोषी स्यात् १७ द्रुतं विलम्बितं वा न गच्छेत् । भिक्षाका-लादन्यत्र परवेश्म न गन्तव्यं १८ भिक्षितुं क्रोशादूर्ध्वं न गच्छेत् १९ २६

भिक्षां चरित्वा तोयपार्श्वे प्रक्षालितपाणिपाद आचम्योदु त्यमित्यादित्यायातो दे-वा इति विष्णवे ब्रह्म जज्ञामिति ब्रह्मणे च भिक्षाग्रं दत्त्वा सर्वभूतेभ्य इति ब-लिं प्रक्षिपेत् १ प्राणाग्निहोत्रविधानेनात्मयज्ञं संकल्प्य प्राणयात्रामात्रमष्टौ

ग्रासान्वाश्नीयात्कामं नाश्नाति ३ वस्त्रपूतं जलं पीत्वाचम्याचामति ४ निन्दाक्रोशौ न कुर्वीत ५ बन्धूञ्ज्ञातींस्त्यजेद् ६ वंशचारित्रं तपः श्रुतं न वदेत् ७ सङ्गं त्यक्त्वा नियमयमी प्रियं सत्यं वदन्सर्वभूतस्याविरोधी समः सदाध्यात्मरतो ध्यानयोगी नारायणं परं ब्रह्म पश्यन्धारणां धारयेद् ८ अक्षरं ब्रह्माप्नोति नारायणः परं ब्रह्मेति श्रुतिः ९ संन्यासिनोऽनाहिताग्नेर्देहं मृतं पुत्रोऽन्यो वा तृणैरन्तरीकृत्य शुद्धैर्ब्राह्मणैर्यन्त्रेण वा संनिधाय समुद्रगाम्यां नद्यां तीरे वा सैकते देशे सृगालादिभिरस्पृश्यं यथा तथावटं खनति १३ २७

गायत्र्या स्नापयित्वा तथा तत्रासयित्वा शाययित्वा वा दक्षिणे हस्ते वैष्ण-वैर्मन्त्रैस्त्रिदण्डं संन्यस्य सव्ये यदस्य पारे रजस इति शिक्यमप्पवित्रमुदरे सावित्र्या भिक्षापात्रं गुह्यप्रदेशे भूमिर्भूमिमिति काषायं मृद्ग्रहणीं कमण्डलुं च संन्यस्य पिदध्यात् १ तस्मिन्सृगालादिभिः स्पृष्टे तत्कर्ता पापीयान्भवति २ आहिताग्नेरग्नीनात्मन्यारोप्य संन्यसिनो मृतं देहं गायत्र्या स्नापयित्वा पूर्ववद्वाहयित्वा शुद्धे देशे निधाय लौकिकाग्नौ तदग्निमुपावरोहेत्यवरोप्य पवित्रं त इति घृतक्षीरमास्ये प्रक्षिप्य पूर्ववत्त्रिदण्डादीन्विन्यस्य ब्रह्ममेधेन पि-तृमेधेन वाहिताग्निमन्त्रैस्तदग्निभिर्दहनमाचरति ६ तयोराशौचोदकबलिपि-ण्डदानैकोद्दिष्टादीन्नैव कुर्यात् ७ नारायणबलिं करोति ८ तद्वहनं खनि-त्वा पिधानं दहनं नारायणबलिं वा यः कुर्यात्सोऽश्वमेधफलं समाप्नुयात् ९ नारायणबलिं नारायणादेव सर्वार्थसिद्धिरिति ब्रह्मणाद्यैर्नरैर्हतस्यात्मघातिनो रज्जुशस्त्रोदकाशनिदंष्ट्रिपशुसर्पादिभिः सर्वपापमृतस्यादाह्यानामन्येषां भिक्षो-श्चैकादशदिनादूर्ध्वं महापातकिनां पञ्चानां द्वादशसंवत्सरादूर्ध्वं सपिण्डीकर-णस्थाने मृतकार्थमपरपक्षे द्वादश्यां श्रवणे वा करोति १३ पूर्वेऽहनि द्वादश ब्राह्मणान्निमन्त्रयेद् १४ अपरेऽहनि विष्णोरालयपार्श्वे नदीतीरे गृहे वाग्न्या-यतनं कृत्वाघारं जुहुयाद् १६ २८

अग्निं परिस्तीर्याग्नेर्वायव्यां विष्टरे दर्भेषु तद्रूपं सुवर्णं वा संस्थाप्य पुरुषं ध्या-यन्नों भूः पुरुषमित्याद्यैः प्राङ्मुखं देवं नारायणमावाह्यासनपाद्याचमनानि दद्यात् १ पुरुषसूक्तेन स्नापयित्वा नारायणाय विद्महेत्यष्टाक्षरमन्त्रेण वा वस्त्रोत्तरी-याभरणपाद्याचमनपुष्पगन्धधूपदीपाक्षताचमनैरर्चयति ३ केशवाद्यैर्द्वाद-

शनामभिरद्भिस्तर्पयेत् अग्निं ५ परिषिच्य सहस्रशीर्षाद्यैर्विष्णोर्नुकाद्यैर्द्वादश-
नामभिश्चाज्यं चरुं जुहुयात् ६ गुडाज्यफलयुक्तं पायसं हविर्विष्णुगायत्र्या
देवेशाय निवेद्य पाद्याचमनमुखवासं दद्यात् ७ अग्नेर्दक्षिणे दर्भेषूतराग्रेषु
दक्षिणाद्यर्चयित्वा नारायणाय सहस्रशीर्षाय सहस्राक्षाय सहस्रपादाय परम-
पुरुषाय परमात्मने परंज्योतिषे परब्रह्मणेऽव्यक्ताय सर्वकारणाय यज्ञेश्वराय
यज्ञात्मने विश्वेभ्यो देवेभ्यः सर्वाभ्यो देवताभ्यः साध्येभ्य इत्यन्तैः पायसं बलिं
दत्त्वाज्यमेभिर्जुहोति १२ ब्राह्मणान्पादौ प्रक्षाल्य नवानि वस्त्रोत्तरीयाभरणा-
नि दत्त्वा पुष्पाद्यैः पूजयित्वा द्वादशमूर्तिं ध्यायन्नुपदंशघृतगुडदधिफलयुक्तं
श्वेतमन्नं भोजयित्वा यथाशक्ति सुवर्णं दक्षिणां ददाति १६ २९

सहस्रशीर्षाद्यैः स्तुत्वा द्वादशनामभिः प्रणमेदन्तहोमं जुहोति १ अभीष्टां परां
गतिं स गत्वा विष्णोर्लोके महीयते २ चातुर्वर्ण्यसंकरेणोत्पन्नानामनुलोम-
प्रतिलोमान्तरालव्रात्यानामुत्पत्तिं नाम वृत्तिं च ३ ऊर्ध्वजातादधोजातायां
जातोऽनुलोमोऽधरोत्पन्नादूर्ध्वजातायां जातः प्रतिलोमः ४ ततोऽनुलोमाद-
नुलोम्यां जातोऽन्तरालः ५ प्रतिलोमात्प्रतिलोम्यां जातो व्रात्यो भवति ६
ब्रह्मणो मुखादुद्भूता ब्राह्मणा ब्राह्मण्यश्च ब्रह्मर्षयः पत्न्यो बभूवुस् ७ तेषां
गात्रोत्पन्नाद्ब्राह्मण्यामसगोत्रायां विधिना समन्त्रकं गृहीतायां जातो ब्राह्मणः
शुद्धो भवेत् ९ विधिहीनमन्यपूर्वायां मृतभर्तृकायां गोलको जीवभर्तृकायां
कुण्डश्च विप्रौ द्वौ निन्दितौ स्यातां १० तस्मादधो बाहुभ्यामुत्पन्नात्क्षत्रिया-
त्क्षत्रियायां विधिवज्जातः क्षत्रियः शुद्धस् ११ तयोरविधिकं गूढोत्पन्नोऽशुद्धो
भोजाख्यो नैवाभिषेच्यः पट्टबन्धो राज्ञः सैनापत्यं करोति १३ शुद्धाभावे-
ऽपट्टबन्धो नृन्पायात् १४ तद्वृत्तं राजवत्स्यात् १५ ३०

अधस्तादूरुभ्यामुत्पन्नाद्वैश्याद्वैश्यायां तथा वैश्यः शुद्धो १ विधिवर्जं मणि-
कारोऽशुद्धो मणिमुक्तादिवेधः शङ्खवलयकारी स्यात् २ अथ पद्भ्यामुत्पन्ना-
च्छूद्राच्छूद्रायां न्यायेन शूद्रः शुद्धः ३ जारान्मालवको निन्दितः शूद्रोऽश्वपा-
लोऽश्वतृणहारी चेत्येते चातुर्वर्णिकास् ४ तेषामेव संस्करेणोत्पन्नाः सर्वेऽनु-
लोमाद्याः ५ ब्राह्मणात्क्षत्रियकन्यायां जातः सवर्णोऽनुलोमेषु मुख्यो ६ अस्य
वृत्तिराथर्वणं कर्माश्वहस्तिरथसंवाहनमारोहणं राज्ञः सैनापत्यं चायुर्वेदकृत्यं ७
गूढोत्पन्नोऽभिषिक्ताख्यो ८ अभिषिक्तश्चेन्नृपो भूयादष्टाङ्गमायुर्वेदं भूततन्त्रं वा

संपटेत् ९ तदुक्ताचारो दयायुक्तः सत्यवादी तद्विधानेन सर्वप्राणिहितं कुर्यात् १० ज्योतिर्गणनादिकाधिकवृत्तिर्वा ११ विप्राद्वैश्यायामम्बष्ठः कद्दयाजी- व्याग्नेयनर्तको ध्वजविश्रावी शल्यचिकित्सी १२ जरात्कुम्भकारः कुलाल- वृत्तिर्नापितो नाभेरूर्ध्ववप्ता च १३ क्षत्रियाद्वैश्यायां मद्गुः श्रेष्ठित्वं प्राप्तो महा- नर्माख्यश्च वैश्यवृत्तिः क्षात्रं कर्म नाचरति १४ गूढादाश्विकोऽश्वक्रयविक्रयी स्यात् १५ ३१

विप्राच्छूद्रायां पारशवो भद्रकालीपूजनचित्रकर्माङ्गविद्यातूर्यघोषणमर्दनवृत्तिः १ जारोत्पन्नो निषादो व्याडादिमृगहिंसाकारी २ राजन्यतः शूद्रायामुग्रः सुदण्डयदण्डनकृत्यो ३ जाराच्छूलिकः शूलारोहणादियातनाकृत्यो ४ वैश्यतः शूद्रायां चूचुकः क्रमुकताम्बूलशर्करादिक्रयविक्रयी ५ गूढात्क- टकारः कटकारी चेति ६ ततोऽनुलोमादनुलोमायां जातश्चानुलोमः पितु- र्मातुर्वा जातं वृत्तिं भजेत ७ क्षत्रियाद्विप्रकन्यायां मन्त्रवज्ञातः सूतः प्रति- लोमेषु मुख्योऽयं मन्त्रहीनोपनीतो द्विजधर्महीनो ८ अस्य वृत्तिर्धर्मानुबोधनं राज्ञोऽन्नसंस्कारश्च ९ जारेण मन्त्रहीनजो रथकारो द्विजत्वविहीनः शूद्रकृ- त्योऽश्वानां पोषणदमनादिपरिचर्याजीवी १० वैश्याद्ब्राह्मण्यां मागधः शूद्रैर- प्यभोज्यान्नोऽस्पृश्यः सर्ववन्दी प्रशंसाकीर्तनगानप्रेषणवृत्तिः १२ गूढाच्चक्री लवणतैलविक्रेता स्यात् १३ वैश्यान्नृपायामायोगवस्तन्तुवायः पटकर्ता व- स्त्रकांस्योपजीवी १४ गूढाचारात्पुलिन्दोऽरण्यवृत्तिर्दुष्टमृगसत्त्वघाती १५ शूद्रात्क्षत्रियायां पुल्कसः कृतकां वार्क्षां वा सुरां हृत्वा पाचको विक्रीणीत १६ चोरवृत्ताद्वेलवो जम्भननर्तनगानकृत्यः १७ ३२

शूद्राद्वैश्यायां वैदेहकः शूद्रास्पृश्यस्तैरप्यभोज्यान्नो वन्यवृत्तिरजमहिषगोपा- लस्तद्रसान्विक्रयी १ चौर्याच् चक्रिको लवणतैलपिण्याकजीवी २ शू- द्राद्ब्राह्मण्यां चण्डालः सीसकालायसाभरणो वर्ध्राबन्धकण्ठः कक्षे झल्ल- रीयुक्तो यतस्ततश्चरन्सर्वकर्मबहिष्कृतः पूर्वाह्णे ग्रामादौ वीथ्यामन्यत्रापि मला- न्यपकृष्य बहिरपोहयति ५ ग्रामाद्बहिर्दूरे स्वजातीयैर्निवसेत् ६ मध्या- ह्नात्परं ग्रामे न विशत्ययं । विशेच् चेद्राज्ञा वध्यो ७ अन्यथा भ्रूणह- त्यामवाप्नोति । अन्तरालव्रात्याश्च ८ चूचुकाद्विप्रायां तक्षकोऽस्पृश्योझ- ल्लरीहस्तो दारुकारः सुवर्णकारोऽयस्कारः कांस्यकारो वा ९ क्षत्रियायां

मत्स्यबन्धुर्मत्स्यबन्धी १० वैश्यायां सामुद्रः समुद्रपरायजीवी मत्स्यघाती च स्यात् ११ अम्बष्ठाद्विप्रायां नाविकः समुद्रपरायमत्स्यजीवी समुद्रलङ्घनान्नावं प्लावयति १२ क्षत्रियायामधोनापितो नाभेरधो रोमवप्ता १३ मद्गोर्विप्रायां वेणुको वेणुवीणावादी १४ क्षत्रियायां कर्मकरः कर्मकारी । वैदेहकाद्विप्रायां चर्मकारश्चर्मजीवी १५ नृपायां सूचिकः सूचीवेधनकृत्यवान् १६ आयो-गवाद्विप्रायां ताम्रस्ताम्रजीवी । नृपायां खनकः खननजीवी १७ खनना-न्नृपायामुद्बन्धकः शूद्रास्पृश्यो वस्त्रनिर्णेजकः १८ पुल्कसाद्विप्रायां रजको वस्त्राणां रजोनिर्णेजकश् १९ ३३

चराडालाद्विप्रायां श्वपचः चराडालवच्चिह्नयुक्तो नित्यनिन्द्यः सर्वकर्मबहि-ष्कार्यो नगर्यादौ मलापोहकः श्मशाने वसन्हेयपात्रग्राही प्रेतमबन्धुकं वि-सृजेत १ वध्यान्हत्वा तद्वस्त्रादिग्राही पराधीनाहारो भिन्नपात्रभोजी श्वमांस-भक्षी चर्मवारवाणवाणिज्यकारी स्यात् ३ तस्मान्निकृष्टे सुते समुत्पन्ने पति-तो नष्टो घोरान्नरकान्व्रजति ४ सत्पुत्रो नरकेभ्यस्त्रायकः पितॄन्पावयित्वा शुभांल्लोकान्नयति ५ तस्माद्ब्राह्मणाद्याः सवर्णायां विधिवत्पुत्रमुत्पादये-युरिति विखनाः ८ ३४

गृह्ये दशमो धर्मे तृतीयः प्रश्नः समाप्तः

# कौथुमगृह्यम्

श्रीरस्तु

कौथुमगृह्यमारभ्यते

अथातः प्रायश्चित्तानि । अथातः क्रमाणां वक्ष्ये गृहस्थो वा ब्रह्मचारी वा गृहस्थो गृह्याग्नौ ब्रह्मचारी लौकिकाग्नौ गृहस्थेष्वितिचरणेन परिचरणे वा ब्रह्मचर्यविच्छिन्ने लौकिकेऽग्नौ प्रातराहुतिपूर्वकं नैमित्तिकं कार्यम् । पुनराधाने वर्जयेत् सायमुपक्रम्य तात्कालिकप्रायश्चित्तापत्तौ चेत्तास्यां तत्र कार्यम् । पौर्णम्याहुत्यामतीतं चेत्ताभ्यां तत्तत्कुर्युः पर्वणा चेत्संकल्प्य कार्यम् तदभावे सद्यः कुर्याद् अपरेण दर्शं त्वे प्रायश्चित्तिः त्रिरात्रं पञ्चरात्रं वा दशरात्रा त्ताः प्रायश्चित्तपूर्वयज्ञं यजेते तावुभौ पर्वा संकल्प्य तीतौ तामिष्टौ तद्वत् तत्र यदि लोपं वा तं मामासादतीतं वा पुनराधानं कुर्युः । प्रायश्चित्तार्थे प्राजापत्यं वा तदूर्ध्वं विशेषश्च गृह्याग्नौ गृह्याग्निं यदि स्पर्शेत्तंत्रं त मेको वा कार्यो मन्त्राणां तावुभौ ब्रूयात्तंत्री तत्समिधौ संयुक्तं गृह्णन् नवरोहणं ततः कर्म प्राणायामं कुर्युः । तूष्णीं परिषिच्य मन्त्रेणाभ्यर्च्याहुत्यामनर्थ स्तरस् तावुभौ द्वौ समिधमाधाय भषत्कर्मी मन्त्रं ब्रूयात् । अत्र पुपस्तूष्णीं कार्यं पत्नी वा इति समानं समारोपणं कुर्युः कर्तव्या इति वैतदु भवति स्वयं स्वयं प्रायश्चित्ती तत ऊर्ध्वं विशेषं स्याद् अन्याग्नौ स्वयममस्मद्भावि तथाचि यज्ञियन्नेवरोहणं कुर्यां आदिसमारोपणं प्रज्ञातस्तदमग्निमुत्सृज्य भूर्भुवः स्वरिति ब्रूयाः । तूष्णीं तिष्ठन् न गच्छेत् तदग्निपत्यां त प्राग्नौ कर्मभ्रष्टा स्वगृह्याग्नौ स्वयं स्वयं प्रायश्चित्तिर् अत ऊर्ध्वं विशेषं स्याद् आज्यतन्त्रैरनारोपणं चेत्समारोपणं प्रज्ञातः पुनरारभ्य प्रातराहु-त्यादि प्रपदान्तपर्यन्तं यत्किंचित्कर्म यदि लोपं स्यात् प्रातराहुतिश्चेत्प्राय-श्चित्तमित्येके न्यूनकर्मादि पुनरावृत्तिः प्रधानादूर्ध्वं प्रायश्चित्तिर् अत ऊर्ध्वं वि-शेषश्चरुतन्त्रेण ततो व्याख्याता प्रागुदक्प्रवणे देशे तत्र स्थंडिलमुपलि यात् १

अथातः प्राङ्मुखो भूत्वोदगग्रेषु दर्भेषु ओमित्युच्चैरुपविश्य गृह्याग्नौ निरीक्ष्य-माणोल्लेखनं ततः कारयेत् । तत्प्रातराहुतिं हुत्वा वेदविद्ब्राह्मणं लभेत् तद-लाभे खादिरन्यायः छत्रमुत्तरासं चेति खादिरं न्या इत्येके ब्राह्मणं प्रार्थयेत् । ब्राह्मणं भूर्भुवः स्वः बृहस्पतिर्ब्रह्माहं मानुष इति ब्रूयात् आचार्यो द्वे दर्भाग्रं दद्यात्

ब्राह्मणो निरस्तः परावसुरिति दक्षिणास्तृणं निरस्यासनार्थे प्रागग्रान्दर्भाना-स्तीर्या वसोः सदने सीदामीत्युदङ्मुख ओमित्युपांशुरुपविशेद् आचार्यो ब्राह्मणमर्चयित्वा ततः कांस्यपात्रमादाय मृन्मयपात्रं वाऽभिद्यम् ताम्रवर्जं रजत इति शालितण्डुलान्नवशूर्पेणादायोदगुद्वास्यो निर्वापार्थेन सकृत्पात्रं पूरयेत् । द्विस्तूष्णीं कार्यमों प्रोक्ष्यामीति ब्रूयाद् आपः प्रावयन्त्युदगुद्वास्य ततः समूहनाद्याज्यतन्वेषु गृह्योक्ते नवपर्वणं कार्यं तत्पात्रमुत्थाप्याग्निमध्ये स्थाप्यो निर्वाप इति ब्रूयात् तदा जीवतण्डुलान् श्रपयेत् । स्रुवेणाभिघार्याऽग्नेर्बहि-स्तरणादंतयोरुदगुद्वास्य पुनः प्रोक्षणं कुर्यात् । तत ईध्ममादाय तत्र विशेषः समिधमुच्यते । बह्वृचाः खादिरेण बोधायनाः पलाशैश्छन्दोगाः उदुम्बरेण यजन्ते । प्रादेशमात्राः कुशपृष्ठाः समाग्रतोगुंष्ठपर्वधृतद्युमात्रीः प्रज्ञाताग्राः का-रयित्वा तदभावे दर्भैर्वा सप्तदशैः आदाय अनष्टार्थमेकं प्रपदार्थमेकमिध्मार्थे पंचदशम् एतानि सप्तदश गृह्णन् स्रुवेणाभिघार्य अग्रमध्यमूलोन्यनुयाजा-र्थमुत्तरतो निधाय पंचदशमग्नौ प्रक्षिप्य शेषेण प्रपदं जपे यावचीरिति शठा-न्तानि तावत्स्वाषसीं धारयन् रुपाहनग्नौ हुत्वा शेषाक्षतानभ्यर्च्य ततो व्या-हृतिभिः तिसृभिः हुत्वा ततो कामजव्याहृती च हुत्वा चक्षुषी चतुर्गृहीतं स्रुवेण जुहुयात् । एतेषां चरुतन्त्रे एतेषां यथार्थं स्यात् तत्र विशेषस्तु वरदानप्रयो-गोच्यते । खादिरन्यायेन च गृह्योक्तेः कुथुमस्य मथादित्युक्त्वा कौथुमो कुथुमस्य मार्गमाचरति २

अथातः चरुपात्रं निरीक्ष्य संमुखे स्थापनं कार्यम् उदगुद्वास्य इत्येके संमुखे कार्यः चरोर्द्विभागं कार्यं स्रुवपात्रमासाद्य च्छिद्रानार्द्रं तदभावे कांस्यपात्रं वा तन्मध्येऽभिघार्य चरोः पूर्वदेशे सकृदवदाय द्वितीय्ये मध्यमे ह्यवदान शेषे स्रुवपात्रे पुनश्चाभिघार्य अग्निमध्ये जुहुयात् त्वद्वितीयं चेच्चरोः पश्चिमदेशे स्यात्सकृदवदाय द्विरभिघार्या प्रागुदग्देशे जुहुयाज् जामदग्न्याश्चेन्मव्यात् पश्चात् पुरस्तात् सकृदवदाय भृगुणा मध्यमे कार्ष्मर्यस्तत्र चरूणामुष्माणां क्रियते अपलनयेद्ययोरोजसेति द्विस्तूष्णीं कुर्यात्कर्माग्न्यावुपहतिश्चेत्प्राजापत्यं वा प्रायश्चित्तं जुहुयात् । अतीतविच्छिन्ने तत्क्षणे षष्टिर्देवता हुत्वा च तद् अहोरात्रामतीतं द्रमसौर्यषु इत्येतेषु पर्वाद्यै स्वामिमध्यमे चेत्कर्तव्यं स्यात् प्रायश्चित्तिर् गृह्याग्नौ कर्म कर्तुमपि वाणिचतुर्थे रजश्चांडालाननुगते वा संवत्सरादूर्ध्वं यथाकृच्छ्रं वपनं च तथा प्रायश्चित्ति प्रायश्चित्तिः ३

अथ पर्वप्रायश्चित्तिर् उदगयनं वा दक्षिणायनं वा वसन्ताद्यादिषष्ठे चतुर्णा चान्द्रमससौर्य इत्येतेषु पर्वाद्यैग्नामिष्टमध्ये चेत्कर्तव्यं स्यात्प्रायश्चित्तिर् गृह्याग्नौ कर्मा कर्तुमपि पाणिचतुर्थेऽहनि त्वदारभ्य तन्मा गादन्त उदयन दक्षिणाग्नौ चेष्टात्कर्तव्य तन्मासादिसंकल्पैः कर्तव्यं स्यात्प्रायश्चित्तिर् विवाहे यदि पूर्वपक्षे चेदपरे पौर्णमास्यैदारभ्य कर्तव्यः स्यात् संकल्पैर्दशपूर्णमासाभ्यां द्वाविष्टर इत्युक्तौ तत्र द्वितीया विष्टेदिना व्यादा यज्ञेऽनर्थः तस्मात्ताभ्यां द्वाविष्टौरोपं विघ्नं कर्तव्यं स्यात्प्रायश्चित्ति नि तिसृभिश्चावमास्यानि तां स्वधा मे विष्टिमध्या चेत्कर्तव्यं स्यात्प्रायश्चित्तिर् अनयोराधानमध्ये राहुपर्वणि चेन्द्रमाह इति । आद्यपङ्क्तौ द्वितीया गायत्र्या उभयोर्देवता चन्द्र इत्युक्त्वा प्रायश्चित्तिः । सौर्यः पर्वणि चेच्चित्रं देवानामुदु त्यामित्य् आद्यैः त्रिष्टुप् तु द्वितीये गायत्री वा उभयोर्देवता सूर्य इत्युक्त्वा प्रायश्चित्तिः प्रायश्चित्तं विना पुनश्चारम्भणि चेत् कर्तव्यं स्यात्प्रायश्चित्तिस् तां संकल्प्य मध्ये श्राद्धकर्माणि तत्राग्नौ करणं कपाणौ हुतं वा तद्वद् भुञ्जानः कर्तव्यं स्यात्प्रायश्चित्तिर् अथ विशेषश्च नियमैर्दम्पत्योर्मध्ये रजश्चाण्डालगमने वा कर्तव्यं स्यात्प्रायश्चित्तिस् तयोराधानमध्ये राशौ मध्ये स्पर्शक्षयं वा वृद्धि वा कर्तव्यं स्यात्प्रायश्चित्तिस् तयोराधानमध्येऽन्यग्रामं प्रविश्य पथो गत्वा कर्तव्यं स्यात्प्रायश्चित्तिस् तयोर्मध्ये उभावन्यगमने वा दिवा मैथुने वा कर्तव्यं स्यात्प्रायश्चित्तिः पुरुषो भोजनमध्ये तथा कर्म मैथुनं च श्वानमार्जालौ संस्पृष्ट्वा कर्तव्यं स्यात्प्रायश्चित्तिर् अथ विशेषश्च गृह्यावनग्निकानां च विधवां स्पृष्ट्वा कर्तव्यं स्यात्प्रायश्चित्तिर् अश्नीयी शूद्रान्नभोगी चार्वाकी परदाराभिगमनी स्वकर्मत्यागी नित्यं परान्नभोजी तथानग्राही गोब्राह्मणवधी वेश्यात्कुटुम्बी राजान्नभोजी अध्यापनग्रंथत्यागी विद्यादूष्यगुरुवादै प्राणसं-हारी मार्जालोच्छिष्टभोजी वेदविक्रयी कन्यापतिव्रतादूषी स्वकुटुम्बत्यागी उपाध्यायगुरोर्दूषी गुरोः पत्न्यभिगमनी मांसभक्षी श्राद्धकालत्यागी तथा श्राद्धभोजी तठाकसंहारी वर्षवर्धी सदारोगी ब्राह्मणताडी मृत्तिकापाषाणदाही सदोच्छिष्टी विप्रदूषी इति ते चंडालसमाः गृह्याग्नौ स्पृष्टा दंपत्योर्वासचेलं कार्यं कर्तव्यं स्यात्प्रायश्चित्ति प्रायश्चित्तार्थे षष्टिर्देवता उक्ता । कन्याहृतीनि व्याहृ-तिभिस्तिसृभिः आवृत्तिः पुनश्च तिसृभिर्द्वादशगुणं कार्यं प्राजापत्यं न पञ्चकस-मस्तान्तं चत्वारि पाहि नो अग्नयेनसे इति तिसृभिः प्राजापत्यमेकं यत्कुसीदं च समस्तान्तं चतुर्थी स्विष्टकृद्वा इत्येषां प्रायश्चित्तिर् एवं ब्राह्मणेयो यासाः प्रायश्चित्तां विकतं जानन्यः शरीराद्विमुच्यते यः शरीराद्विमुच्यते ४

अथातः प्रायश्चित्तविपर्यासः सर्वत्र जलाभ्यासः प्राजापत्यं यत्कुसीदं च संपूत्यध्यांशबलिं हुत्वा यदि पुरस्तात्तं विपर्यसो यत्कुसीदं जुहुयात् यत्सर्वत्र न संस्काराज्यमपि यजमानं हुत्वा ततनीषं भवति अदक्षिणब्राह्मणं तद्यज्ञो राक्षसं भवति इध्मं विना यजते पतति नरके उभौ यजमानो ब्रह्मणा सर्वत्राहुत्या कालमनुपेक्षेया विप्रो यज्ञघातकः तिसृभिर्ब्रह्मघातकः तिसृभिः सध्याकालानपेक्षया विप्रो ज्योतिर्घातकः सर्वत्र प्रदोषेष्वध्यायो वेदघातक अन्यावर्णी विद्यादानी गुरुघातकः सर्वत्र स्वेच्छयात्यागी पितृघातकः इत्येते इत्येतषखापातिकना मात्र भाषणं नाभिवाद्यमंत्र पथेन शार्शनप्रेक्ष इति यदि प्रमादाकृत्वा गायत्र्याष्ट जपेत् ५

द्विभार्याग्निसंयोगः । अथातः सर्ववर्णेषु ब्राह्मणानां पुनराधिपत्यं चेत् पूर्वं गृह्याग्नेरर्धं प्रणीय तयोः संयोजनार्थे चतुर्थस्त्याह्नः सायमुपक्रम्य यजमानः पूर्वाग्निमवरोहणं कृत्वा तत्र स्थंडिलं कुर्वन् अग्निं वो वृधन्तमिति तृचेन प्रतिष्टाप्यानन्तरभार्या नवाग्नौ पात्रेणादायेमं स्तोममिति तृचेन संयोज्य प्रतृचामन्ते चतुरक्षरसुपांशु ततो अग्निरैत्विति षड्भिराज्यम् हुते यजमानं वाचयेत्प्राणायामं परिषिच्याग्नये स्वाहा प्रजापतये स्वाहा पुनः परिषिच्यागौषूकं समारोपणं वामदेव्यं गीत्वा यदि देशान्तरे तत्र लौकिकाग्नौ कुर्यात्पूर्ववत् संयोज्याऽप्रियाधिपत्यं चेद्विशेषोऽस्ति तत्र तद्व्याख्यास्यामो ब्राह्मणानामन्त्र्य शतापूपमाशयतकं वाष्टौ स्नात्वालंकृत्य कमण्डलुनोदकं गृहीत्वा वनान्तरे गत्वा तस्मिन्देशे अशुष्कां कोमलीं शुभपर्णीं फलवतीं विस्तारयुक्तं प्रापन्हीं सहितां एतैर्गुणवानर्कशाखामवलोक्य तत्पित्रार्थे वेद- वद्ब्राह्मणं विचार्य स्नापयित्वार्कशाखा न हरेत् नवाससाच्छादयित्वा तं ब्राह्मणो देवस्य त्वेत्यर्ककन्यादानं वरं प्रतिगृह्णामीति पुरत स्थण्डिलं कुर्वन्नर्कस्य उत्तरत उपविश्य तामष्टौ ब्राह्मणार्कशाखां परिवेष्ट्य सर्वे प्राङ्मुखोदङ्मुखो वा ब्राह्मणस् ततो ब्राह्मणमभ्यर्च्य प्रत्येकं दशदशापूपं दद्यात् शेषमुत्तरतो निधाय लौकिकाग्निं प्रतिष्ठाप्य ततः समूहनादि प्रपदान्तं कृत्वेध्माङ्कं हुत्वा ततो व्याहृतिभिस्तिसृभिः हुत्वा अग्निरेत्विति षड्भिः पुनस्तिसृभिः ततो यजमानः तिष्ठन्नग्नि प्रदक्षिण गृह्य अग्निरादित्य सर्वे ब्राह्मणानामन्तर्भावः दिक्ष्वाकाशयोर्बहिर्भावः तूष्णीं त्रिः प्रदक्षिणं कुर्यात् स्वस्थानमुपविश्य दक्षिणेन सहितारं गृह्णीयात् तद् गृह्णामि त इत्युपांशु

ततोपरिष्टाद्धोमं समाप्य शिष्टानपूपं दशकं ब्रह्मणे दद्यात् दशकं स्वयं प्राश्नीयात् तत्राग्नौ परिषिच्य अभ्यर्च्य व्याहृतिभिश्च तिसृभिः आज्यं जुहुयात् तद्विसृज्य ततो वामदेव्यं विप्राणामाशिषो वचः कन्या गृहं गच्छेत् ततः पुनराधिपत्यं पुनराधिपत्यम् ६

अथ ऋतुकालपरोक्षणम् प्रथमार्तवादतः शुद्धः स्नात्वा स्वस्तिवाचनं शय्यागृहमलंकृत्य पुष्पफलान्विकीर्य प्रतिदिशं दीपैरलंकृत्य सुगन्धपङ्केन दोर्घचतुरस्त्रं स्थण्डिलं कुर्वन् उपर्युक्षपत्रमुदगग्रमास्तीर्याथोपरि नववासस प्रागग्रामास्तोर्य प्राक्सिरः पत्नीं शयित्वोर्ध्वमुखीनथा जानुभ्यां पादै वसुमत्या-क्रम्य तत्समीपे पतिस् तत्राभिमुखो भूत्वोवश्येसजस्तैतयो निमालभ्य वि-ष्णुर्योनिं कल्पयत्विति अष्टवारं जपित्वाऽष्टपुत्रो भवति स्ककाले पतिरलभ्यः चेदन्यपुरुषो न कर्तव्यं स्यात् षड्रात्रो ऋतुं कालः ७

अथातो गर्भसंस्कारो मैथुनषष्ठे प्रतिदिनप्रभृति युग्मे दिने युग्मासु पुत्रो जायेरन् युग्मासु पुत्रो जायेरन् अयुग्मासु रात्रिषु स्त्रियो जायेरन् इति ज्ञात्वा यदा वध्वाः प्रथमगर्भो भवति तदोदरसंस्कारद्वारेणोत्पत्स्यमानापत्यसंस्कारार्थं पुंसवन-सीमन्तोन्नयनं कुर्याद् या कुत्रचिद्दिने गर्भसंभवस्तन्मासमेकं गणयित्वा तृतीयमासांस्त्ववशोभनं ततः पुंसवनं नान्दीमुखं पूर्वेऽहनि ततः परेऽहन्युषसि स्नात्वा चतुरस्त्रं स्थण्डिलमुपलिप्योदगग्रेषु दर्भेषूपविश्य दक्षिणतः पत्नीं चोत्तरतो यजमानीदङ्मुखो ब्राह्मणस् ततोऽग्नेः प्रणयनं वा विना प्रातराहुतिं हुत्वा समूहनादिप्रपदान्तं हुत्वा इध्माङ्गं हुत्वा ततो व्याहृतिभिः तिसृभिर्हुत्वा ततो यजमानः पत्न्या पृष्ठतस्तिष्ठन् दक्षिणकोर्यरादि नाऽभ्यन्तममिमृशेत् पुमांसा-विति ब्रूयात् स्वस्थानमुपविश्य ततोपरिष्टाद्धोमं समाप्य वध्वां पुनः स्नात्वा यजमानः पुष्पाक्षतानैकविंशतियवान्नवशूर्पे निधाय गृहीत्वा ग्रामान्निष्क्रम्य वटराजसमीपं गत्वा तत्र वासिनीमुपस्थायोत्साहव्यापिनीत्यद्रमे नित्यग-स्थितेरापित्सतं मे श्रियं देहि तस्मान्नमाभीष्टं कुर्वन्त्विति पुष्पाक्षतैरभ्यर्च्य तस्योपरि यवैरवकीर्योदगग्रां शाखां परशुना च्छेदयित्वा तमोषधीभूमौ नवान्तरिक्षे वा गृह्णीयाद् ऊर्ध्वाग्रां गृहमानीय कोष्ठमध्ये मणिकदेशे वा स्वासने प्रतिष्टाप्य ततश्चतुरस्त्रं स्थण्डिलमुपलिप्य ब्रुयवेत्किमार्गणा प्रपदान्तं कृत्वा इध्माङ्गं हुत्वा पुनश्च व्याहृतिभिस्तिसृभिर्हुत्वा तमोषधेस्सप्तभिर्मुख-

लकन्या भ्रातृमतो प्राङ्मुखी पेषयित्वा प्रत्याहरन्तीं तं प्रतिष्टं नववो सश्निनन्नि जपेत् गृहीत्वा यजमानः ततोऽग्नेः पश्चात्पत्नीं प्राक्शिरोर्ध्वमुखीं शयित्वा वध्वाग्नयोर्मध्ये यजमानः प्रत्यङ्मुखः सायीत पुनानग्निरिति मन्त्रेण दक्षिण-नासिकापुटे पिष्टरसं पीडयित्वा निष्पीडय पिष्टं सलिले निधाय वस्त्रं ब्रह्मणे दद्यात् तद्रसमुदरे कुर्यात् तयोः स्वस्थानमुपविश्य ततोपरिष्टादि समाप्य ततो ब्राह्मणभोजनं ततो ब्राह्मणभोजनम् ८-९

अथ चतुर्थे मासि सीमन्तोन्नयनं कर्तव्यम् नान्दीमुखं पूर्वेऽहनि ततः परेऽहन्युषसि स्नात्वा यजमानः पुंसवनं क्रमेणौदुम्बरशाखां गृहमानीय त्रिश्वेतया च शलल्या तण्डुलान् तिलमिश्रान् श्रपयित्वा लौकिकेऽग्नौ स्थण्डिलस्योत्तरतो निधाय पूर्ववत्प्रपदान्तं कृत्वा इध्माङ्गं हुत्वा पुनश्च व्याहृतिभिस्तिसृभिर्हुत्वा ततो यजमानः पृष्ठतस्तिष्ठन् तं गृहीत्वा औदुम्बर-शाखामयमूर्जेति वा जपित्वा नासाग्रमेति दिध्यंम्निस्नारनातमुनयतदन्तिमथो येनादितेति प्रतिप्य पुनः शलल्या गृहीत्वा राका इत्येके इति प्रतिष्ठाप्य तूष्णीं त्रिः प्रोक्षणं कृत्वा स्वस्थानमुपविश्य ततोपरिष्टाद्धोमान्समाप्य वध धृतपात्रां किं पश्यसीति वाचयित्वा वामदेव्यं गोत्वा ततो ब्राह्मणभोजनं ततो ब्राह्मणभोजनम् ९

अथ पुत्रस्य जननकाले सोष्यन्तीहोमारंभे एकदेशप्रणयनं स्नात्वा स्थण्डि-लमुपलिप्य समूहनादि प्रपदान्तं कृत्वा इध्माङ्गं हुत्वा ततः शिरोजननकाले यातिरश्चीति द्वाभ्यामाज्यं हुत्वासौ शब्दे नाम ब्रूयात् पुत्रो वारभमवेन्मुनिश्रेष्ठं पृच्छामि त्वा मित्वात्प्रिवास् तदेनामग्रहणं करणात्पूर्वं कृतकानि नामानि तत्कथं विस्तरेण तथ्यं मे ब्रूह्य् अशेषं तु व्याख्यास्यामो नी करणा दवमि-ममञ्चकं ना पश्चान्पूत्रकं कुर्याद् यदि विपर्यासोन्मायेनाकृतं चेतं हुतंममर्घत-स्माज्ञनवदुन्त यत्राभावः त्यस्या प्रायश्चित्तं जुहुयाद् अव वा जनन इष्वांते सौशब्दे विष्णुप्रदेवशर्मन्निति मनसा कल्पयन् मनसं प्रविशयासौशब्दे विवादबीयं ब्रूयात् को नामास्य् असौ शब्दे नक्षत्राश्रयं नाम कर्तव्यम् मघं वा पुत्रयोरेकत्र याननाद् यदि जातकर्मादि नापतं संस्कारमेव कर्तव्यं नामकरणादूर्ध्वं पृथक् संस्कारं स्वयं कुर्यात् जातकर्म वक्ष्यामि दशयनाप्र इति षयित्वा त्रयस्त्रिंशद्ब्रीहीति मधुसर्पिर्भ्यामेकैकं पलमादाय उभयत्र यशसो

यशोऽसीति संयोज्य हिरण्यशकलेन सममङ्गुष्ठाभ्यां अनामिकाभ्यां वा संगृह्य तदभावे कुशथेवा यवपिष्टमाज्यद्वयमाद्येति शिशुं प्र त य तंद्वसर्पिभ्यां मेधां त इति ततो ब्राह्मणदक्षिणा १०

ततश्चन्द्रदर्शम् । जननादि दशरात्रात्परे द्वे वा तस्मिन्नक्षत्रे तं कुमारं स्यातितातं वेतदूर्धकिमांसुशुदर्शनं तदभावे दर्शनं कृत्वा चाम कुर्यात् कथं वक्ष्यामि नान्दीमुखं पूर्वेऽहनि ततः परेऽहन्युषसि स्नात्वा यजमानश्चतुरस्त्रं स्थंडिल-मुपलिप्य गृह्याग्नेरेकदेशाग्निं विभज्य समूहनादि प्रपदान्तं कृत्वा इध्माङ्गं हुत्वा ततो माता स्वकुमारमादायाऽहतेन वासा परिधाय दक्षिणतः प्रत्यङ्मुखः उपविश्य तत्कारयित्वा पतिहस्ते प्रदाय पृष्ठतो गत्वोत्तरतो उपविश्य यज-मानस्वं कुमारं अवलोक्य व्याहृतिभिस्तिसृभिर्हुत्वा पुनः प्रदाय यजमानो पंचां मध्येन कोऽसीति द्वाभ्यामरक्षणा प्रतिनेत्रमभिमृशेत् कतमोऽसीति चतुरक्षरेण श्रोत्राभ्यां एषोऽसीति त्र्यक्षरेण नासाग्रे मध्यमूलमभिमृशेद् अमृतोसीति चतुर-क्षरेण पाणिबाहुभ्यां प्रत्येकमभिमृश्य शेषेण मस्तकं गृहीत्वा ततो माता च वामहस्तेन कुमारयवकं गृहीत्वा पूर्वोक्तमाख्यानं दक्षिणे श्रवणे उपांशु ब्रूयात् ततो यजमानो दक्षिणं गृह्णीयात् तत उपांशु सर्वान्हेत्यतिवादनीयं नाम ब्रूयात् तत उपरिष्टाद्धोमं समाप्य यथा वामदेव्यं गीत्वा पतिव्रताशिषो वाचयित्वा तथा ब्राह्मणभोजनम् ११

अथातश्चन्द्रोपस्थानम् शुक्लपक्षतृतीयापञ्चम्यां सप्तम्यां षष्ठे वाष्टमे वा नुवक्ष्यादिना कर्तव्यं स्यात् तृतीये मासि षष्ठे मासि कार्यं पञ्चाङ्गशोधिते दिने । छन्दोगं वेदविद्ब्राह्मणं नियक्षा सद्ब्राह्मण उदयादर्वाक् ग्रामान्निष्क्रम्य सशिरतं स्थापयित्वा शकेता स्वर्णकलशमादाय कांश्यं वा मृन्मयवर्जं जानुमात्रमवगाह्याऽपो हि ष्ठेति तृचेन पूरयित्वा शन्नो देवीरिति मन्त्रेणोद्धृ-त्यमिति शिरसि विनिधाय यः पावमानीरिति जलं निष्क्रम्य वामदेव्येन ग्रामं प्रविशेत् सर्वत्र न संभाषणं नोपह्यस्य सुमनसो भूत्वा यजमानगृहे देवसभा-समीपे गोष्टमध्ये वा तामुदपात्रां चासने निधायोपरि कुशैः छादयित्वा तं ब्राह्मणयजमानादिवावभुञ्जन् यान्ती वा इत्येते आस्तमयाद् अतस्सहसिरसं स्थापयित्वा तत्र यजमानः निष्क्रम्य गृहाद्बहिः शुचौ देशे चतुरस्त्रं स्थण्डि-लमुपलिप्य दक्षिणाभिमुखो भूत्वा हा उ चन्द्रेति मण्डलं प्रविश्य प्राङ्मुखो-

